संख्यातानुदेशो न स्यात् । तस्मात् संख्यातानुदेशोऽपि तस्य युक्तं प्रयोजनम् । नचैतदस्ति । माभूत् संख्यातानुदेशः । असत्यपि तस्मिन् स्थानेन्तरतम इति (१।१।५०) परिभाषया व्यवस्था भविष्यति । इत्संज्ञा तर्ह्यपरं प्रयोजनम् । उपदेशे ह्यसति गम्लृ सृप्लृ गतावित्यादिषु उपदेशेऽजनुनासिकइतीत्संज्ञा (१।३।२) न स्यात् । तस्यां चासत्यां पुषादिद्युताद्यॢदितः परस्मैपदेष्विति (३।१।५५) अङ् न स्यात् । नैतदस्ति । असत्यप्युपदेशे अस्मादेव ॡदितो धातोरङ्विधानादित्संज्ञा विधास्यते इति नाप्यु प्रयोजन मुपदेशस्य । तस्मात् पूर्वोक्तान्येव प्रयोजनानि । तानि च ऋकारॡकारयोः सवर्णसंज्ञा वक्तव्येत्येतदनाश्रित्योक्तानि । अत्र ह्याश्रिते सत्यसत्यपि ॡकारोपदेशे अणुदित् सवर्णस्य चेति ऋकारेण गृह्यमाणेन लृकारस्य ग्रहणादेव सिध्यन्ति ।

## ३ । ए ओ ङ् ।

अत्र पूर्वाश्चेति नोक्तम् । पूर्वस्य ग्रहणासम्भवात् । अथ षिद्-भिदादिभ्योऽङित्यत्राकारेणास्य कस्माद् ग्रहणं न भवति ? तत्र केचिदाहुः । आदिरन्त्येन सहेतेत्यत्र ( १।१।७१ ) अणुदित्सवर्णस्य चाप्रत्यय ( १।१।६९ ) इत्यतोऽप्रत्ययग्रहणमनुवर्त्तते । तेनायमर्थः सम्पद्यते । आदिरन्त्येन ग्राहको भवति नचेत् प्रत्ययो भवतीति । प्रत्ययश्चायम् । तेन ग्राहको न भवति । एवञ्च सुप्तिङन्तं ( १।४।१४ ) पदमित्यादावपि प्रत्ययो ग्राहको न स्यात् । तस्मादनभिधानादिह प्रत्याहारग्रहणं न भवतीति वेदितव्यम् । अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति । नच षिद्भिदादिभ्योऽङिति ( ३।३।१०४ ) अकारादिप्रत्ययोत्पत्तौ विवक्षितार्थाभिधानं भवति । इह तर्हि शास इदङ्हलोः ( ६।४।३४ ) । ऋदृशो रङि गुण इति ( ७।४।१६ ) चाकारेण प्रत्याहारग्रहणं कस्मान्न भवति ? चिण्सदृशस्य चङ्सदृशस्य चाङो ग्रहणात् । शास इदङ्हलोरित्यत्र हि भञ्जेश्च (६।४।३३) चिणीत्यनु-वर्त्तते । ऋदृशोरङीत्यत्रापि णौ चङ्युपधाया ह्रस्व इति (७।४।१) । अतो मण्डूकप्लुतिन्यायेन चङ्ग्रहणमनुवर्त्तते । तेन चङ्ग्रहणेन समानाधिकरणेनाङ् विशेष्यते । चङ्यङीतीति नचाङ् चङ् भवति । अतिविलक्षणत्वात् । तत्र

सामर्थ्यादिवार्थो गम्यते । परपदार्थेषु हि प्रयुज्यमानाः शब्दा अन्तरेणापि इवशब्दप्रयोगमिवार्थं गमयन्ति । यथा अग्निर्माणवको गौर्वाहीक इति । तेनायमर्थो भवति । चङीवाङीति चङ्सदृशोऽङित्यर्थः । कश्च चङ्सदृशोऽङ् ? यश्चङः स्थाने विहितः । तथाच चिस्थानिकस्यैवाङो ग्रहणं सम्पद्यते । नतु प्रत्याहारस्य । एवं शासइदङ्हलोरित्यत्रापि चिण्ग्रहणेनाङि विशिष्यमाणे चिस्थानिकस्यैवाङो ग्रहणं वेदितव्यम् । इह तर्हि सनिच इङश्चेति । ( २।४।४८ ) परिमाणाख्यायां सर्वेभ्य ( ३।३।२१ ) इङश्चेति च कस्मादिकारेण प्रत्याहारग्रहणं न भवति ? पूर्वत्र तावन्न भवति । इको झलिति ( १।२।९ ) कित्त्वविधानात् । प्रत्याहारे ह्येतस्मिन् सनि गम्यादेशविधानादिगन्तत्वाभावे गुणस्याप्राप्त्या कित्त्वविधान मनर्थकं स्यात् । पूर्वत्र तावन्न भवति । यदि हि स्यादिक इति ककारेणैव प्रत्याहारं कुर्य्यात् । नह्यङन्तादधातोः परस्य सनःसम्भवोऽस्ति यतः प्रत्याहारग्रहणं ङकारेणार्थवद् भवति । परत्रापि न भवति । वैयर्थ्यप्रसङ्गात् । तथाहि इकारान्तेभ्यः एरजित्यचा भवितव्यम् । उकारान्तेभ्योऽपि ऋदोरबित्यपा । लृकारान्ता न सन्त्येव । एजन्तानां प्रागेव प्रत्ययोत्पत्तेरादेच उपदेशेऽशितिति (६।१।४५) इत्यात्त्वेन भवितव्यम् । अतस्तेऽपि प्रत्ययविधानकाले न सन्त्येवेति । ऋकार एक एवावशिष्यते । ततो यदि घञ् विधित्सितः अपार्थकं प्रत्याहारग्रहणं स्यात् । उरित्येव ब्रूयात् । क्रीङ्जीनां ( ६।१।४८ ) णावित्यत्रापि क्रीणातिजयत्योः पृथगुपादानाद् इकारेण ग्रहणं न भवति । इकारान्तानां मध्ये तयोरेव यथा स्यादिति नियमार्थं पृथगुपादान मिति चेत् ? न । एवमपि ककारेणैव प्रत्याहारं कुर्य्यात् । एजन्तानामात्त्वस्य सामान्यलक्षणेनैव सिद्धत्वात् । इङ्धार्य्योः शत्रकृच्छ्रिणीत्यत्रापि (३।२।१३०) धारयतिना धातुना साहचर्य्याद् इङिति धातोर्ग्रहणम् । न प्रत्याहारस्येति वेदितव्यम् ।

## ४ । ऐ औ च् ।

इहादिरन्त्येन सहेतेत्यनेन सूत्रेणाकारादीनामजित्येषा संज्ञा विधीयते । सा च यथा इकारादीनां भवति तथा णकारादीनामप्यनुबन्धानां

स्यात् । तेषामपि तत्रोपदेशात् । ततश्च तया प्रदेशान्तरे इको यणचीत्येवमादौ तेषु प्रातिपदिकेषु यथा दध्यत्रेत्यादौ यणादेशो भवति तथा दधिणकारीयतीत्यादावपि स्यादित्यभिप्रायेणाह प्रत्याहारेत्यादि। कथमज्ग्रहणेषु नेति कार्य्यमिति शेषः। अजित्यस्याः संज्ञायाः प्रदेशवाक्येषु ग्रहणानि उच्चारणानि अज्ग्रहणानि। तेषु सत्सु णकारादीनां कथमच्कार्य्यं न भवेत्। भवेदेवेत्यर्थः। आचारादिति। आचरणमाचारः आचार्य्यप्रवृत्तिः। ततो ज्ञापकान्न भवति। यदयमुणादयो बहुलम्। ऋषि मृषिकृशिः काश्यपस्य। ङमो ह्रस्वादचि ङमुण् नित्यम्। ङसिङसोश्चेति णकारादिषु परतो यणादेशं न करोति ततो ज्ञापयति। सत्यामप्यच्संज्ञायामच्कार्य्याणि न भवन्तीति। अथवा अजित्येषैव संज्ञैषां न भवति इत्येषः अर्थोऽनया आचार्य्यप्रवृत्त्या ज्ञाप्यते। यदि हि संज्ञा स्यात् आचार्य्यस्तेष्वच्कार्य्याणि कुर्य्यात्। एवं ज्ञापकेन संज्ञाऽभावं प्रतिपाद्य इदानीं न्यायेन प्रतिपादयितुमाह अप्रधानत्वादिति। अणित्येवमादिकाः संज्ञाः प्रणेतुं तद्रूपप्रतिपादनाय अनुबन्धा उच्चार्य्यन्ते। ततश्च परार्थमुपादीयमानत्वादप्राधान्य मनुभवन्ति। इतरे तु स्वार्थमुपादीयन्त इति तेषां प्राधान्यम्। तेन तेषामेवाजिति एषा संज्ञा भवति। नानुबन्धानाम्। प्रधानाप्रधानसन्निधौ हि प्रधानमेव कार्य्येण सम्बन्ध मनुभवति। नेतरत्। तथाचाह भाष्यकारः। प्रधाने कार्य्यसंप्रत्ययात् सिद्धमिति। यद्येवमकारस्याप्येषा संज्ञा न स्यात्। संज्ञाप्रतिपादने तस्याप्यङ्गभावोऽस्त्येव। स्वस्य च रूपस्येत्यनुवृत्तिसामर्थ्यात् तस्य भवतीत्यदोषः। एतेनानन्तरोक्तेन कारणद्वयेन संज्ञाविधानकाले ऽनुबन्धानां सन्निधानमभ्युपेत्य संज्ञाया अभावः प्रतिपादितः। इदानीं तत्रासन्निहितत्वादेव सा न भविष्यतीति प्रतिपादयितुमाह लोपश्चेत्यादि। बलवानेव बलवत्तरः। स्वार्थे एव तरप्। अल्पाच्तरमिति यथा। अनुबन्धा हि इत्संज्ञकाः। तेन तेषामच्संज्ञायाः प्रागेव तस्य लोप इति लोपेन भवितव्यम्। तस्य बलवत्त्वात्। तदसतां तेषां कुतः संज्ञा? तस्याश्चासतरां कुतोऽज्ग्रहणेष्वच्कार्य्यस्य सम्भवः? बलवत्त्वं तु लोपस्य परत्वान्नित्यत्वाच्च। संज्ञाशास्त्राद्धि लोपशास्त्रं परम्। अतस्तस्यापि परत्वम्।

कृताकृतप्रसङ्गित्वान्नित्यत्वम्। कृतायामपि संज्ञायां लोपेन भवितव्यम्। अकृतायामपि। न तु लोपे कृते संज्ञा भवति। संज्ञिनामसत्त्वात्। यद्येवं यथा अजन्तःपातिनां णकारादीनामनुबन्धानाम् प्रथमं लोपो भवति तथा चकारस्यापि स्यात्। ततश्चाजिति संज्ञा न निष्पद्यते। वचनसामर्थ्यात् तस्य प्राग्लोपो न भविष्यति। लुप्तेऽपि वा तस्मिन् भूतपूर्वेण तेन सहितः अकारः संज्ञा भविष्यति। अजन्तःपातिनां तु लुप्तानां णकारादीनां नार्हति संज्ञा भवितुम्। इकारादिषु सावकाशत्वात्। इहैते अकारादयो वर्णा अनेकावयवा इष्यन्ते। तस्यादित उदात्तमर्धह्रस्वम् (१।२।३२) एचोऽ प्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्या-दुत्तरस्येदुतौ इति वचनात् (८।२।१०७)। सन्ति च केषाञ्चित् केचिदवयवा वर्णान्तरसरूपाः। तद्यथा ऋकारे रेफः। ऌकारे लकारः। एकारे च ऐकारेचा-कारेकारौ। ओकारे च औकारे च अकारोकारौ। दीर्घेष्वाकारादिषु ह्रस्वा अकारादयः। तत्र य एते ऋकारादिवर्णानामवयवा स्ते किं वर्णग्रहणेन गृह्येरन् नवा? तत्र पूर्वस्मिन् कल्पे अग्ने इह वायो उदकमित्यकः सवर्णे दीर्घत्वं प्राप्नोति। प्रणीय आलूयेति ह्रस्वाश्रयस्तुक्। एवमादयोऽन्येऽप्यस्मिन् पक्षे दोषाः प्रसजन्ति। ते च भाष्यादवधार्य्याः। इतरत्र तु नुड्विधिलादेशविनामेषु-ऋकारग्रहणं कर्त्तव्यम्। नुड्विधौ तावत्। ऋधु वृद्धौ लिट्। आनृधतुः। आनृधुरित्यत्र ऋकारे रेफस्य हल्ग्रहणेनाग्रहणात् द्विहल्त्वाभावे तस्मान्नुड् द्विहल (७।४।७१) इति नुड् न प्राप्नोति। लादेशविधौ क्लृप्तः क्लृप्तवानिति रेफस्य कृपो रोल इति (८।२।१८) लत्वं न सिध्यति। विनामविधौ मातॄणां पितॄणा-मिति णत्वं न स्यादित्यत आह वर्णेष्वित्यादि। वर्णेषु ऋकारादिषु। वर्णैकदेशा इति रेफादय इति। वर्णात्मभूतत्वज्ञापनार्थमेकदेशा इत्युक्तम्। एतदुक्तं भवति। वर्णानामात्मभूता एकदेशा वर्णैकदेशा इति। यदि ह्येकदेशा-इत्येतावदुच्येत ततः कस्यचिद् भ्रान्तिः स्यात्। अर्थान्तरभूता एवैते एकदेशा इति। वर्णैकदेशा स्तुर्य्यादयोपि सन्तीति तद्व्यवच्छेदार्थमाह। वर्णान्तरसमाना कृतय इति। वर्णान्तरवत् समानाकृतिर्येषां ते वर्णान्तरसमानाकृतयः अवयवाः। ततोऽन्यैर्व्वर्णैरनवयवभूते स्तुल्याकृतय इत्यर्थः। तेष्विति। वर्णैकदेशेषु। तत्कार्य्यमिति। वर्णान्तरकार्य्यमकः सवर्णे दीर्घत्वादि।

किं पुनः कारणं न भवतीत्याह । तच्छायानुकारिणो हीत्यादि । तच्छाया तदाकारः । वर्णान्तराणामकारादीनामाकारमात्रम् । तेऽनु कुर्वन्ति । तत्तुल्यरूपत्वात् । नतु त एव । नहि तदाकारानुकारित्वमात्रेणैव तत्त्वं भवति । तथाहि गवि गवयावयवानुकारिणोऽवयवाः सन्तिः । नच तेषां तत्स्वभावता । किं पुनः कारणं ते तएव न भवन्तीत्याह पृथगितरादि । प्रयत्नः प्रयतनं स्थानकरणव्यापारः । वर्णान्तरहेतोः प्रयत्नात् पृथगन्येन प्रकारेण यं निर्वर्त्त्यं निष्पाद्यं वर्णमाचार्य्या इच्छन्ति । तदेते वर्णा अवयवाः । यदि वर्णाः स्युः प्रयत्नान्तरनिर्वर्त्त्याः स्युः । नचैवम् । तथाहि समुदायार्थो यः प्रयत्नः तेनैव ते निष्पाद्यन्ते । तदेवम् अग्रहणकपक्षमाश्रयतैव ग्रहणकपक्ष-भाविनो ये दोषा स्तेषां प्रसङ्गः प्रतिक्षिप्तः । ननुच ग्रहणकपक्षोपि भाष्ये व्यवस्थापितः । तदनुषङ्गिणां दोषाणां परिहारात् । तत् कस्मात् स परित्यक्तः । बहुप्रतिविधेयत्वात् अग्रहणकपक्षे त्वल्पं प्रतिविधेयम् । अतः स एव वृत्तिकारेणाश्रितः । यदि तर्हि न गृह्यन्ते नुडादिविधिषु ऋकारग्रहणं कर्त्तव्यतया स्थितमेवेतरत आह नुड्विधिलादेशविनामेष्वित्यादि । नुडादि विधिषु यच्चोद्यमापतति ऋकारविषये तस्य प्रतिविधानं कर्त्तव्यमितरार्थः । तत्र नुड्विधौ तावत् ऋकारस्थो रेफः हल्ग्रहणेन गृह्यते । तेनात्रापि द्विहलोऽङ्गस्य नुड् भवति । आनृधतुः । आनृधुरिति । एतत् स्वयमेव वृत्तिकारेण प्रतिपादनं कृतम् । अथ किमयमृकारस्थो रेफो वर्णात्मकः ? नेत्याह । इदानीमेव ह्युक्तम् । तच्छायानुकारिणो हि ते न पुनस्त एवेति । ये तर्हि हकारादयो वर्णा अक्षरसमाम्नाये उपदिष्टा स्ते किं वर्णात्मकाः ? नेत्याह । तथाहि हयवरड़ितरादौ वक्ष्यति इत्येतान् वर्णानु-पदिश्येति । अथ कथमिदानीं वर्णात्मनां हलां ग्रहणेन ऋकारस्थस्यापि अवर्णात्मनो रेफस्य ग्रहणं भवति ? द्विहल्ग्रहण सामर्थ्यादित्यभिप्रायः । तत्र हि तस्मान्नुड़ित्येतावदेव वक्तव्यम् । नचैव मुच्यमाने आटतुराटुरित्यादावपि प्रसङ्गो भवति । अश्नोते श्चेत्यस्य (७।४।७२) नियमार्थत्वात् । अद्विहलो यदि भवति तदाश्नोतेरेव । नान्यस्येति । अश्नातिनिवृत्त्यर्थं तदिति चेत् ? वार्त्तमेतत् । यदि ह्येतावत् प्रयोजनं स्यात् नाश्न इत्येवं प्रतिषेधं कुर्य्यात् । तदेवमन्तरेणापि

द्विहल्ग्रहणम्। सिद्धे यद् द्विहल्ग्रहणं करोति तस्यैतत् प्रयोजनम्। द्विहल्छायानुकारिणो हि यथा स्यादिति। यस्याप्येको मुख्यो हल् अपरो ऽवयवस्तत् समानाकृतित्वादुपचारेण हल् व्यपदेशार्हः। तस्यापि यथा स्यादित्येवमर्थः। एतच्च कथं लभ्यते ? यदि हलित्येषा श्रुति स्तत्र हल्छायानुकारिण्यामपि ऋकारस्थायां रेफव्यक्तौ वर्त्तते। नान्यथा। तस्माद् द्विहल्ग्रहणेन ऋकारस्थो रेफोऽपि गृह्यते। अन्यथा द्विहल्ग्रहण मनर्थकं स्यात्। रेफ इति परप्रसिद्ध्या तत्रोक्तम्। वर्णग्रहणवादिनां हि ऋकारभागोऽपि रेफ इति प्रसिद्धः। सादृश्यादेवमुक्तम्। भवति हि सादृश्यादतस्मिन्नपि तद्व्यपदेशः। यथाग्निः माणवक इति। अथवा रादिफ इत्यत्र ( ३।३ १०८ वा ) वर्णात् कार ( ३।३।१०८ वा ) इत्यतो वर्णादिति नानुवर्त्तते। तेनावर्णात्मकादपि रादिफो भवति। बहुलवचनाद्वा। अतएव ऌकारस्याल्लकारसरूपादवयवाद् अवर्णात्मनोपि कारप्रत्ययो भवतीति वेदितव्यम्। लादेशविधावपि र इति सामान्य मुपादीयते। तेन यः केवलो रेफः यश्च ऋकारस्थः तयोर्द्वयोरपि ग्रहणम्। ल इत्यपि सामान्यमेव। ततोऽयं केवलस्य रेफस्य स्थाने केवल एव लकार आदेशो विधीयते। ऋकारस्याप्येकदेशविकारद्वारेण ऌकारः। तथाच लुटि च क्लृप ( १।३।९३ ) इत्येवमादयो निर्देशा उपपद्यन्ते इति। एतत् कृपो रो ल ( ८।२।१८ ) इत्यत्र स्वयमेव वृत्तिकृता प्रतिपादितम्। र इति सामान्यमुपादीयत इति। वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य यत् सामान्यमवर्णात्मिकायां वर्णात्मिकायाञ्च रेफव्यक्तौ वर्त्तते। यतस्तयोः वर्णत्वावर्णत्व भेदभिन्नयोरपि र इति शब्दप्रत्ययौ अभिन्नौ भवतः। तावुपादीयेते। ननु वर्णात्मिकैव रेफव्यक्तिः। तेनेति। सामान्योपादानेन द्वयोरपि ग्रहणं भवतीति। तस्य सामान्यस्य द्वयोरपि सद्भावात्। ल इत्यपि सामान्यमेवेति। उपादीयते इत्यपेक्षते। अत्रापि यश्च केवलो लकारः यश्च ऌकारस्थः तयोर्द्वयोरपि ग्रहण मित्येतद्वक्तव्यं स्यात्। पूर्व्वानुसारेण गम्यमानत्वान्नोक्तम्। ततोऽय मित्यादि। यत एवं द्वयोरपि रेफलकारयो र्ग्रहणं तस्मात् केवलस्य रेफस्य स्थाने लकारोऽयमादेशः विधीयते। अन्तरतमत्वादृकारस्यापि ऌकारः। ननु च सत्यपि द्वयोरपि ग्रहणे ऋकारस्य स्थाने ऌकारो भवतीत्येतत् कुतो

लभ्यते ? नहि ऋकारस्थो रेफ ऋकारो भवति । किं तर्हि ? तदवयवः । नापि ऌकारस्थो लकारः ऌकारो भवति ? किं तर्हि ? तदवयवः । तत्र द्वयोरपि ग्रहणे सति ऋकारस्थस्यापि रेफस्य ऌकारस्थो लकारः वर्णैकदेश-तयान्तरतमो भवतीत्येषोऽर्थो लभ्यते । ननु ऋकारस्य हि स्थाने ऌकारो भवतीत्येतस्य चोद्यस्यापाकरणार्थ मेकदेशविकारद्वारेणेत्युक्तम् । तदेकदेश ऋकारस्यावयवो रेफस्तस्य विकार ऌकारावयवो लकारः । अथवा एकदेशः । अथवा एकदेशऌकारस्थो लकारः । स एव विकारः । ऋकारस्थस्य रेफस्य स एव एकदेशविकारः । द्वारं मुख मुपाय इतियावत् । तेन समस्तस्यैव ऋकारस्य स्थाने समस्त एव ऌकार आदेशो विधीयते । यदि हि ऋकारऌ-काराभ्यां तत्स्थयोश्च रेफलकारयोः पृथग्भावः सम्भवेत् तदा ऋकारैक-देशस्य रेफस्य केवलस्य ऌकारैकदेशो लकारः केवलः शक्यते विधातुम् । नच तयो स्ततः पृथग्भावः सम्भवति । तस्माद् यथोक्तेन प्रकारेण ऋकारस्य ऌकारादेशो विधीयते । अनन्तरोक्तस्यार्थस्य दृढीकरणाय तथाचेत्यादेरुप-न्यासः । यत एवमेकदेशद्वारेण ऋकारस्य स्थाने ऌकार आदेशो विधी-यते । एवञ्च सति लुटि च कॢप इत्येवमादयो (१।३।९३) निर्देशा उपपद्यन्ते । नान्यथा । आदिशब्देन ऋदुपधाच्चाकॢपिचृतेः ( ३।१।११० ) । तासि च कॢप ( ७।२।६० ) इत्येतयो निर्देशयो ग्रहणं । विनामविधावपि ऋवर्णाच्चेति वक्तव्य मित्युक्त्वा रश्रुतिसामान्यनिर्देशाद्वा सिद्धम् । अवर्णभक्त्या च व्यवधाने णत्वं भवतीति क्षुभादिषु नृनमनतृप्नोतिग्रहणं णत्वप्रतिषेधार्थं द्रष्टव्यम् । अथवा ऋवर्णादपि णत्वं भवतीत्येतदेव तेन ज्ञाप्यत इति वृत्तिकृता स्वयमेव प्रतिविहितम् । रश्रुतिसामान्यनिर्देशात् सिद्धम् इति । र इति श्रुतिः रूपलब्धिर्यस्य स रश्रुतिः रेफः । तस्य केवलस्य ऋकारस्थस्य च वर्णत्वावर्ण-त्वकृतभेदं परित्यज्य यत् सामान्यं रेफमात्रं तदिह निर्दिश्यते । ननु वर्णात्मि-कैव रेफव्यक्तिः । तेन सिद्धं तिसृणाम् । चतसृणाम् । मातॄणाम् । पितॄणाम् इत्यादावपि णत्वम् । ऋकारेऽपि तस्य रश्रुतिसामान्यस्य विद्यमानत्वात् । स्यादेतत् ऋकारे त्रयो वर्णावयवाः । तन्मध्ये रेफोऽर्द्धमात्रात्मा । तत्र रश्रुतिसामान्यस्य निर्देशेनैव सिध्यति । यासौ रेफात् पराऽवर्णभक्ति

स्तया व्यवधानादित्यस्य चोद्यस्य परिहाराय उत्तरो ज्ञापकग्रन्थः। यदयं क्षुभ्नादिषु णत्वप्रतिषेधाय नृनमनशब्दं तृप्नोतिशब्दञ्च पठति तेनैतज्-ज्ञाप्यते ऽवर्णभागव्यवधानेऽपि णत्वं भवतीति। अन्यथा हि तत्र तयोः पाठो ऽनर्थकः स्यात्। प्राप्त्यभावात्। प्राप्तिपूर्वकत्वाच्च प्रतिषेधानां। यद्यपि वर्णात्मिकैव रेफव्यक्ति र्निर्दिश्यते तथापि सिद्धमिति दर्शयितुमाह अथवेत्यादि। पूर्वसूत्रोपात्तात्द्रश्रुतिसामान्यनिर्देशात् परयाऽवर्णभक्त्या व्यवहितादपि णत्वं भवतीति ज्ञापितम्। इदानीं तु सूत्रानुपात्ताद्दकारा-दव्यवहितादेवेत्येष विशेषः। अपरे तु सर्वाण्येतानि प्रतिविधानानि वर्णैक-देशग्रहणकपक्षमाश्रित्य विहितानीत्याचक्षते। एतच्चासम्यक्। यं हि पक्षमाश्रित्य नुङ्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम् इत्युक्तं तत्रैव प्रतिविधातुं युक्तम्। अन्यथा ह्यग्रहणकपक्ष मभ्युपेत्य ग्रहणकपक्षेऽपि प्रतिविधानं कुर्वता वृत्तिकारेणाकौशलमेव केवलमात्मनः प्रकटितं स्यात्।

## ५। हयवरट्।

तस्य ग्रहणं भवत्येकेन शश्छोटी (८।४।६३) त्यकारेणेति। अत्र शश्छोटी-त्येतत् प्रदेशवाक्योपलक्षणं द्रष्टव्यम्। एवंजातीयकेषु निर्देशेष्वकारेण ग्रहणं भवति। ननु वर्णान्तरेणेत्यत्रायमर्थोऽभिप्रेतः। नत्वत्रैव सूत्रे अकारेण ग्रहणं भवतीति। अट्कुप्वाङ्नुम्व्यवायेऽपीति (८।४।२) दीर्घादटी (८।३।९) त्यत्राप्यकारेण ग्रहणस्येष्टत्वात्। अथ लुङ्लङ्लृङ्क्ष्वडुदात्त (६।४।७१) इत्यत्राप्यकारेण ग्रहणं कस्मान्न भवति। प्राक्सितादड्-व्यवायेऽपीति (८।३।६३) वचनात्। प्रत्याहारे ह्येतस्मिन्नकारादीनां योऽन्यतमस्तेनालोन्त्यपरिभाषयाङ्गान्तरस्य भवितव्यम्। प्रत्येकमट्संज्ञकत्वात्। प्रत्येकमिवाकारादीनामादेशत्वात्। तथा चान्त्यग्रहणेन ग्रहणादड्व्यवधानं नोपपद्यते। अथ प्रत्येकमप्यसंज्ञकत्वे समस्तानामप्यादेशभावः प्रकल्प्येत। एवमनेकाल्त्वात् सर्वादेशः स्यात्। तथाच स्यान्यपि सकारो न स्यादिति कस्य केन व्यवधानान् मूर्धन्यो भवेद् अभ्यषुणोदित्यत्र? अथार्धधातुकस्येड्-वलादे (७.२।३५) रित्यत्रेकारेणास्य ग्रहणं कस्मान्न भवति? तन्न विदित

इति चेति ( ५।१।४३ ) निर्देशात् । प्रत्याहारे ह्येतस्मिन् नादेः परस्येति ( १।१ ५४ ) इकारादीनामन्यतमस्तकारस्यादेशः स्यात् । तथाच विदितमिति रूपं नोपपद्यते । अथ दीधीवेवीटामि ( १।१।६ ) त्यत्रापीकारेण ग्रहणं कस्मान्न भवति ? जयति सम्भवत्यवहरतीत्येवमादि ( ४।४।२, ५।१।५२ ) निर्देशात् । प्रत्याहारे ह्येतस्मिन् गुणप्रतिषेधादेवमादयो निर्देशा न सम्भवेयुः । यकारात् परस्य रेफस्योपदेशे सति यो दोषस्तमुद्भावयितुकाम आह अयमित्यादि । परोपदेशस्तु वल्यन्तर्भावाज्जीवेरदानुक् जीरदानुः । गोधाया द्रक् ( ४।१।१२९ ) गौधेर इत्यत्र लोपो व्योर्वलीति व्योर्लोपो यथा स्यात् । रल्ग्रहणे च वकारस्य ग्रहणं माभूदित्येवमर्थञ्च । यदि हि वकारात् पूर्वो रेफ उपदिश्येत रलो व्युपधाद्धलादेः संश्चेति ( १।२।२६ ) देवित्वा दिदेविषतीत्यत्र कित्त्वं वा स्यात् । ननु च क्रियमाणेऽपि रस्य यकारात् परोपदेशे प्राप्नोत्येव वकारस्य रल्ग्रहणेन ग्रहणम् । जशामपि मध्ये तस्योपदेशात् । नैतदस्ति । उभयोर्भिन्नगुणनिष्पाद्यत्वाद् भेदस्य सिद्धत्वात् । यथोक्तम् । पृथक्प्रयत्ननिर्वर्त्यं वर्णमिच्छन्तीति । अन्तःस्थात्वेनेषत्पृष्टकरणत्वादितरस्य च स्पर्शत्वेन स्पृष्टकरणत्वात् । अयञ्च दन्त्यौष्ठ्यो वकारः । यस्तु जबगडदशिष्यते स ओष्ठ्यो वेदितव्यः । ननु च वकारेण व्यवधानान्नायं यकारात् परः । किं तर्हि ? वकारात् पर इति तत् किमुच्यते यकारात् पर इति ? व्यवधानेऽपि परशब्दो वर्त्तते । यथा बाल्यात् परं वृद्धत्वमित्यदोषः । अत्र यौवनेन व्यवहितेऽपि वृद्धभावे परशब्दस्य वृत्तिः । यदि यकारात् पर उपदिश्यते ततः किमित्याह तस्य यर्ग्रहणेनेत्यादि । यरित्यस्याः संज्ञाया ग्रहणेनोच्चारणेन । तथा ययित्यस्याः संज्ञाया ग्रहणेनोच्चारणेनेत्यर्थः । अथवा यरां संज्ञिनां ग्रहणेनोपादानेन । ययां संज्ञिनां ग्रहणेनोपादानेनेत्यर्थः । ग्रहणे सतीति उपादाने सति । तद्ग्रहणेन तु तद्ग्रहणम् । तस्यापि तत्संज्ञकत्वात् । तदन्तर्भावात् च । स्वर्णयतीत्यत्र ऋटुरषा मूर्धन्या इति तुल्यस्थानत्वाद् रेफस्य नकारे परे परसवर्णो णकारादेशो भवति । विशेषानभिधानात् । ननुचैवं सति स्थानेन्तरतमपरिभाषा बाध्येत । न हि रेफस्यान्तरतमो णकारः । प्रयत्नभेदात् । नैतदस्ति । व्यक्तिः पदार्थ इत्येतद्धि

दर्शनमाश्रित्य चोद्यते। तेन स्थानेन्तरतमपरिभाषया बाधा नाशङ्कनीया। यत्र ह्यन्तरतमोऽनन्तरतमश्च विद्यते तत्र तस्या व्यापार:। नचेहान्तरतमोऽस्ति यस्माद् व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणं प्रवर्त्तते। आनन्त्यात् तु सर्वाणि लक्षणानि नोच्चार्य्यन्ते। तच्च यदेतद्विषयं लक्षणं तत् प्रयत्नभेदादनन्तरतमेऽपि णकारे यदि न प्रवर्त्तते तदा तस्य वैयर्थ्यमेव स्यात्। तस्माज् जातौ पदार्थे इयं परिभाषा वेदितव्या। न तु द्रव्ये। मद्रह्रदभद्रह्रद इति। अचो हकारादुत्तरोऽयं रेफ: यर् भवतीति द्विर्वचनं प्राप्नोति। अचो रहाभ्यां द्वे (८।४।४६) इत्यत्र यरोऽनुनासिकेऽनुनासिको (८।४।४५) वेत्यतो यरित्यनुवर्त्तते। तत्र द्विर्वचने सति द्वयो: रेफयो: श्रवणं स्यात्। रो रीत्येकस्य (८।३।१४) लोपो भविष्यतीति चेत्? न। लोपे कर्त्तव्ये द्विर्वचनस्यासिद्धत्वात्। हलो यमां यमि लोप (८।४।६४) इत्यनेन तर्ह्येकस्य लोपो भविष्यति। सिद्धं ह्यस्मिँल्लोपे द्विर्वचनम्। एवमपि पक्षे द्वयो: रेफयो: श्रवणं प्रसज्येत। तत्र हि झयो होऽन्यतरस्यामित्यतो (८।४।६२) ऽन्यतरस्याङ्ग्रहणमनुवर्त्तते। अथापि तत्रानुवर्त्तेत एवमपि द्विर्वचनविधानसामर्थ्याल्लोपो न भविष्यति। अन्यथा हि द्विर्वचनविधानमनर्थकं स्यात्। कुण्डं रथेनेति। अनुस्वारस्य ययि परसवर्ण (८।४ ५८) इति तदन्यस्य परसवर्णस्यासम्भवाद् रेफस्य रेफएव परसवर्ण: स्यात्। रेफोष्मणां सवर्णा न सन्तीति रेफोऽपि रेफस्य सवर्णो न भवतीत्येतच्च नाशङ्कनीयम्। वर्णान्तरापेक्षया तदुक्तम्। वर्णान्तराणां यथायोगमतुल्यस्थानप्रयत्नत्वात्। रेफव्यक्तीनां तु परस्परापेक्षया सावर्ण्यमस्त्येव। तुल्यस्थानप्रयत्नत्वात्। अन्ये तु ययि रेफे अनुस्वारस्य परसवर्णो णकार: स्यात्। तुल्यस्थानत्वादिति वर्णयन्ति। एतच्चायुक्तम्। न हि स्थानमात्रतुल्यतया सवर्णो भवति। किं तर्हि? तुल्यस्थानतया तुल्यप्रयत्नतया च। नच रेफस्य णकार स्तुल्यप्रयत्न:। रेफस्येषत्पृष्टत्वात्। णकारस्य च स्पृष्टत्वात्। एवं व्यक्तिपदार्थमाश्रित्य परेण चोदिते जातिपदार्थमाश्रित्य परिहारं वक्तुकाम आह। नैष दोष इत्यादि। आकृताविति जातावित्यर्थ:। केषाञ्चिज्जाति: पदार्थ:। केषाञ्चिद्द्रव्यम्। पाणिनेस्तूभयम्। लक्ष्यानुरोधात्। तत् क्वचित्

किञ्चिदाश्रीयते । तत्र जातौ पदार्थ आश्रीयमाणे जातिरेव शब्देनाभिधीयते । नान्तरीयकत्वात् तु तदाधारा व्यक्तयः प्रतीयन्ते । जातेराधारमन्तरेण प्रत्येतुमशक्यत्वात् । एतस्मिन् दर्शने तस्यास्तु जातेः स्थानित्वमादेशत्वं परत्व-मव्यवहितत्वमित्यादयो धर्माः शब्दसंस्कारोपयोगिनो व्यक्तिद्वारकाः । तेन यरोनुनासिकेऽनुनासिको ( ८।४।४५ ) वेत्येवमादिलक्षणं प्रवर्त्तमानं जाति-मतीषु व्यक्तिषु एव प्रवर्त्तते । तत्र प्रवृत्तेर्जातौ प्रवृत्तं भवति । नच तासु व्यक्तिषु जातिं प्रति कासाञ्चिदासक्तिर्विप्रकर्षो वा यतः क्वचिदेव प्रवर्त्तेत । न सर्वत्र । सम्बन्धस्याविशिष्टत्वात् । तस्मात् तत्र प्रवर्त्तमानं यत्र वचनान्तरेण न्यायेन वा न बाध्येत तत्र सर्व्वत्रैव प्रवर्त्तते । एवञ्च प्रवृत्तं समुदाये प्रवृत्तं भवति । सकृदिति एकवारम् । न पुनः पुनः । सकृत्प्रवृत्त्यैव लक्षणस्य च चरितार्थत्वात् । एतस्मिन् दर्शने यरोऽनुनासिकेऽनुनासिको वेत्येतल्लक्षणं कथं प्रवर्त्तेत ? किमविशेषेण सर्वेष्वेव जातिमत्सु पदार्थेषु प्रवर्त्तते ? उत विशेषेण केषुचिदेव ? यद्यविशेषेण स्यात् स दोषस्तदवस्थ एव । अथ विशेषेण वाच्यस्तर्हि सविशेष इत्यत आह यरोऽनुनासिक इत्यादि । एतेन स्थानेन्तरतमपरि-भाषाया उपस्थानात् तद्वशेनान्तरतमेष्वेव प्रवर्त्तते । नान्येष्विति दर्शयति तदनेनेत्यादि । यत एवान्तरतमेष्वेव प्रवर्त्तते तस्मादनेन लक्षणेन गकारादीनां येऽन्तरतमाः स्थानगुणाभ्यामुभाभ्यामपि ते ङकारादयोऽनुनासिका विहिताः । यथास्वमिति । यथात्मीयमिति । ये येषामन्तरतमास्ते तेषां विहिता इत्यर्थः । गकारादीनामिति । आदिशब्देन जकारादीनां ग्रहणम् । ङकारादय इत्यत्रापि आदिशब्देन ञकारादयोऽनुनासिका गृह्यन्ते । तत्र स्थानतो गुण-तश्चान्तरतमाः । तद्यथा गजडदबानां यथाक्रमं ङञणनमाः । तथाहि अकुहविसर्जनीयाः कण्ठ्या इति गकारङकारयोस्तुल्यं कण्ठः स्थानम् । इचुयशास्तालव्या इति जकारञकारयोस्तालु । ऋटुरषा मूर्धन्या इति डकारणकारयो मूर्धा । लृतुलसा दन्त्या इति दकारनकारयोर्दन्ताः । उपूपध्मानीया ओष्ठ्या इति बकारमकारयोरोष्ठः । गुणस्तु सर्वेषामेवैषां तुल्यः । स्पृष्टं करणं स्पर्शानामिति वचनात् । कादयो मावसानाः स्पर्शाः ।

ये तु न स्थानतो नापि गुणत इति । अन्तरतमा इत्यपेक्षते । ते सर्वे निवर्त्तिता इत्यनेन वक्ष्यमाणेन सम्बन्धः । अविधानमेवैषां निवर्त्तनम् । स्थानमात्रेण गुणमात्रेण वेति । तत्राप्यन्तरतमा इत्यपेक्षते । पूर्ववच्च सम्बन्धः । तत्र नापि स्थानतो नापि गुणतोऽन्तरतमा अनुनासिकाः । ते यथा गजडानाम् । यवलाः सानुनासिका निरनुनासिकाश्चापि । ते तेषां स्थानगुणाभ्यामनन्तरतमा एव । सानुनासिकग्रहणं तु यरोऽनुनासिके इत्यादौ (८।४।४५) सूत्रेऽनुनासिकस्यादेशत्वेनोपादानात् । तत्र गकारयकारयोर्यथाक्रमं कण्ठतालुस्थानत्वात् स्थानत आन्तरतम्यं नास्ति । जकारलकारयोस्तालुदन्तस्थानत्वात् । डकारवकारयोर्यथाक्रमं मूर्धदन्तोष्ठस्थानत्वात् । गुणतोऽपि तेषां नास्त्यान्तरतम्यम् । गकारादीनां स्पृष्टकरणत्वात् । यकारादीनामीषत्स्पृष्टकरणत्वात् । ईषत्स्पृष्टं करणमन्तःस्थानामिति वचनात् । अन्तस्था यरलवाः । स्थानमात्रेणान्तरतमा अनुनासिकाः । तद् यथा जदबानां यँलँवँाः सानुनासिकाः । अत्र जकारस्य यकारस्तुल्यस्थानम् । तयो स्तालुस्थानत्वात् । दकारस्य लकारः । तयो र्दन्तस्थानत्वात् । बकारस्य वकारः । उभयो रोष्ठस्थानत्वात् । यद्यप्यन्तःस्थस्य वकारस्य दन्ताः स्थानमधिकं तथापि यत्र तयो स्तुल्यस्थानमोष्ठः तत्कृतमान्तरतम्यमस्त्येव । उकारौकारवत् । उकारस्य ओष्ठस्थानम् । ओकारस्य तु कण्ठोऽपि । ओ औ कण्ठोष्ठाविति वचनात् । तथापि यत् तयो स्तुल्यं स्थानं ओष्ठस्तत्कृत मान्तरतम्यं भवत्येव । यथा च तयोरेकस्य स्थानाधिक्येऽपि आन्तरतम्यं तथा बकार वकारयोरपि । गुणमात्रेणान्तरतमाः यथा जबडानां ङणनाः। सर्वेषां स्पृष्टतागुणत्वात् । स्थानत स्तेषामान्तरतम्यं नास्ति । जबडानां यथाक्रमं ताल्वोष्ठमूर्द्धस्थानत्वात् । ङणनानान्तु कण्ठमूर्धदन्तस्थानत्वात् । इतीत्यादि । इतिकरणो हेतौ । यत एवं स्थानगुणाभ्यां येऽन्तरतमास्त एवानेन विहिता अन्ये तु सर्वे निवर्त्तिताः तस्मात् स्थानमात्रेणान्तरतमो रेफस्य णकारो न भवति । स्थानमात्रेणान्तरतमत्वं चोभयो र्मूर्धस्थानत्वात् । गुणत स्त्वान्तरतम्यं नास्ति । स्पृष्टतादिगुणभेदाच्च । रेफस्य यरन्तर्भावे सतीति । यर्कार्य्यप्राप्तेरयं हेतुः । यर्कार्य्यं प्राप्तमिति द्विर्वचनमित्यर्थः । तद्धि यरन्त

र्भावाद् रेफस्य प्राप्नोति यथान्येषां यराम् । तदित्यादि । रेफस्य द्विर्वचनं प्रति निमित्तभावः साक्षाच्छिष्टः प्रत्यक्षविहितः । अचो रहाभ्यामिति (८।४।४६) साक्षाद् रेफं निमित्तत्वेनोपादाय द्विर्वचनविधानात् । यर्कार्य्यन्तु यरन्तर् भावादनुमितम् । प्रत्यक्षानुमितयोश्च प्रत्यक्षं बलीय इति साक्षाद् विहितेन निमित्तभावेन रेफस्य द्विर्वचनं बाध्यते । तद् यथा ब्राह्मणा भोज्यन्ताम् । माठरकौण्डिन्यौ परिवेविष्टामिति । अत्र हि साक्षाद्विहितेन परिवेषणम् प्रति साधनभावेन माठरकौण्डिन्ययो र्ब्राह्मणत्वाद् योऽनुमितो भोजनं प्रति साधनभावः स बाध्यते । यद्येवं दध्युदकादिषु दोषः । इको यणचीत्यत्र ह्यजन्तर्भावादिको यणादेशं प्रति निमित्तभावोऽनुमीयमानः । यणादेशस्तु साक्षाच्छिष्टः । इक इति साक्षादिकं कार्यिणमुपादाय विधानात् । ततश्च साक्षाच्छिष्टेन तेन निमित्तभाव इको बाध्यते । तत्र व्यक्तेः पदार्थस्याश्रितत्वाददोषः । व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणं प्रवर्त्तत इत्युक्तम् । तत्र यदि यणादेशेन निमित्तभाव इको बाध्येत यद् दध्युदकादिविषयं लक्षणं तस्य वैयर्थ्यं स्यात् । तस्मान्मा भूदेष दोष इति लक्षणसामर्थ्यान्निमित्तभावो न बाध्यते । इह पुन र्जातिः पदार्थ आश्रितः । तत्र जातेरेकत्वादचो रहाभ्यामिति लक्षण मप्येकमेव । तच्चार्क्कः मर्क्कइत्यादौ चरितार्थम् । अतो यद्यपि मद्रक्रदादौ द्विर्वचनं न विदधाति तथापि न भवति वैयर्थ्यप्रसङ्ग इति न द्विरुच्यते । रेफ इति । इतिकरणेनानन्तरोक्तस्यार्थस्य द्विर्वचनाभावं प्रति हेतुभावो द्योत्यते । अनुस्वारस्येत्यादि । न केवलं यरोनुनासिकेऽ (८।४।४५) र्नुनासिको वेत्येतदन्तरतमं सकृदेव प्रवर्त्तमानं विदधाति अपित्वनुस्वारस्य ययि परसवर्ण (८।४।५८) इत्येतदपि इतरपि शब्दस्यार्थः । स्यादेतत् । यद्यप्यन्तरतमं विदधाति तथापि भवितव्यमेवात्र रेफेण परसवर्णेन । तस्याप्यन्तरतमत्वादित्यत आह नचेत्यादि । नच रेफस्य सवर्णोऽस्तीति सम्बन्धः । किंविशिष्टो नास्ति ? अनुस्वारान्तरतमः । अनुस्वारस्य सदृशतम इत्यर्थः । इति हेतोर्न भवति कुण्डं रथेनेत्यत्र परसवर्णः । कथं पुनरनुस्वारान्तरतमः । सवर्णो रेफस्य नास्ति ? उच्यते । रेफस्य रेफ एव सवर्णः । नान्यो वर्णः । स चानुस्वारस्यान्तरतमो न भवति । स्थानभेदाद् गुणभेदाच्च । रेफस्य हि मूर्धा स्थानम् । अनुस्वारस्य

पुनरनुस्वारयमा नासिक्या इति वचनाद् नासिका। गुणोऽपि रेफस्येषत्-स्पृष्टता। अनुस्वारस्य तु स नास्ति। अन्तःस्थानामेव ह्ययमसाधारणो गुण इष्यते। नान्येषाम्। यद्यपि वर्गाणां तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ च यमौ च तृतीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्चेति वाह्यप्रयत्नाख्येन गुणेन संवृतकण्ठत्वादिना अनुस्वारान्तरतमो रेफः सवर्णः सम्भवति तथापि न गुणमात्रेणान्तरतममितल्लक्षणम् परसवर्णं विधातु मुत्सहते। यत्र स्थानतो गुणतश्चान्तरतमास्तत्रानुस्वारस्य परसवर्णाः सन्ति। शङ्कितः कुण्ठित इत्यत्र चरितार्थत्वात्। अत्र स्थानतोऽप्यनुस्वारस्य नासिकास्थानस्य ङणावन्तरतमौ। तयोरपि नासिकास्थानत्वात्। जमङणनाः स्वस्थाना नासिकास्थानाश्चेति वचनात्। गुणतोऽपि। तेषाम् पूर्वोक्तैरनुस्वारगुणैरनुगतत्वात्। यथा तृतीयास्तथा पञ्चमा इति वचनात्। अनेन हि वर्गाणां तृतीयचतुर्था इत्यादिना ग्रन्थेन ये ऽनुस्वारसाधारणा वर्गतृतीयानां गकारादीनां गुणा उक्ता स्ते ङकारादीनां निर्दिश्यन्ते। गुणमात्रेणाप्यन्तरतमं विदध्याद् रेफं यद्यसकृत् प्रवर्त्तेत तत्। माभूत् पुनः पुनः प्रवृत्ति रपार्थिकेति कृत्वा। न चासकृत् प्रवर्त्तत इत्युक्तम्। उरः केणेत्यादि। उरः कायति। उरः पाति। कै गै शब्दे। पा रक्षणे। इत्याभ्यामातोऽनुपसर्गे कः ( ३।२।३ )। आतो लोप इटि चेत्याकार ( ६।४।६४ ) लोपः। उपपदसमासः। सुब्लुक्। ससजुषो ( ८।२।६६ ) रुः। तस्य खरवसानयोर्विसर्जनीयः ( ८।३।१५ )। कुप्वोः=क≍पौ चेति ( ८।३।३७ ) यथायोगं विसर्जनीया वुपध्मानीयजिह्वामूलीयौ।

## ६। लण्।

अयं णकारो द्विर्बध्यते। पूर्वतश्चैवं परतश्चैवम्। तत्र णग्रहणेष्वण्-ग्रहणेषु च संदेहो भवति। किं पूर्वेण स्युः परेण वेति। अतस्तदपनयनार्थ-माह। इण्ग्रहणानीत्यादि। तत्र यथा सर्व्वाणीण्ग्रहणानि परेण णकारेण गृह्यन्ते तथा अइउण् इत्यत्र प्रतिपादितम्। अण्ग्रहणानि तु यानि परेणापि सम्भाव्यन्ते तानि पूर्वेण प्रतिपाद्यानि। कानि पुनस्तानि ? ढ्लोपे

पूर्वस्य दीर्घोऽणः ( ६।३।१११ )। केऽणः ( ७।४।१३ )। अणोऽप्रगृह्यस्यानुनासिकः ( ८।४।५७ )। उरण् रपरः ( १।१।५१ )। इत्येतेषु सूत्रेषु यान्यण्ग्रहणानि। तत्र पूर्वस्मिं स्तावत् सूत्रे इढ़ादिषु व्रढ़शब्द पाठो ज्ञापको न परेणाण् ग्रहण मिति। यदि हि परेण स्याद् व्रढ़ इति रूपं न स्यात्। ततश्च इढ़ादिषु व्रढ़ इति पाठो नोपपद्यते। व्रह उद्यम इत्यस्य निष्ठायां ढत्वधत्वढलोपेषु कृतेषु व्रढ़ इति रूपं भवति। किञ्च दीर्घश्रुत्या तत्राचश्चेति ( १।२।२८ ) सन्निधापिते सत्यच एव दीर्घत्वेन भवितव्यम्। तथाच यदि परेणान्तःपातिनामप्यचां दीर्घत्वमभिमतं स्याद् असन्देहार्थं मज्ग्रहणमेव कुर्य्यात्। अथवा तदपि न कुर्य्यात्। अचश्चेत्यस्मादेव ( १।२।२८ ) सर्वाचां दीर्घत्वसिद्धेः। तस्मादण्ग्रहणसामर्थ्यात् पूर्वेणाण्ग्रहणं विज्ञायते। केऽण ( ७।४।१३ ) इत्यनेनापि के परतो हलामणामसम्भवादचामेव ह्रस्वो विधीयते। तत्र यदि सर्वेषामचां ह्रस्वत्वमभीष्टं स्याद् असन्देहार्थं मज्ग्रहण मेव कुर्य्यात्। अथवा तदपि न कुर्य्यात्। ह्रस्वग्रहणेनोपस्थापितादचश्चेत्यस्मादेवाभिलषितार्थसिद्धेः। तृतीयेनापि सूत्रेण पदान्तस्याणोऽनुनासिको विधीयते। नच पदान्ता हलोऽणः सन्तीत्यचामेवानुनासिको विधेयः। तत्र यदि सर्वेषामचामनुनासिको विधित्सितः स्याद् असन्देहार्थं मज्ग्रहणमेव कुर्य्यात्। अथवा तदपि न कुर्य्यात्। अचएव हि प्रगृह्यसंज्ञा भवन्ति। न हलः। तत्र नञिव युक्तान्यायेन प्रगृह्यप्रतिषेधात् तत्सदृशस्याच एव कार्य्यं विज्ञास्यते। तस्मात् तत्राप्यण्ग्रहणसामर्थ्यात् पूर्वेणैवाण्ग्रहणं प्रतीयते। उरण् रपर ( १।१।५१ ) इत्यत्रापि होतृप्रशास्तॄणामिति ( ६।४।११ ) निर्देशो ज्ञापयति नेह परेणाण्ग्रहणमिति। परेणाण्ग्रहणे सति नामीति रपरो दीर्घः स्यात्। तथाच प्रशास्तॄणामिति निर्देशो न स्यात्। किञ्च नच रेफादन्य ऋकारस्य स्थाने हलोऽणः क्वचिच्छास्त्रे विधीयन्ते। तथाहीको यणचीति रेफः स्यात्। नच ऋकारस्य स्थाने कर्त्तर्थमित्यादौ रेफे रेफपरे अरेफपरे वा विहिते कश्चिद्विशेषः। कृते हि रपरे तत्रैकस्य रेफस्य रो रीति ( ८।३।१४ ) लोपेन भवितव्यम्। तस्मादेतदप्यण्ग्रहणं परेण णकारेण भवदनर्थमेव स्यात्। तत्र

यदि सर्वेषामचां स्थाने विधीयमानानां रपरत्व मिष्टं स्याद् असन्देहार्थमज्-ग्रहणमेव कुर्य्यात्। तदेवमेतदण्ग्रहणं पूर्वेणैव णकारेण भवतीति निश्चीयते। अणुदित् सवर्णस्य चाप्रत्यय (१।१।६९) इत्येकमनेनेति। अत्र च उऋदिति (७।४।७) ऋकारस्य तपरकरणं लिङ्गम्। तद्धि ऋकारेण सवर्णानां ग्रहणे सति अचीकृतदित्यत्र दीर्घस्य स्थानिन आन्तरतम्याद् दीर्घो मा भूदित्येवमर्थं क्रियते। यदि चाणुदिदित्यादौ पूर्वेण णकारेणाणग्रहणं स्यात् तदा ऋकारोऽनण्त्वात् सवर्णानां ग्राहको न स्यात्। ततश्च दीर्घस्यापि स्थानिनो यथाश्रुतेन ह्रस्वेनैव भवितव्यमिति तपरकरणं न कुर्य्यात्। व्यावर्त्त्याभावात्। कृतञ्च। ततो गम्यते परेण णकारेणाण्ग्रहणमिति। ननु च सत्यपि परेण णकारेणाण्ग्रहणे उर् ऋदित्यत्र (७।४।७) नैव सवर्णानामृकारो ग्राहक उपपद्यते। भाव्यमानत्वात्। भाव्यमानेनाणा सवर्णानां ग्रहणं नेति प्रतिषेधात्। नैतदस्ति। वक्ष्यति हि तत्र नचायं भाव्यमानोऽण्। किं तर्हि? आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवाभ्यनुज्ञायत इति। अचीकृतदित्यत्र कॄत संशब्दने। चुरादिणिच्। लुङ्। च्लेः णिश्रीत्यादिना चङ् (३।१।४८)। उरृदिति (७।४।७) ऋकारस्य ऋकारः। णिलोपः (६।४।५१)। चङीति (६।१।११) द्विर्वचनम्। उरदित्यत्त्वम् (७।४।६६)। हलादिः (७।४।६०) शेषः। सन्वल्लघुनी (७।४।९३) तीत्त्वम्। दीर्घो लघो (७।४।९४) रिति दीर्घत्वम्। अथ किमर्थमज्ग्रहणमेवैतन् न क्रियत इति? यत्र कृते सन्देह एव न भवतीति भावः। किं कारणम्? नैवं शक्यमित्यत आह अन्तःस्थानामपि ह्रीत्यादि। अन्तःस्था द्विप्रभेदा रेफवर्जिताः। सानुनासिका निरनुनासिकाश्चेति वचनात्। यवलाः सानुनासिकनिरनुनासिक-भेदेन द्विप्रकाराः। ते प्रत्याहारेऽपि निरनुनासिका वा उपदिश्येरन् सानुनासिका वा? यदि निरनुनासिकाः सयँ्य्यन्तेत्यादावनुस्वारस्य ययि पर सवर्णे (८।४।५८) इत्यान्तरतम्यात् सानुनासिकेषु यकारादिषु परसवर्णेषु कृतेषु तेषां प्रत्याहारे ऽनुपदेशाद् यलं नास्तीत्यनचि चेति (८।४।४७) यरो द्विर्वचनं विधीयमानं न स्यात्। अण्ग्रहणे तु सत्यण् सवर्णान् गृह्णातीत्येतेषामपि द्विर्वचनं सिध्यति। ननु च कृतेऽपि द्विर्वचने हलो

यमां यमि लोप ( ८।४।६४ ) इत्येकस्य लोपविधानात् त्रयाणां यकाराणां श्रवणं न सम्भवत्येव । तत् किं द्विर्वचनार्थेन प्रयत्नेन ? नैतदस्ति । पाक्षिको हि स लोपः । झयो ( ८।४।६२ ) होऽन्यतरस्यामित्यन्यतरस्यां-ग्रहणानुवृत्तेः । तत्र यस्मिन् पक्षे लोपो नास्ति तत्र त्रयाणां श्रवणं भवत्येव । अथ सानुनासिका उपदिश्येरन् प्रत्याहारेऽनुस्वारस्य परसवर्णत्वं निरनुनासिके परतो न स्यात् । यवां मध्ये तेषामसन्निवेशात् । हकारा-दिष्वित्यादि । प्रतिज्ञानुनासिक्याः पाणिनीयाः । यत्रेच्छन्ति तत्रानुनासिक्यं प्रतिजानते । नान्यत्र । लकारे च तैरकारस्य तत् प्रतिज्ञायते । न हकारा-दिषु । इत्संज्ञक इति । उपदेशेऽजनासिक ( १।३।२ ) इदितीत्संज्ञा विधानात् तेनेत्यादिना अनुनासिकप्रतिज्ञायाः फलं दर्शयति । ऋकार-लृकारयोः सवर्णसंज्ञोपसंख्यानादृकारो गृह्यमाणो लृकारमपि गृह्णाति । तत उरण् रपर इति । यथा ऋकारस्याण् शिष्यमाणो रपरो भवति एवं लृकारस्यापि भवन् लपरश्चेष्यते । तस्मादनुनासिकः प्रतिज्ञायते । तेनादि-रन्त्येन ( १।१।७१ ) सहेतेति उरण् रपर इत्यत्र ( १।१।५१ ) र इति प्रत्याहारग्रहणं भवति । रेफात् प्रभृत्या लणो ऽकारात् । तस्मिंश्च सति ऋकारस्याण् रपरः भवति । लृकारस्य तु लपर इति । तत स्तवल्कार इत्याद्युपपन्नं भवति ।

## ७। ञ म ङ ण न म् ।

तस्य ग्रहणं भवति त्रिभिरिति । अथ सृजिदृशोर्झल्यमकिती ( ६।१।५८ ) त्यत्राप्यस्याकारेण ग्रहणं कस्मान्न भवति ? साक्षाद्द्रष्टरीति ( ५।२।९१ ) निर्देशात् । प्रत्याहारे ह्येतस्मिन्नकाराद्यादेशविधानाद् द्रष्टृशब्दो न सिध्येत् । इह तर्हि भ्रस्जो ( ६।४।४७ ) रोपधयो रमन्यतरस्यामिति रेफेण कस्मान्न भवति ? अथ रमयमुपात्तो न त्वम् इत्येष कुतो निश्चयः ? तुल्या हि संहिता । तत्र भवितव्यं सन्देहेन । किमयं रम् ? आहो-स्विदमिति । व्याख्यानान्निश्चय इति चेत् ? यदि तर्हि व्याख्यानस्य निश्चयहेतुत्वमभ्युपेयते ततएवात्र चान्यत्र च सर्वत्रैवंजातीयके संदेहविषये

निश्चयो भविष्यतीति किमन्यैरतिविस्तरग्रन्थकारिभिर्हेतुभिरुपन्यस्तैः प्रयोजनम्? यस्तु मन्यते भ्रस्जो रोपधयो रमित्यत्र व्यवस्थितविभाषया प्रत्याहारस्य ग्रहणं न भविष्यतीति स इदं स्याद्वचनीयः। किमनेनान्यतरस्यां ग्रहणेन रम्ग्रहणं विकल्प्यते? अन्यतरस्यां रम् गृह्यत इति। अथ विधानमन्यतरस्यां रम् विधीयत इति? यदि रम्ग्रहणं ततो रेफस्यैवेदं स्वरूपेण मकारानुबन्धवतो ग्रहणम्। न प्रत्याहारस्येति लभ्यते। एतद्व्यवस्थितविभाषया रमागमस्तु विकल्पेन न स्यात्। अन्यतरस्यांग्रहणस्य रम्ग्रहणविकल्पे चरितार्थत्वात्। नहि द्वितीयमन्यतरस्यां ग्रहणमस्ति। येन विधानं विकल्प्येत। इतरत्र तु पक्षे सिध्यति पाक्षिकं विधानम्। किं तु यत् तदभिमतं व्यवस्थितविभाषया रेफस्यैवेदं मकारानुबन्धवतः स्वरूपेण ग्रहणं न प्रत्याहारस्येति तन्नोपपद्यते। एकत्वादन्यतरस्यांग्रहणस्य। तस्य विधानविकल्पे नैवोपयुक्तत्वात्। किञ्च कुतश्चायमध्यवसायो व्यवस्थितविभाषेयमिति? व्याख्यानादिति चेत्? किमिदानीं पारम्पर्य्याश्रयणेन? व्याख्यानादेव नैवं प्रत्याहारग्रहणं भविष्यतीति यत् किञ्चिदेतत्। अकारेणापि प्रत्याहारग्रहणमस्य दृश्यत इति। यद्येवं किमर्थं त्रिभिरित्युक्तम्? अमन्ताड्ड (१) इत्यत्र प्रत्याहारस्य नावश्यं ग्रहणमिति दर्शयितुम्। अत्र हि अकारमकारस्वरूपोपादानेऽपि विना प्रत्याहारग्रहणेनान्यतोपि मकाराद्यन्ताड्डप्रत्ययः सिध्यत्येव। बहुलाधिकारविधानात्। (२) नन्वेवमपि चतुर्भिरित्येवं वक्तव्यम्। यमिरमन्तेष्वित्यत्र (३) अकारेणाप्यस्य ग्रहणदर्शनात्। सत्यमेतद् यदि ग्रहणमात्रमभिप्रेत्यैतदुच्येत। नचेदं ग्रहणमात्रमभिसन्धायोक्तम्। किं तर्हि ग्रहणविशेषम्। सौत्रम्। न चेदं सौत्रं ग्रहणम्? किं तर्हि? आनिट्कारिकम्।

---

१। It is an औणादिक Rule. उणादि ( १।१११ )।

२। बहुलाधिकारविधानादिति। उणादयो बहुल ( ३।३।१ ) मित्यनेन।

३। This is quoted from one of the अनिट्कारिकाs composed by the Grammarian व्याघ्रभूति, viz :—

"यमि रमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यमि पठ्यते मनिः।
नमि श्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेधवाचिनाम्" ॥ १ ॥ इति।

केचिदित्यादि । यान्येतान्यनन्तरं प्रत्याहारग्रहणान्युक्तानि तानि झभञित्यत्र यो ञकारस्तेनैव भवन्त्वित्येवं विचिन्त्य केचिदाचार्य्या मकारस्य प्रत्याख्यानं कुर्वन्ति । तत्र तु प्रत्याख्याने पुमः खय्यम्परे (८।३।६) इत्यादिषु सूत्रेषु मकारस्य स्थाने ञकारः कर्त्तव्य इति तेषामभिप्रायः । तथाच सतीत्यादिना मकारानुबन्धप्रत्याख्याने दोषं दर्शयति । ङमो ह्रस्वादचि ङमुण् नित्यमिति (८।३।३२) हि पाठे झभोरपि प्रत्याहारेऽन्तर्भावाज् झभावप्यागमिनौ स्याताम् इत्येतच्चोद्यम् आपतति । तयोः झभोः पदान्तयोरभावान्न भविष्यत इति परिहारो वाच्यः । तस्मिन्नुक्ते ननु च लभेरुब्जेश्च क्विपि विहित आगमिनावुभौ स्त एव पदान्ताविति पुनश्चोद्यम् । तस्मिञ् झलाञ्जशोन्त (८।२।३८) इति बकारजकारयोः कृतयोः कुतस्ताविति पुनः परिहारः । ननु चागमिनोर्झभोरभावाद् वैषम्यं स्यात् । तथाहि ङणनास्त्रय आगमिनः । आगमास्तु ङणनझभाः पञ्च । ततश्च संख्यावैषम्यान्नैषां यथासंख्यमिति (१।३।१०) संख्यातानुदेशः स्यादिति पुनश्चोद्यम् । नैष दोषः । सूत्रे यावन्त आगमा आगमिनोऽपि तावन्त एव पठ्यन्ते । तत्र लक्ष्यमनपेक्ष्य ङकारादीनामेव यथासंख्यमागमा भवन्तीति सूत्रार्थे विहित उत्तरकालं यथासम्भवं कार्य्यप्रतिपत्तिर्भविष्यतीति । येषां तावद् आगमानामागमिनः सन्ति तेषां यथासंख्यं भविष्यन्ति । झकारभकारौ तु पदान्तावागमिनौ न स्त इति कृत्वा आगमावपि न भविष्यत इति पुनः परिहारो वाच्यः । एवमनेकचोद्यपरिहारेणागमिनो र्झभोरभावाद् हेतोरागमाभावप्रतिपत्तौ साध्यायां महाप्रतिपत्तिगौरवं भवेत् । तस्मादयुक्तं मकार प्रत्याख्यानमिति भावः ।

८ । **झभञ् ।**

९ । **घढधष् ।**

१० । **जबगडदश् ।**

११ । **खफछठथचटतव् ।**

ननु च च्छकारेणास्य ग्रहणम् । नच खफौ तदन्तर्भूतौ । तत् किमर्थं

तयोरिह ग्रहणम्? इत्याह खफग्रहणमित्यादि। उत्तरेषु प्रत्याहारेष्व-नयोरप्यन्तर्भावो यथा स्यादित्येवमर्थं तयोर्ग्रहणमित्यर्थः।

१२। कपय्।

१३। शषसर्।

१४। हल्।

इहान्येषां वर्णानां सकृदुपदेशः। हकारस्तु द्विरुपदिश्यते। तस्य द्विरुपदेशे प्रयोजनं जिज्ञासुराह अथ किमर्थमित्यादि। स्निहित्वेति। ष्णिह प्रीतौ। आदेः ष्णः स्नः (६।१।६४)। समानकर्त्तृकयोः पूर्व्वकाल इति (३ ४.२१) क्ता। इट्। अलिच्चदिति। लिह आस्वादने। लुङ्। हो ढः (८।२।३१)। षढोः कः सीति (८।२।४१) कत्वं। आदेशप्रत्यययोरिति (८.३ ५९) षत्वम्। रुदिहि स्वपिहीति। रुदिस्वपिभ्यां विध्यादिलोट्। सेर्ह्यपिच्च (३ ४.८७)। अदादित्वाच्छपो लुक्। रुदादिभ्यः सार्वधातुक (७।२।७६) इतीट्। अदाग्धामिति। दह भस्मीकरणे। लुङ्। तस्य च्लिः। तस्थस्थमिपामि-त्यादिना (३।४ १०१) तसस्ताम्। च्लेः (३.१ ४४) सिच्। वदव्रजेति वृद्धिः (७।२।३)। दादेर्धातोर्घः (८.२।३२)। झलो झलीति सिचो लोपः (८।२।२६)। झषस्तथोर्धोऽध इति (८।२ ४०) तकारस्य धत्वम्। झलाञ्जश् झशीति (८.४.५३) घकारस्य गकारः। तत्र यदि रल्ग्रहणे शल्ग्रहणे वल्ग्रहणे च हकारस्य ग्रहणं न स्यात् कित्त्वक्त्वेड्विधयो न स्युः। यदि झल्ग्रहणेन हकारस्य ग्रहणं न स्यात् ततो घत्वस्याप्यसिद्ध-त्वाद् घकाराद् अझलः परः सिजिति तस्य झलो झलीति (८।२.२६) लोपो न स्यात्। तस्माच् शल्झल्ग्रहणेषु चास्य ग्रहणं यथा स्यादित्युप-दिष्टस्यापि पुनरुपदेशः। यद्येतानि प्रयोजनानि परोपदेश एवास्तु। तेनैव ह्येतानि सिध्यन्ति। पूर्वोपदेशस्तु न कर्त्तव्य इत्यभिप्रायेणाह हयवरडित्यत्र तर्हीत्यादि। अड्ग्रहणेष्वित्यादि। यदि पूर्वत्र नोपदिश्येत अड्-ग्रहणेन चाश्ग्रहणेन चाग्रहणान् महाँ हि स इत्यत्र रुत्वानुनासिकत्वयत्व यलोपा न स्युः। महच्छब्दात् सुः। उगिदचामिति नुम् (७।१.७०)।

सान्तमहतः ( ६।४।१० ) संयोगस्येति दीर्घः । हल्ङ्यादि ( ६।१।६८ ) संयोगान्तलोपौ ( ८।२।२३ ) । महान् हि इति स्थिते हकारे परत स्तस्याड्ग्रहणेन ग्रहणाद् दीर्घादटि समानपाद ( ८।३।९ ) इति रुत्वम् । आतोऽटि ( ८।३।३ ) नित्यमिति पूर्वस्यानुनासिकः । अश्ग्रहणेन ग्रहणाद् भो भगो अघो इत्यादिना ( ८।३।१७ ) रेफस्य यत्वम् । अशीति वर्त्तमाने हलि सर्वेषामिति ( ८।३।२२ ) यलोपः । हशि चेत्यादि । इदमपरं पूर्वोपदेशस्य प्रयोजनम् । असति हि तस्मिन् ब्राह्मणो हसतीत्यत्र हकारस्य हश्ग्रहणेनाग्रहणात् तस्मिंस्त्वसति परतो रो रुत्वं न स्यात् । ब्राह्मणशब्दात् सुः । तस्य ससजुषो रुः ( ८।२।६६ ) । हशि चेत्युत्वम् ( ६।१।११४ ) आद्गुणः ( ६।१।८७ ) । एकस्मादित्यादि । परे ग्राह्या इति शेषः । स्युरिति वक्ष्यमाणेन सम्बन्धः । एकस्मादिति दिग्योगलक्षणा पञ्चमी । एकस्माद्वर्णात् परे ङकारादयो ग्राह्या भवेयुरित्यर्थः । अथवा एकस्मा-दिति ल्यब्लोपे पञ्चमी । प्रासादमारुह्य प्रेक्षते प्रासादात् प्रेक्षत इति यथा तथा प्रदेशवाक्येष्वेकं वर्णमुच्चार्य्य परिगृह्य वा ङकारादयो ग्राह्या भवेयु-रित्यर्थः । स पुनरेको वर्णः । एओङ् । झभञ् । अइउण् । खफछठथचटतव् । हयवरडित्यत्र येन सह ङकारादीनां ग्रहणमुक्तं स एव वेदितव्यः । द्वाभ्यां ष इत्यत्र परे ग्राह्या इति यदध्याहृतं यच्च स्युरिति क्रियापदं तदर्थादेकवचन तया विपरिणमति । द्वाभ्यां परो द्वौ वा उच्चार्य्य षकारो ग्राह्यो भवेदित्यर्थः । एवमुत्तरत्राप्यर्थो वेदितव्यः । कौ पुनर्द्वौ ? झभञ् । घढधषित्यत्र याभ्यां षकारस्य ग्रहणमुक्तं ताविव । त्रिभ्य एव कणमाः स्युरिति । ते पुन स्त्रयः । ऋलृक् । लण् । ञमङणनमित्यत्र यैः ककारादीनां ग्रहणमाख्यातं तएव । ज्ञेयौ चयौ चतुर्भ्य इति । ते पुनश्चत्वारः । ऐऔच । कपयित्यत्र चयोर्यैश्चकारय-कारयो र्ग्रहणमभिमतं त एव । रः पञ्चभ्य इति । ते पुनः पञ्च । शषसरित्यत्र यै रेफस्य ग्रहणं प्रतिपादितम् तएव । शलौ षड्भ्य इति । ते पुनः षट् । जबगडदश् । हलित्यत्र यैः शकारलकारयोर्ग्रहणमुक्तं ते वेदितव्या इति ।

इति प्रत्याहारसूत्राणि ।

अथ

# काशिकाविवरणपञ्जिका ।

## प्रथमाध्यायस्य प्रथमः पादः ॥ १।१ ॥

### १ । वृद्धिरादैच् ।

वृद्धिः आत् ऐजिति केचित् त्रिपदमिदं सूत्रं वर्णयन्ति । अन्ये त्वाच ऐचेति आदैजिति समाहारे द्वन्द्वोऽयमिति मत्वा वृद्धिः आदैजिति द्विपदम् । इतरेतरयोगे हि बहुत्वाद् द्वन्द्वे बहुवचनं स्यात् । ननु च समाहारेऽपि द्वन्द्वाच्चुदषहान्तात् समाहारे (५।४।१०६) इति टच् समासान्तः स्यात् । समासान्तविधेरनित्यत्वान्न भविष्यति । अनित्यत्वं षष्ठे ज्ञापयिष्यते । अथ चोः (८।२।३०) कुरिति कुत्वं कस्मान्न भवति ? अयस्मयादीनि च्छन्दसीति (१।४।२०) भसंज्ञकत्वात् । आदिशब्दस्य प्रकारवाचित्वादैच्छब्दोऽयमयस्मयादिषु द्रष्टव्यः । ननु तत्र च्छन्दसीत्युच्यते । नचेद च्छन्दः । तत् कुतो भसंज्ञा ? छन्दोवत् सूत्राणि भवन्तीत्यदोषः । इहेदं सूत्र मनर्थकं वा स्याद् यथाकथञ्चिदुदात्तादिवचनवत् ? साध्वनुशासनार्थं वा ? वृद्धिशब्दस्यादैचाञ्चानेन साधुत्वमाख्यायत इति । प्रयोगनियमार्थं वा ? आदैच्पर एव वृद्धिशब्दः प्रयोक्तव्य इति । आदेशार्थं वा ? आदैचां वृद्धिशब्द आदेशो भवति । ते वा तस्येति । आगमागमिसम्बन्धार्थं वा ? आदैचां वृद्धिशब्द आदेशो भवति । ते वा तस्येति । विशेषणविशेष्यभावप्रसिद्ध्यर्थं वा ? आदैचां वृद्धिशब्दो विशेषणम् । ते वा तस्येति । एकविभक्तिकत्वं ह्यत्र दृष्टम् । दृष्टश्चैकविभक्तिकयो र्विशेषणविशेष्यभावः । तद्यथा नीलमुत्पलमिति । संज्ञासंज्ञिसम्बन्धार्थं वा ? दृश्यते हि । सोऽप्येकविभक्तिकयोः । तद्यथा अयं पनस इति । तत्र तावदाद्यः पक्षो नोपपद्यते । समधिगतज्ञानातिशयो ह्याचार्य्यः परहितप्रतिपन्नः समाहितचेताः शिष्याणां कृतरक्षासंविधानो मङ्गलपूर्वकं महता प्रयत्नेन सूत्राणि प्रणीतवान् । तत्राशक्यमेकेन वर्णेनाप्यनर्थकेन भवितुम् । किं पुनरियता सूत्रप्रबन्धेन ? नापि शक्यं वृद्धिशब्दस्यादैचाञ्च साधुत्वमनेन विधीयत इति विज्ञातुम् ।

लक्षणान्तरेण विहितत्वात् तेषां साधुत्वस्य । तथाहि वृद्धिशब्दोऽयमविशेषेणोपदिष्टः । वृधु वृद्धावित्यतः क्तिन्प्रत्ययः । स्त्रियां क्तिन्निति (३।३।९४) । झषस्तथोर्धोऽध (८।२।४०) इति धत्वम् । झलां जश् झशीति (८।४।५३) धकारस्य दकारः । आदैचोऽप्यक्षरसमाम्नाय उपदेशात् । ऐचोऽक्षरसमाम्नाय उपदेशः । नाकारस्येति चेत् ? अवर्णजातेरुपदेशात् सोपि गृह्यत इत्यदोषः । अथाप्यकारव्यक्तेरुपदेशः ? एवमप्यदोषः । अणुदित्सवर्णस्य चाप्रत्यय (१।१।६९) इत्यकारेण गृह्यमाणेनाकारस्यापि ग्रहणात् । प्रयोगनियमार्थमप्येतन्नार्हति भवितुम् । प्रयोगनियमार्थे ह्येतस्मिन् सिचि वृद्धिर्मृजेर्वृद्धिरित्यादावनादैच्परस्य वृद्धिशब्दस्य प्रयोगो नोपपद्यते । कथं हि नाम स्वयमेव नियमं कृत्वा तमनादैच्परं प्रयुञ्जीत ? अन्यस्तु प्रयोगनियमार्थमेतन्न भवतीति प्रतिपादयितुमाह नेह च प्रयोगनियमार्थमारभ्यत इति । ननु चाय म्प्रयोगनियमार्थ मेवारभ्यते ते प्राग् धातोरिति ( १।४।८० ) । ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्या इति परेण चोदिते परिहारमाह प्रत्याख्यायते स योगो न वा । तथानिष्टादर्शनादिति । नहि प्रपचतीति प्रयोक्तव्ये कश्चित् पचति प्रेति प्रयुङ्क्ते । अथापि न प्रत्याख्यायेत ? एवमपि न दोषः । यतः संज्ञानियमोऽयं न प्रयोगनियमः । ते प्रादयो धातोः प्राक् प्रयुज्यमाना एव गत्युपसर्गसंज्ञका भवन्तीति । अथापि प्रयोगनियमार्थं स्यादेवमपि न दोषः । लौकिकानां शब्दानामर्थे प्रयुक्तानां प्रयोगनियम आरभ्यते । आदैच्छब्दश्च लौकिकः । तस्य किं प्रयोगनियमार्थेन वचनेनेति ? तत्र यदुक्तं प्रत्याख्यायते स योग इति तदयुक्तम् । नहि सार्थकस्य प्रत्याख्यानं युक्तम् । निरर्थकः स इति चेद् ? अत्राप्यनर्थकत्वाशङ्काप्रसङ्गः । यदि ह्यनर्थकान्यपि कानिचित् सूत्राणि प्रणीतवान् सूत्रकार इत्येषो ऽध्यवसायः स्याद् भवितव्यमत्राप्यनर्थकत्वाशङ्कया । ततश्च संज्ञासंज्ञिसम्बन्धार्थ मेतन्नतु निरर्थकमित्येव नियमो न स्यात् । तस्मात् तस्य प्रामाण्य मभ्युपगच्छता सर्वं तत्प्रणीतं येन केनचित् प्रकारेण सार्थक मभ्युपेयम् । योऽपि संज्ञानियमपक्ष माश्रित्य परिहार उक्तः सोऽपि वृत्त्या विरुध्यते । ते गत्युपसर्गसंज्ञका धातोः प्राक् प्रयोक्तव्या इत्यनेन हि वृत्ति-

ग्रन्थेन प्रयोगनियम एवाश्रित इति स्पष्ट मेवाख्यातम्। नच वृत्तिं व्याख्यातुमुद्यतस्य तद्विरुद्धं व्याख्यानं युज्यते कर्त्तुम्। यदप्युक्तं लौकिकानां शब्दानामितरादि तदपि न प्रयोगनियमार्थताशङ्कापनोदायालम्। तथाहि विभाषा सुपो बहुच् ( ५।३।६१ ) पुरस्तात् तु। अव्ययसर्वनाम्नामकच् ( ५।३।७१ ) प्राक् टेः। कृञ्चानुप्रयुज्यते ( ३।१।४० ) लिटीतरलौकिकानामपि बहुजादीनां शास्त्रे प्रयोगनियमो दृश्यते। तत्र भवितव्यमेवाशङ्कया किमेतत् प्रयोगनियमार्थं मथान्यार्थं मित्यलमतिप्रसङ्गेन। तस्मात् पूर्व्वोक्त एव परीहारो युक्तः। आदेशार्थमप्येतच् शक्यते न विज्ञातुम्। यदि ह्यादैचामनेन वृद्धिशब्द आदेशो विधीयेत य एते निर्देशा याति वाति द्राति प्सातीति (८।४।१७) यश्च रायो ( ७।२।८५ ) हलीति यश्च नावो ( ५।४।९९ ) द्विगोरिति ते नोपपद्येरन्। अथ वृद्धिशब्दस्यादैज् आदिश्येरन्नेवमपीदृवृद्धौ ( ३।२ २८ ) वृद्धिनिमित्तस्य ( ६।३।३९ ) च तद्धितस्येत्येवमादयो निर्देशा न सम्भवेयुः। अतएवागमार्थं मप्येतन्नोपपद्यते। नह्यादैचां वृद्धिशब्द आगमे विहिते तस्य वा तेषु पूर्व्वोक्ता निर्देशा उपपद्यन्ते। अन्यस्त्वाह आदेशविधाने स्थान्यादेशसम्बन्धे षष्ठ्या भवितव्यम्। आगमविधानेऽप्यवयवावयविसम्बन्धे। न चेह षष्ठी विद्यते। तस्मात् षष्ठ्या अभावान्नेदमादेशार्थं नाप्यागमार्थमिति। एतच्चासम्यक्। विनापि षष्ठ्या हल्ङ्याब्भ्यो दीर्घात् ( ६।१।६८ ) सुतिस्यपृक्तं हल्। अनितेः ( ८।४।१९ )। अन्तः ( ८।४।२० )। उभौ साभ्यासस्य ( ८।४।२१ ) त्यादेशविधानदर्शनात्। आगमविधानस्यापि न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ( ७।३।३) ताभ्यामैजिति षष्ठीमन्तरेणापि दर्शनात्। विशेषणविशेष्यभावप्रसिद्ध्यर्थमप्येतन्न सम्भाव्यते। तथाहि सम्भवव्यभिचारे च सति विशेषणविशेष्यभावो भवति। नीलोत्पलवत्। न चेहादैचां वृद्धिशब्दे तस्य वा तेषु सम्भवः। ननु च यथोत्पलशब्दः सर्वत्रोत्पलार्थे वर्त्तमानो नीलशब्देनार्थान्तराद्व्यवच्छिद्यत इति व्यवच्छिद्यमानो विशेष्यो भवति नीलशब्दस्तु व्यवच्छिन्दन् विशेषणं तथानयोरपि यो व्यवच्छेद्यः स विशेष्यो भवति यस्तु व्यवच्छेदकः स विशेषणमिति। नैतदस्ति। उभयोर्हि सार्थकत्वे सत्येतदुपपद्यते। नोलोत्पलशब्दवत्। नचादैचोऽर्थवन्तः। भवतु नामानयो

विशेषणविशेष्यभावः। तथापि नैतत्सिद्ध्यर्थमिदं युक्तम्। निष्प्रयोजनत्वात्। तत् पुनः प्रकृतानुपयोगित्वात्। शब्दानुशासने हि शास्त्रे प्रकृते यन्नाम शब्दसंस्कारानुपयोगिवचनं तत्सर्वमप्रयोजनम्। शब्दसंस्कारानुपयोगित्वं त्वेतत्प्रतिपादितेन विशेषणविषेष्यभावेन वृद्धिशब्दस्यादैचां वा रूपविशेषस्य वा स्वरविशेषस्य वा संस्कारस्यासिद्धेः। विशेषणविशेष्यभाव एव तेषां संस्कार इति चेद् यद्येव मत्यल्पमिद मुच्यते वृद्धिरादैजिति। नीलोत्पल मित्याद्यपि हि वक्तव्यं नीलोत्पलादिशब्दानां विशेषणविशेष्यभावप्रसिद्धये। नचोक्तम्। अतो नैष संस्कारोऽभिमत इति नास्य तादर्थ्यं सम्भाव्यते। ननु तुल्यविभक्तिकानां तद्गुणसमाध्यारोपोऽपि दृष्टः। तद्यथा सिंहो माणवक इति। तस्मात् तदर्थमेतद् भविष्यतीति यत्पक्षान्तरमेके परिकल्पयाम्बभूवुस्तदर्थमप्येतन्न भवति। तद्गुणसमाध्यारोपस्य सतोऽप्यत्र प्रकृतानुपयोगित्वेनानर्थकत्वात्। तस्मात् पारिशेष्यात् संज्ञासंज्ञिसम्बन्धार्थमेवैतदित्यालोच्याह वृद्धिशब्द. संज्ञात्वेनेत्यादि। भवतु नाम पारिशेष्यात् तदर्थम्। एतत् कुतो लभ्यते ? वृद्धिशब्दः संज्ञा। आदैचः संज्ञिन इति। विपर्य्ययः कस्मान्न भवति ? आदैचः संज्ञा वृद्धिशब्दः संज्ञीति। नार्हति विपर्य्ययो भवितुम्। तथाहि लघ्वर्थत्वात् संज्ञाकरणस्य यस्मिन्नुच्चार्य्यमाणे प्रदेशेषु लाघवं भवति तस्य संज्ञार्थत्वेन भाव्यम्। वृद्धिशब्दे च सविभक्तिकेऽप्युच्चार्य्यमाणे लाघवं भवति। नादैच्सु। यस्माद् वृद्धिशब्द उच्चार्य्यमाणे चतस्रो मात्रा भवन्ति। आदैक्षु तु पञ्च। नचादैचां प्रत्येकं संज्ञाभावाल्लाघवं भवतीति शक्यं परिकल्पयितुम्। प्रयोजनविशेष मन्तरेणैकस्यानेकसंज्ञा विधानस्य निष्फलत्वात्। किञ्चावर्त्तिन्यः संज्ञा भवन्ति। वृद्धिशब्दश्चावर्त्तते। नादैच्छब्दः। तस्मान्न भवति विपर्य्ययः। वृद्धिशब्द इति शब्दग्रहणमर्थव्यवच्छेदार्थम्। असति हि तस्मिन् शब्दादर्थावगते रर्थस्यैव संज्ञात्वं विज्ञायेत। यद्यपि प्रागेव संज्ञा विहिता तथापि शिष्यप्रशिष्यप्रबन्धाद्युपरमाद् विधीयत इति वर्त्तमानप्रत्ययेन निर्देशः। यत्र समुदायस्य कार्य्यमिच्छति तत्रोभेपदग्रहणं करोति। यथा उभे अभ्यस्तमिति। अन्वर्थां वा महतीं संज्ञां हलोनन्तराः संयोग इति। तत्र हि महती संज्ञैव-

मर्थो क्रियते समुदायस्यैषा संज्ञा यथा स्यादिति । एतच्चोत्तरत्र व्यक्ती-करिष्यामः । इह तु न किञ्चित् तथाविधं वचनमस्ति यतः समुदायस्यैषा संज्ञा स्यात् । तस्मादेकैकस्यैषा संज्ञेति मनसि कृत्वाह प्रत्येकमिति । ननु चेहापि लाघवार्थ मेकाक्षरायां संज्ञायां कर्त्तव्यायां वृद्धिरिति महत्याः संज्ञायाः करणं समुदायस्य संज्ञा यथा स्यादित्येवमर्थम् । नैतदस्ति । मङ्गलार्थ-त्वादस्याः संज्ञायाः । अतएवास्याः प्रागुच्चारणम् । अन्यथा संज्ञायाः सतः कार्य्यिणः कार्य्येण भवितव्यमिति यथादेङ्गुण इत्यादौ पूर्वं संज्ञी निर्द्दिष्ट स्तथेहापि निर्दिशेत् । आकारस्य गुणान्तरयुक्तयो श्चैचोः प्रत्याहारे ऽसन्नि-वेशान्नामी वर्णा इति कस्यचिन् मन्दधियो भ्रान्तिः स्यात् । अतस्तन्नि-राकरणायाह वर्णानामित्यादि । प्रत्यासत्ते स्तद्भावितानामेवैषां संज्ञा स्या-दिति कस्यचिद् विपर्य्ययः स्यादतस्तमपाकर्त्तुमाह सामान्येनेति । व्याप्तेर्न्या-यादित्यभिप्रायः । सामान्येनेत्यस्यार्थं विस्पष्टीकर्त्तु माह तद्भाविता-नामित्यादि । ते तद्भाविता ये वृद्धिशब्देनोत्पादिताः । ततोऽन्येऽतद्-भाविताः । आदिति तपरकरणम् । तपरस्तत्कालस्येति गुणान्तरभिन्ना-नामपि तुल्यकालानां ग्रहणार्थं वा स्याद् भिन्नकालानां ग्रहणनिवृत्त्यर्थं वा ? तत्र पूर्वः पक्ष स्तावन्नोपपद्यते । अभेदकत्वादिहोदात्तादीनां शास्त्रे गुणानाम् । कुत एतत् ? लुङ्लङ्लृङ्क्ष्व ( ६।४।७१ ) ड्डुदात्त इत्युदात्तग्रहणात् । अन्यथा ह्युदात्तगुणयुक्त मेवाटमुच्चारयेत् । द्वितीयोपि नोपपद्यते । यदि ह्याकारः सवर्णानां ग्राहकः स्यात् ततस्तेन भिन्नकालस्याप्यवर्णस्य ग्रहणे सति तस्यापि संज्ञा मा भूदिति भिन्नकालानां ग्रहणनिवृत्त्यर्थं तपरकरण-मुपपद्यते । नचासौ सवर्णानां ग्राहकः । अनण्त्वात् । तत् पुनरक्षर-समाम्नाये ऽसन्निवेशात् । तस्मादनर्थकं तपरकरणम् । ततो न कर्त्तव्य-मेवेत्यत आह तपरकरण मित्यादि । एचोरर्थः प्रयोजनं यस्य तत् तथोक्तम् । ननु च जातौ पदार्थे प्लुतस्यापि ग्रहणं भवति । तत्राप्यवर्णजातेः सम-वायात् । तत्रासति तपरकरणे तस्यापि संज्ञा स्यात् । तस्मात् तन्निवृत्तये तपरकरणं भवदाकारार्थ मप्युपपद्यत एव । तत् किमुच्यत एजर्थमिति ? एवं मन्यते । जातिपक्षसमाश्रयणेऽपि हि दीर्घोच्चारणसामर्थ्याद्‌ द्विमात्रा

एवावर्णव्यक्तयः समाश्रिता इति गम्यते। इतरथा हि लाघवार्थं मदित्ये-वाभिदध्यात्। नच ह्रस्वनिवृत्त्यर्थं दीर्घोच्चारणमिति शक्यते परिकल्पयितुम्। दीर्घोच्चारणेऽपि ह्रस्वग्रहणं प्राप्नोत्येव। तत्राप्यवर्णजातेः सम्भवादिति। न चासन्देहार्थ मादितुरक्तम्। वर्णान्तरासाधारणत्वात्। असंहितया वा सन्देहाभावादिति। ननु च तपरस्तत्कालस्येत्यत्र तः परो यस्मादिति बहुव्रीहि राश्रितः। नचात्रैच् तपरः। तत् कथं तपरकरण मैजर्थं भवती-त्यत आह। तादपि पर स्तपर इति। न केवलं तः परो यस्मात् स तपर इत्यपितु तादपि यः परः सोऽपि तपर इत्यपिशब्देन दर्शयति। एतदुक्तं भवति। न केवलं बहुव्रीहिरेव तत्राश्रीयते। किं तर्हि? पञ्चमी-तत्पुरुषोऽपि। यथा चैतदुभय माश्रीयते तथा तत्रैवोपपादयिष्यामः। इति करणो हेतौ। यत एवं तादपि परस्तपर स्तेन तपरकरण मैजर्थमित्यर्थः। खट्वैडकादिष्वित्यादिना तदेवैजर्थत्वं तपरकरणस्य स्पष्टीकरोति। वृच्च एलका वृच्चैलका। अक्रियमाणे ह्यत्र तपरकरणे त्रिमात्रिकस्याप्याकारैकारसमुदायस्य स्थाने वृद्धिरेचीति (६।१।८८) वृद्धिरान्तरतम्यात् त्रिमात्रिक एवैकारः स्याद् यदि तस्यापि वृद्धिसंज्ञा स्यात्। खट्वा ओदनं खट्वौदनम्। खट्वा एलका खट्वै-लकेत्यत्रापि पूर्वोक्तसमुदाययोश्चतुर्मात्रयो श्चतुर्मात्रावैकारैकारौ स्याताम्। तन्माभूदेष दोष इति त्रिमात्रचतुर्मात्राणामैचां वृद्धिसंज्ञानिवृत्तये तपरकरणं क्रियते। आश्वलायनः। ऐतिकायन इति। अश्वलैतिकशब्दाभ्यां नडादिभ्यः फक् ( ४ १ ९९ )। यस्येति चेति लोपः ( ६।४।१४८ )। किति (७.२।११८) चेत्यादि वृद्धिः। औपगव इति। उपगुशब्दात् प्राग्दीव्यतोऽण् ( ४।१।८३ )। औपमन्यव इति। उपमन्युशब्दादनृष्यानन्तर्ये ( ४।१।१०४ ) विदादिभ्यो ञित्यञ्। उभयत्राप्योर्गुणः ( ६।४।१४६ )। अवादेशः (६।१।७८)। तद्धितेष्वचा ( ७ २।११७ ) मादेरिति वृद्धिः। एतानि चत्वार्यपि तद्भावितोदाहरणानि। ननु येऽत्र त्रयः संज्ञिन स्तेषा माद्य स्त्रिभिर्विषयो दर्शितः। किमर्थश्चतुर्थो-पन्यासः? केचिदाहुः वृद्धिनिमित्तभेदात्। आद्ययोरुदाहरणयोः कित् तद्धितो वृद्धे र्निमित्तम्। तृतीयेऽपि णित्। चतुर्थेऽपि ञिदिति। एतच्चा-युक्तम्। तथाह्यीको गुणवृद्धी (१।१।३) इत्यत्राकार्षीदित्यु दाहृत्याहार्षीदित्यु-

दाहृतम् । नच तत्र वृद्धिनिमित्तभेदोऽस्ति । तथा न धातुलोप (१।१।४) आर्धधातुक इत्यत्र लोलुव इत्युदाहृत्य पोपुवः मरीमृज इत्यधिकोदाहरणोपन्यासः कृतः । नच तत्र लोपनिमित्तभेदः प्रतिषेधनिमित्तभेदो वाधिकोदाहरणोपन्यासस्य हेतुर्विद्यते । प्रायेणान्येष्वपि च सामान्यलक्षणेषु विनापि निमित्तभेदेनाधिकोदाहरणोपन्यास उपलभ्यते । योऽप्याह औपगव इत्यनेनैव औकारस्य विषये दर्शितेऽपि स्वरभेदादौपमन्यव इत्येतदधिक मुदाहरण मुपन्यस्त मिति तस्यापि तदयुक्त मतएवानन्तरोक्ताद्धेतोर्वेदितव्यम् । यदि निमित्तभेदः स्वरभेदो वाधिकोदाहरणस्योपन्यासस्य हेतुः स्यादाकारैकारयो रधिक मुपन्यस्तं स्यात् । प्रचुरविषयसूचनार्थस्तु लक्षणस्य सर्वत्राधिकोदाहरणोपन्यासो वेदितव्यः । शालीयो मालीय इति । अतद्भावितस्योदाहरणे । अत्र हि वृद्धिसंज्ञायां वृद्धिर्यस्याचामादि ( १।१।७६ ) स्तद्वृद्धमिति वृद्धसंज्ञा फलं छप्रत्ययोपन्यासस्तस्या एव फलभूताया अभिव्यक्त्यर्थः । वृद्धसंज्ञायां हि सत्यां वृद्धाच्छ ( ४।२।११४ ) इति जातादावर्थे च्छो विधीयते । ऐकारौकारयोस्त्वतद्भावितयोरुदाहरणं नात्र दर्शितम् । एतदनुसारेणैव गम्यमानत्वात् । आकारस्यातद्भावितस्य वृद्धिसंज्ञायाः कार्य्यं दर्शिते तयोरपि तदेव कार्य्यमिति तन्मुखेनैव गम्यत एव । के पुनस्तयोरुदाहरणे ? रैमयम् । नौमयमिति । अत्रै कारौकारयोर्वृद्धिसंज्ञायां सत्यां पूर्ववद्वृद्धसंज्ञा । तस्याञ्च सत्यां रायो विकारः । नावो विकार इति नित्यं वृद्धशरादिभ्य इति ( ४।३।१४४ ) मयड् भवति ।

## २ । अदेङ्गुणः ।

तपरकरणं त्विह सर्वार्थमिति । सर्वस्मिन्नर्थः प्रयोजनं यस्य तत् तथोक्तम् । तुशब्दः पूर्वस्माद् विशेषं दर्शयति । तत्र छैजर्थमेव । इह तु सर्वार्थम् । अकारार्थमेङर्थमपि । असति हि तपरकरणे अदेङामण्त्वात् सवर्णानां ग्रहणे सति भिन्नकालानामप्येषा संज्ञा स्यात् । ततश्च तरितेत्यत्रान्तरतम्याद्दीर्घस्य दीर्घ एव गुणः स्यात् । ननु च वृद्धिसंज्ञा गुणसंज्ञाया बाधिका भविष्यति । तत्

कुतोऽयं प्रसङ्गः ? नैतदस्ति । एकसंज्ञाधिकारेहि संज्ञया संज्ञान्तरं बाध्यते । नचात्रैकसंज्ञाधिकारः । स्यादेतत् । असत्यप्येकसंज्ञाधिकारे यथा जीवति तु वंश्ये ( ४।१।१६२ ) युवेति गोत्रसंज्ञा युवसंज्ञया बाध्यते । यथा च लिट् च । ( ३।४ ११५ ) लिङाशिषीति ( ३।४।११६ ) चार्धधातुकसंज्ञया सार्वधातुकसंज्ञा बाध्यते तथा गुणसंज्ञा वृद्धिसंज्ञया बाधिष्यते इति ? अयुक्त मेतत् । युवसंज्ञाविधौ तुग्रहणं नियमार्थं क्रियते । ततो युक्तं यद् युवसंज्ञया गोत्रसंज्ञा बाध्यत इति । आर्धधातुकसंज्ञयापि यत् सार्व्वधातुक-संज्ञा बाध्यते तदपि युक्तमेव । छन्दस्युभयथेति ( ३।४।११७ ) वचनात् । यदि सार्वधातुकार्धधातुकसंज्ञयोः समावेशः स्यान् न बाध्यबाधकभावस्तदा छन्दस्युभयथेति वचन मपार्थकं स्यात् । इह तु न किञ्चित् तथाविधं निबन्धन मस्ति यतो वृद्धसंज्ञया गुणसंज्ञा बाध्यते । अथापि कथञ्चिद् बाध्येत एवमपि त्रिमात्रिकस्यापि गुणसंज्ञा स्यादेव । नहि सा तया शक्या बाधितुम् । तस्या अतद्विषयत्वात् । त्रिमात्रस्यापि गुणसंज्ञायां सत्यां त्रिमात्रोऽपि गुणः प्रसज्येत । ऋकारस्य हि कालतो यथैकमात्रिको ऽकारो ऽन्तरतमो न संभवति तथा त्रिमात्रोऽपि । तत् कुत एतल्लभ्यते ? ह्रस्वेनैवास्य गुणेन भवितव्यम् । न हि त्रिमात्रेणाकारेणेति । किञ्च यदि भिन्नकालानामपि गुणत्वं संज्ञा स्यात् खट्वा इन्द्रः खट्वेन्द्रः खट्वा उर्वी खट्वोर्वीत्यत्र त्रिमात्रत्वात् पूर्वोत्तरसमुदायात्मनः स्थानिन आद् गुण (६।१।८७) इति त्रिमात्रो गुणः स्यात् । खट्वा ईषा खट्वेषा खट्वा ऊढा खट्वोढ़े तत्र चतुर्मात्रत्वाच् चतुर्मात्रः । तस्मात् सर्व्वार्थं तपरकरणं कर्त्तव्यम् । तरितेत्यादि । तॄ प्लवनतरणयोः । चिञ् चयने । ष्टुञ् स्तुतौ । एभ्यो ण्वुल् ( ३।१।१३३ ) तृचाविति तृच् । आर्धधातुकस्येड् ( ७।२।३५ ) वलादेरितीट् । सार्वधातुकार्धधातुकयो ( ७।३।८४ ) रिति गुणः । सुः । ( ४।१।२ ) ऋदुशने-त्यादिना ( ७।१।९४ ) अनङ् । सर्वनाम स्थाने ( ६ ४।८ ) चेति दीर्घः । एतानि त्रीणि यथाक्रममदेङां तद्भावितानां मुदाहरणानि । पठन्ति । पठन्नित्यकारस्यातद्भावितस्योदाहरणं । अत्रान्त्याकारस्य गुणसंज्ञाया मतो गुणे ( ६।१।९७ ) पररूपत्वं भवति । पठन्निति । शत्रन्तमेतत् ।

एकारस्यातद्भावितस्य कार्य्योदाहरणम् अहं पच इत्यादि। ओकारस्यातद्भावितस्य तत्र सम्भवतीति न प्रदर्श्यते।

## ३। इको गुणवृद्धी।

परिभाषेयमिति। नाधिकार:। अस्वरितत्वात्। नापि गुणवृद्ध्योर्विधायकं लक्षणम्। लक्षणान्तरेण तयोर्विधास्यमानत्वात्। स्थानिनियमार्थेति। स्थानिनि नियमः स्थानिनियमः स्थान्यन्तरव्यवच्छेदेनैकत्र प्रवर्त्तनम्। सोऽर्थः प्रयोजनं यस्याः सा तथोक्ता। अनियमप्रसङ्गे नियमो विधीयत इति। यत्र साक्षात् स्थानी न निर्दिष्टः सार्वधातुकार्धधातुकयोः (७।३।८४) सिचि (७।२।१) वृद्धिरित्यादौ तत्रानियमे प्रसक्ते नियममेषां करोति। इक एव नान्यस्येति। अतः स एवास्या विषयो वेदितव्यः। न तु यत्र साक्षात् स्थानी निर्दिश्यते सोऽपि। यथा ओर्गुणः (६।४।१४६) अत (७।२।११६) उपधाया इत्यादिः। तत्र ह्यनियमस्य प्राप्तिरेव नास्ति। लिङ्गवती चेयं परिभाषा। लिङ्गं चास्या गुणवृद्धिग्रहणम्। तत्रोपतिष्ठते। तथाच द्वे षष्ठ्यौ प्रादुर्भवतः। इक इत्येका षष्ठी। मिदेर्गुण (७।३।८२) इत्येवमादिका द्वितीया। तत्र कामचाराद् यथेष्टं सिध्यति। तयोर्विशेषणविशेष्यभावः क्रियते। मिदेरित्यत्रान्त इग् न सम्भवतीति तस्याङ्गविशेषणत्वं नोपपद्यते। तस्मादत्राङ्गेनेगेव विशिष्यते मिदेरङ्गस्य य इगिति। तेन स्थानषष्ठ्यभावादलोऽन्त्यस्यानुपस्थाने सति यत्र तत्रस्थस्येको गुणः सिद्धो भवति। सार्वधातुकार्धधातुकयोरित्यादौ त्वङ्गस्य इगन्तत्वं सम्भवति। तेन चाङ्गे विशिष्यमाणे तदन्तविधौ सतीष्टं सिध्यति। तस्मादिकैवाङ्गं विशिष्यते। इगन्तस्याङ्गस्येति। एवञ्च सत्यस्याः स्थानषष्ठीत्वादलोऽन्त्यस्येत्ये (१।१।५२) तदुपतिष्ठते। तेनेगन्तस्यैवाङ्गस्य गुणवृद्धी भवतो नेतरस्य। स्वसंज्ञयेति। अत्र वक्ष्यमाणोऽभिप्रायः। इक एव स्थाने इति। यदर्थेयं परिभाषा तस्य नियमस्य स्वरूपं दर्शयति। अकार्षीदिति। डुकृञ् करणे। लुङ्। च्लेः (३।१।४४) सिच्। सिचि (७।२।१) वृद्धिः। अस्तिसिचोऽपृक्त इतीट् (७।३।९६)। एवमहार्षीदिति। अत्र हृञ् हरण इत्ययं विशेषः। इक इति किमिति? एकदेशद्वारेण समुदायस्य पर्य्यनु-

योगे वेदितव्यः। नहि गुणवृद्धी इत्येतावता विनेग्ग्रहणेनार्थः कश्चित् संगृह्यते। यानमिति। यातेर्ल्युटि गुणे विधीयमान आन्तरतम्यादकारः स्यात्। ततश्च द्वयोरकारयोरतो गुणे (६।१।९७) पररूपत्वे कृते यनमित्यनिष्टं रूपं स्यात्। ग्लायतीति। ग्लै म्लै हर्षक्षये। अत्र सन्ध्यक्षरस्य ऐकारस्य एकारो गुणः स्यात्। ततश्चायादेशे कृते ग्लयतीत्यनिष्टं रूपं स्यात्। उम्भितेति। उभ उम्भ पूरणे। तृच्। इट्। अत्र व्यञ्जनस्य भकारस्यौष्ठ्यस्य ओकारो गुणः स्यात्। ततश्चावादेशे कृते उमवितेत्यनिष्टं रूपं स्यात्। अथ कथं स्वसंज्ञया शिष्यमाणावित्येष विशेषो लभ्यते? नहि सूत्रे स्वसंज्ञाग्रहणमस्तीत्यत आह पुनर्गुणवृद्धिग्रहणमित्यादि। इह पूर्वसूत्राभ्यां गुणवृद्धिग्रहणमनुवर्त्तते। तस्मिन्ननुवर्त्तमाने यत् पुनरिह गुणवृद्धिग्रहणं क्रियते तस्यैतत् प्रयोजनम्। यत्र स्वसंज्ञया गुणवृद्धी विधीयेते तत्रायं नियमो यथा स्यात्। अन्यत्र मा भूदिति। पुनर्गुणवृद्धिग्रहणसामर्थ्यादन्यतरस्य गुणवृद्धिग्रहणस्य संज्ञाप्रधानत्वं सम्पाद्यते। तेन स्वसंज्ञया विधाने नियमो भवतीत्येषोऽर्थो लभ्यते अन्यथा हि यद्येवं पूर्वो नियमो नात्राभिमतः स्यात् ततो नियतस्य नियमस्य प्रकृतगुणवृद्धिग्रहणानुवृत्त्यैव सिद्धत्वात् पुनरिह गुणवृद्धिग्रहणमनर्थकं स्यादित्येवमभिप्रायः। इह मा भूदित्यादिनास्यैवंप्रकारस्य नियमस्य व्यवच्छेद्यत्वं दर्शयति द्यौरिति। दिव औदित्यौकारः (७।१।८४)। स्वरूपेण विधीयमानो ऽलो ऽन्त्यस्यैव भवति। नेकः। पन्था इति। पथिमथ्यृभुक्षामादित्या (७।१।८५) कारो ऽन्त्यस्यैव भवति। नेकः। इतोऽत् सर्वनाम स्थान (७।१।८६) इतीकारस्य अकारः। थोन्थ इति थकारस्य न्थादेशः (७।१।८७)। इममिति। त्यदादीनाम (७।१।१०२) इत्यत्वमन्त्यस्यैव भवति। नेकः। दश्चेति (७।२।१०९) दकारस्य मकारः। स इत्यत्र त्वस्याः परिभाषाया उपस्थाने सति त्यदाद्यत्वं न स्यादेव। तदोः सः (७।२।१०६) सावनन्त्ययोरिति सत्वम्। ननु चाचश्चे (१।२।२८) त्ययमपि स्थानिनियमः स्वसंज्ञाविधान एवेष्यते। तस्यापि च नियमस्य द्यौरित्यादिकं व्यवच्छेद्यम्। तथाहि वृत्तिकारस्तत्र वक्ष्यति स्वसंज्ञया विधाने नियमः। अजिति वर्त्तते। इह मा भूत्।

द्यौः । पन्थाः । सः । द्युभ्यां द्युभिरिति । ततश्च यदनेन नियमेनैवंविधेन कर्त्तव्यं तत् तेनैव सिध्यति । नार्थ एवंविधनियमार्थेन पुनरिह गुणवृद्धिग्रहणेन । सत्यमेतत् । किन्त्वेवमर्थप्रतिपत्तौ य एते मन्दधियः प्राथमकल्पिकाः श्रोतारस्तेषां प्रतिपत्तिगौरवं स्यात् । तस्मात्ताननुग्रहीतुं विस्पष्टार्थ मिह संज्ञाविधाने नियमं प्रतिपादयितुं पुन र्गुणवृद्धिग्रहणं कृतम् । यद्येवं यत् तेन विधातव्यं तदनेनैव विहित मिति तत्र संज्ञाविधाने नियमो न कर्त्तव्यः । नैतदस्ति । यदि ह्यसावित्थम्भूतो नियमो न स्यात् ततो द्युभ्यां द्युभि रित्यत्र दिव ( ६।१।१३१ ) उदित्युकारः स्वरूपेणैव विधीयमानोऽच एव स्थाने स्यात् । नालोऽन्त्यस्य । नह्यनेन नियमेनाचः शक्यते व्यावर्त्तयितुम् । तस्य गुणवृद्धिसंज्ञकत्वात् ।

## ४ । न धातुलोप आर्धधातुके ।

उक्तपरिमाणस्य शब्दस्य धातुसंज्ञा कृता । तस्य सर्व्वस्य लोपे कृते यत्र गुणवृद्धी प्राप्नुत स्तदार्धधातुके न सम्भवत्येव । तत् किं प्रतिषेधेन? तस्मात् प्रतिषेधविधानसामर्थ्याद् धात्वेकदेशे धातुशब्दो वर्त्तत इति मत्वाह धात्वेकदेशो धातुरिति । धातुलोप इति । यद्ययं धातोर्लोपो धातुलोप इति तत्पुरुष स्तत आर्धधातुकग्रहणं गुणवृद्धिविशेषणं वा स्यात् ? धातुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुत स्ते न भवत इति । लोपविशेषणं वा स्यात् ? आर्धधातुकनिमित्ते धातुलोपे सति गुणवृद्धी न भवत इति । पूर्वस्मिन् पक्षे क्नोपयतीत्यत्र प्रतिषेधः प्राप्नोति । तत्र प्रतिविधानं कर्त्तव्यम् । द्वितीये तु न भवत्येष दोषः । नहि क्नोपयतीत्यत्रार्धधातुकनिमित्तलोपः । किं तर्हि ? वलनिमित्तकः । किन्तु द्वितीये पक्षे प्रेद्धमित्यत्र प्राप्नोति । अस्ति ह्यत्रार्धधातुकनिमित्तो लोपः । ननु चेग्लक्षणयो र्गुणवृद्ध्योरयं प्रतिषेधः । नचात्रेग्लक्षणो गुणः । नैतदस्ति । अत्रापीग्लक्षण एव गुणो यो ह्युभयोः स्थाने भवति । लभते सोऽन्यतरव्यपदेशम् । तथाहि मातुः पितुरित्यत्रोभयोः स्थाने भवन् रपरोऽण् भवति । तस्माल्लोपविशेषणपक्षेऽपि तत्पुरुषे प्रतिविधानं कर्त्तव्यमेव । बहुव्रीहौ तु न किञ्चित्

प्रतिविधेयमिति मन्यमानो बहुव्रीहिरय मिति दर्शयन्नाह तस्येत्यादि । एतेन लोपविशेषण मार्धधातुकमित्येतद् दर्शितं भवति । एवञ्चार्धधातुके सम्भवति यदि तत् तस्य निमित्तं भवति । ततश्च क्नोपयतीत्यत्रातिप्रसङ्गो नावतरति । तत्रेत्यादि । नापि गुणवृद्ध्योरार्धधातुकं निमित्तत्वेन विशेषणमित्याख्यातम् । ततश्च प्रेद्धमित्यत्राप्यतिप्रसङ्गो न भवति । नह्यादृण आर्धधातुकनिमित्तः । ये ते इति । स्त्रीलिङ्गनिर्देशो गुणवृद्धी इत्यनेन स्त्रीलिङ्गेन सामानाधिकरण्यात् । अस्य तु स्त्रीलिङ्गता परवल्लिङ्गं द्वन्द्वतत्पुरुषयो रित्यतिदेशात् । अर्थस्य च सोऽतिदेश इति । यत्तदोरपि तत्रार्थे वर्त्तमानयोः स्त्रीलिङ्गता भवति । ननु च नियमस्य प्रकृतत्वात् तस्यैवायं प्रतिषेधो युक्तः । तत् किमित्येवमाह तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवत इति । तयोः प्राधान्यात् । तत् पुनर्नियमेनोपक्रियमाणत्वात् । नियमस्य तु तादर्थ्यादप्राधान्यम् । तस्माद् गुणवृद्ध्यो रेवायं प्रतिषेधो न्याय्यः । लोलुवः पोपुव इति । लूञ् छेदने । पूञ् पवने । इत्येताभ्यां धातो रेकाच इत्यादिना यङ् ( ३।१।२२ ) । सन् ( ६।१।९ ) यङोरिति द्विर्व्वचनम् । गुणो ( ७।४।८२ ) यङ्लुकोरित्यभ्यासस्य गुणः । यङन्तात् पचाद्यचि यङोऽचि ( २।४।७४ ) चेति लुकि तन्निमित्तगुणप्रतिषेधः । तस्मिन् सत्यचिश्नुधात्वित्यादिनोवङ् । मरीमृज इति । मृजू शुद्धौ । पूर्ववद् यङ् । द्विर्वचनम् । उरत्त्वम् ( ७।४।६६ ) । हलादिः ( ७।४।६० ) शेषः । रीगृदुपधस्य चेति ( ७।४।९० ) रीगागमः । लोलूयादिभ्य इत्यादिशब्देन पोपूयमरीमृज्येत्येतयो र्ग्रहणम् । लूञ् लवितेति । यावदेव धातुसंज्ञा न भवति तावदेव सर्वविधिभ्यो लोपविधिर्बलीयानिति ञकारस्य लोपो भवति । पश्चाल्लू इत्येतस्य धातुसंज्ञा । तेन ञकारलोपो धातुलोपो न भवतीति भवति प्रत्युदाहरणम् । रेडिति । रिष रुष हिंसायाम् । अन्येभ्योऽपि दृश्यन्त ( ३।२ ७५ ) इति विच् । इकारचकारौ वेरपृक्तस्येत्यत्र ( ६।१ ६७ ) सामान्यग्रहणाविघातार्थौ । वकारस्य चानेनैव लोपः । पुगन्तलघूपधस्येति ( ७।३।८६ ) गुणः । झलाञ्जशोऽन्त ( ८।२।३९ ) इति षकारस्य डकारः । ननु च द्व्यङ्गविकले द्वे अपि एते प्रत्युदाहरणे । यथैव ह्यत्र

धातुलोपो न भवति एवमार्धधातुकनिमित्तोऽपि न भवति। नैतदस्ति। सति हि धातुग्रहणे पदद्वयसान्निध्याद् बहुव्रीहि र्लभ्यते। तस्मिंश्च सत्यार्धधातुकनिमित्तत्वं लोपस्य। असति हि धातुग्रहणे न लोप आर्धधातुक इत्युच्यमान आर्धधातुकाश्रये ये गुणवृद्धी प्राप्नुत स्ते लोपे सति न भवत इत्येष वाक्यार्थः स्यात्। ततश्च लोपस्याविशेषितत्वादविशेषेण यत्र क्वापि लोपे प्रतिषेधः स्यात्। रोरवीति। रु शब्दे इत्यस्माद् यङ्। बहुलं (२।४।७३) छन्दसीति यङो लुक्। लट्। तिप्। शप्। अदादित्वाच्छपो लुक्। यङो (७।३।९४) वेतीट्। अत्र सार्वधातुकनिमित्तो गुणो न प्रतिषिध्यते। ननु च द्व्यङ्गविकलमेवेदम्। यथैव ह्यार्धधातुकनिमित्तो गुणो न भवत्येवं लोपोऽपि। नैतदस्ति। सति ह्यार्धधातुकग्रहणे ऽन्यपदार्थत्वे न तस्याश्रयणात् तन्निमित्तो लोपो लभ्यते। तस्मिंश्च सति न धातुलोप इतीयत्युच्यमाने ये केचन गुणवृद्धी ते च लोपे सति न भवत इत्येष वाक्यार्थः स्यात्। ततश्चाविशेषितत्वाल्लोपस्य लोपमात्रे प्रतिषेधो विज्ञायते। अभाजीति। भञ्ज आमर्दने। लुङ्। च्लिः। चिण् (३।१।६६) भावकर्म्मणोरिति चिण्। चिणो (६।४।१०४) लुगिति तशब्दस्य लुक्। भञ्जेश्च (६।४।३३) चिणीत्यनुनासिकलोपः। राग इति। अत्रापि घञि (६।४।२७) च भावकरणयोरिति नल्लोपः। रञ्ज रागे। भावे घञ्। यद्यप्यत्र सर्वमस्ति तथापीक इत्यत्रानुवृत्ते रिह चेकोऽसम्भवादत (७।२।११६) उपधाया इति वृद्धेः प्राप्तायाः प्रतिषेधो न भवति। क्नोपयतीति। क्नुयी शब्दे। हेतुमति (३।१।२६) चेति णिच्। अर्त्तिह्रीत्यादिना (७।२।३६) पुक्। लोपो (६।१।७६) व्योर्वलीति यलोपः। पुगन्तेत्यादिना (७।३।८६) गुणः। प्रेद्धमिति। ञिइन्धी दीप्तौ। क्तः। अनिदितामित्यादिनानुनासिकलोपः (६।४।२४)। झषस्तथोर्धोऽध (८।२।४०) इति तकारस्य धत्वम्। झलाञ्जश् (८।४।५३) झशीति धातुधकारस्य दकारः। प्रगतमिद्धमिति कुगतिप्रादय (२।२।१८) इति समासः।

## ५। क्ङिति च।

क्ङितीति। यदीयं परसप्तमी स्यादनन्तरस्यैवेकः प्रतिषेधः स्यात्

चितः चितवानित्यादौ। व्यवहितस्य भिन्नो भिन्नवानित्यादौ न स्यात्। तस्मिन्निति निर्दिष्टे (१।१।६६) पूर्वस्येत्यत्र निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वात्। निमित्तसप्तम्यां त्वस्यां सर्वत्र भवितव्यम्। व्यवहितयोरपि। निमित्त-निमित्तिभावसद्भावादिति मन्यमान आह निमित्तसप्तम्येषेति। निमित्तात् सप्तमी निमित्तसप्तमी। पञ्चमी (२।१।३७) भयेनेति पञ्चमीति योग-विभागात् समासः। सा पुनः सप्तमी यस्य च (२।३।३७) भावेन भावलक्षण मित्यनेन वेदितव्या। क्ङितो हि निमित्तभावेन गुणवृद्ध्योः प्राप्तिलक्षणो भावो लक्ष्यते। अथ निमित्तसप्तम्यामप्यस्यां कस्मादेव व्यवहितस्य प्रतिषेधो लभ्यते? तत्र तस्मिन्नित्यादिकायाः परिभाषाया अनुपस्थानात्। क्ङिति चेत्यत्र क्ङिद्ग्रहणं गुणवृद्ध्योर्विशेषणम्। अतो नासौ परिभाषा तत्रोप-तिष्ठते। विध्यङ्गशेषभूता ह्येषा परिभाषा यत्र विधीयते किञ्चित् तत्रोप-तिष्ठते। इक्परिभाषावत्। यत्र गुणवृद्धी विधीयेते तत्रैवेक्परिभाषोप-तिष्ठते। नच यत्र सिद्धे गुणवृद्धी कार्य्यार्थ मुपादीयेते तत्रापि। अन्यथा हि वृद्धिर्यस्याचामादि (१।१।७३) स्तद्वृद्ध मित्यादावप्यस्या इक्परिभाषाया उपस्थानाच् शालीयो मालीय इत्यत्र वृद्धसंज्ञा न स्यात्। यथा चेयमिक्-परिभाषा विध्यङ्गशेषभूतत्वाद् विधावेवोपतिष्ठते तथासावप्यानन्तर्य्यपरिभाषा। नचेह गुणवृद्धी विधीयेते। किं तर्हि? विहिते अप्यन्यत्र क्ङितीत्यनेन विशिष्येते। तस्मान्नात्र तस्याः परिभाषाया उपस्थान मित्यनन्तरस्यापि प्रतिषेधः सिध्यति। क्ङिन्निमित्ते ये गुणवृद्धी इति। क्ङिन्निमित्तं ययो स्ते तथोक्ते। ते पुनर्य्ये क्ङिन्निमित्ते सति प्राप्नुत स्ते विज्ञेये। एतेन गुणवृद्धिविशेषणं क्ङिद्ग्रहणमिति दर्शयति। ननु च विधीयमानतया प्राधान्यात् प्रतिषेधस्यैवैतद् विशेषणं युक्तम्। नैतदस्ति। यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति तत्र प्रधानस्यैव भूयांस मुपकारं कर्त्तुमात्मनः संस्कार मनुभूय प्रधानेन सम्बन्ध मनुभवति। यथोक्तम्—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तत॥ १॥ इति।

इह तु गुणवृद्ध्योः क्ङिद्ग्रहणेन विशेषितयो र्महान् प्रधानस्य प्रतिषेधस्योपकारो भवति। व्यवहितस्यापि तत्सिद्धेः। भिन्न इति। भिदिर् विदारणे। क्तः। रदाभ्यां ( ८।२।४२ ) निष्ठातो न इति नत्वम्। मृष्ट इति। मृजे र्व्रश्चेत्यादिना ( ८।२।३६ ) जकारस्य षत्वम्। ष्टुना (८ ४।४१) ष्टुरिति ष्टुत्वम्। चिनुत इत्यादौ तु ( ८।४।४१ ) सार्वधातुक ( १।२।४ ) मपिदिति ङित्त्वम्। चिन्वन्तीति। हुश्नुवोः ( ३।४।८७ ) सार्वधातुक इति यणादेशः। अत्र चितः। चितवान्। स्तुतः। स्तुतवान्। चिनुतः। चिन्वन्तीत्येषूदाहरणेषु यथायोगं सार्वधातुकार्धधातुकलक्षणस्य गुणस्य प्रतिषेधः। भिन्नः। भिन्नवानिति लघूपधलक्षणस्य। परिशिष्टेषु मृजेर्वृद्धि ( ७।२।११४) रिति वृद्धेः। ग्लाजि ( ३।२।१३९ ) स्थश्च क्स्नुरिति। क्स्नुप्रत्ययोऽयं यदि कित् स्यात् स्थास्नुरित्यत्र घुमास्थादिसूत्रेण ( ६।४।६४ ) तिष्ठतेरीत्त्वं स्यात्। अतस्तत्परिहाराय क्स्नो र्गित्त्वं प्रतिज्ञायते। तथाहि तत्र वक्ष्यति गिच्चायं प्रत्ययो न कित्। तेन स्थ ईकारो न भवतीति। गित्वे च सति भूष्णुर्जिष्णु रित्यत्र क्ङिति चेति प्रतिषेध उच्यमानो न प्राप्नोति। अत एतद्दोषपरिहारायाह गकारोऽप्यत्रेत्यादि। चर्त्त्वभूतश्चर्त्वं प्राप्त इत्यर्थः। चर्त्वं तु खरि चेति ( ८।४।५५ )। यदि हि क्स्नोर्गित्त्वमिष्यते भूष्णुरित्यत्र श्र्युकः ( ७।२।११ ) कितीति किति प्रतिषेध उच्यमानो न स्यात्। नैष दोषः। तत्रापि चर्त्त्वभूतो गकारो निर्दिश्यते। तथाहि ग्लाजिस्थश्च क्स्नुरित्यत्र जयादित्यवृत्तौ (१) ग्रन्थः। क्ङिति चेत्यत्र गकारश्चर्त्वभूतो निर्दिश्यते। तेन गुणो न भवति। श्र्युकः कितीत्यत्रापि गकारो निर्दिश्यते। तेन भुव इड् न भवतीति। श्र्युकः ( ७।२।११ ) कितीत्यत्रापि जयादित्यवृत्तौ

(१) वामन and जयादित्य are the joint authors of the काशिका। But their shares as assigned by हरिदीक्षित, Bhottoji's grandson, ( viz:—प्रथमद्वितीयपञ्चमषष्ठा जयादित्यकृतवृत्तयः। इतरे वामनकृतवृत्तय इत्यभियुक्ताः—vide शब्दरत्न under 5. 4 42) are disproved here by Jinendra's assertion. Bhottoji also supports the न्यासकार ( vide शब्दकौस्तुभ 1.1.5). हरदत्त too takes वामन as the annotator of the Rule 6.2.73 अके जीविकार्थे। (vide पदमञ्जरी 2.2.17).

ग्रन्थः (२) गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते भूष्णु रित्यत्र यथा स्यादिति। वामनस्य त्वेतत् सर्वमनभिमतम्। तथाहि तस्यैव सूत्रस्य तद्विरचितायां वृत्तौ ग्रन्थः केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति भूष्णुरित्येवं यथा स्यात्। सौत्रत्वाच्च निर्देशस्य श्रुकः कितीत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम्। विसर्जनीयश्च कृत इति। ग्लाजिस्थश्च ग्स्नु रित्यत्र स्था स्था इत्याकार प्रश्लेषेण स्थास्नोः सिद्धत्वान्न किञ्चिदेतदिति। स एवं मन्यते। यदि क्स्नुप्रत्ययस्य कित्त्वे सति तिष्ठतेरीत्त्वं प्राप्नुयात् तथा तत्परिहारार्थं गित्त्वं युज्यते प्रतिज्ञातुम्। गित्त्वे च सति जिष्णु भूष्णु रित्यत्र यथायोगमिड्गुणयोर्निरासाय क्ङिति चेत्यत्र श्रुकः कितीत्यत्र च गकारश्चर्त्वभूतो निर्दिश्यमानः शोभेत। नच क्स्नुप्रत्ययो गित्। किं तर्हि किदेव। तत् किमिड्गुणप्रतिषेधार्थेन चर्त्वभूतगकारस्य निर्देशेन ? नच क्स्नोः कित्वे सति तिष्ठते रात्वं प्राप्नोति। तस्माद् ग्लाजिस्थश्च क्स्नु रित्याकारप्रश्लेषः कृतः क्स्नुप्रत्ययान्तस्य तिष्ठते राकार एव यथा स्याद् यदन्यत् प्राप्नोति तन्मा भूदित्येवमर्थः। ततश्च तेनैव सिद्धत्वात् स्थास्नुशब्दस्याकिञ्चित्करमिह गकारप्रश्लेषवर्णनमिति। कामयत इति। कमेर्णिङ् (३।१।३०)। अत्र अत उपधाया (७।२।११६) इति वृद्धेः प्रतिषेधो न भवति। लैगवायन इति। लिगुशब्दान्नडादिभ्यः (४।१।९९) फगिति फकि कृते ओर्गुण (६।४।१४६) इति गुणस्य प्रतिषेधो न भवति। ननु चोकार इगेव। तदयुक्तमिदं प्रत्युदाहरणम्। नैतदस्ति। अत्र हि चकारः क्रियत इक इत्यनुकर्षणार्थः। तत्र चकारेणानुकर्षणसामर्थ्यादिक इत्येतदर्थ पदार्थतामुत्सृज्य स्वरूपपदार्थतामनुभवति। अन्यथा हि यदि चकारेणाप्यनुकृष्यमाणमर्थपदार्थकमेव स्यात् तदनुकर्षणार्थं चकारकरण मनर्थकं स्यात्। अर्थपदार्थस्य स्वरितत्वादेवानुवृत्तिसिद्धेः। स्वरूपपदार्थके च तस्मिन्निह

(2) What does this statement—श्रुकः कितीत्यत्रापि जयादित्यवृत्तौ ग्रन्थः—indicate ? Has जयादित्य in addition to his work with वामन, *separately* written a complete commentary on the अष्टाध्यायी ? I could not verify the quotation गकारोप्यत्र चर्त्वभूतो निर्दिश्यते भूष्णु रित्यत्र यथा स्यात्। It is not found in the printed काशिका।

सन्निहिते सत्ययमर्थो भवति। इक इत्येवं ये गुणवृद्धी विधीयेते इक इतीमं शब्द मुच्चार्य्य ये गुणवृद्धी विधीयेते ते क्ङिन्निमित्तेन भवत इति। नच लैगवायन इत्यत्र इक इतीमं शब्द मुच्चार्य्य गुणो विधीयते। इक्परिभाषाया स्तत्रानुपस्थानात्। अनुपस्थानं तु साक्षादुकारस्य स्थानिनो निर्देशात्। यत्र हि साक्षात् स्थानी न निर्दिश्यते तत्रासावुपतिष्ठते। ननु यदि स्वरूपपदार्थस्येक इत्यस्येह सन्निधानं स्थानी न निर्दिष्टः स्यात्। ततश्च न ज्ञायते कस्य गुणवृद्धी प्रतिषिध्येते इति। नैष दोषः। सामर्थ्यादिक एव गुणवृद्ध्योः प्रतिषेधोऽयं गम्यते। नह्यन्यस्येक इतीमं शब्द मुच्चार्य्य गुणवृद्धी विधीयेते। अथवा यद्यपीक्परिभाषा विध्यङ्गशेषभूता तथापीहासत्यपि गुणवृद्ध्यो विधाने चकारेणानुकृष्य सन्निधाप्यते। एतदेव हि चकारकरणस्य प्रयोजनं यदिदमिक्परिभाषायाः सन्निधापनम्। ततश्च तस्या उपस्थाने सति यत्रासौ व्याप्रियते तत्रैवायं प्रतिषेधो विज्ञायते। क्व चासौ व्याप्रियते? यत्र स्थानी साक्षान् न निर्दिश्यते। इह तु निर्दिश्यते स्थानी। तस्मादिक् परिभाषाया व्यापाराभावाद् भवति प्रत्युदाहरणम्। मृजेरित्यादि। कथं पुनरिष्यमाणापि सा लभ्यते? यथा लभ्यते तथा श्रूयताम्। अचो (७।२।११५) ञ्णितीत्यत्र मृजेर्वृद्धिरिति (७।२।११४) वर्त्तते। जराया (७।२।१०) जरसन्यतरस्यामित्यतोऽन्यतरस्यांग्रहणञ्च मण्डूकप्लुतिन्यायेनानुवर्त्तते। सा च व्यवस्थितविभाषा। अच इति योगविभागः क्रियते। मृजेरजादौ संक्रमे विभाषा वृद्धिर्भवति। अन्यत्र न भवत्येव। लघूपधगुणस्याप्यत्र प्रतिषेध इति। एतेन संक्रमत्वं दर्शयति। अन्ये तूत्तरसूत्रे कणिता श्वो रणिता श्व इत्यनन्तर मनेन ग्रन्थेन भवितव्यम्। इह तु दुर्विन्यस्तकाकपदजनितभ्रान्तिभिः कुलेखकै र्लिखित मिति वर्णयन्ति। अथवा निमित्तसप्तम्या एवेदं फलं दर्शित मिति मन्तव्यम्। अचिनवम्। असुनवमिति। अत्र लङो ङित्वात् तदादेशस्यापि मिपो ङित्त्वम्। स्थानिवद्भावेन मिपो ङित्त्वात् तदादेशस्याप्यमो ङित्त्वं पूर्ववत्। ततश्च तदाश्रयो विकरणस्य गुणप्रतिषेधः प्राप्नोति। कस्मान्न भवतीत्याह अचिनवमित्यादि। आदिशब्देनाकरवमित्यादीनां परिग्रहः। लकारस्येति। लकारादेशोऽपि पारम्पर्य्येण

लकारपूर्वकत्वादुपचारेण लकार इत्युक्तः । सत्यपीत्यभ्युपगमे हलः श्नः (३।१।८३) शानज् झाविति शानजादेशस्य शित्करणाल्लिङ्गान्नावश्यमनुबन्धकार्य्येषु स्थानिवद्भावो भवतीत्यध्यवसितोऽयमर्थः । अतो ङित्त्वमेवात्र न भवतीति शक्यते वक्तुम् । अभ्युपगम्य तु ङित्त्वमेव परिहार उच्यत इत्येतदनेन सूचयति । यासुटो ङित्त्ववचनमित्यादि । यदि ङिति यत् कार्य्यं विधीयते तल्लकारे ङिति स्यात् ततो लिङएव ङित्त्वेन चिनुयादित्यादौ गुणप्रतिषेधस्य सिद्धत्वाद् यासुट् (३।४।१०३) परस्मैपदेषूदात्तो ङिच्चेति यत् तस्य यासुटो ङिद्वचनं तन् न कुर्य्यात् । कृतञ्च । ततोऽवसीयते ङिति यत् कार्य्यं तल्लकारे ङिति न भवतीति ।

## ६ । दीधीवेवीटाम् ।

दीधीवेव्योरिति । दीधीङ् दीप्तिदेवनयोः । वेवीङ् वेतिना तुल्य इत्येतयो ग्रहणम् । ननु च दीङ् क्षये । धीङ् अनादरे । वेञ् तन्तुसन्ताने । वी गतिप्रजनकान्त्यसनखादनेष्वित्येतेषां ग्रहणं कस्मान्न विज्ञायते ? यद्येषां ग्रहण मभिमतं स्यादसन्देहार्थं वीवेधीदीटामीत्येवं न्यासं कुर्य्यात् । अन्यथा तु कृतम् । तस्मात् पूर्व्वोक्तयोरेव धात्वोरिह ग्रहणम् । इटश्चेति आर्धधातुकस्येड्वलादेरित्यादिना (७।२।३६) विहितस्य । अथ इट किट कट गतावित्यस्य ग्रहणं कस्मान्न भवति । युक्तञ्चैतत् । धातुसाहचर्य्यात् । नैतदस्ति । इहाल्पाच्तरमिति इटः पूर्वनिपाते कर्त्तव्ये तद्विपर्य्यासं कुर्वतैतत् सूचितम् । अन्योऽप्यत्र कश्चिद् विपर्य्यासो विज्ञेय इति । तेन धातुसाहचर्य्याद्धातुग्रहणे प्राप्ते तद्विपरीतस्यैवागमस्य ग्रहणं विज्ञायते । आदीध्यन मिति । ल्युट् । आदीध्यक इति । ण्वुल् । कणिता श्वो रणिता श्व इति । अण रण कण इत्यादौ शब्दार्थे धातुवर्गे कणिरणी पठ्येते । ताभ्यां लुटि स्यतासी (३।१।३३) लृलुटोरिति तासिः । लुटः प्रथमस्येत्यादिना (२।४।८५) तिपो डादेशः । टिलोपः । आर्धधातुकस्येड्वलादेरित्यादिनेट् (७।२।३६) । अथेटो वृद्धे रुदाहरणं कस्मान्न प्रदर्शित मित्याह वृद्धि रिटो न सम्भवतीति । अङ्गस्य वृद्धिर्ञ्णिदादौ प्रत्यये विधीयते । इट् चायमार्धधातुकभक्तः । नचार्धधातुकस्याङ्गसंज्ञास्ति ञ्णिदादौ प्रत्यये । तस्मादिटो वृद्धि र्न भवति ।

७। हलो ऽनन्तराः संयोगः।

अन्तरं छिद्रं विवरं वर्णशून्यः काल इत्यर्थः। न विद्यतेऽन्तरं येषां ते तथोक्ताः। भिन्नजातीयैरित्यादि। भिन्नजातीयैरिति वचनं भिन्नजातीयानामेव लोके व्यवधायकत्वदर्शनात्। तथाहि कश्चित् केनचित् किमनन्तरे परे ब्राह्मणकुले इति पृष्टः सन्नाह नानन्तरे। वृषलकुल मनयोर्मध्ये प्रतिवसतीति। श्लिष्टोच्चारिता इत्यनन्तरस्यैव विवरणम्। निरन्तरोच्चारिता इत्यर्थः। संयोग इति। यदेकैकस्यैषा श्लिष्टोच्चारितस्य हलः संज्ञा स्यादिह निर्वायाद् निर्यायादिति वान्यस्य (६।४।६८) संयोगादेरित्येत्वं स्यात्। इह च संस्कृषीष्टेति ऋतश्च (१।२।४३) संयोगादेरितीट्। इह च संस्क्रियत इति गुणोऽर्त्तिसंयोगाद्यो (७।४।२९) रिति गुण इत्येवमादयोऽन्येऽपि बहवो दोषाः प्रत्येकं हलां संज्ञित्वे भाष्य उद्भाविताः। यद्यपि तत्रैव ते कथञ्चित् प्रयासेन परिहृता स्तथापि यस्तु तत्परिहारेण प्रतिपत्तौ साध्यायां प्रतिपत्तिगौरवदोष आपद्यते सोऽपरिहार्य्य एव। समुदाये तु संज्ञिनि दोषाशङ्कापि नास्ति। तस्मात् स एव संज्ञी युक्त इत्यालोच्याह समुदायः संज्ञीति। ननु च यत्र सहभूतानां कार्य्यमिच्छति तत्र यत्न आरभ्यते। यथा उभे (६।१।५) अभ्यस्त मिति उभेग्रहणं करोति। नचेह कश्चिद् यत्नः कृतः। तत् कथं समुदायस्य संज्ञा लभ्यते? इहापि कृत एव यत्न इत्यदोषः। कः पुनरसौ? महत्याः संज्ञायाः करणम्। लघ्वर्थं हि संज्ञाकरणमिति महत्याः संज्ञायाः करणं प्रयोजनमन्तरेण न सम्भाव्यते। तस्मान्महानत्र संज्ञीत्येतत् सूचयितुं महती संज्ञा कृतेति गम्यते। तथाचोक्तम्—इङ्गितेनोन्मिषितेन महता वा सूत्रप्रबन्धेनाचार्य्याणामभिप्रायो लक्ष्यत इति। एवञ्च महान् संज्ञी भवति यदि समुदायः संज्ञी भवति। नैकैको हल्। तस्मादुपपन्न मेतत् समुदायः संज्ञीति। हल इति बहुवचननिर्देशाद् द्वयोः संज्ञा न सिध्यतीति यश्चोदयेत् तं प्रत्याह जातौ चेत्यादि। चशब्दो यस्मादर्थे। यस्माज्जातौ बहुवचनं तेन द्वयोर्बहूनां च संयोगसंज्ञा सिद्धा भवति। अग्निरित्यादिकं रूपोदाहरणं द्रष्टव्यम्। तिलान्स्त्र्यावपतीत्यादि। हे मपरे

( ८।३।२६ ) वेत्यतो वेति वर्त्तमाने ङः (८।३।२८) सि धुड़ित्यतो धुड़िति च नश्चेति ( ८।३।३० ) पक्षे धुट् । खरि चेति ( ८.४।५५ ) च तकारः । तत्र यदा धुण् नास्ति तदा नसतरया इति। यदा त्वस्ति तदा नतसतरयाः । तितउच्छत्र मिति । तनोतेर् डउःसनवच्चेति डउप्रत्यये टिलोपे द्विर्वचने च कृते रूपम् । संयोगान्तस्य लोपः स्यादिति । यद्यत्राकारस्योकारेण संज्ञा स्यादित्यभिप्रायः । नच लोपे सत्युकारोपदेशस्य वैयर्थ्य माशङ्कनीयम् । यत्र पदसंज्ञा नास्ति तितउनीत्यादौ तत्र श्रूयमाणत्वात् । पचतीति । रूप-प्रत्युदाहरणम् । पनसमिति कार्य्यप्रत्युदाहरणम् । स्कोः ( ८।२।२९ ) संयोगाद्योरिति लोपः स्यादिति । यदि सकारनकारयोः सान्तरयोरपि संयोगसंज्ञा स्यादिति भावः ।

## ८ । मुखनासिकावचनोऽनुनासिकः ।

मुखसहिता नासिका मुखनासिकेत्यनेन मुखनासिकाशब्दोऽयं तत्पुरुषः । न द्वन्द्व इति दर्शयति । तत्पुरुषस्तु मयूरव्यंसकादित्वाद् ( २।१।७२ ) वेदितव्यः । यदि च मुखञ्च नासिका चेति द्वन्द्वः स्यात् प्राणितूर्य्यादिसूत्रेण ( २।४।२ ) कवद्भावः स्यात् । ततश्च स नपुंसकमिति ( २।४।१७ ) नपुंसकत्वं स्यात् । तस्मिंश्च सति ह्रस्वो ( १।२।४७ ) नपुंसके प्रातिपदिकस्येति ह्रस्वत्वं प्रसज्येतेति भावः । ननु चोच्यतेऽ नयेति करणे ल्युटि कृते तदन्तात्टिड्-ढाणञित्यादिना ( ४।१।१५ ) ङीपा भवितव्यम् । ततश्च तदन्तेन बहुव्रीहौ मुखनासिकावचन इति निर्देशो नोपपद्यते । नैतदस्ति । वचनशब्दोऽयं कृत्यल्युटो ( ३।३ ११३ ) बहुलमिति बहुलवचनात् कर्मसाधनः । उच्यत इति वचनो वर्णे वर्त्तते । न नासिकायाम् । अतएवाह तया य उच्चार्य्यत इति । उच्चार्य्यत इति कर्मणि लकारः । एवं कृत्वा मुखनासिकावचन इति षष्ठी-समासोऽयं वेदितव्यो न बहुव्रीहिः । अनुस्वारस्यैवेति । अनुस्वारे ह्युच्चमाने नासिकायाश्च व्यापारो न मुखस्य । तेन तस्यैव स्यात् । ननु स्याद् अमङ्गणना नाम् । नापि अभ्र आँ अप इत्यत्रार्द्धचन्द्राकृतेर्व्वर्णस्य । तदुच्चारणे मुखस्यापि व्यापारात् । ततश्च यरोऽनुनासिके (८.४।४५) इत्येतस्मिन् कार्य्ये कर्त्तव्ये

ऽनुस्वारस्यैव ग्रहणं स्यात् । नतु ङकारादीनामित्यभिप्रायः । ननु च प्रासाद-वासिन्यायेन तेषामपि भविष्यति । यथा प्रासादवासिन आनीयन्तामित्युक्ते ये प्रासाद एव निवसन्ति तेषामपि ग्रहणं भवति। येऽपि प्रासादे भूमौ च उभयत्र वसन्ति तेषामपि । यथा तूभय आनीयन्ते तथेहापि नासिकावचन इत्येतावत्युच्यमाने नासिकावचनस्यानुस्वारस्य मुखनासिकावचनानाञ्च ङकारादीनां ग्रहणं भविष्यति । ततश्चानुस्वारस्य हि स्यादित्ययुक्तमुक्तम् । एवन्तु वक्तव्यम् । अनुस्वारस्यापि हि स्यादिति । नैतदस्ति । इह हि त्रीणि दर्शनानि सम्भवन्ति । समस्त एवानुनासिको वर्णो नासिकावचनो मुखवचनश्चेत्येकं दर्शनम् । पूर्वभागस्त्वस्य मुखवचन उत्तरो नासिकावचन इति द्वितीयम् । उत्तरो भागो मुखवचनः पूर्वो भागो नासिकावचन इति तृतीयम् । उभयो-रप्यनन्तरयोर्दर्शनयोर्नासिकामुखवचने भागे तथानुरागं करोति यथासावपि नासिकावचनभाग इव लक्ष्यते । तत्र यदेतदनन्तरदर्शनद्वयं तस्यान्यतरत् पाणिनेरभिमतम् । नचास्मिन् प्रासादवासिन्याय एकत्राप्यवतरति । यदि हि ङकारादयो नासिकयापि साकल्येनोच्चार्य्येरन् मुखेनापि ततः प्रासाद-वासिन्यायेन नासिकावचन इत्येतावत्युक्ते तेषामपि ग्रहणं स्यात् । नचैवं भागसैव । तेषां नासिकया मुखेन चोच्चारणात् । तदसति मुखग्रहणे तेषां ग्रहणं न स्यात् । तदभावे च संज्ञा न स्यादिति युक्तमुक्तमनुस्वारस्यैव हि स्यादिति । क च ट त पानां मा भूदिति । एते हि ककारादयो मुखेनै-वोच्चार्य्यन्ते । न नासिकया । ततश्चासति नासिकाग्रहणे तेषामेव स्यात् । एवञ्च शक्तः सुप्तमित्यत्रानुदात्तोपदेशवनतीत्यादिना लोपः ( ६।४।३७ ) प्रसज्येत । ओदनपगित्यत्रानुनासिकस्य (६।४।१५) क्विझलोः क्ङितीति दीर्घत्वम् । अथ किमर्थं महती संज्ञा क्रियते? अनु पश्चान्नासिका व्याप्रियते यस्मिन्नथवा अनु पश्चान्नासिकाया व्याप्रियते यस्मिन्नसावनुनासिक इत्यन्वर्थसंज्ञा यथा विज्ञायेतेत्येवमर्थम् । किं पुनस्तद् यतः पश्चान्नासिका व्याप्रियते यस्मिन् यद्वा नासिकायाः पश्चाद् व्याप्रियते ? मुखस्य तु प्रकृतत्वात् तदेव गम्यते । तत्र ये ते द्वे दर्शने ययोः पाणिनेरन्यतरदभीष्टं तयोः पूर्वस्मिन् नासिका मुखात् पश्चाद् व्याप्रियते । उत्तरत्र मुखं नासिकायाः । अन्वर्थसंज्ञाकरणं

तु पूर्वोक्तयो दर्शनयोरन्यतराभ्युपगमसूचनार्थम् । तदभ्युपगमसूचनं तु प्रासादवासिन्यायमाश्रित्य मुखग्रहणं ये प्रत्याचक्षीरंस्तेषां निराकरणार्थम् ।

## ९ । तुल्यास्यप्रयत्नं सवर्णम् ।

तुलया सम्मितं तुल्यमिति नौवयोधर्मेत्यादिना ( ४।४।९१ ) यतमुत्पाद्य तुल्यशब्दो व्युत्पाद्यते । नच प्रयत्नस्य तुलया सम्मितत्वं सम्भवति । ततश्चासम्भवद्विशेषणमिति यश्चोदयेत् तं प्रत्याह तुल्यशब्द इत्यादि । एवं मन्यते । व्युत्पत्त्यर्थं तु केवलं तुलोपादीयते नत्वत्र तुलार्थो विद्यते । नवा सम्मितार्थः । सदृशपर्य्यायो ह्ययं तुल्यशब्दः । तथाहि तुल्य इत्युक्ते सदृश इति पर्य्यायो भवति । नतु तुलया संमित इति । आस्यशब्दोऽयं ण्यदन्तोऽप्यस्ति । अस्यते क्षिप्यतेऽन्नमनेनेति कृत्यल्युटो ( ३।३।११३ ) बहुलमिति करणे ण्यत् । आस्यं मुखम् । तत् पुनरोष्ठात् प्रभृति प्राक् काकलकात् । काकलकं नाम ग्रीवायामुन्नतप्रदेशो लोके यः कण्ठमणिरित्युच्यते । तद्धितान्तोऽप्यास्यशब्दोऽस्ति । आस्ये भवमिति शरीरावयवाद् ( ५।१।६ ) यदिति यति कृते यस्येति ( ६।४।१४८ ) चेत्यकारलोपे हलो यमां यमि ( ८।४।६४ ) लोप इति यलोपे च कृते आस्यमिति । एतच्च मुखान्तर्वर्त्तिनां ताल्वादीनां वाचकम् । तत्र यदि पूर्वस्यास्यशब्दस्येदं ग्रहणं स्यात् क च ट त पानामपि सवर्णसंज्ञा स्यात् । ण्यदन्तस्यास्यशब्दस्य वाच्येऽर्थे तेषां तुल्यत्वात् प्रयत्नविषयस्य । इममतद्धितान्तस्यास्यशब्दस्य ग्रहणे दोषं दृष्ट्वा तद्धितान्तस्येदं ग्रहणमिति दर्शयन्नाह आस्ये भवमास्यमिति । किं पुनस्तदित्याह ताल्वादिस्थानमिति । यस्मिन् वर्णा निष्पाद्यन्ते तत् स्थानम् । आदिशब्देन नासिकादीनां ग्रहणम् । ननु च नासिका मुखाद्बहिर्वृत्तेरास्यं न भवति । नैतदस्ति । नहि मुखाद् वहिर्वर्त्तिनी नासिकेयं विवक्षिता । तस्यां वर्णानामनिष्पत्तेः । का तर्हि ? अन्तरास्ये चर्म्म विततमस्ति पणवचर्मवत् । तत्सम्बद्धा रेखा यस्यां वायुनाभिहन्यमानायां वर्णा निष्पद्यन्ते सेह नासिका विवक्षिता । कथं पुनर्विज्ञायते तद्धितान्तस्यास्यशब्दस्येदं ग्रहणमिति ? आस्यग्रहणसामर्थ्यात् । यदि ह्यतद्धितान्तस्य ग्रहणं स्यादास्य-

ग्रहणमनर्थकं स्यात्। सर्वेषामेव हि तद्वाच्य एवार्थे प्रयत्नस्तुल्यः। नास्त्येव हि स यस्य व्यवच्छेदार्थमास्यग्रहणं स्यात्। ननु च विसर्जनीयस्य व्यवच्छेदनार्थं मास्यग्रहणं स्यात्। तस्य हि मुखाद् वहिर्वर्त्त्युरः स्थानम्। नैतदस्ति। नहि विसर्जनीयस्य सत्यसति वा सवर्णत्वे प्रयोजनमस्ति। नापि दोषः। स्पृष्टतादिरिति। आदिशब्देन ईषत्पृष्टतादीनां ग्रहणम्। वर्णगुण इति। अकारादीनां वर्णानां धर्म इत्यर्थः। तुल्य आस्ये प्रयत्नो यस्येति। एतेन तुल्यास्यप्रयत्नशब्दस्त्रिपदोऽयं बहुव्रीहिरिति दर्शयति। व्यधिकरणानामपि गमकत्वाद् बहुव्रीहि र्भवत्येव। यथा कण्ठेकाल उरसिलोमा इति। अथ द्वन्द्वगर्भबहुव्रीहिः कस्मान्नाश्रीयते? आस्यञ्च प्रयत्नश्च आस्यप्रयत्नौ तौ तुल्यौ यस्य तत् तुल्यास्यप्रयत्नमिति। एवं मन्यते। द्वन्द्वगर्भबहुव्रीहावाश्रीयमाणे ताल्वादिना स्थानेन प्रयत्नो न विशेषितः स्यात्। ततश्च ककारङकारयोर्मिथः सवर्णसंज्ञा न स्यात्। वाह्यस्य प्रयत्नस्य भिन्नत्वात्। ककारस्य विवृतकण्ठत्वादिर्वाह्यः प्रयत्नः। ङकारस्य संवृतकण्ठत्वादिः। असत्याञ्च सवर्णसंज्ञायां शङ्कितेत्यत्रानुस्वारस्य (८।४।५८) ययि परसवर्ण इति ङकारो न स्यात्। अथ सत्यपि वाह्यस्य प्रयत्नस्य भेद आभ्यन्तरः स्पृष्टताख्योऽनयोस्तुल्यः प्रयत्नः। तं समाश्रित्य सवर्णसंज्ञा भविष्यति। यद्येवं शकारचकारयोरपि सत्यप्याभ्यन्तरयो र्विवृततास्पृष्टतयोः प्रयत्नयोर्भेदे योऽनयोर्वाह्यः प्रयत्नस्तुल्यो विवृतकण्ठत्वादिस्तदाश्रया सवर्णसंज्ञा स्यात्। ततश्च अरुश्चोततीति वक्ष्यमाणं प्रत्युदाहरणं नोपपद्यते। त्रिपदे तु बहुव्रीहौ ताल्वादिस्थानेन प्रयत्नो विशिष्यते। तेन वाह्यं प्रयत्नमुत्सृज्याभ्यन्तर एव स्पृष्टतादिर्गृह्यते। स एव हि ताल्वादावास्ये सम्भवति। नेतरः। आभ्यन्तरस्य प्रयत्नस्य ग्रहणे सति सत्यपि वाह्यप्रयत्नभेदे भवत्येव ककारङकारयोः सवर्णसंज्ञा। आभ्यन्तरप्रयत्नस्य तुल्यत्वात्। तस्यैव चेह ग्रहणात्। नच चकारशकारयोः सत्यपि वाह्यस्य प्रयत्नस्य तुल्यत्वे सवर्णसंज्ञा प्रसजति। तस्याग्रहणात्। यस्य च ग्रहणं तस्य चासमानत्वात्। तस्मात् त्रिपद एव बहुव्रीहिराश्रयितुं युक्तः। न द्वन्द्वगर्भ इति। यदि तर्हि त्रिपदो बहुव्रीहिराश्रीयते भिन्नविभक्तिकत्वादप्राधान्याच्चास्यं तुल्यत्वेनाविशेषितं भवति। ततश्च भिन्नस्थानानामपि सवर्णसंज्ञा प्राप्नोति। नैष दोषः।

यदाधेयं प्रति यदधिकरणमुपादीयते तदाधेयतुल्यतयैव तत् तुल्यमिति विज्ञायते। तथाहि देवदत्तयज्ञदत्तयोस्तुल्यं कांस्यपात्र्यां भोजनमित्युक्ते कांस्यपात्र्यपि तयोस्तुल्येति गम्यते। यं प्रति यस्तुल्यास्यप्रयत्नः स तमेव प्रति सवर्णसंज्ञो भवतीत्येषोऽर्थो यतो वचनाल्लभ्यत इह तन्नास्ति। ततश्च यो यं प्रति तुल्यास्यप्रयत्नः स ततोऽन्यमपि प्रति सवर्णसंज्ञः स्यादिति चोद्यमाशङ्क्याह समानजातीयं प्रतीति। समानजातीयो यं प्रति यस्तुल्यास्यप्रयत्नस्तं प्रति स सवर्णसंज्ञो भवति। न ततोऽन्यम्। एतच्च तुल्यास्यप्रयत्नशब्दस्य सवर्णशब्दस्य च सम्बन्धिशब्दत्वाल्लभ्यते। सम्बन्धिशब्दो ह्यन्तरेणापि शब्दान्तरसन्निधिं नियतमेव सम्बन्धिनमुपस्थापयति। यथा पितरि शुश्रूषितव्यमिति। नोच्यते स्वस्मिन्निति। सम्बन्धाच्चैतदवगम्यते यो यस्य पितेति। तथेहापि। यद्यपि यो यस्य तुल्यास्यप्रयत्नः स तं प्रति सवर्णसंज्ञो भवतीति न चोच्यते तथापि सम्बन्धात् तुल्यास्यप्रयत्नः समानजातीयमेव प्रति सवर्णसंज्ञो भवतीति गम्यते। अथवा समानो वर्णः सवर्ण इत्यन्वर्थसंज्ञेयम्। तेन तुल्यजातीयमेव प्रति सवर्णसंज्ञो भवति। एवं हि समानोऽस्य वर्णो भवति यदि तमेव प्रति सवर्णसंज्ञो भवति। न विजातीयं प्रति। चत्वार इत्यादि। द्विविधाः प्रयत्नाः। आभ्यन्तरा बाह्याश्च। तत्राभ्यन्तराश्चत्वारो वृत्तौ दर्शिताः। बाह्यास्त्वेकादश। के पुनस्ते? विवारः। संवारः। श्वासः। नादः। घोषः। अघोषः। अल्पप्राणः। महाप्राणः। उदात्तः। अनुदात्तः। स्वरितश्चेति। तत्र नाभिप्रदेशात् प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्द्ध्वमाक्रामन्नुरःप्रभृतीनामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्य्यते। स विधार्य्यमाणः स्थानमभिहन्ति। ततः स्थानाभिघाताद् ध्वनिरुत्पद्यते। आकाशे सावर्ण्यश्रुतिः सवर्णस्यात्मलाभः। तत्र वर्णध्वनावुत्पद्यमाने यदा स्थानकरणप्रयत्नाः परस्परं स्पृशन्ति तदा सा स्पृष्टता। ईषद् यदा स्पृशन्ति तदा सेषत्स्पृष्टता। सामीप्येन यदा स्पृशन्ति सा संवृतता। दूरेण यदा स्पृशन्ति सा विवृतता। एते चत्वार आभ्यन्तराः प्रयत्नाः। आभ्यन्तरत्वं पुनरेषां स्थानकरणप्रयत्नव्यापारेणोत्पत्तिकाल एव सम्भवात्। तत्र स्पृष्टकरणाः

स्पर्शाः । कादयो मावसानाः स्पर्शाः । स्पृष्टता गुणः । करणं क्रतिरुच्चारणप्रकारः । स्पृष्टतानुगतं करणं येषां ते स्पृष्टकरणाः । एवमन्यत्रापि वेदितव्यम् । ईषत्स्पृष्टकरणा अन्तःस्थाः । अन्तःस्था य र ल वाः । विवृतं करण मूष्मणाम् । स्वराणाञ्च । स्वराः सर्व एवाचः । ऊष्माणः श ष स हाः । अथ वाह्याः प्रयत्नाः किंलक्षणाः ? स एव प्राणो नाम वायुरूर्द्धमाक्रामन् मूर्द्धि प्रतिहतो निवृत्तो यदा कोष्ठ मभिहन्ति तदा कोष्ठेऽभिहन्यमाने गलविलस्य संवृतत्वात् संवारो नाम वर्णधर्म्म उपजायते । विवृतत्वाद् विवारः । संवृते गलविलेऽव्यक्तः शब्दो नादः । विवृते श्वासः । उपरि वर्त्तिनौ तौ श्वासनादावनुप्रदान मिति केचिदाचक्षते । वर्णनिष्पत्तेरनु पश्चात् प्रदीयत इत्यनुप्रदानम् । अन्ये तु ब्रुवते अनुप्रदान मनुस्वानो घण्टानिर्ह्रादवत् । यथा घण्टानिर्ह्रादोऽनुस्वान मनुभवति तथेति । तत्र यदा स्थानाभिघातजे ध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसङ्गाद् घोषो जायते । यदा श्वासोऽनुप्रदीयते तदा श्वासध्वनिसङ्गादघोषः । महति वायौ महाप्राणः । अल्पवायावल्पप्राणः । यदा सर्वाङ्गानुसारी प्रयत्न स्तीव्रो भवति तदा गात्रस्य निग्रहः कण्ठविवरस्य चाणुत्वं स्वरस्य च वायो स्तीव्रगतित्वाद् रौक्ष्यं भवति । तमुदात्त माचक्षते । यदा तु मन्दः प्रयत्नो भवति तदा गात्रस्य स्रंसनं कण्ठविलस्य महत्त्वं स्वरस्य वायोर्मन्दगतित्वात् स्निग्धता भवति । तमनुदात्त माचक्षते । उदात्तानुदात्तस्वरसन्निकर्षात् स्वरित इत्येवंलक्षणा वाह्याः प्रयत्नाः । वाह्यत्वं पुनरेषां वर्णनिष्पत्तिकालादूर्द्ध्वं वायुवशेनोत्पत्तेः । तत्र वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः । वर्ग्ययमानां प्रथमे ऽल्पप्राणाः । इतरे सर्वे महाप्राणाः । वर्गाणाञ्च तृतीय चतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना घोषवन्तः । वर्ग्ययमानां तृतीया अन्तःस्थाश्च अल्पप्राणाः । इतरे सर्वे महाप्राणाः । यथा तृतीया स्तथा पञ्चमाः । आनुनासिक्यमेषामधिको गुणः ! य एवैते द्विप्रकाराः प्रयत्ना वाह्या आभ्यन्तराश्चाख्याता स्तेषामिह सवर्णसंज्ञायां पूर्व्वोक्ता आभ्यन्तराश्चत्वारः स्पृष्टतादय आश्रीयन्ते ।

न वाह्या विवारादयः । आस्यग्रहणेन विशेषणेन तेषां व्यावर्त्तितत्वात् । स्पृष्टतादय एव ह्यास्ये भवन्ति । न विवारादयः । यद्येवं किमर्थं प्रयत्नग्रहणम् ? एतावदस्तु तुल्यास्यमिति । आस्यग्रहणेनैव हि स्पृष्टतादयोऽपि प्रयत्नाः सवर्णसंज्ञायां निमित्तभूता स्तात्वादिस्थानवल्लभ्यन्त एव । तेषामप्यास्ये भवनात् । सत्यमेतत् । तथापि प्रत्येकं व्यापारनिरासार्थमुभयोरुपादानम् । इतरथा हि यथैव स्थानं तुल्यं स्थानान्तरनिरपेक्षं सवर्णसंज्ञायां व्याप्रियत एवं प्रयत्नोऽपि स्थाननिरपेक्षः स्थानञ्च प्रयत्ननिरपेक्षं व्याप्रियेत । ततश्च भिन्नप्रयत्नानामपि तुल्यस्थानानां भिन्नस्थानानामपि तुल्यप्रयत्नानां सवर्णसंज्ञा स्यात् । अ अ अ इत्यादिना येषां यावताञ्च यादृशाञ्च मिथो नित्या सवर्णसंज्ञा तान् दर्शयति । अकाराणां हि सर्वेषाम् अकुहविसर्जनीयाः कण्ठ्या इति तुल्यं कण्ठः स्थानम् । इकाराणामपि इचुयशा स्तालव्या इति तालु । उकाराणामपि उपूपध्मानीया ओष्ठ्या इत्योष्ठः । ऋकाराणामपि ऋटुरषा मूर्धन्या इति मूर्धा । ऌकाराणामपि ऌतुलसा दन्त्या इति दन्तः । एकाराणा मैकाराणाञ्च ए ऐ कण्ठतालव्या इति कण्ठतालु । ओकाराणामौकाराणाञ्च ओऔ कण्ठोष्ठ्याविति कण्ठोष्ठम् । प्रयत्नस्तु सर्वेषामेवैषां विवृतं करण मूष्मणां स्वराणाञ्चेति विवृतत्वम् । तस्मात् तुल्यस्थानप्रयत्नत्वात् सर्वेऽकारादयो मिथः सवर्णसंज्ञा । एवं यावदौकारः । अन्तःस्था द्विप्रभेदाः सानुनासिका निरनुनासिकाश्च रेफवर्जिताः । तेऽपि समानजातीयानन्तःस्थान् प्रति सवर्णसंज्ञा भवन्ति । रेफोष्मणां सवर्णा न सन्तीति । तेभ्योऽन्येऽकारादयो वर्णा विजातीया इत्येषोऽभिप्रायः । तुल्यजातीयास्तु रेफोष्माण स्तुल्यस्थानप्रयत्नाः सवर्णाः सन्त्येव । तत्र रेफस्य तावद् ऋटुरषेभ्यो यवलेभ्यश्चान्ये वर्णा भिन्नस्थानत्वाच्च भिन्नप्रयत्नत्वाच्च सवर्णा न भवन्ति । तथाहि अकुहविसर्जनीयाः कण्ठ्याः । इचुयशास्तालव्याः । ऌतुलसा दन्त्याः । उपूपध्मानीया ओष्ठ्याः । ए ऐ कण्ठ्यतालव्यौ । ओ औ कण्ठ्योष्ठ्याविति वचनादकारादीनां यथायोगं कण्ठादि स्थानम् । रेफस्य ऋटुरषा मूर्धन्या इति मूर्धा । प्रयत्नोऽप्यनन्तरनिर्दिष्टेष्वकारादिषु ये स्वरास्तेषां विवृतं करण मूष्मणां स्वराणाञ्चेति विवृतत्वम् । ये तु वर्गान्तःपातिनः कका-

रादयस्तेषां स्पृष्टकरणा स्पर्शा इति स्पृष्टता। रेफस्येषत्स्पृष्टकरणा अन्तःस्था इतीषत्स्पृष्टता। शकारसकारावपि स्थानप्रयत्नभेदाद् रेफस्य सवर्णौ न भवतः। तौ हि यथाक्रमं तालव्यदन्त्यौ। रेफस्तु मूर्धन्यः। प्रयत्नोऽपि तयो र्विवृतत्वम्। रेफस्य तु पूर्वोक्त एव। ऋटुषाः प्रयत्नभेदाच्चैव रेफस्य सवर्णा न भवन्ति। नतु स्थानभेदेन। तेषामपि मूर्धन्यत्वात्। प्रयत्नभेदस्तु विद्यते। ऋकारषकारयोः पूर्ववद् विवृतत्वम्। रेफस्य तु स एव पूर्वोक्तः। टवर्गस्य स्पृष्टता। यवलास्तु पुनः स्थानभेदादेव सवर्णा न भवन्ति। नतु प्रयत्नभेदात्। तेषामपीषत्स्पृष्टगुणत्वात्। स्थानभेदस्तु विद्यते। यवलानां यथायोगं तालव्यदन्त्यौष्ठ्यत्वात्। एवं विसर्जनीय जिह्वामूलीयोपध्मानीयानुस्वाराः। कुँ खुँ गुँ घुँ इत्येते च यमाश्चातुल्यस्थानप्रयत्नत्वादेव रेफस्य सवर्णा न भवन्ति। विसर्जनीयो हि कण्ठ्यः। जिह्वामूलीयो हि जिह्व्यः। उपध्मानीय ओष्ठ्यः। अनुस्वारयमा नासिक्याः। रेफस्तु मूर्धन्यः। प्रयत्नस्तु य स्तस्य पूर्वोक्तः स विसर्जनीयादीनां नास्त्येव। तदेवं रेफस्य रेफादन्यो नास्ति कश्चित् सवर्णो वर्णः। अनया दिशोष्मणामपि शकारादीनां सावर्ण्याभावो वेदितव्यः। वर्ग्य इत्यादि। वर्गे भवो वर्ग्यः। दिगादित्वाद् यत् (४।३।५४)। यस्येति (६।४।१४८) चेत्याकारलोपः। वर्ग्यो यो वर्णः सोऽन्येन वर्ग्येण स्ववर्गान्तःपातिना तुल्यास्यप्रयत्नेन सह सवर्णो भवति। यथा ककारः खकारेण। एवमन्यत्रापि वेदितव्यम्। भिन्नस्थानानामित्यादि। एते हि ककारादयः सर्वे स्पृष्टगुणत्वात् तुल्यप्रयत्ना यथाक्रमं कण्ठतालुमूर्धदन्तोष्ठस्थानत्वाद्भिन्नस्थानाः। तर्प्तुं तर्प्तुमिति। तृप तृन्फ तृप्ताविव्यस्य तृचि तुमुनि च रूपम्। भिन्नप्रयत्नानामित्यादि। इकारादयो हि तालव्यत्वात् सर्वे तुल्यस्थाना विवृतत्वस्पृष्टत्वेषत्स्पृष्टत्वप्रयत्नाद् यथायोगं भिन्नप्रयत्नाः। इकारशकारयो र्यद्यपि प्रयत्नोऽप्यभिन्न स्तथापि तयोः प्रतिषेधं वक्ष्यतीति न भवति सवर्णत्वम्। अरुश्शोततीति। श्चुतिर् क्षरण इत्यस्य लटि रूपम्। तत्र परत्रावस्थिते ऽरुस्शब्दस्य सकारस्य रुत्वम्। तस्य विसर्जनीयः। तस्यापि वा (८।३।३६) शरीति सकारः। तस्यापि श्चुत्वं शकारः। होतॄकार इति। कथं पुनरत्र ॠकार आदेशो भवति। नहि ऋकार-

ऌकारयोः समुदायस्य स्थानिनः सोऽन्तरतम इत्याह उभयोरित्यादि । ऋकारो मूर्धन्यः । ऌकारस्तु दन्त्यः । तत्र तयोर्यद्येको मूर्धन्यो दन्त्यश्च दीर्घो वर्णोऽन्तरतमः सम्भवेत् तदा सोऽन्तरतम आदेशो भवेत् । स च न सम्भवतीत्यवयवस्य योऽन्तरतम स्तेन भाव्यम् । तत्रापि यदि ऌकारो दीर्घः स्यात् सोऽपि पर्य्यायेण स्यात् । स च नास्ति । तस्मात् पारिशेष्यात् समुदायस्यैकादेशस्य योऽन्तरतमः स एव ऋकारो भवति ।

## १० । नाज्झलौ ।

तुल्यास्यप्रयत्नावपीति प्रसङ्गे हेतुमाह । प्रसङ्गपूर्वकत्वात् प्रतिषेधस्य । दण्डहस्त इत्यत्राकारहकारयोर्द्वयोरपि कण्ठस्थानत्वात् तुल्यस्थानत्वम् । उभयोर्विवृतकरणत्वात् तुल्यप्रयत्नत्वम् । दधि शीतमित्यत्राप्यतएव तुल्यप्रयत्नत्वम् । उभयोस्तालव्यत्वात् तुल्यस्थानत्वम् । सवर्णदीर्घत्वं न भवतीति प्रतिषेधस्य फलं दर्शयति । ननु चाकः ( ६।१।१०१ ) सवर्णे दीर्घविधावचीति वर्त्तते । तत्रासत्यपि प्रतिषेधे दीर्घत्वं न भविष्यति । यथा कुमारी शेत इत्यत्र । तदयुक्तमिवोदाहरणद्वयम् । स्यादेतत् । अनुदित् सवर्णस्य ( १।१।६९ ) चाप्रत्यय इत्यकारेकाराभ्यां हकारशकारयोर्ग्रहणे तयोरप्यच्त्वमस्त्येव । ततश्चानुवर्त्तमानेऽप्यज्ग्रहणे यद्येवं प्रतिषेधो न क्रियते तत् स्यादेव दीर्घत्वमिति । एतच्चासम्यक् । यदि ह्यत्रानुवर्त्तमानेऽप्यज्ग्रहणे दीर्घत्वं स्यात् तदनुवृत्तिरपार्थिकैव स्यात् । तस्मादज्ग्रहणानुवृत्तिसामर्थ्यादजेव योऽज् न कथञ्चन हल् तत्रैव दीर्घत्वं विज्ञास्यते । न हकारशकारयोः । तयोर्हि यद्यप्यकारेकाराभ्यां सावर्ण्येन ग्रहणादच्त्वमस्ति तथापि हल्षूपदेशाद् हलत्वमप्यस्तीति न तावद्धकारशकारावचावेवापितु हलावपीति । सत्यमेतत् । अयं पुनरत्र वृत्तिकारस्याभिप्रायः । अवश्यं तावदन्यार्थं नाज्झलावित्येतत् कर्त्तव्यम् । यस्येति लोपाभावार्थम् । तदन्यार्थं कृतमेतदर्थमपि स्यात् । एवं तर्ह्यजनुवृत्तिद्वारेण दीर्घत्वाभावप्रतिपत्तौ साध्यायां यत् प्रतिपत्तिगौरवमापद्यते तदपास्तं भवतीति । वैपाश इति । विपाशि भव इत्यण् । यस्येति ( ६।४।१४८ ) चेत्यत्रेवर्ण उपादीयमानः सावर्ण्येन शकारमप्युपादत्ते ।

एवञ्च तस्य लोपः प्रसज्येत। आनडुहमिति। अनडुहो विकार इति। प्राणिरजतादिभ्योऽञ् (४।३।१५४)। तत्र यस्येति (६।४।१४८) चेत्यत्रा-कारो गृह्यमाणो हकारमपि गृह्णीयात्। ततश्च पूर्ववत् तस्य लोपः स्यात्।

## ११। ईदूदेद्द्विवचनं प्रगृह्यम्।

अत्रेदादि यद्द्विवचनं तत् प्रगृह्यमित्येवं वा विज्ञायते? ईदाद्यन्तं यद् द्विवचनं तत् प्रगृह्य मिति वा? तत्राद्ये पक्षे पचेते इत्यादौ प्रगृह्यसंज्ञा न प्राप्नोति। नह्येकारमात्रमत्र द्विवचनम्। अपितु आतेशब्द इति। इममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह ईदूदेदित्येवमन्तमित्यादि। नन्वेतस्मिन्नपि पक्षे अग्नी इत्येवमादि न सिध्यति। ईदाद्येव ह्यत्र द्विवचनं न तदन्तम्। आद्यन्तवदेक (१।१।२१) स्मिन्नित्यनेनान्तवद्भावो भवतीत्यदोषः। अग्नी इति। प्रथमयोः (६।१।१०२) पूर्वसवर्ण इति दीर्घत्वम्। अत्र प्रगृह्यसंज्ञायां सत्यां प्लुतप्रगृह्या (६।१।१२५) अचीति प्रकृतिभावादिति शब्दे परतोऽकः सवर्णे (६।१।१०१) दीर्घत्वं न भवति। वायू इत्यत्रापीको (६।१।७७) यणचीति यणादेशः। शेषेष्वप्युदाहरणेष्वयादेशः। खट्वे इति। औङ (७।१।१८) आप इति शीभावः। आद्गुणः (६।१।८७)। पचेते इति। यजेते इति। स्वरितेत्वादात्मनेपदम्। आताम्। टेरेत्वम्। आतो ङित (७।२।८१) इतीयादेशः। लोपो (६।१।६६) व्योर्वलीति यलोपः। वृक्षावत्र। प्लक्षावत्रेति। भवत्येतद् द्विवचनम्। नत्वीदूदेदन्तम्। तेन प्रकृतिभावा-भावादादेशो भवत्येव। कुमार्य्यत्रेति। वयसि (४।१।२०) प्रथम इति ङीपि कृते कुमारीत्येतदीकारान्तम्। नतु द्विवचनान्तम्। तेनासति प्रकृतिभावे भवत्येव यणादेशः। अथ तपरकरणं किमर्थम्? प्लुतनिवृत्त्यर्थमिति चेत्? न। इष्टत्वात् प्लुतस्य। यथा च तपरत्वे क्रियमाणेऽपि प्लुतस्य प्रगृह्यसंज्ञा सिध्यति तथा भाष्ये असिद्धः प्लुत स्तस्यासिद्धत्वात् तत्काल एवेत्यादिना प्रतिपादितम्। गुणान्तरभिन्नानां तत्कालानां ग्रहणार्थमिति चेत्? न। अभेदकत्वाच्छास्त्रे गुणानामित्यत आह तपरकरणमसन्देहार्थमिति। असति

हि तपरकरण ईकारस्योकारस्य च यणादेशः स्यात् । ततश्च सन्देह एव स्यात् किमिदं यकारवकारयोर्ग्रहणमाहोस्विदिकारोकारयोरिति । वक्तव्य इति । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । वक्ष्यमाणं शाकल्यग्रहणमिहोपतिष्ठते सिंहावलोकितन्यायेन । सा च व्यवस्थितविभाषा । तेन मणीवादीनां प्रतिषेधो भविष्यति । मणीव । दम्पतीव । रोदसीवेति । मणीवेत्यादयः शब्दा द्विवचनान्ताः । तत्रासति प्रगृह्यत्वेऽकः सवर्णे (६।१।१०१) दीर्घ एकादेशो भवत्येव ।

## १२ । अदसो मात् ।

अदः सम्बन्धी यो मकार इति । अवयवावयविभावलक्षणेन सम्बन्धेन षष्ठी । अमी अत्रेति । अदस् शब्दात् परस्य जसः (७।१।१७) शी । त्यदाद्यत्वम् (७।२।१०२) । अतो गुणे (६।१।९७) पररूपत्वम् । ईकारेण सहाद् (६।१।८७) गुणः । एत (८।२।८१) ईद्बहुवचन इतीत्त्वम् । दस्य (८।२।८०) च मत्वम् । अयमद्विवचनार्थ आरम्भः । अमू आसाते इति । अदसो द्विवचनमौ । त्यदाद्यत्वम् । वृद्धि (६।१।८८) रेचोति वृद्धिः । अदसो सेर्दादुदो (८।२।८०) म इत्यौकारस्य दीर्घस्य स्थाने तादृश एवान्तरतम्यादूकारः । अत्राप्यूकारादिकार्यं मसिद्धमिति पूर्वेणाप्राप्तिः । अतः पूर्वत्रासिद्धमित्यस्य (८।२।१) बाधनार्थ आरम्भः । कथं पुनः पूर्वत्रासिद्धमित्येतच्छक्यं बाधितुम् । वचनसामर्थ्यात् । नैतदस्ति । यत् सिद्धे प्रगृह्यकार्यम् अणोऽप्रगृह्यानुनासिक (८।४।५७) इति तदर्थं वचनं स्यात् । नैतदेवम् । नह्येकं प्रयोजनं योगारम्भं प्रयोजयति । यदि ह्येतावत् प्रयोजनं स्यात् तत्रैवेदम् ब्रूयात् । अणो प्रगृह्यस्यानुनासिकः । अदसो नेति । शम्यत्र । दाड़िम्यत्रेति । षिद् (४।१।४१) गौरादिभ्यश्चेति ङीष् । यस्येति (६।४।१४८) चेत्यकारलोपः । भवत्ययं मकारात् पर ईकारः । नत्वदः सम्बन्धीति । अमुकेऽत्रेति । अव्यय (५।३।७१) सर्वनाम्नामित्यकच् । जसः (७।१।१७) शी । आद् (६।१।८७) गुणः । पूर्ववदत्वमत्वे । अमुके इति स्थिते परत्र चात्रशब्दे एङः (६।१।१०९) पदान्तादतीति पूर्वरूपत्वम् ।

## १३ । शे ।

शे इति । शेश्रुतेरविशिष्टत्वात् काशे कुशे इत्यत्र यः शेशब्द स्तस्यापि ग्रहणं प्राप्नोति । अतो विशेषो वक्तव्य इत्यभिप्रायेणाह किमिदं शे इति । सुपामित्यादि । यस्तु काशकुशशब्दाभ्यां सप्तम्येकवचने च कृत आद् (६।१।८७) गुणे च शेशब्दः सम्पद्यते तस्येह ग्रहणं न भवति । लाक्षणिकत्वादिति भावः । युष्मे अस्मे इति । षष्ठीबहुवचनस्य सुपां ( ७।१।३९ ) सुलुगित्यादिना शे शब्दादेशः । शेषे ( ७।२।९० ) लोपः । अथवा प्रथमाबहुवचनस्यैव शेभावः । छान्दसत्वाद् यूयवयौ ( ७.२।९३ ) जसीत्येतन्न प्रवर्त्तते । त्वे इति मे इति । सप्तम्येकवचनस्य पञ्चम्येकवचनस्य च शेभावः । त्वमावेकवचन ( ७।२।९७ ) इति युष्मदस्मदोस्त्वमावादेशौ । इतरत् तु लौकिकमनुकरणमिति । यदा युष्मे इति अस्मे इत्येवमादिकं तदा लौकिक मनुकरण मिति भावः । यदा युष्मे अस्मे इत्यादीनां वेदवाक्यस्थानामर्थादृशवच्छिद्य स्वरूपेऽवस्थानार्थं पदकारैरितिकरणोऽध्याक्रियते तदा युष्मे इति अस्मे इत्येवमादिक मुदाहरण मिति भवति । इतरत् तु लौकिक मनुकरण मित्युक्ते न युष्मे वाजबन्धवः । त्वे रायः । मे राय इत्येतेष्वपि वेदवाक्येषु यद् युष्मे इत्यादि शेशब्दान्तं शब्दरूपं तदपि लौकिक मनुकरण मिति कस्यचिन् मन्दधियः भ्रान्तिः स्यात् । अत स्तान्निराकर्त्तुमितरशब्देन यदिह विवक्षितं तत् स्वरूपेण दर्शयितु माह युष्मे इति । अस्मे इति । त्वे इति । मे इति । यद्येवं किमर्थं न युष्मे वाजबन्धव इत्यादीनामुपन्यासः ? एषु वेदवाक्येषु ये युष्मे इत्यादयः शब्दास्तेषामेतान्यनुकरणानीति प्रदर्शनार्थः । अन्यथा हि न ज्ञायते कस्यैतान्यनुकरणानीति ।

## १४ । निपात एकाजनाङ् ।

एकाजिति बहुव्रीहि र्वायं स्यात् कर्मधारयो वा ? यदि बहुव्रीहिः प्रशब्दस्यापि प्रगृह्यसंज्ञा स्यात् । ततश्च प्रोपाभ्यामिति ( १।३ ४२ ) निर्देशो नोपपद्येत । प्राग्भय इति च प्रत्युदाहरणम् । तस्मात् कर्मधारयोऽय मिति मनसि कृत्वाह एकश्चासावच्चेत्येकाजिति । अ अपेहीत्यादीनि त्रीणि

च्छान्दसान्युदाहरणानि । इतरत् तु लौकिकम् । तत्र आ एवं नु मन्यस इत्यत्राकारो वाक्यपरिपूरणार्थः । आ एवं किल तदित्यत्र तु स्मरणार्थः । चकारात्रेति । करोतेर्लिट् । परस्मैपदानामित्यादिना ( ३ ४।८२ ) तिपो णल् । वृद्धिः । रपरत्वम् । द्विर्वचनेऽचीति ( १।१ ५९ ) स्थानिवद्भावेन द्विर्वचनम् । उरत्त्वम् ( ७।४ ६६ ) । कुहोश्चुरिति ( ७।४।६२ ) चुत्वम् । भवत्ययं णलकार एकाच् । नतु निपातः । प्राग्नय इति । प्रशब्दो भवति निपातः । नत्वेकाच् । तेन प्लुतप्रगृह्या अचीति ( ६।१।१२५ ) प्रकृतिभावो न भवति । अकः सवर्णे ( ६।१।१०१ ) इति दीर्घत्वं तु भवत्येव । आकारोऽत्र हि ङिद्विशिष्ट उपात्तः । तस्य न ज्ञायते क्व च ङित्त्वं क्व च नेति । अतो ङित्त्वाङित्त्वयोर्विषयविभागप्रदर्शनार्थं माह ईषदर्थे इत्यादि । तत्रेषदर्थे आ उष्णम् ओष्णमिति । ईषदुष्ण मित्यर्थः । क्रियायोगे उपसर्गसंज्ञायां ङिद्विशिष्ट एव पठ्यते ।

प्रपराप समन्वव निर्दु
व्याङ्न्यधयोप्यतिसूदभयश्च ।
प्रतिना सह लक्षयितव्याः
पर्य्युपयोरपि लक्षण मत्र (A) ॥ १ ॥ इति

आ इहि एहि । आ अक्षि आक्षि । मर्य्यादाभिविध्योरपि ङिद्विशिष्ट एव पठ्यते । आङ् मर्य्यादाभिविध्योरिति । मर्य्यादा सीमा । अवधिः । आ उदकान्तात् ओदकान्तात् प्रियं प्रोथमनुव्रजेत् । अभिविधिरभिव्याप्तिः । आ अहिच्छत्रात् । आहिच्छत्रं वृष्टो देवः । अहिच्छत्रं गृहीत्वा वृष्टो देव इत्यर्थः । ङिद्विशिष्टस्यानाङिति प्रगृह्यसंज्ञाप्रतिषेधात् स्वरसन्धि र्भवति । अथैत मातमित्यत्रैतदो द्वितीयाटौस्स्वेन ( २।४ ३४ ) इत्येनादेशः कस्मान्न भवति ? अन्वादेश इति तत्रानुवर्त्तते । अस्ति चेहान्वादेश इत्यस्ति प्राप्तिः । यथा न भवति तथा तत्रैव प्रकरणे वृत्तिकारः स्वयमेव वक्ष्यतीति पुनरिह नोच्यते । आतमित्याकारे तकारो मुखसुखार्थः । ये तु पुनरेतमाङ्-

(A) श्लोकेऽस्मिन् वेगवतीनामच्छन्दः । विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यादिति । सयुगात् सगुरु विषमे चेद् भाविह वेगवती युजि भाद् गाविति वा लक्षणात् ।

मिति ङकारसहित माकारं पठन्ति तेषां ङितं विद्यादिति वचन मनर्थकं स्यात्। ङकारसहितस्य पाठादेव ङित्त्वविज्ञानात्। तस्मात् तकारपर एवाय माकारः पठितव्यः। वाक्यस्मरणयो रिति। वाक्यशब्देन वाक्यार्थ उक्तः। अभिधेये ऽभिधानोपचारात्। प्रक्रान्तं हि वाक्यार्थं किञ्चिदपेक्ष्येदं प्रयुज्यते। आ एवं नु मन्यस इति। एवमयं वाक्यार्थो विज्ञायत इत्यर्थः। पूर्वप्रक्रान्तवाक्यार्थप्रदर्शनपरोऽय माकारः प्रयुक्तः। अथवा पूर्वप्रक्रान्त-वाक्यार्थस्यान्यथाकरणमिदं प्रयुज्यते। आ एवं नु मन्यस इति। नैवं पूर्वममंस्थाः। सम्प्रति त्वेवं मन्यस इति। अथवा वाक्यशब्देन वाक्यमे-वोच्यते। वाक्यावयवो निरर्थक एवाकारः प्रयुज्यत इति। स्मरणं स्मृतिः। तत्र य आकारो वर्त्तते स्मृतिसूचकः स ङिन्न भवति। आ एवं किल तत्। एवमिदं विज्ञातमित्यर्थः। ज्ञातं स्मृतमेव। अथवा स्मर्त्तव्यार्थविषयः पूर्व-माकारः प्रयुज्यते। आ इति स्मृतेरुत्तरकालमर्थ आख्यायते। आ इत्येतस्यै-वं किल तदिति भवत्ययमर्थ इत्यर्थः। वाक्यस्मरणयो राकारस्य प्रगृह्य-संज्ञास्त्येवेति प्लुतप्रगृह्या (६।१।१२५) अचीति प्रकृतिभावः। तेन वृद्धिरेचीति (६।१।८८) वृद्धिर्न भवति।

### १५। ओत्।

### १६। सम्बुद्धौ शाकल्यस्येतावनार्षे।

सम्बुद्धिनिमित्त इति। सम्बुद्धि र्निमित्तं यस्य स तथोक्तः। एतेन सम्बुद्धावित्यस्य निमित्तसप्तमीत्वं दर्शयति। परसप्तम्यां त्वस्यां हे त्रपो इत्यत्र न स्यात्। स्वमोर्नपुंसकादिति (७।१।२३) सम्बुद्धे र्लुप्तत्वादिति भावः। सम्बुद्धौ चेति (७।३।१०६) वर्त्तमाने ह्रस्वस्य गुण (७।३।१०८) इत्यनेन यो गुणो विधीयते स सम्बुद्धिनिमित्तः। तस्य सम्बुद्धिनिमित्तत्व मुपादाय विहितत्वात्। गवित्ययमाहेति। केनचिद् गौरिति वक्तव्ये शक्तिवैकल्याद् गो इत्युक्तम्। तमन्यो यदानुकरोति तत्रैतत् प्रत्युदाहरणम्। ननु चानुकार्यो णार्थेनार्थवत्त्वात् प्रातिपदिकत्वे सति विभक्त्यात्र भवितव्यमित्यत आह अत्रेत्यादि। अत्रानुक्रियमाणस्यानुकरणस्य यदि भेदो विवक्ष्यते ततोऽर्थवत्तायां

सत्यां स्यादिभक्तिः । स तु न विवक्ष्यत इति कुत स्तस्याः प्रसङ्गः ? नहीह शब्दशास्त्रे वस्तुनः सत्तैव शब्दसंस्कारस्य प्रधानं कारणम् । किं तर्हि विवक्षा च । सा चेह नास्ति । शाकल्यग्रहणं विभाषार्थमिति । एतेन पूजार्थताशङ्कां निरस्यति । यदि हि पूजार्थ मेव तत् स्याद् विकल्पो न भवेदिति भावः ।

१७ । उञः ।

१८ । ऊँ ।

तेन त्रीणि रूपाणि भवन्तीति शाकल्यग्रहणानुवृत्तेः फलं दर्शयति । यदि ह्यत्र शाकल्यग्रहणं नानुवर्त्तेत तदा पूर्वसूत्रेण यस्मिन् पक्ष उञः प्रगृह्य-संज्ञा न विहिता तस्मिन्ननेन नित्यमूँआदेशः स्यात् । तत उ इति ऊँ इति च द्वे रूपे स्याताम् । न वितीति तृतीयम् । शाकल्यग्रहणानुवृत्तौ तु सत्यां यस्मिन् पक्षे पूर्वसूत्रेण प्रगृह्यसंज्ञा उञो न कृता तस्मिन्ननेन ऊँ आदेशे विभाषा विहिते वितीति तृतीयं रूपं सिध्यति ।

१९ । ईदूतौ च सप्तम्यर्थे ।

अध्यस्यां मामकी तनू इति । एतद् वेदवाक्यं वेदितव्यम् । अत्र मामकी तनू इति शब्दो सुपां सुलुगिति (७।१।३९) लुप्तसप्तमीकौ ; तत्र यदा अर्थाद्व्यवच्छिद्य स्वरूपे व्यवस्थापनायेतिशब्दः प्रयुज्यते तदेते उदाहरणे । मामकी इति । तनू इति च । तथा सोमो गौरी इत्येतदपि । मामक्यामि-त्यादेरुपन्यासः सप्तम्यर्थप्रदर्शनार्थः । डादेश इति । सुपां सुलुगित्यादिना (७।१।३९) । तत्रेति शब्दे परतोऽकः (६।१।१०१) सवर्णे दीर्घत्वं भवत्येव । धीती इत्यादि । धीतिमतिसुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस्य पूर्वसवर्णदीर्घत्वम् । लुग् वा । इतिशब्दे परतोऽकोऽत्रापि सवर्णदीर्घत्वं भवत्येव । धीत्येत्यादिना तृतीयार्थवृत्तितां दर्शयति । वाप्यामश्वो नद्या मातिरिति संज्ञायामिति (२।१।४४) सप्तमीसमासः । अथार्थग्रहणे क्रियमाणेऽपि कस्मादेवात्र न भवति ? अस्ति ह्यत्रापि सप्तम्यर्थः । नैतदस्ति । अर्थग्रहणसामर्थ्यात् । अर्थग्रहणे सति केवलो योऽसंसृष्टः

सप्तम्यर्थः स इह गृह्यते। नैवंविधे समासे सप्तम्यर्थः सम्भवति। संविभिन्नोभयरूपत्वाद्वृत्तौ वर्त्तिपदार्थानाम्। एषो ऽजहत्स्वार्थायां वृत्तौ परिहार उक्तः। जहत्स्वार्थायान्तु तस्यां वाक्यावस्थायामुपसर्जनीभूतो योऽर्थं स्वं शब्दो जहातीति सप्तम्यर्थो नास्त्येव। तेनार्थग्रहणे सति समासे प्रगृह्यसंज्ञा न भवति। अथ तपरकरणं किमर्थम्? प्लुतनिवृत्त्यर्थमिति चेत्? न। असम्भवात्। न प्लुते ह्यौकारोकारान्तं सप्तम्यर्थवृत्तिरूपं किञ्चिदस्ति यद्व्यावृत्तये तपरकरणं क्रियते। गुणान्तरभिन्नानां तुल्यकालानां ग्रहणार्थमिति चेत्? न। अभेदकत्वाच्छास्त्रे गुणानाम् इत्यत आह तपरकरणमित्यादि। तपरत्वे ह्यसति यणादेशः स्यात्। ततश्च किमयं दीर्घ उत ह्रस्व इति सन्देहः स्यात्। स मा भूदिति तपरत्वं क्रियते। ईदूतौ सप्तमीत्यादि। ईदूतौ सप्तमीत्येतावदेव सूत्रमस्तु। किमर्थग्रहणेन? लुप्तेऽर्थग्रहणाद् भवेदिति। इह सोमो गौरी अधिश्रित इति लुप्तायामपि सप्तम्यां प्रगृह्यसंज्ञा यथा स्यादित्येवमर्थमर्थग्रहणम्। अत्र हि सप्तम्या अभावात् प्रगृह्यसंज्ञा न स्यात्। अर्थग्रहणात् तु भवति। सप्तम्यर्थस्य विद्यमानत्वात्। पूर्वस्य चेत् सवर्णोऽसाविति। स्यादेतत्। नैवात्र सप्तम्या लुक् क्रियते। किं तर्हि? सुपां सुलुगित्यादिना ( ७।१।३९ ) पूर्वसवर्ण ईकारः। तत्राकः सवर्णे दीर्घत्वे कृते तस्यान्तवद्भावे सति सप्तमीग्रहणेन ग्रहणादस्त्येव सप्तमी। ततो नार्थोऽर्थग्रहणेनेति। एतच्चायुक्तम्। एवं हि सत्याङ्भावः प्रसज्यते। यद्यत्र पूर्व्वसवर्णः स्यात् तदा परत्वादकः ( ६।१।१०१) सवर्णदीर्घत्वं बाधित्वा ऽण् ( ७।३।११२ ) नद्याङ्त्याटो भाव आपद्यते। ङे राम् ( ७।३।११६ ) नद्याम्नीभ्यश्चेत्यामश्च। भावः प्रादुर्भावः सत्ता वा। तस्मात् पूर्व्ववल् लुगेव कर्त्तव्यः। ततश्चासत्यां सप्तम्यां प्रगृह्यसंज्ञा न स्यात्। तस्मादर्थग्रहणं कर्त्तव्यम्। न कर्त्तव्यम्। यस्मात् सर्व्वत्रैव सप्तम्या लुका भवितव्य मिति न क्वचित् सप्तम्यस्ति। उच्यते चेदं वचनम्। तत्र वचनसामर्थ्याल्लुप्तायामपि तस्यां भविष्यति। नैतदस्ति। यतो वचनाद् यत्र दीर्घत्वं तत्र भविष्यति। यथा दृतिं न शुष्कं सरसी शयान मिति। अत्र सरःशब्दात् परस्याः सप्तम्या इयाड़ियाजीकाराणामित्यस्मादुपसंख्यानाद्

( ७।१।३९ वार्त्तिक ) व्यत्ययो बहुल ( ३।१।८५ ) मित्यतो वा दीर्घ ईकारे कृते सप्तमी श्रूयते । ततश्चात्र वचनस्य सावकाशत्वात् सोमो गौरी अधिश्रित इत्यत्र न स्यात् । तत्रापि सरसी यदीति । यदि सरसीशब्दोऽस्ति तदात्रापि नैवावकाशः । अस्ति च सरसीशब्दः । तथाहि गौरादिषु ( ४।१।४१ ) पिप्पल्यादयश्चेति पाठात् पिप्पल्याद्यन्तःपातिनः सरःशब्दादीकारे कृते सरसीति रूपं सम्पद्यते । तथाच दक्षिणापथे महान्ति सरांसि सरस्य इत्युच्यन्ते । सरसीशब्दस्य प्रगृह्यसंज्ञायां प्रयोजनं तत उत्पन्नायाः सप्तम्या लुकि कृत इतिशब्दे चाध्याहृते सरसी इत्यत्र स्वरसन्ध्यभावः । तदेवं सरसीशब्दो विद्यत एवेति । इतिं न शुष्कं सरसी शयान मित्यत्रापि सरसीशब्दो लुप्तसप्तमीक एव प्रयुक्तः । तथाच तदेवावस्थितम् । वचनाद् भविष्यतीति प्रत्याख्यात मर्थग्रहणम् । वं तर्हि ज्ञापकं स्यात् तदन्तत्वे । ईदूदेद्द्विवचन मित्यत्र चत्वारः पक्षा आश्रीयन्ते । ईदादयो हि द्विवचनेन विशिष्यन्ते । ईदादि यद् द्विवचनमिति । ईदादिभिर्वा द्विवचनम् इति । ईदाद्यन्तं यद् द्विवचनमिति । द्विवचनप्रकृति र्वाभाभ्यां द्विवचनान्तमीदाद्यन्तं यच् शब्दरूप-मिति । इदादिभिर्वा द्विवचनं विशिष्य पश्चात् तेनेदन्तेन द्विवचनेन प्रकृतिः । ईदाद्यन्तं यद्द्विवचनं तदन्तं शब्दरूपमितीदाद्यन्तं द्विवचनान्तमित्यर्थः । तत्र तृतीये पक्षे दोष उक्तः । कुमार्य्योरगारं कुमार्य्यगारम् । बध्वोरगारं बध्वगारमित्यत्र प्रगृह्यसंज्ञा प्राप्नोति । एतदीदाद्यन्तं द्विवचनान्तञ्च भवति । प्रत्ययलक्षणेनेति चतुर्थे पक्षेऽपि दोष उक्तः । अशुक्ले वस्त्रे शुक्ले सम्पद्येतां शुक्लास्तां वस्त्रे इत्यत्र प्राप्नोति । शुक्लशब्दाच् च्विप्रत्ययान्तान् नपुंसकाच्च ( ७।१।१९ ) त्यौङः शीभावे कृतेऽव्ययादाप्सुप ( २।४।८२ ) इति लुक् । एतदीदाद्यन्तं द्विवचनान्तं भवति । प्रत्ययलक्षणेनेति तदन्तत्व इति । अनेन तृतीयचतुर्थपक्षावुपलक्षयति । तदन्तत्वे तदन्तपक्षे तृतीये चतुर्थे च ज्ञापकं भवेदेतदर्थमर्थग्रहणम् इति । इह प्रगृह्यप्रकरणे प्रत्ययलोपलक्षणेन प्रगृह्यसंज्ञा न भवतीति । यदि हि स्यादर्थग्रहणमनर्थकं स्यात् । एता-वद् वक्तव्यमीदूतौ च सप्तमीति । सप्तम्या लुकि कृते प्रत्ययलक्षणेन सप्तमी-सहचरितौ यावीदूतौ सप्तम्यां परतो वा यावीदूतौ तयोः प्रगृह्यसंज्ञा भवत्येवेति

नार्थोऽर्थग्रहणेन। अर्थग्रहणाद्विज्ञायते प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवतीति। तेन तदन्तपक्षद्वये यो दोष उक्तः स न भवति। मा वा पूर्व्वपदस्य भूदिति। पूर्व्वपदग्रहणेन समास उपलक्ष्यते। यस्मात् समासे सत्येतद् भवति पूर्वपदमुत्तरपदमिति। तदेतदुक्तं भवति वाप्यश्वो नद्यातिरित्यादौ समासे प्रगृह्यसंज्ञा माभूदित्येवमर्थमर्थग्रहणमिति। यथा च तस्मिन् सति समासे प्रगृह्यसंज्ञा न भवति तथा पूर्वमेव प्रतिपादितम्।

## २०। दाधा घ्वदाप्।

दाधा इति। दारूपाणां चतुर्णां कृतैकशेषाणां धारूपयोर्द्वयोश्च कृतैकशेषयोर्द्वन्द्वः। ननु च लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्। न तु लाक्षणिकस्येत्यनया परिभाषया दो अवखण्डने देङ् रक्षणे धेट् पान इत्येतेषां ग्रहणं न स्यात्। नैतदस्ति। तस्या हि परिभाषाया गामादाग्रहणेष्वविशेष इत्यपवादोऽस्ति। तेन सत्यपि लाक्षणिकत्वे दोदेङौ तावद् गृह्येते। धेटोऽपि लिङ्गाद् ग्रहण मनुमीयते। तत् पुनर्लिङ्गं दैपः पकारानुबन्धः। स ह्यदाविति दाप्प्रतिषेधसामान्यग्रहणार्थः क्रियते। यदि चास्याः परिभाषाया इह व्यापारः स्याद् दैपः पकारानुबन्धकरणमनर्थकं स्यात्। लाक्षणिकत्वादेव ह्यस्य ग्रहणं न भविष्यतीति किं प्रतिषेधेऽस्य ग्रहणेन? ननु च लाक्षणिकमपि दारूपं धारूपं च धेटो नोपपद्यत एव। सानुबन्धकस्य ह्यनेजन्तत्वादात्त्वानुपपत्तेः। नैष दोषः। यदयमुदीचां माङो व्यतिहारे (३।४।१९) इति मेङः सानुबन्धकस्यात्त्वभूतस्य निर्देशं करोति तज् ज्ञापयति नानुबन्धकृत मनेजन्तत्वमिति। ननु च माङ्-मान इत्यस्याप्यसौ निर्देशः स्यात्। तत् कथं ज्ञापकम्? नैतदस्ति। मेङ् प्रणिदान इत्ययमेव व्यतिहारे वर्त्तते। न माङ् मान इति। तस्मान् मेङ एवायं कृतात्त्वस्य निर्देशो ज्ञापनार्थः। प्रणिददातीति। नेर्गदनद पतपदघुमास्यति (८।४।१७) हन्तीत्यादिना घुसंज्ञायां सत्यामिह णत्वं भवति। प्रणिदातेति। तृजन्तम्। प्रणिद्यतीति। ओतः (७।३।७१) श्यनीत्योकारलोपः। अशिद्विषये दारूपोऽयं भवतीत्यत्र घुसंज्ञा प्रवर्त्तत एव।

दातं वर्हिरिति । घुसंज्ञाया अभावाद् दो दद्घोरि त ( ७।४।४६ ) ददादेशो न भवति । अवदातमिति । अत्रापि निष्ठेति (३।२।१०२) क्तप्रत्ययः । अत्राच ( ७।४।४७ ) उपसर्गात्त इति तकारादेशो न भवति ।

## २१ । आद्यन्तवदेकस्मिन् ।

असहायस्येत्यादिना सूत्रारम्भस्य फलं दर्शयति । इतिकरणो हेतौ । यस्मादादेरन्तस्य यानि कार्य्याण्युपदिष्टानि तान्यविद्यमानसहायस्य न सिध्यन्ति । तस्मादतिदेशोऽय मारभ्यते । द्वितीयादिकं हि सहायमपेक्ष्याद्यन्तशब्दौ प्रवर्त्तेते । तथाहि लोकः सति हि परस्मिन् सहाये पूर्वाभावे चादिरिति व्यपदिशति । सति च पूर्वस्मिन् पराभावे चान्त इति । अतस्तदुभय मसहाये नास्तीति । तत्राद्यन्तप्रतिबद्धानि कार्य्याणि न स्यु र्यद्यय मतिदेशो नारभ्यते । एकस्मिन्निति वचनादाद्यन्तवदित्यत्र सप्तमी समर्थाद्वति र्गम्यत इत्याह । सप्तम्यर्थे वतिरिति । आद्यन्तयोरिवाद्यन्तवत् । तत्र तस्येवेति ( ५।१।११६ ) वतिः । औपगव इत्यत्राप्यादिव्यपदिष्टं कार्य्यमतिदेशस्य फलम् । प्रत्ययाद्युदात्तत्वं ह्यादेरुपदिष्टम् । आद्युदात्तश्चेति ( ३।१।३ ) वचनात् । आभ्यामिति । अत्रान्तोपदिष्टम् । दीर्घत्वं ह्यन्तस्योपदिष्टम् । अलोऽन्त्यस्येति ( १।१।५२ ) वचनात् । इदमो भ्याम् । त्यदाद्यत्वम् ( ७।१।१०२ ) । अतो गुणे ( ६।१।९७ ) पररूपत्वम् । हलि लोप (७।२।११३) इतीद्रूपस्य लोपः । सुपि (७।३।१०२) चेति दीर्घः । सभासन्नयने भवः साभासन्नयन इति । यद्येकग्रहणं न क्रियेत तदा यत्राद्यन्तव्यपदेशो नास्ति तत्रातिदेशो युक्त इत्याद्यन्तव्यपदेशरहिते मध्ये ऽप्यतिदेशः स्यात् । आद्यन्तवदिति वचनसामर्थ्यात् । ततश्च सभाशब्दाकारस्यादित्वे सति सभासन्नयनशब्दस्य य आकार वृद्धिसंज्ञकं तमाकार माश्रित्य वृद्धिर्यस्याचामादिस्तद् ( १।१।७३ ) वृद्धमिति वृद्धसंज्ञा स्यात् । तस्याञ्च सत्यामणं बाधित्वा वृद्धाच्छ (४।२।११४) इति च्छप्रत्ययः प्रसज्येत । ननुच मध्येऽपि यस्य वृद्धसंज्ञकं तस्यापि यदि वृद्धसंज्ञा स्यादादिग्रहणं वृद्धसंज्ञासूत्रे निरर्थकं स्यात् । व्यवच्छेद्याभावात् । नैतदस्ति । आदिग्रहणसामर्थ्याद्धि यस्य यत्र विशिष्ट मादित्व-

मनातिदेशिकं मुख्यं तत्परिग्रहणार्थं तदादिग्रहणं स्यात्। तस्माद् यस्य च न कदाचिदपेक्षयैवंविधमादित्वं सम्भवति तदादिग्रहणस्य व्यवच्छेद्यं भविष्यति। यथा जानातीति ज्ञा इत्यादि। समासप्रत्यये तु ये परे ऽज्वर्णा स्तदपेक्ष मस्ति विशिष्ट मनातिदेशिक मादित्व मिति प्रवर्त्तत एव तत्र वृद्धसंज्ञा।

## २२। तरप्तमपौ घः।

कुमारितरेति। द्विवचनविभज्योपपदेत्यादिना (५।३।५७) तरप्। कुमारितमेति। अतिशायने (५।३।५५) त्यादिना तमप्। तयोर्घसंज्ञायां सत्यां घरूपकल्पेत्यादिना ह्रस्वत्वं (६।३।४३) भवति।

## २३। बहुगणवतुडति संख्या।

अत्र बहुगणशब्दौ प्रातिपदिके। वतुडतौ प्रत्ययौ। बहुकृत्व इति। संख्यायाः क्रियाभ्यावृत्तिगणने (५।४।१७) कृत्वसुच्। बहुधेति। संख्याया विधार्थे धा (५।३।४२)। बहुक इति। संख्याया (५।१।२२) अतिशदन्तायाः कन्। तावत्कृत्व इत्यादि। तच्छब्दाद् यत्तदेतेभ्यः (५।२।३९) परिमाणे वतुबिति वतुपि कृत आ (६।३।९१) सर्वनाम्न इत्यात्वे कृते तावदिति भवति। किंशब्दात् किमः संख्यापरिमाणे डतौ कृते टिलोपे च कतीति भवति। ताभ्यां पूर्ववदेव कृत्वसुजादयः। बहुगणशब्दयोरित्यादि। बहुशब्दोऽयं संख्यावचनोऽप्यस्ति। वैपुल्यवचनोऽपि। गणशब्दः संख्यावचनोऽप्यस्ति। सङ्घवचनोऽपि। तत्र यौ वैपुल्यसङ्घवचनौ तयोरिह ग्रहणं नास्ति। संख्यावाचिनोरेव तयो स्त्वेषा संख्यासंज्ञा विधीयते। तत् कथं संख्येत्यन्वर्थसंज्ञेयम्? संख्यायतेऽनयेति संख्या। नच यो वैपुल्ये बहुशब्दो वर्त्तते यश्च संघे गणशब्द स्ताभ्यां संख्यायते। तथाहि बहुरोदन इत्युक्ते वैपुल्यं गम्यते। तथा महान् भिक्षूणां गण इत्युक्ते सङ्घः। नतु संख्यानम्। तस्मादन्वर्थसंज्ञाकरणाद् यावेकादिसंख्याव्यवच्छेदेन संख्याविशेषमाहतु स्तयोरेव ग्रहणम्। यद्येवं किमर्थं तयोरियं संज्ञा विधीयते? यावता संख्यावाचिनौ तौ लौकिकसंख्यायाम् अन्तर्भूतौ। लौकिकी च संख्या शास्त्रे

ग्टह्यत एव । अन्यथा संख्याया अतिशदन्तायाः ( ५।१।२२ ) कन्नित्यत्रा तिशदन्तायाा इति प्रतिषेधोऽनर्थकः स्यात् । शास्त्रीयायाः संख्याया अतिशदन्ताया अभावादित्यत आह भूर्य्यादीनां निवृत्त्यर्थमिति । भूरि-प्रभूतमित्येवमादय स्तज्जातीयाः प्रचुरविशेषवाचिनः सन्ति । तेषां मा भूदित्येवमर्थं बहुगणशब्दयोः संख्यासंज्ञा विधीयते । तदेतेन नियमार्थ-मेतयोः संज्ञाविधानमेतदिति दर्शयति । तुल्यजातीयापेक्षया हि नियमः । अतस्तुल्यजातीयानां भूर्य्यादीनामेव नियमेन व्यावृत्तिः क्रियते । नान्येषाम् । अर्धपूर्वपदश्चेति । अर्धशब्दः पूर्वपदं यस्य पूरणप्रत्ययान्तस्य सोऽर्धपूर्वपदः स च संख्यासंज्ञो भवतीत्येतदर्थरूपं व्याख्येय मित्यर्थः । किमर्थमित्याह समासकन्विध्यर्थमिति । तत्रेदं व्याख्यानम् । डति चेत्यत्र ( १।१।२५ ) यश्चकारः स इह स्वरितत्वमासज्य सिंहावलोकितन्यायेनोपस्थाप्यते । स चानुक्तसमुच्चयार्थः । तेनार्द्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति । अर्द्धपञ्चमशूर्प इति । अर्द्धं पञ्चमं येषामिति बहुव्रीहिः । अर्द्धपञ्चमैः शूर्पैः क्रीतमिति तद्धितार्थोत्तरपदसमाहारे ( २।१।५१ ) चेति समासः । संख्यापूर्वो (२।१।५२) द्विगुरिति द्विगुसंज्ञा । शूर्पादन्यतरस्यामिति (५।१।२६) विहितस्याञष्ठञो वाऽध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायामिति ( ५।१।२८ ) लुक् । अर्द्धपञ्चमक इति । संख्याया ( ५।१।२२ ) अतिशदन्तायाः कन् ।

## २४ । ष्णान्ता षट् ।

स्त्रीलिङ्गनिर्देशादित्यादि । ष्णान्तेति स्त्रीलिङ्गनिर्देशः क्रियते । न चेह किञ्चित् स्त्रीलिङ्गं श्रूयते । नापि प्रकृतमन्यत् संख्यायाः । तस्मात् स्त्रीलिङ्गनिर्देशात् संख्यैव ष्णान्तेत्यनेन विशेषणेन विशिष्यते । षडिति चानया संज्ञया सम्बध्यते । यदि ष्णान्तेत्यत्र स्त्रीलिङ्गनिर्देशो न क्रियेत सर्वं ष्णान्तं शब्दरूपं षट्संज्ञं स्यात् । ततः पामानो विप्रुष इत्यादावपि षड्भ्यो (७।१।२२) लुगिति लुक् प्रसज्येत । ननु च संख्येत्यनुवर्त्तिष्यते । तत् कुतोऽति-प्रसङ्गः ? सत्यमेतत् । सैवानुवृत्तिः स्त्रीलिङ्गनिर्देशेन स्पष्टीक्रियते । यदि संख्येत्यनुवर्त्तते सामर्थ्यादेव तदन्तता विज्ञास्यते । नहि षकारमात्रं वा

नकारमात्रं वा संख्यास्ति। तदपार्थक मन्तग्रहणम्। नैतदस्ति। उपदेशावस्थायां या षान्ता सा षट्संज्ञा यथा स्यादित्येवमर्थत्वादन्तग्रहणस्य। असति तस्मिन् शतानि सहस्राणीति नुमि कृते षट्संज्ञा स्यात्। इह चाष्टानामित्यष्टन आत्वे कृते षट्संज्ञा न स्यात्। ततश्च षट्चतुर्भ्यश्चेति (७।१।५५) नुण् न भवति।

## २५। डति च।

डत्यन्ता या संख्या सा षट्संज्ञा भवतीति। संख्याग्रहणेनेहापि संख्यानुवर्त्तत इति दर्शयति। किमर्थं पुनः सेहानुवर्त्तते? पातेर्डतिः पतय इत्यत्र माभूत्। अथ संख्यानुवृत्तावपि कस्मादेवात्र न भवति? यावतायमपि संख्यासंज्ञ एव। सामान्येन हि पूर्वं डतेः संख्यासंज्ञा विहिता। नैतदस्ति। वतुना साहचर्य्यात् तद्धितस्यैव डते स्तत्र ग्रहणं। न कृतः। कृचायम्।

## २६। क्तक्तवतू निष्ठा।

भुक्तवानिति। चोः कुरिति (८।२ ३०) कुत्वम्। अत्वसन्तस्य (६।४।१४) चा धातोरिति दीर्घः। अथ केन विहितयोः क्तक्तवत्वो रेषा संज्ञा विधीयते? अनयैव संज्ञया। वक्ष्यति तृतीये (३।२।१०२) निष्ठेति। यद्येवं निष्ठासंज्ञया क्तक्तवतू भाव्येते तावेवाश्रित्य निष्ठासंज्ञेति। इतरेतराश्रयो दोषो भवति। इतरेतराश्रयाणि कार्य्याणि शास्त्रे न प्रकल्पन्ते। नैष दोषः। भाविनी हि संज्ञा विज्ञास्यते। यथास्य सूत्रस्य शाटकं वयेति। तौ भूते काले भवतो ययोर्विहितयो र्निष्ठेत्येषा संज्ञा भवतीति।

## २७। सर्वादीनि सर्वनामानि।

सर्व्वशब्द आदिर्येषां तानीमानि सर्वादीनीति। एष तद्गुणसंविज्ञानो बहुव्रीहिः। इतरथा ह्युपलक्षणार्थत्वात् सर्वशब्दस्य संज्ञा न स्यात्। नह्युपलक्षणस्योपसर्जनीभूतस्य कार्य्येण सम्बन्धो भवति। तथाहि चित्रगुरानीयतामित्युक्ते न गवामप्यानयनं भवति। तद्गुणसंविज्ञानस्य बहुव्रीहे र्लिङ्गमदः

सर्वेषामिति ( ७।३।१०० ) निर्देशः । सर्वशब्दस्य सुट् सर्वनाम्नः कार्य्यम् । अन्यथाहि तन्नोपपद्यते । सर्वः । सर्व्वौ । सर्वे इति । इदमत्रोदाहरणं सर्वे इति । अत्र हि सर्वनामसंज्ञायां जसः ( ७।१।१७ ) शीति शीभावः कार्य्यः । पूर्वयोस्तु तत्साहचर्य्येण सर्वे इत्येतस्य पुंलिङ्गतां श्रूयमाणविभक्तिताञ्च दर्शयितु मुपन्यासः । अन्यथा सर्वे इत्येतावत्युच्यमाने स्त्रीलिङ्गस्य लुप्तसम्बुद्धे रयं प्रयोग इति कस्यचिद् भ्रान्तिः स्यात् । सर्वस्मै इति सर्व्वनाम्नःस्मै ( ७।१।१४ ) । सर्वस्मात् । सर्वस्मिन् इति । ङसिङ्योः ( ७।१।१५ ) स्मात्स्मिनाविति । सर्वक इति । अव्ययसर्वनाम्नामकच् ( ५।३।७१ ) प्राक् टेरिति । उभशब्दोऽयं द्विवचनटाब्विषय एव प्रयुज्यते । उभौ । उभे इति । नच तत्र किञ्चित् सर्वनामकार्य्यं सम्भवति । स्मैप्रभृतीनां यथायोग मेकवचनबहुवचनविषयत्वात् । अकजपि नैवं सर्वनामसंज्ञां प्रयोजयति । विशेषाभावात् । नहि तस्मादकचि कप्रत्यये वा विहिते रूपभेदः स्वरभेदो वा भवति । तत् किमर्थ स्तस्येह पाठ इत्याह उभशब्दस्येत्यादि । सर्वनाम्न ( २।३।२७ ) स्तृतीया चेत्यनेन उभाभ्यां हेतुभ्या मुभयोर्हेत्वोरिति तृतीयाषष्ठ्यौ यथा स्यातामितेत्र्यवमर्थ स्तस्येह पाठ इति दर्शयति । डतरडतम इति । किंयत्तदो ( ६।३।९२ ) निर्धारणे द्वयोरेकस्य डतरच् । वा ( ५।३।९३ ) बहूनां जातिपरिप्रश्ने डतमजित्येतयोः प्रत्यययो र्ग्रहणम् । वक्ष्यमाणेनेति प्रथमचरमेत्यादिना ( १।१।३३ ) । कथमित्यादि । समशब्दस्य सर्वनामसंज्ञायां सत्यामामि सर्वनाम्नः ( ७।१।५२ ) सुड़िति सुटि कृते समेषामिति भवितव्यम् । तत् कथं समानामिति भवति ? ततश्च समस्येकवचनस्य स्मिन्भावे कृते समस्मिन्निति भवितव्यम् । तत् कथं समे देशे यजेतेति प्रयोग उपपद्यत इत्यभिप्रायः । न सर्वत्रेति । न सर्वत्रार्थे वर्त्तमानस्येत्यर्थः । एतच्च सर्व्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञाकरणाल्लभ्यते । स एव हि समशब्दः सर्वेषां नाम भवति यः सर्वशब्दपर्य्यायः । नचानयोः प्रयोगयोः समशब्दः सर्वपर्य्यायः । तथाहि समानामित्यत्र समशब्द स्तुल्यार्थे वर्त्तते । समे देश इत्यत्राप्यविषमे निम्नोन्नतादिरहिते । अतएव चान्वर्थसंज्ञाकरणात् संज्ञोपसर्जनीभूतानां संज्ञा न भवति । यथा सर्वो नाम कश्चित् । तस्मै सर्वाय देहि । अतिक्रान्तः

सर्वमतिसर्वः । तस्मा अतिसर्वाय देहीति । नह्येवंप्रकाराणि सर्व्वेषां नामानि । विशिष्टवस्तुविषयत्वात् । णत्वं तु सर्वनामानीत्यत्र पूर्वपदात् संज्ञायामिति न भवत्यतएव निपातनात् ।

## २८ । विभाषा दिक्समासे बहुव्रीहौ ।

दिगुपदिष्ट इति । दिशा मुपदिष्ट उक्ता दिगुपदिष्टः । स पुनर्दिङ् नामान्यन्तराल इति यः ( २।२।२६ ) समास स्तस्यात्र ग्रहणम् । स पुन र्लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । प्रतिपदोक्तसमासाश्रयणं तु या पूर्वा दिक् सोत्तरा ऽस्योन्मुग्धस्य । अस्मै पूर्वोत्तराय देहीत्यत्र मा भूत् । उत्तर-पूर्वस्मा इति । उत्तरस्याश्च पूर्वस्याश्च दिशो यदन्तरालमिति पूर्वोक्तेन सूत्रेण बहुव्रीहिः । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भाव इति पूर्वपदस्य पुंवद्भावः । चतुर्थ्येकवचनम् । सर्वनाम्नः ( ७।३।११४ ) स्याड्ढ्रस्वश्चेति स्याट् । ह्रस्वत्वञ्च । उत्तरपूर्वाया इति । यदा सर्वनामसंज्ञा नास्ति तदा याडाप ( ७।३।११३ ) इति याट् । आटश्चेति (६।१।९०) वृद्धिः । समासग्रहणं किमिति ? यावता न बहुव्रीहिः समासत्वं व्यभिचरत्येव ततोऽ पार्थकं विशेषण मित्यभिप्रायः । समास एव यो बहुव्रीहि रिति । यस्यातिदेशेन बहुव्रीहिवद्भावो न विधीयते स वेदितव्यः समास एव बहुव्रीहिरिति । स पुन र्यः समासाधिकारे विहितः । बहुव्रीहिवद्भावेनेति । यस्यातिदेशिकं बहुव्रीहित्वं स बहुव्रोहिवद्भावेन बहु-व्रीहिः । दक्षिणदक्षिणस्या इति । एकं ( ८।१।९ ) बहुव्रीहिवदित्यतो बहु-व्रीहिवदिति वर्त्तमान आबाधे चेति ( ८।१।१० ) दक्षिणाशब्दस्य द्विर्वचनम् । बहुव्रीहिवद्भावाच्च सुब्लुक् । अयं बहुव्रीहिवद्भावेन बहुव्रीहि रिति विभाषा न प्रवर्त्तते । योऽपि न बहुव्रीहाविति (१।१।२९) वक्ष्यमाणः प्रतिषेधः सोऽपीह न भवति । तत्रापि समासाधिकारात् । दक्षिणोत्तरपूर्वाणामिति । अत्र द्वन्द्वे ( १।१।३१ ) चेति नित्य एव प्रतिषेधो भवति । तेन पक्षे सुण् न भवति । यद्येवं सर्वनाम्नो वृत्तिमात्र इति पुंवद्भावोऽत्र न स्यात् । नैतदस्ति । अवयवस्या-द्वन्द्वत्वात् । ननु विनापि बहुव्रीहिग्रहणेनात्र द्वन्द्वे (१।१।३१) चेति प्रतिषेधेन भाव्यमेव । तदपार्थकं बहुव्रीहिग्रहणम् । नैतदस्ति । यो हि दिग्द्वन्द्वो न

भवति स तस्य विषयः स्यात् । दिग्द्वन्द्वे त्वसति बहुव्रीहिग्रहण एवैव विभाषा स्यात् । तस्माद्बहुव्रीहिग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । कस्मान्न भवति ? दक्षिणोत्तरपूर्वाणा मित्यत्र प्रतिपदोक्तसमासस्येह ग्रहणात् । एवं तर्ह्यु-त्तरार्थं बहुव्रीहिग्रहणम् । न बहुव्रीहा (१।१।२९) वित्यत्रास्य प्रयोजनं वक्ष्यति । वृत्तिकारस्य त्वेषोऽभिप्रायः । उत्तरार्थ मवश्यकर्त्तव्यम् । तदुत्तरार्थं कृतमिहापि स्पष्टार्थं भविष्यतीति ।

## २९ । न बहुव्रीहौ ।

सर्वनामसंज्ञायामित्यादि । कथं पुनरेतदवगतम् ? अभ्युपगतस्तदन्त-विधिरिति । अतएव प्रतिषेधात् । अन्यथा हि निष्फलः प्रतिषेधः स्यात् । तदन्तविध्यभ्युपगमे हि परमसर्वस्मा उत्तमसर्वस्मा इत्यत्रापि संज्ञा यथा स्यात् । इह चेत्यादि । अस्य प्रतिषेध आरभ्यत इत्यनेन सम्बन्धः । त्वं पिताऽस्य । अहं पिता ऽस्येति विगृह्य बहुव्रीहौ कृते ऽज्ञाताद्यर्थविवक्षायाम् असति प्रतिषेधेऽव्ययसर्वनाम्नामकच् प्राक् (५।३।७१) टेरित्यत्राकच् प्रसज्येत । ततश्च त्वकत्पितृको मकत्पितृक इत्यनिष्टं रूपं स्यात् । तस्मादकज् माभूदिति प्रतिषेधआरभ्यते । तेन प्रागिवात् क इति (५।३।७०) क एव भवति । तत्र परतः प्रत्ययोत्तरपदयोश्चेति (७।२।९८) मपर्य्यन्तयोर्युष्मदस्मदोस्त्वमयोः कृतयो र्नद्यृतश्चेति (५।४।१५३) समासान्ते कपि च त्वत्कपितृको मत्कपितृक इति सिध्यति । ननु चान्वर्थसंज्ञाकरणादेव संज्ञानिरासे कृते ऽकज् न भविष्यति । नह्यत्र सर्वार्थता सम्भवति । विशेषविषयत्वात् । नैतदस्ति । समुदायो हि विशेषे वर्त्तते । पूर्वपदं तु सर्वार्थताया अनपेत-मेव । भवत्वनयोरनन्तरयोरुदाहरणयोरेतत्सूत्रविषयता । प्रियविश्वायेत्या-दिस्तु नोपपद्यते । नहि प्रियविश्वादयः शब्दाः सर्वेषां नामानि । नापि तदवयवभूतानां विश्वादिशब्दानां किञ्चित् सर्वनामकार्य्यमुपपद्यते । स्मैप्रभृतीनामङ्गकार्य्यत्वात् । विश्वादिशब्दानाञ्चानङ्गत्वात् । एवं मन्यते । त्वत्कपितृको मत्कपितृक इत्यत्राकज् माभूदिति । एतदर्थं तावदेत-दारब्धव्यम् । प्रियविश्वायेत्येवमादावपि विस्पष्टार्थं भविष्यतीति । अथ

बहुव्रीहाविति वर्त्तमाने किमर्थं पुनर्बहुव्रीहिग्रहणमित्याह बहुव्रीहावित्यादि। वस्त्रान्तरवसनान्तरा इति। वस्त्रमन्तरं येषां वसनमन्तरं येषामिति बहुव्रीहिं कृत्वा वस्त्रान्तराश्च वसनान्तराश्चेति द्वन्द्वः कृतः। अत्र वर्त्तमानत्वाद् द्वन्द्वस्य द्वन्द्वे (१।१।३१) च विभाषा (१।१।३२) जसीति द्वन्द्वाश्रितो विभाषाप्रतिषेधः स्यात्। न नित्यो बहुव्रीह्याश्रितः। पुनर्बहुव्रीहिग्रहणात्तु भूतपूर्वस्यापि बहुव्रीहेराश्रयणात् तदाश्रयो नित्यः प्रतिषेधो भवति। वसनशब्दश्चात्र वसत्यस्मिन्नित्यधिकरणसाधनो गृहे वर्त्तते। न वस्त्रे। अन्यथा वस्त्रान्तरवसनान्तरशब्दयोः पर्य्यायत्वाद् द्वन्द्वो न स्यात्। तुल्यार्थानाञ्च विरूपाणामेकशेष इत्येकशेषविधानात्।

## ३०। तृतीयासमासे।

ननु च विभाषा दिक्समासे (१।१।२८) इत्यतः समासग्रहणमनुवर्त्तत एव। तत् किमर्थं पुनः समासग्रहणमित्यत आह समास इत्यनुवर्त्तमान इत्यादि। अस्त्येव तृतीयासमासो मुख्यः। यस्मिन् सत्येकपद्यमैकस्वर्य्यमेकविभक्तिकत्वञ्च भवति। अस्ति च गौणः। यस्मिं स्तादर्थ्यादतस्मिन्नपि ताच्छब्द्यं भवति। स पुनस्तृतीयासमासार्थं वाक्यम्। तत्रासति पुनः समासग्रहणे गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्यय इति मुख्य एव प्रतिषेधः स्यात्। नेतरत्र। तस्मात् तत्रापि प्रतिषेधो यथा स्यादित्येवमर्थं पुनः समासग्रहणम्। यदि तर्हि तृतीयासमासार्थेऽपि वाक्ये प्रतिषेधो भवति यावान् कश्चित् तृतीयासमास स्तदर्थे वाक्ये सर्वत्र प्रतिषेधः स्यात्। ततश्च त्वयका कृतम्। मयका कृतमित्यत्राकच् न स्यात्। भवति ह्येतत् कर्तृकरणे (२।१।३२) कृता बहुलमित्यनेन यः समासस्तदर्थं वाक्यम्। तत्र क्तप्रत्यये कृते त्वत्केन कृतम्। मत्केन कृतमिति रूपं स्यादित्यत आह पूर्वसदृशेत्यादि। एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। त्वयका। मयका इति। पूर्ववत् त्वमावादेशौ। सुबन्तादकच्। क्वचित् त्वकया मकया इति पाठः। स त्वयुक्तः। प्रातिपदिकात् त्वकजुत्पत्तौ त्वकया मकयेति भवति। नचात्र प्रातिपदिकादकजुत्पत्तिरिष्यते।

अपितु सुबन्तात् । तथाह्यकज्विधौ वक्ष्यति प्रातिपदिकात् सुप इति च इयमपीहानुवर्त्तते । तत्राभिधानतो व्यवस्था । क्वचित् प्रातिपदिकस्य प्राक् टेः प्रत्ययो भवति । क्वचित् सुबन्तस्य । युष्मकाभिः । अस्मकाभिः । युष्मकासु । अस्मकासु । युवकयोरावकयोरित्यत्र प्रातिपदिकस्य । त्वयका । मयका । त्वयकि । मयकि । इत्यत्र सुबन्तस्येति ।

## ३१ । द्वन्द्वे च ।

## ३२ । विभाषा जसि ।

जसः कार्य्यं प्रतीत्यादि । एतच्च व्यवस्थितविभाषात्वादस्या विभाषाया लभ्यते । अथवा जसीति कार्य्यापेक्षया ऽधारसप्तमीयम् । नतु सर्वाद्यपेक्षया परसप्तमी । तेन जसि यत् कार्य्यं जसाधारं यत् कार्य्यं जसः शीभाव स्तत्र विभाषा भवति । नान्यत्र । किं कारणमेवं व्याख्यायत इत्यत आह अकज् हि न भवतीति । हि शब्दो हेतौ । एवं व्याख्यायमाने सति कतरकतमका इत्यत्राकज् न भवति । पूर्वसूत्रेण संज्ञाप्रतिषेधात् । अन्यथा हि यदि जसि परतः संज्ञा विकल्प्यते तदा पक्षेऽकज् भवेदेव । तथाच तस्य तन्मध्यपातित्वात् तद्ग्रहणेन ग्रहणात् पाक्षिकः शीभावः प्रसज्येत । क-प्रत्यये तु सति तेन व्यवधानादेवैष दोषो न भवति ।

## ३३ । प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।

उभयशब्दस्य तयप्प्रत्ययान्तस्येति । संख्याया अवयवे तयप् ( ५।२।४२ ) त्यभशब्दाद्विहितस्य तयपो यद्यप्युभादुदात्तो ( ५।२।४३ ) नित्यमित्ययजादेशो विधीयते तथापि स्थानिवद्भावात् तद्ग्रहणेन गृह्यत इत्युभयशब्दस्तयप्-प्रत्ययान्तो भवति । तस्य गणपाठान्नित्या संज्ञेति । नत्वनेन योगेन परेणापि पाक्षिकी । एतच्च व्यवस्थितविभाषात्वाल्लभ्यते । काकचो यथायोगं वृत्ति-रिति । तेनोभयनेमशब्दयोः सर्वादित्वान्नित्यमकचो वृत्तिः । प्रथमादिभ्य-स्तु कप्रत्ययस्य इत्येष यथायोगार्थः ।

३४। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्।

असंज्ञायामिति। संज्ञायामसत्यां पूर्वादयश्चेत् संज्ञारूपा न भवन्तीत्यर्थः। स्वाभिधेयापेक्ष इत्यादि। अवधिर्मर्य्यादा। तस्य नियमोऽवश्यम्भावः। अवधिभावादभ्रंशः। किं विशिष्टोऽवधिनियमः? स्वाभिधेयापेक्षः। पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोऽर्थः। तमपेक्षते यः सः स्वाभिधेयापेक्षः। दिगादीनां ह्यर्थानां पूर्वादिशब्दाभिधेयानां यत् पूर्वादित्वं तन्नियोगतः कञ्चनावधिमपेक्ष्य सम्पद्यते। नत्ववधिनिरपेक्षम्। यथा पूर्वदेशस्य यत् पूर्वत्वं तत्परं देशमपेक्ष्य भवति। परस्यापि यत् परत्वं तत् पूर्वदेशम्। तस्मात् पूर्वादिशब्दवाच्यापेक्षेणावश्यं केनचिदवधिना भाव्यम्। तत्र तस्यैवावधेः यः पूर्वादिशब्दार्थापेक्षोऽवधिभाव ऐकान्तिकः स नियमो व्यवस्था। तस्यां गम्यमानायां पूर्वादीनां शब्दानां स्वाभिधेय एव वर्त्तमानानामियं संज्ञा भवति। न तु वाच्यायाम्। यो हि पूर्वादिशब्दाभिधेयादन्यस्यार्थस्यावधिभूतस्य नियमः स कथं पूर्वादिशब्दवाच्यो भविष्यति? पूर्वे पूर्वा इति। अत्र परस्मादेवावधेरिति गम्यते। परे परा इति। पूर्वस्मादेवावधेरिति गम्यते। प्रवीणा इति। कुशला इत्यर्थः। अत्र प्रावीण्यमात्रेण निमित्तेनावधिनिरपेक्ष एव दक्षिणशब्दो वर्त्तत इति व्यवस्था न गम्यते। सत्यामेवेत्यादि। जम्बूद्वीपं सुमेरुं वावधिमपेक्ष्य तत्रोत्तरशब्दो वर्त्तत इति विद्यत एव व्यवस्था।

३५। स्वमज्ञातिधनाख्यायाम्।

अत्रापि नित्या संज्ञा प्राप्तेति। गणपाठात्। एवमुत्तरत्रापि वेदितव्यम्। नचेदित्यादिना ज्ञातिधनाख्याशब्दस्यार्थमाचष्टे। यत्र च शब्दान्तरनिरपेक्षः स्वशब्दो ज्ञातिधने स्वरूपेणाचष्टे तत्रासौ संज्ञारूपेण तयोर्वर्त्तते। आत्मीया इत्यर्थ इति। कथं पुनरयमर्थः? यावता स्वे पुत्रा इति ज्ञात्यर्थो गम्यते। स्वे गाव इति धनार्थः। नैतदस्ति। पुत्रगोशब्दसान्निध्यादेतदुभयं गम्यते। स्वशब्देनात्मीयत्वमात्रं गम्यते। स्वा ज्ञातय इति। प्रभूता स्वा इति चोभयत्र शब्दान्तरमनपेक्ष्य ज्ञातिधने स्वरूपेणैव स्वशब्देनाभिधीयेते

यद्येवं ज्ञातय इत्यनुप्रयोगो नोपपद्यते । पर्य्यायत्वात् । यथा वृक्षशब्द-प्रयोगे सति तरुशब्दस्यानुप्रयोगो विरुध्यते । नैष दोषः । पर्य्यायशब्दस्य हि यत्रानेकार्थो भवति संदिग्धार्थो वा तत्र तदर्थस्यैव व्यक्तीकरणार्थः पर्य्याया-न्तरस्यानुप्रयोगो न विरुध्यते । यथा मेघाद्यनेकार्थवृत्तेर्वराहकशब्दस्य (A) प्रयोगे शूकरशब्दस्य प्रयोगः । तथा सन्दिग्धार्थस्य पिकशब्दस्य प्रयोगे कोकिल-शब्दस्य । स्वशब्दश्चायमनेकार्थः । तत्रासत्यनुप्रयोगे किंविषयोऽयं प्रयुक्त इति सन्देहः स्यात् । अतस्तन्निरासार्थमुपपद्यते ज्ञातिशब्दस्यानुप्रयोगः ।

## ३६ । अन्तरं वहिर्योगोपसंव्यानयोः ।

वहिर्योग इति । वहिरित्यनेनानावृतदेश उच्यते । तेन योगो वहिर्योगः । स चानावृतस्य वाह्यस्य वस्तुनो भवति । उपसंव्याने चेति । उपसंवीयते परि-धीयते यत् तदुपसंव्यानम् । कृत्यल्युटो (३।३।११३) वहुल मिति कर्मणि ल्युट् । अथवा संवीयते पिधीयतेऽनेनेति संव्यानम् । करणाधिकरणयोश्चेति (३।३।११७) ल्युट् । संव्यानस्य समीप मुपसंव्यानम् । अवहिर्योगे सामर्थ्यात् तदेव वेदि-तव्यम् । नगरवाह्या इति । अनेन वहिर्योगं दर्शयति । परिधानीय मुच्यत इति । उपसंव्यानस्येदमुदाहरणमुपन्यस्तम् । वस्त्रान्तरावृतवस्तु वस्त्वन्तरेणापिहित-मुच्यते । अविशेषाभिधानेऽपि यद् वस्त्रान्तरेणावृतं सामर्थ्यात् तदेवोपसंव्यान मुच्यते । नेतरत् । न प्रावरणीयमिति । प्राव्रियतेऽपिधीयतेऽनेनेति प्रावरणीयम् । तन्नाभिधीयते । तदभिधाने तस्य वहिर्योगत्वात् वहिर्योग एवेदमुदाहरणं स्यादित्यभिप्रायः । अन्तरे तापसः प्रतिवसतीति । अत्र संज्ञाया अभावात् सप्तम्याः स्मिन्नादेशो न भवति । ननु च जसीत्यनुवर्त्तते । तत् कस्मात् सप्तम्यन्तं प्रत्युदाहृत मित्यत आह गणसूत्रस्य चेत्यादि । अपुरीति वक्तव्यमिति । अनन्तरं गणसूत्रस्य चेत्यभिधानाद् गणसूत्रमेवैतद् वक्तव्य मिति गम्यते । यद्यपि गणसूत्रेऽन्तरशब्दः पठ्यते तथापि प्रातिपादिकग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणमिति प्राकाराद्वहिर्वर्त्तिनी या पू स्तस्या अपि वहिर्योगोऽस्तीति तत्र वर्त्तमानस्य टावन्तस्याप्यन्तराशब्दस्य सर्वनामसंज्ञा प्राप्नोति ।

(A) वराहको वलाहको वा । रलयोरभेदात् । वलाहको गिरौ मेघे दैत्यनागविशेषयो रिति विश्वः ।

तेनापुरीति वक्तव्यम्। तेनाक्षरायामित्यत्र स्वाण् न भवति। विभाषा-प्रकरण इत्यादि। उपसंख्यानशब्दस्येह प्रतिपादनमर्थः। अस्मिन् विभाषा-प्रकरणे तीयप्रत्ययान्तस्य सर्वनामसंज्ञायाः प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। विभाषा जसीत्यत्र विभाषेति योगविभागः क्रियते। तत्र च-सर्वादीनि द्वन्द्व इति च निवृत्तम्। तेन तीयस्य विभाषा सर्वनाम-संज्ञा भविष्यतीति। नचैवं सत्यतिप्रसङ्गः। योगविभागादिष्टसिद्धेः। नापि विभाषा द्वितीयातृतीयाभ्यामित्यस्य वैयर्थ्यापत्तिः। प्रपञ्चार्थत्वात्। ततो जसीति द्वितीयो योगः। अत्र विभाषाग्रहणं सर्वादिग्रहणं द्वन्द्व-ग्रहणञ्चानुवर्त्तते॥

## ३७। स्वरादिनिपातमव्ययम्।

स्वरादिषु स्वस्तिशब्दोऽस्तिशब्दश्च पठ्यते। तत्र स्वस्तिशब्दस्य किमर्थः पाठः? यावतास्तिशब्दपाठादेव तदन्तविधिना स्वस्तिशब्दस्यापि भविष्यति। ग्रहणवता प्रातिपदिकेनेति तदन्तविधिप्रतिषेधान्न सिध्यतीत्येतत् तु नाशङ्कनीयम्। अव्ययमिति महती संज्ञा क्रियतेऽन्वर्थसंज्ञा यथा विज्ञायेत। लिङ्गकारक-संख्याविशेषानुपादान्न व्येति विविधत्वं न गच्छतीत्यव्ययम्। तस्याश्चोपसर्जन-प्रतिषेध स्तदन्तविधिश्च प्रयोजनम्। तस्मादन्वर्थसंज्ञाकरणादेव तदन्तस्यापि भविष्यति। स्वस्तिशब्दोऽपि न व्येत्येव। सत्यमेतत्। एवं त्वन्वर्थसंज्ञा-करणाल्लब्ध स्तदन्तविधिरनेनोपदर्शितः। विस्पष्टार्थ मुदाहरणमेतत्। तसिलादिस्तद्धित एधाच्पर्य्यन्त इति। पञ्चम्यास्तसिलित्यतः (५।३।७) प्रभृत्येधाच्चे (५।३।४६) त्येतत्पर्य्यन्तः। शस्तसी इति। बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् (५।४।४२)। प्रतियोगे (५।४।४४) पञ्चम्या स्तसिः। क्त्वसुजिति। संख्यायाः (५।४।१७) क्रियाभ्यावृत्तिगणने कृत्वसुजिति। द्वित्रिचतुर्भ्यः (५।४।१८) सुच्। आस्थालाविति (A)। इण आसिरि-त्युणादिसूत्रेण (४।६६१) इणो धातोरासिप्रत्ययः। अया इत्युदाहरणम्।

---

(A) In the printed काशिका, आम्थालौ occurs. But the correct reading आस् थालौ is given in the printed पदमञ्जरी and शब्दकौस्तुभ।

प्रश्नपूर्वविश्लेमा ( ५।३।१११ ) त्याल्छन्दसीति । चुरर्थाश्चेति । अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः ( ५।४।५० ) । विभाषा साति ( ५।४।५२ ) कार्त्स्न्ये । देये त्रा च (५।४।५५) । अमिति । अमु च ( ५।४।१२ ) च्छन्दसि । आमिति ( ५।४।११ ) । किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । निपाता वक्ष्यन्त इति । अथ कस्मात् ते स्वरादिषु न पठ्यन्ते । कः पुनरेवं गुणो भवति ? अव्ययसंज्ञायां निपातग्रहणं न कर्त्तव्यमिति । नैतदस्ति । चादीनामसत्त्ववचनानामेवाव्ययसंज्ञेष्यते । स्वरादीनान्तु सत्ववचनानामसत्त्ववचनानां च । तथाहि क्रियायोगो दृश्यते । स्वः पश्यन्ति । स्वरारोहन्तीति । तत्र यदि चादयो निपाताः पठेरं स्तेषां सत्त्वेऽपि वर्त्तमानानामव्ययसंज्ञा प्रसजेरन । अव्ययमित्यन्वर्थसंज्ञेयमिति दर्शयितुमाह सदृशमिति । त्रिषु लिङ्गेषु स्त्रीपुंनपुंसकेषु सदृशं तुल्यम् । लिङ्गविशेषापरिग्रहाल्लिङ्गसामान्योपादानाच्च । सर्वासु च विभक्तिष्विति । विभक्तिनिमित्तत्वाद् विभक्तिः । विभज्यते वा प्रातिपदिकार्थ आभिरिति कर्मादीनि कारकाणि शक्तिरूपाणि विभक्तिशब्देनोच्यन्ते । वचनेषु चेति । वचनान्येकवचनद्विवचनबहुवचनानि । इहाभिधेयेऽभिधानोपचाराद् एकादिका संख्या गृह्यते । तदेवं लिङ्गकारकसंख्याविशेषस्यानुपादानात् सामान्यरूपोपादानाच्च विभक्तिषु वचनेषु च सदृशं भवति । एवं यस्मान्न व्येति लिङ्गादिसंख्याविशेषानुपादानाद् विविधं नानात्वं न गच्छति तस्मादव्ययमित्यन्वर्थता प्रतिपादिता भवति । प्रयोजनं पुनरुपसर्जनप्रतिषेध स्तदन्तविधिश्चेत्युक्तम् । तत्रोपसर्जनप्रतिषेधः । अत्युच्चैः । अत्युच्चैसौ । अत्युच्चैसः । नह्यत्र यथोपदर्शितार्थानुगमः सम्भवति । यत्र तु सम्भवति तत्र तदन्तस्याव्ययसंज्ञा भवत्येव । यथा परमस्वः । उत्तमस्वरिति । अत्र हि स्वर्शब्दस्य प्राधान्याल्लिङ्गादिविशेषस्यासम्भवः । पूर्वत्र तूच्चैःशब्दस्य विपर्य्ययाद् विपर्य्ययः ।

## ३८ । तद्धितश्चासर्वविभक्तिः ।

प्रत्ययग्रहणे यस्मात् स विहित स्तदादे स्तदन्तस्य ग्रहणं भवतीति तद्धितान्तस्य संज्ञा विज्ञायत इत्याह तद्धितान्तः शब्द इति । यस्मान्न सर्वेत्यादि । अत्रावयवकार्त्स्न्यवृत्तिः सर्व्वशब्दः । सर्वा निरवशेषा येषां त्रयाणां

वचनानां विभक्तिरिति संज्ञा कृता। तानि सर्वाणि यतो नोत्पद्यन्त इत्यर्थः। ततो यत इति। तद्यच्छब्दात् पञ्चमीसमर्थात् पञ्चम्या स्तसिलिति (५।३।७) तसिल्। सुपो धातुप्रातिपदिकयोरिति (२।४।७१) सुब्लुक्। प्राग्दिशो विभक्तिरिति (५।३।१) विभक्तित्वात् त्यदाद्यत्त्वम् (७।२।१०२)। अतो गुणे (६।१।९७) पररूपत्वम्। तत्र यत्रेति। सप्तम्यास्त्रलिति (५।३।१०) त्रल्। तदा यदा सर्वदेति। सर्वैकान्य (५।३।१५) किंयत्तदः काले दा। सर्व्वे एते ततः प्रभृतयः विभक्त्यर्थप्रधानाः। स च विभक्त्यर्थः प्रातिपदिकार्थः सम्पन्न इति प्रातिपदिकार्थे प्रथमैव भवति। सापि संख्याविशेषाभावान्न सर्वा। किं तर्हि? एकवचनमेव। तस्योत्सर्गत्वात्। तथाचोक्तम्। एकवचन मुत्सर्गः करिष्यत इति। तस्याव्ययादाप् सुपो (२।४।८२) लुक्। एक इति। अत्रासर्वविभक्तिकत्वमस्ति। एकत्वे द्वित्वायोगात्। अतद्धितत्वान्न भवति। औपगव इति। अत्र तद्धितान्तत्वमस्ति। तद्धितान्तस्य सर्वविभक्तियोगान्न भवति।

३९। कृन्मेजन्तः।

स्वादुंकारं भुङ्क्ते इति। स्वादुमि (३।४।२६) णमुल्। स्वादुमीत्यत एव निर्देशादुपपदस्य मकारान्तत्वं निपात्यते। स्वादुमिति चार्थग्रहणम्। तेन सम्पन्नङ्कारमित्यादौ सम्पन्नादावप्युपपदे णमुल् भवति। वक्षे इति। वच परिभाषणे। ब्रुवो (२।४।५३) वचिरिति ब्रूञादेशो वा। चोः कुरिति (८।२।३०) कुत्वम्। अन्तग्रहणमित्यादि। औपदेशिकप्रतिपत्त्यर्थमिति। नित्ययोगे बहुव्रीहिविज्ञानादौपदेशिकप्रतिपत्तिः। उपदेशे भवमौपदेशिकम्। तस्य प्रतिपत्ति र्ज्ञानम् प्रयोजनं यस्य तत् तथा। एवं मन्यते। विनाप्यन्तग्रहणेन येन विधिस्तदन्तस्येति सामर्थ्याद्वा कृत स्तदन्तविधौ सिद्धे यदन्तग्रहणं क्रियते तस्यैतत् प्रयोजनम्। नियोगतो यस्यैजन्तत्वमुपदेशावस्थायामेव भवति तस्यैव प्रतीतिर्यथा स्यादिति। आधय इति। दधाते राङ् पूर्वादुपसर्गे घोः (३।३।९२) किरिति किः। आतो लोप (६।४।६४) इटि चेत्याकारलोपः। चतुर्थ्येकवचने घेर्ङितीति (७।३।१११) गुणः। चिकीर्षव इति। करोतेः

सन् । अञ्झनगमां (६।४।१६) सनीति दीर्घः । ऋत (७।१।१००) इद्धातोरितीत्त्वम् । रपरत्वम् । द्विर्वचनमभ्यासकार्य्यम् । हलि (८।२।७७) चेति दीर्घः । सनाशंसभिच्च (३।२।१६८) उरित्युप्रत्ययः । अतो (६।४।४८) लोपः । शेषं पूर्ववत् । कुम्भकारेभ्य इति । कर्मण्यण् (३।२।१) । उपपदमतिङिति (२।२।१९) समासः । बहुवचने (७।३।१०३) झल्येदित्येत्त्वम् । ननुच लक्षणप्रतिपदोक्तपरिभाषयैव वाऽसिद्धं वहिरङ्गमन्तरङ्ग इत्येव वात्र संज्ञा न भविष्यति । विभक्तिप्रत्ययं ह्याश्रित्य विधीयमानत्वाद् गुणादिकार्य्यं वहिरङ्गम् । अव्ययसंज्ञा त्वन्तरङ्गम् । वाह्यस्य निमित्तस्यानाश्रयणात् । सत्यमेतत् । एवं त्वर्थप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात् । अतस्तत्परिहारार्थमन्तग्रहणं कृतम् ।

## ४० । क्त्वातोसुन्कसुनः ।

कृत्वा हृत्वेति । समानकर्त्तृकयोः पूर्वकाल (३।४।२१) इति क्त्वा । उदेतोरिति । इण् गतौ । सार्वधातुकेति (७।३।८४) गुणः । अपाकर्त्तोरिति कृञः । विसृप इति गम्लृ सृप्लृ गतौ । आतृद इति । तृदिर् हिंसानादरयोः ।

## ४१ । अव्ययीभावश्च ।

उपाग्नीति । अव्ययं विभक्तीत्यादिना (२।१।६) सामीप्ये ऽव्ययीभावः । अव्ययादिति (२।४।८२) लुक् । अग्नेः समीपे उपाग्नीति । उपाग्नि मुखं यस्येत्यव्ययीभावगर्भो बहुव्रीहिः । तत्र मुखं स्वाङ्ग (६।२।१६७) मित्युत्तरपदान्तोदात्तत्वे प्राप्ते नाव्ययेति (६।२।१६८) प्रतिषिद्धम् । तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वर इति । बहुव्रीहौ प्रकृत्येत्यादिना (६।२।१) तत् पुनरन्तोदात्तत्वम् । उपाग्निशब्दस्य समासस्वरेणान्तोदात्तत्वात् । उपपयःकार इति । कर्मण्यण् (३।२।१) । एवमुपपयःकाम इत्यत्रापि । उपपयः कामो यस्येति बहुव्रीहिर्वायम् । काम्यत इति कामः । अकर्त्तरि च कारके (३।३।१९) संज्ञायामिति कर्मण्यपि घञ् । अनव्ययस्येति (८।३।४६) सत्वे प्रतिषिद्धे कुप्वोः ≍क ≍पौ (८।३।३७) चेति जिह्वामूलीयो भवति विसर्जनीयो वा । अत्र मुखस्वरोपचारौ निर्वर्त्त्यमानौ प्रयोजनं ननु

विधीयमानौ। लुक् पुनर्विधीयमानः। ननु चाव्ययनिबन्धन मकजादिकार्य्य मस्त्येव। तत् कुतोऽयं कार्य्यनियमो लभ्यत इत्याह सर्व्वमित्यादि। इदमिति तद्धितश्चासर्वविभक्ति ( १।१।३८ ) रित्यादिकम्। किञ्चित् स्वरूपेणैव पठ्यते। कस्यचित् पर्य्यायान्तरेणार्थः। स त्वभिधेयधर्मेणोपचारादित्युच्यते। तत्र कृन्मकारसन्ध्यक्षरान्त इति कृन्मेजन्त इत्यस्यार्थः पठ्यते। क्त्वातोसुन्कसुनो-ऽव्ययीभावश्चेति स्वरूपेणैव। तसिलादि स्तद्धित एधाच्पर्य्यन्त इति यावत्। च्व्यर्थाश्चेति। आसिमौणादिकं वर्जयित्वा। तद्धितश्चासर्वविभक्ति रित्यस्यार्थः। अनित्यत्वज्ञापनार्थं मिति। प्रकृतत्वात् संज्ञाया इति लभ्यते। तेनाकजादौ कर्त्तव्ये संज्ञा न भवतीति। अज्ञाताद्यर्थविवक्षायामुपाग्निकमित्यत्राकज् न भवति। क एव तु भवति। इह च उपकुम्भ मात्मानं मन्यत उप-कुम्भम्मन्यः। आत्ममाने खश्चेति ( ३।२।८३ ) खशि कृते खित्यनव्ययस्ये ( ६।३।६६ ) त्यनुवर्त्तमाने ऽरुर्द्विषदजन्तस्य (६।३।६७) मुमिति मुमः प्रतिषेधो न भवति। इह चेत्यादिनाऽव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध (२।३।६९ वा) इति यद्वक्ष्यति तस्यात्रावकाशतां दर्शयति। सूर्य्यस्येत्यत्र कर्त्तृकर्मणोः कृतीति ( २।३।६५ ) षष्ठी।

## ४२। शि सर्वनामस्थानम्।

कुण्डानीत्यादि। जश्शसोः ( ७।१।२० ) शिरिति शिः। तस्य सर्व-नामस्थानत्वे सति नपुंसकस्य झलच ( ७।१।७२ ) इति नुम् भवति। सर्वनामस्थाने ( ६।४।८ ) चासम्बुद्धाविति दीर्घत्वञ्च। सर्वनामस्थानमिति। पूर्वाचार्य्यैरेवेयं प्रयोजनमन्तरेणापि महती संज्ञा प्रणीता। तस्या इह समाश्रयणं यत् तत् तत्कृतस्य शब्दानुशासनस्य दोषवत्त्वसूचनार्थम्। तत् पुनः स्वशास्त्रस्य पुनरुक्ततादोषपरिहारार्थम्। यदि हि तद्दोषवद्भवत्येवमस्य प्रणयनं युज्यते। नान्यथा।

## ४३। सुड़नपुंसकस्य।

सुड़िति प्रत्याहारग्रहणम्। सुशब्दादारभ्य आ औटष्टकारात्। तत्र पञ्चैव वचनान्यन्तर्भवन्तीत्याह सुड़िति पञ्च वचनानीत्यादि। नपुंसकादन्य-

त्वेत्यादि । अनेनानपुंसकशब्दस्य पर्य्युदासतां दर्शयति । प्रसज्यप्रतिषेधे हि प्रतिषेधप्रधानमिदं वाक्यं स्यात् । नपुंसकस्य न भवतीति । ततश्च यावती काचित् सुटः सर्वनामस्थानसंज्ञाप्राप्ति स्तस्याः सर्वस्याः प्रतिषेधः स्यात् । एवं हि कुण्डानि तिष्ठन्तीत्यत्र पूर्वेणापि संज्ञा न स्यात् । तस्यास्तु शसः शिरादेशोऽवकाशः । यद्यप्यनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्येतत् समाश्रयेण प्रसज्यप्रतिषेधेऽप्येष दोषः शक्यते परिहर्त्तुं तथापि प्रतिपत्ति-गौरवदोषः स्यात् । तथाहि विधिप्रतिषेधयो र्विरोधादेकेन वाक्येन तावच्छक्यो न विधातु मिति वाक्यभेदः कर्त्तव्यः । सुट् सर्व्वनामस्थान-संज्ञो भवति । नपुंसकस्य च न भवतीति । ततश्चासम्बद्धं प्रतिषेधवचन-मिति पूर्व्वस्या अपि प्राप्ते रयं प्रतिषेधः सम्भाव्येत । तत स्तत्परिहारेणा-भीष्टार्थप्रतिपत्तौ साध्यायां नियतभावी गौरवदोषः प्रसज्येत । तस्मात् सुखावबोधार्थं पर्य्युदास एवाश्रितः । नपुंसके न विधि रिति । स्त्री पुंससम्बन्धिनः सुट उपादानात् । न प्रतिषेध इति । विधिप्रधानत्वात् पर्य्युदा-सस्य । एतेन नपुंसकेऽस्य योगस्याव्यापारं दर्शयति । तेनेत्यादि । यत एवं नपुंसके नास्य विधौ प्रतिषेधे वा व्यापार स्तेन जसो यः शिरादेश स्तस्य तेन पूर्व्वयोगेन संज्ञा भवत्येव । अप्रतिषिद्धत्वात् । राजेति । पूर्ववद्दीर्घः । हल् ( ६।१।६८ ) ड्यादिलोपः । सामनी वेमनी इति । नपुंसकाच्चेति ( ७।१।१९ ) औङः शीभावः । तत्र संज्ञाया अभावाद्दीर्घत्वं न भवति ।

## ४४ । नवेति विभाषा ।

नवेति शब्दोऽयमेको निपातोऽप्यस्ति प्रतिषेधवाची । यथा नवा वक्तव्य मुक्तार्थत्वादित्यादौ भाष्यवाक्ये । तस्येह यदि ग्रहणं स्याद् विभाषा दिक्-समासे ( १।१।२८ ) बहुव्रीहावित्युक्त्वा न बहुव्रीहावित्यत्र ( १।१।२९ ) तु पुनः प्रतिषेधोपादानमनर्थकं स्यात् । तस्मान्न निपातसमुदायोऽय मिति दर्शयन्नाह नेति प्रतिषेध इत्यादि । ननु चान्यत्र संज्ञासंज्ञिसम्बन्धप्रक्रियाया हि शास्त्रे शब्दस्यैव ग्रहणं प्रसिद्धम् । यथा तरप्तमपौ घः ( १।१।२२ ) । दाधा घ्वदाविति ( १।१।२० ) । तथेहापि नवाशब्दयोरेव ग्रहणं युक्तम् । तत् कथं

तदर्थयोः संज्ञा लभ्यत इत्याह इतिकरण इत्यादि। क्रियत इति करणः। इतिश्चासौ करणश्चेतीतिकरणः। सोऽर्थस्य संज्ञिनो निर्देशो यथा स्यादित्येवमर्थः। इतिशब्दो हि विपर्यासकृत्। यथा गवित्यय माहेति गोशब्दात् परतः प्रयुज्यमान इतिशब्द स्समर्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकत्वे व्यवस्थापयति तथा नवाशब्दाभ्यां पर इतिशब्दः प्रयुज्यमान स्तौ स्वरूपपदार्थकत्वात् प्रच्याव्यार्थपदार्थकत्वे व्यवस्थापयति। तस्मादर्थनिर्देशार्थ एवेतिशब्दः कृत इति नवेति यावर्थौ प्रतीयेते प्रतिषेधविकल्पौ तयोरेवेयं संज्ञा भवति। न नवाशब्दयोः। तत्र प्रतिषेधेनेत्यादिना प्रतिषेधविकल्पयोः प्रवृत्तिक्रमं व्यापारभेदञ्च दर्शयति। समीकृत इति। तुल्यता मापादिते विकल्पः प्रवर्त्तत इति पक्षे कार्य्यसम्पादनाय। ननु च वाशब्द एव विकल्पार्थत्वेन लोके प्रसिद्धः। प्रदेशेष्वयमुपादीयमानो विकल्पेन कार्य्यं सम्पादयिष्यति। तथाहि प्राप्ते वा कार्य्ये विकल्पः क्रियतामप्राप्ते वा? यदि प्राप्ते तत्र प्राप्ति रस्त्येवेति प्रतिषेध एव पक्षे कर्त्तव्यः। अथाप्राप्ते तत्र प्राप्तिपूर्वकत्वात् प्रतिषेधस्य तामन्तरेण स न प्रयुज्यत इति विधिरेव पक्षे कर्त्तव्यः। न प्रतिषेधः। एतच्चोभयं वाशब्द एव शक्तः प्रयुज्यमानः संपादयितुम्। तत् किमर्थ मियं संज्ञा क्रियत इत्याह उभयत्र विभाषा प्रयोजयन्तीति। प्रकृतत्वात् संज्ञामिति गम्यते। विभाषा श्वे (६।१।३०) रित्यत्र प्रतिषेधमुखेन वाशब्दस्य प्रवृत्तिः स्यात्। विधिमुखेन वा। तत्र यदि प्रतिषेधमुखेन वा न भवतीत्येवं प्रवृत्तिः प्राप्तिपूर्वकत्वात् प्रतिषेधस्य यत्र प्राप्तिः स एव तस्य विषय इति कित्स्वेव विकल्पेन प्रतिषेधायेदं प्रवर्त्तते। तत्र वचिस्वपीत्यादिना (६।१।१५) श्वयतेः संप्रसारणस्य विहितत्वात्। न पित्सु। तत्र तस्य न केनचिद्विहितत्वात्। एकत्वाच्चास्य वाक्यस्य कित्सु च प्रतिषेधसंपादन एव चरितार्थत्वान् नोपपद्यते पुनर्विधिमुखेन प्रवृत्तिः। अथ विधिमुखेन वा भवतीत्येवं प्रवृत्तिः स्यात्? यत्र प्राप्ति र्नास्ति स एव विधिविषय इति पित्स्वेव विकल्पेन विध्यर्थः प्रवर्त्तते। तच्च चरितार्थत्वान्न कित्सु। संज्ञाविधाने तु न दोषः। तस्यां हि सत्यां प्रतिषेधः प्रवर्त्तमानो योऽसौ संप्रसारणनिमित्तानिमित्तभेदाद्विषय आसीत् तं समीकरोति। सर्वस्याः संप्रसारण-

निमित्ततया तुल्यता मापादयति । तस्मिन् समीकृते किति च पिति च विकल्पः प्रवर्त्तमानो विधिमुखेन सर्वत्र पाक्षिकं कार्य्यं सम्पादयति । संप्रसारणं पक्षे भवतीति । अप्राप्तिस्तु पक्षे स्थितैवेति सर्वमिष्टं सिध्यति । तस्मादुभयत्र प्राप्तावप्राप्तौ विभाषार्थं मियं संज्ञा विधीयते । शुशावेति । टुओश्वि गतिवृद्ध्योः । लिट् । णल् । संप्रसारणे कृते वृद्ध्यावादेशौ । शुशुवतुः । शिश्वियतुरिति । अचि श्नुधात्वित्यादिना ( ६।४।७७ ) इयङुवङौ ।

## ४५ । इग् यणः संप्रसारणम् ।

भूत इति । यत्र शास्त्रान्तरेण विहितो भूतविभक्त्या कार्य्यान्तरार्थ-मनूद्यते यथा संप्रसारणस्य ( ६।३।१३९ ) संप्रसारणाच्चेति ( ६।१।१०८ ) तत्र भूतः । भावी वेति । यत्र भाव्यमानविभक्त्या विधानार्थं निर्दिश्यते यथा ष्यङः संप्रसारणं ( ६।१।१३ ) वसोः ( ६।४।१३१ ) संप्रसारणमिति तत्र भावी । अत्र हि ष्यङ्स्थानिको वसुस्थानिकश्चेङ् नास्ति यस्य संज्ञा विधेया । तस्माद् भाविनः संज्ञित्वं विज्ञायते । संज्ञिनो भावित्वात् संज्ञापि भाविन्येव । यथास्य सूत्रस्य शाटकं वयेति । स इग् यणः स्थाने भवति यस्य भूतस्य संप्रसारण मित्येषा संज्ञा भवतीति । इष्टम् । उप्तमिति । वचिस्वपियजादीनां ( ६।१।१५ ) कितीति संप्रसारणम् । गृहीतमित्यत्रापि ग्रहिज्यावयीत्यादिना ( ६।१।१६ ) संप्रसारणम् । ग्रहोऽलिटि ( ७।२।३७ ) दीर्घः । केचिदित्यादिना ये भाविनीं संज्ञां नाश्रयन्ति तन्मतं दर्शयति । कथं पुनरेकस्य सूत्रस्यैतदर्थद्वयमेकेन वाक्येन लभ्यते ? तन्त्रेणावृत्त्या वा । ननु च संज्ञाविधौ शब्दस्यैव ग्रहणम् प्रसिद्धमितुक्तम् । ततो युक्तं वर्णस्यैव संज्ञित्वम् । अर्थस्य तु कथम् ? यथा नवेति विभाषेति सूत्र इति चेत् ? न युक्तम् । तत्रेतिकरणस्यार्थनिर्देशार्थस्य प्रयोगात् । इह तु स नास्तीत्ययुक्तम् । इहापि तन्त्रस्यावृत्तेर्वा न्यायस्याश्रितत्वाद् युक्तमेव । अस्य च सूत्रार्थद्वयस्य विभक्तिविशेषनिर्देशो लिङ्गम् । यदयं ष्यङः (६।१।१३) संप्रसारणमित्यादौ विधिवाक्ये भाव्यमानविभक्त्या निर्देशं करोति ततो ज्ञायते वाक्यार्थः संज्ञेति । यतश्च संप्रसारणस्येत्यादौ भूतविभक्त्या निर्देशं करोति ततोऽवसीयते वर्ण

इति । तस्माद् युक्तं वाक्यार्थस्यापि संक्षिप्तम् । किंरूपोऽसौ वाक्यार्थ इत्याह स्थान्यादेश इत्यादि । तत्रेत्यादिनानन्तरयोः सूत्रार्थयोर्विषयविभागं दर्शयति । विधौ वर्णो न सम्भवतीति । ष्यङः संप्रसारण (६।१।१३) मित्यादौ विधिवाक्ये प्रथमः सूत्रार्थ उपतिष्ठते। अनुवादे तु संप्रसारणस्येत्यादौ ( ६।३।१३८ ) विहितत्वाद्विधेयस्य प्रथमोऽकिञ्चित्कर इति द्वितीयः। अदुह्वितरामिति । अत्र यणः स्थानिकत्वादिकः संप्रसारणसंज्ञया भावयम्। तस्याञ्च सत्यां हल इति (६।४.२) दीर्घत्वं प्रसज्येतेति चोद्यमपाकर्त्तुमाह संख्यातानुदेशादित्यादि । इह स्थानिनो यणश्चत्वारः। इकोऽप्यादेशाश्चत्वार एव। तेन संख्यातानुदेशेन भवितव्यम् । यथासंख्यमनुदेश (१।३।१०) इत्यादिना । ततश्च यकारस्य स्थाने य इवर्ण स्तस्यैव संप्रसारणसंज्ञा भवति । नचेह यकारस्य स्थान इवर्णः। किं तर्हि लकारस्य । तत् कुत स्तस्याः प्रसङ्गः ? दुह प्रपूरणे । लङ् । कर्मवत् ( ३।१।८७ ) कर्मणा तुल्यक्रिय इत्यतिदेशे कर्मकर्त्तर्य्यात्मनेपद मिट् । न दुहस्नुनमां यक्चिणाविति (३ १८९) यकि प्रतिषिद्धे शप् । तस्यादादित्वाल्लुक् । अदुग्ध इति स्थिते तिङश्चेति ( ५।३।५६ ) तरप् । किमेत्तिङव्ययघादाम्वद्रव्य-प्रकर्षे ( ५।४।११ ) इत्याम् । तरप इहोपन्यासोऽङ्गसंज्ञार्थः ।

## ४६ । आद्यन्तौ टकितौ ।

षष्ठी स्थानेयोगे ( १।१।४९ ) त्यस्याः परिभाषाया अयमपवादः। तेन तत्सम्बन्धादस्यापि परिभाषात्वं विज्ञायते। यदि तर्ह्यादिष्टिद् भवत्यन्तः किद्भवति तदा चरेष्ट ( ३।२।१६ ) आतोऽनुपसर्गे क ( ३।२।३ ) इत्यादयोऽपि प्रत्यया आद्यन्तभूताः स्युः। नच टितः प्रत्ययस्यादित्वे टिड्ढाणञिति ( ४।१।१५ ) टितो विधीयमानो ङीप् निरवकाश इत्याशङ्कनीयम् । यत्र हि प्रकृतेरेव सिद्धं टित्त्वं न प्रत्ययस्य नदट् भषडित्येवमादौ स तस्यावकाशो भविष्यतीति । टितश्च प्रत्ययस्यादित्वे सति कुरुचर इत्येवमादि रूपमेव न सिध्येत् । कितश्चान्त्यत्व आध्योर्विध्योरित्यत्रोपसर्गे ( ३।३।९२ ) घोः किरिति किप्रत्ययस्य प्रकृत्यन्तःपातित्वाद्धातुग्रहणेन ग्रहणे सत्युदात्तयणो ( ६।१।१७४ ) हल् पूर्वादित्येष स्वरो न स्यात् । नोङ्धात्वोरिति ( ६।१।१७५ ) प्रतिषेधा-

दित्यत आह षष्ठीनिर्दिष्टस्येति । ननु च नेह षष्ठी श्रूयते । नापि प्रकृता । तत् कथमेष विशेषो लभ्यते ? वक्ष्यमाणस्य षष्ठीग्रहणस्य सिंहावलोकितन्यायेनोपस्थानात् । नन्वेवमपि गापो ष्टग् ( ३।२।८ ) व्रीह्‍िशाल्यो ( ५।२।२ ) ढगित्येतावाद्यन्तौ प्राप्नुतः । नैष दोषः । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति स्थाने योगत्वस्यैवायमपवादो भविष्यति । न प्रत्ययपरत्वस्य । अपर आह आद्यन्तावयवौ । अवयवश्चावयविनमन्तरेण न सम्भवतीत्यवयविनमाक्षिप्य तौ प्रवर्त्तेते । ततश्चावयवावयविसम्बन्धे यस्यादिरन्तो वावयवो विधीयते सोऽवयवी षष्ठ्या निर्देष्टव्य इति सामर्थ्यादवयवषष्ठ्या निर्दिष्टस्येति विज्ञायते । नचैवं गापो ष्टक् ( ३।२।८ ) । व्रीह्‍िशाल्योर्ढगि ( ५।२।२ ) त्येतौ प्रत्ययावाद्यन्तौ प्राप्नुतः । यस्मादिह सामर्थ्यादवयवसम्बन्धे या षष्ठी तया निर्दिष्टस्येत्येषोऽर्थ उपजातः । नच गापोष्टगित्यादौ ( ३।२।८ ) प्रकृतयोऽवयवषष्ठ्या निर्दिष्टाः । किं तर्हि ? सुपां सुपो भवन्तीति पञ्चम्यर्थे या षष्ठी तयेति । भीषयत इति । ञिभी भये । हेतुमणिच् । भियो हेतुभये ( ७।३।४० ) षुक् । भीस्मोर्हेतुभय ( १।३।६८ ) इत्यात्मनेपदम् ।

## ४७ । मिदचोऽन्त्यात् परः ।

अत्र यद्यच इत्येषा पञ्चमी स्यादन्त्यादित्यनया पञ्चम्या समानाधिकरणत्वं स्यात् । ततो नपुंसकस्य ( ७।१।७२ ) झलच इति नुमीहैवान्त्यादचः परः स्यात् कुण्डानीति । अस्ति ह्यत्र नपुंसकस्यान्त्योऽच् । पयांसीत्यत्र तु न स्यात् । अलोऽन्त्यस्येति ( १।१।५२ ) सकारस्यैव तु स्थाने स्यात् । नह्यत्राजन्त्यः । किं तर्हि ? सकारः । तस्मान्निर्धारणे षष्ठीयमिति दर्शयन्नाह अचामित्यादि । जातौ बहुवचनम् । सूत्रेऽप्यच इत्येकवचनं जातावेव । यदि तर्हि निर्धारणषष्ठीयम् अन्त्यस्याविशेषितत्वादविशेषेण यतः कुतश्चिदन्त्यात् परो मित् स्यात् । नहि द्वितीयमज्ग्रहणमस्ति येनान्त्यो विशेष्यते । नैष दोषः । समानजातीयस्यैव हि लोके निर्धारणप्रतीति र्भवति । तथाहि कृष्णा गवां सम्पन्नक्षीरतमेत्युक्ते गौरेव प्रतीयते । नाजा नाप्यश्वा । तस्माद्धि-

द्यांश्यचां मध्ये ऽन्त्यादचोऽवधेरित्यन्त्यत्वेन निर्धार्य्यमाणः समानजातीयोऽजेव प्रतीयते। तेनाच एवान्त्यात् परो भविष्यति। स्थानेयोगित्व प्रत्ययपरत्वापवादार्थञ्चेदमारब्धम्। तत्र स्थानेयोगित्वापवादार्थं शे मुचादीनां (७।१।५९) नुम् भवति। मुञ्चति। नपुंसकस्य (७।१।७२) झलचः। पयांसि। प्रत्ययपरत्वापवादार्थं रुधादिभ्यः श्नम् (३।१।७८)। रुणद्धि। ननु च पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति स्थानेयोगित्वस्यैवापवादो युज्यते। नतु प्रत्ययपरत्वस्य। नैतदस्ति। एवं हि श्नमो मित्करण मनवकाशत्वादनर्थकं स्यात्। अवणार्थत्वान्नानर्थकमिति चेत्? न। तृणह इमिति (७।३।९२) निर्देशात्। अवणार्थे ह्येतस्मिं स्तृणम् ह इमिति निर्देशः स्यात्। तस्मात् प्रत्ययपरत्वस्यापवादो युक्तः। यद्येवं तन्मध्यपतित स्तद्ग्रहणेन गृह्यत इति प्रकृत्यन्तःपातिन स्तद्ग्रहणेन ग्रहणादपरत्वाच्च श्नमः प्रत्ययसंज्ञा न स्यात्। तथाच लश (१।३।८) क्कतद्धित इति प्रत्ययादेः शकारस्य विधीयमानेत्संज्ञा न स्यात्। नैष दोषः। प्रत्ययाधिकारे विधीयमानत्वात् प्रत्ययसंज्ञा भविष्यति सत्यप्यपरत्वे सत्यपि प्रकृत्यन्तःपातित्वे। यथा बहुजकचोरन्तोदात्तत्वम्। बहुपटव उच्चकैरित्यनयो रसति परत्वे सत्यां प्रत्ययसंज्ञायां चित (६।१।१६३) इत्यन्तोदात्तत्वं भवत्येव। मस्जेरित्यादि। नकारस्योपधाया अनुषङ्ग इति पूर्वाचार्य्यैः संज्ञा कृता। टुमस्जो शुद्धावित्यस्य मस्जिनशोर्झलीति (७।१।६०) नुमं वक्ष्यति। स च यद्यचोऽन्त्यात् परः स्यात् स्कोः संयोगाद्योरिति (८।२।२९) सकारस्यानिदितामिति (६।४।२४) नकारस्य च लोपो न स्यात्। यथाक्रम मनादित्वादनुपधत्वाच्च। तस्मादन्त्याज्जकारात् पूर्वो जकारसकारयो र्मध्ये नुम् कर्त्तव्यः। यथाचान्त्यात् पूर्वो लभ्यते तथा सप्तमे वक्ष्यते। मग्न इति। ओदितश्चेति (८।२।४५) निष्ठानत्वम्। तस्यासिद्धत्वात् चोः कुरिति (८।२।३०) कुत्वं जकारस्य गकारः। मङ्क्तेति। अत्र पूर्ववद् गकारे कृते तस्य खरि चेति (८।४।५५) चर्त्वं ककारः। नश्चापदान्तस्य (८।३।२४) झलीत्यनुस्वारः। अनुस्वारस्य ययि परसवर्णो (८।४।५८) ङकारः। पूर्वभक्तश्चायं मिद् वेदितव्यः। अन्यथा वश्चभ्रस्ज (?) लिड़ (३।२।३२) इति लिहः खशि कृते ऽरुर्द्विषदजन्तस्येति

( ६।३।६७ )मुमि कृते वहंलिह इत्यत्र मोऽनुस्वार ( ८।३।२३ ) इति पदान्तस्य विधीयमानोऽनुस्वारो न स्यात् । अपदान्तत्वात् ।

## ४८ । एच इग् घ्रस्वादेशे ।

परिभाषेय मादेशनियमार्था ह्रस्वो ( १।२।४७ ) नपुंसके प्रातिपदिकस्येत्यादावुपतिष्ठते । इहैम एचोऽवयवसमाहारवर्णाः । तत्र ए ऐ इत्येतयोः पूर्वो भागो वर्णसमानाकृतिः कण्ठ्यो मात्रात्मा । उत्तरस्त्विवर्णसमानाकृति र्मात्रात्मैव तालव्यः । अतएव ए ऐ कण्ठतालव्याविति शिक्षाकाराः पठन्ति । तदवयवयोः कण्ठतालव्यत्वात् । ओ औ इत्येतयोः पूर्वो भाग स्तादृश एव यादृश एकारैकारयोः । उत्तरस्तूवर्णसमानाकृतिर्मात्रिक ओष्ठ्यः । अतएव ओ औ कण्ठोष्ठ्याविति शिक्षाकाराः पठन्ति । तदवयवयोः कण्ठोष्ठ्यत्वात् । तत्र समुदायात्मनामेषां समुदयान्तरतमो ह्रस्वो नास्तीति तदवयवस्य योऽन्तरतमस्तेनैव युक्तं भवितुम् । स पुन रकार इकार उकारो वा । तत्र एकारैकारयो र्ह्रस्वो विधीयमानः कदाचिदकारः स्यात् कदाचिदिकारः । ओकारौकारयोरपि कदाचिदकारः स्यात् कदाचिदुकारः । इकारोकारावेव यथायोगं यथा स्यातां कदाचिदप्यकारो मा भूदित्येवमर्थ मिदमारभ्यते । अत यद्यप्येचामिकां साम्यं तथापि संख्यातानुदेशो न भवति । यस्मान्नेदं विधायकम् । किं तर्हि ? नियामकम् । प्राप्तिपूर्वकश्च नियम इति ये प्राप्ता अन्तरतमा इक एचो ह्रस्वा स्तेषामनेन नियमः क्रियते । नच प्राप्ता ऋकारऌकाराविति कुतो यथासंख्यत्वम् ? यद्येवमिग्रित्येव वक्तव्यम् । नत्विगिति । सत्यमेतत् । किन्त्वेवमुच्यमाने संदेहः स्यात् किं पूर्वेण णकारेण प्रत्याहार उत परेणेति । तस्मादसन्देहार्थमिगित्युक्तम् । अतिरि । अतिन्विति । रायमतिक्रान्तं नावमतिक्रान्तं ब्राह्मणकुलम् । अत्यादयः क्रान्ताद्यर्थे द्वितीययेति कुगतीत्यादिना ( २।२।१८ ) समासः । परवल्लिङ्गं द्वन्द्व ( २।४।२६ ) तत्पुरुषयोरिति पुंलिङ्गे स्त्रीलिङ्गे च प्राप्ते द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु (२।४।२६ वा) प्रतिषेध इति प्रतिषेधे नपुंसकत्वे ब्राह्मणकुल-

स्याभिधेयत्वादभिधेयवल्लिङ्गवचनानि भवन्तीति तल्लिङ्गमेव भवति । ह्रस्वो नपुंसके प्रातिपदिकस्येति ( १।२।४७ ) ह्रस्वः । इक् कण्ठतालव्यस्यैकारस्य तालव्य इकारो भवति । कण्ठोष्ठ्यस्यौकारस्यौष्ठ्य उकारः । उपग्विति । गोः समीपमिति । अव्ययं ( २।१।६ ) विभक्तीत्यादिना सामीप्येऽव्ययीभावः । गोस्त्रियोरुपसर्ज्जनस्येति ( १।२।४८ ) ह्रस्वः । कण्ठोष्ठ्यौकारस्यौष्ठ्य उकारः । एकारस्य तूदाहरणम् । हे इतीमं शब्दमतिक्रान्तं ब्राह्मणकुलमतिहि । अतिखट्व इति । पूर्ववत् प्रादिसमासे कृते गोस्त्रियोरुपसर्जनस्येत्येवमादिना ( १।२।४८ ) ह्रस्वो ऽकार एव भवत्यन्तरतमः । देवदत्तेति । अत्रामन्त्रितस्यादेरुदात्तादेशे (६ १।१९८) कर्त्तव्ये देवदत्त इत्यत्र च गुरोरनृतोऽनन्त्यस्येत्यादिना ( ८।२।८६ ) प्लुतादेशे कर्त्तव्य इङ् न भवति ।

## ४९ । षष्ठी स्थानेयोगा ।

योगनियमार्थेति । योगनियमः सम्बन्धनियमः । सोऽर्थः प्रयोजनं यस्याः सा तथोक्ता । यदि योगनियमार्थेयं शास्त्रे या षष्ठी सा स्थानेयोगैव भवति । नान्ययोगेति । एवं सत्यूदुपधाया गोह (६ ४ ८९) इत्येषापि षष्ठी स्थानेयोगैव स्यात् । नावयवावयविसम्बन्धयोगा । ततश्चालोऽन्त्यस्येति (१।१।५२) स्थानषष्ठ्यन्तेष्व्युपसंहाराद् गोहश्चान्तस्य हकारस्य ऊकारः स्यात् । उपधायाश्चेतिवचना दुपधामात्रस्य चेत्यत आह इह शास्त्रे या षष्ठ्यनियतयोगेत्यादि अनियमप्रसङ्गे नियमोऽनया क्रियते । क्व चानियमप्रसङ्गः ? यत्र सन्देहः यथास्तेर्भूरिति । अत्र हि किमस्तेः स्थान आहोस्विदनन्तर इति सन्देहः पूर्वत्र तूपधाया अवयवलक्षणस्य स्थानिनो विशिष्टावयविनो व्यवच्छिन्नत्वाद वयवषष्ठ्येवेयमिति निश्चितम् । ततो नात्रास्या व्यापारः । स्थाने योगैवेति स्थान इति निमित्तसप्तमी । योगः सम्बन्धः । तेनेदमुक्तं भवति । स्थाननिमित्तव सम्बन्धैवेति । एतदेव विस्पष्टीकुर्वन्नाह स्थाने योगनिमित्त इत्यादि । स्थाने योगस्य निमित्तभूते निमित्तत्वं प्राप्ते सति सा वेदितव्या । भूतशब्दो प्राप्तशब्दे वर्त्तते । यथा देवभूत इत्यत्र देवत्वं प्राप्त इत्यर्थः । निमित्तशब्द कुर्वन् सूत्रे स्थाने योगेति निमित्तसप्तमीयमिति दर्शयति । योगः पुन

रिह स्थान्यादेशभावलक्षणः । कुत एतत् ? तस्यैव स्थानिर्हेतुत्वात् । स्थानशब्दो भावसाधनः । स्थितिः स्थानम् । तत् पुनस्त्रिधा । अपकर्षो निवृत्तिः प्रसङ्गश्चेति । गोस्थानेऽश्वो बध्यतामित्यपकर्षः स्थानशब्दस्यार्थेयः । श्लेष्मणः स्थाने कटुकमौषधमित्यत्र निवृत्तिः । दर्भाणां स्थाने शरैरास्तरितव्यमिति प्रसङ्गः । तत्राद्यावर्थाविह न सम्भवतः । नित्यत्वाच्छब्दार्थसम्बन्धस्य प्रथमो न संभवति । सामान्येनास्तेरुपदेशान्न द्वितीयः । तस्मात् तृतीय एवार्थ इति मत्वाह स्थानशब्दश्चेत्यादि । चशब्दोऽवधारणे भिन्नक्रमः प्रसङ्गवाचीत्यस्यानन्तरं द्रष्टव्यः । तदेतदुक्तं भवति । स्थानशब्दः प्रसङ्गवाच्येवेति । प्रसङ्गस्त्वर्थक्रियानिमित्तभूतस्य कालस्यावसरः । अस्तेः स्थाने प्रसङ्ग इति । अस्तेर्या क्रिया स्वार्थप्रतिपादनलक्षणा तस्या निमित्तभूतस्य कालस्यावसरः प्राप्त इत्यर्थः । प्रसङ्गे सम्बन्धस्य निमित्तभूत इत्यादिना सूत्रार्थस्योदाहरणे संभवं दर्शयति । ब्रुव इति चोपलक्षणमात्रम् । अस्तेरित्यादेरपि हि षष्ठी प्रसङ्ग एव सम्बन्धस्य निमित्तभाव उत्पन्ना । के पुनर्बहवः षष्ठ्यर्थाः ? यतः सम्बन्धान्तरविषयव्यवच्छेदनार्थं षष्ठ्या इदमुच्यत इत्याह बहवो हीत्यादि । शब्दे हि समीपानन्तरविकारावयवादिनिमित्ताः सम्बन्धाः सन्ति । नत्वपत्यापत्यवत्प्रभृतय इत्यतो यावन्तः शब्दे सम्भवन्तीत्याह । अथ स्थाने योग इति किमसमासोऽथ समासः ? यद्यसमास स्तदा योगशब्दस्य पुंलिङ्गत्वात् स्त्रीलिङ्गेन निर्देशः षष्ठीशब्देन च सामानाधिकरण्यं न प्राप्नोति । योगस्याषष्ठीत्वात् । अतः समासः किं तत्पुरुषः ? आहोस्विद् बहुव्रीहिः ? यदि तत्पुरुष स्तौ च पूर्वोक्तौ दोषौ स्याताम् । सप्तम्या लुक्प्रसङ्गश्च । अथ बहुव्रीहिः ? एवमपि लुक्प्रसङ्गोऽत्रानिवार्य्य एवेत्यत आह षष्ठीस्थाने योगेत्यादि । गतार्थम् ।

## ५० । स्थानेऽन्तरतमः ।

परिभाषेयमादेशनियमार्था । स्थाने प्राप्यमाणानामिति । एतेन नेदं विधायकं वाक्यं किं तर्हि ? लक्षणान्तरेण प्राप्तानामनन्तरतमानामितरेषाञ्च योऽन्तरतमः स एव भवतीति नियमार्थमिति दर्शयति । विधायकत्वे हि दधि-

मध्वित्यादावपि प्रसज्यते । किं पुनरत्रानिष्टम् ? यावतान्तरतम्याद् दधिमधु-शब्दयोस्तावेवादेशौ भविष्यतः । तयोरप्यादेशयोरन्यौ दधिमधुशब्दौ यावादेशौ स्यातां तयोरप्यन्यावित्येवमपरिसमाप्तादेशपरम्पराविधानादनवस्था स्यात् । ततश्चार्थप्रत्यायनं प्रति शब्दानां विनियोगो न स्यात् । अन्वाख्यायक-स्य शास्त्रस्य प्रवृत्त्यनुपरमात् । शास्त्रोपरतौ ह्यन्वाख्यातास्ते प्रयुज्यन्ते । नान्यथेत्यनिष्टम् । ननुच सकृत्प्रवृत्तौ लक्षणस्य चरितार्थत्वात् पुनः प्रवृत्तिर्न भविष्यति । नैतदस्ति । यत्र हि प्रयोजनार्था प्रवृत्तिस्तत्रैतदुक्तम् । इह पुनरकस्मादन्तरतमो विधीयत इत्यनुपरतैवास्य प्रवृत्तिः । नियाम-कत्वेऽप्यस्य यदीदं विहितानां नियमं कुर्य्यादनर्थकमेव वचनं स्यात् । यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्ष्वेति किं तस्य तेन कृतं स्यात् ? तस्मात् प्राप्यमाणावस्थायामेव वाक्यान्तरैः सह संहत्यानेन कार्य्यं निर्वर्त्त्यते । तदेक-देशभूतत्वादस्य । सदृशतम इति । अन्तरतमशब्दस्यार्थं कथयति । अर्थत इत्यादि । वतण्डशब्दात् स्त्रियामपत्यार्थे वतण्डाच्चेति ( ४।१।१०८ ) यञ् । तस्य लुक् स्त्रियामिति ( ४।१।१०९ ) लुक् । शार्ङ्गरवाद्यञो ( ४।१।७३ ) ङीन् । यस्येति ( ६।४।१४८ ) चेत्यकारलोपः । वतण्डी चासौ युवतिश्चेति पोटायुवतीत्यादिना (२।१।६५) समासः । तत्रानेन पुंवत् कर्म्मधारयेत्यादिना ( ६।३।४२ ) पुंवद्भावे कर्त्तव्ये सर्वः पुंशब्दः प्रसक्तः । तत्रानेन वतण्डा-पत्यार्थस्य वतण्डीशब्दस्यार्थतोऽन्तरतमो वतण्डापत्यार्थ एव वातण्ड्यशब्दो भवति । पाक इत्यादौ भावे घञ् । चकारस्येत्यादि । वर्गाणां प्रथमा अल्पप्राणा इति चकारककारावल्पप्राणौ । वर्गाणां प्रथमद्वितीयाः शषस विसर्ज्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषा इत्यघोषौ । जकारस्येत्यादि । वर्गाणां तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ यमौ च द्वितीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्त इति जकारगकारौ घोषवन्तौ । वर्गाणां तृतीया अन्तःस्थाश्चाल्पप्राणाः । इतरे सर्वे महाप्राणा इत्यल्पप्राणौ । अमुष्मै । अमूभ्या-मिति । अदस श्चतुर्थ्येकवचने भ्यामि च परत स्त्यदाद्यत्वम् (७।२।१०२) । अतो गुणे (६।१।९७) पररूपत्वम् । सर्वनाम्नः (७।१।१४) स्मादृति स्मैभावः । भ्यामि

सुपि चेति (७।३।१०२) दीर्घः । ततो ह्रस्वस्य ह्रस्व उकारो भवति । दीर्घस्य दीर्घः । स्थाने इति वर्त्तमान इति । प्रकृतो हि स्थानशब्दः प्रसङ्गवाची । तदनुवृत्तौ स्थाने प्राप्यमाणानामन्तरतमो भवतीत्येषो ऽर्थो लभ्यते । ननु च यत्रानेकमान्तर्य्यं तत्र तात्वादिस्थानत एवान्तर्य्यस्य बलीयस्त्वम् । तस्मात् तद् यथा स्यादिति पुनस्ताल्वादिस्थानवाचिनः स्थानशब्दस्योपादानं क्रियते । यद्येवं स्थानकृतमेवेहान्तर्य्यं विशिष्टमुपात्तमिति प्रमाणादिकृतं परित्यक्तं स्यात् । नैष दोषः । वाक्यभेदं हि कृत्वा तत्र सम्बन्धः क्रियते । स्थाने प्राप्यमाणानाम-न्तरतम आदेशो भवति । स्थाने च भवतीति पूर्व्वत्र वाक्ये प्रसङ्गवाची स्थानशब्दः । उत्तरत्र तु ताल्वादिस्थानवाची । एवं वाक्यभेदेन सम्बन्धे सति पूर्वस्मिन् वाक्ये स्थानादिकृतानामान्तर्य्याणां परिग्रहः प्रतीयते । द्वितीये तु तेषामेव बलाबलवत्त्वम् । स्थान इति च निमित्तसप्तमी । तेनेद-मुक्तं भवति । यत्रानेकमान्तर्य्यं तत्र स्थानेन निमित्तेन योऽन्तरतमः स एव भवति । वाक्यभेदस्य च तमब्ग्रहणं लिङ्गम् । सादृश्ये प्रकर्षो हि तेन प्रतिपादयितुमिष्टः । स चानेकस्मिन् सादृश्ये सति सादृश्यान्तरापेक्षया भवति । एकवाक्यतायाञ्च स्थानग्रहणेन सादृश्यान्तरे निरस्ते किमपेक्षया सादृश्यप्रकर्षः स्यात् ? तस्मात् तमब्ग्रहणाद् वाक्यभेदोऽनुमीयते । अन्यथा हि तस्य वैयर्थ्यं स्यात् । चेतेति । अत्रेकारस्य तालव्यत्वादेकारस्य कण्ठतालव्यत्वात् स्थानत आन्तर्य्यम् । इकाराकारयोस्तु प्रमाणतो द्वयोरपि मात्रिकत्वात् । स्तोतेति । अत्राप्युकारस्यौष्ठ्यत्वादोकारस्य कण्ठौष्ठ्यत्वात् स्थानत आन्तर्य्यम् । उकारा-कारयोस्तु प्रमाणतः पूर्ववत् । तत्रासति पुनः स्थानग्रहणे प्रमाणत आन्तर्य्यात् कदाचिदकारो गुणः स्यात् । स्थानत आन्तर्य्यात् कदाचिदेकारौकारौ । पुनः स्थानग्रहणात् तु स्थानकृतस्यान्तर्य्यस्य बलीयस्त्वादेकारौकारौ एव भवतः । न कदाचिदकारः । सोष्मणः सोष्माण इतीत्यादि । इतिकरणो हेतौ । यस्मात् सोष्माणो द्वितीयास्तस्मात् सोष्मणो हकारस्य द्वितीयाः प्रसक्ता इत्यर्थः । एवं नादवतो नादवन्त इत्यादौ वाक्ये हेत्वर्थो योज्यः । शादय ऊष्माणः सस्थानेन द्वितीया हकारेण चतुर्था इति शिक्षा । अत्र शादय ऊष्माण इति वचनेन हकारस्य सोष्मत्वं प्रतिपादितम् । सस्थानेन द्वितीया इत्यनेन

तु वर्गद्वितीयानां खकारादीनां। हकारेण चतुर्था इत्यनेनापि वर्गचतुर्थानां घकारादीनां समानं स्थानं यस्य स सस्थानः। सस्थानेनेति। इत्थम्भूत-लक्षणे तृतीया। सस्थानेन द्वितीया ऊष्मतया लक्ष्यन्ते। एतदुक्तं भवति। यथा सस्थान एवैषामूष्मा एवमेतेऽपि वर्गाणां द्वितीया ऊष्माण इति। अथवा तुल्यार्थयोग एषा तृतीया। तुल्यशब्दस्त्वध्याहार्य्यः। तुल्यत्वमूष्मतया वेदितव्यम्। तत्र खकारस्य सस्थानो हकारः। छकारस्य शकारः। ठकारस्य षकारः। थकारस्य सकारः। फकारस्य सस्थान ऊष्मा नास्ति। तस्मात् तस्यापि विशेषेणोष्मत्वं वेदितव्यम्। हकारेण चतुर्था इति। इहापि तृतीयेत्थम्भूतलक्षणे तुल्यार्थयोगे वा। हकारेण चतुर्था ऊष्मतया लक्ष्यन्ते। तत्सदृशत्वात्। तेन यथा हकार ऊष्मा एवं तेऽपीत्यर्थः। नादवत इत्यादि। वर्गाणां तृतीयचतुर्थ इत्यादिना पूर्वोक्तेन ग्रन्थेन तृतीयानां हकारस्य नादवत्त्व-मुक्तम्। ये सोष्माणो नादवन्तश्चेति। सोष्मत्वं हकारस्य शादय ऊष्माण इत्यनेनाख्यातम्। चतुर्थानां तु हकारेण चतुर्था इत्यनेन नादवत्त्वम्। उभयेषां वर्गाणां तृतीयचतुर्था इत्यादिनैव पूर्वोक्तेन।

## ५१। उरण् रपरः।

अत्र त्रयः पक्षाः सम्भवन्ति। उः स्थानेऽण् रपरत्वञ्चानेनोभयं विधीयत इत्येकः पक्षः। लक्षणान्तरेण विहितस्याण उःस्थाने पश्चादनेन रपरत्वमात्रं क्रियत इति द्वितीयः पक्षः। उःस्थाने लक्षणान्तरेण विधीयमानोऽण् विधान-काल एव तेन लक्षणान्तरेण सह संहत्य रपरत्वविशिष्टोऽनेन भाव्यत इति तृतीयः। तत्र यद्याद्यः पक्ष आश्रीयत ऋकारस्य स्थान उदात्तादयो न स्युः। अनेन बाधितत्वात्। कृतिरित्यत्र ञ्नित्यादिर्नित्यमित्याद्युदात्तो (६।१।१९७) न स्यात्। प्रकृतमित्यत्र पूर्वपदस्याद्युदात्तस्य गतिरनन्तर (६।२।४९) इति प्रकृतिस्वरे कृतेऽनुदात्तं (६।१।१५८) पदमेकवर्जमित्यनुदात्तो न स्यात्। उदात्तादनुदात्तस्य (८।४।६६) स्वरित इति स्वरितश्च। यद्यचः स्थान उदात्तादयो विधीयन्ते तथापि तेषामन्योऽनवकाश इति ऋवर्णस्थाने प्रति-पदोक्तोऽणेन रपरः स्यात्। ये चाप्यन्य ऋवर्णस्थाने प्रतिपदमादेशा उच्यन्ते

ऋत (७।१।१००) इद् धातोरित्येवमादिभिर्लक्षणान्तरैस्तेषु रपरत्वं न स्यात्। ततश्च किरतीत्यादि न सिध्येत्। अथ द्वितीयः पक्ष आश्रीयते तरतेस्तृजादौ गुणे विधीयमानः प्रमाणत आन्तरतम्याद् दीर्घस्य दीर्घ एव स्यात्। तथाच तरितेत्यादि न सिध्येत्। किञ्च ण्वुलादौ वृद्धौ विधीयमानायामृकारस्य केनचिद् वृद्धिसंज्ञकेनान्तरतम्यविशेषो नास्तीति सर्वे वृद्धिसंज्ञकाः पर्य्यायेण प्रसज्येरन्। तथाच पक्षे नायकः स्तावक इत्याद्यप्यनिष्टं रूपं स्यात्। इत्येवमाद्ययोः पक्षयोर्दोषवत्तां दृष्ट्वा तृतीयं पक्षमाश्रित्याह उःस्थानेऽण् प्रसज्यमान एवेत्यादि। एतेन लक्षणान्तरेण विधीयमानस्याणो विधानकाल एव तेन सह संहत्य रपरत्वविशिष्टस्य विधावियं परिभाषा व्याप्रियत इति दर्शयति। एतच्च स्थानद्वयग्रहणस्यात्रानुवृत्तेर्लभ्यते। पूर्वकेण हि स्थानग्रहणेनेहानुवृत्तावुः स्थान इत्येतदर्थरूपं लभ्यते। द्वितीयेन तु प्रसज्यमान इत्येतत्। तथाहि यदिह स्थानग्रहणं सप्तम्यन्तं प्रकृतमनुवर्त्तमानं तत् सामर्थ्यात् प्रथमान्तं सम्पद्यते। स्थानशब्दश्चायं प्रसङ्गवाची। ततश्च यदा स्थानेनाण् विशिष्यते ऽण् स्थानमिति तदाण् प्रसज्यमान एवेत्येषोऽर्थो जायते। प्रसज्यमान इति। प्रसङ्गेनाभिसम्बध्यमान इति यावत्। एवेति। अवधारणं पुनरत्र व्यवच्छेदफलत्वेन सर्ववाक्यानां सावधारणत्वाल्लभ्यते। कथं पुनरण् स्थानं भवति? नैव हि स स्थानं भवति। तद्योगात्तु तत्र स्थानव्यपदेशो भवति। यथा यष्टीः प्रवेशयेति यष्टियोगात् पुरुषाणां व्यपदेशः। ननु च स्थानेऽन्तरतम इत्यत्र ताल्वादिस्थानवचनः स्थानशब्द उपात्तः। तत् कथं तदनुवृत्तावपि प्रसज्यमान इत्येषोऽर्थो लभ्यते? नैष दोषः। स्वरितत्वचिह्नासङ्गाद्धि यो यत्रोपतिष्ठते स तत्र सामर्थ्यात् तत्कार्य्ययोग्यस्यैवार्थस्याभिधाता समुपतिष्ठते। तेन यद्यपि पूर्वसूत्रे स्थानशब्दस्ताल्वादिस्थानवचनस्तथापीहोपतिष्ठमानः प्रसङ्गवचन एवोपतिष्ठते। तदेवं यस्मादिदं स्वतन्त्रमणो रपरत्वविशिष्टस्य च विधायकं तस्मादाद्ये पक्षे यो दोषः स इह न भवति। ततश्च लक्षणान्तरेण विहितस्याणः पश्चादनेन रपरत्वं न विधीयते। किं तर्हि? प्रसज्यमान एवाण् लक्षणान्तरेण तत्सहायं प्रतिपद्य रपरो भाव्यते। तेन द्वितीये पक्षे यो दोषः सोऽप्यस्मिन्न भवत्येव।

प्रसज्यमानस्यैव हि रपरत्वविधौ यथा ऋवर्णो रश्रुतिमान् एवमादेशोऽपि रश्रुतिमानेव भवति। ततश्चान्तरतम्यादृकारस्य रश्रुतिमतस्तादृश एव रश्रुतिमानादेशो भवति। अन्ये गुणवृद्धिसंज्ञका व्यावर्त्तिता भवन्ति। यदि तर्हि प्रसज्यमानएव रपरो भवत्यनेकाल्त्वात् सर्वादेशः प्रसज्येत। नैष दोषः। यदयं तरतीति ( ४ ४।५ ) निर्देशं करोति ततो ज्ञायते सर्वादेशो न भवतीति। कर्त्ता हर्त्तेति। डुकृञ् करणे। हृञ् हरणे। आभ्यां ण्वुल्तृचाविति ( ३।१।१३३ ) तृच्। सार्वधातुकार्द्धधातुकयोरिति ( ७।३।८४ ) गुणः। अचो रहाभ्यामिति ( ८।४।४६ ) द्वित्वम्। किरति। गिरतीति। कॄ विक्षेपे। गॄ निगरणे। आभ्यां लट्। शेषात् कर्त्तरि ( १।३।७८ ) परस्मैपदमिति तिप्। तुदादित्वाच्छः। ऋत (७.१।१००) इद् धातोरितीत्त्वम्। द्वैमातुर स्त्रैमातुर इति। द्वयोर्मात्रोरपत्यं तिसृणां मातृणामपत्यमिति। मातुरुत् संख्यासंभद्रपूर्वाया ( ४।१।११५ ) इत्यण्। उकारश्चान्तादेशः। तद्धितेष्वचामादेरिति ( ७.२।११७ ) वृद्धिः। खेयमिति। ई च खन ( ३।१।११ ) इति क्यप्। ईकारश्चान्तादेशः। आद् गुणः ( ६।१।८७ )। सौधातकिरिति। सुधातुरकङ् ( ४।१।९७ ) च इञ्। तत्संयोगेनाकङादेशः क्रियमाणो रपरो न भवति। अनण्त्वात्। अथ योऽत्राण् स रपरः कस्मान्न भवति? अनादेशत्वात्। समुदायो ह्यत्रादेशो न तदवयवः। अथेह कथं रपरत्वम्? खट्वा ऋश्यः खट्वर्श्य इति? यावता नायमृकारस्य स्थानेऽण्। किन्तु तस्यान्यस्य च। नैष दोषः। यो हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवति लभते सोऽन्यतरव्यपदेशम्। यथा देवदत्तस्य पुत्त्रो देवदत्तायाः पुत्त्र इति।

## ५२। अलोऽन्त्यस्य।

अल्ग्रहणमन्त्यस्य विशेषणम्। नादेशस्य। अन्यथा ह्यलन्त्यस्येत्येवं ब्रूयात्। आदेशः पुनरनेकाल्भवति। अन्यस्यानेकाल्शित् सर्वस्येति (१.१।५५) सर्वादेशतां वक्ष्यति। षष्ठीनिर्दिष्टस्येति। सामान्यवचनेऽपि षष्ठी स्थानेयोगेत्यधिकारात् स्थानषष्ठ्या निर्दिष्टस्येति वेदितव्यम्। अन्यथा टित्किन्मितोऽप्यवयवसम्बन्धषष्ठीनिर्दिष्टा विधीयमाना अन्त्यस्य स्युः। इद् गोण्या (१।२।५०)

इति। येयं षष्ठी साऽन्त्यमलं नीयते। अन्त्यस्याल इत्त्वमिति। पञ्चगोणि रिति। पञ्चभिर्गोणीभिः क्रीत इति तद्धितार्थोत्तरपदसमाहारे चेति ( २।१।५१ ) समासः। तेन क्रीतमिति ( ५।१।३७ ) प्राग् वहतेष्ठक् (४।४।१)। अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायामिति ( ५।१।२८ ) तस्य लुक्। यद्यलोऽन्त्यस्य षष्ठीनिर्द्दिष्टस्यादेशो भवतीदोऽय् पुंसीत्यत ( ७।२।१११ ) इद इत्यनुवृत्ते हलि लोपो ( ७।२।११३ ) विधीयमान इद्रूपस्य योऽन्त्य स्तस्य स्यात्। तथाच आभ्यामिति न सिध्येत्। नैष दोषः। नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारेष्विति परिभाषया न भविष्यति।

## ५३। ङिच्च।

होतापोताराविति। होतृपोतृशब्दयोर्द्वन्द्वः। आनङ्। औप्रत्यये परत ऋतो ङिसर्व्वनामस्थानयोरिति (७।३।११०) गुणः। रपरत्वञ्च। अप्तृन् ( ६।४।११ ) स्तृजित्यादिना दीर्घः। मातापितराविति। पिता मात्रेति ( १।२।७० ) यस्मिन् पक्ष एकशेषो नास्ति तत्रेद मुदाहरणम्। यदि ङिदादेशोऽनेकालप्यन्त्यस्य भवत्येवं सति तातङप्यन्त्यस्य भवतीत्यत आह तातङीत्यादि। तत्र गुणप्रतिषेधार्थश्चिनुतादित्यादौ। अत्र हि सार्वधातुकलक्षणस्य गुणस्य प्राप्तिः। वृद्धिप्रतिषेधार्थं मृष्टादिति। अत्र हि मृजेर्वृद्धिरिति ( ७।२।११४ ) वृद्धिप्राप्तिः। तदेवं गुणवृद्धिप्रतिषेधे चरितार्थत्वात् तातङो ङित्करणस्य सावकाशत्वे सति तस्मिन् परत्वादनेकाल्शित् ( १।१।५५ ) सर्वस्येत्यनेन तातङ् सर्वादेशो भवति। ङिच्चेत्यस्यावकाशो होतापोताराविवत्यादि। अनेकालित्यादेरवकाशो यो न ङित्। अस्तेर्भूः ( २।४।५२ )। भवितेत्यादि। जीवतादित्यादावुभयप्राप्तौ परत्वादनेकाल्त्वात् तातङ् सर्वादेशो भवति। जीवताद् भवान्। जीवतात् त्वमिति। जीवतादिति। आशिषि लिङ्लोटाविति ( ३।३।१७३ ) लोट्। तिप्। एरुः ( ३।४।८६ )। तुह्योस्तातङ् इत्यादिना ( ७।१ ३५ ) तातङ्।

## ५४। आदेः परस्य।

अलोऽन्त्यस्यापवादोऽयम्। शास्त्रे न क्वचित् परस्येत्युच्चार्य्य कार्य्यं विधीयते।

ततश्च निर्विषय मेतदित्यभिप्रायेणाह क्व चेत्यादि। यत्र पञ्चमीनिर्देश इति। तस्मादित्युत्तरस्येति ( १ १।६७ ) वचनाद् यत्र पञ्चमीनिर्देश स्तत्र परस्य कार्य्यं शिष्यते। आसीन इति। आस उपवेशने। लट्। अनुदात्तेत्त्वादात्मनेपदम्। शानच्। अदादित्वाच्छपो लुक्। द्वीपमन्तरीपं समीपमिति। द्विर्गता अन्तर्गताः सङ्गता आपोऽस्मिन्निति विगृह्य बहुव्रीहिः। ऋक्पूरित्यादिना ( ५।४।७४ ) ऽकारप्रत्ययः समासान्तः।

## ५५। अनेकाल्शित् सर्वस्य।

शितः शकारानुबन्धेनानेकाल्त्वेऽपि शिदिति पृथक्करणं नानुबन्धकृत-मनेकाल्त्वमिति ज्ञापनार्थम्। तस्य तु प्रयोजनं दिव ( ६।१।१३१ ) उदित्यादिषु सर्वादेशाभावः।

## ५६। स्थानिवदादेशोऽनल्विधौ।

स्थानं प्रसङ्गः। स च पूर्वमुक्तस्वरूपः। अतिदेशोऽनेकप्रकारः। निमित्तातिदेशः। व्यपदेशातिदेशः। शास्त्रातिदेशः। रूपातिदेशः। कार्य्यातिदेशश्चेति। तत्र तावन्निमित्तमशक्यमतिदेष्टुम्। नहि धात्वादिधर्माः शब्दप्रवृत्तिनिमित्तभूता धात्वादिव्यक्त्याश्रिता वस्त्वन्तरमादेशं प्रापयितुं पार्य्यन्ते। यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमिति ब्राह्मणशब्दप्रवृत्ति-निमित्तं न शक्यं क्षत्रिये प्रापयितुम्। तद्वत् तस्मादशक्यत्वान् नेह निमित्तातिदेश आश्रीयते। नापि व्यपदेशातिदेशः। संज्ञासंज्ञिसम्बन्धादभिन्नत्वात्। संज्ञासंज्ञिसम्बन्धे हि वत्करणस्यानर्थक्यं स्यात्। विनापि तेन तत्सिद्धेः। अप्रधानत्वाच्च नात्र व्यपदेशातिदेशो युक्त आश्रयितुम्। अतएव शास्त्रातिदेशोऽपि। अप्रधानत्वं तु तयोरपि कार्य्यं प्रत्यङ्गभूतत्वात्। रूपातिदेश-स्याप्याश्रयणमयुक्तम्। निष्फलत्वात्। यदि ह्यादेशस्य स्थानिनो रूपमति-दिश्येतादेशस्य वैयर्थ्यं स्यात्। द्विर्वचने (१ १।५८) ऽचीत्यत्र रूपातिदेशेऽपि न भवत्यादेशवैयर्थ्यम्। द्विर्वचनादुत्तरकालं श्रवणार्थत्वात्। तस्मादतिदेशा-न्तराश्रयणस्यायुक्तत्वात् कार्य्यातिदेश आश्रीयते। स्थानिना तुल्यं वर्त्तत इति। तत्तुल्यकार्य्यत्वात्। तेन तुल्यं स्थान्याश्रयेष्विति। स्थानी आश्रय एषा

मिति बहुव्रीहिः । अनलाश्रयेष्विति । अल आश्रय एषामिति बहुव्रीहिं कृत्वा न अलाश्रयाणि अनलाश्रयाणीति नञ्समासः । अनन्तरोक्तमेवार्थं विस्पष्टीकर्त्तुमाह स्थान्यलाश्रयाणीत्यादि । स्थानी अल् आश्रयो येषां तानि तथोक्तानि । आश्रयग्रहणेन सूत्रे योऽल्विधिशब्दः सो ऽलाश्रयो विधिरल्विधिरित्युत्तरपदलोपी समास इति दर्शयति । स पुनः समासो मयूरव्यंसकादित्वाद् ( २।१।७२ ) वेदितव्यः । समानाधिकरणाधिकारे (२।१।६०,वा ) शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्चेत्यनेनेत्यपरे । एतच्चायुक्तम् । सूत्रप्रणयनकालादर्वाक्कालभावित्वादस्य वाक्यस्य (A) । तस्मान् मयूरव्यंसकादित्वात् समासं कृत्वा नञ्समासः कृतः । न अल्विधिरनल्विधिरिति । कः पुनरलाश्रयो विधिः ? यो वर्णमात्राश्रितः । यस्तु समुदायाश्रितः सोऽनलाश्रयः । कार्य्यशब्देन कर्मसाधनेन विधिशब्दस्यार्थमाचष्टे विधीयत इति विधिरिति तस्य कर्मसाधनत्वं दर्शयति । किमुदाहरणमिति प्रश्नः । धात्वाद्यादेशाः प्रयोजनमित्युत्तरम् । प्रयुज्यतेऽनेनेति प्रयोजनम् । उदाहरणेन च प्रयुज्यत इति । अर्थात् प्रश्नानुरूपं प्रतिवचनम् । ननु चार्द्धधातुके परतो भाव्यमादेशाभ्याम् । तत्र किमत्रादेशेनेत्यत आह आर्धधातुके विषय इति । प्रकृत्येत्यादि । कुगतीत्यादिना ( २।२।१८ ) समासः । समासेऽनञ्पूर्व्वे क्त्वो ( ७।१।३७ ) ल्यप् । दाधिकमिति । दध्ना संस्कृतमिति (४ ४।२) दध्नष्ठक् । अद्यतनमिति । सायंचिरमित्यादिना ( ४।३।२३ ) ट्युप्रत्ययः । तुड़ागमश्च । योरनादेशः । अकुरुताम् । अकुरुतमिति । कृञो लङ् । तस्थस्थमिपामित्यादिना तसस्ताम् ( ३।४ १०१ )। थसस्तम् । तनादित्वात् तनादिकृञ्भ्य उः ( ३।१ ७९ ) । धातोर्गुणः । अत उत् सार्वधातुके (६।४।११०) । ग्रामो वः स्वम् । जनपदो नः स्वमिति युष्मदस्मदोः षष्ठीबहुवचनस्य (८।१।२१) वस्नसाविति वस्नसादेशौ। वत्करणं किमिति ? विनापि तेन तदर्थो गम्यते ? यथाऽसंयोगाल्लिट् ( १ २।५ ) किदित्यादावित्यभिप्रायः । स्थानीत्यादि । प्रायेण ह्यस्मिन् पादे वृद्धिरादैजित्यादीनि ( १।१ १ ) सूत्राणि संज्ञासंज्ञिसम्बन्धार्थान्येव दृष्टानि । अतोऽसति वत्करणे स्थान्यादेशस्य संज्ञा विधीयत इति विज्ञायते । तदेवं मा

(A) अमुत्सूत्रपदन्यासो न्यासकारो नाम नियतं वार्त्तिकप्रत्याख्यायी ।

विज्ञायीत्येवमर्थं वत्करणम्। किमर्थं पुनः स्थान्यादेशस्य संज्ञा नेष्यत इत्याह स्वाश्रयमपीत्यादि। संज्ञा हि संज्ञिप्रत्यायनार्था न स्वतः कार्य्यं प्रतिपद्यते। अपि तु तत्प्रत्यायितः संज्ञीति। अत्र यदि स्थान्यादेशस्य संज्ञा स्यादादेशस्यैव हि संज्ञिनः कार्य्यं स्यात्। न संज्ञाभूतस्य स्थानिनः। ततश्चाङो (१।३ २८) यमहन इति वधेरात्मनेपदं स्यात्। न हन्तेः। वत्करणे तु सत्यतिदेशोऽयं भवति। अतिदेशेन चान्यसम्बन्धिकार्य्यमन्यत्र सम्पाद्यते। न तु तत्र स्वाश्रयं-निवर्त्त्यते। तथाहि ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमित्यतिदेशे तद् ब्राह्मण-सम्बन्धि कार्य्यं क्षत्रिये भाव्यते। नतु ब्राह्मणस्य यत् स्वाश्रयमग्रभोजनादि तद् व्यावर्त्त्यते। स्वाश्रयमपीत्यपिशब्दादतिदेशप्रापितमादेशे पराश्रितमपि। आहतेति। हन्तेर्लुङ्। हनः (१।२।१४) सिजिति कित्त्वम्। अनुदात्तोपदेशे-त्यादिना ( ६।४।३७ ) ऽनुनासिकलोपः। ह्रस्वादङ्गादिति (८।२।२७) सिचः। आवधिष्टेति। आत्मनेपदेष्वन्यतरस्यामिति वधादेशः ( २।४।४३ )। इट्। अतो लोपः ( ६।४।४८ )। षत्वष्टुत्वे। आदेशग्रहणं किमिति ? स्थानीति सम्बन्धिशब्दोऽयम्। तत्र यथा पितृवत् स्थूल इत्युक्ते ऽन्तरेणाप्यत्र पुत्रग्रहणं सम्बन्धिशब्दत्वात् पुत्र इति गम्यते तथा स्थानिवदित्युक्ते विनाप्यादेशग्रहणेन सम्बन्धिशब्दत्वादादेश एव स्थानिवद् भवतीति विज्ञायत इत्यभिप्रायः। आनुमानिकस्येत्यादि। अस्तेर्भूरित्यादौ (२।४।५२) स्थानी अपि शब्देन साक्षात् प्रत्याय्यते। आदेशोऽपि। पचत्वित्यत्र स्थान्यप्यानुमानिक आदेशोऽपि। तथाहि एरुरित्यत्र (३।४।८६) न वस्तुत इकार एव स्थानी अपितु तिशब्दः। नाप्युकार-मात्र आदेशः किं तर्हि ? तुशब्दः। लाघवार्थं तु तदेकदेशयोरिकारोकारयो रुच्चारणम्। तेनैकदेशद्वारेण समुदायस्य समुदाय एवादेशो विधीयते। तत्र यथा विषाणैकदेशेनोपलब्धेन विषाणी समुदायोऽनुमीयते तथैकदेशेनेकारेणो-कारेण च तिशब्द तुशब्दश्च। अत्र च शास्त्रे यस्य च क्रियाभिसम्बन्धः साक्षाच्छब्दादेव प्रतीयते यस्य च कुतश्चिदर्थप्रकरणादेरनुमीयते तयोः पूर्वस्य प्राधान्यमितरस्य विपर्य्यय इष्यते। तथाहि सहयुक्तेऽप्रधान ( २।३।१९ ) इत्यत्र वृत्तिकारः पुत्रेण सहागत इत्याद्युदाहृत्य वक्ष्यति पितुरत्र क्रियादिसम्बन्धः शब्देनोच्यते पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यमिति। प्रधानेतरयोश्च

सन्निधाने प्रधानस्यैव कार्य्येण संप्रत्ययो युक्तः । तथा चाह प्रधाने कार्य्यसम्प्रत्ययात् सिद्धमिति । अत्र हि यद्यादेश इति नोच्येत ततो य आदेशशब्देनोपादाय विधीयमानत्वात् प्राधान्यमनुभवति तस्यैव स्थानिवद्भावः स्यात् । नाप्रधानस्यानुमानिकस्य । तस्मात् तस्यापि स्थानिवद्भावो यथा स्यादित्येवमर्थमादेशग्रहणम् । तेन पचत्वित्यादावपि सुप्तिङन्तं (१।४।१४) पदमिति पदसंज्ञा सिद्धा भवति। कुतः पुनरेतदवसीयते ? एरु (३।४।८६) रित्यनेनैकदेशद्वारेण तुशब्दः समुदायो विधीयते । न पुनर्यथाश्रुतमिकारमात्रस्योकारमात्रमेवेति। पचत्वित्यत्र पदसंज्ञाकार्य्योपलब्धेः । तद्धि न विना पदसंज्ञया । सापि न विना तिङ्वद्भावेन । सोऽपि न विना समुदायादेशेनेति । तस्मिन् हि सति स्थानिवद्भावेन यत्नप्रतिपादितेन तिङ्भावो लभ्यते । नान्यथेति गतमेतत् । अथानुमानिके गृहीते कथमितरस्य ग्रहणं लभ्यते ? एवं मन्यते । स्थानिवदित्येतावानेको योगः कर्त्तव्यः । एतेन योगेनादेशः प्रधानभूतः सम्बन्धिशब्दत्वाल्लभ्यते । तत आदेश इति द्वितीयो योग आनुमानिकस्य स्थानिवद्भावाय । अत्र च स्थानिवदिति वर्त्तते । एवमुभयोः प्रत्यक्षानुमानशिष्टयोर्ग्रहणमुपपद्यते । अनल्विधाविति । द्वयोरपि योगयोः शेषभूतः । द्युपथित्यदादेश इत्यादि । दिव औत् (७।४।८४) । पथिमथ्यृभुक्षामात् (७।१।८५) । त्यदादीनाम (७।२।१०२) इत्येते हल्ङ्याब्भ्य इति (६।१।६८) सुलोपे कर्त्तव्ये न स्थानिवद्भवन्ति । तस्य हल्मात्रमाश्रित्य प्रवृत्तेः अलाश्रयत्वात् ।

## ५७ । अचः परस्मिन् पूर्वविधौ ।

किमर्थमिदमुच्यते ? अनल्विधौ स्थानिवद्भाव उक्तः । अल्विध्यर्थमिदम् । पटयतीत्यादौ ह्यत उपधाया ( ७।२।११६ ) इति वृद्धिरलाश्रया । अकारस्योपधाया अल्त्वात् । तस्मात् पूर्वेण न प्राप्नोतीत्येके । अजादेश एव परनिमित्तक एव पूर्वविधावेव कर्त्तव्ये स्थानिवद् भवतीति नियमार्थमित्यन्ये । अच इति स्थानिनिर्देश इति । अच इत्यनेन स्थानषष्ठ्यन्ततां दर्शयति । परस्मिन्निति । निमित्तसप्तमीति । न परसप्तमी । परशब्देनैव परस्योक्तत्वादित्यभिप्रायः । पूर्वविधाविति । विषय इति । प्रकृतत्वात् स्थानिवद्भावस्येति गम्यते । पूर्वविधौ विषये स्थानिवद्भवति । नान्यस्मिन्नित्यर्थः । पूर्वस्य विधिः पूर्वविधिः ।

विधिशब्दश्चायं कर्म्मसाधनः। विधीयत इति विधिः। भावसाधनो वा। विधानं विधिरिति। कर्मसाधने ह्येतस्मिन् पूर्वस्येति शेषलक्षणा षष्ठी। पूर्वस्य व्यवस्थितस्य लब्धसत्ताकस्य सम्बन्धिनि कार्य्ये कर्त्तव्य इत्यर्थः। भावसाधने तु पूर्वस्येति कृद्योगलक्षणा कर्मणि षष्ठी। पूर्वस्यापरिनिष्पन्नस्य विधाने कर्त्तव्य इत्यर्थः। पूर्वस्मिन् विधातव्य इति यावत्। पूर्वत्वं पुनरिहा-देशापेक्षमजपेक्षं निमित्तापेक्षं वा। एषामेवादेशादीनामिह सन्निधानात्। तत्रादेशः स्वरितत्वात् सन्निहितः। इतरयोस्त्वत्रैव सूत्र उपादानात्। ननु च त्रिष्वप्येषु दोषः। तत् कथमादेशाद्यपेक्षया पूर्वत्वं शक्यमाश्रयितुम्? आदेशापेक्षे हि पूर्वत्व आश्रीयमाणे पटयतीत्यादौ स्थानिवद्भावो न सिध्यति। लोपो हि तत्रादेशः। नच तेन पूर्वपरता सम्भवति। तस्याभावरूपत्वात्। स्यादेतत्। लोपस्य यः स्थानी तदपेक्षया पौर्वापर्य्यमस्तीति तद्द्वारेणा-देशापेक्षयाप्यौपचारिकं तद् भविष्यतीति वार्त्तमेतत्। बहुखट्वकादिषु मुख्ये पौर्वापर्य्ये सत्यौपचारिककल्पनाया अयुक्तत्वात्। व्यक्तिः पदार्थ इत्यस्य दर्शनस्याश्रयणाददोषः। व्यक्तौ हि पदार्थे प्रतिलक्ष्यं लक्षणं प्रवर्त्तते। तत्र यदि पटयतीत्यादिष्वौपचारिकत्वात् पौर्वापर्य्यस्य स्थानिवद्भावो न स्याद् यदेतद्विषयं लक्षणं तस्यानवकाशत्वाद् वैयर्थ्यं स्यात्। अयं तर्हि दोषः। व्याकरणमधीते वैयाकरणः स्वश्वस्येदं सौवश्व मित्यत्र य्वोः स्थानिवद्भावा-दैचोरायावौ प्राप्नुतः। तस्मात् प्रथमस्तावत् पक्षो ऽयुक्तः। द्वितीये तु काममेष दोषो न भवति। तथाहि तत्र योऽचः पूर्वस्तस्य विधौ कर्त्तव्ये स्थानिवद्भवतीत्येषः सूत्रार्थः। इह च न य्वाभ्यां पदान्ताभ्यामिति (७।३।३) वचनात् प्रागेवैजागमाद् यणादेशेन भवितव्यम्। तेन नास्त्यैचोरजपेक्षं पूर्व्वत्व-मिति न भवति स्थानिवद्भावः। तदभावादैचोरायावावपि न प्राप्नुतः। किन्त्व-त्राच इत्येतदादेशविशेषणार्थं षष्ठ्यन्तं प्रतिज्ञातम्। नतु पञ्चम्यन्तम्। तदा चाचः पूर्वस्येत्येष एवार्थो न लभ्यते। नैष दोषः। यद्यपि ह्यच इति षष्ठ्यन्तं तथापि यदा दिग्योगो विवक्ष्यते तदा पञ्चम्यन्तं सम्पद्यते। अयं तर्हि दोषः। इह तन्वन्तीत्युप्रत्ययस्य यणादेशे कृत इट् प्राप्नोति। नह्यत्राचः पूर्वस्य व्यवस्थितस्य किञ्चित् कार्य्यं विधीयते यतो यणादेशस्य स्थानिवद्भावा-

दिड़ागमो न स्यात् । तृतीये तु पक्षे यणादेश एव निमित्तात् पूर्वः । तस्य व्यवस्थितस्येटि विधातव्ये स्थानिवद्भावो लभ्यत इति न भवति तन्वन्तीत्यत्रेट्प्रसङ्गः । किन्त्वाद्ये पक्षे यो दोषः स इहापि प्रसज्येत । वैयाकरणः सौवश्वमित्यत्रापि य्वौ निमित्तात् पूर्वौ भवत इति । ननु च निमित्तात् पूर्वस्य कार्य्ये विधातव्ये स्थानिवद्भाव उच्यते । नचेह निमित्तात् पूर्वयो र्य्वोः किञ्चित् कार्य्यं विधीयते । नह्यायावादेशौ य्वोः कार्य्यम् । किं तर्हि ? ऐचः । नैतदस्ति । ऐचो हि यत् कार्य्यं तद् य्वोरपि सम्बन्धि भवत्येव । तयो स्तद्-भक्तयो स्तदवयवभूतत्वात् । अत्रोच्यते । आद्यन्तयोः पक्षयो र्यो दोष उक्तः स तावन्न भवति । यस्माद् वहिरङ्गावैचौ । तद्धिताश्रयत्वादङ्गाश्रयत्वाच्च । अन्तरङ्गावायावौ । तद्धितनिरपेक्षत्वाद् वर्णाश्रयत्वाच्च । असिद्धं वहिरङ्गमन्तरङ्ग इत्यसिद्धत्वादैचोरायावौ न भविष्यतः । इतरस्मिन्नपि पक्षे यो दोष उक्तः सोपि न भवत्येव । तत्र भावसाधनस्य विधिशब्दस्याश्रयणात् । द्विविधो हि विधिशब्दः प्राग् दर्शितः कर्म्मसाधनो भावसाधनश्च । तत्र कर्म्मसाधने सर्वमिष्टं न सिध्यतीति भावसाधनोऽप्याश्रीयते । तेन तन्वन्तीत्यत्रेट एवा-परिनिष्पन्नस्याचः पूर्वस्य विधाने कर्त्तव्ये स्थानिवद्भावः सिद्धो भवति । कर्म्मसाधनेऽप्यदोषः । यणादेश एवात्राचः पूर्वः । तस्य विधाने कर्त्तव्ये स्थानि-वद्भावो भविष्यति । आदेशापेक्षया हि पूर्वत्वे विधिशब्दे च कर्म्मसाधने तन्वन्तीत्यत्रेड़ागमप्रसङ्गो न निवार्य्य एव । नहि यणादेशात् पूर्वस्य व्यवस्थितस्य कस्यचिदिड् विधीयते । किं तर्हि ? यणादेशस्यैव । भावसाधने तु तस्मिन्न दोषः । यणादेशात् पूर्वस्यापरिनिष्पन्नस्येट एव विधानात् । तस्मात् तत्रापि पक्षे भावसाधन एव विधिशब्दोऽङ्गीकर्त्तव्यः । पटयतीति । तत्करोति तदाचष्ट इति णिच् । णाविष्ठवत् प्रातिपदिकस्येति टिलोपः । ननु चात्र व्यवधानात् पूर्वत्वं न सम्भवति । नैष दोषः । व्यवहितेऽपि हि पूर्वशब्दो वर्त्तते । यथा मथुरायाः पूर्वं पाटलिपुत्रमिति । ननु च द्वितीया समर्थाण्णिजुत्पद्यते । तत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां सत्यां जश्त्वे सति पड़यतीति भवितव्यम् । टिलोपस्य स्थानिवद्भावाज् जश्त्वं न भवतीति चेत् ? न । जश्त्वविधौ स्थानिवद्भावप्रतिषेधात् । नैष दोषः ।

तदाग्रष्ट इत्यत्र हि तदिति न द्वितीयासमर्थादिति। कुतस्तर्हि? कर्म्मण इति। कुत एतत्? अर्थनिर्देशपरत्वात्। एतदुक्तं भवति। कर्म्मसंज्ञकात् तदाग्रष्ट इत्यस्मिन्नर्थे णिज् भवतीति। तस्मादसुबन्तात् णिजुत्पत्तेः पद-संज्ञाया अभावाज् जश्त्वं न प्रवर्त्तते। अवधीदिति। हन्तेर्लुङ्। हनो वध लुङीति (२।४।४२) वधशब्दोऽदन्त आदेशः। अतो लोपः (६।४।४८)। आर्धधातुकस्येट्। अस्तिसिचोऽपृक्ते (७।३।९६) इतीट्। इट ईटीति (८।२।२८) सिचो लोपः। हलन्तलक्षणेति। वदव्रजेत्यादेः (७।२।३) सूत्राद्धल्ग्रहणानुवृत्ते रतो हलादे र्लघोरिति (७।२।७) वृद्धि र्हलन्तलक्षणा। बहुखट्वक इति। ननुच स्वरविधिं प्रति न स्थानिवद् भवतीति प्रतिषेधं वक्ष्यति। अतः स्थानिवद्भावस्य प्राप्तिरेव नास्तीत्ययुक्तमेतदुदाहरणम्। नैतत्। विशेषे हि स प्रतिषेधः स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद् भवतीति। नचायं लोपाजादेशः स्वरो न भवतीति। खकाराकारस्यो-दात्तत्वं न भवति। कपि (६।२।१७३) पूर्वमित्युत्तरपदान्तोदात्तत्वमेव भवति। प्रश्न इति। यजयाचयतविच्छप्रच्छेत्यादिना (३।३।९०) नङ्। तुकि न स्थानिवद्भवतीति। तुकि कर्त्तव्ये न स्थानिवद्भवतीत्यर्थः। यदि हि स्याच् छकारमात्रस्य शादेशे कृते स्थानिवद्भावाद्विहितस्य तुकः श्रवणं स्यादित्येके। एतच्चायुक्तम्। अत्र ह्यन्तरङ्गत्वाच्छे चेति (६।१।७३) तुकैव प्राग् भवितव्यम्। नचात्रेदमस्ति वार्णादाङ्गं बलीय इति। नानाश्रयत्वात्। यत्र ह्येकं निमित्तमाश्रित्य युगपद् वार्णं माङ्गञ्च प्राप्नोति तत्रेदमुपतिष्ठते। यथेयायेति। अत्राकारमाश्रित्याभ्यासेकारस्येको यणचीति (६।१।७७) यण् प्राप्नोति। अभ्यासस्यासवर्णे (६।४।७८) इतीयङ् च। तत्र वार्णादाङ्गं बलीय इत्यस्योपस्थानादियङेव भवति। प्रश्न इत्यत्र तु शादेश मनुनासिक-माश्रयति। तुक् पुनश्छकारम्। अतो नानाश्रयत्वान्नोपतिष्ठते। तस्मात् तुकात्र भवितव्यमेव। अवश्यञ्चैतदेवं विज्ञेयम्। अन्यथा च्छ्वोः शूडनुनासिके (६।४।१९) चेत्यत्र यद्वक्ष्यति वृत्तिकारो—ऽन्तरङ्गत्वाच्छे चेति (६।१।७३) तुकि कृते सतुकस्यायमादेश इति—तद्विरुध्यते। अन्ये तु व्याचक्षते च्छ्वोः शूडनु-नासिकेति (६।४।१९) सूत्रे सतुकस्य 'च्छकारस्य निर्देश इत्येवं केनचिदाचार्य्येण

शिष्याः प्रतिपादिताः। केनचित्तु तुग्विरहितस्य शुद्धस्यैत्येवम्। उभयञ्चैतत् प्रमाणम्। द्वैतत्वे तत्वाङ्गेन वा च्छो विशिष्येते। छकारवकाराभ्यां वाङ्गमिति। तत्राद्ये पक्षे ऽङ्गस्य यश्छस्तस्य शादेश इति वाक्यार्थः। सतुक्कस्य च स्थानित्वे नोपादानात्। अन्तरङ्गे तुकि कृते नानर्थकेऽलोऽन्त्यविधिरिति तदन्तविध्यभावात् समुदायस्यैवादेशो भवति। यदा शकारविधौ सतुक्कस्य च्छकारस्य निर्देशः प्रश्न इत्येतत् तदानीमजग्रहणस्याप्रत्युदाहरणमेव। तुकः पुनः प्रसङ्गाभावात्। यदा तु च्छकारवकाराभ्यामङ्गं विशिष्यते तदा छकारान्तस्याङ्गस्य स्थानित्वम्। अस्मिन् पक्षे शविधौ शुद्धएव च्छकार उपात्तो वेदितव्यः। अन्तरङ्गत्वात् तु पूर्वं तुकि कृते पश्चादलोऽन्त्यपरिभाषाया उपस्थानाच् छकारमात्रस्य शकारः। तस्मिन् कृते निमित्ताभावात् तुको निवृत्तिः। यथा स्यातित्यत्र षत्वनिवृत्तौ ष्टुत्वस्य। अत्र पक्षे प्रश्न इत्येतत् प्रत्युदाहरणमजग्रहणस्य। यद्यत्र स्थानिवद्भावः स्यात् तुकः प्रत्यावृत्तिर्भवेत्। निमित्तसद्भावात्। यथा प्रत्यष्ठादित्यत्र ष्टुत्वस्य। तुकि न स्थानिवद्भवतीत्यस्यायमर्थः। योऽसौ निमित्ताभावान्निवृत्तस्तुगासीत् तमेव पश्चात् प्रत्यावर्त्तमानं प्रति न स्थानिवद् भवतीति पुनः प्रत्यावृत्तिरेव। पूर्वविधिरिति। ननु च यद्यत्र तुकः प्रत्यावृत्तिः स्यान् नङो ङित्करणमनर्थकं स्यात्। तद्धि प्रच्छेः संप्रसारणार्थं वा विच्छेर्गुणप्रतिषेधार्थं वा क्रियते। तत्र प्रच्छेर्नङि संप्रसारणेन न भवितव्यम्। प्रश्ने चासन्नकाल इति ( ३।२ ११७ ) निपातनात्। यदि च स्थानिवद्भावे सति तुकः प्रत्यावृत्तिः स्यात् ततो गुणप्रतिषेधार्थमपि न स्यात्। अलघूपधत्वादेव गुणो न भविष्यति। ततश्चानर्थकमेतत् स्यात्। नानर्थकम्। अनित्यमागमशास्त्रमिति ज्ञापनार्थत्वात्। अनित्यत्वज्ञापने त्वागमशासनस्य स्नुक्रमोरनात्मनेपदनिमित्त इत्यत्र (७।२।३६) यद्वक्ष्यति—क्रमेस्तु कर्त्तर्यात्मनेपदविषयादसत्यात्मनेपदे कृति प्रतिषेधो वक्तव्य इति—तन्न वक्तव्यं भवति। उछि उञ्छे विछ गतौ सनाद्यन्ता (३।१।३२) धातव इत्येवमादयो निर्देशाश्चोपपन्ना भवन्ति। आक्राष्टामिति। कृष विलेखने। आङ्पूर्वाल्लुङ्। च्लिः। स्पृशमृशकृषतृपदृपां च्लेः सिज् (३।१।४४ वा) वेत्युपसंख्यानात् क्सस्यापवादः पक्षे सिच्। तमस्ताम्। अनुदात्तस्य ( ६।१।५९ ) चर्दुपधस्यान्यतरस्यामित्य-

मागमः। यणादेशः। वदव्रजेत्यादिना (७।२।७) वृद्धिः। वैयाघ्रपद्य इति। व्याघ्रस्येव पादावस्येति बहुव्रीहिः। पादस्य लोपो (५।४।१३८) ऽहस्त्यादिभ्य इत्यन्त्यलोपः। व्याघ्रपादिति स्थिते गर्गादित्वाद् यञ् (४।१।१०५)। पादः पदिति पद्भावः (६।४।१३०)। आदीध्य इति। अदादित्वाच्छपो लुक्। अथात्र टेरेत्त्वात् प्रागेव कस्माल्लोपो न भवति? स्याद् यदि परस्मिन्निति वचनं न स्यात्। तस्मिन् ह्यसत्युभयोर्नित्यत्वात् परत्वाच्च लोपेनैव युक्तं भवितुम्। परस्मिन्नित्युच्यमाने तु स्थानिवद्भावाभावात् कृते टेरेत्त्वे न प्राप्नोतीत्यनित्यो लोपः। टेरेत्त्वं तु कृताकृतप्रसङ्गित्वान् नित्यम्। तस्मात् तदेव पूर्वं भवति। हे गौरिति। गोतो णिदिति (७।१।९०) णित्त्वात् सर्वनामस्थानस्याचो ञ्णितीति वृद्धिः (७।२।११५)। सम्बुद्धिलोपे कर्त्तव्य इति। एङ्ह्रस्वात् सम्बुद्धे (६।१।६९) रित्यनेन। बाभ्रव्येति। बभ्रोरपत्यमिति मधुबभ्र्वोर्ब्राह्मण (४।१।१०६) कौशिकयो रिति यञ्। ओर्गुणः (६।४।१४६)। वान्तो यि प्रत्यय (६।१।७९) इति वान्तादेशः। आदिवृद्धिः। बाभ्रव्य इति स्थिते वृद्धाच्छः (४।२।११४)। यस्येति (६।४।१४८) चेत्यकारलोपः। अवादेशो न स्थानिवद्भवतीति। ननु चासत्यपि स्थानिवद्भावे सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवितव्यमेवात्र यलोपेन। तथाहि यकारादाववादेशेनात्मलाभः प्रतिलब्ध इति नोत्सहते स तं बाधितुम्। नैतदस्ति। संघातो ह्यत्र सन्निपातलक्षणो नावयवो हल्। सत्यपि वा तस्य सन्निपातलक्षणत्वे न भवत्येष दोषः। अनित्यत्वात् सन्निपातलक्षणपरिभाषायाः। अनित्यत्वं तु नलोपः (८।२।२) सुप्स्वर इत्यादौ सूत्रे ज्ञापयिष्यते। नैधेय इति। निपूर्वो डुधाञ उपसर्गे घोः (३।३।९२) किः। आतो लोपः (६।४।६४)। निधि इति स्थिते द्व्यच इतश्चानिञ (४।१।१२२) इति ढक्। ननु पूर्व्वस्माद् विधिः पूर्व्वविधिरिति पञ्चमीसमासस्याप्यभीष्टत्वात् पूर्वस्मादपि विधौ कर्त्तव्ये स्थानिवद्भावेन भाव्यम्। तथाहि ठस्येक (७।३।५०) इत्यत्र वक्ष्यति मथितं पण्यमस्य माथितिक इत्यत्र यस्येति (६।४।१४८) लोपे कृते इसुसुक्तान्तात्कः (७।३।५१) इति स्थानिवद्भावादिकस्य कादेशः प्राप्तः। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति। अकारलोपस्य स्थानिवद्भावत्वात्। पूर्वस्मादपि

विधौ स्थानिवद्भवतीति । तदेवं यस्मात् पूर्वस्मादपि विधौ स्थानिवद्भावोऽनेन भवति तस्माद् द्वे गौरित्यादिष्वपि स्थानिवद्भावेन भवितव्यमेवेत्ययुक्तान्येतानि प्रत्युदाहरणानि । नैष दोषः । पूर्वस्माद् विधौ कर्त्तव्ये यः स्थानिवद्भावस्त-स्यानित्यत्वात् । अतएव चानित्यत्वादप्रधानभूतोऽसाविति वृत्तावस्य सूत्रस्य पूर्वस्मादिति न प्रतिपादित स्तदेवाप्राधान्यमस्य दर्शयितुम् । कुतः पुन स्तस्यानित्यत्वमवसितम् ? निष्ठायां सेटीत्यत्र ( ६।४।३२ ) सेड्ग्रहणात् । तदेवमर्थं क्रियते । इटि कृते णिलोपो यथा स्यादिति । यदि ह्यकृत एव तस्मिन् णिलोपः स्यात् कारितमित्यत्रेडागमो न स्यात् । एकाच इति प्रतिषेधात् । तथाच तत्र वक्ष्यति सेड़िति किम् ? संज्ञपितः पशुः । सनीवन्तर्धेति (७।२।४९) ज्ञपेरिड् विकल्प्यते । यस्य विभाषेति (७।२।१५) निष्ठायामिट्-प्रतिषेधः । अथ पुनरेकाच इति तत्रानुवर्त्तते । तत्र निष्ठायामत्र भवितव्य-मिड़ागमेनेति सेड्ग्रहण मनर्थकं स्यात् । तत् क्रियते कालावधारणार्थम् । इड़ागमे कृते णिलोपो यथा स्यादिति । अकृते तस्मिंष्टिलोपे सति कारित-मित्यत्रैकाच उपदेशे ऽनुदात्तादिति ( ७।२।१० ) प्रतिषेध इटः प्रसज्येत । यदि च पूर्वस्माद् विधौ कर्त्तव्ये नित्यं स्थानिवद्भावः स्यान् णिलोपस्य स्थानिवद्भावे सत्यनेकाच्त्वादिट्प्रतिषेधस्य प्रसङ्ग एव नास्तीति सेड्ग्रहणं न कुर्य्यात् । कृतञ्च । ततोऽवसीयते पूर्वस्माद् विधावनित्यः स्थानिवद्भाव इति । तेन गौरित्यादिषु पूर्वस्माद् विधौ कर्त्तव्ये स्थानिवद्भावो न भवति । अथ विधिग्रहणं किमर्थम् ? यावता पूर्वस्येत्येवं सिद्धम् । तथाहि कार्य्यापेक्षया षष्ठी भविष्यति । पूर्वस्य विधौ कर्त्तव्य इति । नैतदस्ति । असति हि विधिग्रहणे यदि पूर्वस्येत्युच्येत पूर्वस्माद् विधौ स्थानिवद्भावो न स्यात् । अथ पूर्वस्मादित्यु-च्येत पूर्वस्य विधौ न स्यात् । विधिग्रहणे सति षष्ठीसमासः पञ्चमीसमासश्च लभ्यत इति सर्वत्र सिध्यति । तस्मात् समासद्वयार्थं विधिग्रहणं कर्त्तव्यम् ।

## ५८ । न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घ-जश्चर्विधिषु ।

अत्रापि विधिशब्दो भावसाधनः कर्म्मसाधनश्च । स च प्रत्येकमभिसम्ब-

ध्यते। तत्र यथायोगं क्वचिद् भावसाधन आश्रीयते क्वचित् कर्म्मसाधनः। तत्र द्विर्वचनविधौ भावसाधनः। तत्र हि तदेव विधातव्यम्। नहि तस्यावस्थितस्य किञ्चित् कार्य्यम्। अन्यत्र तु कर्म्मसाधनः। तत्र हि व्यवस्थितस्य पदान्तादेः कार्य्यान्तरविधानात्। कौ स्तो यौ स्त इति। अस्तेर्लट्। तस्। अदादित्वाच्छपो लुक्। पूर्वविधावावादेशे यणादेशे च कर्त्तव्ये स्थानिवत् स्यादिति। कथं पुनः स्थानिवत् स्यात्? यावता पदसंस्कारार्थैव प्रयुक्तत्वाद् व्याकरणस्य स्त इत्यादिकं पदं पदान्तरनिरपेक्षमेव संस्क्रियते। अनादिष्टादचो यः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावेन भवितव्यम्। न चायं प्रकारः पदान्तरनिरपेक्षे पदसंस्कारे सम्भवति। स्त इत्यादिके पदे संस्क्रियमाणे कावित्यादेः पदान्तरस्यासन्निधानात्। किं पुनरिदं राजशासनं पदसंस्कारार्थैव शब्दानुशासनं कर्त्तव्यमिति? अथ शास्त्रकारस्यैवायमभिप्राय इति चेत्? न। शास्त्रकारेण हि युष्मद्युपपदे (१।४।१०५) समानाधिकरणे स्थानिन्यपि मध्यम इति युष्मदाद्युपपदे मध्यमादिपुरुषविधानाद् वाक्यसंस्कारप्रयुक्तमपि शास्त्रमेतदिति सूचितम्। अत्र कौ इत्यादिकं पदं प्रागेव व्यवस्थाप्य स्त इत्यादेः पदस्य संस्कारे क्रियमाणे ऽनादिष्टादचः पूर्व औकारादिर्भवतीति स्थानिवद्भावः स्यात्। अतः प्रतिषेध उच्यते। ननु च दध्यत्रेत्येवमादौ प्रतिषिद्धेऽपि स्थानिवद्भावे वहिरङ्गस्य यणादेशस्यासिद्धत्वादन्तरङ्गं द्विर्वचनं न प्राप्नोति। तत् किमित्येवमाह अस्माद्वचनाद् भवतीति। नच शक्यं वक्तुं स्थानिवद्भावप्रतिषेधादसिद्धं वहिरङ्गमित्येषा न प्रवर्त्तत इति। यत्रोभयमेकपदाश्रयं पट्व्यौ पट्व्यः शुच्यौ शुच्य इत्येवमादौ तत्र स्थानिवद्भावप्रतिषेधस्यार्थवत्त्वान् नैष दोषः। द्विर्वचनमेव वहिरङ्गम्। वह्वपेक्षत्वात्। तथाह्यच उत्तरस्य यरो ऽनचीति च त्रितयं तदपेक्षते। यणादेशस्त्विको ऽचीति द्वयमेव। वरे इति। ननु चात्र समासे सति सप्तम्या लुका भवितव्यम्। तत् कथं वरे इति निर्देशः। अतएव निपातनादलुगित्यदोषः। अन्ये त्वोकारप्रश्लेषोऽत्रेति वर्णयन्ति। एवञ्च सम्बन्धं कुर्वन्ति। वरे योऽ जादेशस्तस्य विधिं प्रति न स्थानिवत्। ईविधिं च प्रति न स्थानिवदिति। तेनामलक्याः फलं विकार इति नित्यं वृद्धशरादिभ्य

( ४।३।१४४ ) इति मयट्। तस्य फले लुगिति ( ४।३।१६२ ) लुक्। अतो लुक् तद्धितलुकीति ( १।२।४९ ) गौरादिलक्षणस्य ङीषो लुकि कृते तस्य स्थानिवद्भावाद् यस्येति चेति ( ६।४।१४८ ) लोपः प्राप्नोति। ईकारे परतो यो विधिस्तं प्रति स्थानिवद्भावप्रतिषेधान्न भवति। ननु चाजादेशः परनिमित्तकः पूर्वविधौ स्थानिवद्भवतीत्युच्यते। नच लुका पौर्व्वापर्य्यमस्तीत्यतएव स्थानिवद्भावो न भविष्यति। तदप्रयोजनमीकारप्रश्लेषस्य। लोपेनापि तर्हि पौर्वापर्य्यं नास्तीति पटयतीत्यादावपि स्थानिवद्भावो न स्यात्। अथ तत्र स्थानिद्वारकं पौर्वापर्य्यं सम्भवति। इहापि तथा स्यात्। ये त्वीकारप्रश्लेषं नेच्छन्ति त आमलक्याः फलं विकार आमलकमित्येतदर्थं नेति योगविभागं कुर्वन्ति। यायावर इति। भृशं यातीति धातोरेकाच इत्यादिना (३।१।२२) यङ्। द्विर्वचनम्। अभ्यासस्य ह्रस्वः। दीर्घोऽकित इति ( ७।४।८३ ) दीर्घः। ततो वरच्। अतो लोपे कृते लोपो ( ६।१।६६ ) व्योर्वलीति यकारलोपः। अतो लोपः परनिमित्तक इति। आर्धधातुके परतो विधानात्। यद्यतो लोपः परनिमित्तकस्ततो ऽचो (३।१।९७) यदित्यत्राज्ग्रहणं किम् ? यावता हलन्तात्ण्यतं वक्ष्यतीति चोद्यं समुत्थाप्याजन्तभूतपूर्वादपि यथा स्याद् दित्स्यं धित्स्यम् इति यद् वक्ष्यति—तद् विरुध्यते। नहि परनिमित्तकेऽतो लोपे ऽजन्तभूतपूर्व्वाद् यतो विधिः सम्भवति। प्राग् कृदुत्पत्तेरतो लोपस्याभावात्। अभावस्तु परस्य निमित्तस्याभावात्। पक्षभेदाददविरोधः। तत्र ह्यार्धधातुक इति वर्त्तते। आर्धधातुक इति विषयसप्तमी चैषा। परसप्तमी चेति पक्षद्वयम्। आर्धधातुकसामान्यविवक्षायां सामान्येन पौर्वापर्य्यं न सम्भवतीति विषयसप्तमी भवति। आर्धधातुकव्यक्तिविवक्षायां तु व्यक्तेः पौर्वापर्य्यं सम्भवतीति परसप्तमी। यदा तु व्यक्तिद्वारकं सामान्यस्य पौर्वापर्य्यं विवक्ष्यते तदापि परसप्तम्येव। तत्राद्ये पक्ष आर्धधातुके विषयभूते प्रागेव यदुत्पत्ते रतो लोपो भवति। इतरत्र तु तस्मिन्नुत्पन्ने। तत्राचो यदित्यत्र यदज्ग्रहणस्य प्रयोजनं वक्ष्यति तत्पूर्वम् पक्षमाश्रित्य। यत्त पुनरिहातो लोपः परनिमित्तक इत्युक्तं तदितरं पक्षम्। तस्माद् विषयभेदाददविरोधः। परसप्तमीपक्षे

तु तत्राज्ग्रहणं विस्पष्टार्थमेव वेदितव्यम् । कथं पुनर्ज्ञायते परसप्तमीपक्षोऽपि तत्राभिमत इति ? अनुदात्तेतश्च हलादेरित्यादि (३।२।१४९) ग्रहणात् । तत्रेवमर्थं क्रियते । हलन्तादित्येवं मा विज्ञायीति । एवं हि विज्ञायमाने जुगुप्सनः मीमांसन इत्यत्र युच् न स्यात् । अजन्तत्वात् । यदि चार्धधातुक इति विषयसप्तम्येवैषाभिमता स्यान्न परसप्तम्यपि तदा ऽदिग्रहणमनर्थकं स्यात् । आर्धधातुके विषये ऽकारलोपे कृते जुगुप्सतिमीमांसत्योरपि हलन्तत्वात् । तस्मादादिग्रहणाद् विज्ञायते परसप्तमीपक्षोऽपि तत्राभीष्ट इति । विषयसप्तमीपक्षे तु तत्रादिग्रहणं विस्पष्टार्थमेव द्रष्टव्यम् । कण्डूतिरिति । कण्ड्वादिभ्यो (३।१।२७) यक् । तदन्तात् स्त्रियां (३।३।९४) क्तिन् । चिकीर्षको जिहीर्षक इति । चिकीर्षजिहीर्षशब्दाभ्यां ण्वुल् । शिषेः पिषेश्चेति । शिष्लृ विशेषणे । पिष्लृ सञ्चूर्णने । हित्वधित्वष्टुत्वजश्त्वेष्विति । सेर्ह्यपिच्चेति (३।४।८७) हेरादेशे कृते हुझल्भ्यो (६।४।१०१) हेर्धिरिति धिरादेशः । ष्टुना ष्टुरिति ष्टुत्वम् (८।४।४१) । झलां जश् (८.४ ५३) झशीति जश्त्वम् । ननु चात्र स्थानिवद्भावस्य प्राप्तिरेव नास्ति । यो ह्यनादिष्टादचः पूर्वं स्तस्य विधौ स्थानिवद्भवतीत्युच्यते । न चायमनादिष्टादचः पूर्वः । तत् किं प्रतिषेधेन ? नैष दोषः । स्थानिनो नकारस्याऽनादिष्टादजपेक्षं पूर्वत्वमस्तीति । तदादेशोऽप्यनुस्वारः स्थानिवद्भावादनादिष्टादचः पूर्व इति लभ्यते । शिंषन्तीत्यादि । किमर्थं पुनरुदाहरणान्तरोपन्यासः ? यावता शिण्ढीत्याद्यनन्तरोक्तमेवेदं युक्तमुदाहरणम् । एवं मन्यते । यदि तदेवोदाह्रियते तदा यत्र परसवर्णं स्तत्रानुस्वारेण भवितव्यम् । तत्रैव हि स विधीयते । ततश्च नान्तरीयकत्वात् परसवर्णविधौ स्थानिवद्भावप्रतिषेधेऽनुस्वारविधावपि स्थानिवद्भावप्रतिषेधः कृत एव । ततोऽनुस्वारग्रहणं पृथङ् न कर्त्तव्यमिति कस्यचिद् भ्रान्तिः स्यात् । तस्माद् यत्र परसवर्णो न सम्भवति तदेवोदाहरणं युक्तमिति । प्रतिदीव्नेति । दिवेः कनिन् कृषीत्यादिना कनिन् प्रत्यये रूपम् । हलि चेति । उपधायाश्चेति (७।१।१०१) दीर्घत्वन्न स्यादिति । हलि (८।२।७७) चेत्यनेनैवात्र दीर्घत्वम् । उपधायाश्चेत्येतदिदानीन्तनकुलेखकैः प्रमादाल्लिखितम् । तथाहि उपधायाश्चेत्यत्र (७।१।१०१)

वक्ष्यति प्रतिदीव्न इत्यत्र तु हलि चेति दीर्घत्वमिति । ननु च स्थानिवद्भावे प्रतिषिद्धेऽपि न भकुर्छुरामिति ( ८।२।७९ ) दीर्घत्वप्रतिषेधेनात्र भवितव्यम् । तत् किमित्येवमाह । अस्माद् वचनाद् भवतीति । नच स्थानिवद्भावप्रतिषेधसामर्थ्यादत्र प्रतिषेधो न भवतीति शक्यं परिकल्पयितुम् । स्थानिवद्भावप्रतिषेधस्य पिपठीरित्यत्रार्थवत्त्वात् । अत्र हि पिपठिषतेः क्विपि कृतेऽतो लोपे रुत्वे च—रुत्वं पुनरस्य पूर्वत्रासिद्धमिति ( ८।२।१ ) षत्वस्यासिद्धत्वाद्—यदि स्थानिवद्भावो न प्रतिषिध्येत ततोऽकारलोपस्य स्थानिवद्भावाद् र्वोरुपधाया दीर्घ इक ( ८।२।७६ ) इति रेफवकारान्तस्य धातोरुच्यमानं दीर्घत्वं न स्यात् । एवं मन्यते । र्व्योरुपधाया ( ८।२।७६ ) इत्यधिकाराद् रेफवकारान्तस्य भस्य दीर्घत्वं प्रतिषिध्यते । नचैतद् रेफवकारान्तम् भसंज्ञकम् । अपितु नकारान्तमिति । सग्धिरिति । समाना ग्धिरिति विशेषणसमासः । समानस्य च्छन्दस्य ( ६।३।८४ ) मूर्धप्रभृत्युदर्केष्विति सभावः । बब्धामिति । भस भर्त्सनदीप्त्योः । अभ्यासे चर्च ( ८।४।५४ ) इत्यभ्यासभकारस्य जश्त्वं बकारः । जक्षतुः । जक्षुरिति । लिट्यन्यतरस्यामिति ( २।४।४० ) घस्लादेशः । कुहोश्चु रित्यभ्यासघकारस्य ( ७।४।६२ ) चुत्वं झकारः । तस्य पूर्ववज्जश्त्वं जकारः । बहुवचने घस्लादेश इति । लुङ्सनोर्घस्लृ ( २।४।३७ ) इत्यनेन । बहुखट्वक इति । अत्र स्थानिवद्भावाद् ङस्यान्तेऽन्त्यात् पूर्वमिति ( ६।२।१७४ ) खकारस्योदात्तत्वं न भवति । कपि ( ६।२।१७३ ) पूर्वमितिट्वशब्दस्याकारस्यैव भवति । किर्योर्गिर्योरिति । र्वोरुपधाया दीर्घ इकः ( ८।२।७६ ) । हलि चेति ( ८।२।७७ ) दीर्घत्वं न भवति । एतच्च व्युत्पत्तिपक्षमाश्रित्योक्तं यदा कॄग्रोरिच्चेति किरतेर्गिरतेश्च किरिगिरिशब्दौ व्युत्पाद्येते । अव्युत्पत्तिपक्षे त्वसत्यपि स्थानिवद्भावे धातुत्वाभावान्न भवत्येव दीर्घत्वम् । तथा ह्यव्युत्पत्तिपक्षमाश्रित्योपधाया श्चेत्यत्र ( ७।१।१०१ ) वक्ष्यति उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति किर्योर्गिर्योरित्येवमादिषु दीर्घो न भवतीति । वाय्वोरिति । लोपो व्योर्वलीति ( ६।१।७६ ) यलोपो न भवति ।

## ५६ । द्विर्वचनेऽचि ।

पूर्वं कार्य्यातिदेशः कृतः । इदानीन्तु रूपातिदेशार्थमिदमारभ्यते । अथवा निमित्तात् पूर्वमित्येतस्मिन् पक्षेऽनन्तरसूत्रेण द्विर्वचनविधिं प्रति प्रतिषेधः प्राप्त इत्यस्यारम्भो वेदितव्यः । द्विर्वचनेऽचीति समानाधिकरणे सप्तम्यौ । तत्राज् विशेष्यः । द्विर्वचनं विशेषणम् । विशेषणविशेष्यभावस्य च प्रयोजनं दुद्रूषतीति प्रत्युदाहरणे दर्शयिष्यते । कथं पुनरज् द्विर्व्वचनशब्देनोच्यते । द्विर्वचननिमित्तत्वात् । अतएव वृत्तावाह द्विर्वचननिमित्तेऽचीति । भवति हि तन्निमित्तत्वात् ताच्छब्द्यम् । यथा आयुर्घृतमिति । परसप्तमी चेय-मपीति यस्मिन् विधिस्तदादावल्ग्रहणमिति । अजादाविति द्रष्टव्यम् । परस्मिन्निति च प्रकृतत्वात् परस्मिन्नजादाविति गम्यते । अथवा द्विर्वचनस्य प्रत्ययविशेषनिमित्तत्वाद् द्विर्वचनग्रहणेन प्रत्ययः सन्निधापितः । तेनाजादौ प्रत्यय इति प्रतीयते । यदि तर्ह्यजादावजादेशः स्थानिवद्भवति पपाविति न सिध्यति । नह्यजादावादेशः । किं तर्हि ? अच्येव । इहापि व्यपदेशि-वद्भावेनाजादित्वमस्तीत्यदोषः । इह तर्हि न सिध्यति चक्रतुरिति ? अच्येव तु यणादेशो विधीयते । नत्वजादौ । नैष दोषः । यो ह्यत्राचि यणादेशो विधीयते सोऽजादावपि भवत्येव । यदि द्विर्वचननिमित्तेऽच्यजादेशः स्थानि-वद्भवति सर्वस्यामवस्थायां द्विर्वचनादुत्तरकालमपि स्यादित्यत आह द्विर्व्वचनएव कर्त्तव्य इति । एवकारेण द्विर्वचनक्रियाकालात् कालान्तरे स्थानिवद्भावस्याभावं दर्शयति । कथं पुनरेतल्लभ्यते ? यावतैकं द्विर्वचनग्रहणं तेन चाज् विशेषितः । एवं मन्यते । द्वितीयमपि द्विर्वचनग्रहणमनन्तरसूत्रादि-हानुवर्त्तते । अथवा द्विर्वचनञ्च द्विर्वचनञ्चेत्येकशेषं कृत्वा द्विर्वचन इति निर्देशः कृतः । तत्रैकेन द्विर्वचनग्रहणेन द्विर्वचननिमित्तेऽचीत्येषोऽर्थो लभ्यते । द्वितीयेन तु द्विर्वचन एव कर्त्तव्य इति । इह द्विर्वचने कर्त्तव्ये स्थानिवद्भावो विधीयत इति द्विर्वचनकार्य्यार्थ एवैष प्रतीयते । साच्कस्य द्विर्वचनं विधीयमानमनच्कस्य न प्राप्नोतीति युज्यते द्विर्वचनकार्य्यार्थत्वमस्य । द्विर्वचनकार्य्यार्थे त्वस्मिं श्चक्रतु श्चक्रुरित्यत्रास्यानच्कस्य द्विर्वचने कृते सतीष्टमभ्यासरूपं न सिध्यतीति व्यामोहाद् यो मन्यते तं प्रत्याह रूपाति-

देशश्चायमिति । चशब्दोऽवधारणे । रूपातिदेश एव न कार्य्यातिदेश इत्यर्थः । कुतः पुनरेष निश्चयो रूपातिदेशश्चायमिति । अज्ग्रहणात् । तस्य ह्येतत् प्रयोजनम् । जेघ्नीयते देध्मीयत इत्यत्र मा भूदिति । यदि चायं द्विर्वचन-कार्य्यातिदेशः स्यान्न रूपातिदेशोऽज्ग्रहणमनर्थकं स्यात् । भवत्वत्र स्थानिवद्भावः । तथापि न कश्चिद्विशेषः । तथाहि यद्यप्यत्र स्थानिवद्भाव एवमपि द्विर्वचनकार्य्येण भवितव्यम् । अथापि न स्थानिवद्भाव एवमपि भवितव्यम् । उभयत्रापि साच्कत्वात् । ततश्च कथमेतत् प्रत्युदाहरणम् ? तदेतदज्ग्रहणं कथमर्थवद् भवति ? यद्येष रूपातिदेशो रूपेऽस्यातिदिश्यमाने यद्यज्ग्रहणं न क्रियते तदिहापि रूपातिदेशे सति घ्रा इति ध्मा इति च द्विर्वचनं स्यात् । तथाऽनिष्टमभ्यासरूपं प्रसज्येत । तस्मादज्ग्रहणाद् रूपातिदेशोऽयमिति निश्चीयते । यद्येवं भेदनिबन्धनो वतिर्न प्राप्नोति । स्थान्येव हि पुनरात्मीयं रूपं प्रापित इति कुतो भेदः ? आतिदेशिकानाति-देशिकत्वेन रूपभेदस्य विवक्षितत्वाददोषः । द्विर्वचनएव कर्त्तव्य इति यदुक्तं तस्यार्थं विस्पष्टीकर्त्तुमाह नियतकाल इति । कृते द्विर्वचन इत्यादिना तदेव नियतकालत्वं दर्शयति । जघ्नतुरिति । अभ्यासाच्चेति ( ७।३।५५ ) हकारस्य कुत्वम् । आटिटदिति । अटतेर्हेतुमति णिच् । लुङ् । चङ् । चङीत्य (६।१।११) जादेर्द्वितीयस्येति ( ६।१।२ ) द्विर्वचनम् । आड़जादीना-मित्याड् ( ६।४।७२ ) भवति । निनयेत्यादि । णलुत्तमो वेति ( ७।१।९१ ) यदा णित्त्वं नास्ति तदा गुणः । यदा णित्त्वं तदा वृद्धिः । जग्ले मम्ले इति । ग्लै हर्षक्षये । म्लै गात्रविनामे । आदेच ( ६।१।४५ ) उपदेशेऽशितीति इत्यात्त्वम् । भाव आत्मनेपदम् । लिटस्तझयोरेशिरेजित्येश् ( ३।४।८१ ) । श्रवणमाकारस्य न भवतीति । यदा कालावधिपरिग्रहार्थं द्विर्वचनग्रहणं न क्रियते तदोत्तरकालमपि स्थानिरूपं प्रसज्येत । ततश्चाकारस्य श्रवणमेव स्यात् । आतो लोपस्य तु णेद इत्येवमाद्यवकाशः । श्रूयमाणे चाकारे परेण सह वृद्धिः स्यात् । दुद्यूषतीति । दिवेः सनीवन्तर्धेत्यादिना ( ७।२।४९ ) यदा पक्ष इड़ागमो न क्रियते तदेको झल् ( १।२।९ ) हलन्ताच्चेति ( १।२।१० ) कित्त्वम् । ततः च्छ्वोः ( ३।४।१९ ) शूड़नुनासिके चेतूठ् ।

स च द्विर्वचननिमित्तं न भवति। तत्र यदि द्विर्वचननिमित्तत्वेन नाज् विशेष्यत जठि परतो यो यणादेश स्तस्यापि स्थानिवद्भावः स्यात्। एवञ्चा-भ्यासरूपमिवर्णान्तं श्रूयेत। द्विर्वचननिमित्तात्परिग्रहे तु द्यू इत्यस्य द्विर्वचनं भवति। तत्र हलादिशेषह्रस्वत्वयोर्दुद्यूषतीत्यभ्यासरूपमुकारान्तं सिध्यति।

## ६०। अदर्शनं लोपः।

अदर्शनमित्यादि। ननु चादर्शनानुपलब्धिशब्दावनुपलब्धिसामान्यवचनौ। अश्रवणानुच्चारणशब्दौ त्वनुपलब्धिविशेषणवचनौ। तथाह्यश्रवणादिशब्दोच्चारणे शब्दस्यैवानुपलब्धिः प्रतीयते। नानुपलब्धिमात्रम्। नच सामान्यविशेष-शब्दानामेकार्थता। तत् किमित्येवमाह अनर्थान्तरमिति। एवं मन्यते। सामान्यशब्दा अपि प्रकरणवशाद् विशेषे वर्त्तन्ते। इह च शब्दा व्युत्पाद्यत्वेन प्रकृता स्तस्माद् यद्यप्यदर्शनानुपलब्धिशब्दौ सामान्यवचनौ तथापीह प्रकरण-सामर्थ्याद् विशेषे शब्दानुपलब्धावेव वर्त्तेते। इह वृद्धिरित्यादिकाः संज्ञाः शब्दानां विहिताः। तद्वदिहाप्यदर्शनमित्यस्यैव शब्दस्य लोप इत्येषा संज्ञा स्यात्। ततश्च लोपप्रदेशेष्वदर्शनशब्दस्योपस्थानात् स एवादेशः स्यादित्यत आह एतैः शब्दैरित्यादि। कथं पुनरेतल्लभ्यते? एवं मन्यते। नवेति विभाषेत्यत (१।१।३४) इतिकरणोऽर्थनिर्देशार्थोऽनुवर्त्तते। तेन यथा तत्रार्थस्य संज्ञा भवति तथेहापीति। अर्थस्येयं संज्ञेत्यवधारणम्। अर्थस्यैव न शब्द-स्येत्यर्थः। पुनः श्रुतौ ह्यवधारणं गम्यते। यथा क्रिया हि द्रव्यं विनयति नाद्रव्यमिति। विनापीतिकरणेन शब्दस्वरूपस्य संज्ञा सिध्यत्येव। यथा तरप्तमपौ घ इत्यत्र (१।१।२२)। तस्मादितिकरणानुवृत्तिसामर्थ्याददर्शनमिति योऽर्थः प्रतीयते तस्यैवैषा संज्ञा। न शब्दस्य। किञ्च लोप इति महती संज्ञा क्रियते यथान्वर्थसंज्ञा विज्ञायेत। लोपनं लोपः। अनुपलब्धिरनुच्चारण-मित्यर्थः। नचादर्शनमित्येतच्छब्दरूप मेवाभावात्मकम्। किं तर्हि? तदर्थः। तस्मादन्वर्थसंज्ञाविज्ञानादर्थस्यैवैषा संज्ञा। यदि तर्ह्यर्थस्यैवैषा संज्ञा ततोऽतिप्रसङ्गः। सर्वो हि शब्दः स्वविषयादन्यत्र न दृश्यते। ततश्च त्रपु जत्वित्यत्र क्विपोऽदर्शनस्य लोपसंज्ञा स्यात्। एवञ्च सति प्रत्ययलोपे प्रत्ययलक्षण

मिति ऋस्वस्य पिति (६।१।७१) कृति तुगिति तुक् प्रसज्यत इत्यत आह प्रसक्त-स्येत्यादि । तस्य दर्शनमात्रस्यैषा संज्ञा न । किं तर्हि ? शास्त्रादर्थाद्वा कुतश्चित् प्रसक्तस्य यददर्शनं तस्यैव । तदिह न केनचित् प्रकारेण क्विप्प्रसङ्गोऽस्ति तत्कुतोऽतिप्रसङ्गः ? कथं पुनरेष विशेषो लभ्यते ? यावता नेह प्रसक्तग्रहण-मस्ति । नापि तत् प्रकृतम् । एवं मन्यते । स्थानिवदित्यतः स्थानि-ग्रहणमिहाप्यनुवर्त्तते । स्थानी प्रसङ्गवान् प्रसक्त इति पर्य्याया ह्येते । तेनायमर्थो लभ्यते । प्रसक्तस्य यददर्शनं तस्येयं संज्ञेति । गौधेर इति । गोधाया ढ्रक् ( ४।१।१२९ ) । एयादेशः । लोपो ( ६।१।७६ ) व्योर्वलीति यकारस्य शास्त्रेण प्रसक्तस्य लोपः । पचेरन्नित्यत्रापि सीयुटः शास्त्रेण । एवमन्यत्रापि यथायोगं प्रसक्तता वेदितव्या । जीरदानुरास्रेमाणमिति । पूर्ववद् वकारस्य लोपः । स्रिवु गति शोषणयोरित्यस्य सर्वधातुभ्यो मनिन्निति मनिन्प्रत्ययान्तस्य द्वितीयैकवचन उपधादीर्घे णत्वे च कृते आस्रेमाणमिति । अपरस्यानुबन्धादे-रिति । ककारादेरनुबन्धस्य । आदिशब्देन सीयुट्सकारस्य ।

## ६१ । प्रत्ययस्य लुक्श्लुलुपः ।

यथा वृद्धिशब्द स्तद्भाविताना मतद्भावितानामपि संज्ञा तथा लुगित्या-दिका अप्यतद्भावितस्यापि संज्ञाः प्राप्नुवन्ति । ततश्च संज्ञासंकरः स्यात् । संज्ञासंकरे हि सति तत्कार्य्याण्यपि संकीर्य्येरन्नित्यत आह अनेकसंज्ञा-विधानाच्चेत्यादि । यद्यतद्भावितस्याप्येताः संज्ञाः स्यु रनेकसंज्ञाकरणमनर्थकं स्यात् । एकयैव सर्वकार्य्यसिद्धेः । तस्मादनेकसंज्ञाविधानाद् यददर्शनं यया संज्ञयोच्चारितया भावितं निष्पादितं तस्यैव प्रत्ययादर्शनस्य सा संज्ञा नान्यस्येति न भवति संकरः । एवं तर्हीतरेतराश्रयदोषः प्राप्नोति । तथाहि संज्ञया विशिष्टमदर्शनं भाव्यम् । सति च तस्मिन् प्रत्ययादर्शने संज्ञया भाव्यमित्यत आह विधिप्रदेशेषु चेत्यादि । तददर्शनं विधीयते यस्य विहितस्य लुगितेवमादिकाः संज्ञा भवन्तीति भाविन्याः संज्ञाया विज्ञानान् न भवतीत-रेतराश्रयदोषः । अत्तीति । अदिप्रभृतिभ्यः (२।४।७२) शप इति शपो लुक् । जुहोतीति । जुहोत्यादिभ्यः श्लुः (२।४।७५) । वरणा इति । वरणानां ह्रस्वाणा-

मद्दूरभवो ग्राम इति प्राग्दीव्यतोऽण् ( ४।१।८३ )। तस्य वरणादिभ्यश्चेति ( ४।२ ८२ ) लुप्। अगस्तयः कुण्डिना इति। यदि प्रत्ययग्रहणं न क्रियेतागस्त्यस्यापत्यानि बहूनि ऋष्यन्धकवृष्णिकुरुभ्य इति ( ४ १।११४ ) ऋष्यण्। कुण्डिन्या अपत्यानि बहूनि गर्गादित्वाद् यञ् ( ४।१।१०५ )। तयोरागस्त्यकौण्डिन्यशब्दयोर्जसि परतो यदागस्त्यकौण्डिन्ययोरगस्तिकुण्डिनजिति ( २।४।७० ) लुक् क्रियतेऽगस्तिकुण्डिनचौ चादेशौ तदा वैषम्यादेकैकस्य षष्ठीनिर्दिष्टस्य स्थानिन स्त्रय आदेशाः पर्य्यायेण स्युः। तत्र यदा लुक् क्रियते तदा विभक्तिमात्रस्य श्रवणं प्राप्नोति। अथाप्यलोऽन्त्यस्य स्यादेवमप्यागस्त्यः कौण्डिन्य इति स्यात्। अगस्तयः कुण्डिना इति चेष्यते। यदाप्यागस्त्यशब्दस्य कुण्डिनजादेशः कौण्डिन्यशब्दस्य चागस्त्यादेशस्तथाप्यनिष्टमेव प्राप्नोति। आगस्त्यशब्दस्य हि जसन्तस्य अगस्तय इति रूपमिष्यते। कौण्डिन्यशब्दस्य तु कुण्डिना इति। अतएवागस्तयः कुण्डिना इत्यनयानुपूर्व्या तयोरुपन्यासः। अथाप्यान्तरतम्यादागस्त्यशब्दस्यागस्तिशब्द एवादेशो भवति। न कुण्डिनजिति। कौण्डिन्यशब्दस्यापि कुण्डिनजादेशो भवति। नागस्तिशब्द इत्येवमपि नैवानिष्टापत्तेर्मुक्तिः। तथाह्येवं ह्यगस्तयः कुण्डिना इति च सिध्यति तथापि प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते सति वृद्धाच्छ इति ( ४।२।११४ ) च्छो न स्यात्। अवृद्धत्वात् प्रकृतेः। प्रत्ययग्रहणे तु सति तद्दर्शनस्यैवेयं संज्ञा विहितेति तस्यैव लुग् भवति। परिशिष्टस्य च प्रकृतिद्वयस्य यथासंख्यमादेशद्वयम्। तेनागस्तयः कुण्डिना इत्येतच्च रूपद्वयं सिध्यति। प्राग्दीव्यतीयाजादिप्रत्ययविवक्षायामपि गोत्रेऽलुगचीति (४।१।८९) लुकि प्रतिषिद्धे वृद्धाच्छप्रत्ययश्च। अगस्तीनां छात्रा आगस्तीया इति। (A) कौण्डिन्यशब्दात् तु सत्यपि लुकि कण्वादिभ्यो गोत्र ( ४.२।१११ ) इत्यणेव भवति। कौण्डिनाश्छात्रा इति। तेन तत्र च्छप्रत्ययाभावदोषो न प्रसञ्जनीयः।

## ६२। प्रत्ययलोपे प्रत्ययलक्षणम्।

प्रत्ययलक्षणमिति। प्रत्ययो लक्षणं यस्येति कार्य्येऽन्यपदार्थे बहुव्रीहिः। प्रत्ययनिमित्तमित्यादिना सूत्रारम्भस्य प्रयोजनमाह। ननु च स्थानिवद्भावेनाप्ये-

(A) सूर्य्यतिष्यागस्त्यमत्स्यानां य उपधाया इति ( ६।४।१४९ ) यलोपः।

तत् सिध्यति । नैतदस्ति । अलाश्रयमपि हि प्रत्ययलोपे प्रत्ययलक्षणं कार्य्यमिष्यते । यथाह्यग्निचिदित्यत्र ह्रस्वस्य पिति ( ६।१।७१ ) इति तुगित्यलाश्रयोऽपि तुग् भवत्येव । अग्निचिदिति । अग्नौ चेरिति ( ३ २।९१ ) क्विप् । अधोगिति हलङ्याादिसूत्रेण ( ६।१।६८ ) तिलोपः । अदादित्वाच्छपो लुक् । दादेर्धातोर्घ ( ८.२।३२ ) इति घत्वम् । एकाचो बशो ( ८.२।३७ ) भषित्यादिना भष् धकारः । झलाञ्जशोऽन्ते ( ८।२ ३९ ) इति जश्त्वम् । घकारस्य गकारः । तस्य वावसान इति ( ८।४।५६ ) चर्त्वं ककारः । प्रत्यय इति । वर्त्तमान इति पूर्वसूत्रात् । आघ्नीयेति । आङो यमहन ( १।३।२८ ) इत्यात्मनेपदम् । गमहनेत्यादिनो पधालोपः ( ६।४।९८ ) । हो हन्तेरिति ( ७।३।५४ ) घः । संग्मीयेति । संपूर्वाद् गमेः समो गम ( १।३।२१ ) इत्यादिनात्मनेपदम् । इटोऽदित्यद् ( ३।४।१४६ ) भावः । बहुलं छन्दसीति शपो ( २।४।७६ ) लुक् । पूर्ववदुपधालोपः । अनुनासिकलोपो न भवतीति । अनुदात्तोपदेशेत्यादिना ( ६।४।३७ ) । रैकुलमिति । षष्ठीसमासः । गोहितमिति । चतुर्थ्यात्यादिना । अस्यत्र षष्ठीचतुर्थ्येकवचनयोः प्रत्यययो र्लोपः । किं त्वत्रवाटेश्योरचि विधानात् तद्विधौ वर्ण आश्रीयते । नतु प्रत्ययः । तेन वर्णनिमित्तकौ तौ न प्रत्ययनिमित्तकाविति न भवतः । ननु च नात्र प्रत्ययस्य लोपः क्रियते । किं तर्हि ? लुक् । नैतदस्ति । लोपशब्दोऽपि सामान्येन तद्भावितस्यातद्भावितस्य चाऽदर्शनस्य संज्ञा । तस्माल्लुगपि लोपो भवत्येव ।

## ६३ । न लुमताङ्गस्य ।

लुमतेति । लुशब्दो यस्मिन्नस्ति स लुमान् । कः पुनरसौ ? लुगित्यादि संज्ञाशब्दः । करणे चेयं तृतीया । हेतौ वा । इत्थम्भूतलक्षणे वा । लुमता करणेन लुप्ते प्रत्यये । तेन हेतुना वा । तदुपलक्षितेन वेत्यर्थः । अथ प्रत्यय इत्येतत् कुतो लभ्यते ? प्रत्ययादर्शनस्यैव लुगादिसंज्ञाविधानात् । लुमताशब्देन लुप्ते प्रत्यये यदङ्गमिति । तत् पुनस्तमेव प्रत्ययं निमित्तमाश्रित्य येनाङ्गसंज्ञा प्रतिलब्धा तद् वेदितव्यम् । तस्य प्रत्ययलक्षणं कार्य्यं न भवती

त्वविशेषाभिधानेऽपि प्रत्यासत्ते र्य एवासौ लुमता लुप्तः प्रत्ययोऽङ्गसंज्ञाया निमित्तं तल्लक्षणमिति गम्यते। गर्गा इति। गर्गादिभ्यो यञ् ( ४।१।१०५ )। यञञोश्चेति ( २।४।६४ ) बहुषु लुक्। अत्र तद्धितेष्वचामादेरिति (७।२।११७) वृद्धिर्न भवति। मृष्ट इति। मृजेस्तस्। अदादित्वाच्छपो लुक्। व्रश्चादिसूत्रेण ( ८।२।३६ ) षत्वम्। ष्टुत्वम्। मृजेर्वृद्धिरिति ( ७।२।११४ ) वृद्धिर्न भवति। जुहुत इति तसि परतो जुहोत्यादिभ्यः श्लौ (२।४।७५) कृते सार्वधातुकलक्षणो गुणो न भवति। सर्वत्र यमेव प्रत्ययमाश्रित्याङ्गसंज्ञा जाता स एव वृद्ध्यादेः कार्य्यस्य निमित्तम्। इह च विशेषस्यानाश्रयणात् न केवलमङ्गाधिकारविहितं कार्य्यं प्रतिषिध्यते ऽपित्वनङ्गाधिकारविहितमपि। तेन गर्गा विदा उष्ट्रग्रीवा इत्यत्र ञ्नित्यादि ( ६।१।१९७ ) र्नित्य-मित्याद्युदात्तत्वमनङ्गाधिकारविहितमपि न भवति। इह चात्रय इति तद्धितस्य कित ( ६।१।१६५ ) इत्यन्तोदात्तत्वम्। गर्गा विदा इति यथाक्रमं गर्गादियञ्। अनृष्यानन्तर्य्ये ( ४।१।१०४ ) विदादिभ्योऽञित्यञ्। यञञो-श्चेति ( २।४।६४ ) लुक्। उष्ट्रग्रीवा इति। इवे ( ५।३।९६ ) प्रतिकृताविति विहितस्य कनो देवपथादिभ्यश्चेति ( ५।३।१०० ) लुप्। अत्रय इति। अत्रेरपत्यार्थ इतश्चानिञ ( ४।१।१२२ ) इति विहितस्य ढकोऽत्रिभृगुकुत्स-वशिष्ठेत्यादिना ( २।४।६५ ) बहुषु लुक्। पञ्च सप्तेति। षड्भ्यो लुगिति ( ७।१।२२ ) जश्शसो र्लुक्। पयः सामेति। अत्रापि स्वमोर्नपुंसकादिति ( ७।१।२३ )। अत्र यद्यपि लुमता लुप्तः प्रत्यय स्तन्निमित्ता चाङ्गसंज्ञा तथापि प्रत्ययलक्षणेन सुप्तिङन्तं पदमिति ( १।४।१४ ) पदसंज्ञा भवत्येव। यस्मान्नासावङ्गस्य कार्य्यम्। अपितु सविभक्तिकस्य समुदायस्य प्रत्ययस्य हि पूर्वभागोऽङ्गम्। नचेह तस्य लुमता यो लुप्तः प्रत्यय स्तन्निमित्ता पदसंज्ञा प्राप्नोति। स्वादिष्वसर्वनामस्थान ( १।४।१७ ) इति वचनात्। तेन नात्र यमेव प्रत्ययमाश्रित्याङ्गसंज्ञा भवति तमेवाश्रित्य पदसंज्ञा प्राप्नोति। पद-संज्ञायाञ्चेह सत्यां पय इत्यत्र ससजुषो ( ८।२।६६ ) रुरिति रुत्वम्। खरवसानयोर्विसर्जनीयश्च ( ८।३।१५ ) पदकार्य्यं भवति। पञ्च सप्त सामेति। अत्रापि नलोपः प्रतिपदिकान्तस्येति ( ८।२।७ ) नलोपः पदसंज्ञाकार्य्यम्।

कार्य्यम इति । ण्यन्तात् कर्म्मणि लकारः । सार्वधातुके ( ३।१।६७ ) यक् । अत्र न लुमता प्रत्ययो लुप्तः । किं तर्हि ? णेरनिटीति ( ६।४।५१ ) । अतो लोप ( ६।४।४८ ) इत्यस्माल् लोपग्रहणानुवृत्तेः । तेन प्रत्ययलक्षणा वृद्धिर्भवत्येव ।

## ६४ । अचोऽन्त्यादि टि ।

अन्त्यादीति बहुव्रीहिः । अचां मध्ये योऽन्त्यो ऽच् स आदिर्यस्य शब्द-रूपस्य तत् तथोक्तम् । ननु चान्त्यशब्दोऽत्राचामित्येतदपेक्षत इत्यसामर्थ्यादादि-शब्देन सह समासो न प्राप्नोति । नैष दोषः । अन्त्यशब्दो हि सम्बन्धिशब्दः । सम्बन्धिशब्दानां नित्यसापेक्षत्वेन गमकत्वात् सापेक्षत्वेऽपि समासो भवति । यथा देवदत्तस्य गुरुकुलमिति । निर्धारणे षष्ठीति । यतश्च निर्धारण (२।३ १४) मित्यनेन । यदि निर्धारणे षष्ठीयमेवं हि सति निर्धारण-मनेकसन्निपाते भवतीत्यच इत्येकवचनं न स्यात् । बहुत्वाद् बहुवचनेन भवितव्यमित्यत आह जातावेकवचनमिति । जातेरेकत्वादिति भावः । अचां सन्निविष्टानां योऽन्त्योऽजिति । कथं पुनरजित्येष विशेषो लभ्यते ? यावता नेह द्वितीय मज्ग्रहणम् । नापि प्रकृतम् । एवं मन्यते । समानजातीय-स्यैव लोके निर्धारणं प्रसिद्धम् । तथाहि कृष्णा गवां सम्पन्नक्षीरत-मेति द्वितीयं गोशब्दमन्तरेणापि गौरेव प्रतीयते । तस्मादिहापि यद्यपि द्वितीय मज्ग्रहणं नास्ति तथापि समानजातीयो ऽजेव निर्धार्य्यमाणोऽव-सीयत इति । अन्ते भवोऽन्त्यः । दिगादित्वाद् यत् (४।३।५४)। तदादीति । स आदि र्यस्ये ति विग्रहः । इच्छब्द इत्यादीनि रूपोदाहरणानि । कार्य्यं पुन-रिच्छब्दस्य टिसंज्ञाया मग्निचितमाचष्ट इति णिचि कृते णाविष्ठवत् प्राति-पदिकस्ये ति टिलोपः । अग्निचयतीति । आतामाथामिति । अनयोस्तु टिसंज्ञाकार्य्यं टित आत्मनेपदानां टेर (३।४।७९) इति टेरेत्वम् । पचेते पचेथे इति कार्य्योदाहरणे । अथ वह्निमह्निङोरिकारस्य कथं टिसंज्ञा ? यावता न सोऽस्ति यस्य सोऽन्त्यः । अजादिरिति व्यपदिश्यते । नैष दोषः । आद्यन्तवदे-कस्मिन्निति (१।१।२१) व्यपदेशिवद्भावेनादि रन्त्यइति व्यपदेशो भविष्यति ।

## ६५। अलोऽन्त्यात् पूर्व उपधा।

अलोऽन्त्यादिति समानाधिकरणे पञ्चम्यौ। धात्वादौ वर्णसमुदाय इति। ननु च नेह वर्णसमुदायग्रहणमस्ति। नापि तत् प्रकृतम्। तत् कथमेषोऽर्थो लभ्यते? अन्त्यग्रहणात् समुदायस्यैवान्त्योऽल् भवति। न केवलः। तस्मादन्त्यग्रहणादेषोऽर्थो लभ्यते। अलेवेति। एवकारकरणादेवाल्समुदायो व्यवच्छिद्यते। ननु च नेह द्वितीय मल्ग्रहणमस्ति तदल्समुदायस्याप्येषा संज्ञा कस्मान्न भवति? लोकतश्च। लोके ह्यमीषां ब्राह्मणाना मन्त्यात् पूर्व आनीयतामित्युक्त एक एवान्त्यात् पूर्व आनीयते। न समुदायः। एवमप्यल एव व्यवहितस्य कस्मादेषा संज्ञा न भवति? व्यवहितेऽपि पूर्वशब्दो वर्त्तत एव। अतएव लौकिकाद् दृष्टान्तात्। लोके ह्यन्त्यात् पूर्वमानयेत्युक्ते न कश्चिद् व्यवहित मानयति। अपि त्वनन्तरमेव। यदि ह्यल एवैषा संज्ञा नाल्समुदायस्य अतश्च संयोगादे र्गुणः ( ७।४।१० ) इत्यत्र यद् वक्ष्यति— संयोगादिगुणविधाने संयोगोपधग्रहणं कर्त्तव्यमिति—तद्याहन्यते। न ह्यल एवोपधासंज्ञायामनेकानन्तरहल्समुदायात्मनः संयोगस्योपधात्वमुपपद्यते। संयोगावयवस्योपधात्वादवयवधर्मेण समुदायस्य तथा व्यपदेश इत्यविरोधः भवति ह्यवयवधर्म्मेण समुदायस्य तथा व्यपदेशः। यथा आढ्यमिदं नगरमिति। अथवा संयोगस्याल्पूर्वत्वोपलक्षणार्थं तत्रोपधाग्रहणं द्रष्टव्यम् अकार इत्यादीनि रूपोदाहरणानि। कार्य्यं त्वकारस्योपधासंज्ञायां पाचक पाठक इत्यत्रा ऽत उपधाया इति ( ७।२।११६ ) वृद्धिः। इकारऋकारयोस् भेदक च्छेदको वर्त्तको वर्द्धक इति। अत्र पुगन्तलघूपधस्येति (७।३.८६ गुणः। शिष्ट इति। शासु अनुशिष्टौ। निष्ठा। शास इदङ् हलोरिति ( ६।४।३४ ) उपधाया इत्वम्। तत्र ह्यनिदितामित्यादेः ( ६।४.२४ सूत्रादुपधाग्रहण मनुवर्त्तते। शासिवसीत्यादिना षत्वम् ( ८.३।६० ) समुदायादित्यादि। अकारसकारसमुदायात् पूर्वस्य शकारस्योपधासंज्ञा मभूदित्यर्थः। यदि हि स्यात् तस्यैवेत्त्वं स्यात्।

## ६६। तस्मिन्निति निर्दिष्टे पूर्वस्य।

किमर्थमिदम्? इको (६।१।७७) यणचीत्येवमादावचीत्येवमादेराधार

धेयभावः प्रत्यासत्तिनिबन्धनः। यथा गङ्गायां घोषः प्रतिवसतीति। अत्र गङ्गायाः सा च प्रत्यासत्ति र्यथापूर्वमपेक्ष्य भवति तथा परमपि। ततश्च दध्युदकादिषु न ज्ञायते किं पूर्वस्यैकः प्रत्यासत्तिभाजो यणादेश उत परस्येति। तत्र संदेहे सति नियमार्थेयं परिभाषाऽरभ्यते। यद्येवं सन्देहविषय इयमारभ्यत इति यत्र संदेह स्तत्रोपतिष्ठते। ततश्च दध्युदकमिति सिद्धं स्यात्। इदन्तु न सिध्यति। दध्यत्रेति। ननु च विनैव परिभाषयैतत् सिद्धम्। नह्यत्र सन्देहोऽस्ति। इदं तर्हि न सिध्यति समिदत्रेति। अग्निचिदत्रेति। यदि हि यत्र सन्देहो नास्ति तत्रैषा परिभाषा न स्यादिहानुपस्थानाद् व्यवधानेऽपि यणादेशः स्यादेव। तस्मादसन्देहविषयेऽप्येषा परिभाषा यथा भवति स यत्नः कर्त्तव्यः। एष क्रियते। इह सप्तमीनिर्दिष्टे पूर्वस्येतावत् सूत्रं कर्त्तव्यम्। इयतैवाभिलषितार्थसिद्धेः। तत्राप्ययमर्थः। स्वरूपग्रहणशङ्कां निराकर्त्तुमितिकरणो न कर्त्तव्यो भवति। नहि क्वचिच्छास्त्रे सप्तमीनिर्दिष्टः शब्दः श्रूयते येन स्वरूपग्रहणमाशङ्क्येत। सोऽयमल्पेन सूत्रेण सिद्धे यन्महत् सूत्रं करोति तन्महाविषयेयं परिभाषेति सूचनार्थम्। एवञ्च महाविषयेयं भवति यदि सर्व्वत्र सन्देहविषयेऽन्यत्र च प्रवर्त्तते। स्यादेतत्। सप्तमीनिर्दिष्ट इत्युच्यमाने सप्तम्या यद्यप्यधिकरणं निर्दिश्यते तथापि तस्याधेयप्रधानत्वादिको (६।१।७७) यणचीत्यत्राचि योऽल् व्यवस्थित स्तस्मिन् यणादेशो विज्ञायते। ततश्चेहैव स्याद् दधि भुङ्क्त इति। इह तु न स्याद् दध्यत्रेति। यथान्यासे त्वेष दोषो नास्ति। तस्मान् महत् सूत्रं प्रणीतमिति। नैतदस्ति। यदयं दाधा घ्वदाविति ( १.१ २० ) निर्देशं करोति तज् ज्ञापयत्यधिकरण एव यणादेशादिकार्य्यं भवति। नत्वाधेय इति। अपि च यथान्यासेऽप्यधिकरणस्याधेयप्रधानत्वादाधेय एव यणादेशादि कार्य्यं स्यात्। तस्मात् तत्रापि तदेव ज्ञापकं शरणमाश्रयणीयम्। तदेव महतः सूत्रस्य प्रणयनं परिभाषाया महाविषयत्वसूचनार्थम्। तेन सर्वत्रैषा परिभाषोपतिष्ठत इति सर्वमिष्टं सिद्धं भवति। इह स्वं रूपं शब्दस्याशब्दसंज्ञेति (१।१।६८) स्वरूपस्यैव ग्रहणेन भवितव्यम्। ततश्च यत्रैव तस्मिन्नित्येतत् पदमुच्चार्य्यते तत्रैवेयं परिभाषा स्यात् तस्मिन्नणि च (४।३।२) युष्माकास्माकाविति।

अस्ति ह्यत्र तस्याः परिभाषायाः परनिवृत्तिः प्रयोजनम्। यौष्माकीणं युष्मभ्यं देहि। आस्माकीनमस्मभ्यं देहीति। युष्मभ्यं देहि यौष्माकीणम्। अस्मभ्यं देह्यास्माकीनमिति। इको यणचीत्येवमादौ (६।१।७७) त्वेषा नोपतिष्ठते इत्यत आह तस्मिन्निति। सप्तम्यर्थनिर्देश इति। एवं मन्यते। इतिकरणो ह्यत्र कृतः। स च स्वरूपपदार्थकत्वं निरस्यार्थपदार्थकत्वं तस्मिन्नित्यस्य संपादयति। तेनार्थस्यैव ग्रहणं भवति। स त्वर्थोऽवश्यं येन केनचिच्छब्देन निर्देष्टव्य इति। नानार्थकत्वात् सामान्यवाचिना तस्मिन्नित्यनेन पदेन निर्दिष्ट इति। ननु च शब्दस्यार्थेन पौर्वापर्यं न सम्भवतीत्यर्थेनासंभवात् तद्वाचिना सम्भवात् तद्वाचिना शब्देन विज्ञास्यत इत्यदोषः। अत्रेदं चोद्यते। अर्थस्य ग्रहणं यथा स्यात् स्वरूपस्य च ग्रहणं मा भूदित्येवमर्थ मितिकरणः क्रियते। तच्च स्वरूपग्रहणं तस्मिन्नणि च युष्माकास्माकाविति सूत्रेण (४।३।२) सम्भाव्यते। यदि च स्वरूपग्रहणं स्यात् तत्रैव पूर्वग्रहणं कुर्यात्। न च कृतम्। तस्मादवगम्यते ऽन्तरेणापीतिकरणमर्थस्यैव ग्रहणं भविष्यति। न स्वरूपस्येति नार्थस्तेन। सत्यमेतत्। ये तु मन्दबुद्धय एवं प्रतिपत्तुमसमर्थास्तान् प्रति सुखावबोधनार्थमितिकरणः कृतः। निर्दिष्टग्रहणमिदमर्थस्य विशेषणम्। इह च शास्त्र इको (६।१।७७) यणचीत्यादिषु वाक्येषु यत्र सप्तम्यर्थोऽस्ति तत्रासौ निर्दिष्ट एव सर्वत्र। तदपार्थकं निर्दिष्टग्रहणविशेषणं व्यभिचाराभावादित्यत आह निर्दिष्टग्रहणमित्यादि। आनन्तर्यमव्यवधानमर्थो यस्य तत् तथोक्तम्। कथं पुनस्तदानन्तर्यार्थं भवति ? ततस्तत्प्रतीतेः। तथाहि दिशिरयमुच्चारणक्रियः। निःशब्दोऽप्ययमिह नैरन्तर्यं द्योतयति। तत्र निरन्तरं दिष्टो निर्दिष्ट इति प्रादिसमासे कृते स्फुटमेवानन्तरमुच्चारितमिति प्रतीयते। किमर्थं पुनरानन्तर्यमाश्रितमित्यत आह अग्निचिदत्रेत्यादि। पूर्वशब्दोऽयं व्यवहितेऽपि वर्त्तते। तत्र यद्यानन्तर्यं नाश्रीयते ततो व्यवहितेऽपि स्यादित्यभिप्रायः। ननु चाचीत्यौपश्लेषिकमधिकरणं विज्ञायते। न च व्यवहितमुपश्लिष्टम् भवति। तत् किमानन्तर्यार्थेन निर्दिष्टग्रहणेन ? असदेतत्। असति हि निर्दिष्टग्रहण औपश्लेषिकमधिकरणमेव न शक्यं विज्ञातुम्।

यस्मात् पूर्वशब्दो व्यवहितेऽपि वर्त्तमानः परस्यैव निवृत्तिं करोति न व्यवहितपूर्व्वस्यापि। निर्दिष्टग्रहणे तु सति सप्तम्या औपश्लेषिकाधिकरणाभिधायिन्याः प्रत्यासत्तिरुपादीयते। सा च पूर्वग्रहणेन न निवर्त्त्यते। परनिवृत्तिरेव क्रियत इत्येषोऽर्थो लभ्यते। तेन व्यवहितस्य कार्य्यं न भवति। उत्तरार्थञ्च निर्दिष्टग्रहणं कर्त्तव्यमेव।

## ६७। तस्मादित्युत्तरस्य।

किमर्थमिदम्? तिङ्ङतिङ (८।१।२८) इति यावत् पञ्चमी सा तु न कारकविभक्तिः। किं तर्हि? दिक्शब्दादञ्चूत्तरपदेति (२।३।२९) दिग्योगलक्षणा। दिक्शब्दस्त्वध्याहार्य्यः। तत्र किं पूर्वशब्दमध्याहृत्यातिङः पूर्वस्य निघातः क्रियत उत परशब्दमध्याहृत्य परस्येति सन्देहे सति परिभाषेयं नियमार्था ऽरभ्यते। निर्दिष्टग्रहणमनुवर्त्तत इति। तेन तस्यानन्तर्य्यार्थत्वाद्व्यवहितस्य कार्य्यं न भवतीति भावः। इहापीतिकरणोऽर्थनिर्देशार्थः क्रियते। तेन पञ्चम्यर्थग्रहणं भवति। नतु शब्दस्वरूपस्येत्यभिप्रायेणाह तस्मादिति। पञ्चम्यर्थनिर्देश इति। ननु च पूर्वसूत्रादेवेतिकरणोऽनुवर्त्तिष्यते। तत् किमर्थः पुनरिहेतिकरणः? अनेन प्रकारेण पूर्वसूत्रादेकदेशोऽनुवर्त्तत इति ज्ञापनार्थः। तेनेति शब्दवन्निर्दिष्टग्रहणमनुवर्त्ततेत्येतदाख्यातं भवति। अन्यस्त्वाह इतिकरणं त्विहावधेरवधिमत्तन्त्वतां निवर्त्तयति। तेनावधेरेवोत्तरस्य विज्ञायते। नावधिमतः। स्वरूपग्रहणनिरासार्थस्त्वितिकरणो न भवति। स्वरूपाभावात्। यदपि तस्माच्छसो नः पुंसीति (६।१।१०३) तत्रापि पूर्वसवर्णदीर्घात् पूर्वः शस् न सम्भवतीति न भवति सन्देहः। तस्मादवधेरवधिमत्तन्त्वतानिरासार्थ एवेतिशब्द इति। अत्रोच्यते। यद्यवधेरेवोत्तरस्य कार्य्यं यथा स्यादवधिमतो मा भूदित्येवमर्थ इतिकरणो ऽवधेरवधिमत्तन्त्वतामपाकर्त्तुं क्रियते नार्थस्तेन। लोकत एव तत्सिद्धेः। लोके हि तस्माच्छात्रादुत्तरो भोज्यतामित्युक्ते ऽवधेरेवोत्तरो भोज्यते। नावधिमतः। तदिहापि विनापीतिकरणेनावधेरेवोत्तरस्य कार्य्यं भविष्यति। नावधिमतः। यदप्युक्तं तस्माच्छसो (६।१।१०३) नः पुंसीत्यत्रापि पूर्वसवर्णदीर्घात् पूर्वः शस् न

संभवतीति तदप्ययुक्तम्। तथा ह्यशब्दादिशब्दाच्च शसि परतः पूर्वसवर्णदीर्घत्वे पूर्वत्र च ह्रस्वादिशब्दे शसन्ते व्यवस्थापिते गच्छत आन् हृस्वानुपलभते गच्छतो ह्रस्वानानुपलभत इत्यत्र पूर्वसवर्णदीर्घात् पूर्वं शस् सम्भवत्येव। अथ यत्रोभयनिर्देशस्तत्र कस्य कार्य्येण भवितव्यम्? तत्र यानवकाशा सेतरस्याः षष्ठीं प्रकल्पयिष्यति। अतः षष्ठीनिर्दिष्टस्य कार्य्यं भविष्यति। यथाऽनेे मुगित्यत्र ( ७।२।८२ ) सप्तमी निरवकाशा ऽतो येय ( ७।२।८० ) इत्यत इति पञ्चम्याः पूर्वसूत्रे सावकाशायाः षष्ठीत्वं प्रकल्पयिष्यति। तथेदास (७।२।८३) इति पञ्चम्यान इति पूर्वसूत्रे सावकाशायाः सप्तम्याः। यत्रोभे सावकाशे तत्र परत्वात् पञ्चमी सप्तम्याः षष्ठीं प्रकल्पयिष्यति। यथा ऽमि ( ७।१।५२ ) सर्वनाम्नः सुडिति। आज्जसेरसुगित्यत्र ( ७।१।५० ) पञ्चमी सावकाशा। आमीति सप्तम्युत्तरार्था। तत्रादिति पञ्चम्यामीति सप्तम्याः षष्ठीत्वं प्रकल्पयति। तेन सर्वनाम्न उत्तरस्यामः सुड् भवति। इह तु दीर्घात् पदान्ताद्वेति ( ६।१।७३ ) यद्यपि च्छे चेति ( ६।१।७५ ) सप्तमी पूर्वसूत्रे सावकाशा तथापि तस्याः स्वरितत्वात् पूर्वयोगादनुवृत्ताया निरवकाशत्वम्। अतः सा च सप्तमी पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति। पञ्चमी तु पौर्व्वापर्य्यं प्रकल्प्य सावकाशा निवर्त्तते। तेनायं सूत्रार्थो भवति। दीर्घादुत्तरो यश्छस्तस्मिन् परतः पूर्वस्य दीर्घस्यैव तुग् भवतीति। सार्वधातुके यगित्यत्र (७।१।६७) निरवकाशापि सप्तमी धातोरिति पञ्चम्याः सावकाशाया अपि षष्ठीत्वं न प्रकल्पयति। अन्यथा हि धातोरेवादेशा यगादयः स्युः। ततश्च परश्चेत्यस्यानुवृत्तस्य (३।१।२) बाधाद् यगादीनां चानुबन्धकरणस्य वैयर्थ्यं प्रसज्येत। नहि धात्वादेशत्वे सति तेषां परत्वमुपपद्यते। नाप्यनुबन्धानामर्थवत्त्वम्। तस्मात् सार्वधातुक इति सप्तमी यगादीनां प्रत्यासत्तिं गमयति। पराधिकारात् तु ते धातोः परे भवन्ति।

## ६८। स्वं रूपं शब्दस्याशब्दसंज्ञा।

शास्त्रे स्वमेवेत्यादि। शास्त्रग्रहणं लोकेऽर्थस्यैव ग्राह्यत्वात्। शब्दस्येति कृत्यानां कर्त्तरि वेति ( २।३।७१ ) कर्त्तरि षष्ठी। शब्दः स्वमेव रूपं ग्राहयति बोधयति प्रत्याययतीत्यर्थः। कः पुनः शब्दस्य स्वरूपस्य च भेदः? येन शब्दस्येति

व्यतिरेकनिबन्धना षष्ठी भवति। परमार्थतो वस्तुगतो नास्त्येव भेदः। तथाहि स्वं रूपं शब्दस्य स्वभावः। तच्चेत् ततोऽर्थान्तरं स्याच् शब्दस्य वैस्वभाव्यमेव स्यात्। असत्यपि तु वास्तवे भेदे बुद्धिविरचितं भेदमाश्रित्य षष्ठी भवति। बुद्धि र्हि स्वबीजपरिपाकवशादाकारविशेषपरिग्रहवतुपजायमाना वस्तुनोऽसत्यपि भेदे भेदमापादयति। यथा राहोः शिरः स्वस्य स्वभावइति (A)। न वाह्योऽर्थ इति। एवकारेण यद्व्यवच्छिन्नं तद्दर्शयति। अतिप्रसक्तस्यापवादमाहाशब्दसंज्ञेत्यादि। किमर्थं पुनरिदमारभ्यत इत्याह शब्देनेत्यादि। शब्देनोच्चारितेनार्थः कार्य्योपयोगितया गम्यते। न शब्दस्वरूपम्। तथाहि गौरुपलभ्यतामित्युक्तेऽर्थमेवोपलब्धुमाद्रियते। न शब्दस्वरूपम्। व्याकरणे तु प्रत्ययविधानादिकार्य्यमर्थस्य न सम्भवति। तेन सह शब्दस्य पौर्वापर्य्याभावात्। नचार्थाद् विहितेन प्रत्ययेन कश्चित् प्रकृतोपयोगः। तेनाग्नेर्ढगित्युक्ते (४।२।३३) नायं संप्रत्ययो भवति। अग्निशब्दस्य योऽर्थः स इह कार्य्यी तस्येदं कार्य्यं विधीयत इति। ततश्च तस्यार्थस्य ये वाचकाः शब्दास्तेषु तत्कार्य्यसम्भवात् तत् साहचर्य्याच्च तेषामेव संप्रत्ययः स्यात्। एतेऽत्र कार्य्यिणः। एतेषामिदं कार्य्यं विधेयमिति। यथाऽऽकृतिवादिनां गौर्दुह्यतामिति शब्देन जातौ चोदितायां तत्र तत्कार्य्यासम्भवात् तदाधारायां व्यक्तौ संभवात् तत्साहचर्य्याच्च तस्यामेव व्यक्तौ संप्रत्ययो भवति न जातौ तथेहापि तन्मा भूत् तद्वाचिनां संप्रत्यय इत्येवमर्थमिदमारभ्यते। तद्वाचिनामिति कर्मणि षष्ठी। तद्वाचिनो मा विज्ञायीत्येवमर्थमिदमारभ्यत इत्यर्थः। तत्र केचिदाहुः। स्वरूपस्य पर्य्यायाणाञ्च कार्य्ये प्रसक्ते श्रूयमाणस्यैव तद् यथा स्यात् पर्य्यायाणां मा भूदिति नियमार्था परिभाषेयमिति। अन्ये तु लिङ्गवती परिभाषा भवति इग्भेको गुणवृद्धी इति गुणवृद्धी लिङ्गम्। विध्यन्तरशेषभूता वा यथा विप्रतिषेधे परं कार्य्यमिति परस्य विध्यन्तरस्य शेषभावमापद्यते। नचास्या लिङ्गं विध्यन्तरशेषभावो वा विद्यत इति संज्ञासूत्रमिदमिति प्रतिपन्नाः। यद्यपि वृत्तौ संज्ञाशब्दो नोच्चारितस्तथापि स्वमेव रूपं शब्दस्य ग्राह्यमित्येवं ब्रुवता वृत्तिकारेण

(A) स्वस्य स्वरूपमिति दाक्षिणात्यपुस्तके पाठः।

संज्ञैवेत्याख्यातं भवति। अग्निशब्दादौ शब्दान्तरैः साधारणमपि रूपमस्ति शब्दत्वादि। असाधारणमपि अग्निशब्दत्वादि। तत्र साधारणरूपव्युदासेनासाधारणस्याग्निशब्दत्वादिरूपस्य परिग्रहार्थं स्वग्रहणम्। तद्धि स्वमेव तस्य रूपम्। इतरत् पुनः परस्यापि। प्रतीति प्रत्यनुपदेशाच्छब्दस्य स्वरूपमेवासन्नम्। नार्थः। विपर्य्ययात्। अद्देयत्वाच्च। तन्नित्यसम्बन्धित्वाच्च। नार्थो विपर्य्ययात्। तथाह्यनुकरणशब्दा ह्यर्थं जहति। नतु स्वरूपम्। असाधारणञ्च रूपम्। अर्थस्तु साधारणः। शब्दान्तरैरपि प्रत्याय्यमानत्वात्। तदेवमासन्नत्वान्नित्यसम्बन्धित्वादसाधारणत्वाच्च रूपमेव शब्दस्य स्वम्। नार्थः। ततश्च स्वग्रहणादेव रूपपरिग्रहे सिद्धे व्याकरणे रूपवदर्थोऽप्यङ्गीक्रियत इति ज्ञापनार्थं रूपग्रहणम्। तेनार्थवद्ग्रहणेन नानर्थकस्येत्येतदुपपन्नं भवति। शब्दानुशासनप्रस्तावादेव च शब्दस्येति सिद्धे शब्दग्रहणं यत्र शब्दपरो निर्द्देशस्तत्र स्वरूपं गृह्यते नार्थपरो निर्द्देश इति ज्ञापनार्थम्। तेन स्वे पुष ( ३।४।४० ) इत्यत्र स्वरूपस्य ग्रहणं न भवति। अर्थपरत्वन्तु निर्द्देशस्याविच्छिन्नपारम्पर्य्यादाचार्य्योपदेशाद् विज्ञायते। आग्नेयमिति। अग्निर्देवताऽस्येत्यत्रार्थे ढक्। औदश्वित्कमिति। अत्राप्युदश्विता संस्कृतमित्यत्रार्थे ठक्। उदश्वितोऽन्यतरस्यामित्यत्र ( ४।२।१९ ) दध्न ठगित्यस्यानुवृत्तेः ( ४।२।१८ )। इसुसुक्तान्तात्क इति ठकः ( ७।३।५१ ) कादेशः। घुग्रहणेष्वित्यादि। यदि घुप्रभृतिरपि संज्ञाशब्दः स्वरूपस्य ग्राहकः स्यादुपसर्गे घोः किरित्यत्र (३।३।९२) यद्यपि धात्वधिकारस्तथापि घुग्रहणाद् घुशब्दात् किप्रत्ययः स्यात्। उपसर्गग्रहणं तु प्राद्युपलक्षणार्थं स्यात्। यथा ऽञ् नासिकायाः संज्ञायां ( ५।४।११८, ११९ ) नसञ्चास्थूलादुपसर्गाच्चेत्यत्र। कुमारीघ इत्यत्र च घइति संज्ञाशब्देन स्वरूपप्रत्यायने सति घरूपकल्पेत्यादिना ( ६।३।४३ ) घशब्दे परतो ह्रस्वत्वं प्रसज्येत। ननु च संज्ञाविधानसामर्थ्यात् संज्ञायाः स्वरूपग्रहणं न भवति। संज्ञा हि संज्ञिनः प्रत्यायनार्था क्रियते। यदि संज्ञाशब्दोऽपि स्वरूपं प्रत्याययेत् संज्ञाविधानमनर्थकं स्यात्। नैतदस्ति। संज्ञाविधानसामर्थ्याद्धि संज्ञिनं प्रत्याययेत्। परिभाषाविधानसामर्थ्याच्च स्वरूपम्। तस्मात् प्रतिषेधः कर्त्तव्यः। न कर्त्तव्यः। ज्ञापकात् संज्ञाशब्दो रूपस्य ग्राहको न भविष्यति।

यदयं ष्णान्ता षडिति ( १।१।२४ ) षकारान्तायाः संख्यायाः षट्संज्ञां विदधाति तज्ज्ञापयति संज्ञाशब्दः स्वरूपस्य ग्राहको न भवतीति। अन्यथा हि षड्भ्यो लुगित्यत्र ( ७।१।२२ ) षट्शब्देन स्वरूपस्य प्रत्यायितत्वात् ततोऽपि लुग् भवतीति षकारान्तायाः संख्यायाः षडिति संज्ञां न कुर्य्यात्। षट्शब्दो हि षकारान्ता संख्या। नान्या। सत्यमेतत्। तथापि येषां ज्ञापक-द्वारेणार्थप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात् तान् प्रति तत्परिहाराया शब्द-संज्ञेति प्रतिषेधः कृतः। शब्दग्रहणं व्याकरणे या संज्ञा तस्या एव प्रतिषेधो न लौकिक्या इति प्रदर्शनार्थम्। सित्तद्विशेषाणामित्यादि। यत्र विशे-षाणां ग्रहणमिष्यते तत्र सकार इत्संज्ञकः कर्त्तव्यः। वृक्षस् मृगस् इति। ततो वक्तव्य इत्यादि। सन्निर्देशं कृत्वा ततः प्रथमेऽध्यायेऽन्यत्र वा परि-भाषेयं कर्त्तव्या सित्तद्विशेषाणामित्यादि। यस्य सकार इत्संज्ञकः स तद्विशेषाणां वृक्षादिविशेषाणां खदिरादीनां प्रतिपादक इति वक्तव्यम्। एवं पित्पर्य्यायवचनस्य च स्वाद्यर्थमित्यादावपि वेदितव्यम्। न्यायादपि चैतत् प्रतिपाद्योऽर्थः सिध्यति। यथा सिध्यति तथा यथावसरं पुरस्तात् प्रतिपादयि-ष्यामः। सुखावबोधनार्थं तु सित्तद्विशेषाणामित्यादिग्रन्थोपन्यासः।

## ६६। अणुदित् सवर्णस्य चाप्रत्ययः।

संज्ञासूत्रमिदम्। न परिभाषा। सा हि नियमार्था भवति। न चाणुदितां सवर्णानामन्येषाञ्च ग्रहणं प्राप्तं येन सवर्णानामेव ग्रहणं भवतीति नियमः क्रियते। परेण णकारेण प्रत्याहारग्रहणमिति। तेन ऋकारादयोऽपि सवर्णानां ग्राहकाः सिध्यन्तीत्यभिप्रायः। परेण च णकारेण प्रत्याहारग्रहणम् अइउण् इत्यत्र प्रतिपादितम्। पूर्वसूत्रात् स्वं रूपमित्येतदि-हानुवर्त्तते। तच्चार्थाद्विभक्तिविपरिणामो भवतीति षष्ठ्यन्तं सम्पद्यते। तेन स्वस्यापि रूपस्याण् गृह्यमाण उदिच्च ग्राहको भवतीति दर्शयन्नाह स्वस्य च रूप-स्येति। आद्गुण (६।१।८७) इत्यादि। यथेह भवति देवेन्द्र इति तथा खट्वेन्द्र इत्यत्राप्याद्गुणो भवति। अस्य च्वौ ( ७।४।३२ )। यथा पटीभवतीत्यत्रेत्वं भवति तथा मालीभवतीत्यत्रापि। यस्येति च (६।४।१४८)। यथा दाक्षिरित्यत्र

लोपो भवति तथा चौलिरित्यत्रापि। बाह्वादित्वाच्चूलाशब्दादिञ्। स्वरानुनासिक्येत्यादि। उदात्तः सूत्रे गृह्यमाणः स्वरान्तरभिन्नस्यापि ग्राहको भवति। एवमनुदात्तः स्वरितश्च। तथा सानुनासिको निरनुनासिकस्य। सोऽपि तस्य। दीर्घो न भवतीति। यद्यप्रत्यय इति प्रतिषेधो न स्यात् प्रत्ययोऽपि सवर्णानां ग्राहकः स्यात्। ततश्च दीर्घोऽपि स्यात्। ननु चाल्पल्पमिदमुच्यतेऽप्रत्यय इति। अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्। प्रत्यये प्रत्युदाहृतम्। आदेश इदम इश् ( ५।३।३ )। अस्मात्। इतः। पञ्चम्यास्तसिलिति तसिल् ( ५।३।७ )। अस्मिन्। इह। इदमो हः ( ५।३।११ )। अत्र हि सवर्णग्रहणे सति यद्यकृते त्यदाद्यत्व इश्भावस्तदान्तरतम्यात् त्रिमात्र इकारः प्राप्नोति। अथ कृते ऽर्धचतुर्थमात्रः। यद्यतो गुणे ( ६।१।९७ ) पररूपत्वे ऽकृते तदापि। अथ कृते ततोऽर्धतृतीयमात्रः। अथवाऽर्धचतुर्थमात्रोऽर्धतृतीयमात्रश्च नास्ति ततो द्विमात्र स्त्रिमात्रश्च स्यात्। टित्। आर्धधातुकस्येड् वलादेः (७।२।३५)। लविता। सवर्णग्रहणे सति दीर्घोऽपि स्यात्। कित्। भुवो वुग् लुङ्लिटोः (६।४।८८)। बभूव। अत्र सानुनासिकोऽपि स्यात्। सन्ति हि यणः सानुनासिका निरनुनासिकाश्च। मित्। चतुरनडुहो रामुदात्तः (७।१।९८)। अम् सम्बुद्धौ (७।१।९९)। अनड्वन्। अत्र दीर्घोऽपि स्यात्। तत् तर्ह्येवं वक्तव्यम्। न वक्तव्यम्। चकारोऽत्र क्रियते। सोऽनुक्तप्रतिषेधसमुच्चयार्थो भविष्यति। तेन येषामादेशादीनां ग्राहकत्वं नेष्यते ते सवर्णानां ग्राहका न भविष्यन्ति। अन्ये त्वाहुः। अप्रत्यय इति। नेह संज्ञाग्रहणम्। किं तर्हि ? अन्वर्थग्रहणम्। प्रतीयते विधीयत उत्पाद्यत इति प्रत्ययः। तेनाप्रत्यय इत्यस्यायमर्थो भवति। भाव्यमानोऽण् सवर्णान् न गृह्णातीति। इशादयोऽपि भाव्यन्त उत्पाद्यन्त इति तेऽपि प्रत्ययाः। तेन ते सवर्णानां ग्राहका न भवन्तीति। तै चकारस्य प्रयोजनं वक्तव्यम्। स्वं रूपमित्यस्यानुकर्षणं तस्य प्रयोजनमिति चेत् ? न। चानुकृष्टत्वादुत्तरत्र तदनुवृत्तिर्न स्यात्। न चैतत्प्रयोजनमुपपद्यते। स्वरितत्वादेवानुवृत्तिसिद्धेः। अथ मतं प्रथमान्तं स्वमित्येतत्प्रकृतं षष्ठीनिर्दिष्टेन चेहार्थः। तस्माच्चकारे कृते यत्नात् षष्ठ्यन्तता तस्य यथा स्यादित्येवमर्थश्चकार इति। एतदपि नास्ति। अर्थादेव हि विभक्तिविपरिणामसिद्धेः।

७० । तपरस्तत्कालस्य ।

तः परो यस्मात् सोऽयं तपर इति बहुव्रीहिं दर्शयति । तादपि परः स्तपर इति पञ्चमीतत्पुरुषं च । स पुनः पञ्चमीति ( २।१।३७ ) योगविभागात् समास इति वेदितव्यः । कथं पुनरेतत् समासद्वयं लभ्यते ? यावतैकस्त-परशब्दः । एकस्याप्याहृत्त्या द्विधा भेदो भविष्यतीत्यदोषः । अत्र हि बहुव्रीहेर्लिङ्गमतो भिस ऐसिति (७।१।८) तपरकरणम् । नह्यत्र पञ्चमीतत्पुरुष उपपद्यते । अवर्णो ह्यत्र तपरोऽभिमतः । न भिस् । यदि चेह पञ्चमीतत्-पुरुषः स्यात् तर्हि भिस् तपरः स्यात् । यतस्तपरो वर्ण इहोच्यते । नचासौ वर्णः । किं तर्हि ? तत्समुदायः । पञ्चमीतत्पुरुषे तु लिङ्गं वृद्धिरादैजिति (१।१।१) तपरकरणम् । नह्यत्र बहुव्रीहिर्युज्यते । यदि बहुव्रीहिः स्यात् तदाकारस्य तपरत्वं स्यात् । नचाकारार्थं तपरकरणम् । अपि त्वैजर्थम् । एतच्च तत्रैव प्रतिपादितम् । सवर्णस्येति वर्त्तते । वर्णस्य च सवर्णो न भवति । ननु वर्णसमुदायस्य । तस्मादविशेषाभिधानेऽपि वर्णएव तपरो विज्ञायत इत्याह तपरो वर्ण इति । तत्कालस्येति बहुव्रीहिः । स कालोऽस्येति । अयुक्तोऽयं निर्देशः । तथाहि तच्छब्देन तपरः परामृश्यते । तपरश्च वर्णः । कालस्तु क्रियाविशेष इष्यते । तथाहुरुक्तम्

आदित्यग्रहतारादि (A) परिस्पन्दमथापरे ।

भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥ १ ॥ इति

तत् कुतो वर्णक्रियाविशेषाभिधायिनो स्तपरकालशब्दयोः सामानाधि-करण्यम् ? एवं तर्ह्युत्तरपदलोपी समासोऽयं द्रष्टव्यः । यथोष्ट्रस्य मुखमिव मुखमस्योष्ट्रमुख इत्येवं तत्काल इव कालो यस्य स तत्काल इति । अस्यार्थं दर्शयितुमाह आत्मनेत्यादि । यद्यपि तपरकरणसन्निधानादिहात्म-शब्दस्य तत्र वृत्तिर्युक्ता तथापीह साहचर्यात् तत्सहचरितायामुच्चारण-क्रियायां कालाख्यायां स वर्त्तते । कुत एतत् ? तपरेण वर्णेन क्रियाया स्तुल्यत्वानुपपत्तेः । सम्भवति साहचर्यात् ताच्छब्द्यम् । तदेतदुक्तं भवति । तपरवर्णसहचरितया क्रियया तुल्यकालस्येति यादृशी तपरवर्णस्योच्चारणक्रिया

(A) नचत्र Stands for तारादि in the Deccan copy.

तादृगुच्चारणक्रिया यस्येति यावत्। गुणान्तरयुक्तस्येति। येन गुणेन धर्म्माख्येनोदात्तादिना विशिष्ट उच्चारितस्ततोऽन्यैरुदात्तादिभिर्गुणैः सम्बद्धस्येत्यर्थः। स्वस्य च रूपस्येति। इहापि तदनुवृत्तेः। इहेदं सूत्रं नियमार्थं वा स्याद् विध्यर्थं वा? यद्यणित्यनुवर्त्तते ततः पूर्व्वेणैव सिद्धे सत्यारम्भो नियमार्थो भवति। तपरोऽण् तत्कालस्यैव ग्राहको भवति नान्यस्येति। अथाणिति निवृत्तं ततो विध्यर्थम्। तत्राद्ये पक्षे विड्वनोरनुनासिकस्यादित्याकारो ( ६।४।४१ ) दीर्घस्तपरो निरनुनासिकः सूत्र उपात्तो भेदका गुणा इत्यस्मिन् दर्शने सानुनासिकस्य ग्राहको न स्यात्। अनण्त्वात्। ततश्च निरनुनासिक एवादेशः स्यात्। इतरत्र तु पक्षे सत्यपि भेदकत्वे गुणानामेष दोषो न भवतीति मन्यमानो द्वितीयं पक्षमाश्रित्याह विध्यर्थमिदमिति। कथं विध्यर्थमित्याह अणिति नानुवर्त्तत इति। अणामन्येषाञ्चेत्यादि। युक्तं यदन्येषामेव तपराणां ग्रहणकशास्त्रमिति तेषां पूर्व्वेण ग्रहणस्यासिद्धत्वात्। अणां तु पूर्व्वेणैव सिद्धे ग्राहकत्वे कथमित्यत आह अतो भिस ( ७।१।९ ) ऐसित्यादि। स्यादेतत्। इहापि तत् प्रवृत्तमेवानवकाशत्वादित्यत आह अतपरा इत्यादि। तस्माद् गुण ( १।१।८७ ) इत्यादावतपरा अणोऽवकाशः। अस्य त्वनणस्तपरा दीर्घाः। यथा विड्वनोरनुनासिकस्यादिति ( ६।४।४१ )। ये त्वणस्तपरास्तेषूभयप्राप्तौ परत्वादिदमेव ग्रहणकशास्त्रं प्रवर्त्तत इत्यभिप्रायः। वृक्षैः प्लक्षैरिति। तृतीयाबहुवचनं भिस्। अतो भिस ( ७।१।९ ) ऐसित्यैसादेशः। वृद्धिरेचीति (६।१।८८) वृद्धिः। अब्जाः गोजा इति। जनी प्रादुर्भावे। अप्सु जायते। गोषु जायत इति। जनसनखनक्रमगमो ( ३।२।६७ ) विट्। खट्वाभिरिति। कथं पुनरेतत् प्रत्युदाहरणम्? यावता ऽन्तादिवच्चेत्यन्तादिवद्भावे ( ६।१।८५ ) भवितव्यमेवातैस्भाविन। तपरकरणस्य तु यत्रैकादेशो नास्ति तद् व्यवच्छेद्यं भविष्यति। कीलालपाभिः सोमपाभिरित्यादि। नैष दोषः। अन्तादिवच्चेत्यत्र ( ६।१।८५ ) वक्ष्यति वर्णाश्रयविधावन्तादिवद्भावो नेष्यत इति। तथाहि खट्वाभिरित्यत्रान्तवद्भावाभावादतो भिस ऐस् न भवतीति। अथवा अत इत्यत्राकारद्वयप्रश्लेषः कृतः श्रूयमाणादतो यथा स्यात्।

## ७१। आदिरन्त्येन सहेता।

स्वरूपविधिपरिहारायारम्भः। इदमपि संज्ञासूत्रम्। अनादिभूतं वस्त्वपेक्ष्य तत्पूर्ववस्तुन आदित्वं न भवति। अनन्त्यभूतं वस्त्वपेक्ष्य ततः परस्यान्त्यत्वम्। नचेहाद्यन्तयोः परस्परापेक्षे आद्यन्तत्वे युज्येते। एवं हि सति वस्त्वन्तरस्य संज्ञिनो भावादादिरन्त्येन सहितः स्वस्यैव संज्ञा स्यात्। ततश्च स्वं रूपमित्येतस्येहानुवृत्त्यर्थे स्वरितत्वासङ्गो वृथा स्यात्। तस्मादाद्यन्तशब्दाभ्यां सामर्थ्यादाद्यन्तव्यतिरेकेण तन्मध्यपाति वस्तु संज्ञित्वेनाक्षिप्तमिति मत्वाह तन्मध्यपतितानामिति। जाताविदं बहुवचनम्। अन्यथा ह्योङ्शब्द ओकारस्य संज्ञा न स्यात्। ननु चाद्यन्तशब्दाभ्यां नियतदेशावयवावभिधीयेते। अवयवाश्चावयविनः समुदायरूपस्य सम्बन्धिन इति सम्बन्धिशब्दत्वादाद्यन्तशब्दाभ्यां तस्यैव संज्ञित्वेनाक्षेपो युक्तः। अत एवं वक्तव्यं तन्मध्यपतितानां समुदायस्येति। एवं मन्यते। यदयं तस्मादित्युत्तरस्येत्यादौ (१।१।६७) वर्णानां समुदाये परतो यकारं यणादेशं कृत्वा निर्देशं करोति ततो गम्यते न वर्णसमुदायः संज्ञीति। किं तर्हि प्रत्येकं वर्णा एवेति। अन्यथा वर्णसमुदाये संज्ञिनि परतो वर्णमालां यणादेशं कृत्वा निर्देशं कुर्य्यादिति। असम्भवात् स न कृत इति चेत्? न। वर्णमालात्मन आदेशस्य सम्भवात्। तर्हि समुदाये संज्ञिनि कार्य्यमेव न सम्भवतीति चेद् यदि च समुदाये परतः कार्य्यं न सम्भवति वर्णा एव प्रत्येकं सन्तु संज्ञिनः। तत्र कार्य्यं सम्भवति। किं समुदायेन? टा इत्यनेन ग्रहणं माभूदिति। ननु च सोऽपि तावतोऽवधेरन्त एव। न। तावतोऽवधेरविवक्षितत्वात्। टकारो ह्ययं टाङसिङसामिनात्स्याः (७।१।१२) द्वितीयाटौस्स्वेन (२।४।३४) इत्यत्र तृतीयैकवचनस्य विशेषणार्थः। नतु प्रत्याहारार्थः। अथादिग्रहणं किमर्थम्? अन्त्येन सह समुदाय एव संज्ञा मा भूदिति। नैतदस्ति। आवृत्तिधर्माणो हि संज्ञाशब्दा भवन्ति। आदिरेव प्रदेशवाक्येष्वावर्त्तते। न समुदायः। तस्मादन्तरेणाप्यादिग्रहणं सामर्थ्यादादेरेवान्त्यसहितस्य संज्ञात्वं विज्ञायते। न समुदायस्य। एवं तर्हि सामर्थ्यलब्धस्यैवार्थस्य विस्पष्टीकरणार्थमादिग्रहणम्। अथ सहग्रहणं किमर्थम्? यावता तृतीययैव सहार्थो गम्यते। यथा वृद्धो यूनेत्यत्र (१।२।६५)।

नैतदेवम्। इत्थम्भूतलक्षणेऽपि तृतीयास्ति। तस्माच्च सत्यामादिरन्त्येनेत् संज्ञकेनोपलक्षितः संज्ञा स्यात्। ततश्च प्रदेशेष्वक इतीक इत्यचीति च समुदायाद् विभक्तिर्न स्यात्। निरर्थकत्वेनाप्रातिपदिकत्वात्। सह ग्रहणात् तु सहभूता संज्ञेति समुदायस्य संज्ञात्वेनार्थवत्त्वात् प्रातिपदिकत्वे सति विभक्तिर्लभ्यते। इद्ग्रहणं त्वचीत्यत्रानित्संज्ञकेन चटतव इत्यनेन चकारेण संज्ञा मा भूदित्येवमर्थम्। अन्त्यत्वं तस्य पूर्ववत्। न समुदायापेक्षया। एवं तर्हि हलन्त्यमितीत्संज्ञा ( १।३।३ ) प्राप्नोति। तदर्थं न विभक्तौ तुस्मा ( १।३।४ ) इत्यत्र नेति योगविभागः कर्त्तव्यः।

## ७२। येन विधिस्तदन्तस्य।

स्वं रूपं शब्दस्येत्यस्यायमपवादः। इदमपि संज्ञासूत्रम्। नतु परिभाषा। नह्यत्र नियमरूपता परिभाषाधर्म्मो विद्यते। येनेति करणे तृतीया। विधीयतेऽपूर्व एव क्रियते इति विधिः कर्मसाधन उपसर्गे घोः कि ( ३।३।९२ ) रिति किप्रत्ययान्तः। तदन्तस्येति। सोऽन्तो ऽस्येति बहुव्रीहिः। तदित्यनेन स एव करणभूतः शब्दः प्रत्यवमृश्यते। अन्त-शब्दोऽयमवयववाची। अवयवश्च समुदायस्य भवति। अतश्च तस्यैवेयं संज्ञा विज्ञायत इत्याह। समुदायस्य संज्ञा भवतीति। अवश्यलाव्यमिति। अवश्यपाव्यमिति। लूञ् छेदने। पूञ् पवने। तद्धो क्षतायां वान्तो यि प्रत्यय ( ६।१।७९ ) इत्यावादेशः। मयूरव्यंसकादित्वात् समासः। लुम्पेदवश्यमः कृत्य इति मकारलोपः। अथेह कस्मादेजन्तस्य संज्ञा न सम्भवति ? एचोऽयवायाव ( ६।१।७८ ) इति। किञ्च स्यात्। चयनं चायको लवनं लावक इत्यत्रा-नेकाल्त्वादयादयः सर्वादेशाः स्युः। नैष दोषः। निर्दिश्यमानस्यादेशा भवन्तीत्येच एव भविष्यन्ति। न सर्वस्य तदन्तस्य। अथवा ऽस्य योग-स्यैवंविधो विषय एव न भवति। ततो नायमिह प्रवर्त्तते। तथाहि येनेति करणे तृतीयेत्युक्तम्। न चाकर्त्तृकं करणमस्तीति कर्त्ताप्याश्रितः। स पुनरिहसम्बन्धिशब्दत्वादन्तशब्देनावयववाचिना सन्निधापितः समुदायो विज्ञायते। प्रकृतत्वात् स्वरूपञ्च कर्त्ता च त्रिभिः प्रकारैः सन्निहितो भवति।

क्वचिन्निर्देशात् । ईदूदेद्द्विवचनमिति ( १।१।११ ) । अत्र द्विवचनं कर्तृभूतं निर्दिष्टम् । तथाहीदादिभिः करणैः प्रगृह्यसंज्ञां विदधाति । क्वचित् प्रकरणाद् यथा एरजिति ( ३।३।५६ ) । अत्र धातोरित्यधिकाराद् धातुः प्रकरणात् कर्त्ता सन्निहितः । स इकारेण करणेनाचं विदधाति । क्वचित् सामर्थ्याद् यथेको झलिति ( १।२।९ ) । अत्र धातोरेव सन् विधीयते । नान्यस्मादिति सामर्थ्याद्धातुः कर्त्ता सन्निहितः । स इका करणेन सनः कित्त्वं विदधाति । तदेव मीदूदेद्द्विवचनमित्यादौ ( १।१।११ ) कर्त्तृकरणयोरुभयोरपि विद्यमानत्वात् सोऽस्य सूत्रस्य विषय इति तत्र तदन्तविधिर्भवति । एचोऽयवायाव ( ६।१।७८ ) इत्यत्र तु न केनचित् कर्त्ता सन्निहितः प्रकारेण । न चाकर्त्तृकं करणं सम्भवति । तस्मात् कर्त्तृकरणयोरुभयोरप्यसन्निहितत्वान् नायमस्य सूत्रस्य विषय इति न सम्भवति तदन्तविधिः । वक्तव्य इति । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । द्वितीयाश्रितेत्यादौ (२।१।२४) सुपा श्रितादयो विशिष्यन्ते । न श्रितादिभिः सुप् । विशेषणेन च तदन्तविधिः । न विशेष्येण । यस्माद् येनेति करणे तृतीया करणञ्च परतन्त्रं परार्थं भवति न विशेष्यं तस्माद् विशिष्टैः श्रितादिभिस्तदन्तविधिर्न भवति । नडादिभ्यः ( ४।१।९९ ) फगिति । अत्रापि प्रकृतेन प्रातिपदिकेन नडादयो विशिष्यन्ते । न नडादिभिः प्रातिपदिकम् । अतोऽत्रापि नास्ति तदन्तविधिरिति । उगिद्वर्णग्रहणवर्जमिति । उगिता वर्णेन च प्रातिपदिकं विशिष्यते । विशेषणेन च तदन्तविधिर्भवत्येव । यस्मिन् विधिरित्यादि । तदन्तविधौ प्राप्ते तदादिविधिरुच्यते । यस्मिन्निति सप्तमीनिर्दिष्टे तदादिविधिं दर्शयति । यत्राल्ग्रहणे सप्तमीनिर्दिष्टे पूर्वस्य विधिस्तत्र तदादौ वेदितव्यः । अलादावित्यर्थः । यदि तर्हि तत्रापि तदन्तविधिः स्यादिहैव स्यात् श्रियाविति । इह तु न स्याच् श्रिय इति । तदादिविधौ तु सतीहापि भवति । स्वस्य च रूपस्येति श्रियावित्यत्रापि भवत्येव ।

## ७३ । वृद्धिर्यस्याचामादिस्तद्वृद्धम् ।

यस्येति समुदाय उच्यत इति । अचां मध्ये यस्यादिर्वृद्धिसंज्ञकस्तस्यैव

शब्दरूपस्येयं संज्ञा विधीयते । तच्च नियोगतः समुदायात्मकमेवेति सामर्थ्याद् यस्येति सामान्यपदेनापि समुदाय एवाभिधीयते । संज्ञिनिर्देशार्थं यस्येति वचनम् । अचां मध्य इत्यादिना वृद्धिसंज्ञिनः समुदायादेकदेशस्य निर्धारणं दर्शयन्नचामित्यस्य निर्धारणषष्ठीत्वं दर्शयति । आदिशब्दस्त्विहोपक्रमे वर्त्तते । उपक्रम्यत इत्युपक्रमः प्रथमत उच्चारित इत्यर्थः । अचामिति बहुवचननिर्देशाद् यस्य बहूनामचां मध्ये वृद्धिसंज्ञक आदिभूतस्तस्यैव वृद्धसंज्ञया भवितव्यम् । न तु यस्य द्वयोर्मध्य इति चोद्यमपाकर्त्तुमाह अचामित्यादि । यदि तर्ह्यचामिति निर्धारणषष्ठीय मेवं सति समानजातीयस्यैव निर्धारणं भवतीत्यचां मध्ये वृद्धिसंज्ञकोऽजेव यथा स्यादित्येषोऽर्थः स्यात् । तथाच सत्याकारो यस्यादिस्तस्य संज्ञा न स्यादाश्वलायन इत्यादेः । नह्याकारस्य मुख्यमच्त्वमस्ति । अच्त्वसन्निवेशात् । उपचरितं तु स्यात् । अणुदित्सवर्णस्य चाप्रत्यय (१ १।६९) इत्यनेनानचोऽपि सतोऽच्कार्य्यकरणात् । न च मुख्ये सति गौणस्याश्रयणं युक्तम् । गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्ययात् । नैष दोषः । व्याप्तेर्न्यायादाकारस्यापि गौणमच्त्वमाश्रित्य भविष्यति । अन्यथा ह्यैज्ग्रहणमेव कुर्य्यात् । न वृद्धिग्रहणम् । शालीयो मालीय इत्यादि । अत्र वृद्धसंज्ञायां सत्यां वृद्धाच्छ इति (४।२।११४) च्छो भवति । ननु च शालामालाशब्दयोः क्वापटुशब्दस्य च संज्ञया न भवितव्यम् । नह्येषां वृद्धिसंज्ञक आदिः । किं तर्हि ? हल् । नैतदेवम् । विद्यमानोऽपि ह्यत्र हल् नापेक्ष्यते । अजपेक्षस्यादित्वस्याश्रयणात् । एतदेव ह्यज्ग्रहणस्य प्रयोजनम् । कथं नाम तदपेक्षयादित्वं विज्ञायेतेति ? अन्यथा तन्न कर्त्तव्यमेव स्यात् । अज्ग्रहणे क्रियमाणे सत्ययमर्थो भवति । अचां मध्ये यस्य यो वृद्धिसंज्ञको ऽजेवादिभूत इति । अन्येभ्यो ऽज्भ्यो यस्य वृद्धिसंज्ञकः प्रागुचार्य्यत इति यावत् । तेन शालाशब्दादेरपि संज्ञा सिध्यति । साभासन्नयन इति । अत्र वृद्धिसंज्ञाभावादणेव भवति । नतु च्छः । यदि पुनरादिग्रहणं न क्रियेत ततो यस्याप्यचां मध्ये वृद्धिसंज्ञकः कश्चित् सभासन्नयनादे स्तस्याप्येषा संज्ञा स्यात् । अत्र यद्यपि वृद्धिशब्दः श्रूयते तथापि तल्लिङ्गकपरिभाषा नोपतिष्ठते । यस्माद् यत्र नियतस्थानिके गुणवृद्धी विधीयेते तत्र स्थानिनियमार्था सा व्याप्रियते । एतच्च

प्रागेवोक्तम् । न चेह गुणवृद्ध्योर्विधानम् । अतो नात्र व्यापारस्तस्याः । तेन यस्याप्यनियतस्थानिको वृद्धिसंज्ञक आदिभूतस्तस्यापि संज्ञा सिद्धा भवति । वा नामधेयस्येत्यादि । ये पुरुषैर्व्यवहाराय संकीर्त्यमानाः शब्दा देवदत्त इत्येवमादयस्तेषा मेषा संज्ञा वेदितव्या । तेष्वेव नामधेयशब्दो रूढ़ः । नतु ये जात्यादिनिमित्तका गवादिशब्दा अनादिव्यवहारान्तःपातिनस्तेषु । ननु च काश्यादिपाठात् काश्यादिभ्य (४।२।११६) ष्ठञ्ञिठाभ्यां भवितव्यम् । तदयुक्तं देवदत्तीय इति च्छप्रत्ययान्तस्योदाहरणम् । नैष दोषः । यो हि देवैर्दत्तो देवदत्त इति क्रियानिमित्तको देवदत्तशब्दस्तस्यैव तत्र पाठो न संज्ञाशब्दस्य । तेन संज्ञाभूताद्देवदत्तशब्दाद् यदा वृद्धसंज्ञा तदा छो भवति । अन्यदा लण् । गोत्रान्तादित्यादि । यथा ऽसमस्तात् केवलाद् गोत्रप्रत्ययान्ताद् वृद्धाच्छप्रत्ययो भवति तथा समस्तादवृद्धादपि । घृतरौढ़िरिति । समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्चेति (२।१।६०, वा) समासः । एवमुत्तरत्रापि । रूढस्यापत्य' पाणिनस्यापत्यम् । अत इञ् (४।१।९५) । वृद्धाम्भीया इति । अत्राप्यम्भःशब्दाद् बाह्वादिभ्यश्चेतीञ् (४।१।९६) । बाह्वादिषु सम्भूयोऽम्भसः सलोपश्चेति पठ्यते । काश्यपशब्दो विदादित्वादञन्तः । जैह्वाकाता हारितकाता इति । कात्यशब्दो गर्गादियञन्तः । जिह्वाचपलः कात्यः जिह्वाकात्यः । हरितपचः (A) कात्यः हरितकात्यः । ताभ्यामौत्सर्गिक एवाण् । यस्येति चेत्यकारलोपः (६।४।१४८) । आपत्यस्य च तद्धितेऽनातीति (६।४।१५१) यकारस्य ।

## ७४ । त्यदादीनि च ।

उत्तरार्थमिति । उत्तरसूत्रेऽस्य प्रयोजनवत्त्वाद् यद्यनुवर्त्तेत एतदर्थमपि कस्मान्न भवतीत्याह इह न सम्बध्यत इति । इहापि सम्बध्येत तदायमर्थः स्यात् । त्यदादीनि यस्याचामादिभूतानि तद्वृद्धमिति । ततश्च त्वत्पुत्त्र इत्यादावेव स्यात् केवलानाञ्च त्यदानीनां न स्यादित्यभिप्रायः । ननु च त्वत्पुत्त्रो मत्पुत्त्र इत्यादावुपसर्जनानि त्यदादीनि । उपसर्जनानाञ्च तेषां त्यदादित्वं निवर्त्तितम् । तत् कुतोऽयं प्रसङ्गः ? यदि यस्याचामादेरित्येतदिह

(A) हरितचत्तुः कात्य इति वङ्गीयपुस्तके पाठः ।

सम्बध्यते तदा सत्युपसर्जनत्वे वचनात् त्यदादावेव संज्ञा स्यात्। न केवलाना-मिति मन्यते। कथं पुनरिहानुवर्त्तमानं शक्यमसम्बद्धुम् ? रूसम्बन्धानुवृत्तेः। वृद्धिर्यस्याचामादिस्तद्वृद्धमिति त्यदादीनि च वृद्धिसंज्ञकानि भवन्ति। वृद्धिर्य-स्याचामादिस्तद्वृद्धमिति तद्वृद्धम् एङ् प्राचां देशे यस्याचामादिग्रहणमनु-वर्त्तते। वृद्धिग्रहणं निवृत्तम्। एवं वृद्धिशब्देन सम्बन्धमनुवर्त्तमानं न शक्यते त्यदादिभिः सम्बन्धुम्। त्वादायनिः। मादायनिरिति। उदीचां वृद्धाद-गोत्रादिति (४।१।१५७) फिञ्। प्रत्ययोत्तरपदयोश्चेति (७।२ ९७) युष्मदस्मदो स्त्वामादेशौ। चकारोऽनुक्तसमुच्चयार्थः। तेन वा नामधेयस्येत्यादि वक्तव्यं न भवति।

## ७५। एङ् प्राचां देशे।

प्राचां देशाभिधान इति। प्राचां सम्बन्धी यो देशस्तदभिधान इत्यर्थः। एतेन प्राचामिति देशविशेषणं न विकल्पार्थमिति दर्शयति। प्राचां मतेनेत्यस्याविवक्षितत्वादित्याख्यातं भवति। एणीपचनीय इत्यादि। एणी-पचन इत्यादिभ्यश्छः। आहिच्छत्र इति। कान्यकुब्ज इति। अहिच्छत्रकान्य-कुब्जशब्दाभ्यामणेव भवति। दैवदत्त इति। वृद्धाधिकारे विहितो वाहीकग्रामे-भ्यश्चेति (४।२।११७) ठञ्ञिठौ न भवतः। काश्यादिपाठादपि तौ न भवतः। क्रियानिमित्तको हि देवदत्तशब्दस्तत्र पठ्यते। संज्ञाशब्दस्य चेदं प्रत्युदाहरणम्। एतच्च यदा वा नामधेयस्येति वृद्धसंज्ञा नास्ति तदा वेदितव्यम्। गौमत इति। अत्र सर्वमस्ति न तु देशाभिधानम्। तथाहि गोमती नदी प्राग्देशे। न देशः। नहि नदी देशग्रहणेन गृह्यते। नदीदेशोऽग्रामा इत्यत्र (२ ४।७) नद्याः पृथग्ग्रहणात्। एङ् प्राचां देश इति। उदीचां (४।१।१५७) वृद्धादगोत्रादित्येव-मादिषु प्रागुदञ्चौ श्रूयेते। तयोश्च विभागो न विज्ञायते। अतस्तत्परिज्ञानायाह प्रागुदञ्चावित्यादि। शरावती नाम नदी। तस्याः पूर्वेण व्यवस्थितो देशः प्राग्देशः। उत्तरेण व्यवस्थित उदग्देशः। तौ शरावती विभजते विभागेन व्यवस्थापयति। तस्यां हि मर्य्यादायां सत्यां तयोर्विभागः परिज्ञायते। किमर्थं विभजते ? विदुषां शब्दसिद्ध्यर्थमिति। पण्डितानां वैयाकरणानां शब्द-

व्युत्पत्त्यर्थम् । कथं विभजते ? हंसः क्षीरोदकं यथा । क्षीरोदकमिति जातिरप्राणिनामित्येकवद्भावः ( २।४।६ ) । क्वचित् क्षीरोदके इति पाठः । स सर्वो द्वन्द्वो विभाषयैकवद्भवतीति वेदितव्यः । यथा हंसः क्षीरमुदकञ्च मिश्रीभावमुपगतं पृथगसङ्करेण व्यवस्थापयति तथा शरावती प्रागुदञ्चौ । यत्तदोर्नित्याभिसम्बन्धात् सेतिवचनादनुक्तमपि येत्येतल्लभ्यते । या विभजते सा नो ऽस्मान् पातु रक्षतु । प्रसिद्धस्तु पाठो यत्र श्लोके प्रागुदीचाविति । तत्राऽच उद ईदिति ( ६।४।१३८ ) भसंज्ञकस्योच्यमानः कथमीकारः ? कथञ्चोगिदचां सर्वनामस्थानेऽधातोरिति ( ७।१।७० ) नुम् न भवतीति चिन्त्यम् । अत्र वर्णयन्ति । अच् प्रत्यन्ववपूर्वात् सामलोम्न (५।४ ७५) इत्यत्राजिति योगविभागेनाच्प्रत्ययः कृतः । तेनात्राचि परतो भसंज्ञायां सत्यामीत्त्वं भवति । नुम् तु न भवति । अचा सर्वनामस्थानस्य व्यवहितत्वादिति । अन्ये तु प्रागुदीचमिति समाहारं कुर्वन्ति । तेषां द्वन्द्वाच्चुदषहान्तात् समाहार इति ( ५।४।१०६ ) टचि समासान्ते कृते पूर्ववदीकारो नुमभावश्च भवति । क्वचित् तु प्रागुदीच इति पाठः । तत्रावयवदेशापेक्षया बहुत्वविवक्षायां बहुवचनम् । प्राग्देशानुदग्देशांश्च विभजत इत्यर्थः ।

इति श्रीबोधिसत्त्वदेशीयाचार्य्यजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जि (ञ्चि) कायां प्रथमाध्यायस्य
प्रथमः पादः समाप्तः ॥ १ । १ ॥

---

गौड़ग्रन्थमाला ।

श्रीमत्कुमारशरत्कुमाररायेण प्रवर्त्तिता
श्रीमदक्षयकुमारमैत्रेयेण पर्य्यवेक्षिता च ।

---

अथ

# काशिकाविवरणपञ्जिका ।

बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचिता ।

शास्त्रिश्रीश्रीशचन्द्रचक्रवर्त्तिभट्टाचार्य्येण संस्कृता ।

---

THE

# KASIKA VIVARANA PANJIKA

(THE NYASA.)

A COMMENTARY ON VAMANA-JAYADITYA'S KASIKA.

BY

JINENDRA-BUDDHI.

---

EDITED
WITH OCCASIONAL NOTES.
BY

SRISH CHANDRA CHAKRAVARTI B. A.
PROFESSOR OF SANSKRIT, RAJSHAHI COLLEGE,
RAJSHAHI, BENGAL.

**Vol. I.——Part II.**

---

PUBLISHED BY THE VARENDRA RESEARCH SOCIETY OF RAJSHAHI.

1914.

Rs. 2. Foreign 3s.

अथ

न्यासापरनाम्नी

# काशिकाविवरणपञ्जिका।

## प्रथमोऽध्यायः।

### द्वितीयः पादः।

१। गाङ्कुटादिभ्योऽञ्णिन् ङित्।

अत्र पक्षत्रयं सम्भाव्यते। इत्संज्ञको वा ङकारोऽनेन भाव्यते। गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति। इत्संज्ञको ङकार एषां सम्बन्धी भवतीति यावत्। एवं हि ते ङितो भवन्ति यदि हि तेषां ङकारोऽनुबन्धो विधीयते। नान्यथा। नहि विना चित्रगवीभिर्देवदत्तश्चित्रगुर्भवति। ङिदितीयं वा संज्ञाऽनेन क्रियते। गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति ङित्संज्ञका भवन्तीति यावत्। अतिदेशोऽयं वा स्यात्। गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति। ङिद्वद् भवन्तीत्यर्थः। तत्राद्ये पक्षे गाङ्कुटादिभ्य इत्यनया पञ्चम्याऽञ्णिदित्यस्याः प्रथमायाः षष्ठ्यां परिकल्पितायां सत्यामादेः परस्येति (१।१।५४) वचनादादेरलः स्थान आदेश एव ङकारः प्राप्नोति। द्वितीये तु पक्षेऽनिदितां हल उपधायाः (६।४।२४) क्ङितीत्यत्र संज्ञिनः संप्रत्ययो न स्यात्। शब्दभेदात्। अन्यो हि ङिच्छब्दः। अन्यो हि क्ङिच्छब्दः। किञ्च ङित्ग्रहणे ग्रह्यादौ (६।१।१६) सूत्र एषामेव संज्ञिनां ग्रहणं प्राप्नोति। न यङा-दीनाम्। कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसंप्रत्यय इति वचनात्। यद्यपि कथञ्चिदेते दोषाः परिहर्त्तुं शक्येरन्नाद्ययोः पक्षयोर्यस्तु तत्परीहारद्वारेण प्रहत्ती

साध्यायां प्रतिपत्तिगौरवदोष आपद्यते सोऽपरिहार्य्य एव। तृतीये तु पक्षे न कश्चिद् दोष इति मत्वा तमेवाश्रित्याह अतिदेशोऽयमिति। यद्येवं वतिना निर्देशः कर्त्तव्यः। अन्यथा तदर्थो नावगम्येत। नैतदेवम्। परपदार्थेषु हि प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति। यथा सिंहो माणवकः। गौर्वाहीकः। गाङ्कितीङादेशो गृह्यते। इङश्च (२।४।४८) गाङ् (२।४।४९) लिटि विभाषा लुङ्लृङोरिति (२।४।५०) गाङादेशो य इङः स्थाने वक्ष्यते तस्येदं ग्रहणम्। न गाङ् गतावित्यस्य। अथ गाङ् गतावित्यस्य धातोर्ग्रहणं कस्मान्न भवतीत्याह ङकारस्येत्यादि। इङादेशस्य यो ङकारस्तस्येदं प्रयोजनम्। इह सूत्रे तस्यैव ग्रहणं यथा स्यान्नान्यत् किञ्चिदात्मनेपदार्थं स्यादिति चेत्? न। आत्मनेपदस्य स्थानिवद्भावेनैव सिद्धत्वात्। तस्मादिङादेश एव गृह्यते। अन्यथा ङकारस्य वैयर्थ्यं स्यात्। ननु चोभयोरपि सामान्यग्रहणार्थो ङकारः स्यात्। तत् कुतो वैयर्थ्यम्? नैतदस्ति। यदि हि तौ समानौ स्यातां तदा स्यात् सामान्यग्रहणार्थता तस्य। नच तौ समानौ। गत्यर्थस्य गाङो ङकारस्यात्मनेपदविधौ चरितार्थत्वात्। इतरस्य तु न क्वचिच्चरितार्थता। तस्मादसमानार्थत्वादयुक्तं सामान्यग्रहणमिति गाङादेश एव गृह्यते। किमर्थं पुनरिह ङकार उच्चार्य्यते? न गा इत्येवोच्येत? नैवं शक्यम्। एवं हि सति निरनुबन्धकग्रहणेन सानुबन्धकस्येति कै गै शब्द इत्यस्यैव ग्रहणं स्यात्। कुटादयो हि कुट कौटिल्य इत्यत आरभ्य कुङ् शब्द इति यावदिति। तदनन्तरं वृत्करणात् ततोऽधिकानां कुटादित्वानुपपत्तेः। अध्यगीष्टेति। सिचो ङित्त्वे घुमास्थागादिसूत्रेणेत्त्वम् (६।४।६६)। अत्र हि दीङो युड्चि (६।४।६३) क्ङितीत्यतः क्ङितीत्यनुवर्त्तते। ईद् यतीत्यत (६।४।५) ईदिति च। अध्यगीषतेति। आत्मनेपदेष्वनत इत्यदादेशः (७।१।५)। अथ लिटि यो गाङादेशस्तस्य कस्मादुदाहरणं न प्रदर्शितम्? एवं मन्यते। लुङ एवायम्। नासाविह लिड्ग्रहणं प्रयोजयति। असंयोगाल्लिट् किदिति (१।२।५) वक्ष्यमाणेनैव सिद्धत्वात्। उत्कुटितेति। कुट कौटिल्ये। उत्पुटितेति। पुट संश्लेषणे। अथेहोच्चुकुटिषतीति सनो ङित्त्वादात्मनेपदं कस्मान्न भवति? उपदेशाधिकारात्। तत्र ह्युपदेशे ऽजनुनासिक (१।३।२)

इत्यत उपदेशग्रहणमनुवर्त्तते। नचात्रौपदेशिकं ङित्त्वम्? किं तर्हि? आतिदेशिकम्। व्यचेरित्यादि। व्यच व्याजीकरण इति तुदादौ कुटादिभ्यः प्राक् पठ्यते। विचितेति। ङित्त्वादिह ग्रह्यादिसूत्रेण (६।१।१६) संप्रसारणम्। उरुव्यचा इति। सर्वधातुभ्योऽसुन्नित्यसुन्प्रत्ययः। अत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घः।

## २। विज इट्।

इडादिप्रत्यय इति। इट् आदिर्यस्य तजादेः स तथोक्तः। अथोत्तमपुरुषस्यैकवचनस्येटो ग्रहणं कस्मान्न भवति? सार्वधातुकमपिदित्यनेनैव(१ २।४) तस्य ङित्त्वस्य सिद्धत्वात्। नैतदस्ति। यत्र हि तेन न सिद्ध्यति तत्रोत्तमपुरुषस्यैकवचनस्य ङित्वविधानार्थमिड्ग्रहणं स्यात्। क्व च तेन न सिध्यति? आर्द्धधातुक आशिषि लिङ्युद्विजिषीयेत्यत्र। अतो युक्तश्चोत्तमपुरुषस्यैकवचनस्य ग्रहणम्। नागमस्य। अर्थवद्ग्रहणेनानर्थकस्य प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति परिभाषाद्वयात्। अथापि कथञ्चिदागमस्येटो ग्रहणं स्यात्? एवमपि तन्मात्रस्यैव ङित्त्वं लभ्यते। ननु तदादेः प्रत्ययस्य। तत्किमित्याह इडादिप्रत्ययो ङिद् भवतीति। एवं मन्यते। वृद्धिर्यस्याचामादिरित्यत आदिग्रहणमनुवर्त्तते। तेन चेड् विशिष्यते। न चोत्तमपुरुषस्यैकवचनस्यादित्वमस्ति। किं तर्हि? आगमस्यैव। तस्मात् स एव गृह्यते। तस्य च केवलस्यादिभूतस्य ङित्त्वे प्रयोजनं नास्तीति सामर्थ्यादिडादेः प्रत्ययस्य ङित्त्वं विज्ञायत इति। उद्विजितेति। ङित्त्वात् पुगन्तलघूपधस्येति (७।३।८६) गुणो न भवति।

## ३। विभाषोर्णोः।

प्रोर्णुवितेति। ङित्त्वाद् गुणे प्रतिषिद्धे ऽचि श्नुधात्वित्यादिनो-(६।४।७७) वङादेशः।

## ४। सार्वधातुकमपित्।

अपिदिति। किमयं प्रसज्यप्रतिषेध उत पर्य्युदासः? किञ्चात्र? पूर्वस्मिन् पक्षे लोडुत्तमपुरुषस्यैकवचनस्याडुत्तमस्य पिच्चेत्याटि (३।४।९२) पिति कृते

तुदानीत्यत्राड्विकरणाकारयोः पिदपितोरेकादेशः परं प्रत्यन्तादिवच्चेत्यादिवद्भावात् (६।१।८५) पिद्ग्रहणेन गृह्यते इति पित्त्वम् । पित्त्वे च सत्यपिदिति ङित्त्वप्रतिषेधः स्यात् । ततश्च धातोर्गुणः प्रसज्येत । इतरत्र तु पचे च्यवन्ते प्लवन्त इत्यत्र शबन्तादेशाकारयोः पिदपितोर्य एकादेशस्तस्य पितोऽन्यत्वान् ङित्त्वमापद्येत । ततश्च धातोर्गुणो न प्राप्नोति । पितोऽन्यत्वन्त्वेकादेशस्य परं प्रत्यादिवत्त्वात् परग्रहणेन ग्रहणाद् । उच्यते । यथेच्छसि तथैवास्तु । उभयथाप्यदोषः । पूर्वत्र तावददोषो यस्मादपितोरेव तुदानीत्यत्रैकादेशः । न पिदपितोः । तथाह्याडुत्तमस्य पिच्चेति (३।४।९२) लोडुत्तमपुरुषस्यैव पित्त्वं विधीयते । न लाटः । इतरत्राप्यदोषः । यस्मादपिदित्यनेन सार्वधातुकं विशिष्यते पितोऽन्यत् सार्वधातुकमपिदिति । न चान्तशब्दाकारः सार्वधातुकम् । किं तर्हि ? तदेकदेशः । यच्चात्र सार्वधातुकं न च तेन सहैकादेशः । येन सहैकादेशो न च तत्सार्वधातुकम् । तेन यद्यप्ययमेकादेशः पितोऽन्य स्तथापि सार्वधातुकं न भवतीति तत्कृतो ङित्त्वस्य प्रसङ्गः ? अथवा भवतु ङित्त्वम् । सत्यपि तस्य ङित्त्वे तस्मिन् नास्ति गुणाभावप्रसङ्गः । यस्माद् वार्णादाङ्गं वलीय इति वचनादेकादेशाद्धि प्रागेव च्यवन्ते प्लवन्त इत्यत्र गुणेन भवितव्यम् । कुरुत इति । तसो ङित्त्वे सति विकरणस्य गुणो न भवति । करोतेरस्यातउत् सार्वधातुके (६।४।११०) इत्युत्त्वम् भवति । तत्र हि गमहनेत्यादिसूत्रात् (६ ४।९८) क्ङितीत्यनुवर्त्तते ।

## ५ । असंयोगाल्लिट् कित् ।

धातोरेव लिड् विधीयते । नान्यस्मादिति लिटा सामर्थ्याद्धातुः सन्निधापितः । स चासंयोगग्रहणेन विशिष्यते । विशेषणेन च तदन्तविधिर्भवतीत्याह असंयोगान्ताद्धातोरिति । यदि तर्ह्यसंयोगान्ताद्धातोः परस्य लिटः कित्त्वं विधीयते तदा वव्रते वव्रध इति न सिध्यति । परत्वाद् गुणेन भवितव्यम् । कित्त्वस्यावकाश ईजतुरीजुरिति । गुणस्यावकाशो वर्त्तिता वर्धितेति । वव्रते वव्रध इत्यादावुभयप्राप्तौ परत्वाद् गुण एव स्यात् । नैतदस्ति । इष्टवाचित्वात्परशब्दस्य । कित्त्वमेवेष्टम् । कित्त्वमेव परमतस्तदेव भविष्यतीत्यदोषः । अत्र

च यद्यसंयोगादिति पर्य्युदास आश्रीयते तदा संयोगादन्यस्मिन् गृह्यमाणे नञिवयुक्तन्यायेन सदृशस्यैव ग्रहणं स्यात्। संयोगस्य सदृशो योऽन्योऽसहायो हलिति हलन्तादेव कित्त्वं भविष्यति। नाजन्तात्। ततश्चक्रतुश्चक्रुरिति न सिध्यति। तस्मात् प्रसज्यप्रतिषेधोऽयम्। न पर्य्युदासः। न चेत् संयोगात् परो लिड् भवतीति। ङित्त्वे प्रकृते किद्वचनं वच्यादीनां संप्रसारणं यथा स्यादित्येवमर्थम्। तद्धि वचिस्वपियजादीनां (६।१।१५) कितीति किति विधीयते। न ङिति। विभिदतुर्विभिदुरिति। कित्त्वात् पुगन्तलघूपधस्येति (७।३।८६) गुणाभावः। सस्रंसे दध्वंस इति। कित्त्वाभावादनिदितामित्यनुनासिकलोपो (६।४।२४) न भवति। स्रन्सु ध्वन्सु अधःपतने। अनुदात्तेत्त्वादात्मनेपदम्। लिटस्तझयोरेशिरेजित्येशादेशः (३।४।८१)। विभेदिथेति। सिप्। थल्। क्रादिनियमादिट्।

## ६। इन्धिभवतिभ्याञ्च।

समीध इति। ञिइन्धी दीप्तौ। पूर्व्ववदात्मनेपदमेशादेशः। कित्वादनिदितामित्यादिनानु (६।४।२४) नासिकलोपः। द्विर्वचनम्। अकः (६।१।१०१) सवर्णे दीर्घत्वञ्च। अथेजादेश्च गुरुमतोऽनृच्छ इत्याम् ( ३।१।३६ ) कस्मान्न भवति ? मन्त्रविषयत्वादस्य। तत्र चामन्त्र इत्यधिकारात्। एवं तर्हि मन्त्रम्छन्द एवेति छन्दस्युभयथेति ( ३।४।११७ ) सार्वधातुकत्वम्। ततश्च सार्वधातुकमपिदिति ( १।२।४ ) ङित्त्वम्। अतएव ङित्त्वादनुनासिकलोपो भविष्यतीति तत् किमर्थमिन्धेः परस्य लिटः कित्त्वं विधीयते ? ज्ञापनार्थम्। एतदनेन ज्ञाप्यतेऽनित्योऽयमामिति। नित्ये ह्यामि तेन व्यवधानादेवेन्धेः परो लिण् न सम्भवतीति कित्त्वविधानं नोपपद्यते। तस्मादनित्योऽयमामिति। तेन भाषायामपि समीध इति प्रयोग उपपन्नो भवति। बभूव। बभूविथेति। कित्त्वाद् यथाक्रमं वृद्धिगुणौ न भवतः। भुवो वुग् लुङ्लिटोरिति वुक्। भवतेर (७।४।७३) इत्यभ्यासस्यात्वम्। ननु च कृतयोरपि गुणवृद्ध्योर्वुका भवितव्यमकृतयोरपीति नित्यो वुक्। कृताकृतप्रसङ्गित्वात्। तत्र नित्यत्वाद् वुकि कृते गुणवृद्ध्योः प्राप्तिरेव नास्ति। भवतेरलघूपधत्वात्। अनजन्तत्वाच्चेति भवतिग्रहणमनर्थकम्। नैतदस्ति। अष्टाभ्यरस्य प्राप्नुवन्

विधिरनित्यो भवतीति वुगप्यनित्यः । ततश्च परत्वाद् गुणवृद्धी: कृतयोर्वुङ् न स्यात् । तस्माद् भवतिग्रहणं कर्त्तव्यम् । अथ कृतयोरपि गुणवृद्ध्योरेकदेशविकृतमनन्यवद्भवतीति नास्ति शब्दान्तरत्वम् । एवं सति शक्यं भवति ग्रहणमकर्त्तुम् । तत् क्रियते विस्पष्टार्थम् । अथ बभूवेत्यत्राचो ञ्णितीति (७।२।११५) वृद्धेः कथं प्रतिषेधः ? यावतेक इत्यनुवर्त्तते ? क्ङिति चे ( १।१।५ ) त्यनेनेग्लक्षणा वृद्धिः प्रतिषिध्यते । न चेयमिग्लक्षणा वृद्धिः । निर्दिष्टस्थानिकत्वात् । अत्र कित्त्वविधानसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्भविष्यति प्रतिषेधः । अन्यथा कित्त्वविधानमनर्थकं स्यादिति चेत् ? न । तस्य थल्युत्तमणलि च गुणप्रतिषेधार्थत्वात् । एवं तर्हि ङिद्ग्रहणमप्यनुवर्त्तते । तदनुवर्त्तमाने न विद्यमानमन्यत् प्रयोजनम् । तेनानिग्लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यति । इन्धेः संयोगार्थं वचनमिति । तस्य संयोगान्तत्वात् पूर्वेणासिद्धेः । भवतेःपिदर्थमिति । नापिदर्थम् । तस्यासंयोगान्तत्वादपिदिति पूर्वेण सिद्धेः । भवतेरिह श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः । यङ्लुगन्ताल्लिटः कित्त्वं मा भूदिति । बोभावेति । तथाचोक्तम्—

श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च ।
यच्चैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुकि ॥ १ ॥ इति ।

श्रन्थिग्रन्थीत्यादि । श्रन्थ ग्रन्थ सन्दर्भे । दम्भ दम्भे । ष्वन्ज परिष्वङ्गे । एषामपि श्रन्थिग्रन्थिप्रभृतीनां लिटः कित्त्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । चकारोऽनुक्तसमुच्चयार्थः क्रियते । तेन श्रन्थिप्रभृतीनामपि संयोगान्तानां लिटः कित्त्वं भविष्यतीति । श्रेथतुरित्यादि । कित्त्वादनिदिता ( ६।४।२४ ) मित्यनुनासिकलोपः । तृफलभजत्रपश्चेति ( ६।४।१२२ ) चकारस्यानुक्तसमुच्चयार्थत्वादनेकहल्मध्यस्याप्येत्वाभ्यासलोपौ । परिषस्वजइति । अनुदात्तेत्त्वादात्मनेपदम् । पूर्वस्य सकारस्य स्थादिष्वभ्यासेन ( ८।३।६४ ) चाभ्यासस्येति वर्त्तमान उपसर्गात् सुनोतीत्यादिना ( ८।३।६५ ) षत्वम् । परस्य तु सकारस्य सदिस्वञ्जोः परस्य लिटीति ( ८।३।११८ ) षत्वप्रतिषेधः ।

७ । मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।

मृड सुखने । मृद क्षोदे । गुध रोषे । कुष निष्कर्षे । क्लिशू विबाधने । वद व्यक्तायां वाचि । वस निवासे । न क्त्वा सेड़िति (१।२।१८) कित्त्वप्रतिषेधं वक्ष्यतीति । नन्वेतदेव नियमार्थं भविष्यतीति मृड़ादिभ्य एव सेट् क्त्वा किद् भवति नान्येभ्य इति । ततश्च सिद्धं देविला सेवित्वेत्यादि । तत् किमर्थं न क्त्वा सेडिति (१।२।१८) प्रतिषेधं वक्ष्यति ? विस्पष्टार्थम् । अन्यथा हि केचिद्विपरीतनियमं सम्भावयेयुः । मृड़ादिभ्यः क्त्वाप्रत्यय एव किद् भवति नान्य इति । पुरस्तादपकर्ष इत्यादि । अपकर्ष इत्यपवाद इत्यर्थः । क्लिशित्वेति । क्लिशः क्त्वानिष्ठयोरितीट् (७।२।५०) । उदित्वा उषित्वेति । वच्यादिसूत्रेण (६।१।१५) संप्रसारणम् । वसतेः शासिवसिघसीनाञ्चेति ( ८।३।६० ) षत्वम् । वसतिक्षुधोरितीट् ( ७।२।५२ ) ।

८ । रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।

रुदिर् अश्रुविमोचने । विद ज्ञाने । मुष स्तेये । ग्रह उपादाने । ञिष्वप् शये । प्रच्छ ज्ञीप्सायाम् । ग्रहेर्विध्यर्थमेवेति । न क्त्वा सेड़िति (१।२।१८) प्रतिषिद्धस्य कित्त्वस्य पुनर्विधिर्यथा स्यात् । स्वपिप्रच्छ्योरित्यादि । सन्नर्थमिति । अथ क्त्वार्थं वचनं कस्मान्न भवतीत्याह किदेव हि क्त्वेति । स्वपिप्रच्छ्यो र्ह्यौ काच उपदेशेऽनुदात्तादितीट् ( ७।२।१० ) प्रतिषेधात् क्त्वा सेड् न भवतीत्यतो न क्त्वा सेड़िति ( १।२।१८ ) निषेधो न प्रवर्त्तते । तेन किदेव हि क्त्वेति । रुदित्वेति । समानकर्त्तृकयोः पूर्वकाले ( ३।४।२१ ) क्त्वेति क्त्वा । गृहीत्वेति ग्रहोऽलिटि दीर्घः ( ७।२।३७ ) । ग्रह्यादिसूत्रेण ( ६।१।१६ ) संप्रसारणम् । जिघृक्षतीति । हो ढ इति ( ८।२।३१ ) ढत्वम् । षढोः कः ( ८।२।४१ ) सीति कत्वम् । एकाचो बशो ( ८।२।३७ ) भषित्यादिना गकारस्य घकारः । सनि ग्रहगुहोश्चेतीट् ( ७।२।१२ ) प्रतिषेधः । सुषुप्सतीति । वच्यादिसूत्रेण ( ६।१।१५ ) संप्रसारणम् । पिपृच्छिषतीति । अत्रापि ग्रह्यादिसूत्रेण ( ६।१।१७ ) संप्रसारणम् । छे चेति तुक् ( ६।१।७३ ) । स्तोश्चुना श्चुरिति ( ८।४।४० ) श्चुत्वम् ।

९ । इको झल् ।

क्वेति निवृत्तमिति । झलादेः क्त्वाप्रत्ययस्यौपदेशिकं कित्त्वमस्त्येवेति तदनुवृत्तेरपार्थकत्वात् । सन्ग्रहणन्तु प्रथमान्तमिहानुवर्त्तते । तस्य झलित्यनेन सामानाधिकरण्यमुपपन्नम् । अतः सामर्थ्यात् तदादिविधिर्विज्ञायत इत्यत आह । झलादिः सन् किद् भवतीति । अथ तदन्तविधिः कस्मान्न भवति ? झलन्तः सन्निति ? एवं मन्यते । वृद्धसंज्ञासूत्रा (१।१।७३) दिहादि ग्रहणमनुवर्त्तते । तेन झल् विशिष्यते । तस्मात् तदादिविधिरेव विज्ञायते न तदन्तविधिरिति । यदि पुनस्तदन्तविधिः स्यात् तदा किं स्यात् ? यत्रातो लोपे कृते झलन्तत्वं सनस्तत्रैव स्याच् चिकीर्षितेत्यादौ । चिकीर्षतीत्यादौ तु न स्याददन्तत्वात् । अदन्तत्वन्तु सञ्शवकारयोर्द्वयोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावात् । अथेकइतीक् स्मरणइत्यस्य धातोर्ग्रहणं कस्मान्न भवति । झलिति प्रत्याहारसाहचर्य्यात् । प्रत्याहारस्यैव युक्तत्वात् । किञ्च गर्गादिषु जिगीषुशब्दपाठाच्च । धातुग्रहणे हि सति जयतेः परस्य सनः कित्त्वं न स्यात् । तथाच जिगीषुशब्दो न सिद्ध्येत् । किञ्च धातुग्रहणे हि सतीको धातोः समीपगतो हल् न सम्भवतीति हलन्ता(१।२।१०)च्चेत्येतदप्यघटमानं स्यात् । तस्मात् प्रत्याहारस्यैव ग्रहणं न्याय्यं न धातोः । चिचीषतीति । अज्झनगमां सनीति ( ६।४।१३ ) दीर्घः । एकाच ( ७।२।१० ) इत्यादिना पूर्वोक्तेनेट्प्रतिषेधः । उत्तरत्रापि यत्रेटः श्रवणं नास्ति तत्राप्यनेनैव प्रतिषेधो वेदितव्यः । यत्र तु विशेषोऽस्ति तत्रासौ वक्तव्य एव । तुष्टूषतीति । शर्पूर्वाः खय ( ७।४।६१ ) इति खयः शेषः । शिशयिषत इति । पूर्ववत् सन ( १।३।६२ ) इत्यात्मनेपदम् । एवमुत्तरत्रापीच्छासन्नन्तादात्मनेपदमनेनैव बोद्धव्यम् । किमर्थं पुनरित्यादि । अत्र वक्ष्यमाणोऽभिप्रायः । गुणो मा भूदिति । यदर्थमिदमुच्यते तदाह । येनाभिप्रायेण पृष्टवां स्तमाविष्कर्त्तुमाह अज्झनगमांसनीत्यादि । यदि दीर्घत्वे कृतेऽपि गुणः स्यात् तदा दीर्घत्वस्य वैयर्थ्यं स्यात् । तस्मान् मा भूत्तस्य वैयर्थ्यमिति दीर्घत्वं तद्गुणस्य बाधकं भविष्यतीति । अत्र दोषमापादयितुमाह यथैव तर्हीत्यादि । असति कित्त्वेऽनवकाशं दीर्घत्वं यथा गुणस्य बाधकं भवति तथा णिलोपस्यापि

बाधकं स्यात्। ततश्च णिलोपं बाधित्वा दीर्घत्वे सति ज्ञीप्सतीति न सिद्धेरदित्यभिप्रायेणाह तस्मादित्यादि। यत एवमनारभ्यमाण एतस्मिन्नेष दोषोऽनुषज्येत तस्माद् दीर्घत्वस्यावकाशदानाय कित्त्वमिदमारभ्यते। अथारभ्यमाणेऽप्येतस्मिन् कस्मादेष दोषो न भवतीत्यत आह चिचीषतीत्यादि। कित्त्वे सति तेनैव गुणस्य बाधितत्वात्। चिचीषति तुष्टूषतीत्यादिषु सावकाशं दीर्घत्वं भवति। तेन च परत्वाण्णिलोपो न बाध्यते। नहि कित्त्वे सति शक्यमेवं वक्तुं यथा दीर्घत्वं गुणं बाधते तथा णिलोपमपीति। यस्मान्न गुणो दीर्घत्वेन बाध्यते। किं तर्हि? कित्त्वेन। अत्र दीर्घत्वस्यावकाशो दर्शितः। णिलोपस्य त्वेषोऽवकाशः। पाचयतेः पाक्तिः। याजयतेर्याष्टिरित्यादि। ज्ञीप्सतीत्यत्रोभयप्राप्तौ दीर्घत्वं बाधित्वा परत्वान् णिलोप एव भवति। ज्ञा अवबोधने। मारणतोषणनिशामनेषु ज्ञा। मिच्चेति चुरादिपाठाण्णिच्। अर्त्तिह्रीत्यादिना पुक् ( ७।३।३६ )। मितां ह्रस्व ( ६।४।९२ ) इति ह्रस्वत्वम्। अन्ये तु ज्ञप मारणतोषणनिशामनेष्विति पठन्ति। ततो णिच्। तत इच्छासन्। सनीवन्तर्धेत्यादिना ( ७।२।४९ ) पक्ष इड्भावः। आप्ज्ञप्यृधामीदितीत्त्वम् ( ७।४।५५ )। अत्र लोपोऽभ्यासस्ये ( ७।४।५८ ) त्यभ्यासलोपः। णेरनिटीति णिलोपः ( ६।४।५१ )। इकः कित्त्वमित्यादि। अथ किमर्थमिक उत्तरस्य सनः कित्त्वं विधीयते? किमर्थमिको झलिति योगविभागः क्रियते? नन्वेकमेवेदं सूत्रं पठितव्यम्। इको झल् हलन्ताच्चेति? प्रयोजनमाह गुणो मा भूदिति। चिचीषतीत्यादौ सार्वधातुकार्द्धधातुकयोरिति ( ७।३।८४ ) गुणः प्राप्नोति। स मा भूदित्येवमर्थं कित्त्वं विधीयते। नैतदस्ति प्रयोजनम्। यस्मादज्झनगमां सनीति (६।४।१६) नाप्राप्ते गुणे दीर्घत्वमारभ्यतेऽतो दीर्घारम्भाद् गुणो न भविष्यतीति। अन्यथा हि दीर्घग्रहणमनर्थकं स्यात्। ननु च चुकूषत इत्यत्र दीर्घवचनस्य सार्थकत्वम्। अत्र हि गाङ्कुटादिसूत्रेण ( १।२।१ ) ङित्त्वे सति गुणो न प्रवर्त्तते। नैतदस्ति। नह्येकमुदाहरणं प्रतियोगारम्भं प्रयोजयति। यदि ह्येतत् प्रयोजनमभिमतं स्यादुकारमेव गृह्णीयात्। कृते भवेदिति। यदि कित्त्वं नोच्येत कृते दीर्घत्वे गुणः स्यात्। अनर्थकन्त्विति। तुशब्दोऽवधारणे।

यदि दीर्घत्वे कृते गुणः स्यात् तदा दीर्घवचनमनर्थकमेव स्यात्। ननु च शास्त्रमावर्त्त्यमानमभ्युदयाय भवति यथा मन्त्रजपादयः। तत् कुतस्त-स्यानर्थक्यम्? नैतदस्ति। शास्त्रप्रवृत्तिपूर्वकाद्धि प्रयोगादभ्युदयो भवति। यदि शास्त्रप्रवृत्तौ किञ्चित् प्रयोजनं सम्पद्यते ततः शास्त्रं प्रवर्त्तते। ततः शास्त्रसंस्कृतप्रयोगाद्धर्मो भवति। नतु शास्त्रप्रवृत्तिमात्रात्। गुणे च कृते दीर्घस्य प्रयोगो नास्तीति दीर्घशास्त्रमनर्थकमापद्यते। तदनर्थकं मा भूदिति गुणो न भविष्यतीति। ह्रस्वार्थमिति। चिचीषतीत्यादौ ह्रस्वानां दीर्घत्वे कृते दीर्घत्वस्य श्रवणं यथा स्यादित्येवमर्थं दीर्घत्वम्। ततो न तस्यानर्थक्यम्। दीर्घाणान्तु प्रसज्यत इति। ह्रस्वानां दीर्घवचनसामर्थ्यान्न गुणो भविष्यति। दीर्घाणान्तु स्यादेव। नहि तेषां दीर्घत्वमुच्यते यतो दीर्घवचनसामर्थ्याद् गुणो न प्रवर्त्तते। ततश्च निनीषतीत्यादिर्न सिध्येत्। नैतदस्ति। सामर्थ्याद्धि पुनर्भाव्यमिति। यथैव हि भुक्तवद्भिरपि पुरुषैः सामर्थ्याद् भोजनविशेषात् पुनर्भोजनक्रिया भाव्यते तथा दीर्घाणामपि साम-र्थ्यात् पुनर्दीर्घत्वेन भाव्यम्। सामर्थ्यन्तु प्रयोजनम्। तत् पुनर्गुणप्रतिषेधः। तस्माद् दीर्घाणामपि गुणो मा भूदित्येवमर्थं दीर्घत्वं वक्तव्यम्। ततश्च तेषा-मपि दीर्घवचनसामर्थ्याद् गुणो न भविष्यतीति। यथैव हि गुणो न भवत्येवं चिकीर्षतीत्यादावृत इद्धातोरितीत्त्वमपि (७।१।१००) न स्यादित्यत आह ऋदित्त्वं दीर्घसंश्रयमिति। दीर्घः संश्रयो निमित्तं यस्य तत् तथोक्तम्। यं विधिं प्रत्युप-देशोऽनर्थकः स विधिर्बाध्यते। यस्य तु विधेस्तदेव निमित्तं नासौ विधिर्बा-ध्यते। गुणं प्रति दीर्घत्वस्योपदेशोऽनर्थकः। ऋदित्त्वन्तु तन्निमित्तमेव। नहि करोतेर्विना दीर्घत्वेनेत्त्वस्य प्राप्तिरस्ति। तस्माद् दीर्घत्वेन तेन गुण-एव बाध्यते। न ऋदित्त्वम्। स्यादेतत्। ह्रस्वानां नाकृते दीर्घत्व ऋदित्त्वं प्राप्नोत्यतस्तेषां मा भूद् दीर्घत्वमृदित्वस्य बाधकम्। दीर्घाणान्तु तरति-प्रभृतीनां तितीर्षतीत्यादौ बाधकमेव स्यात्। नहि तेषामृदित्त्वं दीर्घविधि-मपेक्षत इत्यत आह। दीर्घाणां नाकृते दीर्घ इति। दीर्घाणामपि नाकृते दीर्घ ऋदित्त्वं प्राप्नोति यस्मादित्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेनेति वचनात् परत्वाद् दीर्घाणामपि गुणः प्राप्नोति। तद् बाधनार्थं तेषामपि

दीर्घत्वं वनाश्रयमेव। तदेवं सर्वत्र ऋदित्त्वं दीर्घसंश्रयमिति कुतस्तद्दीर्घत्वेन न बाध्यते ? तस्मात् सर्व्वत्र दीर्घेषु ह्रस्वेषु च दीर्घवचनसामर्थ्याद् गुणो न भविष्यतीति नार्थं इको झलिति सनः कित्त्वेन। णिलोपस्तु प्रयोजनमिति। इदं तर्हि प्रयोजनम्। ज्ञीप्सतीत्यत्र परत्वान् णिलोपो यथा स्यात्। असति हि कित्त्वेऽनवकाशत्वाद्दीर्घत्वेन यथा गुणो बाध्यते तथा णिलोपोऽपि बाध्येत। ततश्च ज्ञीप्सतीति न सिध्येत्। सति तु कित्त्वे चिचीषतीत्यादिषु यत्र कित्त्वेन गुणो बाध्यते तत्र दीर्घत्वं सावकाशं भवति। तेन तत् सावकाशं दीर्घत्वं बाधित्वा ज्ञीप्सतीत्यत्र परत्वाण्णिलोप एव प्रवर्त्तते। ननु चासत्यपि कित्त्वे येन नाप्राप्तिन्यायेन गुणएव दीर्घत्वेन बाधितः स्यान्न णिलोपः। नैतदस्ति। यस्माद् दर्शनान्तर इयं परिभाषा यत्र कार्य्यविशेषचिन्ता तत्र प्रवर्त्तते। यदा तु कार्य्यसामान्यचिन्ता तदा कार्य्यमात्रेण सकलो विषयो व्याप्त इति सर्व्वत्र दीर्घत्वं बाधकं स्यात्। नन्वेवमप्यारभ्यमाणे कित्त्वे पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति णिलोपमेव दीर्घत्वं बाधेत। न गुणम्। गुणस्तु स्यादेवेति दोषायैवेदं कित्त्वम्। एतदपि नास्ति। नह्येकमुदाहरणं प्रतियोगारम्भं प्रयोजयति। यदि ह्येतावत् प्रयोजनमभिमतं स्यान् णिग्रहणमेव कुर्य्यात्। समुदायमात्रापेक्षया वा पुरस्तादपवादा इत्यादिका परिभाषा नास्त्येवेति।

## १०। हलन्ताच्च।

इक इत्यनुवर्त्तते। अत्र यदि चान्तशब्दोऽवयववाची स्यादिको हला सह सम्बन्धो न स्यात्। नहीको हलवयवः सम्भवति। यो हि येनारभ्यतेऽपृथग्देशभूतः स तस्यावयवो भवति। यथा पटस्य तन्तव इति। न च हलेगारभ्यते। तस्मान्नायमन्तशब्दोऽवयववाची। अपि तु समीपवचनो युक्त इति मत्वाह समीपवचनोऽयमन्तशब्द इति। ननु च धातुरत्र सामर्थ्यादाक्षिप्तः। अतस्तदपेक्षया हलोऽवयवत्वं भविष्यति। नैतदस्ति। एवं तर्ह्यन्तशब्दोऽतिरिच्येत। येन विधिस्तदन्तस्येत्यनेनैव (१।१।७२) तदन्तविधेर्लब्धत्वात्। हल् चासावन्तश्चेति विग्रहविशेषेण कर्म्मधारयत्वं दर्शयति। कस्य पुनरसावन्तः ? प्रकृतस्येकः।

यद्येवं सापेक्षमसमर्थं भवतीतीकमपेक्षमाणस्यान्तशब्दस्य समासो नोपपद्यते। नैष दोषः। अन्तशब्दो ह्यत्र प्रधानः। भवति च प्रधानस्य सापेक्षस्यापि समास इति द्वितीयेऽध्याये ज्ञापयिष्यति। उपमितं व्याघ्रादिभिः सामान्याप्रयोग (२।१।५६) इत्यत्र सामान्याप्रयोगग्रहणेन। इगन्तादिति। षष्ठीसमासोऽयम्। ननु चेक इति पञ्चम्यन्तं प्रकृतम्। तत् कथं षष्ठीसमासः। नैष दोषः। यद्यपि पञ्चम्यन्तं प्रकृतं तथापीह समीपसमीपिसम्बन्धे सति विभक्तिविपरिणामेन षष्ठ्यन्ततामनुभवति। इकः समीपगतादिति। इकः समीपवर्त्तिन इति। बुभुत्सत इति। बुध अवगमने। एकाचो बशो भषित्यादिना (८।२।३०) भष्भावः। एवमुत्तरत्रापि यत्र भष्भावस्तत्रानेनैव बोद्धव्यः। खरि चेति चर्त्वं (८।४।५५) धकारस्य तकारः। यियक्षत इति। यजेर्व्रश्चादिना (८।२।३६) षत्वम्। षकारस्य षढोः कः (८।२।४१) सीति कत्वम्। कित्त्वाभावाद् वचिस्वपीत्यादिना (६।१।१५) संप्रसारणं न भवति। यदि समीपवचनोऽयमन्तशब्दस्तदा दम्भेः परस्य सनः कित्त्वं न सिध्यति। तथाहि तस्य य इकः समीपगतो हल् न तस्मात् परः सन्। यस्मात् परः सन् नासाविकः समीपगत इत्यत आह दम्भेरित्यादि। हलित्यनेन हल्जातिरुच्यते। नतु व्यक्तिः। तेन यदा ता एव व्यक्तयस्त्यक्तभेदा जातिरिति दर्शनं तदा तासां व्यक्तीनां हल्त्वेनाश्रितानां नास्ति व्यवधानम्। अतो यैव हल्जातिरिकः समीपवर्त्तिनी तत एव परः सन्निति दम्भेर्विहितस्य सनः कित्त्वं सिद्धमेव। यदाप्यर्थान्तरभूता जातिर्व्यक्तिषु प्रत्येकं परिसमाप्ता निरवयवैका तदापि नास्ति व्यवधानम्। यस्माद्व्यक्तिर्व्यक्त्यन्तरस्य व्यवधायिका भवति। नतु जातिः। तस्या अशरीरिणीत्वात्। तस्मादिहापि दर्शने यैव हल्जातिरिकः समीपगता तत एव परः सन्निति दम्भेः परस्य सनः कित्त्वं भवति। तस्यास्तु व्यक्तिव्यतिरिक्ताया जातेर्यदिकमपेक्ष्य समीपवर्त्तिनीत्वं यच्च तज्जातिमपेक्षमाणस्य सनः परत्वं तदुभयं व्यक्तिद्वारकं वेदितव्यम्। तत्र नकारव्यक्तिरिकः समीपगतेति तदाधारा हल्जातिरपीकः समीपगतेति भकारस्य व्यक्तेः परः सन्निति तदाऽधारभूताया जातेरपि परः सन्। ननु जातेर्व्यक्तिनिरपेक्षं समीपवर्त्तिनीत्वं सम्भवति। नापि

जात्यपेक्षं सनः परत्वम् । जातेरशरीरिणीत्वात् । यदि तर्हि व्यक्तिद्वारक-मेतदुभय मेवं तर्हि विपर्य्ययोऽपि व्यक्तिद्वारकः स्यात् । भकारव्यक्तिरिकः समीपगता न भवतीति जातिरपि न स्यात् । नकारव्यक्तेः परः सन् न भवतीति जातेरपि न स्यात् । ततश्च हल्ग्रहणस्य सत्यपि जातिवाचकत्वे दम्भेः परस्य सनः कित्त्वं न सिध्यत्येव । नैतदस्ति । यद्यपि जातेर्व्यक्ति-द्वारकमिकः समीपवर्त्तिनीत्वं तद्विपर्य्ययश्च । सनोऽपि यद्यपि व्यक्तिद्वारकं जात्यपेक्षं परत्वं तद्विपर्य्ययश्च । तथापि यदत्र हल्त्वसामान्यस्येकः समीप-गतत्वं यदपेक्षञ्च सनः परत्वं तदाश्रयं कित्त्वं भविष्यतीति विपर्य्ययस्तु विद्यमानोऽपि नापेक्ष्यत एव । लक्ष्यानुरोधात् । ननु च हल्त्वं नाम जाति-र्नास्त्येव । तथाहि हलिति संज्ञाशब्दः सङ्केतवशादेव प्रवर्त्तते डित्थादिशब्द-वत् । नहि यथा गवादिषु गोत्वादिकं नाम सामान्यमभिन्नमस्ति तथा हकारादिषु वर्णेषु हल्त्वं नाम सामान्यमभिन्नमस्तीति शक्यमभ्युपगन्तुम् । तन्निबन्धनस्याभावात् । ततश्चायुक्तमुक्तं दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धमिति । नैतदस्ति । जातिपदार्थवादिनां मते येऽपि तावदेकवस्त्वभि-धायिनः संज्ञाशब्दा देवदत्तादयस्तदर्थानामप्यवस्थाभेदे परिकल्पितनानात्वेन जातिरभ्युपगम्यते । किम्पुनर्हलित्येवमादीनामनेकवर्णविषयाणां संज्ञाशब्दा-नाम् ? अन्यथा ह्यतिव्यापिनी शब्दार्थस्य व्यवस्था स्यात् । इदञ्च तावद् भवान् प्रष्टव्यः । गवादिषु जातेरस्तित्वस्य किं निबन्धनं येनासौ तत्राभ्युप-गम्यत इति ? भिन्नेष्वभिन्नाभिधानप्रत्ययाविति चेदेतावितरत्रापि समानौ । यथैव हि गवादिषु भिन्नेष्वपि प्राक् सङ्केतादुत्तरकालमनुयायिनौ तौ भवत स्तथा हकारादिष्वपि । प्राक् सङ्केताद् यथा तेषु तौ न भवतस्तथा गवादिष्वपि । तस्माद् यौ भिन्नेष्वभिन्नाभिधानप्रत्ययौ जातिसद्भावसम्-प्रत्ययहेतुभूतौ हल्ष्वपि स्त इति तत्रापि हल्त्वं नाम जातिरभ्युपेया । ननु गवादिष्वेव गोत्वादिकमस्तीत्येकान्त एव । धिप्सति धीप्सतीति । सनीवन्तर्धेत्यादिना ( ७।२।४९ ) यत्र पक्ष इण् नास्ति तत्रेदमुदाहरणम् । दम्भ ( ७।४।५६ ) इच्चेतीत्वम् । ईत्वञ्च । अत्र लोपोऽभ्यासस्ये ( ७।४।५८ ) त्यभ्यासलोपः । खरि चेति चर्त्वं (८।४।५५) भकारस्य पकारः ।

क्त्वि सत्यनिदितामिति (६।४।२४) न लोपः। दकारस्य झष्भावेन धकारः।

## ११। लिङ्सिचावात्मनेपदेषु।

लिङ्सिचावात्मनेपदेषु परत इति। कथं पुनर्लिङात्मनेपदेषु परतो भवति। यावता सिच एवात्मनेपदेषु परत्वं सम्भवति। न लिङः। एवं मन्यते। लिङेकदेशे ऽत्र सीयुटि लिङ्शब्दो वर्त्तते यथा न धातुलोप आर्धधातुक इत्यत्र (१।१।४) धात्वेकदेशे धातुशब्दो वर्त्तते। तस्मात् सीयुट एवानेन प्रकारेण कित्त्वं विधीयते। अथवा यथा हल्ङ्यादिसूत्रे (६।१।६८) ययोरेव दीर्घत्वं सम्भवति तयोरेव ङ्यापो दीर्घादित्येतद् विशेषणं तथेहापि यस्मादात्मनेपदं परं सम्भवति सिचस्तस्यैवैतद् विशेषणम्। आत्मनेपदग्रहणं भवति परस्मैपदव्यवच्छेदार्थम्। भित्सीष्टेति। आशिषि लिङ्लोटाविति (३।३।१७३) लिङ्। स्वरितेत्त्वादात्मनेपदम्। एवमुत्तरत्रापि स्वरितञितः कर्त्रभिप्राय इत्यात्मनेपदमनेनैव वेदितव्यम्। सुट्तिथोरिति (३।४।१०७) सुट्। कर्त्तरि श्नम्। लिङः सलोपोऽनन्त्यस्येति (७।२।७९) च न भवति। लिङाशि-षीत्यार्द्धधातुकत्वात् (३।४।११६)। तयोश्च सार्वधातुके विधानात्। भुत्सीष्टेति। बुधेरनुदात्तङित (१।३।१२) इत्यात्मनेपदं वेदितव्यम्। उत्तरत्राप्यनुदात्तङिद्भ्यः कर्त्रभिप्राय इत्यात्मनेपदमनेनैव वेदितव्यम्। अभित्तेति। झलो झलीति (८।२।२६) सिचो लोपः। अबुद्धेति। झषस्तथोर्धोऽध (८।२।४०) इति तकारस्य धकारः। झलाञ्जश् झशीति (८।४।५३) पूर्वधकारस्य दकारः। यक्षीष्टेति। स्वरितेत्त्वादात्मनेपदम्। पूर्ववत् षत्वं कत्वञ्च। संप्रसारणं हि स्यादिति। वच्यादिसूत्रेण (६।१।१५)। अद्राक्षीदिति। अस्तिसिचोऽपृक्त (७।३।९६) इतीट्। वदव्रजहलन्तस्याच (७।२।३) इति वृद्धिः। पूर्ववत् षत्वकत्वे।

## १२। उश्च।

लिङ्सिचाविहानुवर्त्तमानौ धातुं सन्निधापयतः। तत एव तयोर्विधा-नात्। स च ऋकारेण विशिष्यते। येन विधिस्तदन्तस्येति ऋकारेण तदन्त-विधिर्विज्ञायत इत्याह ऋकारान्ताद्धातोरित्यादि। अथ ऋ गतावित्यस्य धातो-

ग्रहणं कस्मान्न भवति ? शैलीहीयमाचार्य्यस्य यत्र यस्य धातोर्ग्रहणमिच्छति तत्र तस्य श्तिपा निर्देशं करोति । यथाऽर्त्तिपिपर्त्त्योश्च ( ७।४।७७ ) सर्त्ति-शास्त्यर्त्तिभ्यश्चेति (३।१।५६)। न चेह श्तिपा निर्देशः कृतः। तस्मादृवर्णस्यैवेदं ग्रहणम्। न धातोः। अकृतेति। ह्रस्वादङ्गादिति (८।२।२७) सिचो लोपः। वरिषीष्टेति। वृङो वृञो वैकस्य रूपम्। लिङ्सिचोरात्मनेपदेष्विति इट् ( ७।२।४२ )।

## १३ । वा गमः ।

संगसीष्टेति। समो गम्यृच्छीत्यादिनात्मनेपदम् (१।३।२९)। समगतेति। ह्रस्वादङ्गादिति ( ८।२।२७ ) सिचो लोपः।

## १४ । हनः सिच् ।

आहतेति। आङो यमहन ( १।२।२७ ) इत्यात्मनेपदम्। पूर्ववत् सिचो लोपः। आहसतेति। आत्मनेपदेष्वनत (७।१।५) इत्यदादेशः। अथ सिज्ग्रहणे प्रकृते पुनः सिज्ग्रहणं किमर्थं क्रियत इत्याह सिज्ग्रहणं लिङ्निवृत्त्यर्थमिति। प्रकृतं हि सिज्ग्रहणं लिङा सह सम्बद्धम्। अतस्तदनुवृत्तौ सत्यां तस्याप्यनुवृत्तिराशङ्क्येत। तस्मात् तान्निराकर्त्तुं सिज्ग्रहणं क्रियते। ननु च हन्तेर्लिङि वधादेशेन भवितव्यम्। न च तत्र सत्यपि कित्त्वे किञ्चिदनिष्टमापद्यते तत् कस्माल्लिङ्निवृत्त्यर्थं सिज्ग्रहणं क्रियत इत्यत आह उत्तरत्रेत्यादि। यद्यत्र लिङनुवर्त्तते तत उत्तरत्र तस्यानुवृत्तिः स्यात्। ततश्चोत्तरसूत्रेण तस्यापि कित्त्वं स्यादित्यभिप्रायः। इह तु वृत्तावात्मनेपदेन सिज् न विशेष्यत इत्यात्मनेपदं निवृत्तमिति कस्यचिद् भ्रान्तिः स्यादतस्तान्निराकर्त्तुमाह आत्मनेपदग्रहणमित्यादि। इहापि कस्मान्न भवतीत्यत आह इह त्वित्यादि। लुङि चेति। हन्तेः परस्मैपदेषु लुङि वधादेशः क्रियते। स च नित्यः। नित्यत्वन्तु तस्यात्मनेपदेष्वन्यतरस्यामित्युत्तरसूत्रे (२।४।४४) ऽन्यतरस्यांग्रहणात्। न च नित्ये वधादेशे कित्त्वस्य किञ्चित् प्रयोजनमस्ति। अतो नेहात्मनेपदस्यानुवृत्तिरुपपद्यते। अथ किमर्थं हन्तेः परस्य सिचः कित्त्वं विधीयते ? यावता सार्व्वधातुकमपिदिति (१।२।४) सिचः परस्य सार्वधातुकस्य ङित्त्वमस्त्येव।

मलानिदितामित्यनुनासिकलोपः (६।४।२४) सिद्धः । सिच इदित्त्वान्न सिध्यतीति चेत् ? न । सिच इकारस्योच्चारणार्थत्वात् । तथाहि च्लेः सिजित्यत्र (३।१।४४) वक्ष्यति—इकार उच्चारणार्थ इति । एवमपि च्लेरिदित्त्वात् सिचोऽपि स्थानिवद्भावेनेदित्त्वमतो न सिध्यतीति चेत् ? न । च्लेरिकारस्योच्चारणार्थत्वात् । तथाहि च्लि ( ३।१।४३ ) लुङीत्यत्र वक्ष्यति—इकार उच्चारणार्थ इति । एवं तर्हि सिद्धे ङित्त्वे सति यत् पुनरिह हनः सिजिति सिचः कित्त्वं विदधाति तज् ज्ञापयति वाह्यसार्वधातुकमाश्रित्य सिजन्तस्यानिदितामित्यनुनासिकलोपो ( ६।४।२४ ) न भवतीति । तेनारंस्त । अमंस्त । आयंस्त पादमिति सिद्धं भवति । अन्यथा ह्यनुनासिकलोपे क्रत आयतेत्यनिष्टं रूपं स्यात् ।

## १५ । यमो गन्धने ।

ननु च यम उपरम इति पठ्यते । तत् कथमयं गन्धने वर्त्तत इत्यत आह अनेकार्थत्वादित्यादि । आङो यमहन ( १।३।२८ ) इत्यत्राकर्मका (१।३।२६) च्चेत्यतोऽकर्म्मकग्रहणमनुवर्त्तते । तत् कथमिह सकर्मकत्वे सत्यात्मनेपदमित्यत आह सकर्मकत्वेऽपीत्यादि । सकर्मकत्वन्तु पादादेः कर्मणोऽत्र विद्यमानत्वात् । उदायंस्त पादमिति । आकृष्टवानित्यर्थः ।

## १६ । विभाषोपयमने ।

दारकर्मेति । कर्मशब्दः क्रियावाची । दारक्रियेत्यर्थः ।

## १७ । स्थाघ्वोरिच्च ।

सिच्च किद् भवतीति चकारेण कित्त्वं समुच्चीयत इति दर्शयति । किमर्थं पुनः सिचः कित्त्वं विधीयते । यावता गुणप्रतिषेधस्तस्य फलम् । इकारविधानसामर्थ्यादेव गुणो न भविष्यति । अन्यथा ह्येकारमेव विदध्यात् । नैतदस्ति । लाघवार्थं ह्रीकारविधानं स्यात् । दीर्घोच्चारणाद्ध्रस्वोच्चारणं लघु भवति । उपास्थितेति । समवप्रविभ्यःस्थ (१।३।२२) इत्यतः स्थग्रहणेऽनुवर्त्तमान उपान्मन्त्रकरण (१।३।२५) इत्यत उपादिति चाकर्मकाच्चेत्यात्मनेपदम् (१।३।२६) । पूर्ववत् सिचो लोपः । ननु च सिचमाश्रित्येत्त्वं विधीयते । तेन सन्निपात-

लक्षणो विधिरनिमित्तं तद्विघातस्येतीत्त्वं नोत्सहते सिचं विहन्तुम्। त
कुतो लोपः? नैतदस्ति। नहीत्त्वं सिचीत्युच्यते। किं तर्हि? इकारस्यान्त
देशो भवति सिच्च किद् भवतीति। अथापि सिज्निमित्तकं स्यात्? एव
मप्यदोषः। तस्याः परिभाषायाश्चानित्यत्वात्। अनित्यत्वन्तु सप्तमेऽध्या
ज्ञापयिष्यते। इच्चेत्यादि। हेतुशब्दोऽत्राध्याहार्य्यः। तेन षष्ठी हेतुप्रयोग इ
(२।३।२६) हेतुशब्दप्रयोगे कस्येति षष्ठी भवति। तकार एव इत् तकारेत्
तकार एव वा इद् यस्य स तकारेत्। तकारेतो भावस्तकारेत्त्वम्। इच्चेत्य
निर्देशे कस्य हेतोरिकारस्य तकारेत्त्वं क्रियते? किमर्थमिकारस्तपरः क्रिय
इत्यर्थः। शेषलक्षणा वा कार्य्यसम्बन्धविवक्षायां षष्ठीयम्। कस्य कार्य्यस
निष्पत्त्यर्थमिकारस्तपरः क्रियत इति यावत्। दीर्घो मा भूदिति। असति
हि तपरत्वेऽण् गृह्यमाणः सवर्णान् गृह्णातीतीकारेण सवर्णानां ग्रहणे सति
स्थानेऽन्तरतमपरिभाषयोपास्थितादितेत्यत्र दीर्घस्थाने दीर्घो भवति
स मा भूदिति तपरत्वं क्रियते। ऋतेऽपि स इति। स इत्यनेन दीर्घस
प्रत्यवमर्शः। ऋतेऽप्यस्मादेव वचनाद् घुमास्थादिसूत्रेण (६।४।६६) दीर्घः सिद्धः
तस्माद् वचनसामर्थ्याद्दीर्घो न भविष्यतीत्यभिप्रायः। भाव्यमानोऽण् सवर्णान् न
गृह्णातीत्यतो दीर्घो न भविष्यतीति। एष तु परीहारो नोक्तः। भाव्य
मानेनाप्यणा क्वचित् सवर्णानां ग्रहणात्। तथाहि अदस औप्रत्यये परत
स्त्यदाद्यत्वे वृद्धिरेचीति (६।१।८८) वृद्धौ कृतायामदसोऽसेर्दादु दो म (८।२।८०
इत्युकारो विधीयमानः सवर्णानां ग्रहणादौकारस्य दीर्घस्य स्थाने दीर्घ ए
भवत्यमू इति। इदं तर्हि प्रयोजनम्। अनन्तरे प्लुतो मा भूदिति। अनन्तरा
विसष्टशार्थं आरम्भे सति। कुत एतत्? विसष्टशस्य आकारस्य स्था
क्रियमाणो ह्रस्वो भवति न पुनः प्लुतः। तस्मात् प्लुतबाधनार्थं तपरत
कर्त्तव्यम्। एतदपि नास्ति प्रयोजनम्। प्लुतश्च विषये स्मृत इति। चशब्द
हेतौ। प्लुतो हि दूराद्धूतादिविषयविशेष (८।२।८४) उक्त एव। तत्र यद्यने
प्लुतो विधीयते तदा सर्वत्र दूराद्धूतादिविषयेऽन्यत्र चानेन भवितव्यम्। तत
दूराद्धूतादिविषयेऽपि तस्मिन् भवत्युक्तानुवाददोषः स्यात्। तस्य कृतस
करणात्। तस्मात् पक्ष उक्तानुवाददोषो मा भूदिति ह्रस्व एव भविष्यति न

प्लुत इति प्रत्याख्यातं भाष्ये तपरत्वम् । अन्ये तु वर्णयन्ति प्लुतस्य विषये प्लुत इति नानेन तपरत्वं प्रत्याख्यायते किन्तर्हि तस्य प्रयोजनमाख्यायते । दूराद्धूतादिविषये प्लुत इष्टोऽभिप्रेतः । स न प्राप्नोति । स्थानेऽन्तरतमपरिभाषया दीर्घस्यैव स्थाने दीर्घ एव विधीयते । ननु चोक्तं सिद्ध एव दीर्घ इति । सिद्धस्य पुनर्वचनं प्लुतस्य बाधनार्थं स्यात् । इष्यते च प्लुतो दूराद्धूतादिविषये । तस्मात् तस्य बाधको दीर्घो मा भूदिति तपरत्वं कर्त्तव्यम् । तेन विचार्य्यमाणानामित्याष्टमिको ( ८।२।९७ ) भवत्येव प्लुत इति ।

## १८ । न क्त्वा सेट् ।

क्त्वाप्रत्ययस्यौपदेशिकं कित्त्वमस्त्येवेति । तदिटः क्त्वाप्रत्ययेन ग्रहणात् सेटोऽपि प्राप्नोतीत्यतः प्रतिषेधोऽयमारभ्यते । क्त्वाप्रत्ययः सेट् किन्न भवतीति । अथ किं ककारस्येत्संज्ञाप्रतिषेधात् कित्त्वन्न भवति ? कित्कार्य्यस्य प्रतिषेधाद्वा ? यदि ह्यत्र ककारस्येत्संज्ञाप्रतिषेधादकित्त्वं विधित्सितं स्यादित्संज्ञाप्रकरणे लशक्कसेट्क्त्वातद्धितयोरिति सूत्रं कुर्य्यात् । एवं हि द्विष्प्रतिषेधो न कर्त्तव्यो भवति । तस्मात् कित्त्वप्रतिबद्धं यत् कार्य्यं तत् प्रतिषेधादकित्त्वं सेटः क्त्वाप्रत्ययस्यानेन क्रियते । न तु ककारस्येत्संज्ञाप्रतिषेधात् । अथ सानुबन्धकस्य ग्रहणं किमर्थम् ? न त्वेत्येवोच्येत । एवं हि लघु सूत्रं भवति । नैतदस्ति । ककारानुच्चारणे हि कश्चिद् द्वेष्यमपि विजानीयात् । सेटः क्त्वाप्रत्ययस्य ककारानुबन्ध एव नास्ति निरनुबन्धकस्योच्चारणादिति । तदेवं मा विज्ञायीति सानुबन्धकस्योच्चारणम् । कः पुनः सेटो निरनुबन्धकत्वे दोषः स्यात् ? क्त्वातोसुन्कसुन् (१।१।४०) इत्यत्र सेटो ग्रहणं न स्यात् । निरनुबन्धकत्वात् अथाव्ययसंज्ञाविधौ निरनुबन्धक उच्चार्य्यते । एवमपि सेट एव ग्रहणं स्यात् । नानिटः । सानुबन्धकत्वात् । निगृह्णीतिरिति । स्त्रियां क्तिन्(३।३।९४) । तितुत्रतथेति (७।२।९)ग्रहादीनां प्रतिषेधो वक्तव्य इति तितुत्रतथेत्यादिनेट्प्रतिषेधो न भवति । उपस्निहितिरिति । स्निह प्रीतौ । निकुचितिरिति । कुन्चु क्रुन्चु कौटिल्याल्पीभावयोः । एषु त्रिषूदाहरणेषु यथाक्रमं संप्रसारणगुणप्रतिषेधौ । अनिदितां हल उपधायाः (६।४।२४) क्ङि-

नीत्यनुनासिकलोपश्च किस्वाद् भवति। न सेड़ित्यादि। न सेड़ित्येतावता योगेनाकित्त्वे सति सिद्धं देवित्वेत्यादि। क्त्वाग्रहणं तु किमर्थम्? तेन विनाऽकित्त्वे सति गुध परिवेष्टने निगुधितो निगुधितवानित्यत्र निष्ठायां प्राप्नोतीति चेत्? नैतदस्ति। निष्ठायामवधारणात्। निष्ठाशीङ्स्विदिमिदी (१।२।१९) त्यत्रावधारणान्निष्ठायां न भविष्यति। शीङादिभ्य एव निष्ठा सेट् किन्न भवति। नान्येभ्यो धातुभ्य इति। शीङादिभ्यो निष्ठैवेति विपरीतनियमस्तु नाशङ्कनीयः। नह्यनिष्टार्था शास्त्रे प्रवृत्तिरिति न भविष्यति। लिटस्तर्हि कित्त्वस्य प्रतिषेधः स्यात्। ततश्च जग्मिव जग्मिमेत्यत्र गमहनेत्यादिनोपधालोपो (६।४।९८) न स्यादित्यत आह ज्ञापकान्न परोक्षायामिति। परोक्षे विहितत्वाल् लिटः श्रुतिः परोक्षेत्युच्यते। तस्यां कित्त्वप्रतिषेधो न भविष्यति। कथम्? ज्ञापकात्। किं तज् ज्ञापकम्? इत्याह सनि झल्ग्रहणं विदुरिति। यदयमिको (१।२।९) झलिति सन्विशेषणं करोति ततो ज्ञायत औपदेशिकस्य कित्त्वस्य न सेड़िति प्रतिषेधोऽयम्। नातिदेशिकस्येति। झल्ग्रहणं हि शिशयिषत इत्यत्र कित्त्वं मा भूदित्येवमर्थः क्रियते। यदि च न सेड़िति प्रतिषेध आतिदेशिकस्यापि कित्त्वस्य स्याज् झल्ग्रहणमनर्थकं स्यात्। अस्त्वत्र कित्त्वम्। तस्य न सेड़िति प्रतिषेधो भविष्यतीति तस्मादौपदेशिकस्य कित्त्वस्य प्रतिषेधोऽयं नातिदेशिकस्येति। अस्यार्थस्य ज्ञापकं झल्ग्रहणं विदन्ति विद्वांसः। आतिदेशिकञ्च लिटः कित्त्वमतस्तस्य प्रतिषेधो न भविष्यतीति। ननु चोत्तरार्थं झल्ग्रहणं स्यात्। स्याघ्वोरिच्चेत्यत्र (१।२।१७) झलादौ सिचीत्त्वं यथा स्यादजादौ माभूदिति। उपास्थायिषातामिति। अत्र हि स्यसिच्सीयुट्तासिष्वित्यादिना (६।४।६२) चिण्वद्भावः प्राप्नोति। इत्त्वञ्च। तत्र परत्वाच्चिण्वद्भावादिट्। चिण्वद्भावे सत्यातो युक् (७।३।३३) चिण्कृतोरिति युक्। तत्रासति झल्ग्रहण इड़ादावपीत्त्वं यकारस्थाने प्राप्नोति। नैतदस्ति यस्मादित्त्वं कित्सन्नियोगेन विधीयते। कित्त्वं हि प्रधानभूतम्। इत्त्वमन्वाचयशिष्टम्। अतः कित्त्वाभावे तदित्त्वं न भविष्यतीति। अथ स्याघ्वोरिच्चेत्यत्रापि (१।२।१७) कित्त्वं कस्मान्न भवति? न सेड़ित्येतावता योगेन

प्रतिषिद्धत्वात् । रेण तुल्यं सुधीवनीति । रेफेण तुल्यमेतदित्त्वम् । क्व चोदाहरणे ? सुधीवनीत्यत्र । शोभना धीवानो यस्यां सा सुधीवा । अनो बहुव्रीहेरिति (४।१।१२) ङीपोऽत्र प्रतिषेधे कृते यथा वनो र चेति (४।१।७) रेफो ङीप्सन्नियोगेन विधीयमानस्तदभावे न भवति तथा कित्त्वसन्नियोगेन विधीयमानमित्त्वं तदभावे न भविष्यति । किमर्थं तर्हि क्त्वाग्रहणम् ? क्त्वसौ कित्त्वप्रतिषेधो मा भूदित्येवमर्थं क्त्वाग्रहणं कर्त्तव्यम् । क्त्वसौ त्वौपदेशिकं कित्त्वमस्ति । तस्य न सेड्ित्येतावता योगेन प्रतिषेधः स्यात् । ततश्च जग्मिवानित्यत्रोपधालोपो न स्यात् । वस्वर्थं किदतिदेशादिति न भविष्यतीत्यध्याहार्य्यम् । अस्तु क्वसावौपदेशिकस्य कित्त्वस्य प्रतिषेधः । सत्यपि तस्मिन्न संयोगाल्लिट् (१।२।५) किदिति यदातिदेशिकं कित्त्वं तेनोपधालोपो भविष्यति । झल्ग्रहणादातिदेशिकस्य कित्त्वस्य प्रतिषेधो न भविष्यतीत्युक्तं ह्येतत् । तस्माद् वस्वर्थं क्त्वाग्रहणं न भविष्यतीति । एवं तर्हि निग्टहीतिः प्रयोजनम् । क्त्विनि तु प्रतिषेधो मा भूदित्येवमर्थं क्त्वाग्रहणमित्यर्थः । जग्मिवानित्यत्र विभाषा गमहनविदविशामिति ( ७।२।६८ ) क्वसोरिट् । उगिदचामिति ( ७।१।७० ) नुम् । हल्ङ्यादि ( ६।१।६८ ) संयोगान्तलोपौ ( ८।२ २३ ) । सान्तमहत (६।४।१०) इत्यादिना दीर्घः ।

## १६ । निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।

शीङ् स्वप्ने । ञिष्विदा गात्रप्रक्षरणे । ञिमिदा स्नेहने । ञिक्ष्विदा स्नेहनमोचनयोः । ञिधृषा प्रागल्भ्ये । शयितवानिति । अत्वसन्तस्य चाधातो रिति ( ६।४।१४ ) दीर्घः । शयित इति । गत्यर्थाकर्मकेत्यादिना ( ३।४।७२ ) कर्त्तरि क्तः । प्रस्वेदित इत्यादावादिकर्मणि क्तः कर्त्तरि (३ ४।७१) चेत्यनेन प्रशब्द आदिकर्म प्रारम्भं द्योतयति । प्रधर्षित इति । वैयात्यादन्यत्रेदमुदाहरणम् । तत्र हि धृषिशसी ( ७।२।१९ ) वैयात्य इतीट्प्रतिषेधेन भवितव्यम् । प्रकृतिग्रहणे यङ्लुको ग्रहणं स्मरति । अतो यङ्लुको ग्रहणं मा भूदिति शीङोऽनुबन्धनिर्देशः । तेन शेश्यितः शेश्यितवानित्यत्र कित्त्वप्रतिषेधाभावाद् गुणो न भवति । एरनेकाच ( ६।४।८२ ) इत्यादिना यणादेशः ।

## २०। मृषस्तितिक्षायाम्।

तितिक्षा क्षमा क्षान्तिरिति। यद्येवं क्षान्तिग्रहणमेव कर्त्तव्यम्। लघु ह्येवं सूत्रं भवति। सत्यमेतत्। वैचित्र्यार्थं तु न कृतम्। अपमृषितमिति। अपरामृष्टमित्यर्थः। अनेकार्थत्वाद्धातूनाम्। अनेकार्थत्वन्तु तितिक्षा ग्रहणाद् विज्ञायते। असति हि तत्र मृषस्तितिक्षायामेव पठ्यत इति। तन्न कुर्य्यात्। व्यवच्छेद्याभावात्।

## २१। उदुपधाद् भावादिकर्मणोरन्यतरस्याम्।

आदिकर्मणि वर्त्तमान इति। आदिभूतक्रियाक्षण आदिकर्म। तस्मिन् भूतत्वेन विवक्षिते यः क्तो भवति स आदिकर्मणि वर्त्तते। द्योतितमनेन-द्युतितमनेनेति। द्युत दीप्तौ। नपुंसके भावे क्तप्रत्ययः। एवं मोदित-मनेन मुदित मनेनेत्यत्रापि मुद हर्षे इत्यस्मात्। प्रद्युतित इत्यादिषु त्वादि-कर्मणि क्तः कर्त्तरि चेति ( ३।४।७१ ) क्तः कर्त्तर्य्येव विधीयते। न कर्मणि। धातोरकर्मकत्वात्। नापि भावे। भावोदाहरणादविशेषप्रसङ्गात्। कर्त्तर्य्य-प्युत्पन्नः क्त आदिकर्मसम्बन्धादादिकर्मणीत्युच्यते। आदिकर्म्मसम्बन्धस्त्वर्थ द्वारकः। रुचितमिति। रुच दीप्तौ। अस्याकर्मकत्वाद् गत्यर्थाकर्मकेत्यादिना कर्त्तरि (३।४।७२) क्तः। दीप्तिमत् कार्षापणमित्यर्थः। आदिकर्मात्र न विव-क्षितम्। प्रभुक्त ओदन इति। भुज पालनाभ्यवहारयोः। तयोरेव कृत्यक्तखलर्था (३।४।७०) इति कर्मणि क्तः। तस्यादिकर्मसम्बन्धादादिकर्मणि वृत्तिः। गुध परिवेष्टन इति दैवादिकः। निगुधित मिति भावे क्तः। यदि व्यवस्थितविभाषया शब्विकरणानामेव भवति सेड्ग्रहणेन किमर्थमिह निष्ठा विशिष्यते? अशब् विकरणत्वादेव हि प्रभुक्त इत्यत्र न भवति। नहि भुजिः शब्विकरणः। अपितु श्नम्विकरणः। सत्यमेतत्। उत्तरार्थं सेड्ग्रहण मनुवर्त्तनीयम्। अतस्तदुत्तरार्थ मनुवर्त्तमान मिहापि मन्दधियां सुखप्रतिपत्त्यर्यथा स्यादि-त्येवमर्थम्। तकारोऽत्र मुखसुखार्थो नतु दीर्घनिवृत्त्यर्थः। अलघूपधत्वा-देव हि दीर्घोपधानां गुणप्रसङ्गाभावात्।

## २२ । पूङः क्त्वा च ।

न सेडिति वर्त्तत इत्युक्तम् । न क्त्वा सेडित्यतः (१।२।१८) । ननुच पूङः परयोः क्त्वानिष्ठयोरिटा न भवितव्यमेव । श्र्युकः (७।२।११) किर्तीति प्रतिषेधात् । तदपार्थिका सेड्ग्रहणानुवृत्तिरिति य श्चोदयेत् तं प्रत्याह पूङश्चेड् विहित इत्यादि । अथ क्त्वाप्रत्ययस्योदाहरणं कस्मान्न प्रदर्शितमित्यत आह क्त्वाप्रत्ययस्येत्यादि । यदि ह्यनेन योगेन क्त्वाप्रत्ययस्य कित्त्वं प्रतिषिध्येत तदा तस्याप्युदाहरणं प्रदर्श्येत । नचानेन प्रतिषिध्यते । किन्तर्हि ? न क्त्वा (१।२।१८) सेडित्यनेनैव प्रतिषिद्धत्वात् । तस्मात् तस्योदाहरणं न प्रदर्शितमिति भावः । क्त्वाप्रत्ययस्य न क्त्वा सेडित्यनेन ( १।२।१८ ) प्रतिषेध इत्येतदेव द्रढयितुमाह तथाचेत्यादि । पूङश्चेत्यत्र सूत्रे द्वयोर्विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीति मन्यमानै र्भारद्वाजीयैरिदमुक्तं नित्यमकित्त्वमिडाद्योरिति । तौ पुनरिडादी क्त्वानिष्ठाप्रत्ययौ । यदि तर्हि नित्यमकित्त्वमिडाद्योस्तदा क्त्वाग्रहणमनर्थकं स्यात् । विकल्पेन ह्यत्राकित्त्वसिद्धये तस्य ग्रहणमर्थवद्भवति । नान्यथा नित्यत्वम् । कित्त्वप्रतिषेधस्य न क्त्वा सेडित्यनेनैव ( १।२।१८ ) सिद्धत्वादिति चोद्यमाशङ्क्येदमुक्तं क्त्वाग्रहणमुत्तरार्थमिति । पूङ इति सानुबन्धकस्योच्चारणं किमर्थम् ? पोपुवितः पोपुवितवान् पोपुवित्वेति यङ्लुगन्तात् कित्त्वप्रतिषेधो मा भूदिति । पूञ्निवृत्त्यर्थं सानुबन्धकस्योच्चारणं नोपपद्यते । श्र्युकः किती ( ७।२।११ ) तीट्प्रतिषेधात् । पुञः परयोः क्त्वानिष्ठयोः सेटोरभावात् ।

## २३ । नोपधात् थफान्ताद्वा ।

निष्ठेति निवृत्तमिति । पूर्वसूत्रे चानुकृष्टत्वात् । ग्रथित्वेति । कित्त्वपक्षेऽनिदितामित्यनुनासिकलोपः (६।४।२४) । गुफित्वेति । गुफ गुन्फ ग्रन्थे । रिफित्वेति । रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । ननु चैतद्विकल्पाभावेऽपि रलो व्युपधादित्यादिनैवात्र (१।२।२६) विकल्पेन भवितव्यम् । न चानयोर्विकल्पयोः कश्चिद् विशेषोऽप्यस्ति । एवं तर्हि नोपधग्रहणसामर्थ्याद् योगान्तरप्राप्तोऽपि विकल्पोऽनेन बाध्यते । ननु च ऋकारोपधो नोपधग्रहणस्य प्रत्यु-

।हरणविषयो भविष्यति। ऋफ ऋन्फ हिंसायाम्। अर्फित्वेति। नैतदस्ति। इहास्माभिरनयोर्धात्वो रूपत्रयं साध्यम्। अर्फित्वा ऋम्फित्वा ऋफित्वेति। एतत् तु सत्यसति वा नोपधग्रहणेऽनेनैव सिद्ध्यत्येव। सति तावन्नोपधग्रहणे ऽनोपधस्य ऋफेर्न क्त्वा सेडिति (१।२।१८) प्रतिषेधे सत्यर्फित्वेति सिध्यति। नोपधस्य त्वृम्फेरस्मिन् विकल्पे सत्यृम्फित्वा ऋफित्वेतीदमपरं रूपद्वयं सिद्ध्यति। असत्यपि नोपधग्रहणे सर्वथास्मिन् विकल्पे सतीदं रूपत्रयं सिध्यत्येव। तस्माद् युक्तमुक्तं प्रत्युदाहरणं रेफित्वेति। येन विधिस्तदन्तस्येति तदन्तविधौ सिद्धेऽन्तग्रहणमिह क्त्वाप्रत्ययकाण्डे यत्नमन्तरेण तदन्तविधिर्न भवतीति ज्ञापनार्थम्। तेनोत्तरसूत्र ऋत इति धातुः स्वरूपेण गृह्यते। नतु तदन्त इति।

## २४। वञ्चिलुञ्च्यृतश्च।

वन्चु प्रलम्भने। लुन्च अपनयने। ऋत इति सौत्रो धातु र्यत्र ऋतेरीयङि तीयङ् (३।१।२९) विहितः। ऋतेरीयङ् आर्धधातुके विकल्प्यत इति। आयादय आर्धधातुके (३।१।३१) वेत्यनेन। वचित्वेति। अनिदितामिति (६।४।२४) नलोपः। वक्त्वेति। उदितो (७।२।५६) वेतीड्भावः पक्षे। चकारो वाग्रहणस्य स्वरितत्वविस्पष्टीकरणार्थः। तेनोत्तरसूत्रे काश्यपग्रहणस्य पूजार्थता विज्ञायते। अन्यथा हि तस्य विकल्पार्थता विज्ञायते। तथाच द्वयोर्विभाषयोर्मध्यवर्त्तित्वान्नित्योऽयं विधिः स्यात्।

## २५। तृषिमृषिकृशेः काश्यपस्य।

ञितृषा पिपासायाम्। मृष तितिक्षायाम्। कृश तनूकरणे। काश्यपग्रहणं पूजार्थमिति। काश्यपस्यैवैतद्विषयं ज्ञानं नान्येषामित्यसाधारणज्ञानोद्भावनमेव तस्य पूजा। तत्पूजाद्वारेण शास्त्रस्यापि महार्थतोद्भावनलक्षणा पूजा कृता भवति। एवन्नाम शास्त्रस्य महार्थत्वं येन तथाविधा मुमुक्षवोऽप्याद्रियन्त इति। तेन विकल्पार्थं काश्यपग्रहणं कस्मान्न भवतीत्यत आह वेत्येव हि वर्त्तत इति।

## २६ । रलो व्युपधाद्धलादेः संश्च ।

क्त्वाप्रत्ययस्य न क्त्वा सेडिति ( १।२।१८ ) कित्त्वे प्रतिषिद्धे सनोऽप्यकित्त्वे स्वभावत एव व्यवस्थित उभयत्रेदं विधिमुखेनैव प्रवर्त्तत इति पक्षे कित्त्वं भवतीति । विदिद्युतिषत इति । द्युतिस्वाप्योः (७।४।६७) संप्रसारण-मित्यभ्यासस्य संप्रसारणम् । एषिषिषतीति । इषु इच्छायाम् । इडागमे कृतेऽजादेर्द्वितीयस्येति (६।१।२) द्वितीयस्यैकाचो द्विर्वचनम् । बुभुक्षत इति । हलन्ताच्चेति (१।२।१०) नित्यं कित्त्वं भवति । लाघवार्थमिणुपधादिति वाच्य इण्ग्रहणानि सर्वाणि परेण णकारेणेति ज्ञापनार्थं व्युपधादित्युक्तम् । तेन लणित्यत्र यदुक्त मिण्ग्रहणानि सर्वाणि परेण णकारेणेति तदुपपन्नं भवति ।

## २७ । ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।

ऊः कालो यस्याचः स ऊकालः । ननु चायुक्तोऽयं निर्देशः । तथाहि ऊ इति शब्दः । कालस्तु क्रिया । तत् कुतोऽत्र सामानाधिकरण्यम् ? नैष दोषः । यस्मादू इत्येतत्सहचरितायामुच्चारणक्रियायामिह साहचर्य्यादू इत्येष शब्दो वर्त्तते । एवमप्ययुक्तम् । यत ऊ इत्येतत्सहचरितं यदुच्चारणं तदूकारस्यैव । नान्यस्याचः । तत् कथं सोऽन्यसम्बन्धिन्या क्रियया ऊकालः स्यात् । नहि यज्ञदत्तसम्बन्धिनीभिश्चित्रगवीभिर्देवदत्तश्चित्रगुर्भवति । अयमप्य-दोषः । वत्यर्थस्येह विवक्षितत्वात् । तस्य च विनापि वतिना गम्यमानत्वात् । परपदार्थेषु हि प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्तीत्युक्त-मेतत् । तदेतदुक्तम्भवति । ऊ इत्येतत्सहचरितयोच्चारणक्रियया तुल्योच्चारण-क्रिया कालाख्या यस्याचः स ऊकाल इति । ननु च ऊकाल इत्येकः संज्ञी । संज्ञास्तु तिस्रः । ततो वैषम्यात् संख्यातानुदेशो न प्राप्नोतीति यो मन्येत तं प्रत्याह ऊ इति त्रयाणामित्यादि । मात्रिकाणां त्रयाणामकः सवर्णे ( ६।१।१०१ ) दीर्घत्वमेकादेशं कृत्वा ऊ इति निर्देशः कृत इत्यर्थः । कुतः पुनरेतद् विज्ञायते त्रयाणामिकः प्रश्लेषनिर्देश इति ? तिसृणां संज्ञानां विधानसामर्थ्यात् । नह्येकस्य भिन्नप्रयोजनमन्तरेणानेकसंज्ञाविधान-

मर्थवद्भवति। नचेद्दैकस्यानेकसंज्ञाकरणे भिन्नप्रयोजनमस्ति। ह्रस्वदीर्घ प्लुत इति यद्येक एवायं शब्दः संज्ञा स्याल् लाघवार्थत्वात् संज्ञाकरणस्य महत्याः संज्ञायाः करणमयुक्तं स्यात्। किञ्चाहुस्तिधर्माणः संज्ञाशब्दाः प्रदेशेषु भवन्ति। नचायं समुदायः प्रदेशेष्वावर्त्त्यते। अपितु प्रत्येकं ह्रस्वादि-शब्दाः। तस्मात् तेषां द्वन्द्वं कृत्वा निर्देश इति मत्वाह ह्रस्वदीर्घप्लुत इत्यादि। द्वन्द्वैकवद्भावस्तु सर्वो द्वन्द्वो विभाषयैकवद्भवतीति वचनात्। ननुच द्वन्द्वैकवद्भावे स नपुंसकमिति (२।४।१७) नपुंसकत्वेन भवितव्यम्। तत् कथं पुंलिङ्गेन निर्देशः। सौत्रत्वान्निर्देशस्य। छन्दसि व्यत्ययो (३।१।८५) बहुलमिति लिङ्गव्यत्यय उक्तः। छन्दोवत् सूत्राणि भवन्तीत्यविरुद्धास्य पुंलिङ्गता। उऊऊ इति। अनया ऽनुपूर्व्व्यैषां प्रश्लेष इति दर्शयति। कुतः पुनरेष निश्चय एषैवैषा-मानुपूर्व्वीति। एवम्मन्यते। विभाषा पृष्टप्रतिवचने हेरि (८।२।९३) त्येकमात्रिकस्य हेः प्लुतविधानाज् ज्ञायते न मात्रिकोऽन्त्य इति। अन्त्यत्वे हि सति तस्य प्लुतसंज्ञा स्यात्। एवञ्च प्लुतस्य प्लुतविधानमनर्थकं स्यात्। द्विमात्रिको ऽप्यन्त्यो न भवति। ओमभ्यादान (८।२।८७) इति द्विमात्रिकस्य प्लुतविधानात्। तस्य चान्त्यत्वे हि सति यदि प्लुतसंज्ञा स्यात् तदा च प्लुतस्य प्लुतविधानमनर्थकं स्यात्। तस्मादन्त एकमात्रिकद्विमात्रिकौ न भवतः। मध्येऽप्येकमात्रिको न भवति। अतो दीर्घो (७।३।१०) यञीति सुपि चेति (७।३।१०२) च दीर्घविधानसामर्थ्यात्। यदि मध्य एकमात्रिकः स्यात् तदा तस्य दीर्घसंज्ञा स्यात्। दीर्घस्य दीर्घवचनमकिञ्चित्करं स्यात्। तस्मादादा-वेकमात्रिकत्वे हि सति पारिशेष्यान्मध्ये द्विमात्रिकोऽन्ते त्रिमात्रिक इति। उ ऊ ऊ इति। अत्राप्युकारादिसहचरितायामुच्चारणक्रियायामुकारादयो वर्त्तन्ते। एवंकालोऽजिति प्रत्येकमेवाभिसम्बध्यते। एवं शब्दः सादृश्ये। तच्च सादृश्यं क्रिया-श्रितत्वादुकारादिसहचरिता योच्चारणक्रिया तदपेक्षं विज्ञायते। तेनायमर्थो भवति। उकारसहचरितोच्चारणक्रियया सदृशकालो योऽच् स ह्रस्वसंज्ञो भवति। ऊकारसहचरितोच्चारणक्रियया सदृशकालो योऽच् स दीर्घसंज्ञो भवति। ऊ३कारसहचरितोच्चारणक्रियया सदृशकालो योऽच् स प्लुतसंज्ञो भवति। दधि मध्विति रूपोदाहरणम्। कार्य्योदाहरणन्तु दधिच्छत्रम्।

मधुच्छत्रमिति। च (६।१।७३) चेति ह्रस्वाश्रयस्तुक्। कुमारी। गौरीति। एतदपि रूपोदाहरणम्। कार्य्योदाहरणं कुमारीच्छत्रं गौरीच्छत्रमिति। दीर्घात् (६।१।७५) पदान्ताद्वेति (६।१।७६) वा तुक्। देवदत्ता३ अत्र न्वसीति कार्य्योदाहरणम्। अनन्त्यस्यापि प्रश्नाख्यानयोरिति (८।२।१०५) प्लुतः। देवदत्तशब्दात् परस्या विभक्तेः सोः ससजुषो (८।२।६६) रुरिति रुत्वम्। अतो रोरप्लुतादप्लुत (६।१।११३) इत्युत्वप्रतिषेधः कार्य्यः। भोभगो अघोअपूर्वस्येति (८।३।१७) यकारः। तस्य लोपः (८।३।१९) शाकल्यस्येति यकारस्यलोपः। ननु चोकारोऽ यमण् गृह्यमाणः सवर्णान् गृह्णातीति। अत उकारेण दीर्घप्लुतयोर्ग्रहणे सति तयोरपि ह्रस्वसंज्ञा भवतीत्यत आह काल-ग्रहणमित्यादि। कालग्रहणे हि येषामेताः संज्ञा विधीयन्ते तेषां यथाक्रम-मेकमात्रिकत्वद्विमात्रिकत्वत्रिमात्रिकत्वानि विशेषणानि लभ्यन्ते। तथाहि कालग्रहणे सति प्रत्येकं वाक्यपरिसमाप्तौ क्रियमाणायां त्रयो बहुव्रीहयो भवन्ति। उः कालो यस्य स उकालः। ऊः कालो यस्य स ऊकालः। ऊ३ः कालो यस्य स ऊ३कालः। एषां यथाक्रममेकमात्रिकद्विमात्रिकत्रिमात्रिका अचोऽन्यपदार्था यस्मान् मात्रिक एवाच उ इत्येतत्सहचारिण्या उच्चारण-क्रियाया स्तुल्यकालः। एवं द्विमात्रिक एवाच ऊ इत्येतत्सहचारिण्या उच्चारणक्रियाया स्तुल्यकालः। एवं त्रिमात्रिक एवाच ऊ३ इत्येतत् सहचारिण्या उच्चारणक्रियाया स्तुल्यकालः। एवं च सति मात्रापरिमाणस्याचो ह्रस्वसंज्ञा विधीयमाना सत्यप्युकारेण दीर्घप्लुतयोर्ग्रहणे तयोर्न भवति। नहि तौ मात्रापरिमाणौ। तेनालूय परिणीयेत्यत्र ह्रस्वाश्रयस्तुङ् न भवति। प्रतत्य प्ररच्येति। तनू त्वच्‌ तनूकरणे। रच पालने। कुगतिप्रादय (२।१।१८) इति समासे कृते समासेऽनञ्पूर्वे क्त्वो (७।१।३७) ल्यबिति ल्यप्। तत्र परतो द्वयोरर्द्धमात्रयोर्हलोः संयोगसंज्ञिनोरुकालत्वमस्तीत्यसत्यज्ग्रहणे ह्रस्वसंज्ञा स्यात्। ततश्च ह्रस्वाश्रयस्तुक् प्रसज्येत। तितउच्छत्रमिति। अत्राकारो-कारयोरचोः समुदायस्य ऊकालत्वाद्द्विमात्रिकत्वमस्तीति दीर्घसंज्ञा स्यात्। ततश्च पदान्ताद्वेति (६।१।७६) विकल्पितस्तुक् प्रसज्येत। अज्ग्रहणे तु सति दीर्घसंज्ञा न भवति। अच्समुदायस्याज्ग्रहणेनाग्रहणात्। ननु च सत्यामपि

अस्यां समुदायाश्रयायां दीर्घसंज्ञायामवयवाश्रया ह्रस्वसंज्ञा भविष्यति। तदाश्रयस्तुङ् नित्य एव। नैतदस्ति। परत्वाद् दीर्घाश्रयस्तुग्विकल्पः प्राप्नोति। नचैवंविधविषये पुनः प्रसङ्गविज्ञानमस्ति। यत्र पूर्वो विधिः प्रवर्त्तमानः परविधिविज्ञानं न बाधते तत्रैतद् भवति पुनः प्रसङ्गविज्ञानात् सिद्धमिति। इह तु नित्यो विधिः परविधिविकल्पविज्ञानं बाधते। नित्यविकल्पयोर्विरोधात्। ततश्च सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति परिभाषयैव विकल्पः स्यात्। तस्मादज्ग्रहणं कर्त्तव्यम्।

## २८। अचश्च।

परिभाषेयं लिङ्गवती स्थानिनियमार्था प्रदेशेषु ह्रस्वो नपुंसके प्रातिपदिकस्येत्येवमादिषूपतिष्ठते (१।२।४७)। तदुपस्थाने च षष्ठीद्वयं प्रादुर्भवति। विशेषणविशेष्यभावं प्रति कामचारात्। ह्रस्वो नपुंसकेति (१।२।४७) प्रातिपदिकस्येत्यत्राचा प्रातिपादिकं गृह्यमाणं विशिष्यतेऽजन्तस्य प्रातिपदिकस्येति। नतु प्रातिपदिकेनाज् विशिष्यते। यदि हि प्रातिपदिकेनाज् विशिष्येत प्रातिपदिकस्य योऽजिति तदा मध्यस्थितस्याप्यचो ह्रस्वः स्यात्। सुवाग् ब्राह्मणकुलमिति। अचा तु प्रातिपदिके विशिष्यमाणे प्रातिपदिकस्यैवेत्येषा स्थानषष्ठी भवति। नचावयवषष्ठी। तेनालोऽन्त्यस्यैवाचो ह्रस्वो भवति। वाक्यस्य टेः प्लुत उदात्त (८।२।८२) इत्यत्र गृह्यमाणेन टिशब्देनाज्विशिष्यते टेर्योऽजिति। तेन टे मध्यवर्त्तिनोऽप्यचः प्लुतो भवति। यदि त्वचा टिर्विशिष्यते ऽजन्तस्य टेरिति तदेहैव स्याद् देवदत्ता ३ इति। इह तु न स्यादग्निचिदिति। चकारेणाजित्यनुकृष्यते। तस्य प्रयोजन मिहैव वक्ष्यति। अतिरीत्यादीन्युदाहरणान्यच इग् ह्रस्वादेश (१।१।४८) इत्यत्र व्युत्पादितानि। चीयत इति कर्मणि लकारः। संज्ञाविधाने नियम इत्यत्र युक्तिमाह। अजिति वर्त्तत इति। अजग्रहणे ह्यनुवर्त्तमाने ह्रस्वादिशब्दा अनुवर्त्तमाना अच एवोपस्थानं प्रति न व्याप्रियन्ते। तस्य स्वयमेवोपस्थितत्वात्। ततश्च स्वरूपमात्रपदार्थकाः सन्तो विधीयमानस्याचो विशेषणता मुपयान्ति। तत्रैव मभिसम्बन्धः क्रियते। अचः स्थानेऽज् भवति ह्रस्वदीर्घप्लुत इत्येवं संज्ञया विधीयमान इति। यौः

पन्थाः स इति । एतानीको ( १।१।३ ) गुणवृद्धी इत्यत्र व्युत्पादितानि । एषु च यथायोगं दिव (७।१।८४) औत् पथिमथ्यृभुक्षामात् (७।१।८५) त्यदादीनाम (७।२।१०२) इत्येभि रौकारादयः स्वरूपेण विधीयमाना दीर्घादिसंज्ञया न विधीयन्त इति हल एव स्थाने ते भवन्ति । नाचः । द्युभ्यां द्युभि रित्यत्रापि दिव(६।१।१३) उदित्युकारो ह्रस्वसंज्ञया न विधीयत इति हल एव स्थाने भवति । नाचः । ननु च द्यौरित्यादीनि त्वीण्युदाहरणानीको गुणवृद्धी ( १।१।३ ) । इत्यनेनैव संज्ञाविधाननियमेन सिद्धानि । तत्र हि तस्याप्येतानि प्रत्युदाहरणानि प्रागुपन्यस्तानि । तस्मान्नार्थ एतदर्थेन संज्ञया विधीयमानेन नियमेन । सत्यमेतत् । एवं मन्यते । द्युभ्यां द्युभिरित्येवमर्थं संज्ञाविधाने नियमः कर्त्तव्यः । नह्युकारस्य गुणसंज्ञास्ति । नापि वृद्धिसंज्ञा । यतः पूर्वेणैव संज्ञाविधाननियमेनैतदपि सिद्ध्यति । तस्मादन्यार्थोऽयं संज्ञाविधाननियमः क्रियमाणो येऽपि विस्मरणशीलाः पूर्वस्य नियमस्य प्रयोजनं न स्मरन्ति ताननुग्रहीतुं द्यौः पन्थाः स इत्येवमर्थोऽपि भवति ।

## २९ । उच्चैरुदात्तः ।

उदात्तादयो लोकवेदयोः प्रसिद्धाः । तत् किं संज्ञाकरणेनेति यश्चोदयेत् तं प्रत्याह उदात्तादिशब्द इत्यादि । आदिशब्देनानुदात्तस्वरितयोः परिग्रहः । एवकारो भिन्नक्रमो वर्णधर्म इत्यस्यानन्तरं द्रष्टव्यः । लोकवेदयोरुदात्तादयः शब्दा वर्णानां यो धर्मो गुण स्तत्रैव प्रसिद्धाः । नतु तद्वत्यचि । तस्मादिह व्याकरण उदात्तादयो धर्म्मा यस्याच स्तद्गुणेऽचि संज्ञाप्यन्ते परिभाष्यन्ते । अन्यथा प्रदेशेषूदात्तादिशब्दश्रवणाद् वर्णधर्म्म एव गृह्येत । न तद्वानजित्यभिप्रायः । उच्चैरिति श्रुतिप्रकर्षेऽस्ति । श्रुतिप्रकर्षवत्युच्चैर्भाषते । उच्चैः पठतीति । अस्ति च प्रमाणाधिकरणवाची । उच्चैः स्थितो देवदत्त इति । उच्चैर्नाम प्रमाणम् । तस्य यदधिकरणं तदिहोच्चैःशब्देनोच्यते । तदिह द्वितीयस्योच्चैः शब्दस्यार्थो गृह्यते । नेतरस्येति दर्शयितुमाह उच्चैरिति । उच्चैर्भाषत इत्येवमादौ तु वाक्ये प्रयुक्तस्योच्चैःशब्दस्य योऽर्थः श्रुतिप्रकर्षः स उच्चैरित्यत्र न गृह्यते । यदि गृह्येत उपांशुप्रयोग उदात्तादिसंज्ञा न स्यात् ।

प्रकर्षाभावात् । प्रकर्षस्यानवस्थितत्वादुदात्तादयो न विशिष्येरन् । य एव हि कश्चित् प्रत्युच्चैर्भवति स एव हि कञ्चित् प्रति नीचैर्भवति । एवञ्च सर्वमुदात्तं स्यात् । अनुदात्ततमोऽपि चेष्यत इत्यभिप्रायः । स्थानकृतमित्यादि । उच्चता नाम प्रमाणविशेषः । तदधिकरणभूतस्थानमुच्चैर्भवति । एवञ्च सर्वमुदात्तं न स्यात् । अनुदात्तमुच्चैरुच्यत इत्यर्थः । भागवत्स्विति । भागा अवयवा येषां तानि भागवन्ति । ते भागा स्ताल्वादिषु स्थानेष्वौत्तराधर्य्येण व्यवस्थिताः । स्थानमुच्चैः शब्देनोच्यते । तत् कुतः संज्ञिन उच्चैस्त्वं विशेषणम् ? उच्चैःस्थाननिष्पन्नत्वात् । तत्र समाने स्थान उच्चैरूर्ध्वभागे यो निष्पन्नः स उदात्तसंज्ञो भवति । यदि स्थाने य ऊर्ध्वभागनिष्पन्नोऽच् स उदात्तसंज्ञो भवतीत्येतावदुच्यत एवञ्च स एवानवस्थितदोषः । तथाह्यल्पशरीरेषु य एव ताल्वादिभाग उच्चैर्भवति स एव महाशरीरेषु ताल्वादिभागापेक्षया नीचै भवति । अतः समान इत्येतत् स्थानविशेषण मुक्तम् । एतच्च लघ्वर्थत्वात् संज्ञाकरणस्यैकाक्षरायां संज्ञायां कर्त्तव्याया मनेकाक्षरसंज्ञाकरणाल्लभ्यते । ग्रन्थाधिक्यादर्थाधिक्यं भवतीति । ननु च ग्रन्थाधिक्यादत्र कश्चिदाचार्य्यस्याधिकोऽर्थोऽभिप्रेत इत्येतावन्मात्रं प्रतीयते । समानत्व मित्येषोऽर्थविशेषः कुतो लभ्यते ? अविच्छिन्नादुपदेशपारम्पर्य्यात् । तत् पुनः समानत्वं वक्तृभिन्नत्वाद् वेदितव्यम् । नतु ताल्वादिस्थानस्याभिन्नत्वात् । अन्यथा तालव्यमेवापेक्ष्योदात्तः स्यात् । नतु कण्ठादीन् । वक्तृभेदात् तद्द्वारेण भिन्नानामपि ताल्वादीनां समानत्वेऽपि विज्ञायमान एष दोषो न भवति । किंलक्षणः पुनरसावुच्चभागनिष्पन्नोऽजित्याह यस्मिन्नित्यादि । आयाम इत्यस्य विवरणं निग्रह इति । निग्रहः स्तब्धता । संवृतकण्ठता कण्ठविवरस्य संवृतता । अतएव शनै निष्क्रामन् वायुर्गलावयवान् शोषयति । रूक्षता भवत्यस्निग्धता । ये ते क इति । यत्तत्किंशब्देभ्य स्त्यदाद्यत्वम् । अतो गुणे ( ६।१।९७ ) पररूपत्वम् । जसः शी ( ७।१।१७) । आद्गुणः ( ६।१।८७ ) । अत्र प्रातिपदिकस्वरेण प्रकृति रुदात्ता । अनुदात्तौ सुप्पिता विति ( ३।१।४ ) विभक्तिस्वरः । एकादेशस्त्वेकादेश उदात्तेनोदात्त ( ८।२।५ ) इति ।

## ३० । नीचैरनुदात्तः ।

अन्ववसर्ग इत्यस्य विवरणं मार्दव मिति । शैथिल्यमित्यर्थः । मृदुतेत्यस्य विवरणं स्निग्धतेति । उरुतेत्यस्यापि महत्तेति । महत्त्वादेव कण्ठविवरस्य पुनः शीघ्रं वायु निष्क्रामन् गलावयवान् न शोषयतीति । अतः स्वरस्य स्निग्धता भवति । त्वसमसिमनेमेत्यनुच्चानीति सर्वादिष्वेव पठ्यन्ते । अनुच्चानि अनुदात्तानीत्यर्थः । नमस्ते रुद्रेत्यादि । तेशब्द स्तेमया-वेकवचन ( ८।१।२२ ) इत्यनुदात्तं सर्व ( ८।१।१८ ) मपादादावित्यधिकारा-दनुदात्तः । रुद्रादयोऽप्यामन्त्रितस्य ( ८।१।१९ ) चेत्यनेनाष्टमिकेन सर्वे ऽनुदात्ता भवन्तीति ।

## ३१ । समाहारः स्वरितः ।

उदात्तानुदात्तशब्दावज्विशेषयोः संज्ञे । संज्ञा हि प्रदेशेषूच्चारिताः संज्ञिनं प्रत्याययन्ति । ताभ्या मिहानुवृत्ताभ्या मुदात्तोनुदात्तयोरचो रुपस्थापि-तयोः प्रत्ययः । तस्मात् समाहारात्मकस्याचः स्वरितसंज्ञा विधीयते । समाहारशब्दश्च समाहरणं समाहार इति भावसाधनोऽयं लोके समुदाये रूढः । नचोदात्तानुदात्तात्मकः कश्चिदच् समुदायः सम्भवतीति । ततश्च संज्ञिनोऽसम्भवात् संज्ञापि न सम्भवतीति यश्चोदयेत् तं प्रत्याह सामर्थ्याच्चे-त्यादि । उच्यते चेद मुदात्तानुदात्तसमाहारः स्वरितसंज्ञो भवतीति । नच पारिभाषिकोदात्तानुदात्तसमाहारात्मनोऽचः सम्भवोऽस्ति । तत्र सामर्थ्याल्लोकवेदप्रसिद्धौ यौ धर्मावुदात्तानुदात्तौ तावेव गृह्येते । नाचौ । नन्वेवमपि स एव दोषः । लोके प्रसिद्धोदात्तानुदात्तसमाहारात्मकस्याप्य-चोऽसम्भवादित्याह तौ समाक्रियेते यस्मिन्नित्यादि । नहि लोकप्रसिद्धो-दात्तानुदात्तात्मनोऽच एषा संज्ञा विधीयते । कस्य तर्हि ? लोकवेदप्रसिद्धा वुदात्तानुदात्तौ समाक्रियेते यस्मिन्नचि तस्य । सम्भवति चैकस्मिन्नप्यचि तयोः समाहार इति कुतः संज्ञिनोऽसम्भवः ? समाक्रियेते यस्मिन्निति ब्रुवता ऽधिकरणसाधनोऽयं समाहारशब्दो न भावसाधन इति दर्शितम् । समाक्रियेते संहन्येते सहितावुपलभ्येते इत्यर्थः । शिक्षमिति । पूर्वो यण् णुग् कस्य

( उण् ५।६८३ ) श्वेति यदिति वर्त्तमाने अनुसेः शि क्रुट् किच् ( उण् ५।६८४ ) चेति अंसतेर्यत्प्रत्यये शिशब्दादेशे कुड़ागमे च कृते रूपम्। तित्त्वात् स्वरितत्वम्। कन्येति। तिल्यशिक्यमर्त्यकाश्मर्य्यधान्यकन्याराजन्य-मनुष्याणामन्त ( फिट्, ४।७६ ) इत्यन्तस्वरितत्वम्। सामन्य इति। सामनि साधुः।तत्र साधुरिति (४।४।९८) यत्प्रत्ययः। क्वेति। किम्शब्दात् सप्तम्यन्तात् किमोऽदित्यत् (५।३।१२) प्रत्ययः। क्वातीति (७।२।१०५) क्वादेशः।

## ३२। तस्यादित उदात्तमर्धह्रस्वम्।

आदावादितः। सप्तम्यर्थे तसिः। अयमेव निर्देशो ज्ञापक आद्यादि-भ्यस्तसिर् भवतीत्यत्र। तेन तसिप्रकरण आद्यादिभ्य (५।४।४४, वा) उपसंख्यानमित्येतन्न वक्तव्यं भवति। अर्द्धह्रस्वमिति। ह्रस्वस्यार्द्धमित्यर्थः। अर्द्धं नपुंसकमिति (२।२।२) समासः। ततश्च परवल्लिङ्गमित्यादिना (२।४ २६) पुंलिङ्गेन भवितव्यम्। ह्रस्वशब्दस्य पुंलिङ्गत्वात्। नैतदस्ति। ह्रस्वशब्दो हि प्रमाणविशेषं गुणमुपादाय प्रवृत्तः। गुणवचनानाञ्चाश्रयलिङ्गवचनानि भवन्तीति गुणवचनत्वाच् शुक्लशब्दइव ह्रस्वशब्दस्त्रिलिङ्गः। ह्रस्व इति मात्रिकस्य संज्ञा कृता। तस्यैव विभागः स्यात्। ननु दीर्घप्लुतयोरित्याशङ्क्याह अर्द्धह्रस्वमित्यादि। ह्रस्वस्यार्द्धमर्द्धमात्रा भवति। अतोऽर्द्धह्रस्वग्रहणेनार्द्ध-मात्रोपलक्ष्यते। तत एव च तस्येत्युक्तम्। त्रयाणां ह्रस्वदीर्घप्लुतानां स्वरितानां निर्देशार्थम्। यदि चार्द्धह्रस्वग्रहणमर्द्धमात्रोपलक्षणमतस्त्रयाणां निर्देशोऽर्थवान् भवति। नान्यथा। ह्रस्वग्रहणमतन्त्रमिति। अतन्त्रमप्रधान-मुपलक्षणार्थत्वात्। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकाः। तेन सर्वेषामेव ह्रस्वादीनामेष स्वरविभागो भवति। नन्वेवमप्याष्टमिकस्य स्वरितस्य विभागो न सिध्यति। तस्यासिद्धत्वात्। नैतदेवम्। यस्मात् परविधिः पूर्वविधावसिद्धः। नचायं विधिः। किं तर्हि? तस्य विहितस्य विभागाख्यानार्थः। अथवा न मु न ( ८।२।३ ) इत्यत्र नेति योगविभागात् सिद्धं भवति। एकश्रुतिर्वेति। पूर्वो भागोऽयमुदात्तः पटुतरः। तेनोपर-ज्यमानस्तद्रूपतामिवापन्नः परो भागः स्फटिकमणिरिवोपधानेनोपरक्तः

शुद्धेनोदात्तेन भिन्नश्रुतिकत्वादनुदात्तव्यपदेशं नार्हति। उदात्तव्यपदेशमपि नार्हति। उपरागमात्रत्वात्। तस्मादेकश्रुतिरिति केचित्। अन्ये त्वाहुः। पूर्वेण भागेनानुपजातरूपातिशयेन नोपरज्यते यदोत्तरभागस्तदा स्वेन रूपेण प्रतिभानादनुदात्त इति व्यपदिश्यते। यदा तूपधानेन स्फटिकमणिरिव पूर्वेण भागेन पटीयसोदात्तेनाभिभूयानुरज्यमानस्तद्रूपतामिवोपपद्यते तदैकश्रुतिरिति व्यपदिश्यते। पूर्वभागश्रुतेरभिन्नैका तुल्याकारा श्रुतिर्यस्येति कृत्वा। नहि तदानीं पूर्वोत्तरयोः स्वरितश्रुतिं प्रति कश्चिद् भेदोऽस्ति। द्वयोरप्युदात्तगुणवत्तया प्रतीयमानत्वादिति।

## ३३। एकश्रुति दूरात् सम्बुद्धौ।

एकश्रुति वाक्यं भवतीति। वाक्यग्रहणेन पदपदैकदेशयोर्निरासं करोति। तयोः सम्बोधनं प्रत्यसामर्थ्यात्। वाक्यस्य सम्बुद्धौ कर्त्तव्यायां करणभावोपगमादस्ति सामर्थ्यम्। ततस्तस्यैकश्रुत्यं विधीयते। कुतः पुनस्तद्वाक्यमित्याह। दूरात् सम्बोधयति येनेति। एतेन सम्बुद्धिं प्रति वाक्यस्य करणभावो दर्शितो भवति। दूरादिति। दूरान्तिकार्थेभ्यो द्वितीया (२।३।३५) चेति पञ्चमी। सम्बोधनं सम्बुद्धिरित्यादिना सम्बुद्धिरित्यन्वर्थग्रहणम्। न पारिभाषिकं सम्बुद्धिग्रहणमिति दर्शयति। यदि पारिभाषिक्याः सम्बुद्धेर्ग्रहणं स्यात् तदा देवा ब्रह्माण इत्यत्रैकश्रुत्यं न स्यात्। पारिभाषिक्याः सम्बुद्धेरसत्त्वात्। अन्वर्थग्रहणे तु भवति। सम्बोधनलक्षणक्रियारूपायाः सम्बुद्धेरिहापि विद्यमानत्वादिति भावः। कुतः पुनरेतदन्वर्थग्रहणं व्यवसितम्? दूरग्रहणात्। अन्वर्थग्रहणे दूरादित्यनेन सम्बुद्धिरुत्पद्यते। दूरात् सम्बोधने कर्त्तव्य इति। तेनार्थवद् भवति दूरशब्दस्योपादानम्। पारिभाषिक्यास्तु ग्रहणे तदसम्बद्धमेव स्यात्। नह्यामन्त्रितविभक्तेर्दूरत्वमस्ति। दूरत्वञ्च यद्यप्यनवस्थितं तथापि यत्र प्राकृतप्रयत्नसंस्थापितं वचनं न श्रूयते तदिह दूरं वेदितव्यम्। स्वराणामित्यादि। एकश्रुतिस्वरूपाख्यानमविभाग इति। भेदतिरोधान (A) मित्यनन्तरं विवरणम्। उदात्तादिस्वरविशेषानुपलब्धि

(A) मुद्रितकाशिकायाम् अभेदस्तिरोधानमिति पाठः। न्यासवत् पदमञ्जर्यामपि भेदतिरोधानमित्येव दृश्यते।

रकारादिवर्णमात्रावबोध एकश्रुति रित्युक्तं भवति। आगच्छ भो माणवक देवदत्ता ३ इति। दूराद्धूते ( ८।२।८४ ) चेत्यत्रैवार्थे प्लुतः। स चोदात्तः। वाक्यस्य टेः प्लुत उदात्त ( ८।२।८२ ) इत्यधिकारात्। तस्यैकश्रुत्योदात्तस्य समावेश इष्यते। प्लुतनिवृत्त्यर्थम्। यथा चासौ लभ्यते तथा वक्ष्यति। प्रत्युदाहरणे त्रैस्वर्य्यमेव भवतीति तत्राकारो निपाता आद्युदात्ता ( फिट्, ४।८० ) उपसर्गाश्चाभिवर्जमित्युदात्तः। गच्छेत्यस्य तिङ्ङतिङ ( ८।१।२८ ) इति निघातः। भो इति निपाता आद्युदात्ता इत्युदात्तः। माणवक देवदत्तशब्दयो रामन्त्रितस्य चेति ( ८।१।१९ ) निघातः।

## ३४। यज्ञकर्मण्यजपन्यूङ्खसामसु।

अग्निर्मूर्धा दिव इत्यादि। अगि रगि गत्यर्थाः। वीज्याज्वरिभ्यो (उण, ४ ४८७ ) निरिति वर्त्तमाने ऽङ्गे र्नि र्नलोप श्चेति (उण, ४।४८९) निप्रत्ययः। नलोपश्च भवति। अग्निशब्दः प्रत्ययस्वरेणान्तोदात्तः। मुर्वी बन्धने। कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवइत्यतः ( उण, १।१५४ ) कनिन्निति वर्त्तमाने श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्य्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्-मघवन्निति ( उण, १।१५७ ) मूर्धनशब्दः कनिन्प्रत्ययान्तो निपातित इति निपातनादाद्युदात्तः। वकारस्य धकारोऽत्र निपातनादेव। दिवु क्रीड़ादौ। डिविन् प्रत्ययः। इकार उच्चारणार्थः। डित्यभस्याप्यनुबन्ध-करणसामर्थ्याट्टेरिति ( ६।४।१४३ ) टिलोपः। दिव् इति स्थित ऊड़िदम् पदाद्यप् पुम् रै द्युभ्य ( ६।१।१७१ ) इति विभक्तेरन्तोदात्तत्वम्। ककुच्छब्दः प्रातिपदिकमन्तोदात्तं ( फिट् १।१ ) भवतीत्यन्तोदात्तः। पतिशब्दः पाते-र्डतिरिति ( उण, ४।४९७ ) डतिप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः। ततः ककुदः पतिः ककुत्पतिरिति षष्ठीसमासः। समासस्येत्यन्तोदात्तत्वम् ( ६।१।२२७ )। प्रथ प्रख्याने। प्रथेः षिवन् ( उण, १।१४८ ) संप्रसारणञ्च। षिद्( ४।१।४१ ) गौरादिभ्यश्चेति पृथिवशब्दान् ङीष्। प्रत्ययस्वरेण धातुप्रत्यय ङीष आद्युदात्तोदात्ताः। षष्ठेरकवचनम्। ङस्। आण्नद्या (७।३।११२) इत्याट्। आगमा अनुदात्ता भवन्तीत्यनुदात्तत्वम्। विभक्तेरनुदात्तौ (३।१।४)

सुप्पिताविल्यनुदात्तत्वम् । सवर्णदीर्घः । इको (६।१।७७) यणचीति यणादेशः । उदात्तयणो ( ६।१।१७४ ) हल्पूर्वादिति विभक्तिरुदात्ता । अयमिति । इदि परमैश्वर्य्ये । इदितो नुम् (७।१।५८) धातोरिति नुम् । इन्देः कमिर्नलोपश्चेति (उण, ४।५८६) कमिप्रत्ययो नलोपश्च । इदम्शब्दः कमिप्रत्ययेनान्तोदात्तः । सौ परत इदोऽय् ( ७।२।१११ ) पुंसीतीदम इद्रूपस्यायादेशः । अपामिति । आप्लृ व्याप्तौ । आप्नोतेर्ह्रस्वश्चेति ( उण, १।७४ ) क्विप् । ह्रस्वश्च । षष्ठीबहुवचनम् । ऊड़िदं (६।१।१७१) पदेति विभक्तेरुदात्तत्वम् । तेनापामित्यस्यान्तोदात्तत्वम् । रि गतौ । स्रुरिभ्यां तुट् ( उण, ४।६४१ ) चेत्यसुन्प्रत्ययः । तुड़ागमः । रेतांसीति नित्स्वरेणाद्युदात्तः । जिन्वतीति जि जये । लट् । शत्रादेशः । व्यत्ययो बहुलमिति ( ३।१।८५ ) व्यत्ययेन श्नुप्रत्ययः । हुश्नुवोः सार्व्वधातुक (६।४।८७) इति यणादेशः । उगितश्चेति (४।१।६) ङीप् । अम्बार्थनद्योर्ह्रस्व ( ७।३।१०७ ) इति ह्रस्वः । एङ् ह्रस्वात् (६।१।६९) सम्बुद्धे रिति सुलोपः । ये यज्ञकर्मणीति (८।२।८८) वर्त्तमाने प्रणवष्टेरिति (८।२।८९) प्रणवादेशः । स च प्लुत उदात्तश्च । वाक्यस्य टेः प्लुत उदात्त (८।२।८२) इत्यधिकारात् । प्रणव इत्योकार मोङ्कारं वाचक्षते । प्रणवस्योदात्तविधानसामर्थ्यादसिद्धत्वाच्च पदादुत्तरस्यामन्त्रितस्य (८।१।१९) चेत्यनुदात्तं न भवति । शेषस्य तु भवति । एषु स्वरेषु प्राप्तेष्वेकश्रुतिर्विधीयते । संपाठे मा भूदिति । सम्पाठः स्वाध्यायकालः । ममाग्न इत्यादि । असु क्षेपणे । युष्यसिभ्यां (उण, १।१३६) मदिगिति मदिक् । अस्मच्छब्दः प्रत्ययस्वरेणान्तोदात्तः । षष्ठ्येकवचनस्य युष्मदस्मद्भ्यां ङसोऽशित्यशादेशः ( ७।१।२७ ) । तवममौ ( ७।२।९६ ) ङसीत्यस्मदो ममादेशः । स्थानिवद्भावादन्तोदात्तः । अतो गुणे ( ६।१।९७ ) पररूपत्वम् । एकादेश ( ८।२।५ ) उदात्तेनोदात्तः (B) । अग्निशब्दस्यामन्त्रितस्येति ( ८।१।१९ ) निघातः । वर्च्च दीप्तौ । असुन्निति असुन्प्रत्ययः । वर्च्चः शब्दो नित्स्वरेणाद्युदात्तः । ह्वेञ् स्पर्द्धायाम् । ह्वः संप्रसारणञ्च न्यभ्यु ( ३।३।७२ ) पविष्वित्यप् प्रत्ययः । उपपद मतिङिति ( २।२।१९ ) समासः ।

---

(B) इदं तु चिन्त्यम । युष्मदस्मदोर्ङसी ( ६।१।२११ ) त्याद्युदात्तत्वविधानात् ।

गतिकारकोपपदात् कृदित्युत्तर ( ६।१।१३९ ) पदप्रकृतिस्वरत्वे प्राप्ते ऽन्त इत्यनुवर्त्तमाने ( ६।२।१४३ ) थाथघञ्क्ताजबित्रकाणा (६।१।१४४) मित्यन्तोदात्तत्वम्। सप्तमीबहुवचने बहुवचने ( ७ ३।१०३ ) झल्येदित्येत्त्वम्। स्थानिवद्भावादिकारोऽप्युदात्त एव। अस भुवि। लोट्। तिप्। एरु ( ३।४।८६ ) रित्युत्वम्। अदादित्वाच्छपो लुक्। तिङ्ङतिङ ( ८।१।२८ ) इति निघातेनास्तुशब्दोऽनुदात्तः। जपोऽनुकरणमन्त्र इति। जपइत्युक्तेरर्थकथन मनुकरणमन्त्र इति। अनुकृति रनुकरणम्। सर्वत्र मन्त्रे स्फुट मुच्चारण मित्यनुकरण मन्त्रः। अतएवाह उपांशुप्रयोग इति। यथा जले निमग्नस्य पाठः। क्वचिदकरणमन्त्र इति पाठः। तत्रायमर्थः। ईषत् करणमुच्चारणं यस्य सोऽकरणमन्त्र इति। नञ ईषदर्थत्वात्। एशब्दो निपातः। निपाता ( फिट्, ४।८० ) आद्युदात्ता इत्याद्युदात्तः। विश प्रवेशने। अशूप्रुषिलटिकणिखटिविशिभ्यः (उण,१।१४९) क्वन्निति क्वन्प्रत्ययान्तत्वाद्विश्वशब्दो नित्स्वरेणाद्युदात्तः। समञ्च तत् (C) अत्रिणञ्चेति विशेषणसमासः। समासान्तोदात्तत्वम्। दह भस्मीकरणे। लोट्। सिप्। सेर्हिरादेशः। अतो (६।४।१०५) हेरिति हेर्लुक्। तिङ्ङतिङ ( ८।१ २८ ) इति निघातविधानाद् दहशब्दोऽनुदात्तः। केचिद् दहा ३ इति प्लुतान्तं पठन्ति। तेषां साहसमनिच्छतां सर्वत्र विभाषा प्लुतो वक्तव्य इत्यतो वचनात् प्लुतो (D) वक्तव्यः। स चोदात्तः। अन्ये त्वाकारान्तं पठन्ति। तेषां छान्दसत्वादाकारः। ह्रस्वोऽपि हि वर्णो व्यत्ययेन दीर्घो भवति पूरुषो नारक इति यथा। वाक्यविशेषस्था गीतय इति। यथोक्तं जैमिनिना गीतिषु सामाख्येति। गीतिर्ध्वनिविशेषः। अथ कर्मग्रहणं किमर्थम् ? यज्ञ इत्येवोच्येत। यज्ञमन्त्राणां यज्ञक्रियार्थत्वाद् यज्ञकर्मणि भविष्यति। सत्यमेतत्। विस्पष्टार्थं हि कर्मग्रहणम्। अथवा योऽपि न प्रसिद्धो यज्ञः पञ्चयजनादि स्तत्रापि यथा स्यादित्येवमर्थम्। अन्यथा यज्ञ इत्युच्यमाने प्रसिद्धो यो यज्ञो ऽश्वमेधादिस्तत्रैव स्यात्।

---

(C) अन्ये तु समिति दहतेर्गतिं मन्यन्ते' व्यवहिताश्चेति ( १।४।८२ ) तस्य व्यवहितत्वम्। तथाच हरदत्तः—"विश्वमत्रिणं पाप्मानं सन्दहेति सम्बन्ध" इति। भट्टोजिश्चैवम्।

(D) इदमप्रीतृप्रेषणे परस्य चेत्यत्र (८।२।९२) भाष्यकृताऽन्यदीयवचनरूपेणोपन्यस्तम्।

## ३५ । उच्चैस्तरां वा वषट्कारः ।

वषट्शब्देनात्र वौषट्शब्दो लक्ष्यत इति । समानार्थत्वादित्यभिप्रायः । द्वावपि तौ देवानां दानवचनौ । यथा वषट्शब्देन देवानां दानं दीयते तथा वौषट्शब्देनापि । तस्मात् समानार्थत्वाद् वषट्शब्दो वौषट्शब्दं लक्षयति । कारशब्दग्रहणमर्थपदार्थकत्वं विहाय शब्दपदार्थकत्वेन दानक्रियायामुपयुज्यमानस्य तस्योदात्ततरत्वं यथा स्यादित्येवमर्थम् । कारग्रहणे शब्दपदार्थता दृष्टा यथा एवकार इति । अन्ये कारग्रहणमन्यस्यापि यथा स्यादिति वर्णयन्ति । तेनास्तु श्रौषड़ित्यत्रायमुदात्ततरो भवति । उच्चैस्तरामिति प्रकर्षप्रत्ययो वौषट्शब्दे ब्रूहिप्रेष्यश्रौषड़् वौषड़ावहानामादेरिति (८।२।९१) यः प्लुतं विहितस्तदपेक्षया वेदितव्यः । स ह्युदात्तः । अयं तूदात्ततरः । अन्यसदेश इत्यस्याः परिभाषायाः समाश्रयणादन्यसदेशस्यानुदात्तस्योदात्ततरो भवति । अन्ये वर्णयन्ति द्वयोरपि तयोरुदात्ततरो भवति । अन्यसदेशपरिभाषा नाश्रीयते । प्रकर्षप्रत्ययस्तु याज्या ऋचः सम्बन्धी वषट्कारः । तस्य याज्यान्त (८।२।९०) इत्यनेन य उदात्तः प्लुतो विहितस्तदपेक्षया प्रकर्षस्य सत्त्वात् । अथवा प्रकर्षप्रत्ययान्तः स्वरूपशब्दान्तरमेवैतदिति । अपरे त्वाहुः । अनुदात्तं पदमेकवर्जमिति (६।१।१५८) वचनेन प्लुतस्योदात्तः । अन्यस्त्वनुदात्ततर इति ।

## ३६ । विभाषा छन्दसि ।

इषे त्वेत्यादि । इषु इच्छायाम् । अन्येभ्योऽपि दृश्यत (६।२।१७८) इति क्विप् । इड़स्यास्तीति लुगधिकारस्याप्रत्यय (४।४।१२८, वा) इत्यनेनोपसंख्यानेन अकारप्रत्ययः । प्रत्ययस्वरेणाद्युदात्तः । इषशब्दात् (E) सप्तम्येकवचनम् । आद्गुणः (६।१ ८७) । एकादेश (८।२।५) उदात्तेनोदात्तः । युष्मच्छब्दस्य द्वितीयान्तस्य त्वामौ द्वितीयायामिति (८।१।२३) त्वामादेशः । स त्वनुदात्तः । अनुदात्तं (८।१।१८) सर्व्वमपादावित्यधिकारात् । अग्नइति ।

---

(E) हरदत्तमते चतुर्थ्येकवचनम् । तथाच पदमञ्जरी—"इड़न्नम् । ऊर्ग्बलम् । चतुर्थ्येकवचनस्य सार्वेका च (६।१।१६८) इत्युदात्तत्वम् ।"—इति ।

आमन्त्रितस्य चेति ( ६।१।१९८ ) षाष्ठिकमाद्युदात्तत्वम्। आङ् पूर्वाद् या प्रापण इत्यस्माल्लोट्। सिप्। सेर्ह्यिरादेशः। आङ् ( फिट्, ४।८१ ) उपसर्गाश्चाभिवर्जमित्युदात्तः। तिङ्ङतिङ (८।१।२८) इति याहीत्यस्य निघातः। वी गत्यादिषु। मन्त्रे वृषेषपचेत्यादिना (३।३।९६) क्तिन्नुदात्तः। चतुर्थ्येकवचने प्रत्यये घेर्ङितीति गुणः ( ७।३।१११ )। अयादेशः। द्वावपि स्थानिवद्भावेनोदात्तौ। शेषमनुदात्तम्। अग्निशब्दः पूर्ववन्निप्रत्ययस्वरेणान्तोदात्तः। द्वितीयैकवचने ऽमि पूर्वत्वम् ( ६।१।१०७ )। एकादेश उदात्तेनोदात्तः (८।२।५)। ईड़ स्तुतौ। अनुदात्तेत्त्वादात्मनेपदम्। तिङ्ङतिङ ( ८।१।२८ ) इतीड़ेशब्दस्य निघातः। पुरः पूर्वस्मिन् देश इति विगृह्य पूर्वापराधरावराणामसि ( ५।३।३९ ) पुरधवश्चैषामित्यसिप्रत्ययः। पूर्व्वशब्दस्य पुरादेशः। पुरःशब्दः प्रत्ययस्वरेणान्तोदात्तः। दधातेर्निष्ठायां दधाते (७।४।४२) र्हिरिति हिरादेशः। पुरोऽव्ययमिति ( १।४।६७ ) गतिसंज्ञायां सत्यां कुगतिप्रादय (२।१।१८) इति समासः। समासस्यान्तोदात्तत्वे प्राप्ते गतिरनन्तर (६।२।४९) इति पूर्वपदप्रकृतिस्वरेण पुरःशब्दोऽन्तोदात्तः। शंशब्दश्चादित्वान्निपातः। निपातस्वरेणाद्युदात्तः। अस्मच्छब्दस्य षष्ठीबहुवचनस्य वस्नसाविति (८।१।२१) नसादेशोऽनुदात्तः। अनुदात्ताधिकारात्। दिवः पचाद्यच्। पचादिषु देवड़िति पठ्यते। टिड्ढाणञिति ङीप् ( ४।१।१५ )। अनुदात्तः। यस्येति ( ६।४।१४८ ) चेत्यकारलोपः। अनुदात्तस्य च यत्रोदात्तलोप ( ६।१।१६१ ) इति ङीबुदात्तः। द्वितीयाबहुवचने प्रथमयोः पूर्वसवर्ण ( ६।१।१०२ ) इति पूर्वसवर्णदीर्घत्वम्। एकादेश उदात्तेनोदात्तः ( ८।२।५ )। ष्टुञ् स्तुतौ। अभिपूर्वाट्टदोरबित्यप् ( ३।३।५७ )। गुणावादेशौ। वर्णव्यत्ययेन वकारस्य यकारः। गतिकारके ( ६।२।१३९ ) तुत्तरपदप्रकृतिस्वरत्वे प्राप्तेऽन्त इति वर्त्तमाने (६।१।१४३) थाथघञ् (६।२।१४४) क्ताजवित्रकाणामितुत्तरपदान्तोदात्तत्वम्। सप्तम्येकवचनम्। आद्गुणः (६।१।८७)। एकादेश उदात्तेनोदात्तः (८।२।५)। तस्मादभिष्टयेशब्दोऽन्तोदात्तः। (F)

(F) हरदत्तमतेऽभिष्टिशब्दस्य चतुर्थ्येकवचनेऽभिष्टय इति। तत्राभिपूर्वादिषेः क्तिन्। शकन्ध्वादित्वात् पररूपत्वम् ( ६।१।९४, वा )। तादौ च निति कृत्यताविति ( ६।२।५० ) पूर्वपदप्रकृतिस्वरत्वे निपाता आद्युदात्ता ( फिट्, ४।८१ ) उपसर्गाश्चाभिवर्जमित्यभिशब्दस्यान्तोदात्तत्वम्।

## ३७ । न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ।

सुब्रह्मण्या नाम निगद इति । अपादबन्धे गदतिर्वर्त्तते । अपादबन्धं हि गद्यमुच्यते । निशब्दः प्रकर्षे । यदुच्चैरविच्छिन्नमपादबन्धं मन्त्रवाक्यं निगद इति तस्य व्यपदेशः । तस्य च सुब्रह्मण्योपलक्षणत्वात् सुब्रह्मण्या इति स्त्रीलिङ्ग-निर्देशः । सुब्रह्मण्योमिति । सुब्रह्मणि साधुः । तत्र साधुरिति यत् (४।४।९८) । तित् स्वरितमिति (६।१।१८५) स्वरितत्वम् । प्रणवष्टेरि (८।२।८९) त्योङ्कार आदेश इति केचित् । तदयुक्तम् । पादस्य वार्द्धर्चस्य वान्त्यमक्षरमुपसंहृत्य तदाद्य-क्षरशेषस्य स्थाने त्रिमात्रमोकारमोङ्कारं वा विदधति तं प्रणवमित्याचक्षत (G) इति वक्ष्यति (H) । न च निगदे पादव्यवस्था । नाप्यर्द्धर्चव्यवस्था । तस्मादों-शब्दोऽस्ति निपातोऽनर्थकः । तस्य स्वरितेन सहैकादेशः (I) स्वरितः । आम-न्त्रितमाद्युदात्तमिति । आमन्त्रितस्य चेत्यनेन (६।१।१९८) षाष्ठिकेन । तस्या-नेनोदात्तः क्रियत इति । ननु चासिद्धोऽसौ स्वरितः । वचनात् तस्यासिद्धत्वं न भवति । ननु च वचनस्य सुब्रह्मण्योमिति प्रयोजनं वक्तुं शक्यम् । नहि समस्ते निगदे सुब्रह्मण्याशब्देनोपलक्षिते सतीदमेकमुदाहरणं युक्तम् । आकार उदात्त इति । निपातस्वरेण । ततः परोऽनुदात्तः स्वरित इति । तिङ्ङतिङ इति निघाते (८।१।२८) कृत उदात्तादनुदात्तस्य (८।४।६६) स्वरित इत्यनेन । पश्चिम एक इति । छकाराकारः । चत्वार उदात्ता इति । वकारच्छकाराभ्यामन्ये । द्वावनुदात्ताविति । वकारच्छकारौ । द्वितीयमक्षर-मिति । मेधाशब्दाकारः । शेषमनुदात्तमिति । मेधाशब्दे यावचौ ताभ्यामन्यत् । पूर्वेणेति । मेधातिथेर्मेषेत्यनेन । तथैव द्वे आद्ये अक्षरे उदात्ते इति । यदि गौरावस्कन्दिन्निति समस्तमामन्त्रितमाद्युदात्तमिति । अथापि गौरेति शब्दान्तरमामनन्ति तथापि तस्यापि प्रवेशे कृते सकलस्यामन्त्रित-

---

(G) इतिशब्दपरेऽपि प्रणवमिति द्वितीयान्तः पाठो महाभाष्यकाशिकयोरपि स्थितः । निपातेना-भिधाने चेदाग्रहस्तर्ह्योङ्कारं विदधतीति तं प्रणवमाचक्षत इतीत्थमयं नेयः । तं प्रणव इत्याचक्षत इतीदानीं करणं त्वतिमात्रसाहसमेव ।

(H) प्रणवष्टेरिति ( ८।२।८९ ) सूत्रव्याख्यायां वृत्तिकार इति शेषः । तेनाप्येतत् तत्रत्यभाष्याद् गृहीतम् ।

(I) एकादेशस्वीमाङ्गोऽवेत्यनेन ( ६।१।९५ ) ।

स्याद्युदात्तत्व उदात्तादनुदात्तस्येत्यादिना ( ८।४।६६ ) पूर्वोक्तेन विधिना द्वे उदात्ते भवतः। अह्ल्यायै जारेति। षष्ठ्यर्थे चतुर्थी बहुलं छन्दसीत्यत्र (२।३।६२) षष्ठ्यर्थे चतुर्थी वक्तव्येत्युपसंख्यानात्। व्यत्ययो (३।१।८५) बहुलमिति व्यत्ययेन वा। समस्तमामन्त्रितमाद्युदात्तमिति। कौशिकशब्दस्य परामन्त्रितानुप्रवेशात्। एवं गौतमब्रुवाण इति। एतदपि कौशिकब्राह्मणेत्यनेन तुल्यमित्यर्थः। द्वावुदात्ताविति। अनन्तरयोरुदाहरणयोः प्रत्येकमाद्याविव्यर्थः। ब्रःशब्द उदात्त इति। प्रातिपदिकस्वरेण। उदात्त इति वर्त्तत इति। मन्त्रे वृषेत्यादेः (३।३।९६) सूत्रात्। द्वावुदात्ताविति। तौ पुनरादौ आगच्छेत्यत्र दर्शितौ। पदात् परमामन्त्रितं निहन्यत इति। आमन्त्रितस्य ( ८।१।१९ ) चेत्यनेन।

## ३८। देवब्रह्मणोरनुदात्तः।

द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे कृत इति। विभाषितं विशेषवचने ( ८।१।७४ ) बहुवचनमिति पूर्वस्याविद्यमानत्वादामन्त्रितस्य ( ८।१।१९ ) चेति पदात् परस्यापि निघातो न भवति। तेन द्वयोरपि पृथगेव षाष्ठिकमाद्युदात्तत्वं ( ६।१।१९८ ) भवति। शेष निघात इति। अनुदात्तं पदमेकवर्जमित्यनेन ( ६।१।१५८ )।

## ३९। स्वरितात् संहितायामनुदात्तानाम्।

अनुदात्तानामिति। जातौ बहुवचनम्। तेन द्वयोरपि भवति। इममित्यन्तोदात्तमिति। इदम्शब्दस्य कमिप्रत्ययान्तत्वात् प्रत्ययस्वरेणान्तदात्तत्वम्। तस्य त्यदाद्यत्वे ऽतो गुणे ( ६।१।९७ ) पररूपत्वे तस्याप्येकादेश (८।२।५) उदात्तेनोदात्तत्वात्। विधिकाल एवेति। ते मयावेकवचनस्येति ( ८।१।२२ ) विधिकाल एव निघातविधानात्। सर्वे एत आमन्त्रितनिघातेनानुदात्ता इति। यद्यप्यामन्त्रितं पूर्वमविद्यमानवदिति ( ८।१।७२ ) तथापि मेशब्दापेक्षया सर्वेषां निघातापत्तेः। प्रथममामन्त्रितमाद्युदात्तमिति। आमन्त्रितस्य चेति ( ६।१।१९८ ) षाष्ठिकेन। तस्य द्वितीयमक्षरं स्वरितमिति। उदात्तादनुदात्तस्य ( ८।४।६६ ) स्वरित इति। ततः

परेषामनुदात्तानामिति । नामन्त्रिते समानाधिकरणे सामान्यवचन (८।१।७३) मित्यविद्यमानत्वस्य प्रतिषेधे सति माणवकात् परयोरामन्त्रितस्य चेति (८।१।१९) निघातविधानात् परेऽनुदात्ताः । अवग्रहे मा भूदिति । अवग्रहोऽसंहितापाठः । ननु च स्वरितादिति पञ्चमी । तेन तस्मादित्युत्तरस्ये (१।१।६७) त्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादवग्रहे प्राप्तिरेव नास्ति । यथैव हि वर्णो व्यवधायकस्तथा कालोऽपि । तत् किं संहिताग्रहणम् ? पञ्चमीनिर्देशकालो न व्यवधायक इति ज्ञापनार्थम् । तेन तिङ्ङतिङ (८।१।२८) इत्यत्रावग्रहे ऽतिङन्तात् परं तिङन्तं निहन्यते ।

## ४० । उदात्तस्वरितपरस्य सन्नतरः ।

मातर इत्यनुदात्त इति । अनुदात्तत्वं तु विभक्तिस्वरेण । मातर इति मातृशब्दाज्जस् । ऋतो (७।१।११०) ङिसर्वनामस्थानयोरिति गुणः । जसः सकारस्य रुत्वम् । तस्याप्यप्शब्दे शसन्ते परतोऽतो (६।१।११३) रोरप्लुतादप्लुत इत्युत्त्वम् । आद्गुणः (६।१।८७) । ऊड़िदमित्यादिना (६।१।१७१) विभक्तेरन्तोदात्तत्वे कृत एङः (६।१।१०९) पदान्तादतीति य ओकारः सोऽपि स्थानिवद्भावेनानुदात्तो भवति । तस्योदात्ते परभूत इति । विभक्त्यकारे । इकारोऽनुदात्त इति । सरस्वतीतिशब्दसम्बन्धी । आमन्त्रितस्य चेति (८।१।१९) सरस्वतीशब्दस्य निघातविधानात् । तस्मान्न निहन्यत इति । अनुदात्तं (८।.।१८) सर्वमपादादावित्यत्रापदादाविति निघातप्रतिषेधात् । प्रथममक्षरमिति । शकारोकार उदात्तः । आमन्त्रितस्य चेति (६।१।१९८) षाष्ठिकेन ।

## ४१ । अपृक्त एकाल् प्रत्ययः ।

घृतस्पृगिति । क्विन्प्रत्ययस्य (८।२।६२) कुरिति कुत्वं शकारस्य खकारः । तस्य जश्त्वं खकारस्य गकारः। अर्द्धभागिति चोः (८।२।३०) कुरिति जकारस्य गकारः । उभयत्र वावसान (८।४।५६) इति चर्त्वं ककारः । तत्रापृक्तसंज्ञायां सत्यां वेरपृक्तस्येति (६।१।६७) वकारलोपो भवति । प्रत्युदाहरणेषु हि तदभावान्न भवति । दर्विरिति दॄ विदारणे । दॄदृभ्यां विन्निति (उण,४।४९२) विन् । जागृविरिति । जागृ निद्राक्षये । जॄशॄस्तॄजागृभ्यः क्विन्निति (उण,

४।४८३ ) क्तिन्। सुरा इति। षुञ् अभिषवे। सुरां सुनोतीत्यन्येभ्योऽपि दृश्यत ( ३।२।१७८ ) इति क्विप् सुरासुत्। ह्रस्वस्य तुक्। तमाचष्ट इति णिच्। णाविष्ठवत् कार्य्यं प्रातिपदिकस्येति टिलोपः। सुरासयतेः पुनः क्विप्। णिलोपः। प्रथमैकवचनम्। हल्ङ्यादिना (६।१।६८) सुलोपः। रुत्व-विसर्जनीयौ। अत्रापि णिलोपे कृतेऽसति प्रत्ययग्रहणे धातुसकारस्यापृक्तसंज्ञा स्यात्। तस्याञ्च सत्यां हल्ङ्याब्भ्य (६।१।६८) इति धातुसकारलोपः स्यात्। ननु चासत्यपि प्रत्ययग्रहणे प्रत्ययाप्रत्ययोः प्रत्ययस्यैव ग्रहणमिति संज्ञा विज्ञास्यते। तत् किमर्थं प्रत्ययग्रहणम्? तत् क्रियते विस्पष्टार्थम्। अथैक-ग्रहणं किमर्थम्? अल्समुदायस्य मा भूदिति। नैतदस्ति। अल्ग्रहण-सामर्थ्यान्न भविष्यति। अन्यथा ह्यल्ग्रहणमनर्थकं स्यात् यदि हल्समुदाय-स्यापि संज्ञा स्यात्। एवं तर्ह्यल्ग्रहणेनात्र जातिग्रहणं भवतीति ज्ञापनार्थमेक-ग्रहणम्। तेन हलन्ताच्चेत्यत्र (१।२।१०) यदुक्तं (J) दम्भेर्हल्ग्रहणस्य जाति-वाचकत्वात् सिद्धमिति तदुपपन्नं भवति।

## ४२। तत्पुरुषः समानाधिकरणः कर्मधारयः।

तत्पुरुष इति समासविशेषस्याख्या। स च एक एव शब्दः। अनेकस्य च शब्दस्य भिन्नप्रवृत्तिनिमित्तस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। ततश्च यत्र वाह्येन पदेन तत्पुरुषस्य सामानाधिकरण्यं तत्रैवेयं संज्ञा स्यात् राजपुरुषः शोभन इत्यादौ। अस्ति ह्यत्र तत्पुरुषस्य सामानाधिकरण्यं शोभन-शब्देन सह। पाचकवृन्दारिकेत्यादौ तु न स्यात्। नह्यत्र तत्पुरुषस्य केनचित् सामानाधिकरण्यमस्ति। शब्दान्तरस्य प्रयोगाभावादिति चोद्यमपाकर्त्तुमाह समानाधिकरणपद इति। समानमभिन्नमेकमधिकरणं वाच्यं येषां पदानां तानि समानाधिकरणानि पदानि। तान्याश्रयभूतानि यस्य तत्पुरुषस्य स समानाधिकरणपदस्तत्पुरुषः। एतेन तत्पुरुषार्थानां पदानां समानाधि-करणत्वादुपचारेण तत्पुरुषोऽत्र सूत्रे समानाधिकरणशब्देनोक्त इति दर्शयति। कथं पुन र्वाह्यान्यपदापेक्षया तत्पुरुषस्य मुख्ये सामानाधिकरण्ये सम्भवति सत्यौपचारिकस्य ग्रहणमुपपद्यते। कर्मधारय इति महत्याः संज्ञायाः

(J) वार्त्तिकमनुवदता वृत्तिकारेणेति शेषः।

करणात्। इह हि लाघवार्थत्वात् संज्ञाकरणस्य लघीयस्यां संज्ञायां कर्त्तव्यायां कर्मधारय इति महतीं संज्ञां कुर्वता ऽन्योऽप्यत्र कश्चिद् विपर्य्ययः संज्ञायामाश्रित इत्येषोऽर्थः सूचितः। तेन गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्यय इति मुख्यस्य समानाधिकरणस्य ग्रहणं न (K) विज्ञायते। अन्ये त्वाहुः। तत्पुरुषार्थानि पदानि तत्पुरुषशब्देनोक्तानीति। तेषामेवैषा संज्ञेत्युक्तं भवति। एतत्तु वृत्तिकारस्यानभिमतम्। यतस्तत्पुरुष इति समासविशेषस्य यस्य संज्ञां वक्ष्यति स तत्पुरुषः समानाधिकरणपदः कर्मधारयसंज्ञो भवतीत्येवं ब्रुवता वृत्तिकारेण समासस्यैवेयं संज्ञा न तदर्थानां पदानामिति स्फुटमेवाख्यातं भवति। समानाभिधेय इति। तदर्थानां पदानां समानाभिधेयत्वात् तत्पुरुषोऽप्युपचारेण समानाभिधेय इत्युक्तः। परमराज्यमुत्तमराज्यमिति। सन्महदित्यादिना (२।१।६१) समासः। कर्मधारये सत्यकर्मधारये (६।२।१३०) राज्यमित्युत्तरपदाद्युदात्तत्वं न भवति। पाचकवृन्दारिकेति। वृन्दारकनागकुञ्जरैरित्यादिना (२।१।६२) समासः। न कोपधाया इति (६।३।३७) प्रतिषेधे प्राप्ते पुंवत्कर्मधारयेति (६।३।४२) पुंवद्भावः। पाचिकाभार्य्य इति बहुव्रीहिरयम्। तेनात्र न कोपधाया इति (६।३।३७) प्रतिषेधो भवत्येव। ब्राह्मणराज्यमिति। षष्ठीतत्पुरुषोऽयम्। तेनात्र समासान्तोदात्तत्वमेव न भवति। अपि तूत्तरपदाद्युदात्तत्वम्। (L)

## ४३। प्रथमानिर्दिष्टं समास उपसर्जनम्।

समास इत्यधिकरणनिर्देशोऽयम्। कष्टश्रितादयः समासाः। तेषु न किञ्चित् प्रथमानिर्दिष्टं शब्दरूपमस्ति। तथाहि समासे कृते तत एव समासाद् विभक्तिरुत्पद्यते। नतु तत्रस्थाच्छब्दात्। नच वाक्यकाले समासार्थात् पदाद् या प्रथमोत्पन्ना तदाश्रयम् प्रथमानिर्दिष्टत्वं समासावयवस्य कल्पयितुं युक्तम्। यतः समास इत्यधिकरणनिर्देशोऽयम्। तत्र

(K) मुख्यस्य ग्रहणे प्राप्ते तद्विपरीतस्य ग्रहणं विज्ञायत इति पुनापुस्तके पाठः।

(L) अकर्मधारये राज्यमित्यनेन (६।२।१३०)।

समासे कृते यस्मात् प्रथमोत्पद्यते तदेव समासे प्रथमानिर्दिष्टं भवति। नतु यस्माद् वाक्यकाले विभक्तिरुत्पद्यते। तद्धि वाक्य एव प्रथमानिर्दिष्टम्। नतु समासे। प्रागेव समासात् तस्य प्रथमानिर्दिष्टत्वात्। ततश्च समासे कृते प्रथमानिर्दिष्टस्य संज्ञिनोऽसम्भवात् संज्ञा न सम्भवतीतिऽतश्चोद्यमपाकर्त्तुमाह प्रथमया विभक्त्या यन्निर्दिश्यत इति। समासार्थं यच्छास्त्रं तत् समासशास्त्रं गृह्यते। तत्र प्रथमानिर्दिष्टस्येयं संज्ञा विधीयते। नतु कष्टश्रितादौ। समासे प्रथमानिर्दिष्टस्याविद्यमानत्वात्। विद्यते च समासशास्त्रे प्रथमानिर्दिष्टं संज्ञीति कुतः संज्ञाया अप्रसिद्धिः ? कथं पुनः समास इत्युच्यमाने समासशास्त्रे यत् प्रथमया निर्दिश्यते तस्य संज्ञित्वं लभ्यत इतऽत आह समास इति। समासशास्त्रं गृह्यत इति। कथं पुनः समास इत्युच्यमाने समासशास्त्रं ग्रहीतुं शक्यम् ? तादर्थ्यात् तत्र समासशब्दस्य प्रवृत्तेः। भवति हि तादर्थ्यात् ताच्छब्द्यम्। यथा प्रदीपार्था मल्लिका प्रदीप इति। इन्द्रार्था स्थूणा (M) इन्द्र इति। कष्टश्रितादिषूपसर्जनसंज्ञायाः कार्य्यमुपसर्जनं पूर्वमिति (२।२।३०) पूर्वनिपातः। तत्रेदं चोद्यते। राज्ञः कुमारीं पश्य राजकुमारीं (२।२।३०) पश्येत्यत्र राजन्शब्दः षष्ठीति ( २।२।८ ) समासशास्त्रे प्रथमानिर्दिष्टः। द्वितीयाश्रितातीतपतितेति (२।१।२४) द्वितीयासमासशास्त्रे कुमारीशब्दश्च। समासशास्त्रे तत्रोभयोरप्यस्यां संज्ञायां सत्यां पूर्वनिपातानियम उपसर्जनह्रस्वत्वञ्चेत्येतद्दोषद्वयं प्राप्नोतीति। इह च राज्ञः कुमार्य्याः स्वं राजकुमारीस्वमिति द्वयोरपि षष्ठ्यन्तयोः समासशास्त्रे प्रथमानिर्दिष्टत्वादुभयोरप्युपसर्जनसंज्ञायां सत्यां तदेव दोषद्वयं प्राप्नोति। नैष दोषः। यस्मादुपसर्जनमिति महत्याः संज्ञायाः करणस्यैतदेव प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेतेति। अप्रधानमुपसर्जनम् प्रधानमनुपसर्जनमिति। अप्रधानञ्च प्रधानमपेक्षते। सम्बन्धिशब्दत्वात्। तच्च सम्बन्धादेतदवगन्तव्यं यत् प्रति यदप्रधानं तत् प्रति तदुपसर्जनमिति। श्रितादींश्चापेक्ष्य द्वितीयान्तमुपसर्जनं भवति। नतु द्वितीयान्तमात्रम्। न चेह श्रितादयः सन्ति। राज्ञः कुमार्य्याः स्वं राजकुमारीस्वमित्य-

(M) इन्द्रार्थेति। इन्द्रोत्सवनिमित्ता इन्द्रपूजानिमित्ता वा। अथवा या यज्ञादिकर्मविशेषे क्वचिदिन्द्राय निवेदिता भवति सा। स्थूणा स्तम्भविशेषः। स्थूणायसः स्मृता प्रतिमायां गृहस्तम्भ इति विश्वः।

त्राप्येष परीहारः । अत्रापि कुमारीशब्दमपेक्ष्य राजशब्दस्याप्राधान्यम् । नतु राजशब्दमपेक्ष्य कुमारीशब्दस्य । तस्माद् राजन्शब्दस्योपसर्जनसंज्ञा । नतु कुमारीशब्दस्य । यदि ह्यन्वर्थसंज्ञेयम् पाचकवृन्दारिका पुरुषव्याघ्रोऽर्द्ध-पिप्पली पूर्वकाय इत्येतेषु पूर्वपदार्थ एव प्रधानमिति पाचिकादीनामिह प्राधान्यम् । अतो यद्यप्येते वृन्दारकनागकुञ्जरैः ( २।१।६२ ) ज्यमानम् । उपमितं व्याघ्रादिभिः ( २।१।५६ ) सामान्याप्रयोगे । अर्द्धं ( २।२।२ ) नपुंसकम् । पूर्व्वापराधरोत्तरमेकदेशिनैकाधिकरणे ( २।२।१ ) इत्येतेषु समासशास्त्रेषु प्रथमानिर्दिष्टास्तथापि तेषामुपसर्जनसंज्ञा न प्राप्नोति । कुतः ? तेषां प्राधान्यात् । एवं तर्ह्युत्तरसूत्रेऽनुक्तसमुच्चयार्थत्वाच्चकारस्य भविष्यतीत्य-दोषः । अन्यस्त्वेवंमन्यते । पाचकवृन्दारिकेत्येवमादिषु पूर्व्वोक्तेषु समासेष्वाद्यौ विशेषणं विशेष्येण बहुलम् ( २।१।५७ ) उपमानानि ( २।१।५५ ) सामान्य-वचनैरित्येताभ्यामेव सिद्धौ । शेषौ तु षष्ठी (२।२।८) त्यनेनैव । तस्माद्वृन्दारकनागकुञ्जरै ( २।१।६२) रित्यादीनां न तदर्थ आरम्भः । किं तर्हि ? उप-सर्जनसंज्ञार्थः । तेनासत्यपि पाचिकादीनामप्रधानत्वे तेषामियं संज्ञा भविष्य-तीति । एतच्चासम्यक् । तथाहि पूज्यमानं सामान्याप्रयोगे नपुंसकमेका-धिकरणमित्येतान् विशेषान् वक्ष्यामीत्येतदर्थ आरम्भः स्यात् । सति चैतदर्थ आरम्भेऽत्राऽप्रधानस्योपसर्जनसंज्ञा विधीयमाना प्रधानस्य न स्यात् ।

## ४४ । एकविभक्ति चापूर्वनिपाते ।

अप्रथमानिर्दिष्टार्थोऽयमारम्भः । विभक्तिशब्दः सुपां वाचकः । विभाग-वचनो वा । कारकशक्तिविभागः । विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा । समासे विधीयमान इति । समासार्थवाक्यकाले । तदा हि तस्य समासस्य विधीयमानता भवति । एतेन समासग्रहणमनुवर्त्तमानं समासार्थे वाक्ये वर्त्तते न समासशास्त्र इति दर्शयति । समासशास्त्रे हि सर्वमेव शब्दरूप-मेकविभक्तिकमेव भवतीत्येकविभक्तिग्रहणमनर्थकं स्यादिति भावः । सर्व्व-मेव हि प्रातिपदिकं पर्य्यायेणैकया विभक्त्या प्रयुज्यते । तस्मादेकविभक्तिग्रहण-सामर्थ्यादवधारणमत्र विज्ञायत इत्यत आह यन्नियतविभक्तिकमिति । तदेव

स्पष्टीकुर्व्वन्नाह द्वितीये सम्बन्धिनीत्यादि। पूर्वपदे नानाविभक्तिकेऽपीति। निष्क्रान्तशब्दः कर्त्तृशक्त्युपसर्जनीभूतं द्रव्यमाह। तच्चानेकसाधनशक्त्युपचित-मिति क्रियान्तरसम्बन्धादनेकसाधनविभक्तिकं भवति। उत्तरपदं तु पञ्चम्यन्त-मेव भवतीति। निष्क्रमणक्रियापेक्षयाऽविर्भूतापादानशक्तिकत्वात्। निष्कौ-शाम्बिरित्यत्रोपसर्जनसंज्ञाकार्य्यं गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वत्वम्। अथ निसोऽत्र केनोपसर्जनसंज्ञा विधीयते यतोऽस्य पूर्वनिपातः? पूर्वसूत्रेणेति चेत्? नैतदस्ति। तेनाप्रधानस्योपसर्जनसंज्ञाविधानात्। निसश्चात्र प्राधान्यात्। एवं तर्हि चकारस्यानुक्तसमुच्चयार्थत्वाद् भविष्यति। अन्ये त्वाहुः। मा भून्निस उपसर्जनसंज्ञा। असत्यामपि तस्यां तस्यैव पूर्वनिपातो भविष्यति। एकविभक्ति चापूर्वनिपात इति (१।२।४४) वचनादिति। एतच्चायुक्तम्। पूर्वनिपाते हि कर्त्तव्य एकविभक्तिकस्योपसर्जनसंज्ञा नास्त्येव। तत्र यदि निस उपसर्जनसंज्ञा न स्यात् तदोदाहरणे द्वयोरप्यसत्यां तस्यां पर्य्यायेणानियतः पूर्वनिपातः प्रसज्येत। अथ कथमर्द्धपिप्पल्यादीनामुपसर्जनसंज्ञा न भवति? अत्र च विभाषा च्छन्दसी-त्यतो ( १।२।३६ ) विभाषाग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते। सा च व्यवस्थित विभाषा। तेनार्द्धं पिप्पल्या अर्द्धपिप्पलीत्यादौ विषये पिप्पल्यादीनामेक-विभक्तियुक्तानामप्युपसर्जनसंज्ञा न भवति। यदि हि स्यात् तदा ह्रस्वत्वं स्यात्। (N)

## ४५। अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।

अभिधेयवचनोऽयमर्थशब्द इति। एतेन प्रयोजनादिवचनाद्व्यवच्छिनत्ति। अर्थशब्दो हि प्रयोजनवचनोऽप्यस्ति। यथानेनार्थेनागतः। अनेन प्रयोजनेनेति गम्यते। निवृत्तिवचनोऽप्यस्ति यथा मशकार्थो धूम इति। मशकनिवृत्त्यर्थं इति गम्यते। धनवचनोऽप्यस्ति। यथार्थवान् देवदत्त इति। धनवानिति गम्यते।

---

(N) अत्र तु ( १।२।४४ ) वार्त्तिकम्—एकविभक्तावषष्ठ्यन्तवचनमिति। भाष्यञ्च—एकविभक्तावषष्ठ्य-न्तानामिति वक्तव्यम्। इह मा भूत्। अर्द्धं पिप्पल्या अर्धपिप्पलीति।

न्यासकारस्त्वनुक्तसूत्रपदन्यासो यतस्ततः।

कुरुतेऽत्र समाधानमन्यथा वार्त्तिकं विना॥ १॥

अभिधेयवचनोऽप्यस्ति । यथास्य वचनस्यायमर्थ इति । इदमस्याभिधेयमिति गम्यते । इह त्वभिधेयवचनस्यैव ग्रहणम् । तत् पुनरभिधेयं जातिगुणक्रिया-द्रव्यभेदेन चतुर्व्विधम् । अतएव चतुष्टयी शब्दानां प्रवृत्तिर्भवति । तत्र जातिशब्दानां जातिरभिधेया गौरिति । गुणशब्दानां गुणः शुक्ल इति । क्रियाशब्दानां क्रिया पाचक इति । द्रव्यशब्दानां द्रव्यं डित्थ इति । यद्यर्थ-वतः प्रातिपदिकसंज्ञा विधीयते तदाऽभाववचन-शशविषाणादिशब्दानां प्राति-पदिकसंज्ञा नोपपद्यते । अर्थाभावात् । नैतदस्ति । अर्थशब्दोऽभिधेयवचन इत्युक्तम् । अभावोऽप्यभिधेयो भवत्येव । अन्यथा ह्यर्थाभावादितीदं वचनमनु-च्चारणीयं स्यात् । अनर्थकत्वात् । नह्यनर्थकं वचनं प्रयोगमर्हति । तस्माद-भाववचनानामपि प्रातिपदिकसंज्ञा भवत्येव । नान्तस्यावधेर्मा भूदिति । ननु चाधातुरिति प्रतिषेधो भविष्यति । तथाहि वन सम्भक्तौ । धन धान्य इत्येतयोः धात्वोरेते रूपे । नैतदस्ति । अव्युत्पन्नावपि वनधनशब्दौ स्तः । तयोरेवायं प्रयोगः । अत्र यदि नान्तस्यावधेः प्रातिपदिकसंज्ञा स्यात् तदा सुबुत्पत्तिः स्यात् । ततश्च पदसंज्ञायां सत्यां नलोपः स्यात् । ननु चाधातुर-प्रत्यय इति पर्य्युदासावेतौ । ततो नञिवयुक्तन्यायेनार्थवत स्तत्सदृशस्यैवै-षा संज्ञा भविष्यति । ततो नार्थोऽर्थवद्ग्रहणेन । नैतदस्ति । अनर्थक-स्यापि धातोर्विद्यमानत्वात् । यथेङ् अध्ययने । इक् स्मरण इति । एतयोरधिपूर्वयोरेवार्थवत्त्वम् । न केवलयोः । यस्तु गणपाठेऽनयोरर्थनिर्देशः स समुदायार्थमवयवे ऽध्यारोप्य कृत इति वेदितव्यम् । अध्यारोपितार्थयो-रपि तयो र्गणपाठसामर्थ्याद् धातुसंज्ञा भवत्येव । एवं प्रत्ययोऽप्यनर्थकोऽप्यस्ति । यथा यावादिभ्यः ( ५।४।२९ ) कन् । याव एव यावक इति । नह्यत्र प्रत्यय-स्यान्वयव्यतिरेकाभ्यां शक्यते ऽर्थवत्त्वं प्रत्येतुम् । विनापि तेन कन्प्रत्ययेन याव-शब्दादेव तदर्थः प्रतीयते तस्मादर्थवदिति युक्तमुक्तम् । अहन्निति । अदादि-त्वाच्छपो लुक् । तिपो हल्ङ्यादिना (६।१।६८) लोपः । अट् । स च हन्ति-ग्रहणेन गृह्यत इति कृतेऽपि तस्मिन् हन्तिर्धातुरेव । अत्र विना धातुग्रहणेन प्रागेव प्रत्ययोत्पत्तेः प्रातिपदिकसंज्ञा स्यात् । नलोपस्तु प्रत्ययोत्पत्तौ पदत्वे सत्युत्तरकालम् । अथवा प्रतिपदिकसंज्ञापि प्रत्ययोत्पत्तेरुत्तरकालमेव

स्यात्। तस्माद् धातुग्रहणं कर्त्तव्यम्। ननु चात्र प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधेन भवितव्यम्। तत् किमधातुग्रहणेन ? नैतदस्ति। प्रातिपदिकसंज्ञायां नलोपः कार्य्यः। नलोपे च न ङिसम्बुद्ध्योरिति (८।२।८) प्रतिषेधो ज्ञापकः। प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधो न प्रवर्त्तत इति। यदि ह्यप्रत्यय इति प्रत्ययलक्षणेन हे राजन्नित्येवमादिषु प्रातिपदिकसंज्ञायाः प्रतिषेधः स्यान् न ङिसम्बुद्ध्योरिति (८।२।८) प्रतिषेधोऽनर्थकः स्यात् प्राप्त्यभावात्। अथ भिच्छिल्लूःपूरित्येवमादीनां कथं प्रातिपदिकसंज्ञा ? यावता क्विबन्ता धातुत्वं न जहतीति धातव एवैत इति। अत्राधातुरिति प्रतिषेधेन भवितव्यम्। नैष दोषः। मा भूदनेन। कृदन्तत्वादुत्तरसूत्रेण भविष्यति। नचोत्तरस्याः प्राप्तेरयं बाधकः। वाक्यान्तरस्थत्वात्। मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति वा। काण्डे कुड्ये इति। प्रथमाद्विवचनान्ते एते रूपे। नपुंसकाच्चेति (७।१।१८) शीभावः। अत्र च प्रत्ययग्रहणे यस्मात् स विहित स्तदादे स्तदन्तस्येति तदन्तस्य प्रतिषेधो भविष्यति। न प्रत्ययमात्रस्य। ननु च सुप्तिङन्तं (१।४ १४) पदमित्यत्रान्तग्रहणेनान्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति ज्ञापितत्वादप्रत्यय इति प्रत्ययान्तस्य प्रतिषेधो न लभ्यते। नैष दोषः। संज्ञाविधौ स प्रतिषेधः। नचायं संज्ञाविधिः। किं तर्हि ? प्रतिषेधविधिः। अथ किमर्थमप्रत्यय इति प्रतिषेध उच्यते ? यावतोत्तरसूत्रे कृत्तद्धितग्रहणं नियमार्थं भविष्यति कृत्तद्धितान्तस्यैव प्रातिपदिकसंज्ञा नान्यप्रत्ययान्तस्य काण्डे कुड्ये इत्येवमादेरिति। नैतदस्ति। असत्यस्मिन् प्रतिषेधेऽन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति कृत्तद्धितयोरेव प्रातिपदिकसंज्ञा स्यात्। न तदन्तस्य। तदन्तस्य चेष्यते भिच्छिल्लूःपूरित्येवमादीनां प्रातिपदिकसंज्ञार्थम्। सत्यप्रत्यय इत्येतस्मिन् प्रतिषेधे प्राप्ते यथा कृत्तद्धितान्तस्य प्रातिपदिकसंज्ञा लभ्यते तथोत्तरसूत्रे प्रतिपादयिष्यामः। ननु च काण्डे कुड्ये इत्येतयोः पूर्वमेव प्रकृतेः प्रातिपदिकसंज्ञा प्रवृत्ता। विभक्त्या च सहैकादेशे कृतेऽन्तादिवद्भावादस्त्येव प्रातिपदिकत्वमिति सत्यप्यप्रत्ययग्रहणे ह्रस्वत्वं प्राप्नोत्येव। नैतदस्ति। अप्रत्ययग्रहणसामर्थ्यान्न भविष्यति। अन्यथा ह्यप्रत्ययग्रहणमनर्थकं स्यात्। अधातुरप्रत्यय

इति द्विप्रतिषेधः षष्ठीतत्पुरुषाशङ्कानिरासार्थः । (0) अधातुप्रत्यय इत्युच्यमाने षष्ठीतत्पुरुषो ऽप्याशङ्क्येत । धातो र्यः प्रत्ययस्तस्य न भवतीति ।

## ४६ । कृत्तद्धितसमासाश्च ।

अत्रान्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीतिरतन्नोपतिष्ठते यस्मादप्रत्यय इति प्रतिषेधे प्राप्ते वचनमिदम् । अप्रत्यय इति प्रत्ययान्तस्य प्रतिषेध उक्तः । तेन यत्र संज्ञायाः प्रतिषेधस्तत्रेयमारभ्यमाणा तदन्तस्यैव भवतीत्येतच्चेतसि कृत्वाह अप्रत्यय इति । पूर्वसूत्रे पर्य्युदासात् कृदन्तस्येत्यादि । अथ समासग्रहणं किमर्थम् ? यावता समासस्यार्थवत्त्वात् पूर्वेणैव संज्ञा सिद्धेत्यत आह अर्थवत् समुदायानामित्यादि । निर्धारणषष्ठीयम् । अर्थवन्तो ये समुदाया स्तेषां मध्ये समासस्य र्थवतः समुदायस्य प्रातिपदिकसंज्ञा यथा स्यादिति नियमार्थं समासग्रहणम् । यद्येवं प्रकृतिप्रत्ययसमुदायस्यार्थवतः प्रातिपदिकसंज्ञा न स्यात् । बहुपटव उच्चकैरिति । कोऽत्र दोषः । चित (६।१।१६३) इत्यस्मिन् सूत्रे चितः सप्रकृतेर्बह्वकजर्थमिति वचनादेतद्व्यवस्थाप्यते प्रकृतिमन्तर्भाव्य चित्स्वरो विधीयत इति । बहुपटव इत्यत्र बहुचि विहिते यदि प्रातिपदिकसंज्ञा न स्यात् तदा प्रातिपदिकत्वाभावाद् यथा सुबुत्पत्तिर्न स्यात् तथोत्पन्नाया अपि विभक्तेः सुपो ( २।४।७१ ) धातुप्रातिपदिकयोरिति लुका न भवितव्यम् । ततश्च बहुपटव इत्यत्र जस्विभक्ते रकारस्य स्वरः स्यात् । उकारस्य चेष्यते । प्रातिपदिकत्वे तु सति पूर्वोत्पन्नाया विभक्तेर्लुकि कृते यान्या विभक्तिरुत्पद्यते सा बहुजुत्पत्तेरुत्तरकालभाविनीत्वात् प्रकृतौ नान्तर्भवति । तेन तामुत्सृज्य पूर्वो भागः स्वरभाग् भवति । अत उकारस्य स्वरः सिध्यति । उच्चकैरित्यत्र प्रातिपदिकत्वाभावादकज्वतः समुदायाद्विभक्तिर्न स्यात् । तस्याश्चासत्यां पदत्वं न स्यात् । ततश्चोच्चकैः पठतीति तिङ्ङतिङ इति ( ८।१।२८ ) निघातो न स्यात् । तस्मात् प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा वक्तव्या । न वक्तव्या । यस्मात् तुल्य-

---

(0) अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानं स्पष्टार्थमिति मनोरमाशब्दकौस्तुभयो र्भट्टोजिवाक्यन्तु न्यासादर्शनमूलकमेव प्रतिभाति । सर्वथा न्यासकारव्याख्यैव साधीयसी ।

जातीयानां नियमः। तेन तुल्यजातीयो नियमेन व्यवच्छिद्यते। तुल्यजातीयश्च समाससुबन्तसमुदायादन्यः व क्यसमुदा य एव। ननु प्रकृतिप्रत्ययसमुदायः। तेनायं तस्य नियमेन व्यवच्छेदो न क रणी । नैतदस्ति। सुबन्तासुबन्तसमुदायोऽपि समासोऽस्ति यथा प्रकर्त्ता प्रकारक इति। अत्र हि गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरिति कृदन्तेनासुबन्तेन गतिकारकं सुबन्तं समस्यते। तेन सुबन्तासुबन्तसमुदायोऽयं समास इति तुल्यजातीयस्यापि नियमे विज्ञायमाने बहुपटव उच्चकैरित्यत्र प्रातिपदिकसंज्ञा न स्यात्। एवं तर्ह्याचार्य्यप्रवृत्तिर्ज्ञापयति—भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञेति यदयमप्रत्यय इति प्रत्ययान्तस्य प्रतिषेधं शास्ति।

## ४७। ह्रस्वो नपुंसके प्रातिपदिकस्य।

नपुंसकलिङ्ग इति। नपुंसकं लिङ्गं यस्येति बहुव्रीहिः। स पुनर्नपुंसकलिङ्गोऽर्थो द्रव्यभूतो वेदितव्यः। नपुंसकलिङ्गस्य द्रव्यधर्मत्वात्। अलोऽन्त्यस्येति। अलोऽन्त्यस्येति (१।१।५२) परिभाषया। ग्रामणीरिति। सत्सूद्विषेत्यादिना (३।२।६१) क्विप्। अग्रग्रामाभ्यां चेत्युपसंख्यानाण् णत्वम्। काण्डे कुड्ये इत्यत्राप्यप्रत्यय इति प्रतिषेधात् प्रातिपदिकसंज्ञा नास्ति। तेन ह्रस्वत्वं न भवति। ननु च प्रातिपदिकाप्रातिपदिकयोरेकादेशोऽन्तादिवद्भावात् प्रातिपदिकग्रहणेन गृह्यते। ततश्च क्रियमाणे प्रातिपदिकग्रहणे ह्रस्वत्वं प्राप्नोतीत्यत आह प्रातिपदिकग्रहणसामर्थ्यादित्यादि। इह यद्यन्तवद्भावः स्यात् प्रातिपदिकग्रहणमनर्थकं स्यात्। व्यवच्छेद्याभावादिति भावः।

## ४८। गोस्त्रियोरुपसर्जनस्य।

स्त्रीति स्त्रीप्रत्ययग्रहणमिति। अत्र हेतुमाह स्वरितत्वादिति। स्त्रीग्रहणस्येह स्वरितत्वं क्रियत इति। स्वरितेनाधिकारादवगतिर्भवति। तेन स्त्रियामित्यधिकृत्य ये प्रत्यया विहितास्टाबादयस्तेषां ग्रहणं भवति। न स्त्र्यर्थाभिधायिनः शब्दमात्रस्य। नापि स्त्रीशब्दस्यैव स्वरूपस्य। उपसर्जनग्रहणं द्वयोर्विशेषणमित्यादेः स्पष्टीकरणायाह गोरुपसर्जनस्य स्त्रीप्रत्ययस्योपसर्जनस्येत्यादि। ताभ्यां प्रातिपदिकस्येत्यादेरपि स्फुटीकरणायाह उपसर्जनगोशब्दान्तस्येत्यादि।

उपसर्जनगोशब्दोऽन्तो यस्येति विग्रहः। एवं गोशब्देनोपसर्जनेन स्त्रीप्रत्ययेन च प्रातिपदिकस्य तदन्तविधौ सति गोः कुलं गोकुलं राज्ञः कुमार्य्याः पुत्रो राजकुमारीपुत्र इत्यत्र गोशब्दस्य कुमारीशब्दस्य च ह्रस्वत्वं न भवति। अन्यथा इहापि स्यात्। भवति ह्यत्र गोशब्दस्य राजकुमारीशब्दस्य चोप-सर्जनत्वमित्यभिप्रायः। चित्रगुरिति। प्रथमानिर्दिष्टमित्यादिना (१।२।४३) गोशब्दस्योपसर्ज्जनसंज्ञा। निष्कौशाम्बिरित्यादौ त्वेकविभक्ति चापूर्वेत्यादिना (१ २।४४)। अतितन्त्रीरित्यादि (७।१।८५)। तत्रि कुटुम्बधारणे। इदितो नुम्। अवितॄस्तृतन्त्रिभ्य (उण, ३।४०) इतीः। तन्त्रीः। लच्च दर्शनाङ्कयोः। लचेर्मुट् चेति (उण, ३।४४०) मुट्। ईप्रत्ययश्च। लक्ष्मीः। श्रिञ् सेवायाम्। क्विब् वचिप्रच्छीत्यादिना (३।२।१७८, वा) क्विप्। दीर्घः। श्रीः। अत्यादयः क्रान्त्याद्यर्थे (२ १।१८, वा) द्वितीययेति प्रादिसमासः। यदि स्त्रीति स्त्र्यधिकारविहिताः प्रत्यया गृह्यन्ते ततश्च प्रत्ययग्रहणे यस्मात् स विहितस्त-दादेस्तदन्तस्येति तदन्तग्रहणेऽतिराजकुमारिरित्यत्र ह्रस्वत्वं न सिध्यति। नहि राजकुमारशब्दाद् वयसि प्रथम इति (४।१।२०) ङीप्प्रत्ययो विहितः। किन्तर्हि ? कुमारशब्दात्। नैष दोषः। एषा परिभाषा यस्मात् प्रत्ययविधिस्तदादीत्यत्र (१।४ १३) सूत्रे प्रतिपादिता। तत्र च वामीत्यतो (१।४ ५) वा ग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन व्यवस्थितविभाषावतीयं क्वचिन्नोपतिष्ठत एव। अथवा कृत्तद्धितसमासाश्चेत्यत (१।२।४६) चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेनातिराजकुमारिरित्य-त्रापि ह्रस्वत्वं भविष्यतीत्यदोषः। ईयसो बहुव्रीहौ प्रतिषेध इति। ईयसन्ताद् यो विहित स्त्रीप्रत्यय स्तदन्तस्य बहुव्रीहौ प्रतिषेध इति। कथं पुनरसौ लभ्यते ? विभाषा च्छन्दसीत्यतो (१ २।३६) विभाषाग्रहणानुवृत्तेः। न चैवं अत्यतिप्रसङ्गः। व्यवस्थितविभाषाविज्ञानात्। बहुश्रेयसीति। अतिशयेन प्रशस्येति द्विवचनविभज्योपपदे (५।३ ५७) तरबीयसुनावितीयसुन्प्रत्ययः। प्रशस्यस्य श्र इति (५।३।६०) प्रशस्यशब्दस्येयसुनि परतः श्रादेशो भवति। प्रकृत्यैकाजिति (६।४।१६२) प्रकृतिवद्भावः। आद्गुणः (६।१।८७)। उगितश्चेति ङीप् (४।१।६)। बह्व्यः श्रेयस्यो यस्येति बहुश्रेयसीति।

नद्यृतश्चेति कप् न ( ५।४।१५३ ) भवति। ईयसश्चेति ( ६।४।१५६ ) कपो निषेधात्।

## ४६। लुक् तद्धितलुकि।

अदर्शनं ( १।१।६० ) लुक्। तच्चाभावः। अभावे पौर्वापर्य्यं नोपपद्यते। तस्माल्लुकीति सतो सप्तमीयं न परसप्तमीति मत्वाह तद्धितलुकि सतीति। पञ्चेन्द्र इति। तद्धितार्थेत्यादिना ( २।१।५१ ) समासे कृते साऽस्य ( ४।२।२४ ) देवतेत्यण्। तस्य द्विगोर्लुगनपत्य ( ४।१ ८८ ) इति लुक्। इन्द्रवरुणेत्यादिना ( ४।१।४९ ) विहितस्य ङीषो ऽनेन लुक्। तस्मिन्निवृत्ते सन्नियोगशिष्टानामिकतरापाय उभयोरप्यपाय इत्यानुको निवृत्तिः। पञ्चशष्कुलिरिति। अध्यर्द्धपूर्वाद्द्विगोर्लुगसंज्ञायामित्यार्हीयस्य ( ५।१।२८ ) ठकस्तेन क्रीतार्थे ( ५।१।३७ ) विहितस्य लुक्। आमलकमिति। आमलक्याः फलं विकार इति। नित्यं वृद्धशरादिभ्य ( ४।३।१४४ ) इति मयट्। तस्यापि फले लुगिति ( ४।३।१६२ ) लुक्। वदरं कुवलमिति। विकारार्थेऽनुदात्तादे ( ४।२।४४ ) रञित्यञ्। पूर्ववल्लुक्। शष्कुली। वदरी। आमलकी। कुवली। गौरादिपाठादेते ङीषन्ताः। गार्गीकुलमिति। गार्ग्यशब्दाद् यञश्चेति ( ४।१ १६ ) ङीप्। यस्येति ( ६।४।१४८ ) चेत्यकारलोपः। हलस्तद्धितस्येति (६ ४ १५०) यकारस्य च लोपः। गार्ग्याः कुलमिति षष्ठीसमासः। षष्ठ्या लुक्। गार्गीशब्दस्य समासशास्त्रे प्रथमानिर्दिष्टत्वाच्छास्त्रीयमुपसर्जनत्वम्। मूलोदाहरणेषु त्विन्द्राणीप्रभृतीनां लौकिकमात्रोपसर्जनत्वम्। उभयगतिरिह शास्त्रे सम्भवतीति लौकिकमप्रधानत्वमुपसर्जनत्वम्। लोके ह्यप्रधानमुपसर्जनमित्युच्यते। गार्गीत्वमित्यत्रापि गार्गीशब्दस्य लौकिकमेवोपसर्जनत्वम्। अवन्ती कुन्ती कुरूरिति। अवन्तेरपत्यं गोत्रं स्त्री। कुन्तेरपत्यं गोत्रं स्त्री। वृद्धेत्कोशलाजादाञ् ( ४।१।१७१ ) ञ्यङ्। कुरोरपत्यं स्त्री। कुरुनादिभ्यो (४।१।१७२) ण्य इति ण्यः। (P) स्त्रियामवन्तिकुन्तिकुरुभ्यश्चेति (४ १।१७६ )

(P) क्वचित् कुर्वादिभ्यो ण्य इति ( 4. 1. 151 ) दृश्यते ( as in my MS. no 13 )। अवन्तिकुन्तिसाहचर्य्यात् तद्राजसंज्ञकस्यैव ग्रहणं युक्तमिति कुरुनादिभ्यो ण्य इत्येव (4. 1. 172) पाठः। स एव हि बहुषु पुस्तकेषु लभ्यते।

लुक् । अवन्तिकुन्तिशब्दाभ्या मितो मनुष्यजातेरिति ( ४।१।६५ ) ङीष् । कुरुशब्दादूङुत ( ४।१।६६) इतूराङ् । अत्र ङीषाङा च तद्धितार्थो गोत्रापत्यं स्त्रीप्रधानमेवाभिधीयत इतुरपसर्जनत्वं नास्ति लौकिकम् । शास्त्रोयमपि नास्ति । अप्रथमानिर्दिष्टत्वात् समासशास्त्र इति ।

## ५० । इद् गोण्याः ।

पञ्चगोणिरिति । तद्धितार्थेति ( २।१।५१ ) समासे कृत आर्हीयष्ठक् । तस्य पूर्ववल्लुक् । इदिति योगविभाग इति । एतस्येद्ग्रहणमेव लिङ्गम् । तथाहि गोण्यो इत्येतावति सूत्रे ह्रस्वग्रहणानुवृत्तौ ह्रस्वत्वे कृते पञ्चगोणिरिति सिद्धत्येव । किमिद्ग्रहणेन ? तदेतदिद्ग्रहणं क्रियमाणं योगविभागार्थं विज्ञायते । ननु चानन्तरसूत्राल्लुक एवानुवृत्तिः स्यान्न ह्रस्वस्य । नैतदस्ति । लुगनुवृत्तौ हि सूत्रमिदमनर्थकं स्यात् । लुकोऽनन्तरसूत्रेणैव सिद्धत्वात् । तस्माद्ध्रस्वग्रहण मेवानुवर्त्तते । न लुग्ग्रहणम् । पञ्चसूचिरिति । पञ्चगोणिरित्यनेन तुल्यम् । यदि योगविभागः क्रियते तदातिप्रसङ्गः स्यात् । अन्येषामपि प्रसज्यत इत्यत आह स चेत्यादि । यदि सर्व्वत्रेत्त्वं पूर्वयोगेणैव स्यात् तदा गोण्या इति वचनमनर्थकम् । तस्माद् गोणीग्रहणादस्यासर्व्वविषयत्वम् । तेन योगविभागः सूचीविषय एव । नान्यविषय इति । तपरकरणं दीर्घनिवृत्त्यर्थम् । दीर्घस्य दीर्घकरणमनर्थकं स्यात् । अतो विना तपरकरणेन दीर्घो न भविष्यतीति चेत् ? न । लुग्ह्रस्वबाधनार्थत्वाद् दीर्घकरणस्य । भाव्यमाणोऽण् सवर्णान् न गृह्णातीति । तस्माद् दीर्घनिवृत्त्यर्थं तपरत्वं नोपपद्यत इति चेत् ? न । तस्याभाव्यमानत्वात् । अपूर्वस्य हि विधानं भाव्यमानत्वम् । नचात्रापूर्वस्य विधानम् । तथाहि लुग्ह्रस्वयोः प्राप्तयोः पुनः स एव ईकारः प्रतिप्रसूयते । तस्मात् तपरकरणं कर्त्तव्यम् ।

## ५१ । लुपि युक्तवद् व्यक्तिवचने ।

अभिधेयस्य लिङ्गसंख्ययोः प्राप्तयोरयमारम्भः । लुबिति प्रत्ययस्यादर्शनम् । तच्चाभावात्मकम् । नचाभावे व्यक्तिवचनयोः शक्यतेऽतिदेशः कर्त्तुम् । तस्माल्लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थो लुप्छब्देन विवक्षित इति मत्वाह लुपीति ।

लुप्संज्ञयेत्यादि। कथं पुनरेतल्लभ्यते? यावता प्रत्ययादर्शनस्यैषा संज्ञा। नतु प्रत्ययार्थस्य। साहचर्य्यात्। साहचर्य्यन्तु यत्र लुप् तत्रावश्यं प्रत्ययार्थस्य सद्भावात्। युक्तवदिति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यत इति। अत्र कारणमाह स हीत्यादि। युनक्त्यभिसम्बध्नाति विशेषणविशेष्यभावलक्षणसम्बन्धेनात्मसम्बन्धिनं करोतीत्यर्थः। तत्र तस्य निवास इत्यादि। प्रत्ययार्थो विशेष्यः। पञ्चालादिशब्दस्यार्थः प्रकृत्यर्थो विशेषणम्। तेन हि पूर्वं विज्ञातेन स्वाम्यन्तरव्यवच्छेदेन प्रत्ययार्थो विशिष्यते। अथवेत्यादि। पूर्वं युजिर् योग इत्यस्माद्धातोः क्तवतुप्रत्यये सति युक्तवदित्येतद्रूपं प्रदर्शितम्। इदानीं तस्यैव धातोः क्तप्रत्ययाद्वतिप्रत्यये सति युक्तवदित्येतद्रूपं दर्शयति। यद्यपि द्विष्ठत्वात् सम्बन्धस्य यथा प्रत्ययार्थेन प्रकृत्यर्थो युक्तस्तथा प्रकृत्यर्थेनापि प्रत्ययार्थ स्तथापि प्रत्ययार्थसम्बन्धिनोर्व्यक्तिवचनयोः प्रत्ययार्थ एवातिदेशोऽनर्थक इति प्रकृत्यर्थ एवात्र युक्तशब्देन विवक्षित इति मत्वाह युक्तः प्रकृत्यर्थ इति। सप्तम्यर्थे वतिरिति। लुपीति सप्तमीनिर्देशात्। व्यक्तिशब्दः प्रादुर्भावादावप्यर्थे वर्त्तते। वचनशब्दो हि भाषणादिषु। अतस्तत्संप्रत्ययो मा भूदित्यत आह व्यक्तिवचने इति। किं पुनः कारणं पूर्वाचार्य्यनिर्देश आश्रीयत इत्यत आह तदीयमित्यादि। कुत एतदित्यत आह तथाचेत्यादि। नहि स्वकीयस्यैव (Q) प्रत्याख्यानं युक्तमिति भावः। पञ्चालाः क्षत्रिया इति। पञ्चालस्यापत्यानि बहूनीति विवक्षायां जनपदशब्दात् क्षत्रियादञ् (४।१।१६८)। तस्य तद्राजस्य बहुषु (२।४।६२) तेनैवास्त्रियामिति लुक्। तेषां निवासो जनपद इत्यस्य वक्ष्यमाणेन पञ्चालानामित्यनेन सम्बन्धः। पञ्चालानां निवास जनपद इति। तस्य जनपदे लुबिति ( ४।२।८१ ) लुक्। कुरुशब्दादपत्यार्थे कुरुनादिभ्यो ( ४।१।१७२ ) ण्य इति ण्यप्रत्ययः। मत्स्यादिशब्देभ्योऽप्यपत्यार्थे द्व्यञ्मगधेत्यादिनाण् ( ४।१।१७० )। शेषं पूर्ववत्। लवणः सूप इति। लवणेन संसृष्ट इति प्राग्वहतीय ( ४।४।२२ ) ठक्। तस्य लवणाल्लुगिति

(Q) भट्टोजि's reference to—स्वकीय (vide प्रौढ़मनोरमा under गर्गादिभ्यश्च 4. 2. 138) —"तथाच लुब्योगाप्रख्यानादित्यत्र नहि स्वकीयस्यैव प्रत्याख्यानमिति न्यासः"—is evidently from memory. It is in लुपियुक्तवत् ( 1. 2. 51) and not in लुब्योग &c. (1. 2. 54.).

( ४।४।२४) लुक् । अत्राभिधेयवल्लिङ्गवचने भवतः । शिरीषाणामदूरभवो ग्राम इति शिरीषाः । अदूरभवश्चेति ( ४।२।७० ) शिरीषशब्दादण् । तस्य वरणादिभ्यश्चेति (४।२।८२) लुप् । णत्वन्न भवतीति व्यक्तिवचनग्रहणस्य फलम् । यदि व्यक्तिवचने इति नोच्येत तदा शिरीषेषु यद्वनस्पतित्वं तस्यापि ग्रामेऽतिदेशः स्यात् । एवञ्च शिरीषवनमित्यत्र विभाषौषधिवनस्पतिभ्यश्चेति (८।४।६) णत्वं प्रसज्येत । हरीतक्यः फलानीति । हरीतकीशब्दो गौरादिषु पिप्पल्यादिदर्शनात् ङीषन्तः । ततः फले विकारेऽनुदात्तादेरञितत्यञ् ( ४।२।४४ ) । तस्य हरीतक्यादिभ्यश्चेति ( ४।३।१६७ ) लुप् । अत्र व्यक्तिरेव युक्तवद्भावेन भवति । वचनन्त्वभिधेयवदिति । एतच्च विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लभ्यते । खलतिकं वनानीति । अदूरभवश्चेत्यण् ( ४।२।७० ) । तस्य वरणादिभ्यश्चेति ( ४।२।८२ ) लुप् । अत्र वचनमेव युक्तवद्भावेन भवति । व्यक्तिस्त्वभिधेयवदेवेति । एतदपि पूर्ववदेव लभ्यते ।

## ५२ । विशेषणानाञ्चाजातेः ।

पूर्वं प्रकृत्यर्थगतयोर्लिङ्गसंख्ययोर्लुबर्थेऽतिदेशात् तद्विशेषणानामपि रमणीयादीनां व्यक्तिवचनातिदेशः सिद्ध एव । यद्यपि भिन्नं विशेषणानां प्रवृत्तिनिमित्तं तथापि तेन भिन्नेनापि तत्र प्रवर्त्तमानानां स एव लुबर्थोऽतिदिष्टव्यक्तिवचनस्तेषामभिधेयः । तस्मात् तद्गतेनैव लिङ्गसंख्याभिधाने सिद्धे जातिप्रतिषेधार्थमिदं वचनम् । गोदौ रमणीयाविति । गोदौ नाम ह्रदौ । तयोरदूरभवो ग्राम (४।२।७०) इत्यर्थेऽण् । वरणादिभ्यश्चेति (४।२।८२) लुप् तस्य । पञ्चाला जनपदः । गोदौ ग्राम इति । जनपदग्रामशब्दौ जातिवचनौ । ताभ्यां जातिनिमित्ताभ्यां स एव लुबर्थौ जातिरूपेणोच्यत इति तयोरपि व्यक्तिवचने युक्तवत् स्याताम् । ततो जातेरिति प्रतिषेधः । जात्यर्थस्येत्यादि । जातिशब्दस्यार्थो जात्यर्थः तस्यायमजातेरिति युक्तवद्भावप्रतिषेधो न जातिशब्दस्यैवेत्यर्थः । किमेवं सति सिद्धं भवतीत्यत आह तेनेत्यादि । अर्थस्य युक्तवद्भावप्रतिषेधे सति यथा जातिशब्दस्य तत्रार्थे वर्त्तमानस्य तदीये लिङ्गसंख्ये न भवत स्तथा तद्विशेषणानामपि युक्तवद्भावो न भवति ।

यदि पुनर्जातिशब्दस्यायं प्रतिषेधः स्यात् तदा पञ्चाला जनपदो गोदौ ग्राम इत्यत्रैव स्यात्। रमणीयो बह्वन्न इत्यादौ न स्यात्। रमणीयादीनाम-जातिशब्दत्वात्। द्वारग्रहणं लुबर्थे जातिशब्दस्य प्रवृत्तत्वात् लुबर्थे जाति-विशेषणानां साक्षादप्रवृत्तेः। तानि हि साक्षाज्जातिमेव विशेषयन्ति। तस्यां तु विशेषितायां लुबर्थोऽपि विशिष्ट एव प्रतीयत इति जातिद्वारेण तस्य तानि विशेषणानि भवन्ति। मनुष्यलुपीति। मनुष्यलक्षणो यो लुप् तस्य विशेषणानां। युक्तवद्भावप्रतिषेध इति। स च विभाषाग्रहणानुवृत्तेर्व्यवस्थित-विभाषाविज्ञानाल्लभ्यते। चञ्चाऽभिरूप इति। चञ्चेव मनुष्य चञ्चा। इवे प्रतिकृताविति ( ५।३।८३ ) कन्। तस्य लुम् मनुष्य ( ५।३।९८ ) इति लुप्। अभिरूप इति। विशेषणस्याभिधेयवल्लिङ्गवचनानि भवन्ति। वध्रिकेति। पूर्ववत् कन्लुँपौ।

## ५३। तदशिष्यं संज्ञाप्रमाणत्वात्।

तदशिष्यमिति प्रतिज्ञा। संज्ञाप्रमाणत्वादिति हेतुः। यस्मात् संज्ञा-भूतानां पञ्चालादिशब्दानां प्रमाणत्वं तस्मात् तदशिष्यम्। प्रमाणत्वं पुनः प्रत्ययलक्षणम्। सर्वेषामेव शब्दानामेवंविधे स्वविषये प्रमाणत्वमस्ति। उच्यते चेदम्। तत्र विशेषो विज्ञायते। स पुनरभिधेयगतलिङ्गसंख्यानपेक्षया भिन्नलिङ्गसंख्यानामपि तेषां स्वार्थे प्रत्यायकत्वम्। अतएवाह संज्ञाशब्दा हि नानालिङ्गसंख्या इति। प्रमाणमिति। प्रमाणं प्रत्यायका वाचका इत्यर्थः। तत्रैतत् स्यात्। संज्ञाशब्दा एवामी पञ्चालादयो न भवन्ति। किं तर्हि? योगनिमित्तका इत्यत आह पञ्चाला वरणा इत्यादि। योगनिमित्तकाः शब्दा योगशब्दाः। नहि पञ्चालादयः शब्दाः क्षत्रियादिसम्बन्धेन जनपदादौ वर्त्तन्ते। किं तर्हि? संज्ञा एता जनपदादीनाम्। यदि संज्ञाशब्दा एते ततः किमिति? तदशिष्यमित्यत आह तत्र लिङ्गं वचनञ्चेत्यादि। कुत एतत्? यत् संज्ञाशब्दानां लिङ्गं वचनञ्च तत्स्वभावसिद्धमित्यत आह यथेत्यादि। एकस्यामपि जलकणिकायां बहुवचनान्तः स्त्रीलिङ्गोऽप्शब्दः प्रयुज्यते। एकस्यामपि योषिति दारशब्दः पुंलिङ्गो बहुवचनान्तः। गृहशब्दश्चैकस्मिन्

वेश्मनि बहुवचनान्तः पुंलिङ्गश्च। एकस्यामपि वालुकायां बहुवचनान्तः सिकताशब्दः स्त्रीलिङ्गः। वर्षा इति। एकस्मिन् विशिष्टकालेऽपि प्रवर्त्तमानः स्त्रीलिङ्गो बहुवचनान्तश्च वर्त्तते। तस्माद् यथैवैषामप्प्रभृतिशब्दानां स्वाभाविकं लिङ्गं वचनं च तथा पञ्चालादिशब्दानामपीति नार्थो युक्तवद्भाव-वचनेन। यद्येवं कस्मात् पूर्वं तदुक्तम्? प्रतिषेधविषयोपदर्शनार्थम्। नह्यनिर्दिष्टविषयस्य प्रतिषेधः शक्यते कर्त्तुं ज्ञातुं वा।

## ५४। लुब्योगाप्रख्यानात्।

योगाप्रख्यानादिति। योगो जनपदादेः क्षत्रियादिभिः सह सम्बन्धः। तस्याप्रख्यानादनुपलब्धेरित्यर्थः। ये हि योगनिमित्तकाः शब्दा योगमभिधाय तद्वति द्रव्ये वर्त्तन्ते तेभ्यो योग उपलभ्यते यथा दण्डिशब्दादिभ्यः। न च पञ्चालादिशब्देभ्यो दण्डादिशब्दवद् योग उपलभ्यते। तस्मान्नैते योगशब्दा इत्यत आह नहीत्यादि। प्रख्यायते कथ्यते प्रकाश्यते बुद्धेर्विषय आपाद्यत इति यावत्। यत एवं पञ्चाला वरणा इति सम्बन्धो न प्रख्यायतेऽतएव नैतदुप-लभामहे वृक्षयोगान्नगरे वरणा इति। किं तर्हि? संज्ञा एता अनपेक्षित-प्रवृत्तिनिमित्ताः। यदि संज्ञाशब्दा एते ततः किमित्याह तस्मादत्रेत्यादि। गतार्थम्। ननु च संज्ञाशब्दानामपि व्युत्पत्त्यर्थं तद्धित उत्पद्यत एव। यथा हस्ताज्जातौ (५।२।१३३) हस्ती। कम्बलाच्च (५।१।३) संज्ञायां कम्बल्यमिति। तत्किमुच्यते तस्मादत्र तस्य निवासो (४।२।६९) ऽदूरभवश्चेति (४।२।७०) तद्धितो नोत्पद्यत इति? सत्यम्। संज्ञाशब्दव्युत्पत्त्यर्थं तद्धित उत्पद्यते। स च क्वोत्पद्यते? यत्र श्रुतिकृतो विशेषो विद्यते। नचेह तद्धितोत्पत्तौ लुपि सति कश्चिद् विशेष इति न तद्धितोत्पत्तिः।

## ५५। योगप्रमाणे च तदभावेऽदर्शनं स्यात्।

योगप्रमाण इति। योगस्य प्रमाणं योगप्रमाणं येन योगः प्रत्याय्यते। तत् पुनरिह प्रकृतत्वात् पञ्चालादिशब्दः। स हि परमतेन पञ्चालादिसम्बन्धं स्वप्रवृत्तिनिमित्तमभिधायैव जनपदादौ वर्त्तते। नानभिधाय। तेन योगस्य प्रमाणं प्रत्यायको वाचक इत्यर्थः। तदभावेऽदर्शनं स्यादिति। यो हि योग-

निमित्तकः स योगाभावे न प्रयुज्यते दण्ड्यादिशब्दवदित्यभिप्रायः। योगप्रमाणे हीत्यादि। हिशब्दं हेत्वर्थं प्रयुञ्जानश्चशब्दो हेत्वर्थवृत्तिः सूत्रे उपात्त इति दर्शयति। स्यादेतत्। भवत्येव योगाभावे पञ्चालादिशब्दस्यादर्शनमित्यत आह दृश्यते चेत्यादि। गतार्थम्।

## ५६। प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्।

अन्यप्रमाणत्वादिति। अन्यत् प्रमाणमवगतिहेतुर्यस्यार्थाभिधानलक्षणस्य तदन्यप्रमाणम्। तस्य भावोऽन्यप्रमाणत्वम्। प्रधानं समासे किञ्चित् पदमिति यथा राजपुरुषशब्दे पुरुष इत्येतत्। प्रधानोपसर्जने इत्यादि। राजपुरुष इत्यत्र पूर्वपदमुपसर्जनम्। इतरत् प्रधानम्। ते च प्रधानार्थं सह ब्रूतः। प्रकृतिप्रत्ययावित्यादि। औपगव इत्यत्रोपगुशब्दः प्रकृतिः। अण्प्रत्ययः। तावपत्यलक्षणं प्रत्ययार्थं सह ब्रूतः। अशक्यत्वादिति। अशक्यत्वञ्च नन्तप्रकारत्वात्। तथाहि चित्रगुरिति बहुव्रीहौ कृते गुणगुणिभ्यामन्यपदार्थ उच्यते। अत्र गुणपदं चित्रशब्दोऽप्रधानम्। विशेषणत्वात्। गुणिपदं गोशब्दः प्रधानम्। विशेष्यत्वात्। क्वचिदुपसर्जनाभ्यामन्योऽर्थोऽभिधीयते। प्लक्षन्यग्रोधमिति। अत्र हि समुदायार्थः प्रधानमुपसर्जनाभ्यामभिधीयते। क्वचित् प्रधानाभ्यां प्रधानार्थयोरेव सहाभिधानम्। प्लक्षन्यग्रोधाविति। तथाहि न केवलं प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतोऽपि तु क्वचित् प्रकृत्यर्थमपि यथा स्वार्थिकेषु शुक्लतरं शुक्लतममिति। तथा केचिदाख्यातेषु स्वभावात् प्रधानमाहुः प्रकृत्यर्थं क्रियाप्रधानमाख्यातमिति। अन्ये तु मन्यन्त आख्यातेषु प्रधानभूतः प्रत्ययार्थ एव शक्तिरूपेणोच्यते। यथा विभक्तिभिः क्वचित् प्रत्यये। ननु शक्तिमान् पदार्थो द्रव्यभावमापन्न उच्यते। अतः क्रियान्तरेण च सम्बन्धे शक्त्यन्तरमाविर्भवति कर्त्तारं पश्येति। एवमाद्यनन्तप्रकारमर्थाभिधानमशक्यं सर्वमुपदेष्टुम्। तस्माल्लोकत एवार्थावगतिः। कथं पुनरेतद् विज्ञायत इत्यत आह यैरपीत्यादि। सुगमम्।

## ५७। कालोपसर्जने च तुल्यम्।

अर्थस्यान्यप्रमाणत्वादित्युक्तम्। कथं पुनरत्राप्ययं हेतुर्लभ्यत इति

प्रश्नावसर इत्याह तुल्यशब्दो हेत्वनुकर्षणार्थ इति। कथं पुनस्तुल्यशब्दो हेत्वनुकर्षणार्थो भवति ? एवं मन्यते। तुल्यमिति प्रत्याख्यानक्रियाविशेषणमेतत्। अनन्तरोक्तेन प्रत्याख्यानेन तुल्यमेतत् प्रत्याख्यानमेवञ्च तुल्यम्भवति यदि यस्तस्य हेतुः स एवास्यापि भवति। तस्मात् तुल्यग्रहणसामर्थ्यात् पूर्वको हेतुरत्रानुवर्त्तते। तेन तुल्यशब्दो हेत्वनुकर्षणार्थो भवतीति। अन्याय्यादुत्थानादित्यादि। उत्थानं शयनाद्रात्रेः पश्चिमे यामे न्याय्यमुक्तम्। संवेशनं शयनम्। तदपि रजन्याः प्रथमे यामे न्याय्यम्। तदेवं सकलो दिवसः पूर्वस्याश्च रात्रेः पश्चिमो याम आगामिन्याश्च प्रथमो याम इत्येषोऽद्यतनः काल इत्युक्तं भवति। अहरुभयतोऽर्द्धरात्र मित्यादि। कृत्स्नो दिवस उभयतश्चार्द्धरात्रम्। अतिक्रान्तायाश्च रात्रे रागामिन्याश्च रात्रेरद्यतनः काल इत्यपरे।

## ५८। जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्।

जातिर्नामायमेकोऽर्थ इत्यादिना सूत्रारम्भस्य प्रयोजनमाह। ननु च जातेः संख्या न विद्यते। तस्या द्रव्यधर्मत्वात्। यद्यपि वैशेषिकसिद्धान्तप्रसिद्धा गुणपदार्थसंगृहीता या संख्या सा न विद्यते तथापि भेदका गुणा इत्यस्माद् दर्शने भेदमात्रा या संख्या सा विद्यत एवेत्यदोषः। जातेराख्येति। आख्यानमाख्या प्रत्यायनम्। एकस्मिन्नर्थ इति। जात्याख्योऽर्थो जात्यर्थो बहुवद्भवतीति यावदिति। एतेनैतद्दर्शयति। नहि जातिशब्दाज्जसादिबहुवचनं विधीयते। किन्तर्हि बहुवद्भावः। यदि हि जातिशब्दाज्जसादिबहुवचनं विधीयेत जातिविशेषणेभ्यः सम्पन्नादिभ्यस्तन्न स्यात्। तेषामजातिशब्दत्वादित्यभिप्रायः। कथं पुनर्जात्यर्थस्य बहुवद्भावो लभ्यते ? अन्वर्थग्रहणात्। बहुवचनमिह न पारिभाषिकं बहुवचनं गृह्यते। किं तर्हि ? अन्वर्थम्। उक्तिर्वचनम्। बहूनां वचनं बहुवचनम्। न चैकस्मिन्नर्थे बहूनां वचनं सम्भवति। अतः सामर्थ्याद् वत्यर्थो गम्यते। एकस्मिन्नर्थे बहुवदिति। तदनेन प्रकारेण जात्यर्थो बहुवद्भवति। तेनेत्यादि। यत एव जात्यर्थस्य बहुवद्भावो विधीयते तेन जातिविशेषणानामजातौ वर्त्तमानानां

बहुवचनमुपपद्यते जातिशब्दवत्। देवदत्त इति। देवदत्तशब्दो यदृच्छाशब्दः। नानेनैकं वस्त्वनेकव्यक्त्यनुगतमभिधीयते। अनेकव्यक्त्याधारा हि जातिः। ततो न देवदत्तत्वं नाम जातिरस्तीति न भवत्यत्र बहुवद्भावः। ननु चात्रावस्थाभेदेनानेकाधारं देवदत्तत्वमस्ति। नैतदस्ति। एवं हि जातिग्रहणमनर्थकं स्यात्। सर्वत्र जातेः सम्भवात्। तस्माज् जातिग्रहणसामर्थ्याल् लोके ये जातिशब्दाः प्रतीता स्तदर्था एवात्र जातिशब्देन विवक्षिता इति विज्ञायते। नच देवदत्तशब्दो लोके जातिशब्दः प्रतीतः। काश्यपप्रतिकृतिः काश्यप इति। कश्यपस्यापत्यं। ऋष्यन्धकवृष्णिकुरुभ्यश्च ( ४।१।१०४ ) विदादिभ्यो-ऽञित्यञ् काश्यप इति। तत इवार्थे इवे प्रतिकृताविति ( ५।३।९३ ) कन्। लुम् मनुष्य ( ५।३।९८ ) इति लुब् भवति। अयं जातिशब्द इति। गोत्रञ्च चरणैः सहेति ( ४।१।६१, भा ) लक्षणात्। तस्य च गोत्र-प्रत्ययान्तत्वात्। नत्वयं जातिरूपेणोच्यते। किं तर्हि? प्रतिकृतिरिति। एवं तर्हि जातिप्रत्यायने हि चिकीर्षिते बहुवद्भावेन भवितव्यम्। नचेह जातिप्रत्यायनं चिकीर्षितम्। किन्तर्हि? प्रतिकृतिप्रत्यायनम्। व्रीहि-यवाविति। एकस्मिञ्जात्यर्थे बहुवद्भावोऽनेन विधीयते। इह तु द्वौ जात्यर्थौ विवक्षितौ। वक्तव्यशब्दस्य व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। अन्य-तरस्यामिति व्यवस्थितविभाषेयम्। तेन संख्याप्रयोगे न भविष्यति। अथवै को व्रीहिः सम्पन्न इत्यत्रैकशब्दः प्रयुज्यमानो जात्यर्थस्यैकत्वमुद्भावयति। तच्च बहुत्वेन विरुध्यते। तस्मादेकत्वबहुत्वयोर्विरोधाद्बहुवद्भावो नेह भविष्यति।

## ५९। अस्मदो द्वयोश्च।

अत्राप्यर्थस्य बहुत्वातिदेशः। अस्मदो योऽर्थः स बहुवद्भवतीति। तेन तिङन्तस्यापि तत्र वर्त्तमानस्य बहुवचनान्तत्वम्भवति। वयं ब्रूम इति। एकत्वे द्वित्वे चेत्यादि। युक्तं यदेकत्वे भवति। द्वित्वे तु कथम्? नहि द्वित्वमस्मदर्थस्य सम्भवति। अस्मच्छब्दस्यात्मविषयत्वात्। आत्मनश्चैकत्वात्। नैष दोषः। आत्मत्वं परत्र यदोपचर्य्यतेऽयं मे द्वितीय आत्मेति तदा

ऽस्मच्छब्दस्य तत्रापि द्वन्द्वेर्द्व्यर्थविषयत्वं सम्भवति। अथवा त्यदादीनां मिथो यद् यत् परं तच्छिष्यत इत्यस्मच्छब्द एव शिष्यमाणो युष्मदर्थमप्याहेति द्व्यर्थतोपपद्यत इति युज्यते द्व्यर्थता। अथ यद्यस्मच्छब्दो बहुवचनान्तः प्रयुज्यते तदैकार्थविषयोऽयं न द्व्यर्थविषय इति। अथ द्व्यर्थविषयोऽयं नैकार्थ-विषय इति। कुतस्तस्यैकार्थद्व्यर्थविषये वृत्तिरवसीयते? प्रकरणात्। यथा ऽराच्छब्दस्य दूरान्तिकार्थयोर्वृत्तिरिति। अहमिति। ङे (७।१।२८) प्रथमयोरमित्यभावः। त्वाहौ (७।२।९४) सावित्यहादेशः। वयमिति। जसि मपर्यन्तस्य (७।२।९१) यूयवयौ जसीति (७।२।९३) वयादेशः। शेषे (७।२।९०) लोपः। आवामिति। औप्रत्यये परतो युवावौ (७।२।९२ द्विवचन इत्यावादेशः। प्रथमायाश्चेत्यादिनात्वम् (७।२।८८)। वक्तव्य इति। व्याख्येय इत्यर्थः। व्याख्यानन्त्वन्यतरस्यांग्रहणं यदनुवर्त्तते तस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम्। युष्मदि गुरावेकेषामिति। एतदपि चकारस्यानुक्तसमुच्चयार्थत्वात् सूत्रेणैव संगृहीतम्।

## ६० । फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे ।

चकारो द्वयोरनुकर्षणार्थ इति। ननु च फल्गुन्यौ नक्षत्रे द्वे एव। तथा प्रोष्ठपदे अपि द्वे। अत्रानयोर्द्वित्वाद्द्वित्व एव बहुवचनम् भविष्यति। तत् किं चकारेण द्वयोरित्यनुकर्षणार्थेन? एवं तर्ह्येतज् ज्ञापयति। नक्षत्रग्रहणं ज्योतिष उपलक्षणार्थमिति। तेनैतदपि सिद्धं भवति। उदिताः पूर्वाः फल्गुन्य उदिते पूर्वे फल्गुन्याविति। यदि नक्षत्रग्रहणं ज्योतिष उप-लक्षणार्थमिति न ज्ञाप्यते तदिह तु न स्यात्। यतो ज्योतिषामावस्थिकी नक्षत्रता चन्द्रमसा योगे सति भवति। नान्यदा। अन्यदा तु ज्योतिष्ट्वमेव। नच नक्षत्राभिधायिन उदिताः पूर्वाः फल्गुन्य इत्यत्र फल्गुनीशब्दस्य प्रयोगः। किं तर्हि? ज्योतिर्मात्राभिधायिन इति। अत्र ज्योतिष्ट्वमेकस्याप्यस्तीति तन्निवृत्त्यर्थं द्वयोरित्यनुकर्षणार्थं चकारकरणं युक्तम्। यदि पुनर् ज्योतिष उप-लक्षणार्थं नक्षत्रग्रहणं न स्यात् तदा क्व स्यात्? तदेहैव स्यात्। अद्य पूर्वाः फल्गुन्यः। अद्य पूर्वे फल्गुन्याविति। अस्ति ह्यत्र फल्गुन्योर्नक्षत्रता।

चन्द्रमसा युक्तत्वात्। तथाहि नक्षत्रेण युक्तः काल ( ४।२।३ ) इत्यण् भवति। श्रवणं तस्य न भवति। लुबविशेष ( ४।२।४ ) इति लुप्तत्वात्। फल्गुन्यौ माणविके इति। फल्गुन्योर्जाते इति। फल्गुन्याषाढ़ाभ्यां टानाविल्युपसंख्यानाट्ट ( ४।३।३४ वा ) प्रत्ययः। टिड्ढाण ( ४।१।१५ ) ञिति ङीप्।

## ६१। छन्दसि पुनर्वस्वोरेकवचनम्।

## ६२। विशाखयोश्च।

## ६३। तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्।

तिष्यपुनर्वसवो माणवका इति। तिष्यपुनर्वसुशब्दाभ्यां नक्षत्रेण युक्तः काल इत्यण् (४।२।३) भवति। तस्य लुबविशेष इति (४।२।४) लुप्। ततस्तिष्ये जातो माणवकः पुनर्वस्वोर्जातौ माणवकाविति सन्धिवेलादिनाऽण् (४।३।१६)। तस्य श्रविष्ठाफल्गुन्यनुराधेत्यादिना (४।३।३४) लुप्। पर्य्यायाणामपि यथा स्यादिति। नक्षत्रग्रहणे सत्यर्थग्रहणादेतद् भवति। शब्दग्रहणे च स्वं रूपमित्येषा (१।१।६८) परिभाषा भवतीत्युक्तमेतत्। तदभावे पर्य्यायाणामपि भवति। सिद्ध्यपुनर्वसू इति। सिद्ध्यशब्दस्तिष्यपर्य्यायः। यस्तिष्य स्तौ पुनर्वसू एषामित्यवयवेन विग्रहं दर्शयति। समुदायस्तु समासार्थो वेदितव्यः। अथ तिष्यपुनर्वसव इति? बहुव्रीहिणा विपर्य्यस्तमतयः पुरुषा एवैवमुच्यन्ते। ततश्च नक्षत्रसमास एवायन्न भवति। तत् किमितन्निवृत्त्यर्थेन द्वन्द्वग्रहणेनेत्येवं यो देशयेत् तं प्रत्याह तिष्यादय एवेत्यादि। स्वदर्शनापराधादन्यथा तिष्यादीन् दृष्ट्वा प्रतिपत्तृभिस्त एव तिष्यादयो विपर्य्ययेण दृश्यमाना बहुव्रीहिणैवमुच्यन्ते। नतु पुरुषाः। तस्मान्नक्षत्रसमास एवायम्। तिष्यपुनर्वस्विदमिति। केन पुनरत्रैकवद्भावः? जातिरप्राणिनामिति (२।४।६) चेत्? न। संज्ञाशब्दत्वात्। देवदत्तादिशब्दवत्। नायं जातिशब्दः। अनेकाधारा हि जातिर्भवति। न च तिष्यादिस्तथा। किञ्च वक्ष्यति जातिप्रधानपरत्वे च जातिद्रव्याणामयमेकवद्भावो न नियतद्रव्यविवक्षायामिति। नियतद्रव्यविवक्षा चात्र। तस्मान्न जातिरप्राणिना (२।४।६) मित्यनेनैकवद्भाव उपपद्यते। न चान्यदेकवद्भावलक्षणमस्ति। तत्र तिष्यपुनर्वस्वोर्नक्षत्रे द्वन्द्वसमासे बहुत्वाद् बहुवचनेन

भवितव्यम् । एवञ्च बहुवचनग्रहणमनर्थकमित्यत आह सर्वो द्वन्द्वो विभाषे-त्यादि । यदयमेकवचननिवृत्त्यर्थं बहुवचनग्रहणं करोति ततोऽवसीयते ऽस्तीयम्परिभाषा सर्वो द्वन्द्वो विभाषैकवद्भवतीति । तेनेह बहुवचनग्रहण-मेकवचननिवृत्त्यर्थं कृतमित्यभिप्रायः ।

## ६४ । सरूपाणामेकशेष एकविभक्तौ ।

सरूपाणामिति बहुव्रीहौ कृते ज्योतिर्जनपदेत्यादिना (६।३।८५) समानस्य सभावः । रूपशब्दोऽत्र स्वभावे वर्त्तते । सरूपाणां शब्दानामिति निर्धारणे षष्ठी । तेन स्वरूपाणां मध्ये समानजातीयो यः सरूपः स एक एव शिष्यते । न विरूपः । समानजातीयस्यैव हि निर्धारणं भवति न विजातीयस्य । अथवा समुदायलक्षणैषा षष्ठी । सरूपसमुदायान्तःपाती च सरूप एव भवति । न विरूपः । तेन सरूप एव शिष्यते । एकविभक्ताविति । एकशब्दः समानार्थं एकधनाविति यथा । एका चासौ विभक्तिश्चेति पूर्वकालैकेत्यादिना (२।१।४९) समासः । एवमेकशेष इत्यत्रापि । अत्र त्वेकशब्दः संख्यावचनः । शेषशब्दोऽयं निवृत्त्या विशिष्टमवस्थानमाह । नावस्थानमात्रम् । अतएवाह एकः शिष्यते । अपरे निवर्त्तन्त इति । वृक्षश्च वृक्षश्च वृक्षावित्यादि। अविभक्तिकानामयमेक-शेषः । अनैमित्तिकत्वाद्विभक्तेः । न ह्ययं परां विभक्तिमाश्रित्य विधीयते । एक-विभक्तावितीह साहचर्य्योपलक्षणमेतत् । न निमित्तनिर्देशः । एकस्यां विभक्तौ परतो यानि रूपाणि दृष्टानि तेषामनुत्पन्नायामेव विभक्तौ प्राति-पदिकानामेकशेषो भवति । ततः कृत एकशेषे विभक्तिरुत्पद्यते । अथवा सविभक्तिकानामेवैकशेषः । कथम् ? विभक्तिशब्देन हि कारकमभिधीयते । विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा । तदेतदुक्तम्भवति । एकस्मिन् समाने-ऽभिन्ने कारके यानि सरूपाणि तेषामेवैककारकाणामेकशेषो भवतीति । यद्येवं परत इति वृत्तिग्रन्थो नोपपद्यते । कारकं ह्यर्थसमवायिनी शक्तिः । न च तया शब्दानां पौर्वापर्य्यं सम्भवति । कथञ्च विभक्तिशब्देन कारकेऽभि-धीयमाने सविभक्तिकानामेकशेषो लभ्यते ? उच्यते । वृत्तिग्रन्थस्तावदुप-पद्यते । परशब्दो ह्ययमिष्टवाची । एकविभक्तौ परत एकस्यां विभक्ता-

विष्टायामित्यर्थः। विषयसप्तमी चेयम्। सती सप्तमी वा। एकस्मिन् कारके विषयभूत इष्टे सति चेत्यर्थः। किञ्चेष्टं कारकं भवति? यद् विवक्षितम्। अतएव विवक्षितत्वात् कारकं स्वनिमित्तां विभक्तिमुत्पादयतीति सविभक्तिकानामेकशेषो लभ्यते। सहभावविवक्षायाञ्चायमेकशेषो भवति। यद्येकेन युगपत् सर्वेषामर्थोऽभिधातुमिष्यत एवं सति भवति। नान्यथा। ननु च जातिः पदार्थः। जातिश्चैकैव। तत्रैकत्वाज्जातेर्बहूनां शब्दानां प्रसङ्ग एव नास्ति। तत्किमेकशेषारम्भेणेति चोद्यावसरे द्रव्यं पदार्थ इत्येतद्दर्शनमाश्रित्याह प्रत्यर्थमित्यादि। प्रत्यर्थमेकैकस्मिन्नर्थे यस्माच्छब्दानां निवेशप्रवृत्तिस्ततोऽनेकेन शब्देनानेकार्थस्याभिधानम्। तत्रैतद्दर्शनेऽनेकेषामर्थाभिधाने प्रत्येकेनैव कर्त्तव्येऽनेकशब्दत्वं प्रसज्यत इति यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति। इष्यते चैकशब्दता। तस्मादेकशेष आरभ्यते। रूपग्रहणं किमिति? एवम्मन्यते। रूपग्रहणे क्रियमाणे पदद्वयसमनुगम्योऽर्थः प्रतिपत्तव्य इति प्रतिपत्तिगौरवं भवति। समानानामित्युच्यमाने सत्येकपदसमनुगम्योऽर्थः प्रतीयत इति प्रतिपत्तिलाघवं भवति। तस्मात् समानग्रहणमेव कर्त्तव्यमिति। भिन्नेऽप्यर्थे यथा स्यादिति रूपग्रहणम्। यदि रूपग्रहणं न क्रियेत तदा विशेषानभिधानाद् यत्र सर्व्वं समानं शब्दोऽर्थश्च तत्रैव स्याद् वृक्षा इत्यादौ। अक्षा इत्यादौ तु न स्यात्। अर्थभेदात्। तथा ह्यक्षशब्द इन्द्रियाख्ये शकटाङ्गे विभीतकादावर्थे च वर्त्तते। पादशब्दोऽपि कार्षापणश्लोकपादपाणिपादादावर्थे वर्त्तते। माषशब्दोऽपि व्रीह्यादौ। द्विवह्वोः शेषो मा भूदिति। ननु च शेष इतेरकत्वसंख्याविवक्षायां द्वयोर्बहूनाञ्च शेषो न भविष्यति। नैतदेवम्। इह विधीयमानत्वाच्छेष एव प्रधानम्। न च प्रधाने संख्या विवक्ष्यते। तथाहि कर्त्तुरीप्सिततमं कर्मेति (१।४।७९) कर्मसंज्ञा। ईप्सिततमस्य प्राधान्यात्। असत्यां संख्याविवक्षायां द्वयोर्बहूनाञ्च कर्मसंज्ञा भवति। गुणे तु संख्या विवक्ष्यते। यथा ङ्याप् प्रातिपदिकादिति (४।१।१)। स्वादयो विधीयमानत्वात् प्रधानम्। ङ्याप्प्रातिपदिकमप्रधानमिति। तत्र संख्या विवक्ष्यते। तेनैकैकस्मादेव स्वादय उपपद्यन्ते। लक्षणानुरोधाद् गुणेऽपि क्वचित् संख्या न विवक्ष्यते यथेहैव सरूपाणा-

मिति । तेन द्वयोरपि सरूपयोरेकः शिष्यते । आदेशो मा भूदिति । असति शेषग्रहणे सरूपाणामिति स्थानषष्ठीयं स्यात् । ततश्चादेशः स्यात् । एवञ्चाशि-प्रुषिलटिकणिखटिविशिभ्यः क्वन्निति (उण, १।१४८) क्वन्प्रत्ययान्तोऽक्षशब्दो नित्स्वरादाद्युदात्त इति द्वयोरक्षशब्दयोराद्युदात्तयोः स्थान आद्युदात्तद्वयवाने-वादेशः स्यात् । आन्तरतम्यात् । पय इत्यादि । एकः पयःशब्दः प्रथमान्तः कर्तृ-पदम् । द्वितीयो द्वितीयान्तः कर्मपदम् । ततो भिन्नविभक्तिकत्वम् । नैक-विभक्तिपरत्वमितिएकशेषो न भवति । ब्राह्मणाभ्यामिति । प्रथमो ब्राह्मणशब्द-स्तृतीयान्तः । द्वितीयस्तु चतुर्थ्यन्तः । तेनात्रापि समानविभक्तिकत्वन्नास्ति ।

## ६५ । वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।

वृद्धशब्दोऽयमस्ति लौकिको यश्चरमे वयसि वर्त्तते । अस्ति च शास्त्रीयः । वृद्धिर्यस्याचामादिस्तद्वृद्धमिति (१।१।७३) । अस्ति च पूर्वाचार्य्यसंज्ञा । अपत्य-मन्तर्हितं वृद्धमिति । तत्र यदि लौकिको गृह्येत युवशब्दस्यापि तत्साह-चर्य्याल्लौकिकस्यैव वयोविशेषवाचिनो ग्रहणं स्यात् । ततश्चाजश्च वर्करश्चेत्येवमादौ प्रसज्येत । वृद्धावस्थो हि पशुविशेषोऽज इत्युच्यते । युवा तु वर्करः । अथ शास्त्रीय उपादीयत औपगवश्चौपगविश्चेत्यादावपि स्यादित्येतदालोच्याह वृद्धशब्द इत्यादि । एतेन पूर्वाचार्य्यप्रणीतायाः संज्ञाया वृद्धस्येदं ग्रहणमिति दर्शयति । कथं पुनरेतल्लभ्यते ? उपदेशात् । अथवा एवम्मन्यते । युवशब्दो यद्यपि लोके द्वितीये वयसि रूढ़स्तथापि जीवति तु वंश्ये युवेति (४।१।१६३) परिभाषा बलादपत्ये यो वर्त्तते स एव गृह्यते । तेन तत्साहचर्य्याद् वृद्धशब्दस्यापत्यार्थ-वृत्तेरेव ग्रहणं युक्तमिति । गोत्रग्रहणन्तु न कृतम् । वैचित्र्यार्थम् । यूना सह वचन इति सहग्रहणेन यूनेति सहयोग एषा तृतीयेति दर्शयति । अतएव सहयोगे तृतीयाविधानादवगम्यते सहभावविवक्षायामेकशेषो भव-तीति । समानायामित्यादिना यत्र वृद्धयुवनिमित्तमेव वैरूप्यं तद्विषयं दर्शयति । आकृतिः शब्दस्य प्रवृत्तिनिमित्तं गार्ग्यत्वादि । तस्यां समानायामभिन्नायां यत्र वृद्धयुवप्रत्ययावेव केवलं भिद्येते नान्यत् प्रकृत्यादिकं तत्र वृद्धयुवप्रत्ययनिमित्तमेव वैरूप्यं भवतीति भावः । गार्ग्यश्चेत्यादि । गर्ग-

वत्सशब्दाभ्यां गर्गादित्वाद् यञ्। गार्ग्यः। वात्स्यः। ताभ्यां यून्यपत्ये यञिञोश्चेति (४।१।१०१) फक्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वात्स्यश्च वात्स्यायनश्च वात्स्यौ। प्रकरणादिनात्र युवार्थो गम्यते। गर्गश्चेति। गर्गशब्दोऽयं मूलप्रकृतिः। न वृद्धे वर्त्तते। नापि यूनि। गार्ग्यवात्स्यायनाविति। अत्र न केवलं वृद्ध-युवप्रत्ययनिमित्तको विशेषोऽस्त्यपितु प्रकृतिनिमित्तकोऽपि। भागवित्ति-शब्दो गोत्रापत्ये भगवित्तशब्दादिञन्तः। भागवित्तिकश्चेति। भागवित्ति-शब्दाद् यून्यपत्ये गोत्रस्त्रियाः (४।१।१४७) कुत्सने ण चेत्यतः कुत्सन इत्यनुवृत्तौ वृद्धाट् ठक् सौवीरेषु बहुलमिति (४।१।१४८) ठक्।

## ६६। स्त्री पुंवच्च।

स्त्र्यर्थस्य वैरूप्यकारणस्याधिक्यात् पूर्वेण न सिध्यतीति वचनम्। पुंवच्चेति वचनादतिदेशोऽयम्। स्त्रीति स्त्रीप्रत्ययग्रहणं वेदं स्यात्? स्त्र्यर्थवृत्तिशब्दस्य वा ग्रहणम्? अर्थग्रहणं वा? यदि स्त्रीप्रत्ययस्य ग्रहणं स्यात् ततोऽनेन तस्यैव निवृत्तिः क्रियते। पुंवत् स्त्रीप्रत्ययो भवतीति। नतु स्त्रार्थस्य निवृत्तिः क्रियते। ततो गार्ग्यश्च गार्ग्यायणाश्चेति गर्गा इत्यत्रास्त्रिया-मित्यनुवर्त्तमाने यञञोश्चेति (२।४।६४) लुङ् न स्यात्। इह तु गर्गान् पश्यतीति तस्माच्छसो नः (६।१।१०३) पुंसीति नत्वं न स्यात्। द्वितीये तु पक्षे स्त्र्यर्थवृत्तेः शब्दस्यानेन पुंवद्भावः क्रियते। नतु स्त्रीत्वस्य निवृत्तिः। तथापि स एव दोषः स्यात्। अर्थग्रहणे तु न कश्चिद् दोष इत्यतः स्त्र्यर्थस्येदं ग्रहणमिति मत्वाह स्त्र्यर्थः पुंवद्भवतीति। कथं पुनरर्थस्येदं ग्रहणं लभ्यते। उच्यते। स्त्रीप्रत्ययानां तावदेतद् ग्रहणं न भवति। अस्वरितत्वात्। स्त्र्यर्थवृत्तेरपि शब्दस्य ग्रहणं न भवति। अप्राधान्यात्। अप्राधान्यन्तु तस्याभिधेयपारतन्त्र्यात्। अर्थस्य प्राधान्यमपारतन्त्र्यात्। प्रधानगुणसन्निपाते तु प्रधानस्य ग्रहणं न्याय्यम्। अतः स्त्र्यर्थ एव गृह्यते। गार्गी वात्सी चेति। गार्ग्यवात्स्यशब्दानां यञश्चेति (४।१।१६) ङीप्। पूर्ववदकारयकारलोपौ। दाक्षी इति। पूर्ववत् ङीप्। दाक्षायणश्चेति। दाक्षेरपत्यमिति यञिञोश्चेति (४।१।१०१) फक्।

## ६७ । पुमान् स्त्रिया ।

स्त्रीपुंसलक्षणश्चेदेव विशेष इति । यद्येवमिह न स्यात् । गौश्चायं गौश्चेयमित्येतौ गावौ तिष्ठत इति । नह्यत्र स्त्रीपुंसकृतः कश्चिद् विशेषोऽस्ति । मा भूदनेन । सरूपाणामित्यादिना ( १।२।६४ ) भविष्यति । नैतदस्ति । यदि हि तेन स्यात् स्त्रीशब्दस्याप्येकशेषः प्रसज्येत । ततश्च स्त्रीलिङ्गतापि स्यात् । लिङ्गमशिष्यं लोकाश्रयत्वात् । स्त्रीलिङ्गस्यैकशेषे कृते पुंस्त्वं विवक्षितव्यमित्यदोषः । अथवा पुमानिति योगविभागः क्रियते । तेनेहाप्य सत्यपि स्त्रीपुंसकृते विशेषे पुंस एवैकशेषो भवति । न चैवं सत्यतिप्रसङ्गो भवति । योगविभागादिष्टसिद्धेरिति । ब्राह्मणी । कुक्कुटी । मयूरीति । जातेरस्त्रीविषयादयोपधादिति ( ४।१।६३ ) ङीष् । कुक्कुटमयूर्य्याविति । अत्र न केवलं स्त्रीपुंसकृतो विशेषः । किं तर्हि ? आकृतिश्रुतिकृतोऽपि । इन्द्राणीति । इन्द्रवरुणेत्यादिना (४।१।४९) ङीप् । आनुगागमश्च । प्राक् च प्राचीति । प्राञ्चतीति प्रपूर्वादञ्चतेर् ऋत्विगित्यादिना (३।२।५९) क्विन् । क्विन् प्रत्ययस्य कुरिति ( ८।२।६२ ) कुत्वम् । क्विन्नन्ताद् दिक्छब्देभ्य ( ५।३।२७ ) इत्यादिना ऽस्तातिप्रत्ययः । तस्याञ्चेश्चेति ( ५।३।३० ) लुक् । प्राचीति । प्राक् छब्दादुगितश्चे ( ४।१।६ ) त्यत्राञ्चतेश्चोपसंख्यानाद् ङीप् । प्रागित्यव्ययमिति । तद्धितश्चासर्वविभक्तिरित्यव्ययत्वम् ( १।१।३८ ) ।

## ६८ । भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।

## ६९ । नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।

अनपुंसकेनेति । किमित्यादि । ननु च विना नपुंसकेनापि सह वचनेन सरूपाणामित्यादिनैकशेषो भवत्येव । तत् कोऽत्र विशेषो यस्तेनैकशेषो विधीयमानोऽनेनैव चेत्यत आह । एकवच्चेति न भवतीति । यद्यनेनैक-शेषः स्यात् पक्ष एकवद्भावः स्यात् । तेन त्वेकशेषे सति न भवति । अथास्येति किमर्थ मुच्यते ? यद्यस्येति नोच्येतोत्तरत्राप्येकवच्चेत्यनुवृत्तिः स्यात् । तत श्चोत्तरत्र तु यस्यैकशेषः करिष्यते तस्यैकवद्भावः प्रसज्येत ।

स्मादस्यैव नपुंसकस्यैकवद्भावो यथा स्यात्। उत्तरत्र तु यस्यैकशेषः करिष्यते तस्य मा भूदित्येवमर्थमस्येति वचनम्। अस्येति हि वचने सति माभूदस्य वैयर्थ्यमित्युत्तरत्राप्येकवच्चेति नानुवर्त्तते। ननु चास्वरितत्वादेव नानुवर्त्तिष्यते। एवं तर्हि तदेवास्वरितत्व मनेन प्रकारेणाख्यायते विस्पष्टार्थम्। एवकारोऽत्रानुवर्त्तते। तेन हिमञ्च हिमानी च हिमहिमान्यौ। अरण्यञ्चारण्यानी चारण्यारण्यान्याविव्यत्र न भवति। इन्द्रवरुणादिसूत्रेण (४।१।४९) हिमारण्ययोर्महत्त्व इति वचना ( ४।१।४९ वा ) न्महत्त्वमपरो विशेषः।

## ७०। पिता मात्रा।

पितराविति। ऋतो ङीति (७।३।११०) गुणः। मातापितराविति। आनङृतो द्वन्द्व (६।३।२५) इत्यानङ्। अभ्यर्हितत्वान् मातुः पूर्वनिपातः।

## ७१। श्वशुरः श्वश्र्वा।

श्वश्रूश्वशुराविति। पूर्ववत् पूर्वनिपातः।

## ७२। त्यदादीनि सर्वैर्नित्यम्।

सर्वग्रहणं साकल्यार्थमिति। विना तेनानपुंसकेनेत्यस्यानुवृत्तिराशङ्क्येत। ततश्च नपुंसकेन सह न स्यात्। अथवा तल्लक्षण श्चेदेव विशेष इत्येतदिहानुवर्त्तेत इत्याशङ्क्येत। ततश्च यत्र त्यदादिकृत एव विशेषस्तत्रैव स्यात्। स च यश्च यावित्यादि। इह तु न स्यात्। स च देवदत्तश्च ताविति। अतः सर्वग्रहणम्। स च देवदत्तश्च ताविति। यदा विशेषविवक्षा तदैतदुदाहरणं। यदा तु सामान्यविवक्षा तदा देवदत्तोऽपि तच्छब्देन सम्बध्यत इति सरूपाणामित्यनेनैव (१।२।६४) सिध्यति। यद् यत् परमिति। गणपाठापेक्षं परत्वं वेदितव्यम्।

## ७३। ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री।

ग्राम्याणामिति। ग्रामे भवा ग्राम्याः। ग्रामाद् (४।२।९४) यखञाविति

यः । ननु च सङ्घस्य तरुणत्वं न सम्भवति । नापि तद्व्यवच्छेद्यं तरुणत्वम् । अतोऽ तरुणेष्वित्ययुक्तं विशेषणमित्याह अतरुणग्रहण मित्यादि । उच्यते चेदं विशेषणं । न च सङ्घस्य तत् सम्भवति । तत्र सामर्थ्यादन्येषां संघो विज्ञायते । गाव इमा इति । इमा इत्यनुप्रयोगः स्त्रीत्वाभिव्यक्तये । एतौ गावाविति । कथं पुनरिदं प्रत्युदाहरणम् ? यावता द्वाभ्यामपि सङ्घो भवत्येव । नैष दोषः । यस्मात् सङ्घग्रहणादिह बह्ववयवः संघो विवक्षितः । बहूनां यः संघ इति । अन्यथा यदि द्व्यवयवस्य ग्रहण-मिति मतं स्यात् संघ ग्रहण मनर्थकं स्यात् । व्यवच्छेद्याभावात् । अनेक शफेष्वित्यादि । अनेकानि शफानि खुरा येषां तेष्वयमेकशेषो भवतीत्येत-तदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । अन्यतरस्यांग्रहण-मिहानुवर्त्तते । सा च व्यवस्थितविभाषा विज्ञायते । तेनानेकशफेष्वेव भवति । नान्यत्रेति ।

इति श्रीबोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां प्रथमाध्यायस्य
द्वितीयः पादः समाप्तः ॥१।२॥

---

अथ

न्यासापरनाम्नी

# काशिकाविवरणपञ्जिका।

प्रथमाध्यायः।

तृतीयः पादः।

## १। भूवादयो धातवः।

भूरादिर्येषां ते भूवादयः। भूवादयो दशगणोपरिपाठता गृह्यन्ते। भवतीत्यादि। अत्र धातुसंज्ञायां सत्यां धातोरित्यनुवर्त्तमाने वर्त्तमाने लडिति (३।२।१२३) लट्प्रत्ययः। भू इत्येवमादयः शब्दा धातुसंज्ञका भवन्तीत्यनेन गणपाठेनैवेयं धातुसंज्ञा विधीयत इति दर्शयति। तेनाणपयति कण्डूयतीत्येवमादीनां धातुसंज्ञा न भवतीत्युक्तं भवति। यद्येवं यावादिव इत्येवमादीनां सर्वनाम-विकल्प-स्वर्गाभिधायिनां धातुसमानशब्दानामक्रियावचनानामपि धातुसंज्ञा प्राप्नोतीति कस्यचिद् भ्रान्तिः स्याद्। अतस्तान्निराकर्त्तुमाह धातुशब्द इत्यादि। लघ्वर्थं हि संज्ञाकरणमिच्छन्त्याचार्या इत्येकाक्षरायां संज्ञायां कर्त्तव्यायां महत्याः पूर्व्वाचार्य्यसंज्ञाया यदाश्रयणं तस्यैतत्प्रयोजनम्। यथाविधानां ते धातुसंज्ञां कृतवन्तस्तथाविधानामेवैषा संज्ञा यथा स्यादिति। ते च क्रियावचनानामेव धातुसंज्ञां विहितवन्तः। तदिहापि पूर्वाचार्य्यसंज्ञाश्रयणात् क्रियावचनानामेव धातुसंज्ञा विधीयते। तेन यावादिव इत्येवमादीनां धातुसमानशब्दानामक्रियावचनानाम् भवतीति भावः। ननु च भूरादिर्येषामिति बहुव्रीहौ कृत आदिशब्दे परतो यदि

संहितया निर्देशस्तदेको यणचीति (६।१।७७) यणादेशे कृते भ्वादय इति भवितव्यम्। यथाऽसंहितया निर्देशस्तथा भू आदय इति। तत् कुतोऽयं वकारो यस्मिन् सति भूवादय इति निर्देशो भवतीत्यत आह भूवादीनामित्यादि। भूवादीनां संज्ञिनां निर्देशे ऽयं वकारो मङ्गलार्थः प्रयुज्यते। मङ्गलमर्थः प्रयोजनं यस्य स तथोक्तः। स मङ्गलशब्दो धर्म्मपर्य्यायः। धर्मार्थ इति यावत्। यथा वेदे त्रियम्बकं यजामह इत्यत्र यकारस्य दृष्टप्रयोजनं नास्तीत्यदृष्टार्थो धर्म्मार्थ एव पाठस्तस्य तथेहापि वकारस्य। अथवा ऽपूर्वस्य वस्तुनो लाभो लोके मङ्गलं सम्मतं यथा प्रातर्दध्यादीनाम्। तथेहापि वकारस्यापूर्वस्य लाभो मङ्गलं प्रशस्तम्। प्रशस्तार्थो मङ्गलशब्दः। तथाचोक्तं मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चेति। इह चादौ (१।१।१) वृद्धिशब्दो मङ्गलम्। मध्ये (१।३।१) चायं वकारः। अन्ते (८।४।६७) च स्वरितोदयमित्युदयशब्दः। भुवो वार्थमित्यादि। अथवा भूवादय इत्यत्र निर्देशेनायमादिशब्दस्य प्रयोगः। नापि मङ्गलार्थस्य वकारस्य। किं तर्हि? वादिशब्दस्यौणादिकस्य। वदन्तीति वादयो वाचका इत्यर्थः। वदेर्धातोर्वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य (उण् ५।५६३) इञीति कर्त्तरीञ्प्रत्ययः। यद्यपि वादीति सूत्रे (उण्, ५।५६४) ण्यन्तस्योपादानं तथापि बहुलवचनादण्यन्तादपि भवति। भ्वर्था इति। तेषां वादीनामिदं विशेषणं भवनं भूः। सम्पदादित्वाद् भावे क्विप्। भवतेरर्थः क्रियासामान्यम्। भूरर्थो येषां ते भ्वर्थाः। कस्मात् पुनस्ते भ्वर्थाः? भुवो वार्थं वदन्तीति। इतिकरणो हेतौ। यस्माद् भुवो धातोरर्थं वदन्त्यभिदधति तस्मात् ते भ्वर्थाः। एवंविधा वादयो वाचकाः शब्दा भवत्यर्थाभिधायिन इतीह सूत्रे संज्ञिनः स्मृता अभिमता अभिप्रेता इत्यर्थः। तदेवं क्रियावचनाः शब्दा भूवादयो धातुसंज्ञा भवन्तीत्युक्तम् भवति। तेन यावादिव्प्रभृतीनां धातुसमानशब्दानामक्रियावचनानां धातुसंज्ञा न भवति। गणपाठसामर्थ्यात् पाठोऽप्यङ्गीक्रियते। तेनाणपयतीत्येवमादीनां क्रियावचनानामपि धातुसंज्ञा न भवतीत्युक्तम्भवति। अस्मिन् व्याख्याने भूवादय इति षष्ठीसमासो वेदितव्यः। भुवो वादयो भूवादय इति। अथवादिशब्दस्यैवात्र वा गतिगन्धनयोरित्यस्मात् परस्य

प्रयोगः। वा आदि येषां ते वादयः। आदिशब्दः प्रकारवाची। वाप्रकारा इत्यर्थः। प्रकारस्तु सादृश्यम्। तत् पुनः क्रियात्मकतया। यदाऽह अर्था इति। अर्थता तु भुवोऽर्थं वदतीति हेतोः। एवंविधा वाप्रकारकाः शब्दा इह सूत्रे संज्ञिनः स्मृताः। तदनेन प्रकारेण क्रियावचनानामेव भूवादीनां धातुसंज्ञा भवतीत्युक्तम्। तेन धातुसमानशब्दानां यावादिवप्रभृतीनां धातुसंज्ञा न भवति। नहि ते क्रियावचनाः। निष्पन्नवस्त्वभिधायित्वात्। साध्यमानस्वरूपा हि क्रिया निरवयवा क्वचित् पूर्वापरीभूतावयवाऽनिष्पन्नवस्तुस्वभावा। गणपाठस्तु पूर्ववदेवाङ्गीक्रियते। तेनाणपयतीत्येवमादीनां शब्दानां धातुसंज्ञा न भवतीति। अस्मिन्नपि व्याख्याने भूवादय इति षष्ठीसमासोऽयम्। षष्ठी च वाच्यवाचकसम्बन्धलक्षणा वेदितव्या।

## २। उपदेशेऽजनुनासिक इत्।

उपदिश्यतेऽनेनेत्युपदेश इति। अकर्त्तरि च कारके संज्ञायामिति (३।३।११३) करणे घञ्। ननु च संज्ञायामित्युच्यते। नचेयं संज्ञा। नैतदस्ति। कृत्यल्युटो बहुलमिति (३।३।११३) बहुलवचनादसंज्ञायामपि भवतीत्यदोषः। शास्त्रवाक्यानीति। अस्येदं विवरणम्। सूत्रपाठः खिलपाठश्चेति। खिलपाठो धातुपाठः। चकारात् प्रातिपदिकपाठश्च। अथ रगेलगेप्रभृतीनां कथमानुनासिक्यम्? नहि तेषामानुनासिक्यं गणे पठ्यते। अथापरिपठितानामपि भवति तदा भूइत्येवमादीनां कस्मान्न भवतीत्याह प्रतिज्ञानुनासिक्याः पाणिनीया इत्यादि। प्रतिज्ञया ऽनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः। यत्रैवानुनासिक्यं पाणिनीयाः प्रतिजानते तत्रैव तदपठ्यमानमपि भवति। नान्यत्र। एतदपि प्रतिज्ञानं नानियमेन भवति। किं तर्हि? यत्रैवाचार्य्याः स्मरन्ति तत्रैव तेन भवितव्यम्। यथा स्वरितत्वमनुदात्तत्वञ्च स्मरणेन विज्ञायते तथानुनासिक्यमपि। यदि तर्ह्यानुनासिक्यं प्रतिज्ञामात्रभावि तत् किमर्थं तत् क्वचित् पठ्यते डुपचँष् पाक इत्यादौ? एवंविधोऽर्थो ऽनुनासिकः प्रतिज्ञेय इत्यर्थस्य प्रदर्शनार्थम्। अभ्र आँ अप इति। अत्रोपदेशात्सूत्तरकाल माङोऽनुनासिकश्छन्दसीत्यनेनानुनासिको

( ६।१।१२६ ) विहितः । तेनेत्संज्ञा न भवति । ननु चानुनासिकविधान-सामर्थ्यादेव न भविष्यति । तत् किमुपदेशग्रहणेन ? इत्संज्ञायां हि सत्यां तस्य लोप इति ( १।३।९ ) लोपः स्यात् । ततश्चानुनासिकविधानमनर्थकं स्यात् । सत्यमेतत् । एवमन्यते । उत्तरार्थमवश्यमुपदेशग्रहणं कर्त्तव्यम् । उत्तरार्थं क्रियमाण मिहापि विस्पष्टार्थं भविष्यति । अथवा प्रत्युदाहरणदिगियं वृत्तिकृता दर्शिता । इदन्त्वत्र प्रत्युदाहरणम् । अणोऽप्रगृह्यस्यानुनासिकः ( ८।४।५७ ) । दधिँ ब्राह्मणकुलम् । यद्यत्रेत्संज्ञा स्यादिदितो नुम् धातो ( ७।१।५८ ) रिति नुम् स्यात् । ननु च धातोरित्युच्यमाने धातोर्नुम् विधीयते । नचायं धातुः । किं तर्हि प्रातिपदिकम् । तत् कथं नुम् स्यात् ? नैतदस्ति । क्विबन्ता धातुत्वं न जहतीति क्विबन्तत्वाद्धातुत्वं भवति । आत्मनो दधीच्छति । सुप आत्मनः (३।१।८) क्यच् । दधीयति । दधीयतेः क्विप् । दधिँ ब्राह्मणकुलमिति । अतो लोप (६।४।४८) इत्यकारलोपः । लोपो व्योर्वलि ( ६।१।६६ ) त्यत्रादौ लोपग्रहणात् पूर्वं यकारस्य लोपो भवति । वेरपृक्तस्येति लोपाद् पूर्वं वलि लोपो भवति । पश्चाद्वेरपृक्तस्येति ( ६।१।६७ ) वकारस्य । प्रत्ययलोपलक्षणेनाकृत्सार्वधातुकयोरि[illegible] ( ७।४।२५ ) दीर्घः । ह्रस्वो नपुंसके प्रातिपदिकस्येति ( १।२।४७ ) ह्रस्वत्वम् । अणोऽप्रगृह्यस्या-नुनासिक ( ८।४।५७ ) इत्यनुनासिके कृते क्विबन्ता धातुत्वं न जहतीति नुम् स्यात् । अश्मा भस्मेति । आतो मनिन्नित्यत्र ( ३।२।७४ ) मकारस्येत् संज्ञा न भवति । यदि हि स्यादन्येभ्योऽपि दृश्यन्त ( ३।२।७५ ) इति हलन्तेभ्यो विधीयमानो मनिन्नचोऽन्त्यात् परः स्यात् । सर्वस्याचो मा भूदिति । दरिद्रा प्रभृतिसर्व्वास्मिनोऽपि ।

## ३ । हलन्त्यम् ।

अन्ते भवमन्त्यमिति दिगादित्वाद् यत् । अन्तशब्दोऽयं समाप्तौ वर्त्तते । यथैतदन्तं वन मिति । येन च समाप्यते समुदायः सोऽन्तः । तत्रान्ते समाप्तौ भवमन्त्यम् । हलिति हल्शब्दस्योभयलिङ्गत्वादन्त्रमिति नपुंसकेन निर्देशः । धात्वादेरित्यादि । आदिशब्देन सूत्रप्रातिपदिकप्रत्ययागमादेशानां ग्रहणम् ।

तत्र धातोर् डुक्रञ् इति अकारः। सूत्रस्य ऋदुशस्विति ( प्र, १ ) णकारः। प्रातिपदिकस्य नदड़िति टकारः। नदड़िति पचादिषु पठ्यते। प्रत्ययस्य गुप्तिज् किद्भ्यः (३।१।५) सन्निति नकारः। आगमस्य त्रपुजतुनोः (४।३।१३८) षुगिति ककारः। आदेशस्य च चक्षिङः (२।४।५४) ख्याञिति अकारः। अग्निचित् सोमसुदिति। चिनोतेः सुनोतेश्चाग्निं चितवान् सोमं सुतवानिति क्विप्। तुक्। ननु च हलिति प्रत्याहारपाठे योऽन्त्यो लकार स्तस्येत् संज्ञा न प्राप्नोति। इतरेतराश्रयत्वात्। तथाहीत्संज्ञायामादिरन्त्येन सहेतेति (१।१।७१) हलिति प्रत्याहारग्रहणं भवति। तस्मिंश्च तस्य लकारस्य हलन्त्यमितीत्संज्ञा। तदिदमितरेतराश्रयत्वं स्फुटतरमेव। इतरेतराश्रयाणि कार्य्याणि शास्त्रे न प्रकल्प्यन्त इत्यत आह हस्य ल् हलित्यादि। यदेकमावृत्तिभेदमन्तरेणाप्यनेकेषामुपकारं करोति तत् तन्त्रम्। यथा प्रदीपः सुप्रज्वलितो बहूनां छात्राणामुपकारं करोति। इह तु प्रयत्नविशेषस्तन्त्रशब्देन विवक्षितः। तेन तन्त्रेण द्वितीयमत्र हल्ग्रहण मुपात्तं परिगृहीतं वेदितव्यम्। यथा श्वेतो धावतीत्येकेन प्रयत्नेन द्वे वाक्ये उच्चारिते भवतस्तथेहाप्येकेनैव प्रयत्नेन द्वौ हल्शब्दावुच्चारितावित्यभिप्रायः। हस्य ल् हलिति समीपिसामीप्यसम्बन्धे षष्ठी। तेनेत्यादि। यतस्तन्त्रेण न्यायेन द्वितीयं हल्ग्रहणं कृतं तेन प्रत्याहारपाठे हलित्यस्य लकारस्य हकारसमीपवर्त्तिनः साक्षादेव संज्ञित्वेनोपात्तस्येत्संज्ञा क्रियते। नतु प्रत्याहारसमाश्रयणेन। एवञ्च सति हलन्त्यमित्यत्र प्रत्याहारपाठ इतरेतराश्रयदोषो न भवति।

## ४। न विभक्तौ तुस्माः।

वृक्षादित्यत्र तकारस्येत्संज्ञायां सत्यां तित्स्वरितमिति (६।१।१८५) स्वरितत्वं स्यात्। अपचताम्। अपचतमिति। पचेर्लङ्। तस्थस्थमिपां तान्तन्ताम इति (३।४।१०१) तान्तमादेशौ भवतः। किमोऽदित्यत्राच्छब्दस्य (५।३।१२) प्राग् दिशो (५।३।१) विभक्तिरिति विभक्तिसंज्ञा। इटोऽदित्यत्रापि (३।४।१०६) स्थानिवद्भावेन। ततश्चेत्संज्ञाप्रतिषेधः प्राप्नोति। स कस्मान्न भवतीत्याह अनित्यत्वादित्यादि। अनित्यत्वमस्य विधेरिदमश्थमुरित्यस्य ( ५।३।२४ )

मकारस्येत्संज्ञापरित्राणार्थादुकारानुबन्धाद् विज्ञायते। नित्यत्वे हि सत्येतस्मादेव प्रतिषेधात् मकारस्येत्संज्ञा न भविष्यतीत्युकारानुबन्धग्रहणमनर्थकं स्यात्।

## ५। आदिर्ञिटुडवः।

अत्र टुग्रहणेनाणुदित्सवर्णस्य चाप्रत्ययस्येति (१।१।६९) टवर्गस्य ग्रहणं कस्मान्न भवति? उकारस्यानुनासिकत्वाप्रतिज्ञानात्। चुटू इत्यत्र (१।३।७) टुग्रहणाच्च। यद्यत्र टवर्गस्य ग्रहणं स्यात् तदानेनैव प्रत्ययादेरपि सिद्धत्वाट् टुग्रहणमनर्थकं स्यात्। मिन्न इति। ञीतः (३।२।१८७) क्तः। आदित-(७।२।१६) श्चेतीट्प्रतिषेधः। वेपथुरिति। ट्वितोऽथुच् (३।३।८९)। पक्त्रिम मिति। ड्वितः क्त्रिः (३।३।८८)। पाकेन निर्वृत्तम्। क्त्रेर्मम् (४।४।२०) नित्यमिति मप्। उप्त्रिममिति। वच्यादि (६।१।१५) सूत्रेण संप्रसारणम्। पटूयतीति। सुप आत्मनः (३।१।८) क्यच्। अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः। कण्डूयतीति। कण्ड्वादिभ्यो (३।१।२७) यक्। कथं पुनरत्रेत्संज्ञाप्राप्तिः? यावता सूत्रे टुडुशब्दौ ह्रस्वान्ता वुपात्तौ। दीर्घान्ताविमौ। नैतत्। यद्यपि दीर्घत्वे कृते दीर्घान्तावेतौ भवतस्तथाप्युपदेशे ह्रस्वान्तावेव। उपदेश इति चेहानुवर्त्तते। तत्र पटुशब्दस्य पृथ्वादिपाठाट् टुशब्दस्योपदेशे ह्रस्वान्तता सिद्धा। कण्डुशब्दस्य कण्ड्वादिभ्यो (३।१।२७) यगित्यत्र पाठाड् डुशब्दस्यापि। द्विविधा हि कण्ड्वादयो धातवः प्रातिपदिकानि च। तत्र धातुः कण्डुशब्दो ह्रस्वान्तः। प्रातिपदिकन्तु कण्डूशब्दो दीर्घान्तः। अथवा यद्यप्युपदेश इति नानुवर्त्तते तथापि दीर्घत्वे कृतेऽप्येकदेशविकृतस्यानन्यत्वादस्येव प्राप्तिः। ञिकारीयतीति। पूर्ववत् क्यच्। ञिकारशब्दो न क्वचित् पठ्यत इति। तेनात्रेत्संज्ञा न भवति। यदि स्याल्लोपे कृते रूपं न सिद्ध्येत्।

## ६। षः प्रत्ययस्य।

रजकीति। षित्त्वात् षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्। अथ केनात्रानुनासिकलोपः? अनिदितामिति (६।४।२४) चेत्? न। तत्र क्ङितीत्युच्यते। न चात्र क्ङित्प्रत्ययोऽस्ति। नैष दोषः। जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्संज्ञाकरणं रञ्जेर्ज्ञापकमक्ङित्यपि तस्यानुनासिक-

लोपो भवति। अन्यथा णौ रञ्जेरकारस्यानुपधात्वादत उपधाया (७।२।११६) इति वृद्ध्या न भवितव्यमिति मित्संज्ञाकरणमनर्थकं स्यादित्येके। घञि च भावकरणयोरित्यत्र (६।४।२७) चकारस्यानुक्तसमुच्चयार्थत्वादक्ङित्यपि क्वचिद् रञ्जेरनुनासिकलोपो भवतीत्यपरे। षोड् इति। षट् दन्ता अस्येति बहुव्रीहिः। वयसि दन्तस्य दतृ (५।४।१४१) इति दत्रादेशः। ऋकार उगित्कार्य्यार्थः। षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वञ्च (६।३।१०९, वा) पृषोदरादिपाठात्। षषोऽन्त्यस्योत्त्वमाद्गुणः (६।१।८७)। उत्तरपदादिष्टुत्वमिति दकारस्य डकारः। षोडत् इति स्थिते षोडन्तमाचष्ट इति तत्करोति तदाचष्ट इति णिच्। णाविष्ठवत् कार्य्यम् प्रातिपदिकस्येतीष्ठवद्भावाट्टिलोपः षोडयतीति। ततः पचाद्यच्। णिलोपः। षण्ड इति। षणु दाने। अमन्ताड्डः (उण्, १।१११)। उणादयो बहुलमिति (३।३।१) बहुलवचनाद् धात्वादेः षः स इति (६।१।६४) सत्वं न भवति। अथवा षण्ड इत्येतदव्युत्पन्नं प्रतिपदिकमिति। षड्कि इति। षडङ्गुलिदत्तशब्दादनुकम्पायां बह्वचोऽमनुष्यनाम्न ठज्वेति (५।४।७८) ठच्। ठाजादावूर्ध्वं द्वितीयादच इति (५।३।८३) ङ्गुलिदत्तस्य लोपः। ठस्येक (७।३।५०) इतीकादेशः। षड्शब्दस्य यस्येति (६ ४।१४८) चेत्यकारलोपः। तस्य स्थानिवद्भावे सति व्यवधानात् षट्शब्दस्य यचि (१।४।१८) भमिति भसंज्ञा न भवति। अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वाज् झलां जशोऽन्त (८।२।३९) इति जश्त्वं षकारस्य डकारः। यद्येषां षकारस्येत्संज्ञा स्यात् स्त्रीविवक्षायां षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष् स्यात्। षण्डशब्दोऽयं यद्यपि बलीवर्द्दे वर्त्तते तथापि स्त्रीगवीष्वपि षण्डधर्मयोगाद् वृत्तिरस्य सम्भवत्येव। यद्यप्येते षोडादयो लाक्षणिकास्तथाप्युपदेशग्रहणेन षकारो विशिष्यत इति भवन्त्येतानि प्रत्ययग्रहणस्य प्रत्युदाहरणानि। भवति ह्यत्राप्युपदेशे षकारः। अविषो महिष इति। अव रक्षणे। मह पूजायाम्। अविमह्योष्टिषच् (उण्, १।४५)। ननु चोणादयो बहुलमिति (३।३।१) बहुलवचनात् प्रत्ययसंज्ञैवात्र न भवति। सत्यामपि तस्यामित्संज्ञा न भविष्यति। बहुलवचनात्। तत् कस्मादादिग्रहणमेतदनुवर्त्तते? एवं मन्यते। उत्तरार्थमवश्यमादिग्रहणमनुवर्त्तनीयम्। उत्तरार्थमनुवर्त्तमानमिहापि स्पष्टार्थं भविष्यति।

## ७। चुटू।

कौञ्जायन्य इति। च्फञन्ताद् व्रातच्फञोरस्त्रियामिति (५।३।११३) स्वार्थे ञ्यः। ङ्स्येयादेशं वक्ष्यतीति। इत्संज्ञापवादम्। शाण्डिक्य इति। शण्डिकादिभ्यो (४।३।९२) ञ्य इति शण्डिकोऽभिजनोऽस्येत्यर्थे ञ्यः। तत्र हि सोऽस्याभिजन इति वर्त्तते। मन्दुरज इति। ङ्यापोः संज्ञाच्छन्दसो-र्बहुलमिति (६।३।६२) मन्दुराशब्दस्य ह्रस्वत्वम्। अन्नात् णः (४।४।८५)। आन्न इति। अन्नं लब्धा इत्यर्थे णः। तत्र हि धनगणं लब्धेत्यतो (४।४।८४) लब्धेत्यनुवर्त्तते। अथ किमर्थं पृथग्योगः क्रियते? चुटुषः प्रत्ययस्येत्येक एव योगः क्रियतामित्यत आह पृथग्योगकरणमित्यादि। तेन विष्क इत्यादिना-ऽस्य विधेरनित्यत्वज्ञापनस्य प्रयोजनं दर्शयति।

## ८। लशक्वतद्धिते।

प्रियंवद इति। प्रियवशे वदः (३।२।३८) खच्। अरुर्द्विषदजन्तस्येति (६।३।६७) मुम्। जिष्णुरिति। ग्लाजिस्थश्च क्स्नु (३।२।१३९) रिति। ये तु क्स्नुप्रत्ययं गितमिच्छन्ति तन्मतेनेदं गकारस्योदाहरणम्। ये तु कित-मिच्छन्ति तन्मतेनेदमपि ककारस्योदाहरणम् भवति। चूडाल इति। मत्वर्थे प्राणिस्थादातो लजन्यतरस्यामिति (५।२।९६) लच् प्रत्ययः। ननु च प्रयोजना-भावादत्रेत्संज्ञा न भविष्यति। लित्प्रत्ययात् पूर्वस्योदात्तत्वं प्रयोजनमिति चेत्? न। चित्स्वरस्य हि सर्वस्वरस्यापवादत्वात् प्रत्ययस्वरेण ह्यन्तोदात्तत्वे सिद्धे चित्करणस्यैतत् प्रयोजनं चित्स्वर एव यथा स्यात्। योऽन्यः स्वरः प्राप्नोति स मा भूदिति। इदन्तु प्रत्युदाहरणम्। लोमान्यस्य सन्तीति लोमादिपामादीत्यादिना (५।२।१००) शः। लोमशः। एतदपि नास्ति। अत्रापि प्रयोजनाभावादेवेत्संज्ञा न भविष्यति। इदं तर्हि प्रत्युदाहरणम्। कर्णललाटात् कनलङ्कार (४।३।६५) इति भवार्थे कन्। कर्णिका। यद्यत्रेत्-संज्ञा स्यात् किति (७।२।११८) चेत्यादिवृद्धिः स्यात्। ततश्च रूपमेव न सिध्येत्। यद्येव मिदमेवोपन्यसनीयम्। नेतरे। एवं मन्यते। एतदर्थं मतद्धित

इति क्रियमाणमिहापि मन्दधियां प्रतिपत्तिगौरवं परिहर्त्तुं चूडालो लोमश इत्येवमर्थमपि भवितुमर्हतीति ।

## ९ । तस्य लोपः ।

अथ किमर्थं तस्येत्युच्यते ? यावनेत्संज्ञायाः प्रकृतत्वाद् यस्येत्संज्ञा विहिता सामर्थ्यात् तस्यैव लोपो भविष्यतीत्यत आह तस्य ग्रहणमित्यादि । कः पुनरित्संज्ञको योऽलोऽन्त्यस्य निवृत्त्यर्थं तस्य ग्रहणं प्रयोजयतीत्याह आदिर्ञिटुडव इति । असति तस्य ग्रहण एषामपि ञिप्रभृतीना मलोऽन्त्यस्येति (१।१।५२) वचनादन्त्यस्य लोपः स्यात् । तस्य ग्रहणेन तु प्रकृत इत्संज्ञके सन्निधापिते सर्व्वस्य लोपो भवति । नान्त्यस्य । अन्यथा हि तस्य ग्रहणमनर्थकं स्यात् । यदि तु नानर्थकेऽलोऽन्त्यविधिरित्येषा परिभाषाऽश्रीयते तदा तस्य ग्रहणमकर्त्तुं शक्यते । तत् क्रियते विस्पष्टार्थम् ।

## १० । यथासंख्यमनुदेशः समानाम् ।

संख्याशब्देनात्र क्रमो लक्ष्यत इति । यत्रानेक उद्देशिनोऽ नुदेशिनश्च तत्रानियमेन सम्बन्धे प्राप्ते नियमार्थ मिदमारभ्यते । यत्रोद्देशिनोऽ नुदेशिनोऽनेकसंख्या स्तत्रावश्यं संख्याभेदेन भवितव्यम् । यत्र च संख्याभेदस्तत्र नियतभावी क्रमः । संख्याभेदवतां युगपदुच्चारयितुमशक्यत्वात् । अतः साहचर्य्यात् संख्याशब्देन क्रमो लक्ष्यते । अर्थधर्मत्वन्तु शब्दे समारोप्य संख्याशब्देन क्रमो लक्ष्यत इत्युक्तम् । यथाक्रमग्रहणं कथं न कृतम् ? वैचित्र्यार्थम् । यथासंख्यमिति । यथाऽसादृश्य (२।१।७) इति वीप्सायामव्ययीभावः । अनुदिश्यत इत्यनुदेश इति । अकर्त्तरि च कारके संज्ञायामिति (३।३।१९) घञ् । पश्चादुच्चार्य्यत इति । अनुशब्दस्य पश्चादर्थवृत्तित्वाद्विशेषोच्चारणक्रियत्वात् । समसंख्यानामिति । समसंख्यतया समानत्वं दर्शयति । समगणनपरिपठितानामिति । तमेवार्थं शब्दान्तरेण व्यक्तीकरोति । उद्देशिनामनुदेशिनाञ्चेति । यथाक्रममितीयतदपेक्षया षष्ठी । उद्देशिनो यद्यपि सूत्रे न श्रूयन्ते तथापि सम्बन्धित्वात् पश्चाद्भावस्यानुदेशग्रहणाल्लभ्यन्ते । यथाक्रममिति । पूर्व्ववद् वीप्सायामव्ययीभावः । तृतीयान्तञ्चैतत् । तदयमत्रार्थः । उद्देशिना-

मनुदेशिनाञ्च योऽयं क्रमस्तेन क्रमेणानुदेशिनः सम्बध्यन्त उद्देशिभिः सहेति। यद्यप्युद्देशिनामिति षष्ठ्यन्तं प्रकृतं तथाप्यर्थाद्विभक्तेर्विपरिणामो भविष्यतीति तृतीयान्तं सम्पद्यते। प्रथमात् प्रथम इत्यादिना यथाक्रमसम्बन्धं दर्शयति। आदिशब्दस्तृतीयात् तृतीयश्चतुर्थाच्चतुर्थ इत्यादि परिग्रहाय। तौदेय इत्यादौ सोऽस्याभिजन (४।३।९०) इत्यतार्थे तद्धितः। इहेत्यादि। वेशोयश (४।४।१३१) आदेर्भगादिति द्वे प्रकृती। यल्खाविति प्रत्ययावपि द्वावेव। अतो यथासंख्येन भवितव्यमित्यभिप्रायः। इह केनचिदाचार्य्येण शिष्याः प्रतिग्राहिता वेशो यश आदेर्भगाद्यल् ख चेत्येको योगः। अन्ये तु द्वावेतौ योगाविति। वेशोयश आदेर्भगादित्येको (४।४।१३१) योगः। यल् ख चेति द्वितीयः। तत्र य एक एवायं योग इत्येवं शिष्या ग्राहितास्तान् प्रत्ययं प्रश्नः। वृत्तिकारेणापि तन्मतमेवाश्रित्य स्वरितेनेत्यादिना परीहार उक्तः। ये तु द्वावेतौ योगावित्येवं ग्राहितास्तान् प्रतीत्रष प्रश्नो नास्ति। योगविभागेनैव यथासंख्यस्य निरस्तत्वात्। तथाच तत्र वक्ष्यति। योगविभागो यथासंख्यस्य निरासार्थः। यदि योगविभागे सति यथासंख्यं स्याद् योगविभागकरणमनर्थकं स्यादित्यभिप्रायः। कथं पुनः स्वरितेन लिङ्गेन यथासंख्यं लभ्यते ? यावता नेह स्वरितग्रहण मस्तीत्याह स्वरितेनाधिकार इत्यादि। स्वरितेनाधिकार इति योगं विभज्य स्वरितेनेत्येको योगः। अधिकार इति द्वितीयः। तत्र प्रथमो योगः पूर्वेणापि यथासंख्यमित्यादिना सम्बध्यते। अपिशब्दात् परेणाप्यधिकार इत्यनेन। यदि तर्हि स्वरितेन लिङ्गेन यथासंख्यम् भवत्येवं हि सति सन्देहः स्यात्। तथाहि यथासंख्यमिति स्वरितेनाधिकारोऽपि। तत्र न ज्ञायते किमधिकारार्थः स्वरितानुषङ्गोऽथवा यथासंख्यार्थ इति। सन्देहमात्रमेतत्। सर्वसन्देहेष्विदमुच्यते। भवति व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति।

## ११। स्वरितेनाधिकारः।

इत्थम्भूतलक्षणे तृतीयेति। स्वरितेन चिह्नेनाधिकारस्योपलक्षणीयत्वात्। यदि पारिभाषिकस्येह स्वरितस्य ग्रहणं स्याद् रषाभ्यां नो णः समानपद इत्यत्र (८।४।१) णकाराण् णकारस्याधिकारता न स्यात्। पारिभाषिकस्याज्-

धर्म्मत्वात्। णकारस्यानच्कत्वादिति मत्वा सर्वेषां वर्णानामचां हलाञ्च स्वरिताख्यो यो वर्णधर्मो गुणस्तस्येदं ग्रहणं न परिभाषिकस्येति दर्शयन्नाह स्वरितो नाम स्वरदोषो (A) वर्णधर्म इति। वर्णधर्मस्य तु ग्रहणमधिकारावगमाय। स इह ह्ल्यपि स्वरितासञ्जनाद् विज्ञायते। अधिकारो विनियोग इति। व्यापारकरणम्। अधिकृतत्वादुत्तरत्रोपतिष्ठत इति। यथा पुरुषो यत्राधिकृतो नगरादौ तत्रैवोपतिष्ठते तथा स्वरितगुणयुक्तं शब्दरूपं नियुक्तं सूत्रकारेण तत्र तत्रोपतिष्ठते। उत्तरत्रेति वचनमुपलक्षणार्थम्। क्वचित् पूर्वत्राप्युपतिष्ठत एव। क्व पुनरस्य सद्भावो भवति? क्व च वा न भवतीत्याह। प्रतिज्ञास्वरिताः पाणिनीया इति। प्रतिज्ञया स्वरितो येषां ते तथोक्ताः। तदेतदुक्तं भवति। यत्रैव त आचार्य्याः स्वरितत्वं प्रतिजानते तत्रैवास्य सद्भावो भवति। नान्यत्रेति। तदपि प्रतिज्ञानं नानियमेन भवति। किं तर्हि? यत्राचार्य्याः स्मरन्ति तत्रैव भवति। स चायं धर्म्मः कलाद्युपम इति वेदितव्यः। कार्य्यार्थमुपादीयते। कृतकार्य्यस्तु निवर्त्तते। नतु प्रयोगसमवायी भवति। प्रत्यय इत्यादिना येऽधिकाराः स्वरितेनावच्छिद्यन्ते तेषामुदाहरणानि दर्शयति। अथ किमर्थोऽयमधिकारः क्रियते? प्रतियोगं तस्य ग्रहणं माकार्षीदित्येवमर्थमिति चेत्? न। यथा देवदत्ताय गौर्दीयतां कम्बलश्चेत्युक्ते न च पुनरुच्यते देवदत्तायेति। अथच प्रस्तुतत्वाद्देवदत्तस्य कम्बलश्चेत्यस्य साकाङ्क्षत्वात् तेनैव सम्बन्धो भवति। तथाच ष्ट स्थिरे (३।३।१७) भाव (३।३।१८) इत्येवमादीनामपि वाक्यानां साकाङ्क्षत्वाद् घञादीनाञ्च प्रस्तुतत्वात् तैरेव सम्बन्धो भविष्यति। तत् किमधिकारेण? सत्यमेतत्। यत्रान्यनिर्देशो नास्ति तत्रोपतिष्ठते। यत्र त्वन्यनिर्देशस्तत्रासौ प्रकृतस्य निवर्त्तक एव स्यात्। तथाहि गौर्दीयतां

---

(A) स्वरभेद इत्यर्थः। दोषा स्त्री रजनी प्रोक्ता दोषो दूषणभेदयोरिति। In the printed काशिका the reading is स्वरितो नाम स्वरविशेषो वर्णधर्मः। (वर्णधर्मो न स्वरधर्म इति क्वचित् पाठः।) But the पदमञ्जरी admits क्वचित् तु स्वरितो नाम स्वरदोषो वर्णधर्म इति पाठः। तत्र स्वरदोष उच्चारणदोषः, though हरदत्त takes the variant स्वरितो नाम वर्णधर्म इति। Says नागेश—"स्वरितत्वञ्चेदं दोषविशेषरूपमज्झलसाधारणम्। स्वररूपमधिक्रियमाणपदघटकाज्निष्ठं वा। तत्रानुनासिकत्ववत् प्रतिज्ञा गम्यम्।" The poona copy has the reading as in the printed काशिका।

यज्ञदत्ताय कम्बलो विष्णुमित्रायेत्यत्रैकोऽन्यनिर्देशेन प्रस्तुतो देवदत्तो निवर्त्तते । एवञ्चान्यनिर्देशेनास्य निवर्त्तकत्वे सत्यभिविधौ (३।३।४४) भाव इनुण् णित्यस्ये-नुणो निर्देशेन प्रस्तुतस्य घञो निवर्त्तितत्वादाक्रोशेऽवन्योर्ग्रहः (३।३।४५) इत्यत्रा-नन्तरेणेनुणा सम्बन्धः स्यान्न पुनर्व्यवहितेन घञा । घञ् लिप्यते । ननु च दृष्टानु-वृत्तिसामर्थ्याद् घञेवानुवर्त्तिष्यते । तेनैवाभिसम्बन्धो भविष्यति । तथाच तत्र वक्ष्यति दृष्टानुवृत्तिसामर्थ्यात् तत्र घञेवानुवर्त्तते । नानन्तर इनुणिति । नैत-दस्ति । यदि दृष्टानुवृत्तिसामर्थ्याद् घञ (३।३।५७) एवानुवृत्तिः स्यात् तदा ऋदोरबित्यत्रोत्तरेष्वपि (३।३।५७) योगेषु घञेवानुवर्त्तेत । नाप्प्रत्ययः । यत् पुनर्वक्ष्यति दृष्टानुवृत्तिसामर्थ्यादिति तत्र दृष्टानुवृत्तिसामर्थ्यशब्देन स्वरितत्व-मेवोक्तं दृष्टमनुवृत्तौ सामर्थ्यमधिकृतस्य शब्दरूपस्य यस्मादिति बहुव्रीहिं कृत्वा । तस्मात् स्वरितत्वादित्ययमत्रार्थः । यद्येषोऽर्थः सूत्रकाराभिमतः स्यात् स्वरि-तत्वादिति कस्मान्नोक्तमिति चेत् ? न । स्वच्छन्दतो हि वचसां प्रवृत्तिरर्थस्तु परीक्षणीय इत्यचोद्यमेतत् । तदेवं यतोऽन्यनिर्देशः प्रस्तुतस्य निवर्त्तको भवति तस्मादधिकारः कर्त्तव्यः । तस्मिंश्च क्रियमाणे तदवगमोपायदर्शनाय स्वरिते-नाधिकार इतेत्रतदपि कर्त्तव्यः ।

## १२ । अनुदात्तङित आत्मनेपदम् ।

तत्रायन्नियमः क्रियत इति । विधीयमानत्वात् प्रधानस्य प्रत्ययस्य नतु प्रकृतेरिति विज्ञायते । अत एवाह अनुदात्तेतो ये धातवो ङितश्च तेभ्य इति । यदि पुनरयं प्रकृतिनियमः स्यात् तदा किं स्यात् ? अनुदात्त-ङिद्भ्यः प्रत्ययान्तरं न स्यात् । कामं वचनसामर्थ्यात् प्रत्ययान्तरमपि भविष्यतीतेत्रष दोषः शक्यते परिहर्त्तुम् । यस्तु वचनसामर्थ्यद्वारेणाभीष्टेऽर्थे प्रतीयमाने प्रतिपत्तिगौरवदोषः स्यात् सोऽपरिहार्य्य एव । यदि तर्हि प्रत्ययनियमोऽयं तदा प्रकृतीनामनियतत्वात् ताभ्यः परस्मैपदमपि स्यात् । न भविष्यति । शेषात् कर्त्तरि परस्मैपदमिति (१।३।७८) द्वितीयनियमविधानाच् शेषादेव परस्मैपदम् । नान्यस्मादिति । आस्त इत्यादि । आस उपवेशने । वस आच्छादने । षूङ् प्राणिगर्भविमोचने । शीङ् स्वप्ने । अदादित्वाच्छपो लुक् । शेत इति । शीङः सार्वधातुके गुणः (७।४।२१) ।

## १३। भावकर्मणोः।

भाव इति धात्वर्थः क्रियात्मक उच्यते। कर्म तु पारिभाषिकमेव। तत्रेदमुच्यते नियमार्थ इति विशेषः। अयमपि पूर्ववत् प्रत्ययनियमः। भावकर्मणोरेवात्मनेपदं भवति। नार्थनियमः। अर्थनियमे सति को भवता दायो दत्तः को भवता लाभो लब्ध इति कर्मणि घञादिर्दुर्लभः स्यात्। सुप्यत इति। ञिष्वप् शये। वच्यादिना (६।१ १५) संप्रसारणम्। क्रियत इति। रिङ्शयग्लिङ्क्ष्विति ( ७।४।२८ ) रिङादेशः। लूयते केदारः स्वयमेवेति। कर्मवत् कर्मणा तुल्यक्रिय ( ३।१।८७ ) इत्यत्र व्यपदेशातिदेशशास्त्रातिदेश-पक्षयोः कर्मकर्त्तरि परस्मैपदेन परत्वाद् भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह कर्मकर्त्तरीत्यादि। द्वितीयं कर्त्तरि ग्रहणमु-पतिष्ठत इति। कर्त्तरि कर्मव्यतीहार (१।३ १४) इत्यतः। तेन कर्त्तैव यः कर्त्ता शुद्धः केवलः कर्मवद्भावरहितस्तत्र परस्मैपदं भवति। यत्र कर्मवद्भाव-स्तत्रात्मनेपदं भवति। कार्य्यातिदेशपक्षे कर्मवत् कर्मणा (३।१ ७८) तुल्यक्रिय इत्यनेनैवात्मनेपदं भवति।

## १४। कर्त्तरि कर्मव्यतीहारे।

कर्मशब्दः क्रियावाची। एतेन लौकिकमिह कर्म क्रियात्मकं गृह्यते। न पारिभाषिकमिति दर्शयति। कुत एतल्लभ्यते ? प्रत्यासत्तेः। क्रिया हि धातोः प्रत्यासन्ना। तत्र साक्षाद्वृत्तेः। साक्षाद्वृत्तिस्तु धातुवाच्यत्वात् क्रियायाः। पारिभाषिके तु साधनात्मके कर्मणि धातुः साक्षान्न वर्त्तते। तस्याधातुवाच्यत्वात्। तस्माद् धातुं प्रति न तस्य प्रत्यासत्तिरिति न गृह्यते। तेन साधनकर्मव्यतीहारे न भवत्यात्मनेपदम्। देवदत्तस्य धान्यं व्यति-लुनन्तीति। लुनातिरुपसंग्रहार्थे लवने वर्त्तते। देवदत्तेन यद् धान्यं संगृहीतं पुरस्ताल्लवनेनोपसंगृह्णन्तीत्यर्थः। ततश्चान्यसम्बन्धिनो धान्यस्यान्येन संग्रहणाद् भवति साधनकर्मव्यतीहारः। अन्यसम्बन्धिनीमिति। अन्यस्य कर्त्तुरभीष्टा या क्रियेमां क्रियां करिष्यामीति सेहान्यसम्बन्धिन्यभिप्रेता। अन्यथा यद्यन्येन निष्पादिता या क्रिया सेहान्यसम्बन्धिन्यभिप्रेता स्यात् तदा व्यतीहारो नोप-

पद्येत। नह्यन्येन निष्पादितायाः पुनर्निष्पादनमुपपद्यते। व्यतिलुनत इति। आत्मनेपदेष्वनत (७।१।५) इत्यदादेशः। श्नाभ्यस्तयोरात (६।४।११२) इत्याकारलोपः। अथ कर्त्तृग्रहणं किमर्थम्? भावकर्मनिवृत्त्यर्थमिति चेत्? न। अभीष्टत्वाद् भावकर्मणोरात्मनेपदम्। व्यतिभूयते सेनया। व्यतिगम्यन्ते ग्रामाः। व्यतिहन्यन्ते दस्यव इति। भावकर्मणोरित्यनेनैव यथा स्यात्। अनेन मा भूदित्येवमर्थमिति चेत्? न। विशेषाभावात्। नहि तेनात्मनेपदे सत्यनेन वा कश्चिद् विशेषोऽस्ति। यद्यनेन स्यात् तदा न गतिहिंसार्थेभ्य इति (१।३।१५) प्रतिषेधः स्यात्। तेन चात्मनेपदे विधीयमाने (B) न भवतीत्यय दोष इति चेत्? सत्यम्। एषोऽस्तु विशेषः। तथापि न कर्त्तृग्रहणं कर्त्तव्यम्। यस्मादनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्यनन्तरा या प्राप्तिः सा प्रतिषिध्यते। न पूर्वा। तेन भावकर्मणोरात्मनेपदं भविष्यति। अत आह कर्त्तृग्रहणमुत्तरार्थमिति। कः पुनरसावुत्तरो योगो यत्रास्य प्रयोजनमित्याह शेषादित्यादि।

## १५। न गतिहिंसार्थेभ्यः।

व्यतिगच्छन्तीति। इषुगमियमाञ्छः (७।३।७७) इति छत्वम्। छे चेति (६।१।७३) तुक्। व्यतिसर्पन्तीति। गम्लृ सृप्लृ गतौ। लघूपधगुणः। व्यतिहिंसन्तीति। हिहि हिसि हिंसायाम्। व्यतिघ्नन्तीति। हन हिंसागत्योः। गमहनेत्युपधालोपः (६।४।९८)। हो हन्तेर् ञ् णिन्नेष्विति (७।३।५४) कुत्वम्। प्रतिषेध इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। उपसंख्यानशब्दोऽत्रानेकार्थत्वाद्धातूनां प्रतिपादने वर्त्तते। तच्च प्रतिपादनं प्रकृतत्वात् प्रतिषेधस्येति गम्यते। तदयमर्थः। प्रतिषेधे कर्त्तव्ये हसादीनामप्यात्मनेपदप्रतिषेधस्य प्रतिपादनं कर्त्तव्यमिति। तत्रेदं प्रतिपादनम्। नेति योगविभागः क्रियते। तेन हसादीनामपि भविष्यतीति। ततो गतिहिंसार्थेभ्य इति द्वितीयो योग स्तत्र नेति वर्त्तते। किमर्थं पुनरयम्? पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थम्। तेन नेति योगविभागेन हसादीनामेव प्रतिषेधो भविष्यति। नान्येषामिति।

---

(B) विधीयमाने सति प्रतिषेधो न भवतीत्येषोऽस्ति विशेष इति चेदिति १ष्ठ पुस्तके पाठः।

## १६। इतरेतरान्योन्योपपदाच्च।

उपोच्चारितं पदमुपपदम्। इतरेतरान्योन्यशब्दावुपपदे यस्य स तथोक्तः। अथोपपदग्रहणं किमर्थम्? नेतरेतरान्योन्याभ्यामित्युच्यताम्? अशक्यमेवं वक्तुम्। एवं ह्युच्यमाने पञ्चमीनिर्देशात् तस्मादित्युत्तरस्ये (१।१।६७) त्युत्तरस्यैव स्यात्। इतरेतरस्य व्यतिलुनन्तीति। इह तु न स्याद् व्यतिलुनन्तीतरेतरस्येति। परस्परोपपदाच्चेति वक्तव्यमिति। परस्परशब्द उपपदं यस्य तस्मात् प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन परस्परोपपदादपि प्रतिषेधो भविष्यतीति।

## १७। नेर्विशः।

निविशत इति। विश प्रवेशने। तुदादित्वाच्छः। न्यविशतेति। अड़ागमेन व्यवधानमित्यात्मनेपदेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह अड़ागम इत्यादि। मधुनि विशन्तीति। अत्र नेः परस्य विशतेरात्मानेपदं प्राप्नोति। तत् कस्मान्न भवतीत्याह नेरुपसर्गस्येत्यादि। मधुशब्दस्य सप्तम्येकवचन इकोऽचि विभक्ताविति (७।१।७३) नुमि कृते मधुनीति रूपं भवति। तस्य चावयवो निशब्दोऽनर्थकः।

## १८। परिव्यवेभ्यः क्रियः।

परिक्रीणीत इति। ई हल्यघोरितीत्त्वम् (६।४।११३)। पर्य्यादय उपसर्गा गृह्यन्त इति। कथम्? क्रिय इति सम्बन्धलक्षणा षष्ठी। न पञ्चमी। क्रियो ये सम्बन्धिनः पर्य्यादय इति। अर्थद्वारकश्च तेषां सम्बन्धो विशेषणविशेष्यभावलक्षणः। स चोपसर्गैरेव पर्य्यादिभिः सम्भवति। नान्यैरिति सामर्थ्यादुपसर्गग्रहणं भवति। बहुवि क्रीणातीति। बहवो वयो यस्मिन्निति बहुव्रीहिः। विशब्दोऽत्र पक्षिणि वर्त्तते।

## १९। विपराभ्यां जेः।

साहचर्य्यादिति। उपसर्गग्रहणे हेतुः। नेर्विश इत्यत्र नेरुपसर्गस्य ग्रहणम्।

अनन्तरसूत्रेऽपि पर्य्यादीना मुपसर्गाणामेव ग्रहणम् । अतः प्रकरणसाहचर्य्याद् विपराशब्दावुपसर्गौ गृह्येते इत्येके । अपरे तु वर्णयन्ति साहचर्य्यं प्रत्यासत्त्युपलक्षणम् । येषां साहचर्य्यं तेषां नियोगतः प्रत्यासत्त्या भवितव्यमिति । अतः साहचर्य्यस्य प्रत्यासत्त्याऽविनाभावित्वात् तेन प्रत्यासत्तिर्लभ्यते । तदेतदुक्तं भवति प्रत्यासत्तेर्विपराशब्दावुपसर्गौ गृह्येते इति । प्रत्यासत्तिश्च जयते र्विपराशब्दाभ्यामुपसर्गाभ्यामेव । नानुपसर्गाभ्याम् । तथाहि ताभ्यामेव जयत्यर्थो विशिष्यते । नेतराभ्यामिति ।

## २० । आङो दोऽनास्यविहरणे ।

ददातेरेवास्यविहरणे वृत्तिः सम्भवति । नान्येषां दारूपाणां धातूनामिति । अतस्तत्प्रतिषेधेन तस्यैव ग्रहणं विज्ञायत इत्यत आह आङ्पूर्वाद्दाञ इति । आदत्त इति । पूर्ववदाकारलोपः । खरि चेति (८।४।५५) चर्त्वम् । आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्य इत्युपसंख्यानव्याजेनास्यविहरणविषयं दर्शयति । कथम् ? विहरणग्रहणं न कर्त्तव्यम् । इहाङो दोऽनास्य इत्येतदवक्तव्यम् । तत्रास्ये दाञो वृत्तिर्न सम्भवतीति सामर्थ्यादास्यसमवायिन्यां क्रियायां वृत्तिर्विज्ञास्यते । तत्रैव प्रतिषेधः । तत् किं विहरणग्रहणेन ? ननु चाङो दोऽनास्य इत्येतावत्युच्यमाने स्वं मुखमादत्ते देवदत्त इत्यत्रापि प्रतिषेधः स्यात् । नैष दोषः । या ह्यास्यविषयैव क्रिया तस्यां वर्त्तमानो ददातिरास्यवृत्तिर्भवति । विहरणमेवास्यविषयम् । ग्रहणन्त्वास्यविषयं गृहीतृविषयञ्च । तदेवं विहरणमन्तरेणापि सिद्धे यद्विहरणग्रहणं क्रियते तस्यैतत् प्रयोजनम् । आस्यविहरणसमानक्रियादपि प्रतिषेधोऽयं यथा स्यादित्येवमित्येके । इतरेतरान्योन्योपपदाच्चेत्यत (१।३।१६) चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेनास्यविहरणसमानक्रियादपि प्रतिषेधो भवतीत्यपरे । स्वाङ्गकर्मकाच्चेति । वक्तव्यमिति शेषः । न चात्राद्रवमूर्त्तिमल्लक्षणं पारिभाषिकं स्वाङ्गं विवक्षितम् । किं तर्हि ? स्वमङ्गं स्वाङ्गमिति । तत् कर्म यस्य स स्वाङ्गकर्मकः । तस्मात् स्वाङ्गकर्मकात् प्रतिषेधो भवतीत्येतदर्थरूपं वक्तव्यमित्यर्थः । तेन परसम्बन्धिना मुखेन यदा सकर्मको भवति तदा भवत्येवात्मनेपदम् । व्याददते पिपीलिकाः

पतञ्जस्य मुखमिति। वक्तव्यशब्दस्य व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। कर्त्तरीति वर्त्तते। आस्यमिति च सम्बन्धिशब्दः। तत्रैवं विज्ञायते यस्मिन् कर्त्तर्य्येवात्मनेपदं भवति तस्य चेदास्यमिति। आङ इति योगविभागः क्रियते। आगमयस्व तावन्माणवक आनुते शृगाल आपृच्छते गुरूनितेत्रवमर्थः। तेनागमेः चमायामित्याङि नुप्रच्छ्योरिति च (१।३।२१, वा) नोपसंख्येयं भवति।

## २१। क्रीड़ोऽनुसंपरिभ्यश्च।

समा साहचर्य्यादिति। यद्यप्यन्वादिरुपसर्गत्वं व्यभिचरति समशब्द स्तु न व्यभिचरति। अतस्तत्साहचर्य्यादन्वादिरुपसर्ग एव गृह्यते। माणवकमनुक्रीड़तीति। माणवकेन सह क्रीड़तीत्यर्थः। तृतीयार्थ इत्यनुशब्दस्य (१।४।८५) कर्मप्रवचनीयसंज्ञा। आगमेरिति। आङ्पूर्वस्य गमेर्ण्यन्तस्य ग्रहणम्। चमा उपेचा कालहरणमिति। कालप्रतिपालनं प्रतीचणमितत्रर्थः। आगमयस्वेति। जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्संज्ञायां मितां ह्रस्व (६।४।९२) इति ह्रस्वत्वम्। लोण्मध्यमपुरुषैकवचनम्। थासः से (३।४।८०)। सवाभ्यां (३।४।९१) वामाविति वादेशः। शिच्चेरिति। शकिः सन्नन्तो गृह्यते। विद्यासु शिच्चत इति विद्यां जिज्ञासितुं घटत इत्यर्थः। शकेः सन्। सनि मीमाघुरभलभेत्यादिनेस् भावः (७।४।५४)। अत्र लोपोऽभ्यासस्ये (७।४।५८) त्यभ्यासस्य लोपः। स्कोः संयोगाद्योरन्ते (८।२।२९) चेति सकारलोपः। शिच्च इति स्थिते लट्। यस्तु शिच्च विद्योपादान इति पठ्यते ततोऽनुदात्तेत्त्वादात्मनेपदं सिद्धमेव।

आशिषि नाथ इति। नाथृ नाधृ याञ्चोपतापैश्वर्य्याशीःष्वित्यनुदात्तेत् पठ्यते। अनुदात्तेत्त्वादात्मनेपदे सिद्ध आशिष्येव नाथतेरात्मनेपदं भवति। याच्ञादिषु मा भूदिति नियमार्थमेतत्। सर्पिष इति। आशिषि नाथ इति (२।३।५५) कर्मणि षष्ठी। हरतेर्गतिताच्छील्य इति। गतिस्ताच्छील्यं गतिताच्छील्यम्। ताच्छील्यं तत्स्वभावता। पैतृकमश्वा अनुहरन्ते मातृकं गावोऽनुहरन्त इति। पितृवन् मातृवद् गमनमेषां स्वभाव इत्यर्थः। मातुरनुहरति पितुरनुहरतीति। मातुराकारं पितुराकारमनुकरोतीत्यर्थः। मातृसदृशः पितृसदृश इत्यर्थः। पैतृकमिति। पितुरागतमिति ऋत(४।३।७८)ठञ्। इसुसुक्तान्तात् (७।३।५१)

कः । मातुरनुहरतीत्यत्र गततार्च्छील्यं न विवक्षितम् । किरतेरित्यादि । कॄ विक्षेपे । अस्य विक्षेप एवार्थः । हर्षादयस्तस्य विषयभूताः । अत्र हर्षो विक्षेपस्य कारणम् । जीविकाकुलायकरणञ्च तत् फलम् । एतेष्वेवार्थेषु किरते रात्मनेपदं भवति । अपस्किरत इति । अपाच्चतुष्पाच्छकुनिष्वालेखने (६।१।१४२) सुट् । आनुते इति । नु स्तुतौ । अदादिः । अयञ्चात्रोत्कण्ठापूर्वकशब्दने वर्त्तते । आपृच्छत इति । प्रच्छ ज्ञीप्सायाम् । तौदादिकः । ग्रह्यादिना ( ६।१।१६ ) संप्रसारणम् । वाचा शरीरस्पर्शनमुपलम्भनमिति । शपथविशेषः । तथाहि देवदत्तस्य शरीरं स्पृशामीति शपथं कुर्वाणो देवदत्ताय शपत इति प्रयुज्यते । श्लाघह्नुङ्स्थाशपामित्यादिना (१।४।३४) सम्प्रदानसंज्ञायां देवदत्तायेति सम्प्रदाने चतुर्थी । शपतीत्याक्रोशतीत्यर्थः । समोऽकूजन इत्यादिग्रन्थस्य शप उपलम्भनपर्य्यन्तस्य योऽर्थः स इह चकारेणानुक्तसमुच्चयार्थेनोपात्तः । तस्यैवार्थस्य चकारोपात्तस्य स्पष्टीकरणायास्य ग्रन्थस्योपन्यासः कृतः ।

## २२ । समवप्रविभ्यः स्थः ।

सन्तिष्ठते इति । पाघ्रादिसूत्रेण ( ७।३।७८ ) तिष्ठादेशः । अस्तिं सकारमातिष्ठत इति । सकारमात्रमस्तिं धातुमापिशलिराचार्य्यः प्रतिजानीते । तथाहि न तस्य पाणिनेरिवास भुवीति गणपाठः । किं तर्हि ? स भुवीति स पठति । आगमौ गुणवृद्धी आतिष्ठत इति । स त्वागमौ गुणवृद्धी आतिष्ठते । एवं हि स (C) प्रतिजानीत इत्यर्थः ।

## २३ । प्रकाशनस्थेयाख्ययोश्च ।

तिष्ठन्त्यस्मिन्निति स्थेय इति । कृत्यल्युटो बहुलमि (३।३।११३) त्यधिकरणेऽचो (३।१।९७) यत् । ईद् यतीतीत्त्वम् (६।४।६५) । गुणः । विवाद इति ।

---

(C) स इति । आपिशलिरित्यर्थः । आपिशलिमते सकारमात्रस्यासधातोः स्तः स्थः सन्तीत्यादीन्युदाहरणानि । अस्त्यासीदित्यादिसिद्धये तु सोऽडाटावागमौ प्रतिजानीते । तावड़ाटावेव पाणिनीयशास्त्रेऽकाराकारस्वरूपत्वाद् गुण (१।१।२) वृद्धी (१।१।१) इति । अतः स गुणवृद्धी आगमौ प्रतिजानीत इति न्यासकृदाशयः । आपिशलि maintains गुणवृद्धी ( अ and आ ) as आगम in order to form the terms अस्ति, अस्तु, आसीत् &......from his root स ( which is अस in the पाणिनीय धातुपाठ ) । and this is referred to by the न्यासकार in explaining the two examples cited here by the वृत्तिकार to illustrate the वार्त्तिक attached to the Rule 1. 3. 22.

सन्देहविषये । निर्णेतेति निश्चेता प्रमाणभूत इत्यर्थः । कथं पुनः स्थेयशब्दात् तस्य प्रतीतिर्भवति ? यावता स्थेयशब्दो भावसाधनोऽप्यस्ति गतिनिवृत्ति-वचन इत्याह तस्येत्यादि । यस्य स्थेयइत्याख्या लोके तस्य प्रतीतिर्यथा स्यादित्ये-वमर्थमाख्याग्रहणम् । तेनाख्याग्रहणेन तस्य प्रतीति र्भवतीति दर्शयितुमाख्या-ग्रहणं कृतम् । तिष्ठते कन्या छात्रेभ्य इति । पूर्ववत् संप्रदानसंज्ञायां सत्यां छात्रेभ्य इति चतुर्थी । प्रकाशयत्यात्मान मित्यर्थ इति । अनेकार्थत्वाद्धातूनां तिष्ठतिरत्र प्रकाशने वर्त्तते । संशय्येति ।

जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः ।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥१॥ इति ।

अस्य श्लोकस्यायमेकदेश इहोपन्यस्तः । संशय्येति । विवादपदभूते वस्तुनि संशयितो भूत्वा कर्णादिषु तिष्ठत इति । कर्णशकुनिप्रभृतिषु निर्णेतृत्वेना-भिमतेषु सत्सु पचान्तरं परित्यज्य तिष्ठते । तदुपदर्शितस्यैव पक्षस्याश्रयणात् ।

## २४ । उदोऽनूर्द्ध्वकर्मणि ।

अनूर्द्ध्वकर्मणि वर्त्तमानादित्युक्ते य श्चोदयति ननुच तिष्ठतेरकर्मकक्रिया-वचनत्वान्न कर्मणि वृत्तिरुपपद्यते । तत् किमुच्यतेऽनूर्द्ध्वकर्मणि वर्त्तमाना-दिति तं प्रत्याह क्रियावाचीति । यदुक्तमनूर्द्ध्वकर्मणि वर्त्तमानादिति तस्यार्थं विस्पष्टीकर्त्तुमाह । अनूर्द्ध्वकर्मविशिष्टात् क्रियावचनादिति । उद ईहायामिति वक्तव्यमिति । उत्पूर्वात् तिष्ठते रीहायां परिस्पन्दने वर्त्तमाना-दात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । अन्तरे-णापि कर्मग्रहणं क्रियामात्रवृत्तित्वे तिष्ठतेः सिद्धे यत् कर्मग्रहणं तल् लोके या क्रिया कर्मत्वेन प्रसिद्धा तस्याः प्रतिपत्त्यर्थं कृतम् । सा तु परिस्पन्दनात्मिकैव घटनभ्रमणादिका । तथाहि तां कुर्वाणः सक्रिय इत्युच्यते । स्थानासनादिकां त्वपरिस्पन्दनात्मिकां कुर्वाणोऽपि निष्क्रिय इति । तस्मादात्मनेपदमिदं कर्म-ग्रहणादीहायामेव वर्त्तमानाद् भविष्यति । उद ईहायामित्युक्त ईहाग्रहण-मनूर्द्ध्वकर्मणोऽपवाद इति कस्यचिद् भ्रान्तिः स्यात् । अतस्तान्निराकर्त्तुमाह ईहाग्रहणमित्यादि । विशेषणं व्यक्तीकरणमिहाभिप्रेतम् । एतदुक्तम् भवति ।

यदिदमुक्तं मुद ईहायामिति वक्तव्यमिति तत्र यदीहाग्रहणं तदनूर्ध्वकर्म्मण एव विशेषणं सूत्रोपात्तस्य व्यक्तीकरणार्थम् । ईहात्मकमिहानूर्ध्वकर्म विवक्षितमिति प्रतिपादनार्थमित्यर्थः ।

## २५ । उपान्मन्त्रकरणे ।

मन्त्रकरण इति । मन्त्रः करणं साधकतमं यस्य धात्वर्थस्य स तथोक्तः । उपादित्यादि । अत्र वक्तव्यशब्दस्य व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । उत्तरसूत्रे चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन उपपूर्वात्तिष्ठतेर्देवपूजादिष्वर्थेष्वप्यात्मनेपदं भवति । वा लिप्सायामिति । लब्धुमिच्छा लिप्सा । लिप्सायां गम्यमानायामित्येषोऽर्थो वेदितव्यः । न तु तत्र वर्त्तमानात् तिष्ठतेरिति । न लिप्सा तिष्ठतेरर्थः । तथाहि भिक्षुको ब्राह्मणकुलमुपतिष्ठत इत्यत्र तिष्ठतिरुपसंक्रमणे वर्त्तते । लिप्सा तूपसंक्रमणस्य हेतुभूता गम्यते । लिप्सायां हेतुभूतायां ब्राह्मणकुलमुपसंक्रामतीत्यर्थः ।

## २६ । अकर्मकाच्च ।

अकर्मकादिति । नास्य कर्मास्तीति बहुव्रीहिः । डुकृञ् करणे । अन्येभ्योऽपि दृश्यन्त इति (३।२।७५) मनिन् । धातोर्गुणः । शेषाद् विभाषेति (५।४।१५४) कप् । ननु धातोः क्रियावचनादकर्मकत्वं न सम्भवतीति तस्मादयुक्तमकर्मकादिति विशेषणं व्यवच्छेद्याभावादित्यत आह अकर्मकक्रियावचनादिति । अकर्मिका चासौ क्रिया चेत्यकर्मकक्रिया । तस्या वचनो यस्तां वक्ति सोऽकर्मकक्रियावचनः । एतेनार्थद्वारकं विशेषणमिदं दर्शयति । अकर्मको यो धात्वर्थस्तत्साहचर्य्यादभिधेयधर्मस्याभिधान उपचाराद् धातुरकर्मक इति । अर्थस्य च युक्तमेतद् विशेषणम् । तस्य सकर्म्मकत्वाकर्मकत्वसम्भवात् । यावद्भुक्तमिति । यावच्छब्दो निपातोऽव्ययम् । तस्य यथार्थे वीप्सायामव्ययीभावः । सप्तम्यन्तश्चैतत् । अतएवाह भोजने भोजने सन्निधीयत इति । भावे क्त इति । नपुंसके भावे क्त (३।३।११४) इत्यनेन ।

## २७ । उद्विभ्यां तपः ।

स्वाङ्गकर्मकाच्चेति वक्तव्य मिति । स्वाङ्गं कर्म यस्य तस्मात् तपतेरात्मने-

पदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। पूर्वसूत्राच्च-कारोऽनुवर्त्तते। तस्यानुक्तसमुच्चयार्थत्वात् स्वाङ्गकर्मकादपि भविष्यति। स्वाङ्गञ्चेह न पारिभाषिकम्। किं तर्हि? स्वमङ्गं स्वाङ्गमिति। आत्मीय-मङ्गमित्यर्थः। निष्टपतीति। निसस्तपतावनासेवन इति (८ ३।१०२) मूर्धन्यः।

२८। आङो यमहनः।

आहत इति। अनुदात्तोपदेशेत्यादिनानुनासिकलोपः (६।४।३७)। आघ्नत इति। गमहनेत्युपधालोपः (६।४।९८)। हो (७।३।५४) हन्तेरित्यादिना कुत्वम्। स्वाङ्गकर्मकाच्चेति वक्तव्यमिति। अस्य पूर्ववदर्थः। व्याख्यानमपि पूर्ववदेव।

२९। समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः।

संस्वरत इति। स्वृ शब्दोपतापयोः। समरन्त इति। अर्त्तेः सर्त्तिशास्त्यर्त्तिभ्य-श्चेत्यत्र (३।१।५६) पुषादिसूत्रात् (३।१।५५) परस्मैपदग्रहणानुवृत्तेरात्मनेपदे-ष्वङादेशेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह तत्र हीत्यादि। संशृणुत इति। श्रु श्रवणे। श्रुवः शृ चेति (३।१ ७४) श्नुप्रत्ययः शृभावश्च। ऋच्छेरनादेशस्य ग्रहणमिति। ऋच्छ गतीन्द्रियप्रलय-मूर्त्तिभावेष्वित्यस्य समृच्छिष्यत इति लृट्। स्यप्रत्ययः। यद्यादेशस्य ग्रहणं स्यात् तदेतन्न सिध्येत्। पाघ्रादिसूत्रे (७।३।७८) ऋार्त्तेर्ऋच्छादेशस्य शितीत्येवं विधानात्। अथार्त्त्यादेशस्यापि ग्रहणं कस्मान्न भवतीत्याह। अर्त्त्यादेशस्य अर्त्तीत्येवमित्यादि। अथवा यद्यनादेशस्य ग्रहणं स्यादादेशस्यात्मनेपदं न सिध्यतीत्यत आह अर्त्त्यादेशस्य त्वर्त्तीत्येवमित्यादि। स्थानिवद्भावेनेत्यभिप्रायः। न लाभार्थस्येति। विदॢ लाभ इत्यस्य। अथ ननु सत्तार्थस्य नापि विचार--णार्थस्येत्येवमपि कस्मान्नोक्तम्? एवं मन्यते। नित्यात्मनेपदित्वादनयोरात्मने-पदार्थं ग्रहणं नाशङ्क्यतेवेति। दृशेश्चेति वक्तव्यमिति। दृशिर् प्रेक्षण इत्यस्मात् संपूर्वादात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु पूर्ववदेव। संपश्यत इति। पाघ्रादिना (७।३।७८) पश्यादेशः।

३०। निसमुपविभ्यो ह्वः।

ह्व इति ह्वेञ् स्पर्द्धायां शब्दने चेत्यस्य कृतात्त्वस्यातो (६।४।११४) धातो-

रित्याकारलोपं कृत्वा निर्देशः । निह्नयत इति । ननु च कृतात्त्वस्य निर्देशादत्रात्मनेपदेन न भवितव्यम् । नहि विकृतिः प्रकृतिं गृह्णाति । अन्यत्वात् । नैष दोषः । क्वचिद्विकृतिरपि प्रकृतिं गृह्णात्येव । कथं ज्ञायते ? यदयं न व्यो (६।१।४६) लिटीति कृतात्त्वस्य व्येञो निर्देशेनात्त्वप्रतिषेधं शास्ति ततो ज्ञायते विकृतिरपि प्रकृतिं गृह्णातीति । अन्यथा व्य इति निर्देशेन व्येञो ग्रहणाभावात् कस्यायं प्रतिषेधः स्यात् ? उपसर्गादस्यत्यूह्योर्वावचनमिति । वक्तव्यमित्यर्थः । असु क्षेपणे । ऊह वितर्के । अस्यतीति श्यना निर्देशाद्दैवादिकस्य ग्रहणम् । नत्वादादिकस्यास भुवीत्यस्य ।

## ३१ । स्पर्द्धायामाङः ।

स्पर्द्धायां विषय इति । स्पर्द्धेह धात्वर्थस्य विषयोऽभिमतो न धातोः । अतएवाह स्पर्द्धा संघर्षः । पराभिभवेच्छेति । स्पर्द्धायाः स्वरूपं दर्शयित्वा धात्वर्थस्य विषयं दर्शयितुमाह स विषयो धात्वर्थस्येति । कः पुनर्धातोरर्थो नाम यस्यैवं विषय इत्याह ? धातुस्तु शब्दक्रिय एवेत्यादि । शब्दनं शब्दः । सा क्रिया यस्य स तथोक्तः । शब्दनक्रियावाचीति यावत् । यद्यपि ह्वयतिः स्पर्द्धायामपि पठ्यते तथाप्याङ्पूर्वस्तत्र न वर्त्तते । यथा तिष्ठतिर्गतिनिवृत्तौ पठ्यते । अथच प्रपूर्वो गतावेव वर्त्तते । न गतिनिवृत्तौ । तथाहि प्रतिष्ठत इत्युक्ते गच्छतीत्यर्थः । तस्मादाङ्पूर्वस्य ह्वयतेः स्पर्द्धायां वृत्त्यभावात् स्पर्द्धा धात्वर्थस्य विषयः । धात्वर्थविषयत्वन्तु तद्धेतुभावेन वेदितव्यम् ।

## ३२ । गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ।

अपकारप्रयुक्तमिति । तृतीयासमासोऽयम् । अपकारमुद्दिश्य यत् प्रवर्त्तते तदपकारप्रयुक्तं वेदितव्यम् । हिंसात्मकमिति । हिनस्तीति हिंसः । पचाद्यच् । हिंस आत्मा यस्य तत् तथोक्तम् । पीड़ाकरणमित्यर्थः । सूचनमिति दोषाविष्करणम् । कथमेतद् विज्ञायत एवंविधं सूचनं गन्धनमित्याह तथाहीत्यादि । वस्तेत्यादिना गन्धयति धातुरर्दयतेरर्थे वर्त्तत इति दर्शयति । अर्द हिंसायामित्यादिनाऽर्द्दयते हिंसात्मकत्वम् । एवञ्च हिंसार्थेनार्द्दयतिना गन्धयतेः

समानार्थतां दर्शयता गन्धनशब्दवाच्यस्यार्थस्य हिंसात्मकत्वं दर्शितम् भवति। भर्त्सनं तिरस्करणम्। अनुवृत्तिः परचित्तावधारणम्। साहसिक्यं साहसं कर्म इति। ओजःसहोऽम्भसा (४।४।२७) वर्त्ततइति ठक् साहसिकः। तस्य कर्मेति तस्माद् गुणवचनब्राह्मणादित्वात् (५।१।१२४) ष्यञ् साहसिक्यम्। उपयोगो धर्मादिप्रयोजनो विनियोग इति। धर्मादिषु प्रयोजनं यस्य स तथोक्तः। आदिशब्दः कामादिपरिग्रहाय। एधोदकस्योपस्कुरुत इति। उपात् प्रतियत्नवैकृतवाक्याध्याहारेष्विति (६।१।१०८) सुट्। कृञः प्रतियत्न (२।३।५३) इति षष्ठी।

## ३३। अधेः प्रसहने।

तमधिचक्र इति। कृञो लिट्। तस्य चैशादेशः। द्विर्वचनेऽचीति (३।१।५९) स्थानिवद्भावाद् द्विर्वचनम् (७।४।६६)। उरदित्यत्त्वम् (७।४।६६)। रपरत्वञ्च। हलादिः (७।४।६९) शेषः। कुहोश्चुरिति (७।४।६२) चुत्वम्।

## ३४। वेः शब्दकर्मणः।

कर्त्तरि (१।३।१४) कर्म्मत्येवमादौ क्वचित् कर्मशब्दस्य क्रियावाचिता दृष्टा। इहापि तस्य क्रियावाचिता मा विज्ञायीत्याह कर्मशब्द इह कारकाभिधायीति। अथ क्रियाभिधायी कस्मान्न भवति? विपूर्वस्य करोतेः शब्दनक्रियायां वृत्त्यसम्भवात्। शब्दकर्मण इति। धातोरर्थद्वारकं चेदं विशेषणम्। शब्दः कर्मास्येति शब्दकर्मा धात्वर्थः। तदर्थस्य शब्दकर्मत्वाद् तद्द्वारेण धातुरपि शब्दकर्मेति। अन्यथा हि क्रियावाचित्वाद्धातोः कथं शब्दः कर्मास्येति सम्बन्ध उपपद्यते?

## ३५। अकर्म्मकाच्च।

ओदनस्य परिपूर्णा इति। सुहितार्थयोगे षष्ठी। पूरणगुणसुहितार्थ (२।२।११) इत्यादिना षष्ठीसमासप्रतिषेधेन ज्ञापितमेतत् सुहितार्थयोगे षष्ठी भवतीति। सुहितार्थास्तृप्त्यर्थाः। पूर्णास्तृप्ता इत्यर्थः।

## ३६। सम्माननोत्सञ्जनाचार्य्यकरणज्ञानभृतिविगणनव्ययेषु नियः।

सम्माननादिषु विशेषणेष्विति। किं स्विदत्र विशिष्यते नयत्यर्थोऽनेनेति

विशेषणम् ? किं स्विन्नयत्यर्थ एव विशेषणम् ? विशिष्यते व्यावर्त्त्यतेऽर्थान्तरादिति कृत्वा । तत्र सम्माननमाचार्य्यकरणं भृतिश्चेति पूर्वेणैवार्थेनैतानि विशेषणानि । परिशिष्टानि तु नयत्यर्थस्वभावानि द्वितीयेन विशेषणानि । नयते चार्व्वी लोकायत इति । अत्र नयतेः प्रापणमर्थो विशेष्यः । शिष्यसम्माननन्तु तस्य फलभावेन विशेषणम् । तत्सम्बन्धादाचार्य्योऽपि चार्व्वीत्युच्यत इति । यथा कुन्तान् प्रवेशयेत्युक्ते कुन्तशब्दः कुन्तसम्बन्धात् पुरुषेष्वपि वर्त्तते तथेहापि चार्व्वीशब्दश्चार्व्वीसम्बन्धादाचार्य्येऽपि । स्थिरीकृत्येति निश्चलीकृत्येत्यर्थः । निश्चलत्वन्तु तेषामनन्यार्थभावः । स्थाप्यमाना इति । लोकायते शास्त्रे पदार्थान् प्रतिपाद्यमाना निश्चाय्यमाना इत्यर्थः । पूजिता भवन्तीति । अभिलषितार्थसम्पादनमेव तेषां पूजा । अभिलषितोऽर्थस्तु लोकायते शास्त्रे पदार्थानां सम्यगवबोधः । उत्क्षिपतीत्यर्थ इति । एतेनोत्सञ्जनं नयतेरर्थो नतु तस्य विशेषणमिति दर्शयति । एवं निश्चिनोतीत्यर्थ इत्यादिभिरपि ज्ञानादीनां यथासम्भवं नयत्यर्थतां दर्शयतीति वेदितव्यम् । ईदृशेनेति । यादृशः शास्त्रोक्तो विधिस्तादृशेनेत्यर्थः । अत्राप्याचार्य्यकरणं नयत्यर्थस्य फलभावेनैव विशेषणम् । कर्मकरानुपनयत इति । अत्र हि भृतिर्हेतुभावेन नयत्यर्थस्य समीपकरणस्य विशेषणम् । ऋणादेरिति । आदिशब्देन करशुल्कदण्डादीनां ग्रहणम् । करो नाम राजग्राह्यो भागः कर्षकैरक्षार्थं परिकल्पितः । धर्म्मादिष्विति । आदिशब्देन कामादिष्वपि ।

## ३७। कर्त्तृस्थे चाशरीरे कर्मणि ।

नयतेः कर्त्तेति । अर्थद्वारकः सम्बन्धो वेदितव्यः । तदेकदेशोऽपि शरीरमिति । समुदायेषु हि प्रवृत्ताः शब्दाः क्वचिदवयवेष्वपि वर्त्तन्त इति भावः । कथं पुनर्मुख्ये सति गौणस्यापि ग्रहणं लभ्यते ? शरीरग्रहणात् । इह लघुत्वात् कायग्रहणे कर्त्तव्ये यच्छरीरग्रहणं करोति तच्छरीरैकदेशोऽपि शरीरश्रुत्या नाम गृह्यतेत्येवमर्थम् । क्रोधं विनयत इति । अत्र नयतेर्यः कर्त्ता स हि बुद्धीन्द्रियदेहसमुदायस्वभावो देवदत्तादिः । तत्रैव कर्म क्रोधो वर्त्तत इति कर्त्तृस्थं कर्म्माशरीरं भवति । एवं गडुं विनयतीत्यादौ गड्वादेः

शरीरैकदेशस्य कर्म्मणः कर्त्तृस्थभावो वेदितव्यः। अत्र च क्रोधाद्यपगमः क्रियाफलं कर्त्तभिप्राय एवेति स्वरितञितः (१।३।७२) कर्त्तभिप्राय इत्यनेनैव सिद्धे नियमार्थमेतद् वचनं वेदितव्यम्। कर्त्तृस्थे कर्मण्यशरीर एव। नान्यत्रेति।

३८। वृत्तिसर्गतायनेषु क्रमः।

शेषलक्षणेन क्रमे. परस्मैपदे प्राप्त आत्मनेपदं विधीयते। वृत्त्यादयोऽर्था अप्रतिबन्धोत्साहस्फीततासु प्रसिद्धाः।

३९। उपपराभ्याम्।

संक्रामतीति। क्रमः (७।३।७६) परस्मैपदेष्विति दीर्घः।

४०। आङ उद्गमने।

आक्रामति माणवकः कुतपमिति। अवष्टभ्नातीत्यर्थः। ज्योतिरुद्गमन इति वक्तव्यमिति। ज्योतिषां ग्रहनक्षत्रादीनामुद्गमन एवात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। अनुपसर्गाद्वेत्यतो (१।३।४३) वाग्रहणमनुवर्त्तते सिंहावलोकितन्यायेन। सा च व्यवस्थितविभाषा। तेन ज्योतिरुद्गमन एव भविष्यति। नान्यत्रेति। यदि तर्हि वा ग्रहणमनुवर्त्तत उत्तरयोरपि योगयोरनुवर्त्तेत। मण्डूकप्लुतिन्यायेन नानुवर्त्तिष्यत इत्यदोषः।

४१। वेः पादविहरणे।

विक्रामत्यजिनसन्धिरिति। द्विधा भवति। स्फुटतीत्यर्थः।

४२। प्रोपाभ्यां समर्थाभ्याम्।

प्रक्रमत उपक्रमत इति। आरभत इत्यर्थः।

४३। अनुपसर्गाद्वा।

अप्राप्तविभाषेयमिति। वृत्त्यादीनां निवृत्तत्वात्।

४४ । **अपह्नवे ज्ञः ।**

शतमपजानीत इति । ज्ञाजनोर्जा इति ( ७।३।७९ ) जादेशः । श्ना । पूर्व्ववदी हल्यघोरितीत्त्वम् ( ६।४।११ ) ।

४५ । **अकर्म्मकाच्च ।**

कथञ्चायमकर्मक इति । एवम्मन्यते । सर्पिरादि ज्ञेयत्वेन विवक्षितं कर्म । अतस्तेन कर्मणा सकर्मक एवायमित्यभिप्रायः । कथमिति । न कथञ्चिदित्यर्थः । तथाचेत्यादिना नात्र सर्पिरादि कर्मत्वेनापितु करणत्वेन विवक्षित मित्यत्र युक्तिमाह सर्पिषोपायेनेत्यादि। यस्य सर्पिःष्वभिष्वङ्गो (D) विना तेन भुजिक्रियायामभिलाषो न भवति तस्य भोजने प्रवृत्तिं प्रति सर्पिरुपायभावं प्रतिपद्यत इति तेनोपायेन स प्रवर्त्तत इति । अकर्म्मकादिति किमिति ? नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम् । किं तर्हि ? करणत्वेनेति ब्रुवता वृत्तिकृता साक्षाच्छब्दोपात्तेन करणेन सकरणादात्मनेपदं भवतीत्युक्तं भवति । एवञ्च सकरणादित्येवं वाच्यम् । किमकर्मकग्रहणेनेति भावः । एवमुच्यमाने करणयुक्तात् सकर्मकादपि स्यादिति दर्शयितु माह स्वरेण पुत्रं जानातीति ।

४६ । **संप्रतिभ्यामनाध्याने ।**

उत्कण्ठास्मरणमिति । उत्कण्ठापूर्व्वकस्मरणमिति । मातुरिति । अधीगर्थदयेशां कर्मणीति ( २।३।५२ ) षष्ठी ।

४७ । **भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ।**

भासनादिष्वर्थेषु विशेषणेष्विति । अत्रापि किंस्विद्विशिष्यते वदत्यर्थोऽनेनेति विशेषणम् ? किंस्विद्वदत्यर्थ एव विशेषणं ह्यर्थान्तराद् विशिष्यते व्यवच्छिद्यत इति कृत्वा । तत्रोपसम्भाषोपसान्त्वन मुपमन्त्रणञ्च द्वितीयेनार्थेन वदत्यर्थ एव विशेषणम् । परिशिष्टानि तु भासनादीनि प्रथमेनार्थेन विशेषणानि । भासमानेत्यादिना भासनं वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशेषणमिति दर्शयति । तथाह्यत्र भासमान इति लक्षणहेत्वोः क्रियाया

(D) यस्य सर्पिषो विन्दुमपि विनेति पुनापुस्तके पाठः ।

(३।२।१२६) इत्यनेन शानजादेशो विहितः। जानातीत्यादिना ज्ञानं वदत्यर्थस्य विषयिभावेन विशेषणमिति दर्शयति। ज्ञानेन ह्यसौ वदितुं जानाति। अत्र येन ज्ञानेन वदनं वदत्यर्थं जानाति तत्र तेनैव विषयेण परिच्छेद्येन विषयीभवति। तद्विषय मित्यादिना यत्न आविष्करणस्य वदत्यर्थस्य हेतुभावेन विशेषणमित्याचष्टे। उत्साहो ह्याविष्क्रियमाण आविष्करणक्रियायाः कर्माख्यं साधनं भवति। साधनञ्च हेतुः। कारकाणां क्रियानिमित्तत्वात्। विमति पतिता इत्यादिना विमतिभाषणस्य वदत्यर्थस्य हेतुभावेन विशेषणमिति दर्शयति। सत्यां विमतौ विचित्रं नानाप्रकारं भाषन्ते। यदि ह्यभिन्ना मतिः स्यादभिन्नमेव भाषेरन्। उपच्छन्दयतीति। भद्रे भजस्व मा मिदं ते दास्यामीत्येवमादिभिरभीष्टेऽर्थे प्रवर्त्तयतीत्यर्थः।

### ४८। व्यक्तवाचां समुच्चारणे।

प्रसिद्ध्युपसंग्रहार्थमिति। यदि तदर्थं व्यक्तवाचामिति नोच्येत वरतनु सम्प्रवदन्ति कुक्कुटा (E) इत्यत्रापि स्यात्। कुक्कुटा अपि व्यक्तवाच एव। तथाहि

(E) In my second and thirteenth MSS. only this line is given. In the 1st, the stanza is quoted as :—

अयि विजहीहि दृढोपगूहनं
त्यज नवसङ्गमभीरु वल्लभम्।
अरुणकरोद्गम एष वर्त्तते
वरतनु संप्रवदन्ति कुक्कुटाः ॥ १ ॥

But हरदत्त in his पदमञ्जरी completes the stanza thus :—

अपनय पादसरोजमङ्कतः
शिथिलय बाहुलतां गलाद्दताम्।
क्व च वदनं शुकमाकुलीकृतं
वरतनु सम्प्रवदन्ति कुक्कुटाः ॥१॥"

and remarks क्वचित् तु कृत्स्न एव श्लोकः पठ्यते। हलायुध in his पिङ्गलवृत्तिसञ्जीवनी, गङ्गादास in his छन्दोमञ्जरी and नारायणभट्ट in his वृत्तरत्नाकरटीका give it as in my 1st MS. Some assign this stanza ( viz : अयि विजहीहि &c. ) to भारवि and some including the गणरत्नमहोदधिकार, to कुमारदास the author of the poem जानकीहरण। As the last line stands also in the महाभाष्य, neither भारवि nor कुमारदास could obviously be the author of the Stanza, in the form in which it had been before the

कुक्कुटेनापि लपितं विशेषपरिच्छेदादुच्यते कुक्कुटा लपन्तीति। वरतन्विति तनुशब्दस्याम्बार्थनद्योर्ह्रस्व (७।३।१०७) इति ह्रस्वः। ह्रस्ववचनसामर्थ्याद् ह्रस्वस्य गुण इति गुणो (७।३।१०८) न भवति। नृणामिति न कृतं वैचित्र्यार्थम्।

४९। अनोरकर्मकात्।

अनुवदतीति। अनुशब्दः पुनरित्यस्यार्थे वर्त्तते। पुनर्वदतीत्यर्थः। यजुषात्र कर्मणा सकर्मकत्वम्।

५०। विभाषा विप्रलापे।

विप्रलापात्मक इति। परस्परप्रतिबन्धेन विरुद्धः प्रलापो विप्रलापः। स यस्यात्मा स्वभावः स तथोक्तः। प्राप्तविभाषेय मिति। व्यक्तवाचां समुच्चारण इत्यस्यानुवृत्तेः।

५१। अवाद् ग्रः।

अवगिरत इति। ऋत (७।१।१००) इद्धातोरितीत्त्वम्। रपरत्वञ्च।

५२। समः प्रतिज्ञाने।

५३। उदश्वरः सकर्मकात्।

गेहमुच्चरत इति। चरिर्गत्यर्थः। गुरुवचनमुच्चरत इति। अत्रोत्क्रमणात्मिकायां गतौ वर्त्तमानश्चरति गुरुवचनेन कर्मणा सकर्मकः। वाष्प उच्चरतीति। उपरिष्टाद् गच्छतीत्यर्थः। नात्र किञ्चित् कर्म विवक्षितमितत्रकर्मकत्वम्।

५४। समस्तृतीयायुक्तात्।

यद्यत्र तृतीयेति तृतीयार्थो गृह्यते तदेहापि स्यात्। उभौ लोकौ सञ्चरसि इमञ्चामुञ्च देवलेति। (F) अत्रापि तृतीयार्थो गम्यत एव। स तपसा श्रुतेन

---

महाभाष्यकार। The Deccan MS. also does not give the full stanza in the text, but there is a note in the margin in which a scribe completes it as अयि विजहीहि &c.

(F) नारदेति पाठान्तरम्। देवलश्चोभयलोकचरणमयुक्तम् पतितत्वादिति नारदेति युक्तः पाठ इति केचित्।

वा विद्यत एवेत्येतच्चेतसि कृत्वाह तृतीयेति। तृतीयाविभक्ति रिष्यत इति। यद्येवं तया सह धातोः सम्बन्धो नोपपद्यते। नहि तृतीया धातुवाच्येत्याह तदित्यादि। अर्थो द्वारं मुखमुपायो यस्य स तथोक्तः। तृतीयार्थेन धात्वर्थस्य युक्तत्वादौपचारिको धातो स्तृतीयार्थेन योग इति दर्शयति। यद्यप्यत्र तदर्थेन योगः सम्भवतीति विना करणेन क्रियानिष्पत्तेरभावात् तथापि न भवति। तृतीया त्वित्यादि। तृतीयायुक्तग्रहणं ह्येवमर्थं क्रियते। श्रूयमाणतृतीया-युक्तात् यथा स्यादिति। अन्यथा सम इत्येवं वक्तव्यं स्यात्। अनुक्तेऽपि सिद्धत्वात् तृतीयाप्रयोगस्य। नहि तेन विना क्रियानिष्पत्ति रुपपद्यते। तस्मात् यत्र तृतीया श्रूयते तन्मूलोदाहरणम्। यत्र तु न श्रूयते तत् प्रत्युदा-हरणम्।

## ५५। दाणश्च सा चेच्चतुर्थ्यर्थे।

कथं पुन स्तृतीया चतुर्थ्यर्थे स्यादिति? न कथञ्चिदित्यर्थः। तद्वि-धायिनः शास्त्रस्याभावादिति भावः। वक्तव्यमेतदिति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। तदेव संप्रदानं यदा साधकतमत्वेन विवक्ष्यते तदा चतुर्थ्य-र्थेऽपि तृतीया भवति विवक्षातः कारकाणि भवन्तीति कृत्वा। नतु स्वभावतः। सा च विवक्षा लौकिकी समाश्रीयते। नतु प्रायोगिकीति। लोके चाशिष्टव्यवहार एव सा सम्भवति। नान्यत्र। लौकिकविवक्षात्र समा-श्रीयत इति। अस्यैवार्थस्य द्योतनाय चेच्छब्दः प्रयुक्तः। दास्या मालां संप्रयच्छत इति। यो हि धर्मशास्त्रविरुद्धां दासीं कामयितुं तस्यै मालां ददाति तस्यासावशिष्टव्यवहारो भवतीत्यस्यत्राशिष्टव्यवहारः। संप्रयच्छत इति पाघ्रादिसूत्रेण (७।३।७८) दाणो यच्छादेशः। कथमात्मनेपदं भवतीति? न कथञ्चिदित्यर्थः। तस्मादित्युत्तरस्येत्यत्र (१।१।६७) निर्दिष्टग्रहणस्यानन्तर्यार्थ-त्वादिति। एवं मन्यते। सम इति विशेषणे षष्ठीत्यादि। यदि समइति पञ्चमी स्यात् न षष्ठी तदा प्रशब्देन व्यवधानादात्मनेपदं न स्यात्। तस्मान्नेयं पञ्चमी। किं तर्हि? षष्ठी। समो विशेषणस्य सम्बन्धी यो विशेष्यो दाणिति ततश्च व्यवहितोऽपि विशेषणविशेष्यभावो भवतीति तेन व्यवधानेऽपि भवत्यात्मनेपदम्।

## ५६ । उपाद् यमः स्वकरणे ।

यदि स्वकरणमात्र आत्मनेपदं भवति शाटकादिस्वीकारेऽपि स्यादिति चोद्यमपाकर्त्तुमाह पाणिग्रहणमित्यादि । एवं मन्यते । प्रतिनियतविषया हि शब्दशक्तयो भवन्ति यस्मादुपपूर्वो यमिरात्मनेपदान्त एवंविध एव स्वीकारे वर्त्तते । नतु सर्वस्मिन् । तस्मात् पाणिग्रहणात्मकमेव स्वीकरणं गृह्यते । उपयच्छत इति पूर्ववद् यच्छादेशः ।

## ५७ । ज्ञाश्रुस्मृदृशां सनः ।

त्रिभिः सूत्रैरिति । अपह्नवे ज्ञ इत्यादिभिः । धर्मं जिज्ञासत इति । ज्ञा अवबोधने । सन् । द्विर्वचनम् । अभ्यासस्य ह्रस्वत्वम् । सन्यत (७।४।७९) इतीत्त्वम् । शुश्रूषत इति । श्रु श्रवणे । इको झलिति (१।२।९) सनः कित्त्वम् । श्र्युकः किती (७।२।११) तीट् प्रतिषेधः । अज्झनगमांसनीति (६।४।१६) दीर्घः । सुस्मूर्षत इति । स्मृ आध्याने । पूर्ववत् कित्त्वादुदो (७।१।१०२) ष्ठ्यपूर्वस्येत्युत्त्वम् । रपरत्वम् । दिदृक्षत इति । हलन्ताच्चेति (१।२।१०) कित्त्वम् । ततश्च व्रश्चादिना (८।२।३६) षत्वम् । षढोः कः (८।२।४१) सीति कत्वम् ।

## ५८ । नानोर्ज्ञः ।

पूर्वेणेति । अनन्तरसूत्रप्राप्तं यत् तत् प्रतिषिध्यते । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति कृत्वा । तथाचेत्यादि । यस्मादनन्तरसूत्रेणात्मनेपदं यत् प्राप्नोति तस्यायं प्रतिषेधः सम्पद्यत एवं सति सकर्मकस्यैवायं प्रतिषेधः । अनन्तरसूत्रेण सकर्म्मकादात्मनेपदविधानात् । अकर्मका च्चकर्मकाच्चेत्यनेन (१।३।४५) प्रागेवात्मनेपदं विहितमिति । अनन्तरातीतो योगः सकर्मकार्थो विज्ञायते । यतश्चैवं तेनाकर्मकात् पूर्ववत् सन (१।३।६२) इत्यात्मनेपदं भवत्येव । औषधस्यानुजिज्ञासत इति ।

## ५९ । प्रत्याङ्भ्यां श्रुवः ।

उपसर्गग्रहणञ्चेदमिति । कथं श्रुव इति ? विशेषणविशेष्यभावसम्बन्धे षष्ठी । तेनायं सम्बन्धो भवति शृणोते यौ विशेषणभूतौ प्रत्याङौ तत्-

र्वोष्ठुव: सम्बन्धात् समन्तादात्मनेपदं न भवति। उपसर्गादेवार्थद्वारेण शृणोतेर्विशेषणभूताविति सामर्थ्यादुपसर्गयोर्ग्रहणम्। देवदत्तं प्रतिशुश्रूषत इति। प्रतिशब्दस्य लक्षणेत्थम्भूताख्यानेत्यादिना ( १।४।९० ) लक्षणे कर्मप्रवचनीयसंज्ञा। तेन प्रतिना देवदत्त एव सम्बध्यते। न धात्वर्थ इति।

## ६०। शदे: शित:।

यदि शदे: शित इति व्यधिकरणे एते पञ्चम्यावित्यभ्युपगम्यैवं व्याख्यायते शदे: परो य: शित् तस्मादात्मनेपदं भवतीति तदा सार्वधातुकाश्रयत्वाच्छित: प्रागेव तदुत्पत्तेर् धातो: शेषत्वादस्य लावस्थायां परस्मैपदं स्यात्। ततस्तन्निमित्तक: शिद्विकरण:। तथाच विहितमिदानीं परस्मैपदमशक्यं निवर्त्तयितु मित्यात्मनेपदाभाव: स्यादित्यालोच्यान्यथा व्याचिख्यासुराह शदिर्य: शिदिति। एतेन शदे: शित इति समानाधिकरणे एते पञ्चम्याविति दर्शयति। कथं पुन: शदि: शिद्भवति ? यावता विकरणस्य शकार इत्संज्ञक इत्संज्ञासम्बन्धी नतु शदेरित्यत आह शिद्भावीति। भाविशब्दोऽयं भविष्यति (३ ३।३) गम्यादय इति भविष्यत्कालविषय:। शिद्भावीति। यत: शिद् भविष्यति स शिद्भावी। एतदुक्तं भवति। शिन्निमित्तत्वादुपचारेण शदि: शिदित्युक्तमिति। भवति हि कारणे कार्य्योपचारात् तथा व्यपदेश:। यथा नड्वलोदकं पादरोग इति। शितो वा सम्बन्धीति। एतेन शित इत्यस्य षष्ठ्यन्ततां दर्शयति। क: शदे: शित् सम्बन्धी ? य स्तस्य प्रकृति:। प्रागपि शित: शदेस्तत्प्रकृतित्वमस्त्येवेति शित्प्रकृते: शदेरात्मनेपदं भवति। शीयते इति। पाघ्रादिसूत्रेण (७।३।७८) शीयादेश:।

## ६१। म्रियतेर्लुङ्लिङोश्च।

नियमार्थं वचनमिति। म्रियतेर्लुङ्लिङो: शित एव यथा स्यात्। यद्येवं ङिद् ग्रहणं किमर्थम् ? यावतान्यत्रात्मनेपदेन न भवितव्यमिति ? उच्यते। स्वरार्थ मुपदिश्यते। मा हि मृतेति लुङि तास्यानुदात्तेन्ङिदुपदेशाल्ल सार्वधातुकस्यानुदात्तत्वे ( ६।१।१८६ ) कृते धातोरन्तोदात्तत्वं भवति। तिङ्ङतिङ (८।१।२८) इति निघातोऽत्र हि चेति (८।१।३४) प्रतिषिध्यते।

अड़ागमोऽपि न माङ्योग इति (६।४।७४)। अमृतेति। ह्रस्वादङ्गादिति (८।२।२७) सिचो लोपः। मृषीष्टेति। आशिषि लिङ्। तस्य लिङाशिषी (३।४।११६) तत्रार्द्धधातुकत्वाद्विकरणाभावः। सुट् तिथोरिति (३।४।१०७) सुट्। वलि (६।१।६६) यलोपः। म्रियत इति। तुदादित्वाच्छः। रिङ् (७।४।२८) शयग्लिङ्क्ष्विति रिङादेशः। अचि श्नुधात्वितरादिने (६।४।७७) यङ्। मरिष्यतीति। ऋद्धनोः (७।२।७०) स्य इतीट्।

## ६२। पूर्ववत् सनः।

पूर्ववदिति। तेन तुल्यं क्रिया चेद्वतिरिति (५।१।११५) वतिः। पूर्वशब्दः सम्बन्धिशब्दत्वादवधिमपेक्षते। स चावधिः श्रुतत्वात् सन्नेव विज्ञायत इत्याह सनः पूर्वो यो धातुरिति। यद्येवमवधिभावोपगम एव सन्ग्रहणस्योपयुक्तत्वात् सन्नन्तादात्मनेपदं भवतीति। न तत्रैतल्लभ्यते। कुतस्तर्हि स्यात्। धातु-मात्रात्। नैतदस्ति। एवं ह्यात्मनेपदं परस्मैपदानुक्रमणमनर्थकं स्यात्। अथ प्रत्ययान्तात् स्यात्? एवमपि सन्ग्रहणमनर्थकं स्यात्। पूर्ववत् प्रत्यया-दिति वाच्यं स्यात्। तस्मात् प्रत्यासन्नं सनं त्यक्त्वा न युक्तान्यस्याश्रुतस्य परिकल्पनेति सन्नन्तादेव भवतीति विज्ञायते। येनेत्यादिना वत्यर्थमाचष्टे। तदेव निमित्तमिति। अनुदात्तेत्त्वं ङित्त्वञ्च धात्वन्तरावस्थायामपि सन्नन्ताद् वचनसामर्थ्यान् निमित्तम् भवति। आसिसिषत इति। इटि कृते ऽजादेर्द्वि-तीयस्येति (६।१।२) सिशब्दस्य द्विर्वचनम्। निविविक्षत इति। विश प्रवेशने। पूर्ववत् कित्त्वषत्वकत्वानि। आचिक्रंसत इति। आत्मनेपदनिमित्तत्वात् स्नुक्रमोरनात्मनेपदनिमित्त (७।२।३६) इतीण् न भवति। शिशत्सति। मुमूर्षतीति। अत्र सनो यः पूर्वो भाग स्तस्यात्मनेपदनिमित्तत्वमस्ति। शीयते म्रियत इत्यात्मनेपददर्शनात्। तत आत्मनेपदेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यादतस्तां निराकर्त्तुमाह इह न भवतीत्यादि। किं कारणमित्याह नहीत्यादि। किं तर्हि? शिदाद्यपीतीति। शिच्छब्देनात्र शित्त्वं शित्-सम्बन्धित्वञ्चोक्तम्। आदिशब्देन लुङ्लिङोर्ग्रहणम्। तच्चेह नास्ती ति न ह्यत्र सनः पूर्वभागस्य शित्त्वं शित्सम्बन्धित्वं वास्ति। शित्प्रत्यय-स्यास्मिन् विषये ऽत्यन्तासम्भवात्। नापि म्रियतेः परौ लुङ्लिङौ स्तः।

तस्मान्नेह प्रदिम्नियत्योरात्मनेपदनिमित्तत्वमस्तीति न भवत्यात्मनेपदम्। इह तर्हि कस्मान्न भवति? अनुचिकीर्षति। पराचिकीर्षतीति? करोतेर्हि गन्धनादिष्वर्थेष्वात्मनेपदं विहितम्। अतस्तद्विवक्षायां सन्नन्तादपि तेन भवितव्यमित्याह यस्य चेत्यादि। गन्धनादिष्वर्थेषु पूर्वत्रासन्नन्तावस्थाया- मनुपराभ्यां कृञ (१।३।७९) इत्यनेन परस्मैपदविधानात् करोतेरात्मनेपदाभावः क्रियते। तस्मादाभ्यां सन्नन्तादप्यात्मनेपदनिमित्ताभावान्न भवति। अथ जुगुप्सते मीमांसत इत्यत्र कथमात्मनेपदम्? यावता पूर्ववत् सन इत्युच्यते। न च गुपादिषु सनः प्रागेवात्मनेपदं भवतीति। अतः पूर्ववदित्यतिदेशाभावान्न भवितव्यमात्मनेपदेनेत्यत आह इहेत्यादि। जुगुप्सत इति गुप्तिज्किद्भ्यः सन्निति (३।१।५) सन्। मीमांसत इति मानबधेत्यादिना (३।१।६) सन्। अभ्यासस्य सन्यत (७।४।७९) इतीत्त्वे दीर्घः। कथं पुनरिहानुदात्तङित (१।३।१२) आत्मनेपदम्? यावता गुपादावयवे ऽनुदात्तेत्त्वं लिङ्गं न जुगुप्सादौ समुदाय इत्यत आह अवयवे कृतमित्यादि। यथा गोः कर्णादाववयवे कृतं लि समुदायस्य विशेषकं भवति तथा गुपादाववयवे कृत मनुदात्तेत्त्वं समुदायस्य जुगुप्स इत्येवमादे र्विशेषकं भवति। यद्येवं गोपयति तेजयति सङ्केतयतीत्येव- मादावपि प्राप्नोति। सत्यम्। स्यादेतत्। अवयवे कृतं लिङ्गं तस्य समुदायस्य गोर्विशेषकं भवति यं समुदायं सोऽवयवो न व्यभिचरति। सन्नन्तं पुनर्न व्यभि- चरति। णिजन्तन्तु व्यभिचरतीत्यतोऽत्रात्मनेपदेन न भवितव्यम्। वार्त्तमेतत्। सन्नन्तमपि व्यभिचरतीति। विनापि तेन गोपयतीत्यादौ सम्भवात्। तस्मात् समुदायं यं गुपादिर्न व्यभिचरति तस्यासम्भवात् सर्वस्य गुपादाववयवे कृतमनु- दात्तेत्त्वं लिङ्गं समुदायस्य विशेषकं भविष्यति। ततश्च गोपयतिप्रभृतिभ्यो- ऽप्यात्मनेपदं प्राप्नोतीत्येव। एवं तर्हि निगरणचलनार्थेभ्यश्चेत्यत्र (१।३।८७) चकारोऽनुक्तसमुच्चयार्थः क्रियते। तेन गुपादिभ्यो ण्यन्तेभ्यः परस्मैपदमात्मने- पदापवादो भविष्यति।

## ६३। आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य।

आम्प्रत्ययवदिति। तत्र तस्येवेति (५।१।११६) षष्ठीसमर्थाद्वतिः।

कृञोऽनुप्रयोगस्येति समानाधिकरणे षष्ठी। ईक्षाञ्चक्र इत्यादि। ईक्ष दर्शने। ईह चेष्टायाम्। ऊह वितर्के। लिट्। इजादेरित्यादिनाम् (३।१।३६)। आम (२।४। १) इति लेर्लुक्। प्रातिपदिकत्वात् सुप् प्राप्तः। सुः। स्वरादित्वादव्ययत्वम्। अव्ययत्वात् सुब्लुक्। कृञ्चेत्यादिना (३।१।४०) कृञो लिट्परस्यानुप्रयोगः। अकर्त्रभिप्रायार्थोऽयमारम्भ इति ब्रुवता विध्यर्थमेतदित्युक्तं भवति। तत्रास्मिन् विध्यर्थे यो दोषस्तमुद्भावयितु माह यदीत्यादि। उदुब्जाञ्चकारेति। उब्ज आर्जवे। (३।४।८२) उत्पूर्वात् लिट्। पूर्ववदाम्। परस्मैपदानामित्यादिना (३।४।८२) तिपो णल्। उदुम्भाञ्चकारेति। उभ उन्भ पूरणे। उभयमित्यादिना परिहारः। कथमिति? एकेन प्रयत्नेनाशक्यमेतदुभयं कर्त्तुमित्यत आह पूर्ववदित्यादि। नैवात्रैको यत्नः; किन्तर्हि? द्वौ। आम्प्रत्ययवदित्येको यत्नः। पूर्ववद्ग्रहणमनुवर्त्तमानं द्वितीयः। तत्र पूर्वेण यत्नेन विधिः क्रियते। इतरेण नियमः। यद्यनुप्रयोगस्य कृञ आत्मनेपदं भवति पूर्ववदेव। नान्यथा। तेनोदुब्जाञ्चकारेत्येवमादौ न भवति। नह्युब्जादीनामात्मनेपदं सम्भवति परस्मैपदित्वात्। ईक्षामासेति। आम्। अस्तेरनुप्रयोगः। ईक्षाम्बभूवेति। भवतेरः (७।४।७३)। कृञ्चेत्यत्र (३।१।४०) करोतेरेव ग्रहण मित्यभिप्रायेणाह कथं पुनरित्यादि। कृञिति। प्रत्याहारग्रहणमित्यादि। तत्र प्रत्याहारेऽस्तिभवत्योरपि सन्निवेशः। अतस्तयोरप्यनुप्रयोगो भवतीति भावः। यद्येवं सम्पदोऽप्यनुप्रयोगः प्राप्नोति। तस्यापि तत्र सन्निवेशोऽस्त्येव। अभिविधौ सम्पदा चेति (५।४।५७) वचनात्। सत्यपि सन्निवेशे नासौ प्रत्याहारग्रहणेन गृह्यत इत्यदोषः। यथा तस्याग्रहणं तथोत्तरत्र प्रस्तावान्तरे प्रतिपादयिष्यामः। अथाम्प्रत्ययवदिति किम्? असति हि तस्मिन्ननुप्रयोगमात्रस्यात्मनेपदं स्यात्। देवदत्तः करोतीति। अत्रापि पूर्व्ववदित्यनुवर्त्तते। तथापीह स्यात्। ईहते। करोतीति। आम्प्रत्ययवदित्युच्यमाने प्रत्यासत्ते राम एवानुप्रयोगस्येति गम्यते। नानुप्रयोगमात्रे। तेनातिप्रसङ्गो न भवति।

## ६४। प्रोपाभ्यां युजेरयज्ञपात्रेषु।

युज समाधावित्यस्यानुदात्तेत्त्वात् सिद्धमात्मनेपदमित्यत स्तस्येह ग्रहणम-

युक्तमित्यभिप्रायेणाह युजिर् योग इति। प्रयुङ्क्त इति। रुधादित्वाच् श्नम्। श्नसोरल्लोप (६।४।१११) इत्यकारलोपः। चोःकुरिति (८।२।३०) कुत्वं जकारस्य गकारः। खरि चेति (८।४।५५) चर्त्वं ककारः। नश्चेत्यादिनाऽनुस्वारः (८।३।२४)। अनुस्वारस्य ययि परसवर्ण इति (८।४।५८) ङकारः। स्वराद्यन्तोपसृष्टादिति वक्तव्यमिति। स्वरोऽज् आदिरन्तो वा यस्य स स्वराद्यन्तः। तदुपसृष्टात् तत्सम्बन्धाद् युजेरात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। इह सूत्रे प्रशब्दोऽजन्तोपसर्गलक्षणार्थः। उपशब्दोऽजाद्युपलक्षणार्थः। तेन सर्वेणाजन्तेनाजादिना चोपसर्गेण च युक्ताद् युजेरात्मनेपदं भवतीति। स्वराद्यन्तोपसृष्टादिति किम्? निर्युनक्ति।

## ६५। समः क्ष्णुवः।

अकर्मकादिति तत्रानुवर्त्तत इति। सकर्मकादपि क्ष्णुव आत्मनेपदमिष्यत इति मन्यते। अतएव सकर्मकस्योदाहरणमुपन्यस्तम्। संक्ष्णुते शस्त्रमिति। अदादित्वाच्छपो लुक्। संक्ष्णुवाते इति। अचि श्नुधात्वित्यादिनोवङ् (६।४।७७)। संक्ष्णुवत इति। पूर्व्ववददादेशः।

## ६६। भुजोऽनवने।

अवनप्रतिषेधेनेत्यादि। अवनं पालनम्। तत्प्रतिषेधेन रौधादिकस्य भुजेर्ग्रहणं विज्ञायते। न तौदादिकस्य भुज कौटिल्य इत्यस्य। यथैव हि सवत्सा धेनुरानीयतामित्युक्ते यस्या हि वत्सेन सह सम्बन्धः सम्भवति सैव गोधेनुरानीयते न महिष्यादिधेनु स्तथेहाप्यवनप्रतिषेधेन यस्य भुजोऽनवने वृत्तिः सम्भवति स एव रौधादिकः प्रतीयते। तस्मात् तस्यैव ग्रहणं विज्ञायते। तेन निर्भुजति विभुजतीति तौदादिकस्यात्मनेपदं न भवति।

## ६७। णेरणौ यत् कर्म्म णौ चेत् स कर्त्ताऽनाध्याने।

आरोहन्ति हस्तिनं हस्तिपका इति। अणौ कर्मप्रदर्शनार्थमेतदुक्तम्। इदं त्वत्रोदाहरणम्। आरोहयते हस्ती स्वयमेवेति। आरोहन्ति हस्तिनं हस्तिपका इत्यत्राङ्पूर्वस्य तु रुह बीजजन्मनि प्रादुर्भाव इत्यस्य द्वे क्रिये

वाच्ये। न्यग्भवनं न्यग्भावनञ्च । तत्र न्यग्भवनस्य हस्ती कर्त्ता। न्यग्भावनस्य हस्तिपका इति। न्यग्भवन्तं हस्तिनं न्यग् भावयन्तीत्यर्थः। स यदा तु सुशिक्षितत्वात् सुविधेयत्वाच्च न्यग्भावनक्रियायामत्यन्तमानुकूल्यं प्रतिपद्यते हस्ती स्वयमेव तदासौ हस्ती हस्तिपकान् प्रति प्रयोजकत्वेन विवक्ष्यते। हस्तिपकास्तु प्रयोज्यत्वेन। हस्ती हस्तिपकान् प्रयुङ्क्ते मामारोहतेति ततश्च प्रयोज्यप्रयोजकभावे विवक्षिते हेतुमण्णिच्। एवमुत्तरत्रापि कर्मणः कर्तृत्वस्य विवक्षितत्वात् प्रयोजकभावविवक्षायां णिज् विधेयः। ततस्तस्मिन्नुत्पन्ने यदा निर्ज्ञातस्वरूपत्वाच्चरितार्थत्वात् प्रयोज्या न विवक्ष्यन्ते तदा निवृत्तत्वात् प्रयोज्यप्रयोजकभावस्य न्यग्भवनमात्रे वृत्तिर्वर्त्तते। अत्रेदमुदाहरणमारोहयते हस्ती स्वयमेवेति। तथाहि यदेवाण्यन्ते कर्मासीत् स एव ण्यन्ते हस्ती कर्त्ता भवति। न च प्रयोज्यप्रयोजकभावे निवृत्तेऽपि णिचो निवृत्तिर्भवति। निवृत्तिकारणाभावात्। यथैव हि देवदत्तस्य व्यापारे निवृत्तेऽपि पचिः पाकान्न निवर्त्तते पच्यत ओदनः स्वयमेवेति तथेहापि निवृत्ते प्रयोज्यप्रयोजकव्यापारे णिचो निवृत्तिर्न भवतीति वेदितव्यम्। सिञ्चन्तीत्यादि। अत्रापि सिच्यमानो हस्ती कर्म यदा सुशिक्षितत्वात् सुविधेयत्वाच्च सेचनक्रियां प्रति प्रकृष्टमानुकूल्यं भजते तदा तस्य प्रयोजकत्वे विवक्षिते हस्तिपकानाञ्च प्रयोज्यत्वे णिच्। तत्र कृते पूर्ववत् प्रयोज्येष्वविवक्षितेषु यदेवाण्यन्ते कर्म स एव ण्यन्ते कर्त्ता भवति। पश्यन्तीत्यादि। अत्रापि दृश्यमानस्य राज्ञः दर्शनक्रियाया मतिशयेनानुकूल्यभावोपगमनात् प्रयोजकत्वे विवक्षिते भृत्यानाञ्च प्रयोज्यत्वे णिच्। तत्र विहिते पूर्ववत् प्रयोज्याविवक्षायां यदेव दृशेरण्यन्ते कर्म राजा स एव ण्यन्ते कर्त्ता। क्रियापि च सर्वेष्वेतेषूदाहरणेषु यैवाण्यन्तावस्थायां सैव ण्यन्तेऽपि। सत्यपि च णिचि प्रयोज्यप्रयोजकभावस्य निवर्त्तितत्वात् क्रियान्तरस्य चानुत्पत्तेः। गणयतीत्यादि। गण संख्याने चुरादावदन्तः पठ्यते। ततो णिच्। अतो लोप (६।४।४८) इत्यकारलोपः। तस्य पूर्वविधौ कर्त्तव्ये स्थानिवद्भावादत उपधाया (७।२।११६) इति वृद्धिर्न भवति। गणयति गोगणं गोपालकः। गणयति गणः स्वयमेवेति। अत्र स गण्यमानो यदा गणनं प्रत्यानुकूल्यं भजमानः प्रयोजकत्वेन विवक्ष्यते गोपालकस्तु

प्रयोज्यत्वेन तदा हेतुमण्णिच्। तस्मिन् कृते पूर्ववत् प्रयोज्याविवक्षायां यदेव कर्म स एव कर्त्ता भवति। तथाप्यणाविति वचनादात्मनेपदं न भवति। नहि गणः प्रागणौ कर्मासीत्। किं तर्हि ण्यन्त एव। ननु चाणावकर्म्म-काच्चित्तवत् (१।३।८८) कर्तृकादित्यत्राणाविति किम्? चेतयमानं प्रयोजयति चेतयत इति केचित् प्रत्युदाहरन्तीत्युक्त्वा वृत्तिकारो वक्ष्यति तदयुक्तम्। हेतुमण्णिचो विधिः। प्रतिषेधोऽपि प्रत्यासत्त्या तस्यैव न्याय्य इति। तच्चेत् सत्यं। गणयति गोगणं गोपालको गणयति गोगणः स्वयमेवेत्येतदपि प्रत्युदाहरणमयुक्तमेव स्यात्। नैतदस्ति। भेदस्याविवक्षितत्वात्। यदि हि भेदो विवक्ष्यते तदा हेतुमण्णिचो विधिरिति प्रतिषेधोऽपि प्रत्यासत्ते स्तस्यैव स्यात्। नहि विप्रकृष्टस्य चुरादिणिचः। नचेह भेदो विवक्षितः। णेरिति जातिनिर्देशात्। तस्माण् णिज्मात्राद्विधिः। अतः प्रतिषेधोऽपि णिज्मात्रस्यैव स्यादिति युक्तमेतत् प्रत्युदाहरणम्। अणावकर्मकादित्यादौ ( १ ३।८८ ) सूत्रे ऽणाविति हेतुमण्णिच एव ग्रहणम्। अतएव हेतुमण्णिच एव विधिरिति प्रत्यासत्तेस्तस्यैव प्रतिषेधो युक्तः। यथा तत्र हेतुमण्णिचो ग्रहणं तथा तत्रैव प्रतिपादयिष्यामः। न चात्र तथाविधं किञ्चिन्निबन्धनमस्ति यतो-णेरिति हेतुमण्णिच एव ग्रहण मवसीयते। चौरादिकानामप्यनित्यण्यन्तत्वात्। विभाषितणिचां च केषाञ्चिद् विद्यमानत्वात्। येषामण्यन्तानामेव यत् कर्म तेषामेव चुरादिणिजन्तानां तस्यैव कर्तृत्वसम्भवात्। तस्मादिह णेरिति णिज्-मात्रस्य ग्रहणं सूत्रकारस्याभिमतमिति लक्ष्यते। अथ गणयति गोगणः स्वय-मेवेत्यत्र कर्मवत् कर्म्मणा तुल्यक्रिय (३।१।८७) इत्यतिदेशात् कस्मादात्मनेपदं न भवति? कर्तृस्थभावकत्वात्। अत्र हि गणयतिरयं संख्यानिमित्ते परिच्छेदे ज्ञानविशेषे वर्त्तते यस्य हि संख्यानमित्याख्या। स च ज्ञानविशेषः कर्त्तरि वर्त्तते। तत्र तस्य समवेतत्वात्। न कर्म्मणि। तस्मात् कर्तृस्थभावकत्वादिहात्मनेपदं न भवति। कर्मस्थक्रियाणां कर्मस्थभावकानाञ्च कर्म्मवद्भावातिदेशेनात्मने-पदमिष्यते। नेतरेषाम्। लुनाति दात्रेणेत्यादि। दात्रस्य तीक्ष्णतया करण-स्यापि सतो विशिष्टव्यापारभूतत्वाल्लावकपुरुषान् प्रति प्रयोजकत्वविवक्षायां णिच्। णौ चेद् ग्रहण मित्यादि। इह णौ चेदिति न वक्तव्यम्। णेरणौ यत्

कर्म स कर्त्तेत्येतावत्युच्यमाने ऽणौ यत् कर्म तस्य सामर्थ्याण् णावेव कर्त्तृत्वं विज्ञायत इति किं णौ चेदित्यनेन ? तदैतस्मौ चेद्ग्रहणं क्रियमाणं समानक्रियार्थं विज्ञायते यदि यैव कर्मावस्थायां क्रिया सैव कर्त्त्रवस्थायां भवतीति। एतदुक्तं भवति । यस्यैव धात्वर्थस्य यत् कर्म तस्यैव यदि तत् कर्त्तृत्वेन विवक्ष्यत एवमात्मनेपदं भवति नान्यथेति। तेनारोहन्ति हस्तिनं हस्तिपकाः। आरोह्यमाणो हस्ती भीतान् सेचयति मूत्रेणेत्यत्र सेचयते रात्मनेपदं न भवति। भिन्नत्वात् क्रियायाः तथाहि न्यग्भावनक्रियायां प्राग् घस्ती कर्मत्वेन विवक्षितः। सेचनक्रियायां तूत्तरकालं कर्त्तृत्वेन। यत्सग्रहणमनन्यकर्मार्थमिति। ऽण्यन्ते यत् कर्म ण्यन्तेऽपि यदि तदेव कर्म कर्त्ता भवति न कर्मान्तरमेवमात्मनेपदं भवति। नान्यथा। ननु विप्रतिषिद्धमेतत्। एकस्यैवैकदा कर्मत्वं कर्त्तृत्वञ्च। नैतद् विप्रतिषिद्धम्। एको हि वस्तुधर्म ऽपरश्च विवक्षाधर्मः। स्वातन्त्र्यविवक्षायां कर्त्तृत्वस्य विवक्षाधर्मत्वात्। वस्तुधर्मत्वाच्चारुह्यमाणतया कर्मत्वम्। स्थलमारोहयति मनुष्यानिति। अत्र कर्मान्तरमप्यस्ति। मनुष्यानिति न केवलं हस्त्येवेति न भवत्यात्मनेपदम्। यद्येवं भीतान् सेचयति मूत्रेणेत्यत्र कर्मान्तरसद्भावादात्मनेपदं न भविष्यति। अस्ति ह्यत्रापि कर्मान्तरम्। भीतानिति। अतो न वक्तव्यं समानक्रियार्थं णौ चेदित्येतत्। नैतदस्ति। नहि भीतानिति सेचयतेः कर्म। किं तर्हि ? आरोहयतेः। भीतानारोहयमाणः सन् मूत्रेणात्मानं सेचयतीत्यर्थः। अयुक्तमेतत्। एवं ह्यारोहयमाण इत्यत्रात्मनेपदं शानच् न स्यात्। कर्मान्तरसद्भावात्। नैवं तर्हि शानजेवात्र विहितः। किं तर्हि ? ताच्छील्यवयोवचनशक्तिषु (३।२।१२८) चानश्प्रत्ययः। तत्र यदि समानक्रियार्थं णौचेद्ग्रहणं न क्रियेत तदा यदेवारोहयतेरण्यन्ते कर्म स एव हस्ती सेचयतेर्ण्यन्ते कर्त्ता भवतीति तदेव कर्म स एव कर्त्तेति स्यादेवात्मनेपदम्। तस्माण् णौ चेद् ग्रहणं समानक्रियार्थं कर्त्तव्यम्। कर्त्तेति किमिति ? कर्त्तर्य्येवात्मनेपदमनेन विधीयते। भावकर्मणोस्तु भावकर्मणोरित्यनेनैव सिद्धत्वात्। तस्मात् सामर्थ्यलब्धः कर्त्तेत्यभिप्रायः। कर्त्तृग्रहणं यदेवाण्यन्ते कर्म तस्मिन्नेव ण्यन्ते कर्त्तृत्वेन विवक्षिते सत्येवात्मनेपदं भवति नान्यथेत्येवमर्थं क्रियत

इति दर्शयितुमाह आरोहन्ति हस्तिनं हस्तिपकाः। तानारोहयति महामात्र इति। अत्र यदेवाण्यन्ते हस्ती कर्म न तदेव ण्यन्ते कर्त्तृत्वेन विवक्षितम्। किं तर्हि महामात्रः। तेनात्मनेपदं न भवति। एतच्च कर्त्तृग्रहणाल्लभ्यते। तस्यानन्यार्थत्वात्। ननु च यत्सग्रहणमनन्यकर्मार्थमित्युक्तम्। इहच कर्मान्तरं हस्तिपकाख्यमस्त्यतो यत्सग्रहणादेव न भविष्यति तत् किमेतन्निवृत्त्यर्थेन कर्त्तृग्रहणेन? नैतदस्ति। एवं सति हि कर्त्तृग्रहणे ऽणौ यत् कर्म णौ चेत् स कर्त्ता तदेव कर्म कर्त्ता भवतीत्यस्यार्थस्य च प्रतिपादनाय क्रियमाणं यत्सग्रहणमर्थवद् भवतीति। असति तु कर्त्तृग्रहणे तत्र कर्त्तव्यमेव स्यादिति कुतः समानकर्मता प्रतीयते? स्मरति वनगुल्मस्येति। अणौ कर्मप्रदर्शनार्थमेतत्। कर्मविषयेण शेषत्वेन विषयिणा विषयं दर्शयितुमुक्तम्। नन्वत्र न कर्मास्ति तस्य शेषत्वेन विवक्षितत्वात्। तथाहि शेष इत्यनुवर्त्तमाने ऽधीगर्थेत्यादिना (२।३।५२) कर्मणि शेषत्वेन विवक्षिते षष्ठीयं विहिता। तस्मादेवं दर्शयितव्यं स्मरति वनगुल्ममिति। अथवा यद्यपि तच्छेषत्वेन विवक्षितं तथापि स्मर्य्यमाणत्वात् तस्य कर्मत्वं वस्तुतोऽस्त्येवेति। स्मरयतीति। स्मृ आध्याने। वनगुल्मस्य प्रयोजकत्वे विवक्षिते णिच्। घटादित्वान् मित्संज्ञा। मितां ह्रस्व (६।४।९२) इति ह्रस्वत्वम्। एनमिति। गतिबुद्धिप्रत्यवसानार्थेत्यादिना (१।४।५२) कर्मसंज्ञायां सत्यां द्वितीया (२।४।३४) टौस्स्वेनेत्येनादेशः। ननुच यत् सग्रहण मनन्यकर्मार्थमिह च कर्मान्तरमस्ति कोकिलः ततश्च कर्मान्तरसद्भावादात्मनेपदं न भविष्यतीति किमेतन्निवृत्त्यर्थेनाध्यानग्रहणेन? नैतदस्ति। आध्यानमात्रं विवक्षित्वेदं प्रत्युदाहरणमुपन्यस्तम्। एनमिति तु वचनं वनगुल्मः कर्त्ता न कोकिल इत्यर्थोपदर्शनपरं वेदितव्यम्। अथवैनमित्यनेन स एव वनगुल्मः परामृश्यते। यदेव कर्म स एव कर्त्तेत्यर्थस्य प्रदर्शनार्थमेनमित्युक्तम्। एनं वनगुल्मं वनगुल्मो स्मरयति। आत्मानमात्मना स्मरयतीत्यर्थः। णिच्युत्पन्ने कोकिलस्य प्रयोज्यस्य विवक्षितत्वान् निवृत्ते प्रयोज्यप्रयोजकभावे स्मरयतेर्ण्यन्तस्य प्रकृत एवार्थो भवति। ननुच स्मरणं चेतनावतां धर्मः। वनगुल्मश्चाचेतनः। तत् कथमसौ स्मरेत्? नैतदस्ति। अचेतनेष्वपि चेतनावद्धर्मोपचारो यथा नदीकूलं पिपतिषतीति। दृहिः कर्त्तृस्थक्रिय

इति। तदर्थस्य त्वग्भावनात्मनो हस्तिपकेषु समवेतत्वात्। दृशिश्च कर्त्तृस्थ भावक इति। तदर्थस्य दर्शनस्य कर्त्तृषु भृत्येषु व्यवस्थितत्वात्।

### ६८। भीस्म्योर्हेतुभये।

हेतुभय इति। हेतोर्भयं हेतुभयमिति। पञ्चमी भयेनेति (२।१।३७) समासः। भीतिर्भयं त्रासः। अनिष्टापाताशङ्का। ततश्चेद् भयं भवति। यदि ततो हेतुसंज्ञकात् प्रयोजकाद् भयं भवत्येवमात्मनेपदं भवति। नान्यथेति। यद्येवं स्मयत्यर्थो न विशेषितः स्यात्। यस्माद् भयं बिभेतेरेवार्थो न स्मयतेः। ततश्च रूपेण विस्माययतीत्येवमादावप्यात्मनेपदं स्यात्। मुण्डो विस्मापयत इत्यादौ न स्यादित्यत आह भयग्रहणमित्यादि। भयग्रहणं हि धात्वर्थोपलक्षणार्थम्। धात्वर्थश्चेद् प्रयोजकाद् भवतीत्ययमर्थो विवक्षितः। तेन विस्मयोऽपि यदि तत एव हेतो भवति। यद्येषोऽर्थो लभ्यत इति स्मयतेरर्थोऽपि विशेषित एव। विस्मय आश्चर्यम्। मुण्ड इति मुण्डगुणोपेतत्वान् मुण्डः। भीषयते इति। ञिभी भये। विभाषा लीयतेरित्यतो (६।१।५१) विभाषाग्रहणानुवृत्ते र्बिभेतेर्हेतुभय (६।१।५६) इति पक्ष आत्त्वम्। भियो हेतुभये (७।३।४०) षुगिति षुक्। विस्मापयत इति। स्मिङ् ईषद्धसने। नित्यं (६।१।५७) स्मयतेरित्यात्त्वम्। अर्त्तिह्रीत्यादिना (७।३।३६) पुक्। कुञ्चिकयैनं भाययतीति। करणादत्र भयम्। न हेतोः प्रयोजकात्। तेनात्मनेपदन्न भवति। षुगप्यत्र न भवति। स हीकारान्तस्यैवेष्यते। भियो-हेतुभये (७।३।४०) षुगित्यत्र भीई इतीकारप्रश्लेषनिर्देशात्। रूपेण विस्माययतीति। अत्र करणादेव विस्मयः। न हेतोः।

### ६९। गृधिवञ्च्योः प्रलम्भने।

### ७०। लियः सम्माननशालीनीकरणयोश्च।

विशेषाभावादिति। कथं पुनर्विशेषाभावः? यावता निरनुबन्धकत्वं सानुबन्धकत्वञ्चानयो र्विशेषोऽस्त्येव। ततश्च निरनुबन्धकग्रहणे न सानुबन्धकस्येत्यनया परिभाषया न लीङो ग्रहणेन भवितव्यम्। तदयुक्त मुक्तं विशेषाभावाद् द्वयोरपि ग्रहणमिति। नैष दोषः। उत्सृष्टानुबन्धको हि लीङ्

त्यन्तो भवति । उत्सृष्टे चानुबन्धे द्वयमेवाभेदकं भवति । अर्थः शब्दान्तरत्वञ्च । तत्रार्थ स्तावदनयोरेक एव । शब्दान्तरत्वमपि नास्ति । शब्दान्तरत्वञ्च प्रकृतिभेदविकरणभेदाभ्यां भवति । नचानयोर्ल्लीयत्योः प्रकृतिभेदः । नापि विकरणभेदोऽस्ति । शब्विकरणत्वात् । यदपि विभाषा लीयते ( ६।१।५१ ) रित्यात्त्वं तदप्युभयो र्भवति । तथाच वक्ष्यति किमिदं लीयते रिति ? लीनातिलीयत्योरागन्तुकेन यका निर्द्देश इति । न्यग्भावनमिति । अभिभवनमित्यर्थः । जटाभिरिति । हेतौ तृतीया । जटा हि पूजाद्यधिगमहेतुभूताः । तथाहि यस्य जटाः सन्ति लोके महानयं तपस्वीत्युपजातसंप्रत्ययैः पूज्यते ।

## ७१ । मिथ्योपपदात् कृञोऽभ्यासे ।

मिथ्योपपदादिति । उपोच्चारितं पदमुपपदं मिथ्याशब्द उपपदं यस्य स तथोक्तः । पदं मिथ्या कारयत इति । अत्रात्मनेपदेनाभ्यासस्य द्योतितत्वान्नित्यवीप्सयोरिति ( ८।१।४ ) द्विर्वचनं न भवति । सापचारमिति । सदोषम् । अनेन मिथ्याशब्दस्यार्थमाचष्टे । स्वरादिदुष्टमिति । पूर्वस्यैवार्थं व्यक्तीकरोति । आदिशब्देन रूपस्य परिग्रहः । असकृदिति । अभ्यासशब्दार्थमुदाहरणेन दर्शयति ।

## ७२ । स्वरितञितः कर्त्रभिप्राये क्रियाफले ।

कर्त्रभिप्राय इति । कर्त्तारमभिप्रैतीति कर्म्मण्यण् ( ३।२।१ ) । यदि सामान्येन यत्र क्रियाफलं कर्त्तारमभिप्रैति तत्रात्मनेपदं तदेहापि स्यात् पचन्ति पाचका यजन्ति याजका इति । तथाह्यत्र क्रियाफलं दक्षिणा याजकान् कर्तॄनभिप्रैति । भृतिश्च पाचकानित्यत आह क्रियायाः फलमित्यादि । प्रधानभूतं यत् फलं क्रियाया स्तदिह गृह्यते । न च दक्षिणादिकं क्रियाफलं प्रधानभूतम् । ततो न भवत्यतिप्रसङ्गः । किं पुनस्तत्प्रधानभूतमित्यत आह यदर्थमित्यादि । एतेन यदुद्दिश्यासौ यागादिक्रियारभ्यते तत् प्रधानभूतमिति दर्शयति । तत् पुनः स्वर्गादि । नतु दक्षिणादि । तथाहि

स्वर्गाद्यर्थं यागादिक्रियारभ्यते । नतु दक्षिणाद्यर्थम् । यदर्थमिति । क्रियाविशेषणमेतत् । यच्छब्देन क्रियायाः प्रधानभूतं फलं निर्दिश्यते । यदर्थः प्रयोजनं यस्य क्रियारम्भस्य तत् तथोक्तम् । कथं पुनः सामान्योक्तौ प्रधानस्य क्रियाफलस्य ग्रहणं शक्यते विज्ञातुम् ? फलग्रहणात् । यदीह फलमात्रस्य ग्रहणमभिप्रेतं स्यात् तदा फलग्रहणमनर्थकं स्यात् । व्यवच्छेद्याभावात् । नास्त्येव हि स विषयो यत्र क्रियाफलं कर्त्तारं नाभिप्रैति । ततश्च कर्त्रभिप्राये क्रियाया इत्येवं ब्रूयात् । एवमप्युक्ते षष्ठ्या क्रियायाः सम्बन्धिनि कर्त्रभिप्राये प्रत्यायिते सामर्थ्यात् फलमेव क्रियायाः कर्त्रभिप्रायं गम्यते । नहि फलादन्यत् क्रियासम्बन्धि कर्त्तारमभिप्रैति । तस्मात् फलग्रहणसामर्थ्यात् प्रधानं फलं गृह्यते । अथवा प्रधानत्वादेव प्रधानं फलं गृह्यते । तथाचोक्तं प्रधाने कार्य्यसंप्रत्ययात् सिद्धमिति । अस्मिन् व्याख्याने फलग्रहणं स्पष्टार्थम् । कर्त्रर्थात्मनेपदविधानात् । प्रत्यासत्तेर्यस्तस्य वाच्यः कर्त्ता यदि तस्यैव तत् फलं भवतीति विज्ञायत इत्याह तचेत्यादि । गतार्थम् । स्वर्गादीति । आदिशब्देनौदनादिकमपि गृह्यते । तथापीत्यादिना दक्षिणादेः फलस्याप्राधान्यं दर्शयति । यदर्थं सा क्रियारभ्यते तत्प्रधानमिष्टोपात्तं फलम् । स्वर्गाद्यर्थञ्च यागादिक्रियारभ्यते । न दक्षिणाद्यर्थम् । अतोऽप्रयोजकत्वात् तदप्रधानम् । तेन यद्यपि तत् कर्त्तारमभिप्रैति तथाप्यात्मनेपदं न भवति । अथाभिप्रग्रहणं किमर्थम् ? विप्रकृष्टेऽपि फले यथा स्यात् । द्विविधं हि क्रियाफलम् । आसन्नं विप्रकृष्टञ्च । तत्रासन्नं यस्य व्यापारानन्तरमेव निष्पत्तिः । विप्रकृष्टन्तूपरतेषु व्यापारेषु यन्निमित्तान्तरमपेक्ष्य कालविप्रकर्षकृतं संस्कारपरिपाकाच्चिराद् भवति । तत्राद्यमासन्नत्वाद् दृष्टत्वादुत्पत्तिं प्रत्यव्यभिचाराच्च प्रधानम् । इतरत् पुनर्विप्रकृष्टत्वादनुमेयत्वात् सम्भवव्यभिचाराच्चाप्रधानम् । सम्भवति हि विप्रकृष्टस्य कालान्तरसम्बन्धिनः फलस्य सहकारिवैकल्याद् विरुद्धप्रत्ययोपनिपाताच्चोत्पत्तिं प्रति व्यभिचारः । यद्यपि तदुद्दिश्य क्रियारम्भात् तदपि प्रधानं तथाप्यविप्रकृष्टफलापेक्षया तस्याप्राधान्यमस्त्येव । तत्र यद्यभिप्रग्रहणं न क्रियेत तदा लुनीत पुनीत इत्यादावेव स्याद् यत्राविप्रकृष्टं क्रियाफलम् । यजत इत्यादौ तु न स्याद्

यत्र विप्रकृष्टं स्वर्गादिवं क्रियाफलम्। प्रधाने कार्य्यसंप्रत्ययात्। अभिप्रग्रहणे तु न दोषः। यस्मादभिराभिमुख्ये वर्त्तते। प्रशब्दस्त्वारम्भे। तेन प्रारम्भमात्रस्याभिमुख्ये फलनिष्पत्तौ बुद्धावाश्रीयमाणायां सर्वत्र सिद्धं भवति। ननु चासत्यभिप्रग्रहणे प्रकृतीनां यजिप्रभृतीनामनुबन्धविशेषासञ्जनादेव विप्रकृष्टेऽपि फले भविष्यति। अन्यथा हि तस्य वैयर्थ्यं स्यात्। न। अभिचारादौ यत्राविप्रकृष्टं फलं दृष्टमस्ति तत्र तस्य सार्थकत्वात्। तस्माद् विप्रकृष्टेऽप्यप्रधाने फले यथा स्यादित्येवमर्थमभिप्रग्रहणं कर्त्तव्यमेव।

## ७३। अपाद्वदः।

न्यायापवादेनेत्यादिना येनाभिप्रायेण धनकामो न्यायमपवदते तं दर्शयति।

## ७४। णिचश्च।

## ७५। समुदाङ्भ्यो यमोऽग्रन्थे।

उद्यच्छतीति। चिकित्सां वैद्य इति। चिकित्साशास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः।

## ७६। अनुपसर्गाज् ज्ञः।

नास्योपसर्गाः सन्तीति बहुव्रीहिः। सकर्मकार्थञ्चेदम्। अन्यत्राकर्मकाच्चेत्येवं ( १।३।४५ ) सिद्धत्वात्।

## ७७। विभाषोपपदेन प्रतीयमाने।

तत्र स्वरितञित (१।३।७२) इत्यादीनि पञ्च सूत्राण्यनुवर्त्तन्ते। कर्त्रभिप्राये क्रियाफले द्योत्य इति। केन द्योत्ये ? प्रकृतत्वादात्मनेपदेनेति विज्ञेयम्। तदुपपदेन द्योतिते न प्राप्नोतीति। उक्तार्थानामप्रयोगात्। एतेनाप्राप्तविभाषेयमिति दर्शयति। ननु च स्वं यज्ञं यजत इत्यत्र स्वशब्दस्योपपद-

त्वत्रोपपद्यते ? यतस्तत्रोपपदं सप्तमीस्थमिति (३।१।८२) द्वितीयधात्वधिकारे यत् सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवति। न च स्वशब्द एवंविध इत्याह समीपे श्रूयमाणमित्यादि। एतेनोपोच्चारितं पदमुपपदमित्यन्वर्थस्योपपदस्य ग्रहणं न पारिभाषिकस्येति दर्शयति। एतच्च पारिभाषिकस्यासम्भवाल्लभ्यते। स्वं यज्ञमित्यादिना पञ्चसूत्र्यां यदाद्यं सूत्रं तत्रोदाहरति। स्वं पुत्रमित्यादिना यद् द्वितीयं तत्र। एवं पञ्चसूत्र्यामुदाहार्य्यमिति। अन्यत्रापीति शेषः। पञ्च-सूत्र्यन्तर्गते सूत्रे यदुदाहृतं ततोऽन्यत्राप्युदाहार्य्यमित्यर्थः। स्वं कटं कारयते कारयति वा। स्वं व्रीहिं संयच्छते संयच्छति वा। स्वं भारमुद्यच्छत्यु-द्यच्छते वा। स्वं वस्त्रमायच्छत आयच्छति वा। स्वं गां जानीते जानाति वेति। एतानि णिचश्चेत्यादिषु ( १ ३।७४ ) सूत्रेषु यथायोगमुदाहरणानि।

## ७८। शेषात् कर्त्तरि परस्मैपदम्।

पूर्वेणेति। अनुदात्तङित ( १।३।१२ ) इत्यादिना सर्व्वत्र प्राप्नोतीति। अशेषेभ्योऽपि। तदर्थमिद मुच्यत इति। सर्वत्र परस्मैपदे प्रसक्ते तन्निवृत्त्यर्थम्। अर्थशब्दस्य निवृत्तिवचनत्वात्। यथा मशकार्थो धूम इति। तदेतेनैतन् नियमार्थ मित्युक्तं भवति। येभ्यो धातुभ्य इत्यादिना शेषत्वं दर्शयति। येन विशेषणेनेति। अनुबन्धादिना। याति वातीत्यनुबन्धशेषस्योदाहरणम्। आविशति प्रविशतीत्युपसर्गशेषस्यार्थशेषस्यापि। एवं गन्धनादिभ्योऽन्यत्र करोतीत्येवमादिकमुदाहरणं वेदितव्यम्। ननु शेषादित्यनेन पञ्चम्य-न्तेन धातुसमानाधिकरणेन धातुरेव विशिष्यते। नार्थः। ततश्चाशेषेषु गन्धनादिष्वर्थेषु परस्मैपदं प्राप्नोति। नैतदस्ति। गन्धनादयो हि प्रकृते-रेवार्थाः। तत्रासौ शेषग्रहणान्निवर्त्तमानस्तानपि निवर्त्तयति। पच्यते गम्यत इति। ननु च यद्यत्र परस्मैपदं स्यात् तदा भावकर्मणोरिति (१।३।१३) वचन मनर्थकं स्यात्। अनवकाशत्वात्। नैतदस्ति। अस्ति हि तस्यावकाशः। कः पुनरसौ ? यो न शेषः। आस्यते शय्यते क्रियत इति। अनुदात्तत्वं ङित्त्वञ्चाशेषः। शेषात् कर्त्तरीत्यत्र कर्तृग्रहणं सामान्यमुपात्तमिति यो देशयेत् तं प्रत्याह कर्मकर्त्तरीत्यादि। कर्त्तरि कर्मव्यतीहार ( १।३।१४ )

इत्यादिना परिहरति। कर्त्तैव यः कर्म्मेति। शुद्धो यः कर्त्ता। कर्मवद्भाव-रहितो यः कर्त्तेत्यर्थः।

७९। अनुपराभ्यां कृञः।

८०। अभिप्रत्यतिभ्यः क्षिपः।

अभिक्षिपतीति। तुदादित्वाच्छः।

८१। प्राद्वहः।

८२। परेर्मृषः।

परिमृष्यतीति। दिवादित्वाच्छ्यन्।

८३। व्याङ्परिभ्यो रमः।

८४। उपाच्च।

उपाच्चेति। चकारः पूर्वापेक्षया समुच्चयार्थः। उपरमति देवदत्तमिति। ननु चोपपूर्वो रमिरकर्मक एव भवति। तथाह्युपपूर्वस्यास्य विनाशोऽर्थो भवति यथोपरतानि धनानि। नष्टानीति गम्यते। निवृत्तिर्वा भवति स्वाध्याया-दुपरमते। निवर्त्तत इति गम्यते। न चास्मिन्नर्थे वर्त्तमानस्य सकर्मकत्व-मुपपद्यते। तत् कथं सकर्मकस्योदाहरणं युज्यत इत्याह उपरमयतीति यावदिति। एतेन ण्यर्थवृत्तिता मुपरमते र्दर्शयन् सकर्मकतामुपपादयतीति। अकर्मको हि धातुर्ण्यर्थे वर्त्तमानः सकर्मको भवति। अथ पुनरण्यन्तस्य ण्यर्थवृत्तितोपपद्यते कथम्? अत आह अन्तर्भावितण्यर्थो रमिरित्यादि। अन्तर्भावितो बुद्ध्यानुवेशितो ण्यर्थः प्रयोज्यप्रयोजकभावो यस्य स तथोक्तः। एवं विधस्य तस्य प्रयोज्येन कर्मणा सकर्मकत्व मुपपद्यत एव। अथ किमर्थं पृथग् योगः क्रियते? न व्याङ्पर्य्युपेभ्यो रम इत्येक एव योगः क्रियतामि-त्याह पृथग्योगकरण मित्यादि। गतार्थम्।

## ८५ । विभाषाऽकर्मकात् ।

यावद्भुक्तमिति । यावदवधारणे ( २।१।८ ) इत्यव्ययीभावः । भुक्तमिति नपुंसके भावे क्त इति (३।३।११४) क्तप्रत्ययः । यावन्ति भोजनानि तावद्भ्यो निवर्त्तत इत्यर्थः । अथवा यावद्भुक्तमिति यथार्थे वीप्साया मव्ययीभावः । भोजनाद् भोजनाद् निवर्त्तत इत्यर्थः ।

## ८६ । बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।

बुध अवगमने । युध संप्रहारे । णश अदर्शने । जनी प्रादुर्भावे । इङ् अध्ययने । च्युङ् ज्युङ् ज्युङ् भ्युङ् प्रुङ् प्लुङ् गतौ । दु द्रु गतौ । सु स्रु गतौ । जनयतीति । जनीजॄषित्यादिना (गणसूत्र १८८) मित्संज्ञा । मितां (६।४।९२) ह्रस्वत्वम् । अध्यापयतीति । क्रीङ्जीनाणाविव्यात्त्वम् (६।१।४८) । पूर्ववत् पुक् । एतद्विषयाण्युदाहरणानीति । प्राप्तिविलयनस्यन्दनविषयाण्ये-तानि प्रावयतीत्याद्युदाहरणानि यथाक्रममित्यर्थः । स्यन्दनं चलनमिति लोके प्रसिद्धम् । ततोऽन्यत्र स्यन्दयतीति बोद्धव्यम् । प्रावयति प्रापयति । द्रावयति विलापयति । स्रावयति स्यन्दयतीत्यर्थः ।

## ८७ । निगरणचलनार्थेभ्यश्च ।

निगारयतीति । गॄ निगरणे । आशयतीति । अश भोजने । भोजयतीति । भुज पालनाभ्यवहारयोः । चलतीति । चल कम्पने । घटादित्वा-न्मित्त्वम् । पूर्ववद्ध्रस्वः । चोपयतीति । चुप मन्दायां गतौ । कम्पयतीति । कपि चलने । अयमपि योगः सकर्मकार्थः । अचित्तवत्कर्त्तृकार्थश्चेति । तद्विपरीतेभ्योऽणावकर्मकाच्चित्तवत् ( १।३।८८ ) कर्त्तृकादित्यनेनैव सिद्धत्वात् । तत्र येषामुदाहरणान्युपन्यस्तानि तेषु चलिकम्पी अकर्मकौ द्वौ । तयोरचित्त वत्कर्त्तृकार्थोऽयं योगः । शेषाणान्तु सकर्मकार्थः । वक्तव्य इति व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । विभाषाऽकर्मकादित्यतो (१।३।८५) विभाषा-ग्रहणं मण्डूकप्लुत्यानुवर्त्तते । सा च व्यवस्थितविभाषा विज्ञायते । तेनादेरन्येभ्यो नित्यं परस्मैपदम् । अदेस्तु न भवत्येव । आदयते देवदत्तेनेति । अत्र

गतिबुद्धीत्यादिना ( १।४।५२ ) कर्मसंज्ञा न भवति। आदिखादिनीवहीनां प्रतिषेध ( १।४।५२, वा ) इति वचनात्।

## ८८। अणावकर्मकाच्चित्तवत्कर्त्तृकात्।

चेतयमानमिति। चिती संज्ञाने। चौरादिकः। अयञ्चाकर्मकश्चित्त-वत्कर्त्तृकश्च। हेतुमण्णिचो विधिरिति। बुधादेः ( १।३।८६ ) सूत्रादिह णिज्ग्रहण मनुवर्त्तते। स च हेतुमण्णिजेव। बुधादिभ्योऽन्यस्य णिचो-ऽसम्भवात्। यतश्च हेतुमण्णिचो विधिः प्रत्यासत्तेस्तस्यैव प्रतिषेधो युक्तः। यथाभूत एव विधिभाक् तथाभूतेनैव प्रतिषेधभाजा भवितव्यम्। प्रत्यासत्तेः। तथाहि ब्राह्मणाः प्रवेश्यन्तामन्यत्रानधीयानेभ्य इत्युक्ते यथाजातीयकानां प्रवेशो विहित स्तथाजातीयकानामेव प्रत्यासत्तेः पर्य्युदासो विज्ञायते। आरोहयमाण इति णेरणादिसूत्रे ( १।३।६७ ) णात्मनेपदम्। यद्यप्यत्र हस्तिपकान् प्रति हस्तिनः प्रयोजकत्वे विवक्षिते णिज् विहित स्तथापि ण्यन्तावस्थायां हस्तिपकाः प्रयोज्यत्वेन न विवक्ष्यन्ते। अन्यथा ह्यणौ यत् कर्म तदेव णौ कर्त्ता न स्यात्। तत्र प्रयोज्यत्वाविवक्षायामारोहयमाण इत्यस्य स्वयमेवारोहयतीत्येषोऽर्थो भवति। तमारोहयमाणं यदान्यः प्रयुङ्क्ते तदा द्वितीयो हेतुमण्णिच्। तदन्ताण्णिच ( १।७.७४ ) श्चेत्यात्मनेपदं भवति। तेनारोहयत इति युक्तमेव प्रत्युदाहरणम्।

## ८९। न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः।

पा इति। लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमित्यनेन पा पान इत्यस्यैव ग्रहणम्। न पा रक्षण इत्येतस्य। दमु उपशमे। यम उपरमे। यसु प्रयत्ने। आङ्पूर्वावेतौ। मुह वैचित्त्ये। परिपूर्वः। रुच दीप्तौ। नृती गात्रविक्षेपे। वद व्यक्तायां वाचि। वस निवासे। आच्छादनार्थस्य वसेर्ग्रहणं पूर्वोक्तादेव हेतोर्न भवति। पूर्वेण योगद्वयेनेति। अनन्तरेणेत्यर्थः। नृति स्खलनार्थोऽपीति। अपिशब्दाच्चित्तवत्कर्त्तृकार्थश्च। पाययत इति। शाच्छासाह्वाव्यावेपां ( ७।३।३७ ) युक्। पातेस्त्वकर्मकत्व-

विवक्षायां परस्मैपदं भवति । पालयतीति । पातेर्लुग् ( ७।३।३७, वा ) वक्तव्यइत्युपसंख्यानाल्लुगागमः । दमयत इति । पूर्ववन् मितां ह्रस्वः । आयामयत इति । ननु चात्रापि मित्त्वे सति ह्रस्वेन भवितव्यमित्यत आह यमोऽपरिवेषण इति । तत्र हि न कम्यमिचमामित्यतो ( गणसूत्र १८१ ) नेत्यनुवर्त्तते । आङिति । ङिद्विशिष्टस्याकारस्योपादानमुपसर्गप्रतिपत्त्यर्थम् । तेनोपसर्गप्रतिरूपको य आकार स्तस्य ग्रहणं न भवति । पादिषु धेट उपसंख्यानमिति । पादिष्विति विषयसप्तमी । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । धेटः पादिविषयस्य परस्मैपदप्रतिषेधस्य प्रतिपादनं कर्त्तव्यम् । योऽयं पादिविषयः परस्मैपदप्रतिषेधः स धेटोऽ पि भवतीत्यर्थः । तत्रेदं प्रतिपादनम् । नेति योगविभागः क्रियते । तेन धेटोऽपि प्रतिषेधो भविष्यति । यद्येवं नेत्यनेनैव सिद्धत्वात् पादीनां ग्रहणमनर्थकम् । नानर्थकम् । पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थत्वात् । धापयेते इति । धेट् पाने । आदेच ( ६।१ ४५ ) इत्यादिनात्त्वम् । पूर्ववत् पुक् । शिशुमिति । गतिबुद्धीत्यादिना ( १।४।५२ ) कर्मसंज्ञायां द्वितीया ।

९० । वा क्यषः ।

लोहितायतीति । अलोहितो लोहितो भवतीत्यत्रार्थे लोहितादिडाज्भ्यः ( ३।१।१३ ) क्यषिति क्यष् । अकृत्सार्वधातुकयोरिति ( ७।४।२५ ) दीर्घः । पटपटायतीति । पटच्छब्दस्य डाचि विषयभूते डाचि बहुलं द्वे ( ८।१।१२, वा ) इत्युपसंख्यानाद्द्विर्वचनम् । अव्यक्तानुकरणेत्यादिना (५।४।५७) डाच् । नित्यमाम्रेडिते डाचीति ( ६।१।१०० ) पटच्छब्दस्य योऽन्त्यस्तकारो यश्च तस्माद् परः पकार स्तयोः पूर्व्वपरयोः पररूपत्वमेकादेशः । कथमिति । न कथञ्चिदित्यर्थः । किं कारणं न लभ्यत इत्यत आह यावतेत्यादि । आत्मनेपदं ह्यनुदात्तङित इत्यादि ( १।३।१२ ) नियतम् । अतो न शक्यते क्यषन्ताद् विज्ञातुमिति । एवं तर्हीत्यादिना परिहरति । विकल्पित मिति । विभाषितं पाक्षिक मित्यर्थः । ननु चात्मनेपदं परस्मैपदेन व्यवच्छिन्नम् । अतोऽसन्निहितत्वान्न शक्यते विज्ञातु मित्याह तच्चेत्यादि ।

कर्त्रभिप्राये क्रियाफले विवक्षित आत्मनेपदे प्राप्ते तदपवादोऽणावकर्मकादित्यादिना ( १।३।८८ ) योगद्वयेन परस्मैपदं विहितम् । तस्यापवादस्यानन्तरसूत्रेण यः प्रतिषेधो विहित स्तेनापवादेन परस्मैपद मपनयतात्मनेपदं सन्निधापितम् । अपवादे ह्यपनीते नियोगत एवोत्सर्गेण भवितव्यम् । तदेवं प्रतिषेधेन सन्निधापित मिहात्मनेपदं सम्बध्यते । यदि तर्ह्यनेन कर्त्तर्य्यात्मनेपदमेव विकल्पेन विधीयते पक्षे परस्मैपदं कथं लभ्यत इत्याह तेनेत्यादि ।

## ९१ । द्युद्भ्यो लुङि ।

ननु च द्युतेरेकत्वाद् बहुवचननिर्देशो नोपपद्यत इत्याह तत्साहचर्य्यादित्यादि । यथैकेन छत्रिणा साहचर्य्यादन्येऽपि तत्सहचारिण श्छत्रिण इत्युच्यन्ते छत्रिणो गच्छन्तीति तथेहापि द्युतिना साहचर्य्यात् श्वितादयोऽपि द्युत इति व्यपदिश्यन्ते । कथं पुनरेकस्य व्यपदेशे सत्ययमभिप्रेतोऽर्थः सम्पद्यत इत्याह बहुवचननिर्देशादित्यादि । एवं हि विनाप्यादिशब्देन तदर्थो लभ्यत इत्येषोऽर्थः सम्पद्यत इति दर्शयति । कृपूपर्य्यन्ता इति । अनेन कृपेः परे ये पठ्यन्ते ते द्युतादयो न भवन्तीत्याचष्टे । एतच्च तदनन्तरं वृत्करणाद् गणपरिसमाप्तेर्लिङ्गाद् विज्ञायते । व्यद्युतदिति । पुषादित्वादङ् । यद्येवं तत एवाङ्विधानात् परस्मैपदं तेभ्यो भविष्यति । किमनेन योगेन ? नैतदस्ति । ज्ञापकाद्धि नित्यं लुङि परस्मैपदं विज्ञायते । किञ्च लुङोऽन्यत्रात्मनेपदं न भवतीति सम्भाव्येत । ननु चानुदात्तेत्करणसामर्थ्यादन्यत्र न भविष्यति । नैतत् । अनुदात्तेत्करणमनुदात्तेतश्च हलादेरिति (३।२।१४९) युजर्थं स्यात् । तस्मात् कर्त्तव्योऽयं योगः । अलुठत् । रुठ लुठ प्रतीघाते ।

## ९२ । वृद्भ्यः स्यसनोः ।

स्यसनोरिति । सती सप्तमीयम् । वर्त्स्यतीत्यादौ सेऽसिचीत्यादेः (७।२।५७) सूत्रादसिचि स इत्यनुवर्त्तमाने गमेरिट् परस्मैपदेष्वित्यतः (७।२।५८) परस्मैपदे च न वृद्भ्यश्चतुर्भ्य (१।२।५९) इतीट्प्रतिषेधः । आत्मनेपदेष्विड् भवत्येव । विवृत्सतीति । हलन्ताच्चेति (१।२।१०) कित्त्वाद् गुणाभावः ।

९३ । लुटि च क्लृपः ।

चकारस्तङीत्यादि । स्यसनोर्वृतादित्वादेव सिद्धे विकल्प इत्यभिप्रायः । एवं तङीत्यादिना विशेषविधानं सामान्यविधानस्य बाधकं भवतीति विज्ञायते । ननु च यदीयं प्राप्तिः क्लपेः पूर्वां प्राप्तिं बाधते वृतादिषु पाठस्य तस्यानर्थक्यं प्रसज्येत । नैतदस्ति । अङर्थत्वात् । ननु च स्यसनोरिति स्वरितत्वमिष्यते । तेन तस्य बाधा न भविष्यतीति । सत्यमेतत् । सूत्रकारस्तु चकारं वैचित्र्यार्थं चकार । न स्वरितत्वार्थम् । कल्प्तेति । पूर्ववदधिकारद्वयानुवृत्तौ सत्यां तासि च क्लृप इतीट्प्रतिषेधः (७।२।६०) । लुटः प्रथमस्य डारौरस (२।४।८५) इति डादेशः । कृपो रो ल (८।२।१८) इति लत्वम् । चिक्लृप्सतीति । पूर्ववत् कित्वाद् गुणाभावः ।

इति श्रीबोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां प्रथमस्याध्यायस्य
तृतीयः पादः समाप्तः ॥ १ ॥ ३ ॥

---

अथ

न्यासापरनाम्नी

# काशिकाविवरणपञ्जिका ।

प्रथमाध्यायस्य ।

चतुर्थः पादः ।

## १ । आ कडारादेका संज्ञा ।

या परेति । यत्र विप्रतिषेधस्तत्र विप्रतिषेधे परमिति (१।४।२) वचनात् परा भवति । अनवकाशा च येति । यस्याः संज्ञायाः क्वचिदवकाशो नास्ति साप्यपवादभूतत्वात् संज्ञान्तरं बाधित्वा प्रवर्त्तते । यद्येव मत एव संज्ञा समावेशो न भविष्यति । तत् किमेकसंज्ञाधिकारेण ? नैतदस्ति । विरोधे हि सत्यपवादभूतत्वं भवति । विप्रतिषेधस्तु विरोध एव । स च विरोध एकसंज्ञाधिकारे सति भवति । नासति । तथाहि यत्रैकसंज्ञाधिकारो नास्ति तत्र विप्रतिषेधो नास्त्येव । यथा प्रत्ययादीनां संज्ञानाम् । तस्मादस्मिन्नधिकारे सति विरोधो भवति । तस्मिंश्च सति विरोधे परमिति वचनात् परा भवति । अपवादभूतत्वादनवकाशा च । तस्मात् कर्त्तव्योऽयमधिकारः । यद्येव भसंज्ञायां भपदसंज्ञयोः समावेशो वक्तव्यः । बाभ्रव्यो धानुष्क इति । बभ्रुशब्दान्मधुबभ्र्वोर्ब्राह्मणकौशिकयोरिति (४।१।१६०) यञ् । तत्र भत्वादोर्गुणः (६।४।१४६) । अङ्गत्वादादिवृद्धिः । तत्र वान्तो यि (६।१।७९) प्रत्यय इत्यवादेशः । धनुःशब्दाच्च धनुः प्रहरणमस्य तदस्य प्रहरणमिति

(४।४।५७) ठक् । इसुसुक्तान्तात्क (७।३।५१) इति कादेशः । अत्र पदत्वादिणः ष इति (८।३।३९) षत्वम् । अङ्गत्वादादिवृद्धिर्न वक्तव्यः । वा क्यष इत्यतो (१।३।९०) वाग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा । तेन क्वचित् संज्ञासमावेशो भविष्यतीति । अन्यत्रेति । लोके च शास्त्रे च । लोके ताव दिन्द्रः शक्रः पुरन्दर इति संज्ञायाः समावेशो दृष्टः । शास्त्रेऽपि प्रत्ययः कृत् कृत्यप्रत्ययः । एव मन्यत्र संज्ञासमावेशादिहापि स्यात् । अतएवैका संज्ञा यथा स्यादिति नियमार्थमेतत् । भिदिच्छिदिरिति । लघुसंज्ञाया अवकाशः । प्रयोजनन्तु भेत्ता छेत्तेति । पुगन्तलघूपधस्येति (७।३।८६) गुणः । शिक्षि-भिक्षिरिति गुरुसंज्ञाया अवकाशः । प्रयोजनन्तु शिक्षा भिक्षेति गुरोश्च हल (३।३।१०३) इत्यकारप्रत्ययः । लघुसंज्ञा त्वत्र प्रयोजनाभावान्न भवति । इहोभयं प्राप्नोति । अततक्षत् । अररक्षदिति । परत्वाद् गुरुसंज्ञैव भवति । तक्षू त्वक्षू तनूकरणे । रक्ष पालने । हेतुमण्णिच् । लुङ् । च्लेश्चङ् । णिलोपः । चङीति (६।१।११) द्विर्वचनम् । यद्यत्र लघुसंज्ञा स्यात् सन्वल्लघुनीत्यादिना (७।४।९३) सन्वद्भावादित्वं स्यात् । तदभावान्न भवतीत्याह सन्वल्लघुनीत्यादि । एष विधिरिति ; सन्वद्भावविधिः । परस्या इदमुदाहरणमुक्तम् । अनवकाशाया-स्तूच्यते । अयन्ते योनिर्ऋत्विय इति । ऋतुः प्राप्तोऽस्येति ऋतोरण् (५।१।१०५)। छन्दसि घसिति (५।१।१०६) घस् । तस्येयादेशे कृते सिति चेति (१।४।१६) पदसंज्ञा प्राप्नोति । यचि भमिति (१।४।१८) भसंज्ञा च । अनवकाशत्वात् पदसंज्ञैव भवति । यदि भसंज्ञा स्यात् तदोर्गुण (६।४।१४६) इति गुणः स्यात् । भसंज्ञायास्त्वौपगवादिष्ववकाशः । आ कडारादितीयतोऽवधेर्ग्रहणं वैचित्र्यार्थम् । अन्यथा ह्या द्वन्द्वादित्येवं ब्रूयात् । नहि द्वन्द्वसंशब्दनात् परेणा कडारादेकसंज्ञाविधानस्य प्रयोजनमस्ति यत एतावतोऽवधेर्ग्रहणमर्थवद् भवति ।

## २ । विप्रतिषेधे परं कार्य्यम् ।

विरोधो विप्रतिषेध इति । विप्रतिषेधशब्दस्य लोके विरोधवाचित्वेन प्रसिद्ध-त्वात् । तथाहि विरुद्धेऽभिहिते वक्तारो वदन्ति विप्रतिषिद्धमिदमुच्यत इति । विरुद्धमिति गम्यते । तस्य विप्रतिषेधस्य विषयं दर्शयितु माह यत्रेत्यादि ।

प्रसज्येते विधीयेते इति प्रसङ्गौ विधी । अन्यार्थाविति । अन्यत्र विषयेऽर्थः प्रयोजनं ययो स्तौ तथोक्तौ । अन्यत्र विषयान्तरे कृतार्थावित्यर्थः । एकस्मिन्निति । अभिन्ने । युगपदेककालम् । स इत्यस्य विप्रतिषेध इत्यनेन सम्बन्धः । स विप्रतिषेधो विप्रतिषिद्धो विप्रतिषेधस्य विषय इत्यर्थः । विप्रतिषेधविषयत्वाद्विप्रतिषेधविषयो ह्यत्र विप्रतिषेधशब्देनोक्तः । विषयिणा विषयं दर्शयितुम् । यस्मान्न प्रसङ्गो विप्रतिषेध उपपद्यते नापि तदाधारः । तुल्यबलविरोध इति । तुल्यबलयोर्विरोधोऽस्मिन्निति बहुव्रीहिः । इदं जातिपक्षमाश्रित्य विवरणं कृतम् । द्रव्यपदार्थपक्षे त्वयं विशेषः । अन्यो भिन्नोऽर्थः प्रयोजनं ययोस्तावन्यार्थाविति । शेषं समानम् । विप्रतिषेध इति च सप्तमी सप्तमीयम् । उत्सर्गापवाद इत्यादि । विप्रतिषेधो यत्रास्ति सोऽस्य योगस्यावकाशः । विप्रतिषेधश्च तुल्यबलयोरेव भवतीति नातुल्यबलयोः । एतत् तु यत्र द्वौ प्रसङ्गावन्यार्थावित्यादिग्रन्थेन तस्य विषयं दर्शयता व्याख्यातम् । नचोत्सर्गापवादादिषु तुल्यबलतास्तीति । ततो नासावुत्सर्गापवादादिरस्य योगस्य विषयः । तेन बलवानेव तत्र भवति । तत्र सामान्येनोत्सर्गः प्रवर्त्तते । यथाऽर्द्धधातुकस्येड् वलादेरिति (७।२ ३५) वलादिसामान्यस्येड् विधानात् । विशेषोऽपवादः । यथा नेड् वशि कृती (७।२।८) तीट्प्रतिषेधस्य वलादिविशेषे वशादौ कृति विधानात् । यस्य च विशेषे विधिः स बलवान् भवति । तथाहि ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति विशेषविहितं तक्रदानं सामान्यविहितस्य दधिदानस्यैव बाधकं भविष्यति । तस्माद् वशादौ कृति परेऽपीड़ागमो न भवति । प्रतिषेध एव भवति । स्थेशभासपिसकसो वरच् (३।२।१७५) । ईश्वर इति । नित्यानित्ययो र्नित्यं बलवत् । यथा भिस (७।१।९) ऐसित्यैस्त्वम् । तद्धि बहुवचने झल्येदित्येत्त्वे (७।३।१) कृते प्राप्नोति । अकृतेऽपि । भूतपूर्वगत्याश्रयणादकारान्तादङ्गाद्भिस ऐस् विहित इति कृत्वा । यश्च कृताकृतप्रसङ्गी विधिः स नित्य इति । तथाच तत्र (७।१।९) वक्ष्यति

एत्त्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति ।
कृतेऽप्येत्त्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥१॥ इति ।

स नित्यः। ऐस्त्वे कृत एत्वं न प्राप्नोति। निमित्तस्य झलादेर्विहतत्वात्। हृसेष्वित्यादावैस्त्वस्यावकाशः। अस्मिंश्च सति भूतपूर्वगत्याश्रयणस्यायुक्तत्वात् तस्मात् तदनित्यम्। यच्चानित्यं तत् परस्य भावाभावमपेक्षत इति दुर्बलम्। विपर्य्ययात् तु नित्यं बलवत्। तेन वृक्षैरिति परमप्येस्त्वं न भवति। ऐस्भाव एव तु भवति। अन्तरङ्गवहिरङ्गयोरन्तरङ्गं बलवदिति। लोकत एव दृष्टत्वात्। लोको हि प्रातरुत्थायान्तरङ्गाणि मुखप्रक्षालनादीनि कार्य्याणि करोति। पश्चाद्बहिरङ्गाणि राजगृहगमनादीनि कार्य्याणि कर्त्तुमारभते। शास्त्रेऽप्येवं वेदितव्यम्। दिवि कामोऽस्य द्युकामः। तस्यापत्यमतइञ् (४।१।९५) द्यौकामिः। यद्यपि द्युकामशब्दादिञ् विहित स्तथाप्यकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्त्तयन्तीति प्रविभज्यान्वाख्याने दिव् काम इञिति स्थिते दिव उदि (६।१।१३१) त्युत्त्वे कृते यणादेशः प्राप्नोति। तद्धितेष्वचामादेरिति (७।२।११७) परत्वाद्वृद्धिः प्राप्नोतु। अन्तरङ्गत्वाद् यणादेशः पूर्वो विधिः क्रियते। पश्चाद्वृद्धिरुकारस्य। अन्तरङ्गत्वन्तु यणादेशस्य वर्णाश्रयत्वात्। वृद्धेस्तु वाह्यतद्धिताश्रयाद् वहिरङ्गत्वम्। वार्णादाङ्गं बलीय इत्येतदिह न प्रवर्त्तते। व्याश्रयत्वात्। अप्रवृत्तावित्यादि। यदाकृतिः पदार्थ इत्येष पक्ष स्तदान्यत्र कृतार्थत्वाच्छास्त्रयोर्विप्रतिषेधे सति परस्परप्रतिबन्धादप्रवृत्तिरेव प्राप्नोति। यथा यदिह द्वयोस्तुल्यबलयोरेकः प्रैष्यो भवति तौ च युगपत् प्रेषयतः। नानादिक्षु च तयोः कार्य्ये भवतः। ततो यद्यसावविरोधार्थी भवति तदोभयोरपि कार्य्ये न प्रवर्त्तते। द्रव्ये पदार्थे तु प्रतिव्यक्ति लक्षणं प्रवर्त्तत इत्यकृतार्थत्वाल् लक्षणयोः पर्य्यायेण प्रवृत्तिः प्राप्नोति। यथा ब्राह्मणक्षत्रियादीनामसहभुजामेकस्मिन् भाजने भुजिक्रियायां पर्य्यायः स्यात्। तत्र जातौ पदार्थे कृतार्थत्वाद् वृत्तौ प्राप्तायां विध्यर्थ मिदमारभ्यते विप्रतिषेधे सति परं कार्य्यं भवतीति। तत्र कृते यदि पूर्वमपि प्राप्नोति तदपि भवत्येव। तत्रेद मुच्यते पुनः प्रसङ्गविज्ञानात् सिद्धमिति। व्यक्तौ तु पदार्थेऽकृतार्थत्वाच् शास्त्रयोः पर्य्यायेण प्रवृत्तौ प्राप्तायां नियमार्थमिदम्। विप्रतिषेधे परमेव भवति न पूर्वमिति। तत्रेदमुच्यते। सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति।

## ३। यू स्त्र्याख्यौ नदी।

ई च ऊ च यू इति। ननु च दीर्घाज्जसि (६।१।१०५) चेति प्रथमयोः पूर्वसवर्णदीर्घत्वप्रतिषिद्धे यणादेशे सति य्वाविति भवितव्यम्। तत् कथं यू इति निर्देश इत्यत आह अविभक्तिकोऽयं निर्देश इति। सुपां सुलुगिति (७।१।३९) विभक्ते लुप्तत्वात्। नास्मादिभक्तिर्विद्यत इत्यविभक्तिकः। स्त्रियमाचक्षाते स्त्र्याख्याविति। ननु च कर्मण्यणित्यणि (३।२।१) कृत आतो युक् चिण् (७।३।३३) कृतोरिति युकि च स्त्र्याख्यायाविति भवितव्यम्। तत् कथं स्त्र्याख्याविति। आतोऽनुपसर्गे क इति (३।२।३) कप्रत्यये कृत एतद्रूपमिति चेत्? न। चक्षिङोऽत्र सोपसर्गत्वादित्यत आह। मूलविभुजादिदर्शनादिति। मूलविभुजादिष्वपि कप्रत्यय इष्यते। तथाच वक्ष्यति तृतीयेऽध्याये कप्रकरणे मूलविभुजादिभ्य (३।२।५, वा) उपसंख्यानमिति। तेन स्त्र्याख्याविति शब्दस्य मूलविभुजादिषु दर्शनात् कप्रत्ययः। इहेदूतोरेवेयं संज्ञा विधीयते तदन्तयोर्वा? तत्र यद्याद्यः पक्ष आश्रीयेत तत्स्त्रियां न स्यात्। हे लक्ष्मि हे यवाग्विति। समुदायौ ह्यत्र स्त्र्याख्यौ। न त्वीदूताविति। इममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह। ईकारान्तमूकारान्तमित्यादि। ननु च सुप्तिङन्तं (१।४।१४) पदमित्यत्रान्तग्रहणादन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न लभ्यते। नैष दोषः। यदयं नेयङुवङ्स्थानाविति (१।४।४) प्रतिषेधं शास्ति तज्ज्ञापयति भवतीह प्रकरणे तदन्तविधिरिति। अन्यथा प्रतिषेधोऽनर्थकः स्यात्। नह्यीकारोकारमात्रं स्त्र्याख्यमियङुवङ्स्थानमस्ति। किं तर्हि? तदन्तम्। कुमारीति। वयसि प्रथम (४।१।२०) इति ङीप्। गौरीति। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्। शार्ङ्गरवीति। शार्ङ्गरवाद्यञो (४।१।७३) ङीन्। लक्ष्मीरिति। लक्ष दर्शनाङ्कयोः। अवितॄस्तृतन्त्रिभ्य (उण् ४३८) ईरित्यनुवर्त्तमाने लक्षेर्मुट् (उण्, ४४०) च। चकारादीकारश्च। ब्रह्मबन्धूरिति। ऊङुत (४।१।६६) इत्यूङ्प्रत्ययः। ङकारो नोङ्धात्वोरिति (६।१।१७५) विशेषणार्थः। यवागूरिति। यु मिश्रणे। स्यूवचिभ्योऽन्युजागूजक्नुजि (उण्, ३३१) त्वागूच्

प्रत्ययः । रूपोदाहरणान्येतानि । कार्य्यम्बम्बार्थनद्योर्ह्रस्व (७।३।१०७) इत्येवमादिः । मात्रे दुहित्र इत्यत्र नदीसंज्ञाया अभावादाण् नद्या (७।३।११२) इत्याण् न भवति । ग्रामणीः । खलपूरिति । पुंस्येतौ वर्त्तेते । तेन नदोसंज्ञाया अभावादम्बार्थनद्योर्ह्रस्व (७।३।१०७) इति ह्रस्वो न भवति । ग्रामं नयतीति सत्सूद्विषेत्यादिना (३।२।६१) क्विप् । अग्रग्रामाभ्याञ्चेति णत्वम् । खलं पुनातीत्यन्येभ्योऽपि दृश्यत इति (३।२।१७८) क्विप् । ग्रामण्ये स्त्रिया इति । एरनेकाचोऽसंयोगपूर्वस्येति (६।४।८२) यणादेशः । खलप्वे स्त्रियै । अवाप्योः (६।४।८३) सुपीति । अत्र स्त्रीशब्देन पदान्तरेण स्त्रीत्वं द्योत्यत इति नदीसंज्ञा न भवति । तेनाण् न भवति । इक्षशनिप्रभृतीनान्तूभयलिङ्गानां शब्दार्थ एव स्त्रीत्व मिति भवत्येव नदीसंज्ञा । इक्ष्वै । अशन्या इति । यदि पदान्तरद्योत्ये स्त्रीत्वे नदीसंज्ञा न भवतीह पट्वै स्त्रिया इति पटुशब्दस्य पुरुषेऽपि दृष्टत्वात् पदान्तरद्योत्यमत्र स्त्रीत्वमिति नदीसंज्ञा न स्यात् । नैतदस्ति । पदान्तरं हि द्विविधम् । क्वचित् सामान्येन प्रवृत्तिमाशङ्कमानस्य शब्दस्य सामान्यस्याभिधेयान्तरं व्यवच्छिनत्ति । यथा गोशब्दस्य गवादिषु गौर्वागिति । क्वचित् प्रवृत्तिमेव करोति । यथा वाहीकादौ गौर्वाहीक इति । अत्र यत् सामान्यस्य शब्दस्य पट्वादेः पदान्तरसम्बन्धेन विशेषेऽवस्थानं तत् पदेऽन्तर्भूतमेवेत्याख्याग्रहणेन नापनीयते । ग्रामणीशब्दस्य तु स्त्रीत्वप्रवृत्तिः पदान्तरेण क्रियते । नतु व्यवच्छिद्यते । तेनासावाख्याग्रहणेनापसार्य्यते । एतयोस्तु क्रियाशब्दत्वेन रूढः पुंसि मुख्या वृत्तिः । पटुशब्दस्य पाटवोपादायिनः परत्र मुख्येऽपीत्यस्ति भेदः ।

## ४ । नेयङुवङ्स्थानावस्त्री ।

इयङुवङ्स्थानौ यौ यू तौ नदीसंज्ञकौ न भवत इति । यूकारेण यूस्तस्यायं प्रतिषेधो विज्ञायते । न केवलयोः । प्राप्त्यभावात् । नहि यू केवलावियङुवङ्स्थानौ स्त्र्याख्यौ विद्येते । हे श्रीः । हे भ्रूरिति । अत्र नदीसंज्ञाया अभावात् तन्निबन्धनोऽम्बार्थनद्योर्ह्रस्व (७।३।१०७) इति ह्रस्वो न भवति । श्रिञ् सेवायाम् । क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणञ्चेति

(३।२।१७८) क्विपि दीर्घत्वे कृते श्रीरिति भवति। भ्रमु अनवस्थान इत्यस्माद् भ्रमेर्डूरिति ( उण्, २२६ ) डूप्रत्यये टिलोपे भ्रूरिति भवति। उभयोर-चिश्नुधात्वित्यादिने (६।४।७७) यङुवङोर्विधानादियङुवङ्स्थानौ यू भवतः। हे स्त्रि इति। ष्ट्यै स्त्यै शब्दसंघातयोः। आदेच उपदेशेऽशितीत्यात्त्वम् (६।१।४५)। स्त्यायते ड्रट्। टेरिति (६।४।१५५) टिभागलोपः। लोपो व्योर्वलीति (६।१।६६) यकारस्य लोपः। टिड्ढादिना (४।१।१५) ङीप्। अत्र नदीसंज्ञायाः प्रतिषेधाभावाद् ह्रस्वत्वं भवत्येव। स्त्रीशब्दस्य स्त्रिया इतीयङ् (६।४।७९) विधानादियङ्स्थान ईकारः। अथ स्थानग्रहणं किमर्थम्? इयङुवङ्स्थानयोः प्रतिषेधो यथा स्यादिति चेत्? न। यद्येतत् प्रयोजन मभिमतं स्यादियङुवङोरित्येवं वाच्यम्। एवमप्ययमेवार्थ इयङुवङोः सम्बन्धिनौ यौ यू तयोर्नदीसंज्ञा न भवतीति। कौ च तयोः सम्बन्धिनौ यू? यौ तयोः प्रकृतिभूतावियङुवङ्स्थानावित्यन्तरेणापि स्थानग्रहण मियङु-वङ्स्थानयोः प्रतिषेधो विज्ञास्यते। इदं तर्हि स्थानग्रहणस्य प्रयोजनम्। यत्रेयङुवङोः स्थिति रभिनिर्वृत्ति स्तत्र प्रतिषेधो यथा स्यात्। यत्र त्वपवादेन तयोर्बाधा तत्र मा भूदिति। आध्यै वर्षाभ्वा इति। ध्यै चिन्तायाम्। अन्येभ्योऽपि दृश्यत (३।२।१७८) इति क्विप्। सम्प्रसारणञ्च। सम्प्रसारणन्तु दृशिग्रहणाल्लभ्यते। तथाहि तत्रैव (३।२।१७८) दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम्। क्वचिद्दीर्घः क्वचिद्द्विर्वचनमित्युक्त्वा ध्यायतेः संप्रसारण-ञ्चेति वक्ष्यति। कृतसम्प्रसारणस्यैव चतुर्थ्येकवचन एरनेकाच (६।४।८२) इत्यादिना यणादेशः। वर्षाभूशब्दस्यापि वर्षाभ्वश्चेति (६।४।८४)।

## ५। वाऽमि।

संहितासाम्येऽपि षष्ठीबहुवचनस्यामो ग्रहणम्। न तु द्वितीयैकवचनस्य। तत्र नदीसंज्ञाकार्य्याभावात्। नापि सप्तम्यादेशस्यामो ग्रहणम्। तस्य नदीसंज्ञोत्तरकालं ङेराम्नद्याम्नीभ्य ( ७।३।११६ ) इत्याम्विधानात्। श्रीणामिति नदीसंज्ञापक्षे ह्रस्वनद्यापो नुडिति ( ७।१।५४ ) नुट्। इह स्त्र्याख्याविति वर्त्तते। विभक्तिसम्बन्धेन चेयं नदीसंज्ञा विधीयत इति। विभक्तिसम्बन्धिन एव शब्दरूपस्य स्त्र्याख्यस्य नदीसंज्ञा युक्ता। तेन यत्रावयव-

स्त्र्याख्यस्तत्र नदीसंज्ञा न भवति। अतिश्रियां ब्राह्मणानाम्। अतिभ्रूवां ब्राह्मणानामिति।

## ६। ङिति ह्रस्वश्च ।

यद्यत्र ह्रस्वविशेषणार्थं यू इति नानुवर्त्तते तदेहापि स्यान् मात्रे दुहित्र इति। तस्मात् तदिहानुवर्त्तते। अनुवर्त्तमानमपि यदि प्रथमान्तमनुवर्त्तते तदा प्रथमान्तयोर्ह्रस्वत्वं प्रति विशेषणविशेष्यभावो नोपपद्यते। तस्मात् तदिहार्थात् षष्ठ्यन्तमुपजायत इत्यत आह ह्रस्वश्च य्वोः सम्बन्धीति। कः पुनस्तयोः सम्बन्धी ह्रस्वः ? य स्तयोर्ह्रस्वः सवर्णः। तेन सामर्थ्यादिकारो-कारयोर्ग्रहणम्। नहि ताभ्यामन्यो ह्रस्व ईदूतोः सवर्णः सम्भवति। कृत्यै कृतय,इति। यदा नदीसंज्ञा तदा पूर्ववदाट्। अन्यदा तु शेषो घ्यसखि-रिति (१।४।७) घिसंज्ञकत्वाद् घेर्ङिति गुणः (७।३।१११)। अत्रापि यत्र विभक्तिसम्बन्धिनः शब्दरूपस्यावयवः स्त्र्याख्यस्तत्र पूर्वोक्तया रीत्या नदीसंज्ञा न प्राप्नोति। अतिकृतये ब्राह्मणाय। अतिश्रिये ब्राह्मणायेति।

## ७। शेषो घ्यसखि ।

सख्येति। घिसंज्ञाया अभावादाङो नास्त्रियामिति (७।३।१२०) नाभावो न भवति। सख्ये सख्युरित्यत्रापि घेर्ङिति (७।३।१११) न गुणः। सख्यावित्यत्राच्च (७।३।११९) घेरित्यत्वन्न भवति। इदुद्भ्यामौदित्यौत्त्व (७।३ ११८) भवति। सख्युरित्यत्रापि ख्यत्यात् परस्येत्युत्त्वम् (६।१।११२)। इह शोभनः सखा ऽस्येति सुसखिरिति। सुसखेरागच्छतीत्यत्र तदन्तविधिना प्रतिषेधः प्राप्नोति। स च ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति प्रतिषेधान्न भवति। इह द्विविधा घिसंज्ञा। अवयवाश्रया समुदायाश्रया च। तत्र याऽवयवाश्रया सा प्रतिषिध्यते। या पुनः समुदायाश्रया सा च भवत्येव। तस्या अप्रतिषेधात्।

## ८। पतिः समास एव ।

पतिशब्दस्य सिद्धायां घिसंज्ञायामिति। अनन्तरसूत्रेणैवेति शेषः।

प्रजापतिनेति षष्ठीसमासः। यदि सिद्धायां घिसंज्ञायामिदमारभ्यते तदा सिद्धे सत्यारम्भो नियमार्थ इति विनाप्येवकारेण लभ्यत एव नियमः। तत् किमर्थमेवकारकरणमित्यत आह एवकारकरणमित्यादि। विना ह्येव-कारेण विपरीतमप्याशङ्क्येत। पतिरेव समास इति। ततश्च दृढमुष्टिनेत्यादौ न स्यात्। एवकारे तु सति भवतीति। तथाह्यत्र समासशब्दादनन्तरं प्रयुज्यमानं यत एवकारकरणं ततोऽन्यत्रावधारणमिति पतिशब्द एव नियम्यते। न समासः।

## ९। षष्ठीयुक्तश्छन्दसि वा।

अत्र यदि पतिशब्दः षष्ठीविभक्त्यन्तो घिसंज्ञो भवतीत्ययमर्थोऽभिमतः स्यात् तदा युक्तग्रहणमनर्थकं स्यात्। षष्ठीत्येवं ब्रूयात्। तस्माद् युक्तग्रहणे सति षष्ठ्यन्तशब्दान्तरेण युक्त इत्ययमर्थो विज्ञायत इत्यत आह षष्ठ्यन्तेने-त्यादि। यदि पुनः पतिशब्दस्य षष्ठ्यन्तस्य घिसंज्ञा स्यात् तदा किं स्यात्? पत्युरित्यत्रैव स्यात्। इह तु न स्यात्। कुञ्चानाम्पतये नम इति। मया पत्येति। तृतीयायुक्तोऽत्र पतिशब्दः। अस्मदो मपर्यन्तस्य (७।२।९१)। त्वमावेकवचने (७।२।९७) इति मादेशः। योऽचीति (७।२।८९) यकारः।

## १०। ह्रस्वं लघु।

भेत्तेति। पुगन्तलघूपधस्य (७।३।८६) चेति गुणः। अचीकरदिति कृञो णिच्। लुङ्। अडागमः। च्लेश्चङ्। णिलोपः। णौ चङ्युपधाया इति (७।४।१) ह्रस्वः। ओः पुयण्ज्यपरे (७।४।८०) इति वचनं ज्ञापकं णौ कृतं स्थानिवद् भवतीति। चङीति (६।१।११) कृशब्दो द्विरुच्यते। उरदित्य-त्वम् (७।४।६६)। रपरत्वम्। सन्वल्लघुनीति (७।४।९३) लघुसंज्ञायां सत्यां सन्वद्भावादित्वम्। दीर्घो लघोरिति (७।४।९४) दीर्घत्वम्।

## ११। संयोगे गुरु।

कुण्डा। हुण्डा। कुडि दाहे। हुडि सङ्घाते। नुम्विधावुपदेशिवद्-वचनादुपदेशावस्थायामेव नुम्। शिक्षा भिक्षेति। शिक्ष विद्योपादाने।

भिच्च याभ्जायाम्। तयोर्गुरुसंज्ञायां सत्यां गुरोश्च हल ( ३।३।१०३ ) इत्यकारप्रत्ययः। अजाद्यतष्टाप् (४ १ ४)।

## १२। दीर्घञ्च।

ईहाञ्चक्र ऊहाञ्चक्र इति। आम्प्रत्ययवदित्यादौ सूत्र (१।३।६३) एते व्युत्पादिते। गुरुसंज्ञायान्त्वत्र कार्य्यमिजादेश्च गुरुमतोऽनृच्छ (३।१।३६) इत्याम्प्रत्ययः।

## १३। यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्।

कर्त्तेति लुट्। करिष्यति। अकरिष्यदिति। लृट्लृङौ। अङ्गसंज्ञायाः कार्य्यमत्र सार्वधातुकार्द्धधातुकयोरिति (७।४।८४) गुणः। ऋद्धनोः स्यइतीड़ागमं (७।२।७०) यथायोगम्। यस्मादिति संज्ञिनिर्देशार्थमिति संज्ञिनो निर्देशः। संज्ञिनिर्देशः सोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। ननुच तदादीत्यनेनात्र संज्ञी निर्दिष्टः। तत् कथं संज्ञिनिर्देशार्थमिति पर्य्यनुयोगमाशङ्क्य येन हेतुना यस्मादित्यस्य संज्ञिनिर्देशार्थत्वं भवति तं दर्शयितुमाह तदादिसम्बन्धादिति। यस्मादित्येतस्मिन् सत्यनेन प्रकृतेन तदादीत्यस्य सम्बन्धो भवति। यस्मात् प्रत्ययो विधीयते स आदिर्यस्य तत् तदादीति। अनुच्यमाने ह्येतस्मिंस्तदित्यनेन सर्व्वनाम्ना प्रकृतप्रत्ययमर्शिना किं सम्बध्येत? नह्यत्र किञ्चित् प्रकृतमस्तीत्यसम्बन्धमेव तदादीति। असम्बन्धे कथं शक्यते संज्ञी निर्देष्टुम्? स्यादेतत्। स प्रत्यय विधिरेव तदादीत्यनेन सम्बध्येतेत्यसदेतत्। एवं हि सति प्रत्ययादेः प्रत्यये परतोऽङ्गसंज्ञा स्यात्। ततश्च करिष्यावः करिष्याम इत्यत्र धातोर्गुणो न स्यात्। तस्माद्विशिष्टस्य संज्ञिनो निर्देशार्थं यस्मादिति वक्तव्यम्। अनेन हि सम्बन्धे सति तदादीत्यनेन योऽत्र विशिष्टः संज्ञी विवक्षितः स शक्यते निर्देष्टुम्। नान्यथा। नेर्विश ( १।३।१७ ) इत्युपसर्गाद्विधिरस्तीति नियमस्य। नतु प्रत्ययस्य। तस्य लक्षणान्तरेण विहितत्वात्। नेर्विश ( १।३।१७ ) इत्युपलक्षणमात्रम्। परिव्यवेभ्यःक्रिय (१।३।१८) इत्येतदपीह्योपात्तं द्रष्टव्यम्। तदादेरङ्गसंज्ञा स्यात्। ततश्चोपसर्गात् प्रागड़ागमः स्यादिति भावः। स्त्री इयतीति। इदं परिमाणमस्या इति किमिदंभ्यां वो ( ५।२।४० ) घ इति वतुप्। वस्य च

षत्वम् । इयादेशः । इदम्किमोरीश्की (६।३।९०) इतीदम ईश् । यस्येति ( ६।४।१४८ ) चेतीकारलोपः । उगितश्चेति ( ४।१।६ ) ङीप् । इयती । स्त्रीशब्दात् सुः । तस्य हल्ङ्यादिना ( ६।१।६८ ) लोपः । स्त्री इयती इति स्थिते यदि विधिग्रहणं न क्रियेत तदेयच्छब्दे प्रत्यये परतः स्त्रीशब्दस्याङ्गसंज्ञा स्यात् । ततश्च यस्येति ( ६।४।१४८ ) चेतीकारलोपः प्रसज्येत । ननु चासिद्धवदत्रा (६।४।२२) भादित्यसिद्धत्वादीकारलोप एवासिद्धः । तत् कुतोऽयं लोपप्रसङ्गः ? प्राग् भाधिकारादसिद्धत्वमित्यभिप्रायः । नैषोऽस्त्यभिप्रायः । वक्ष्यति हि तत्र (६ ४।२२) वृत्तिकारोऽसिद्धवदित्यधिकारोऽयं यदित ऊर्द्ध्वमनुक्रमिष्याम आ ऽध्यायपरिसमाप्ते स्तदसिद्धवद्भवतीति । तथाह्या भादित्यभिविधावाङ् । तेन भाधिकारेऽप्यसिद्धत्वम्भवतीति । एवं तर्हि विधिग्रहणेनैतज्ज्ञाप्यते भाधिकारीयमसिद्धत्वमनित्यमिति । तेन वुग्युटावुवङ्यणोः सिद्धौ ( ६।४।२२, वा ) वाच्यावित्येतन्न वक्तव्यं भवतीति । वुक् । बभूव । युट् । उपदिदीय इति । नन्वेवमचः परस्मिन् ( १।१।५७ ) पूर्वविधावितीकारलोपस्य स्थानिवत्त्वात् स्त्रीशब्देकारलोपाप्रसङ्ग एव । नैतदस्ति । यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भवतीतत्रादिष्टादचः पूर्वः स्त्रीशब्देकारः प्राक् संस्कृतस्य सत इयतीशब्दस्योत्तरकालं स्त्रीशब्देन सम्बध्यते । अथ क्रियमाणेऽपि विधिग्रहणे कस्मादेवाङ्गसंज्ञा न भवति यावता स्त्रीशब्दाद् विभक्तेः प्रत्ययस्य विधिरस्त्येव? प्रत्ययोऽपि चास्मात् पर इयच्छब्दो विद्यत एव । नैष दोषः । विधिग्रहणे सति यस्मात् प्रत्ययो विधीयते प्रत्यासत्ते स्तस्मिन् परतोऽङ्गसंज्ञा विधीयते । इह तु यः स्त्रीशब्दाद्विहितः प्रत्ययो नासौ परो लुप्तत्वात् । यश्च पर इयच्छब्दो विहितो नासौ ततो विहितः । अथ तदादिग्रहणं किमर्थम् ? यावता विनापि तेन यस्मात् प्रत्ययविधिः प्रत्ययेऽङ्गमित्येतावत्युच्यमाने यत्तदोर्नित्याभिसम्बन्धाद् यस्मात् प्रत्ययो विधीयते तत् प्रत्यये परतोऽङ्गसंज्ञा भवतीत्येषोऽर्थो लभ्यत इत्यत आह तदादिवचनमित्यादि । असति तदादीत्येतस्मिन् यस्मादेव प्रत्ययो विधीयते तस्यैवाङ्गत्वं स्यात् । न तु सर्वस्य सहस्यादेः । नापि सनुमृकस्य समुदायस्य । ततः प्रत्ययस्याविहितत्वात् । तदादिग्रहणे सति यस्मात्

प्रत्ययो विधीयते स आदिर्यस्य शब्दरूपस्य तत् तदादीति बहुव्रीहिराश्रितो भवति। तेन सर्वस्य सस्यादेः सनुम्कस्य समुदायस्याङ्गसंज्ञा सिध्यतीति तदादिवचनं स्यादिनुमर्थम्। आदिग्रहणेन प्रकृतिप्रत्ययस्य मध्यवर्त्तिनां प्रत्ययागमानां ग्रहणम्। नुम आगमोपलक्षणत्वात्। करिष्याव इत्यत्र यस्मात् प्रत्ययो विहित स्तदादेः सहस्यप्रत्ययस्य समुदायस्याङ्गसंज्ञायां सत्यामतो दीर्घो यञीति ( ७।३।१०१ ) दीर्घत्वं भवति। अन्यथा क्व तर्हि स्यात्। वावावो वावाम इत्यादौ। अय वय मय पय तय चय णय गतौ। यङ्लुक्। अभ्यासस्य दीर्घोऽकित इति (७।४।८३) दीर्घत्वम्। वसमसोर्लोपो व्योर्वलीति (६।१।६६) यलोपः। इह विना विकरणेन धातोर्दीर्घत्वम्। विकरणस्य शपोऽदिप्रभृतिभ्यः शप ( २।४।७२ ) इति लुप्तत्वात्। अदादित्वं चर्करीतञ्चेत्यदादिषु पाठात्। चर्करीतमिति यङ्लुकः पूर्वाचार्य्यसंज्ञा। कुण्डानीति। जसि जश्शसोः शिरिति ( ७ १ २० ) शिभावः। नपुंसकस्य झलच ( ७।१ ७२ ) इति नुम्। यदायं नुम् परादिरिति पक्षस्तदा सुपि चेति ( ७।३।१०२ ) दीर्घत्वं विनापि सनुम्कस्याङ्गसंज्ञया सिद्धम्। यदापि पूर्वान्तस्तदाप्यङ्गैकदेशत्वान्नोपधाया ( ६।४।७ ) इत्यनुवर्त्तमाने सर्वनामस्थाने ( ६।४ ८ ) चासम्बुद्धाविति दीर्घत्वं सिद्धम्। यदात्वभक्तस्तदाङ्गस्यानेकदेशत्वान् न सिध्यति। अभक्तश्चायं नुमिति सूत्रकारस्य पक्षः। तेन नुमर्थमपि तदादिवचनं कृतम्। स्त्र्यर्थम्। भ्र्वर्थमिति। स्त्रिय इदं भ्रुव इदमिति चतुर्थी तदर्थार्थेत्यादिना ( २।१।३६ ) समासः। अस्त्यत्र चतुर्थ्येकवचनस्य विधिरिति। असति हि पुनः प्रत्यय-ग्रहणे स्त्रीभ्रूशब्दयोरर्थशब्दे परतोऽङ्गसंज्ञा स्यात्। ततश्चेयङुवङौ स्याताम्। सप्तमीनिर्दिष्टे तु पुनः प्रत्ययग्रहणे सति न दोष इति। तथाहि ततो विहिते प्रत्यये परत इत्येवं विज्ञायते। यश्चातो विहितः प्रत्ययः स लुप्तः। यद्यपि लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेनाङ्गसंज्ञा लभ्यते कार्य्यं तु न लभ्यते। न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणप्रतिषेधात्।

## १४। सुप्तिङन्तं पदम्।

सुप् तिङिति प्रत्याहारग्रहणमिति। युक्तं हि तिङिति प्रत्याहार-ग्रहणम्। अन्यस्य तिङ्शब्दस्याभावात्। कथं सुबिति प्रत्याहारग्रहणम्?

सप्तमीबहुवचनस्य विद्यमानत्वात्। तस्य ग्रहणं कस्मान्न भवतीति? नैष दोषः। न ङिसम्बुद्ध्योरिति (८।२।८) प्रतिषेधात्। सप्तमीबहुवचनस्य सुपो ग्रहणे ङिसम्बुद्ध्योः पदत्वाभावान्नलोपस्य प्राप्तिरेव नास्तीति प्रतिषेधोऽनर्थकः स्यात्। ब्राह्मण इति पदत्वे च सति ससजुषो रुः (८।२।६६)। खरवसानयोर्विसर्जनीयः (८।३।१५)। पठन्तीति। अत्र पदत्वे सति तिङ्ङतिङ इति (८।१।२८) निघातः। ननु च प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्येत्यनेन येन विधिस्तदन्तस्येत्यनेन वा ऽन्तरेणाप्यन्तग्रहणं तदन्तस्यैव संज्ञा भविष्यति। तत् किमर्थ मन्तग्रहणमित्यत आह पदसंज्ञाया मित्यादि। यदीहान्तग्रहणेनाप्यन्यत्र संज्ञाविधौ तदन्तविधिर्नास्तीत्येषोऽर्थो न ज्ञाप्यते तदा तरप्तमपौ (१।१।२२) घ इत्यत्र तरबन्तस्य घसंज्ञा स्यात्। न प्रत्ययमात्रस्य। तस्मादत्रास्मिन्नर्थेऽन्तग्रहणेन ज्ञाप्यते ऽन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधो यथा स्यादित्येवमर्थ मन्तग्रहणम्। तेन तरप्तमपो रेव घसंज्ञा भवति। नतु तदन्तस्य। गौरी ब्राह्मणितरेति। अत्र गौरीशब्दस्य तरबन्ते ब्राह्मणितराशब्दे परतो घरूपकल्पेत्यादिना (६।३।४३) ह्रस्वो न भवति। तरबन्तस्याघसंज्ञकत्वात्। प्रत्ययमात्रस्य घसंज्ञायां तत्र परतो ब्राह्मणीशब्दस्य ह्रस्वो भवत्येव।

## १५। नः क्ये।

राजीयतीति। आत्मनो राजान मिच्छतीति सुप आत्मनः (३।१।८) क्यच्। क्यचि (७।४।३३) चेतीत्त्वम्। राजायत इति। राजेवाचरतीति कर्त्तुः क्यङ् सलोपश्चेति (३।१।११) क्यङ्। अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः। वर्मायत इति। अवर्म वर्म भवतीति लोहितादिडाज्भ्यः (३।१।१३) क्यषिति क्यष्प्रत्ययः। वा क्यष (१।३।९०) इत्यात्मनेपदम्। पदसंज्ञाया मिह नलोपः कार्य्यः। ननु चैते क्यजादयः सुबन्तादेव विधीयन्ते। प्रत्ययलक्षणेन ततश्च सुप्तिङन्तं (१।४।१४) पदमित्यनेनैवात्र पदसंज्ञा सिद्धा। तत् किमर्थोऽयमारम्भ इत्यत आह सिद्धे सत्यारम्भो नियमार्थः। सिद्ध इति सिद्धावित्यर्थः। नपुंसके भावे क्तः (३।३।१०४)। सिद्धत्वन्तु प्रकृतत्वात् पदसंज्ञाया एव

विज्ञायते । अथवा सिद्ध इत्यकर्मकत्वात् कर्त्तरि क्तप्रत्ययः । सिद्धे निष्पन्ने पदसंज्ञाकार्य्यं इत्यर्थः । नान्तमेवेति नियमस्य स्वरूपं दर्शयति । नान्तं क्य एवेत्येष विपरीतनियमो नाशङ्कनीयः । न ङिसम्बुद्ध्यो (८।२।८) रिति प्रतिषेधात् । विपरीतनियमे हि सति ङिसम्बुद्ध्योः पदसंज्ञाया अभावान् नलोपो न भविष्यतीति किं तत्प्रतिषेधेन ? वाच्यतीति । सुप (३।१।८) आत्मनः क्यच् । क्यचि पदत्वाभावाच् चोः कुरिति (८।२।३०) कुत्वं न भवति ।

## १६ । सिति च ।

भवदीय इत्यादि । तत्र जात (४।३।२५) इत्यादौ शैषिकेऽर्थे तद्धितः । पदत्वाज् झलाञ्जशोऽन्त (८।२।३९) इति जश्त्वम् । ऊर्णायुरिति । ऊर्णाया युसिति (५।२।१२३) युसि कृते पदसंज्ञया भसंज्ञायां निरस्तायां यस्येति (६।४।१४८) चेत्याकारलोपो न भवति । ऋत्विय इति । ऋतुः प्राप्तोऽस्येति ऋतोरण् (५।१।१०५) । छन्दसि (५।१।१०६) घम् । ऋत्वियः । पदत्वाद् भत्वाभावे तदाश्रय ओर्गुणो (६।४।१४६) न भवति ।

## १७ । स्वादिष्वसर्व्वनामस्थाने ।

अत्र यदि सप्तमीबहुवचनादारभ्य आ कपः प्रत्यया गृह्येरं स्तदा ऽसर्वनामस्थान इति प्रतिषेधं न कुर्य्यात् । प्राप्त्यभावात् । कृतश्चासाव- तोऽवसीयते प्रथमैकवचनादारभ्या कपः प्रत्ययाः स्वादयो गृह्यन्त इत्यत आह स्वादिष्विति । सुशब्दादेकवचनादारभ्य इति । राजत्वं राजता इति । तस्य भाव (५।१।११९) स्त्वतलौ । राजतर इति । द्विवचनविभज्योपपदे तरबीयसुनाविति (५।३।५७) तरप् । राजतम इति । अतिशायन (५।३।५५) इत्यादिना तमप् । राजानौ राजान इति । अत्र पदसंज्ञाया अभावान्नलोपो न भवति । यद्येवं राजेत्यत्रापि न स्यात् । प्रत्ययलक्षणेनासर्वनामस्थान इति पद- संज्ञाया अभावात् । नैष दोषः । आचार्य्यप्रवृत्तिर्ज्ञापयति । भवति सौ परतः पदसंज्ञेति यदयं न ङिसम्बुद्ध्योरिति (८।२।८) प्रतिषेधं शास्ति । अत्र सम्बुद्धि- शब्दोऽनर्थकः स्यात् । तत्र पदत्वाभावादेव नलोपस्याप्राप्तेः । अथवा

ऽसर्वनामस्थान इति पर्युदासोऽयम् । न प्रसज्यप्रतिषेधः । तेन सर्वनामस्थानादन्यत्र पदसंज्ञा विधीयते । नतु सर्वनामस्थानं प्रतिषिध्यते । तेन तत्र पूर्वसूत्रेण सौ परे पदसंज्ञा भविष्यति । अथवा प्रसज्यप्रतिषेधेऽपि न दोषः । यस्मादनन्तरस्य विधिर्वा प्रतिषेधो वेतरनन्तरा या प्राप्तिः सा प्रतिषिध्यते । न व्यवहिता । तेन सुप्तिङन्तं पदमितत्रनेन (१।४।१४) सौ भवत्येव पदसंज्ञेति ।

## १८ । यचि भम् ।

यचीति वर्णग्रहणं सप्तमीनिर्दिष्टम् । अतो यस्मिन् विधिस्तदादावल्ग्रहण इति तदादिविधिनात्र भवितव्यमित्यत आह यकारादावित्यादि । गार्ग्य इत्यादौ भसंज्ञायां सत्यां यस्येति (६।४।१४८) चेतत्रकारलोपः । नभोङ्गिरोमनुषां वतुत्रपसंख्यानं कर्त्तव्यमिति । भसंज्ञाया स्त्वत्र पदसंज्ञाबाधः फलम् । नभ इवेति तुल्यार्थतोपदर्शनमेतत् । नतु प्रथमासमर्थाद्वतिः । स तु नभसा तुल्यं वर्त्तत इति तेन तुल्यमित्यादिना (५।१।११५) तृतीयासमर्थाद्वतिः । नभस्वदिति भसंज्ञया पदसंज्ञायां निरस्तायां तन्निबन्धनं रुत्वं न भवति । अङ्गिरस्वदिति । पूर्वेण तुल्यम् । मनुष्वदिति । जनेरुसिरित्यत्र (उण्, २७२) बहुलग्रहणानुवृत्तेर्मन ज्ञान इतेरतस्मादुसिप्रत्ययः । आदेशप्रत्यययोरिति (८।३।५९) षत्वम् । मनुष् इति स्थिते पूर्ववद्वतिः । मनुष्वदिति । यद्यत्र पदसंज्ञा स्यात् तदा षत्वस्यासिद्धत्वादिह रुत्वं स्यात् । ततश्च मनुर्वदित्यनिष्टं रूपं स्यात् । उपसंख्यानशब्दस्य चेह प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । सिति (१।४.१६) चेत्यतश्चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन नभोङ्गिरोमनुषां वतौ भसंज्ञा भविष्यति । वृषण्वस्वश्वयोरिति । अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां प्राप्तायां भसंज्ञा विधीयते । तस्याश्च विधिश्चकारानुवृत्तेरेव लभ्यते । वृष्णो वसुः वृषण्वसुः । वृष्णोऽश्वः वृषणश्वः । अत्र भत्वे सति यद्यपि णत्वस्यासिद्धत्वं तथापि नलोपः पदनिबन्धनो न भवति । पदान्तस्येति (८।४।३७) णत्वप्रतिषेधश्च ।

## १९ । तसौ मत्वर्थे ।

तसाविति वर्णग्रहणम् । न च वर्णमात्रान्मत्वर्थीयः सम्भवति । अतः सामर्थ्यात् तदन्तविधिर्विज्ञायत इत्याह तकारान्तमित्यादि । मत्वर्थे प्रत्यय

इति व्यधिकरणे पदे षष्ठीसमासः। मतोरर्थौ मत्वर्थ इति। तत्र यो वर्त्तते प्रत्ययस्तस्मिन्नित्यर्थः। अथवा समानाधिकरणे पदे। मतुशब्देन साहचर्य्यात् मतुप्सहचरितार्थ उच्यते। मतुवर्थौ यस्य तस्मिन्। ननु मतोरर्थौ यस्मिन्निति मत्वर्थे प्रत्यय इति। अर्थग्रहणं मतुपोऽन्यत्रापि यथा स्यात्। इतरथा हि मतावित्युच्यमाने मतावेव स्यात्। नान्येषु। मत्वर्थग्रहणे क्रियमाणे मतुपि न स्यात्। तस्यार्थविशेषणत्वात्। विशेषणस्य च कार्य्येण सम्बन्धानुपपत्तेः। नहि चित्रगुरानीयतामित्युक्ते विशेषणभूता गावोऽप्यानीयन्ते। नैष दोषः। विशेषणमपि क्वचित् कार्य्ये विशिष्यते। तथाहि देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते देवदत्तः शालायां विशेषणभूतो यदि ब्राह्मणो भवति तदा सोऽप्यानीयत एव। उदश्वित्वानिति। भत्वात् पदसंज्ञाऽभावे जश्त्वं न भवति। झय इति (८।२।१०) वत्वम्। उगिदचामिति (७।१।७०) नुम्। अत्वसन्तस्य (६।४।१४) चाधातोरिति दीर्घः। पयस्वी यशस्वीति। अस्मायामेधास्रजो विनिः (५।२।१२१)। भत्वाद्रुत्वं न भवति। इन्हन्पूषार्य्यम्णां (६।४।१२) शावितत्रानुवर्त्तमाने सौ (६ ४।१३) चेत्यनेन दीर्घः।

## २०। अयस्मयादीनि च्छन्दसि।

यद्यत्र भसंज्ञा विधीयेत तदा पदसंज्ञा न स्यात्। अथ यदि पदसंज्ञा विधीयेत तदात्र भसंज्ञा न स्यात्। तदा भपदसंज्ञयोः समावेशो न स्यात्। एकसंज्ञाधिकारात्। साधुत्वविधाने त्वेष दोषो न भवति। तद्धि केषाञ्चिद्भसंज्ञा विधीयते पदसंज्ञकानां केषाञ्चिदुभयसंज्ञकानाम्। तस्मात् साधुत्वमेव विधातुं युक्तमितरत आह अयस्मयादीनीत्यादि। कथं पुनरेषां साधुत्वं विधीयत इत्याह भपदसंज्ञाधिकार इत्यादि। द्वारं मुखमुपाय इत्यनर्थान्तरम्। अयस्मयमिति। अयसो विकारो मयड्वैतयो र्भाषायामिति (४।३।१४३) मयट्। यद्यपि तत्र (४।३।१४३) भाषाग्रहण मस्ति तथाप्ययस्मयशब्दस्यास्मादेव साधुत्वविधानाच्छन्दस्यपि मयड् भवतीति। भत्वाद्रुत्वं न भवति। स ऋक्वतेति। ऋचोऽस्य सन्तीति मतुप्। पदत्वाच्चोः कुरिति

(८।२।३०) कुत्वम्। भत्वाज् झलां (८।२।३९) जशोऽन्त इति जश्त्वञ्च भवति। आकृतिगणोऽयमिति। आदिशब्दस्य प्रकारवाचित्वात्।

## २१। बहुषु बहुवचनम्।

तस्यानेन बहुत्वसंख्या वाच्यत्वेन विधीयत इति। एतेन विध्यर्थतामस्य योगस्य दर्शयति। इह केषाञ्चित् स्वार्थद्रव्यलिङ्गसंख्याकर्माद्यात्मकः पञ्चकः प्रातिपदिकार्थ इति दर्शनम्। केषाञ्चित् स्वार्थद्रव्यलिङ्गात्मकस्त्रिकः प्रातिपदिकार्थ इति। तत्र स्वार्थो विशेषणं स्वरूपजातिगुणद्रव्याणि। द्रव्यन्तु विशेष्यम्। तत् पुनर्जातिगुणद्रव्याणि। तत्र यदा शब्दस्वरूपेण विशिष्टा जातिरभिधीयते गौरिति तदा शब्दस्वरूपं विशेषणत्वात् स्वार्थो भवति। जातिस्तु विशेष्यत्वाद् द्रव्यम्। यदा तु जात्या विशिष्टो गुणोऽभिधीयते पटस्य शुक्लो गुण इति तदा जातिर्विशेषणत्वात् स्वार्थो भवति। गुणस्तु विशेष्यत्वाद् द्रव्यम्। यदा तु गुणैर्विशिष्टं पटादिकं द्रव्य मुच्यते शुक्लः पट इति तदा विशेषणभूतो गुणः स्वार्थो भवति। विशेष्यभूतं पटादिकं द्रव्यमेव। यदा पुनर्द्रव्यमपि द्रव्यान्तरस्य विशेषणभूतं भवति यष्टीः प्रवेशय कुन्तान् प्रवेशयेत्यादौ तदा यष्ट्यादिकं द्रव्यं विशेषणभावापन्नं स्वार्थः। द्रव्यान्तरं विशेष्यभावापन्नं पुरुषादिकं द्रव्यमेव। क्वचित् सम्बन्धोऽपि स्वार्थो भवति यत्र सम्बन्धनिमित्तकः प्रत्यय उत्पद्यते यथा दण्डी विषाणीति। अत्र दण्डपुरुषसम्बन्धो विशेषणम्। दण्डीति द्रव्यम्। क्वचित् क्रियापि स्वार्थो भवति यत्र क्रियानिमित्तकः प्रत्यय उत्पद्यते यथा पाचकः पाठक इति। क्रियाकारकसम्बन्धोऽत्र स्वार्थ इत्यपरे। लिङ्गं स्त्रीत्वादि। संख्यैकत्वादि। कर्मादयो वक्ष्यमाणाः कारकविशेषाः। तत्र पूर्वोक्तयोर्दर्शनयोर्द्वितीयं यद्दर्शनं तदिह वृत्तिकारेणाश्रितम्। धातोस्तु क्रियैव वाच्येत्यत्राचार्य्याणामविवाद एव। तत्र प्रातिपदिकस्य पूर्वोक्ते त्रिकेऽर्थे सति धातोश्च क्रियात्मकत्वे यदीदं सूत्रं नोच्येत ततोऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति प्रातिपदिकाज्जसादिबहुवचनं विधीयमानं त्रिक एवार्थे स्यात्। न बहुत्वसंख्यायाम्। धातोरपि झिप्रभृति बहुवचनं विधीयमानं क्रियायामेव

स्यात् । ननु बहुत्वसंख्यायाम् । तस्मादनेनैव तस्य बहुत्वसंख्या वाच्यत्वेन विधीयत इति विध्यर्थमेतद् भवति । यथा चानेन योगेन बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयते तथा कर्मणि (२।३।२) द्वितीयेत्येवमादिभिर्योगैर्द्वितीयादीनां कर्म्मादि च । लः कर्मणि च भावे चाकर्म्मकेभ्य (३।४।६९) इत्यनेनापि लकाराणां कर्म्माद्येव । तस्मादेतेऽपि योगा विध्यर्था एव वेदितव्याः । येषाञ्च पञ्चकः प्रातिपदिकार्थ इति मतं तेषां प्रातिपदिकस्यैव पञ्चाप्यर्था वाच्याः । विभक्तयश्च तद्द्योतिका भवन्ति । तत्रानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति विनापि वचनेनानेन प्रातिपदिकाद् बहुवचनं जसादि बहुत्वे सिद्धमेव । तत्र त्वनियमेनान्यत्राप्येकत्वादौ प्राप्तमनेन नियम्यत इति नियमार्थमेतद् भवति । कस्मात् पुनर्वृत्तिकारेण त्रिकः प्रातिपदिकार्थ इति दर्शनमाश्रितम् ? युक्तत्वात् । तथाहि वृक्षं पश्येत्यादौ नहि विना विभक्तिभिः संख्याकर्मादयश्चार्थाः प्रतीयन्ते । यद्यपि पयः पयो जरयतीत्यादौ विनापि विभक्त्या संख्या कर्मादेरर्थस्य प्रतीतिर्भवतीति तथापि पयसी पयांसि पयसेत्येवमादौ संख्याकर्मादिप्रतीत्यर्थं नियोगतो विभक्तिरपेक्ष्यत एव । नहि यथा गर्गा इत्यत्र बहुवचनेन यञ्प्रत्ययमन्तरेणापत्यार्थः प्रतीयते तथा गार्ग्य इत्यत्र प्रकृतिरेवापत्यार्थमभिधत्त इति शक्यते वक्तुम् । अपिच पयः पयो जरयतीत्येवमादौ विभक्तिविशेषोत्पत्तिसामर्थ्यादेव संख्याकर्माद्यर्थस्य प्रतीतिर्भवति । तथाहि यतः स विभक्तिविशेष उत्पन्नस्तत एवासावर्थविशेषः प्रतीयते । नान्यस्मादिति त्रिक एव प्रातिपदिकार्थो युक्तः । यदि तर्हि बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयते तदा सूत्रे भावप्रत्ययेन बहुत्वनिर्देशः कर्त्तव्यः । अन्यथा बहुत्वसंख्या न प्रतीयेत । न कर्त्तव्यः । अन्तरेणापि भावप्रत्ययं भावप्रधानो निर्देशो भविष्यतीति यथा पटस्य शुक्ल इति । नन्वेवमपि भावस्यैकत्वाद् बहुष्विति बहुवचनं नोपपद्यते । नैष दोषः । यस्माद् बहुत्वसंख्याधारस्य द्रव्यस्य यो भेद स्तं बहुत्वे गुणेऽध्यारोप्य बहुष्विति बहुवचनेन निर्देशः कृतः (A) । संख्यावाच्ययं बहुशब्दो न वैपुल्यवाचीति ज्ञापनार्थश्च । तेन वैपुल्यं बहु-

(A) एतेनारोपितबहुत्वसंख्याका आपो दारा इत्यादौ च बहुत्वं भवतीत्यत्र क्वचिदधिकः पाठः ।

वचनस्य वाच्यं न भवतीति बहुरोदनो बहुः सूप इति वैपुल्यवाचिनो बहुशब्दादेकवचनमेव भवति। न बहुवचनम्। यदि बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयत इह वृक्षं पश्येत्यत्र बहुवचनं प्राप्नोति। द्वे ह्यत्र संख्ये। समुदायसंख्या चैकत्वम्। अवयवसंख्या च फलमूलशाखाद्यवयवसमवेता बहुत्वम्। अस्यापि प्रातिपदिकार्थेनैकार्थसमवायलक्षणः सम्बन्धोऽस्त्येव। तथाहि येष्ववयवेषु समवेता बहुत्वसंख्या प्रातिपदिकार्थोऽपि समुदाय स्तत्रैव समवेतः। ततश्च तस्माद्बहुवचनं प्राप्नोतीत्यत आह कर्मादय इत्यादि। कर्मादयो ह्येकविभक्तिशब्दवाच्यत्वात् प्रत्यासन्ना बहुत्वसंख्यायाः। ततः प्रत्यासत्ते स्तदीय एव बहुत्वे बहुवचनं भवति। समुदाय एव हि वृक्षं पश्येत्यत्र दृशिक्रियया व्याप्तुमिष्टतम इति स एव कर्मभावमापद्यते। नावयवाः। तत् कुतो बहुवचनस्य प्रसङ्गः? कर्मादिष्वित्यादि। कर्मादयो बहुवचनस्य वाच्याः। तदीयं बहुत्वं बहुष्वेव कर्मादिषु सम्भवति। अतः सामर्थ्यात् कर्मादिषु बहुष्वित्येषोऽर्थः सम्पद्यते। यदि तर्हि विभक्तीनां बहुवचनस्य बहुत्वसंख्या वाच्यत्वेन विधीयते तदा निःसंख्येभ्योऽव्ययेभ्यः स्यादयो न स्युः। ततश्च पदसंज्ञा तेषां न स्यादित्याह यत्र चेत्यादि। ननु स्यादिविधानसूत्रे (४।१।२) संख्याकर्मादयः स्यादीनामर्थाः शास्त्रान्तरेण विहिताः। तेन सहास्यैकवाक्यतेति वक्ष्यति। तत् कुतः स्यादीनां सामान्यविहितत्वम्? नहि बहुषु बहुवचनं कर्मणि (२।२।२) द्वितीयेत्यादिना शास्त्रान्तरेण स्वौजसादेः (४।१।२) सूत्रस्यैकवाक्यतायां स्यादीनां सामान्यविहितत्वमुपपद्यते। एवं तर्हि ज्ञापकेन। अव्ययेभ्यः सामान्येन स्याद्युत्पत्ते र्ज्ञापितत्वात् सामान्यविहिता इत्युक्तमित्यदोषः। किं पुनस्तज् ज्ञापकम्? अव्ययादाप्सुपः (२।४।८२) इत्यव्ययादुत्पन्नानां सुपां लुग्वचनम्। न ह्यनुत्पन्नानां लुगुपपद्यते।

## २२। द्व्येकयोर्द्विवचनैकवचने।

द्व्येकयोरित्ययमपि भावप्रधानो निर्देशः। अन्यथा हि बहुत्वाद् बहुवचनं स्यात्। भावप्रधाने तु निर्देशे द्वित्वमेकत्वञ्च द्वावेतावर्थाविति युक्तं

द्विवचनम्। एतदपीत्यादिनाऽस्यापि योगस्य विध्यर्थतां दर्शयति। अर्थाभिधानमिति। अर्थो वाच्योऽभिधीयते येन तदर्थाभिधानम्।

## २३। कारके।

कारक इति विशेषणमपादानादिसंज्ञाविषयमिति। अपादानादयः संज्ञाविषयो यस्य तत् तथोक्तम्। आदिशब्देन सम्प्रदानादीनां ग्रहणम्। अथ वक्ष्यमाणानां ध्रुवादीनामियं संज्ञा कस्मान्न भवति? एवं मन्यते। यदीयं ध्रुवादीनां संज्ञा स्यात् तदा कारकशब्दः प्रथमान्त एव निर्दिश्येत यथान्ये प्रत्यय (३।१।१) इत्येवमादयः संज्ञाशब्दा निर्दिश्यन्ते। अयन्तु सप्तम्या निर्दिष्टः। तस्मान्नेयं ध्रुवादीनां संज्ञेति। कारक इति निर्द्धारणे सप्तमी। निर्धारणं तु बहूनां सम्भवति। तत् कथमेकवचनेन निर्देशः? सामान्यापेक्षया त्वेकवचनम्। अथवा छन्दोवत् सूत्राणि भवन्ति। ततो व्यत्ययो बहुलमिति (३।१।८५) बहुवचने प्राप्त एकवचनम्। कारकेषु मध्ये यद् ध्रुवं कारकं तदपादानसंज्ञं भवति। एवमन्यत्रापि वेदितव्यमिति। कारकशब्दोऽयमस्त्येव व्युत्पन्नो ण्वुलन्तः कर्त्तृपर्य्याय इति। अस्ति च संज्ञाशब्दोऽव्युत्पन्नो निमित्तपर्य्याय इति। तत्रेह यदि पूर्वोक्तस्य ग्रहणं स्यात् तदापादानादिषु कारकशब्दो न वर्त्तेत। यथा कर्त्तृशब्दो ण्वुल्तृचाविति (३।१।१३३) कर्त्तरि व्युत्पादित स्तथा कारकशब्दोऽपि। कर्त्ता च स्वतन्त्रः। अपादानादयश्चास्वतन्त्राः। तत् कथं तेषु कारकव्यपदेशः स्यात्? असति हि कारकव्यपदेशे कारकसंशब्दनेषु तेषां ग्रहणं न स्यात्। अथ तेषामपि कथञ्चित् स्वतन्त्रताभ्युपेयेतैवञ्च तत्र कर्त्तृसंज्ञा प्रसज्येत। ततश्च ग्रामादागच्छत्युपाध्यायाय गां ददातीत्यादौ ग्रामादिभ्यस्तृतीया प्रसज्येत। इतरेतराश्रयश्चापि दोषः स्यात्। तथाहि कर्त्तृसंज्ञोत्तरकालं कारकशब्दस्य व्युत्पत्तिस्तस्यां सत्यां कारकशब्दोपक्रमेण कर्त्तृसंज्ञा स्यात्। बह्वेवं प्रतिविधेयं स्यात्। प्रतिविधाने च प्रतिपत्तिगौरवं स्यात्। निमित्तपर्य्यायस्य तु कारकशब्दस्य ग्रहणे न दोषः स्यात्। ततः स एव गृह्यत इति मत्वाह कारकशब्दोऽयं निमित्तपर्य्याय इति। ग्रामादागच्छतीति। ग्रामस्य ध्रुवस्यागमनक्रियां प्रति

निमित्तभावोऽस्ति। यदीह ग्रामोऽवधिभावेन नावतिष्ठेत तत आगमनं न निष्पद्येत। तस्माद् ग्रामः कारकम्। वृक्षस्य पर्णं पततीति। वृक्षः सम्बन्धित्वेनात्र विवक्षितः। न तु निमित्तत्वेन। अपायस्य कारकग्रहणात् निमित्तत्वेनाविवक्षितस्यापादानसंज्ञा न भवति। नैतत् कारकग्रहणस्य प्रत्युदाहरणं युक्तम्। ध्रुवग्रहणेनैवात्रापादानसंज्ञाया निवर्त्तितत्वात्। ध्रुवं हि तद् यदवधिभूतमपाये साध्ये। तथाहि वृत्तिकारो वक्ष्यति अपाये साध्ये यदवधिभूतमिति। न चेह वृक्षोऽवधित्वेन विवक्षितः। किं तर्हि सम्बन्धित्वेन। नैतदस्ति। विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धिभावेन विवक्षितत्वात्। अवधिभूतस्य वृक्षस्य सम्बन्धिनः पर्णं पततीत्यर्थः। नहि सम्बन्धित्वेन विवक्षा ऽवधिभावविवक्षया विरुध्यते। तस्माद्विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धित्वमात्रं विवक्षितम्। ननु विद्यमानमप्यपायं प्रति निमित्तत्वमिति कात्रायुक्तता ? माणवकस्य पितरं पन्थानं पृच्छतीति। अकथितञ्चे(१।४।५१)त्यकथितस्य कर्मसंज्ञा विधीयमाना कारक इत्येतस्मिन्नसति माणवकस्यापि स्यात्। कथम् ? अकथितशब्दोऽयमकीर्त्तितपर्य्यायः। स च कस्यचिद् विशेषस्याप्रकृतत्वाद् विशेषानुपादाने सति प्रयुज्यमानः सर्वत्राविशेषेणाकीर्त्तितमात्रे स्यात्। ततश्चाकथितमित्युच्यमाने कारकस्याकारकस्य सर्वमकथितमिति गम्यते। यथा पिताऽपादानादिभि र्विशेषकथाभिर्न कथित स्तथा माणवकोऽपि। अतस्तस्यापि कर्मसंज्ञा स्यात्। कारक इत्यस्मिंस्तु सति प्रश्नक्रियानिमित्तस्य पितुरेव भवति। नतु माणवकस्य। नह्यसौ प्रश्नक्रियां प्रति निमित्तभावेन विवक्षितः। किं तर्हि ? पितुः सम्बन्धित्वेन। यदि विशेषणमिदं ध्रुवादीनां—न संज्ञा—ततश्च कारकाद्दत्तश्रुतयोरेवाशिषीत्येवमादिषु (६।२।१४८) प्रदेशेषु यत्र कारकशब्दः संशब्द्यते तदा तत्रापादानादीनां कारकग्रहणेन ग्रहणं न स्यात्। संज्ञापक्षे तु न दोषः। संज्ञा ह्यावर्त्तमाना संज्ञिनं प्रत्याययतीत्यत आह कारकसंशब्दनेत्यादि। यत्र कारकशब्दस्य संशब्दनं तत्राप्यनेनैव विशेषणेन विवक्षितार्थप्रत्यायन लक्षणो व्यवहारोऽयं विज्ञायते। प्रदेशान्तरेऽपि कारकशब्दस्य निमित्तपर्य्यायस्यैवोपादानात्। तच्च निमित्तमपादानाद्येव। नहि ततोऽन्यत् क्रिया-

निमित्तं भवति । तस्मात् कारकग्रहणेनापादानादीनां ग्रहणं भवति । अन्ये त्वाहुः । साहचर्य्यात् कारकविशेषणसहचरिता अपादानादयः कारकशब्देनोच्यन्त इति तद्ग्रहणेनैव तेषां ग्रहणम् । कारकग्रहणं वा स्वरयितव्यम् । तेन स्वरितेनाधिकार (१।४।११) इत्येष विधिर्भवति । तस्मात् कारकग्रहणेनापादानादीनां ग्रहणं भविष्यति ।

## २४ । ध्रुवमपायेऽपादानम् ।

अपायो विश्लेषो विभाग इत्यर्थः । तस्य च द्विष्ठत्वाद् यथा तेन विभागेन योऽपैति सोऽपाययुक्त स्तथा यतोऽपैति सोऽप्यपाययुक्तः । तस्मादुभयत्र पञ्चम्या भवितव्यमित्यतएवाह एवं यदपाययुक्तमिति । अपाये साध्य इति । विषयसप्तमीयम् । अपायस्य साध्यत्वेन विषयभूत इत्यर्थः । यद्यपि ध्रुवशब्दो लोक एकरूपतामाचष्टे ध्रुवमस्य शीलं ध्रुवमस्य रूपमिति तथाप्यपाये साध्ये ऽभिहितया तया न कश्चिदर्थः सम्पद्यत इति नात्र ध्रुवता ऽपायं प्रत्युपयुज्यते । सैवोपादीयते । सा चावधिभाव एव । तस्मादपायशब्दस्य सन्निधौ ध्रुवशब्दः सम्बन्धात् संश्लेषलक्षणात् प्रच्यवमानस्यावधिभावमाचष्टे इत्यत आह अवधिभूतमिति । अतएवापाये साध्येऽवधिभूतं यत् तदिह ध्रुवशब्देनोच्यते । तेन धावतोऽश्वात् पतित इत्येवमादावप्यपादानसंज्ञाश्वादेः सिद्धा भवति । अस्ति ह्यत्रापि सत्यपि चलत्वे ऽश्वादेरप्यपायेऽवधिभावः । अथेह कथमपादानसंज्ञा ? अधर्माज्जुगुप्सते । अधर्माद्विरमति । धर्म्मात् प्रमाद्यतीति । न ह्यत्रापायोऽस्ति । कथम् ? कायसम्प्राप्तिपूर्वको ह्यपायो भवति । नचेह कायसंप्राप्ति रस्तीत्यत आह जुगुप्सेत्यादि । जुगुप्सार्थानां धातूनां प्रयोगेऽपादानसंज्ञाया उपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः । तत्रेदं प्रतिपादनम् । अपादानमिति महती संज्ञा क्रियते महाविषयेयं संज्ञेति सूचनार्थम् । एवञ्च महाविषया भवतीयं यदि सूत्रोपात्तात् संज्ञिनोऽन्योऽप्यस्या विषयो भवति । नान्यथा । तेन जुगुप्सादीनां प्रयोगेऽसत्यप्यपायेऽपादानसंज्ञा भविष्यतीति । अथवास्त्येवात्रापायः । नहि कायसंप्राप्तिपूर्वक एवापायो भवतीति । किं तर्हि ? चित्तसंप्राप्तिपूर्वकोऽपि भवति । इह

तावदधर्म्माज्जुगुप्सते ऽधर्माद्विरमतीति य एव मनुष्यः प्रेक्षापूर्वकारी भवति स एवं पश्यति दुःखहेतुरयमधर्मो नाम। अतो नार्हत्येनं सचेताः कर्त्तुमिति। एवं विचारयंस्तं बुद्ध्या प्राप्नोति। प्राप्य च ततो निवर्त्तते। तत्र ध्रुवमपायेऽपादानमित्येवमपादानमिति संज्ञा सिद्धा भवति। धर्म्मात् प्रमाद्यतीत्यत्रापि यो नास्तिकः पुरुषो भवति स एवं पश्यति। नास्माद्धर्मात् किञ्चिदिष्टं सम्पद्यते। दुःखमेव केवलं तदारम्भनिमित्तकं भवति। स एवं विचारयं स्तं बुद्ध्या प्राप्नोति। प्राप्य च ततो निवर्त्तते। तथाच ध्रुवमपायेऽपादानमित्येवं सिद्धम्। प्रमाद्यतीति। मदी हर्षे। शमामष्टानां दीर्घः श्यनीति (७।३।७४) दीर्घः। अथेह कथमपादानसंज्ञा ग्रामान्नागच्छतीति? कथञ्च न स्यात्? ग्रामस्यापायेनायुक्तत्वात्। यस्यां सत्यामपायो भवति सा प्रतिषिध्यते चापादानसाधनागमनक्रिया। तदसत्यां तस्यां कुतोऽपायः। नैष दोषः। अत्र ह्यपादानसंज्ञायां समुपजातायां पश्चात् प्रतिषेधेन सम्बन्धः क्रियते। अन्यथा हि प्रतिषेधस्य विषयो न दर्शितः स्यात्। तथाह्यपादानसाधनागमनक्रिया प्रतिषेद्धुमिष्टा। तत्र यदि चादावेव निषेधः स्यादपायाभावात् तदसम्बद्धस्य ग्रामस्यापादानसंज्ञा सिद्धा न स्यात्। ततश्च या प्रतिषेध्यापादानसाधनागमनक्रिया प्रतिषेधस्य विषयभूता सा न शक्यते प्रदर्शयितुम्। न चात्राप्रदर्शितविषये प्रतिषेधः शक्यते वक्तुम्। तस्मात् पूर्वमपादानसंज्ञा भवति। पश्चात् प्रतिषेधेन योग इत्येष क्रमः।

## २५। भीत्रार्थानां भयहेतुः।

भीति भीः। त्राणं त्राः। सम्पदादित्वात् क्विप्। भीश्च त्राश्च भीत्रौ। भीत्रावर्थौ येषां ते भीत्रार्थाः। बिभेत्यर्थानामित्यादि। बिभेतित्रायतिशब्दाविह साहचर्य्याद् बिभेतित्रायत्यर्थयोर्वर्त्तेते। बिभेतिरर्थो येषां ते बिभेत्यर्थाः। त्रायतिरर्थो येषां ते त्रायत्यर्थाः। बिभेतीति। ञिभी भये। जौहोत्यादिकः। उद्विजत इति। ओविजी भयचलनयोः। तौदादिकोऽनुदात्तेत्। त्रायत इति। त्रैङ् पालने भौवादिकः। अरण्ये बिभेतीति। नात्रारण्याद्भयम्। किं तर्हि। तत्रस्थेभ्य श्चौरादिभ्यः। ननु चात्राधिकरण-

संज्ञा परत्वाद् बाधिका भविष्यति । अपि च ध्रुवमित्यनुवर्त्तते । ध्रुवश्चावधिभूतमित्युक्तम् । न चारण्यमवधिभावेन विवक्षितम् । तत् किमेतन्निवृत्त्यर्थेन भयहेतुग्रहणेन ? एवन्तर्हि पूर्वस्यायं प्रपञ्चः । नहि कायसम्प्राप्तिपूर्वक एवापायो भवति । किन्तर्हि ? बुद्धिसंम्प्राप्तिपूर्वकोऽपि । अस्ति चेह बुद्धिसंप्राप्तिपूर्वकोऽप्यपायः । तथाहि चौरेभ्यो बिभेतीत्यत्र यस्तावत् पुरुषः प्रेक्षावान् भवति स एवं पश्यति । यदि मां चौराः पश्येयुर्ध्रुवं मे मृत्युरिति विचारयं स्तान् बुद्ध्या प्राप्नोति । प्राप्य च ततो निवर्त्तते । तत्र ध्रुवमित्यादिनैव सिद्धम् । तस्मात् पूर्वस्यायं प्रपञ्चः । नच प्रपञ्चे गुरुलाघवं चिन्त्यते । एवमुत्तरेऽपि योगाः पूर्वस्यैव प्रपञ्चा वेदितव्याः । तदुदाहरणानामध्ययनात् पराजयत इत्येवमादीनां पूर्वेणैव सिद्धत्वात् । यथाच तेषां सिद्धत्वं तथा भाष्य एव प्रतिपादितम् । तस्मात् तत्रापि गुरुलाघवं न चिन्तनीयम् ।

## २६ । पराजेरसोढः ।

सोढुं न शक्यत इति । अभिभवितुं न शक्यत इत्यर्थः । अध्ययनात् पराजयत इत्यध्ययनमभिभवितुं न शक्नोति न पारयतीत्यर्थः । विपराभ्याञ्जेरित्यात्मनेपदम् (१।३।१८) । शत्रून् पराजयत इत्यभिभवतीत्यर्थः । ननु च परत्वात् कर्मसंज्ञयैवात्र बाधितत्वादपादानसंज्ञा न भविष्यति । तत् किमेतन्निवृत्त्यर्थेनासोढग्रहणेन ? सत्यमेतत् । प्रपञ्चे गुरुलाघवं नहि चिन्त्यते । प्रपञ्चश्चायम् । अस्ति ह्यत्राध्ययनाद् बुद्धिसंसर्गपूर्वकोऽपायः । तथाहि य एव पुरुषो ऽलसो भवति स एवं मन्यते दुःखायैवैतदध्ययनमिति । पश्यन् बुद्ध्या तत् प्राप्नोति । प्राप्य च ततो निवर्त्तते । तस्मात् पूर्वेणैव सिद्धम् ।

## २७ । वारणार्थानामीप्सितः ।

वारणमर्थो येषां ते वारणार्थाः । यवेभ्यो गा वारयतीति । गा इति गवामीप्सितत्वेन विवक्षितत्वात् कर्मसंज्ञा । गोशब्दाच्छस् । औतोम् (६।१।९३) शसोरित्यात्वम् । रुत्वे कृते भोभगोअघोअपूर्वस्येति (८।३।१७) यत्वम् । हलि

सर्वेषामिति (८।३।२२) यलोपः। वारयतीति। वृञ् आवरणे। चुरादिणिच्। निवर्त्तयतीति। वृतु वर्त्तने। हेतुमण्णिच्। यवेभ्यो गा वारयति क्षेत्रे। अत्र क्षेत्रस्यानीप्सितस्य न भवति संज्ञा। ईप्सितग्रहणात्। ननु चात्र परत्वादधिकरणसंज्ञयैव बाधितत्वादपादानसंज्ञायाः क्षेत्रस्यापादानसंज्ञा न भविष्यतीत्यतो न कर्त्तव्यमीप्सितग्रहणमित्येतन्नाशङ्कनीयम्। उक्तोत्तरत्वात्।

## २८। अन्तर्द्धौ येनादर्शनमिच्छति।

अन्तर्द्धाविति निमित्तसप्तमीयम्। निमित्तात् कर्मसंयोग इति (२।३।३६,वा) सप्तमी यथा चर्मणि द्वीपिनं हन्तीति। एतदेव ज्ञापकं निमित्तात् कर्मसंयोगेऽस्ति सप्तमीति। अस्ति ह्यत्रादर्शनेन कर्मणा संयोगः। येनेति कर्त्तरि तृतीया। ननु च कर्त्तृकर्मणोः (२।३।६५) कृतीति षष्ठ्या भवितव्यमिति ? नैतदस्ति। उभयप्राप्तौ कर्मणीति (२।३।६६) नियमात् कर्मण्येव। न कर्त्तरि। कर्म त्वत्रादर्शनस्यात्मा। तस्यान्तरङ्गत्वात् स एव कर्म विज्ञायते। तत् कारकमिति। यद्यप्यत्र सूत्रे तच्छब्दो नोपात्तस्तथापि स यत्तदोर्नित्याभिसम्बन्धाल्लभ्यते। उपाध्यायादन्तर्धत्त इत्यत्रोपाध्यायेन कर्त्रा शिष्य आत्मनः कर्मभूतस्यादर्शनमिच्छति। अन्तर्द्धिनिमित्तम्। अन्तर्धत्त इति। दधातेर्लट्। स्वरितञितेत्यात्मनेपदम् (१।३।७२)। शपः श्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। श्नाभ्यस्तयोरात (६।४।११२) इत्याकारलोपः। अभ्यासस्य जश्त्वम्। दधस्तथोश्चेति (८।२।३८) दकारस्य धकारः। परस्य धकारस्य खरि चेति (८।४।५५) चर्त्वं तकारः। निलीयत इति। लीङ् श्लेषणे। दैवादिकः। चौरान्न दिदृक्षत इति। अत्र यश्चौरान् न दिदृक्षत इति स तैरात्मनोऽदर्शनमिच्छति। न त्वन्तर्द्धिनिमित्तम्। किन्तूपघातनिवृत्त्यर्थम्। विस्पष्टार्थञ्चान्तर्द्धिग्रहणम्। परत्वात् कर्मसंज्ञयैव बाधितत्वाच्चौराणामिहापादानसंज्ञा न भविष्यति। प्रपञ्चार्थोऽयं योगः। न च प्रपञ्चे गुरुलाघवं चिन्त्यत इत्युक्तम्। दिदृक्षत इति। ज्ञाश्रुस्मृदृशां (१।३।५७) सन इत्यत्र व्युत्पादितम्। अथ येनेति किमर्थम् ? उपाध्यायादन्तर्धत्ते शिष्य इति शिष्यस्यान्तर्द्धातुर्मा भूत्। नैतदस्ति। ध्रुवमित्यनुवर्त्तते। ध्रुवञ्चावधिभूतमित्युक्तम्। न चान्तर्द्धातावधिभूतः। एवं तर्ह्यसति

येनेत्येतस्मिन् वचने सत्यामपि ध्रुवमित्यस्यानुवृत्तौ सूत्रस्यावाचकत्वं स्यात् । अतस्तन्मा भूदिति येनेत्युक्तम् ।

२९ । आख्यातोपयोगे ।

नियमपूर्व्वकं विद्याग्रहणमिति । विद्याग्रहणार्थं शिष्य(B)प्रवृत्तिर्नियमः । स पूर्वो यस्य तत् तथोक्तम् । शेषाद्विभाषेति (५।४।१५४) कप् । नटस्य गाथां शृणोतीति । सम्बन्धलक्षणा षष्ठी । नियमपूर्वकमिह विद्याग्रहणं नास्ति ।

३० । जनिकर्त्तुः प्रकृतिः ।

जनिशब्दोऽत्र साहचर्य्याज्जन्यर्थे वर्त्तते । अतएवाह जन्यर्थस्येति जन्मन इति । एतेन जन्यर्थं दर्शयति । तथाहि जनी प्रादुर्भाव इति पठ्यते । प्रादुर्भावो जन्म एव । कः पुनस्तस्य कर्त्तेत्यत आह जायमान इति । ज्ञाजनोर्जा इति (७।३।७१) जादेशः । अथ प्रकृतिग्रहणं किमर्थम् ? यावता ध्रुव मित्यनुवर्त्तते । ध्रुवञ्चावधिभूतमित्युक्तम् । जनिकर्त्तुश्चावधिः कारणमेव भवति । तत्रान्तरेणापि प्रकृतिग्रहणं प्रकृतेरेव भविष्यति । नैतदस्ति । पुत्त्रात् प्रमोदो जायत इत्यादौ पुत्त्रादेरप्यपादानसंज्ञा यथा स्यादित्येवमर्थं प्रकृतिग्रहणम् । द्विविधं हि कारणम् । उपादानकारणं सहकारिकारणञ्च । तत्र यत् कार्य्येणाभिन्नदेशं तदुपादानकारणम् । यथा घटस्य मृत्पिण्डः । सहकारिकारणं यत् कार्य्येण भिन्नदेशम् । यथा तस्यैव दण्डचक्रादि । तत्रासति प्रकृतिग्रहणे प्रत्यासत्तेरुपादानकारणस्यैव स्यात् । नेतरस्य । प्रकृतिग्रहणे तु सति सर्वस्यैव कारणमात्रस्य भवति ।

३१ । भुवः प्रभवः ।

भवनं भूरिति सम्पदादित्वात् क्विप् । प्रभवत्यस्मादिति प्रभव इत्यपादान ऋदोरवित्यप् (३।३।५७) । ननु च हिमवतो गङ्गा प्रभवतीत्येतत् पूर्वेणैव सिद्धम् । तथा ह्यय मत्रार्थो हिमवतो गङ्गा जायत इति । तत् किमर्थमिद मारभ्यत इत्याह प्रथमत उपलभ्यत इति । एष चार्थोऽनेकार्थत्वाद्धातूनां वेदितव्यः ।

---

(B) शिष्यप्रवृत्तिरिति क्वचित् पाठान्तरम् ।

जन्यर्थस्त्वत्र न सम्भवत्येव । नहि हिमवान् गङ्गायाः कारणम् । सा ह्यन्येभ्य एव कारणेभ्य उत्पन्ना । हिमवति तु केवलं प्रथमत उपलभ्यत इति ।

## ३२ । कर्म्मणा यमभिप्रैति स सम्प्रदानम् ।

कर्मणा करणभूतेनेति । ननु च कथं कर्म्म करणं भवति ? क्रियाभेदसम्बन्धात् । तथाहि ददातिक्रिययाऽसुमिष्टतमत्वात् तस्याः कर्मत्वम् । अभिप्रायणक्रियां प्रति तस्य साधकतमत्वात् करणत्वम् । अभिप्रैतीति । अभिसम्बध्नातीत्यर्थः । यदि कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञो भवत्येवमजां नयति ग्राममित्यजादिभिर्नयनक्रियाकर्मभिः सम्बध्यमानस्य ग्रामस्य सम्प्रदानसंज्ञा प्रसज्येतेत्यत आह अन्वर्थसंज्ञाविज्ञानादित्यादि । सम्प्रदानमिति महत्याः संज्ञायाः करणस्यैतत् प्रयोजन मन्वर्थसंज्ञा यथा विज्ञायेत सम्यक् प्रकर्षेण दीयते यस्मै तत् सम्प्रदानमिति । तेन ददातेः कर्मणा यमभिप्रैति तत् सम्प्रदानमिति विज्ञायते । नन्वेवमपि रजकस्य वस्त्रं ददाति घ्नतः पृष्ठं ददातीत्यत्र प्राप्नोति । नैतदस्ति । दानं हि नाम पूजानुग्रहकाम्यया स्वकीयद्रव्यपरित्यागः परस्वत्वापत्तिः । तच्चेह नास्ति । अतो न भविष्यति । कर्मणेति किमर्थम् ? यमभिप्रैति स सम्प्रदान मित्युच्यमाने यमभिप्रैति तस्य कर्म्मण एव सम्प्रदानसंज्ञा स्यात् । कर्मसंज्ञायास्तु ददातिकर्मणोऽन्यत्रावकाशः स्यादोदनं पचतीति । यंसग्रहणं किमर्थम् ? कर्मणाभिप्रैति संप्रदानमित्युच्यमाने योऽभिप्रैति तस्य संप्रदानसंज्ञा स्यात् । ततश्च कर्त्तुः संप्रदानसंज्ञा स्यात् । कर्त्तृसंज्ञायास्तु यत्र कर्मसम्बन्धो नास्ति सोऽवकाशः स्यादास्ते शेत इति । अथाभिप्रग्रहणं किमर्थम् ? कर्मणा यमेति स सम्प्रदानमित्युच्यमाने कालविशेषविवक्षा स्यात् । वर्त्तमान एव स्यात् । ततश्चोपाध्यायाय गामदादुपाध्यायाय गां दास्यतीत्यत्र न स्यात् । अभिप्रग्रहणे तु सति भवति । अभिराभिमुख्ये वर्त्तते । तच्चाप्यतीतेऽप्यस्ति । प्रशब्द आदिकर्म्मणि प्रारम्भे । स चासन्निहितायां भाविन्यामपि क्रियायां सम्भवतीति सर्वत्र संज्ञा सिद्धा भवति । नैतदभिग्रहणस्य प्रयोजनमुपपद्यते । यथैव कर्मणीत्यत्रैकत्वसंख्याया विवक्षा न भवति यथाच यं स इत्यत्र लिङ्ग-

संख्ययोर्विवक्षा न भवति तथा कालस्यापि न भविष्यति । किं कारणम् ? उपलक्षणार्थत्वात् । यथा सोऽर्थो योऽनर्थं बाधत इत्युक्ते योऽपि बाधितवान् योऽपि बाधिष्यते सोऽप्यर्थ एव । एवन्तर्हि ग्रन्थाधिक्यादर्थाधिक्यं यथा स्यादित्येवमर्थमभिप्रग्रहणम् । एतेन क्रिययापि यमभिप्रैति तस्यापि सम्प्रदानसंज्ञा सिद्धा भवति । अन्यथा हि यद्यपि क्रिया प्रार्थनाध्यवसानाभ्यां व्याप्तुमिष्टतमत्वात् कर्म्म तथापि ददातिकर्म्मसम्बन्धाभावान्न सिद्ध्येत् । कथं पुनरेतदवसितं क्रियया यमभिप्रैति स सम्प्रदानमित्ययमर्थोऽत्र प्रतिपादयितुमिष्टतम इति ? अभिप्रग्रहणात् । अस्ति ह्यत्राचार्य्यस्य कश्चिदर्थोऽधिकोऽभिमतो यस्यावभासनायाधिकं शब्दान्तरं प्रयुक्तमिति गम्यते । नत्वर्थविशेषः । नहि तत् तस्य वाचकम् । यद्यप्यवाचकं स्यात् तथापि लक्ष्यदर्शनवशादविच्छिन्नाचार्य्यपारम्पर्य्योपदेशाच्च विशेषावगतिर्भविष्यतीत्यदुष्टमेतत् । क्रियाग्रहणमपि कर्त्तव्यमिति । क्रियाया ग्रहणं क्रियाग्रहणम् । येन क्रिया गृह्यते । तद्व्याख्यानं कर्त्तव्यम् । किं पुनस्तद्व्याख्यानम् ? तच्चास्माभिरभिप्रग्रहणस्य प्रयोजनं वर्णयद्भिः कृतमेव । का पुनरिह क्रिया ययाभिप्रेयमाणस्य सम्प्रदानसंज्ञेष्यते ? सा विवक्षिता । अत आह क्रियया यमभिप्रैतीत्यादि । निगच्छते इति । गम्ऌ गच्छ कुत्सायामनुदात्तेत् । युद्धाय सन्नह्यत इति । नह बन्धने दिवादौ स्वरितेत् । स चेह निश्चये वर्त्तते । युद्धे निश्चयं करोतीत्यर्थः । पत्ये शेत इति । शीङ्त्वोपसर्पणपूर्वके शयने वर्त्तते । पतिमुपसृप्य (C) शेत इत्यर्थः । कर्मणः करणसंज्ञेत्यादि । एतत् पशुना रुद्रं यजत इत्येतद्विषयमेव वेदितव्यम् । यजिः स्वरितेत् । एतच्च व्यत्ययो (३।१।८५) बहुलमिति सुब्व्यत्ययेन सिद्धमेवेति न वक्तव्यम् ।

## ३३ । रुच्यर्थानां प्रीयमाणः ।

रुचिना समानार्था रुच्यर्था इति । रुच्यर्थानामित्यस्मादेव निपातनात् मयूरव्यंसकादित्वात् मध्यपदलोपी समासः । समानार्था इति । एकार्था

(C) शयनेन पतिमभिप्रैति । पतिमाभिमुख्येनारभ्य शेत इति पुनापुस्तके पाठः ।

इत्यर्थः। यद्यपि रुचिर्दीप्तौ पठ्यते तथापीहाभिलाषे वर्त्तते। अनेकार्थत्वाद्धातूनाम्। तत्रैव प्रीयमाणार्थस्य सम्भवात्। यस्य ह्यभिलाषः स प्रीयमाणः। यस्त्वभिलषति स प्रीणाति। प्रीयमाण इति तृप्यमाण इत्यर्थः। प्रीञ् तर्पण इत्येतस्मात् कर्मणि विहितस्य लस्य शानच्। अन्यकर्त्तृक इत्यादिना तमभिलाषविशेषं दर्शयन् रुचिशब्दस्यार्थमाचष्टे। प्रीयमाणापेक्षया ऽन्योऽर्थो वेदितव्यः। प्रीयमाणादन्यः कर्त्ता यस्य सोऽन्यकर्त्तृकः। रोचते स्वदत इति। रुच दीप्तौ। स्वद आस्वादने। अनुदात्तेतौ। देवदत्तस्येत्यादिना ऽन्यकर्त्तृकतामभिलाषस्य दर्शयति। देवदत्ताय रोचते मोदकः पथीति। प्रीयमाणग्रहणादिहाधिकरणस्य पथः सम्प्रदानसंज्ञा न भवति। अथ देवदत्तो मोदकमभिलषतीत्यत्र देवदत्तस्य सम्प्रदानसंज्ञा कस्मान्न भवति? रुच्यर्थाभावात्। अन्यकर्त्तृको ह्यभिलाषो रुचिरित्युक्तम्। न चेहान्यकर्त्तृकोऽभिलाषः। किं तर्हि? प्रीयमाणो देवदत्तो यस्तत्रस्थोऽभिलाषस्तत्कर्त्तृकः।

## ३४। श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः।

ज्ञीप्स्यमान इति। मारणतोषणनिशामनेषु ज्ञा इति घटादिषु पठ्यते। तस्मान् निशामने ज्ञाने वर्त्तमानाद् हेतुमण्णिच्। अथवा ज्ञप मिच्चेति चुरादौ पठ्यते। तस्माच्चुरादिणिच्। मित्त्वाद् ह्रस्वत्वम्। सन्। द्विर्वचनम्। आप्ज्ञप्यृधामिदितीत्वम् (७।४।५५)। अत्र (७।४।५८) लोपोभ्यासस्येत्यभ्यासलोपः। कर्मणि लकारः। शानच्। यक्। अतो (६।४.४८) लोपः। श्लाघत इति। श्लाघृ कत्थने ऽनुदात्तेत्। अपह्नुत इति। ह्नुङ् अपनये। अदादिकः। तिष्ठत इति। प्रकाशनस्थेयाख्ययोश्चेति (१।३।२३) तङ्। शपत इति। शप उपलम्भन (१।३।२१, वा) इत्यनेनोपसंख्यानेन तङ्।

## ३५। धारेरुत्तमर्णः।

उत्तमर्ण इति। ऋणे उत्तम उत्तमर्णः। अतएव निपातनात् समासः। सप्तमीसमासे ऋणस्य पूर्वनिपातात्। ननु चोत्तमर्णे ऋणशब्देन न भवितव्यम्। ऋणमाधमर्ण्ये (८.२।६०) इत्याधमर्ण्ये तस्य निपातनात्। नैतदस्ति।

कालान्तरे देयनियमोपलक्षणार्थं हि तत्राधमर्णग्रहणम् । अत उत्तमर्णेऽपि भवत्येव । शतं धारयतीति । धृङ् अवस्थाने । शतं ध्रियते स्वरूपेणावतिष्ठते । स्वभावान्न प्रच्यवते । तदन्यः प्रयुङ्क्त इति हेतुमति (३।१।२६) चेति णिच् । ग्राम इति ग्रामस्याधिकरणस्यानुत्तमर्णस्य न भवति ।

## ३६ । स्पृहेरीप्सितः ।

स्पृहयतीति । अतो (६।४।४८) लोपस्याचः परस्मिन् (१।१।५७) पूर्वविधाविति स्थानिवद्भावाद् गुणो न भवति । यदा तु पुष्पादीनामीप्सिततमत्वं विवक्ष्यते तदा परत्वात् कर्मसंज्ञैव भवति । पुष्पाणि स्पृहयतीति ।

## ३७ । क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।

क्रुधद्रुहावकर्म्मकौ । तत्र षष्ठ्यां प्राप्तायामयमारम्भः । इतरौ सकर्म्मकौ । तत्र द्वितीयायां प्राप्तायाम् । कथं पुनरेषां भिन्नार्थत्वे सति यं प्रति कोप इति सामान्येन तद्विशेषणमुपपद्यत इत्याह । क्रोधस्तावदित्यादि । सुगमम् । क्रुध्यति द्रुह्यतीति । क्रुध कोपे । द्रुह जिघांसायाम् । दैवादिकौ । ईर्ष्यतीति । ईर्च्छ सूर्च्छ ईर्ष्य ईर्ष्यार्थाः । असूयतीति । असूयशब्दः कण्ड्वादियगन्तः । भार्य्यामीर्ष्यतीति । अस्ति भार्य्यायामीर्ष्या । न तु तां प्रति कोपः । केवलं परैर्दृश्यमानां तां न क्षमते । अथास्मान् द्वेष्टीत्यत्र कथं न भवति सम्प्रदान-संज्ञा ? द्विषेरक्रोधाद्यर्थत्वात् । अप्रीतौ ह्येनं स्मरन्ति । तथाचाचेतनेष्वपि प्रयुज्यते । औषधं द्वेष्टीति । नाभिनन्दतीति गम्यते ।

## ३८ । क्रुधद्रुहो रुपसृष्टयोः कर्म ।

## ३९ । राधीक्ष्योर्यस्य विप्रश्नः ।

राध्यतीति । राध साध संसिद्धौ । दैवादिकः । दैवमिति शुभाशुभं कर्म । यस्येति ग्रहणं विस्पष्टार्थम् । तथाहि यं प्रतीत्यनुवर्त्तते । तत्र यं प्रति विप्रश्न इत्येवमभिसम्बन्धे क्रियमाणे यस्येत्यस्यार्थोऽप्रयुज्यमानस्यापि गम्यत एव ।

४० । प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता ।

परेणेत्यादि । अन्येन केनचिदिदं मे क्रियतामिति प्रयुक्तो व्यापारितः सन् प्रतिजानीते । अतः प्रतिज्ञातुरन्येन प्रयुक्तस्याभ्युपगमो भवति । प्रयोक्तेति व्यापारयिता । सूत्रे पूर्वस्येत्यर्थापेक्षया पुंलिङ्गेन निर्देशः । स त्वर्थो विचार्यमाणः क्रियैव भवति । यस्मात् कर्त्तेति क्रियाया एव भवति नान्यस्यार्थस्येत्याह पूर्वस्याः क्रियाया इति । यश्चासौ पूर्वस्याः क्रियायाः कर्त्ता भवति स प्रतिज्ञातुः प्रयोजको भवतीति हेतुसंज्ञायां प्राप्तायामिदं वचनम् । देवदत्ताय गां प्रतिशृणोति । अत्र पूर्वस्या याचनक्रियाया देवदत्तः कर्त्ता । देवदत्तेन हि मह्यं गां देहीति याचितः स यदा ददामीति प्रतिजानीते तदेवं प्रयुज्यते देवदत्ताय गां प्रतिशृणोतीति । पूर्वस्य कर्त्तेति किम् ? विना तेन गवादेरभ्युपेयमानस्य कर्मण एव स्यात् । ननु च परत्वात् कर्मसंज्ञा तस्य बाधिका भविष्यति । नैतदस्ति । नाप्राप्ते हि संज्ञान्तर इदमारभ्यत इति । इहापि च देवदत्ताय गामाशृणोतीति देवदत्तस्य हेतुसंज्ञा प्राप्नोति । तत्र पूर्वस्य कर्त्तेत्यस्मिन्नसति यथा देवदत्तस्य हेतुसंज्ञां बाधते तथा कर्मसंज्ञामपि बाधेत । अथवा पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति कर्मसंज्ञामेव बाधेत । पूर्वस्य कर्त्तेत्यस्मिंस्तु सति हेतुसंज्ञामेव बाधते । न कर्मसंज्ञाम् ।

४१ । अनुप्रतिगृणश्च ।

अनुप्रतिगृण इति श्नाप्रत्ययेन निर्देशात् क्र्यादिपठितस्य गॄ शब्द इत्यस्य ग्रहणम् । न गॄ निगरण इत्यस्य तौदादिकस्य । होता प्रथमं शंसतीति । एतेन स्तुतिक्रियायाः पूर्वस्या होता कर्त्तेति दर्शयति । प्रोत्साहयतीत्यनेनानुगृणातिप्रतिगृणातिशब्दयोरर्थमाचष्टे । कथं पुनर्ज्ञायते ऽनुपूर्वः प्रतिपूर्वश्च शंसितुर्गृणातिः प्रोत्साहने वर्त्तत इत्याह अनुगरः प्रतिगर इति । अनुगीर्य्यते होता प्रथमं प्रशस्यते येन शब्देन सोऽयमनुगरः । एवं प्रतिगीर्य्यते येन स प्रतिगरः । पूर्वस्य कर्त्तेत्येव । होत्रेऽनुगृणाति सदसीत्यधिकरणस्य मा भूत् ।

४२ । साधकतमं करणम् ।

ननु च सामग्र्यधीना हि क्रियासिद्धि रेकस्याप्यभावेन न भवति । तत् कस्मात्र प्रकर्षो यत्परिग्रहाय साधकतमशब्दस्य ग्रहणमिति यश्चोदयेत् तं प्रत्याह क्रियासिद्धावित्यादि । प्रकृष्टमत्यन्तमुपकारकम् । अथवा प्रकर्षः प्रकृष्टम् । नपुंसके भावे (३।३।११४) क्तः । प्रकृष्टेन प्रकर्षेणोपकारकं प्रकृष्टोपकारकम् । यत् क्रियासिद्धिविषये प्रकर्षेणोपकारकं विवक्षितं तत् साधकतमम् । विवक्षितग्रहणं यदा प्रकृष्टोपकारकत्वेन विवक्ष्यते तदा साधकतमव्यवहारो विज्ञायते नान्यदेति ज्ञापनार्थम् । तथाहि विवक्षावशाद् यदेव कदाचित् करणम्भवति धनुषा विध्यतीति तदेव कदाचित् स्वातन्त्र्यविवक्षायां कर्तृत्वमनुभवति धनु र्विध्यतीति । लुनातीति प्वादीनां ह्रस्वः (७।३।८०) । तमब् ग्रहणं किम् ? गङ्गायां घोष इति । यदि तमब्ग्रहणं न क्रियेत ततोऽत्राधिकरणसंज्ञा न स्यात् । इह हि द्विविध आधारः । गौणो मुख्यश्च । तत्र मुख्यो य आधेयेन व्याप्यते यथा तिलेषु तैलमस्ति । अत्र तैलेनाधेयेनाधारभूता स्तिला व्याप्ताः । अव्याप्तो गौणो यथा गङ्गायां घोष इति । अत्र हि सामीप्याद् गङ्गाया आधारत्व मुपचरितम् । न मुख्यम् । व्याप्त्यभावात् । तत्रासति तमब्ग्रहणे गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्यय इति मुख्यस्यैवाधिकरणसंज्ञा स्यात् । नेतरस्य । तमब्ग्रहणात् तस्यापि भवति । तथापीह तमब्ग्रहणं न कर्त्तव्यम् । कथम् ? विनापि तेन प्रकर्षावगतेः । यथैव ह्यनभिरूपाय कन्यादानस्य प्रवृत्ति र्नास्तीत्यभिरूपाय कन्या देयेत्युक्ते विनापि प्रकर्ष प्रत्ययेनाभिरूपतमायेति गम्यते तथेहापि कारकाधिकारादसाधके संज्ञायाः प्रवृत्तिर्नास्तीति साधकं करणमित्युक्ते ऽन्तरेणापि तमब्ग्रहणं साधकतममिति गम्यते । तत् किं तमब्ग्रहणेन ? तदेतत् तमब्ग्रहणं ज्ञापनार्थं कृतम् । एतदनेन ज्ञाप्यत इह कारकाधिकार इतः सूत्रादन्यत्र विना तमब्ग्रहणेन प्रकर्षो नाश्रीयत इति । तेनाधारोऽधिकरण मित्यनेन गङ्गायां घोष इत्यादावमुख्यस्यापि गङ्गादेराधारस्याधिकरणसंज्ञा सिद्धा भवति

४३ । दिवः कर्म्म च ।

दीव्यतीति । हलि (८।२।७७) चेति दीर्घः ।

## ४४। परिक्रयणे संप्रदानमन्यतरस्याम्।

परिक्रीतिः परिक्रयणम्। नियतकालमिति। नात्यन्तिकम्। वेतनादिनेति। आदिशब्देन बन्धकादीनां ग्रहणम्। नात्यन्तिकः क्रय एवेति नियतकालत्वं स्पष्टीकरोति। परिशब्दोऽत्र प्रत्यासत्तिं द्योतयति। क्रयो हि नामात्यन्तिकः। वेतनादिना केवलं यत्तु नियतकालं तदात्यन्तिकस्य क्रयस्य समीपमिति परिशब्देनाख्यायते।

## ४५। आधारोऽधिकरणम्।

आध्रियन्ते क्रियागुणा अस्मिन्नित्याधार इति। अध्यायन्यायोद्यावेत्यादिना-(३।३।१२२) ऽधारशब्दोऽधिकरणे घञन्तो व्युत्पादितः। क्रियापेक्षत्वात् कारकस्येति क्रियाग्रहणम्। यत्राध्रियन्ते क्रिया यस्मिन् स आधार इत्येवं हि सति कर्तृकर्मणो रेवाधिकरणसंज्ञा प्रसज्येत। तयोरेव हि क्रिया आध्रियन्ते। तथाहि कर्तृस्था वा क्रिया भवति कर्मस्था वा। अनवकाशत्वात् कर्तृकर्मणोः संज्ञा न भविष्यत्येष दोषप्रसङ्ग इति। एतच्चानुत्तरम्। सत्यपि ह्यनवकाशत्वे तयोः पर्य्यायः स्यात्। एकदाधिकरणसंज्ञा। अन्यदा कर्मसंज्ञा कर्तृसंज्ञेति यश्चोदयेत् तं प्रत्याह कर्तृकर्मणोरित्यादि। एतेन यादृशस्याधारस्याधिकरणसंज्ञया भवितव्यं तन्दर्शयति। प्रतिराभिमुख्ये। क्रियां प्रति य आधार इति। क्रियाया अभिमुखो य आधार इत्यर्थः। यश्च क्रियां धारयति स क्रियाया अभिमुखो भवति। क्रियायास्तु धारणं साक्षाद्व्यवधानेन वा। कर्तृकर्मणोः क्रियाश्रययोर्धारणात्। तत्र पूर्वस्य व्यवच्छेदार्थं कर्तृकर्मणोरित्युक्तम्। तदेतदुक्तं भवति। कर्तृकर्मणोः क्रियाधारभूतयोर्धारणात् क्रियाया अभिमुखो य आधारस्तस्याधिकरणसंज्ञा भवतीति। तदेवं क्रियाधारभूतकर्तृकर्मधारणद्वारेण क्रियाया अभिमुखो य आधारस्तस्याधिकरणसंज्ञा यतोऽनेन विधीयते ततो न भवति पूर्वस्य दोषस्य प्रसङ्गः। नहि कर्तृकर्मणोरनेन प्रकारेण क्रियां प्रत्याधारत्वम्। अपितु साक्षादेव क्रियाधारणात्। नन्वेवमपि कर्तृकर्मणोर्मुख्यं क्रियाधारत्वं साक्षादेव क्रियाधारणात्। कर्तृकर्माधारस्य तु कटादेर्गौणत्वं क्रियाश्रयभूतकर्तृकर्मधारणद्वारेण क्रियाधारणात्। तत्र मुख्य

आधारे सति गौणस्याधिकरणसंज्ञा न प्राप्नोतीति स दोष स्तदवस्थ एव । नैतदस्ति । तमब्ग्रहणेन ज्ञापित मेतत् । गौणस्याप्याधारस्याधिकरणसंज्ञा भवतीति । भवतु गौणस्याधिकरणसंज्ञा । मुख्यस्यापि कर्त्तुः कर्मणश्च कस्मान्न भवतीति चेत् ? न । परत्वादनवकाशत्वाच्च कर्त्तृकर्म्मसंज्ञाभ्यां बाध्यमानत्वात् । अधिकरणसंज्ञा हि पूर्वा गौण आधारे सावकाशा । तद्विपरीते तु कर्त्तृकर्मसंज्ञे इति ताभ्यां बाध्यमाना नोत्सहते तयोर्विषय मवगाहितुम् । कट आस्त इति । कर्त्तृस्था क्रिया यत्र पूर्वेण प्रकारेणाध्रियते तस्योदाहरण मासनक्रियायाः कर्त्तृस्थत्वात् । स्थाल्यां पचतीति । कर्मस्था क्रिया यत्राध्रियते तस्योदाहरणं विक्लेदनक्रियायाः कर्मस्थत्वात् । तत् पुनरधिकरणं त्रिप्रकारम् । औपश्लेषिकं वैषयिकमभिव्यापकञ्च । तत्राद्ये कट आस्ते स्थाल्याम्पचतीति कटादे रप्याधारस्य ह्याधेयेन सहोपश्लेषः संयोगलक्षणोऽस्तीत्यौपश्लेषिकं तद् भवति । वैषयिकं गुरौ वसति गङ्गायां घोष इति । प्रतिवसतीति । विषयो ह्यनन्यत्रभावः । यथा चक्षुष्प्रभृतीनां रूपादिभ्योऽनन्यत्रभावाच् चक्षुरादीनां रूपादयो विषया इत्युच्यन्त एवं शिष्यादीनां गुर्वादिभ्योऽनन्यत्रभावादेषां ते विषया इति । ननु चाधारोऽधिकरण मित्युक्तम् । आधारश्च को भवति ? य आश्रयः । आश्रयः संयोगतः समवायतो वा भवति । न च शिष्यादीनां गुरुप्रभृतिभिः सह संयोगः समवायो वा ऽस्ति । तदयुक्तं तेषामधिकरणत्वम् । नैतदस्ति । यदायत्ता हि यस्य स्थितिः स विनापि संयोगसमवायाभ्यां तस्याश्रयो भवति यथा राजायत्तस्थितित्वात् पुरुषस्य राजेति । न च राज्ञा सह पुरुषस्य संयोगसमवायौ स्तः । तथाहि तदधीनस्थितित्वाद् राजाश्रयः पुरुष इति लोके व्यपदिश्यते । तथा शिष्यादीनां गुर्व्वाद्यायत्ता स्थितिरिति युक्तास्तान् प्रति गुरुप्रभृतीनामाश्रयभावः । अभिव्यापकं यथा तिलेषु तैलं दध्नि सर्पिरिति । तिलादिकं तैलादिकमाधेयं व्याप्यावतिष्ठत इति तिलादिकमभिव्यापकमधिकरणम् । यद्यप्यत्र तिलादीनां तैलादिभिः सह संयोगोऽस्ति तथापि देशविभागाभावादत्र संश्लेषव्यवहारो नास्तीत्यौपश्लेषिकात् तत् पृथगेवापस्थाप्यते ।

४६ । अधिशीङ्स्थासां कर्म ।

अध्यास्त इति । आस उपवेशने । अदादिरनुदात्तेत् ।

४७ । अभिनिविशश्च ।

४८ । उपान्वध्याङ्वसः ।

लुग्विकरणालुग्विकरणपरिभाषया वस निवास इत्यस्य भौवादिकस्य ग्रहणम् । न वस आच्छादन इत्यस्यादादिकस्य । वसेरश्यर्थस्येत्यादि । उपोष्य रजनीमेकामिति त्रिरात्रमुपवसतीत्यत्र च कालाध्वनोरिति (२।३।५) द्वितीया । अथवा कालभावाध्वगन्तव्येति (१।४।५, वा) कर्मत्वे । अत्रार्थशब्दो निवृत्तिवचन इति भोजननिवृत्तिवाचिन इत्यर्थः । वक्तव्यमिति व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । इहाप्यन्यतरस्यांग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा विज्ञायते । तेन वसेरश्यर्थस्य प्रतिषेधो भविष्यति ।

४९ । कर्त्तुरीप्सिततमं कर्म ।

कर्त्तुः क्रिययेति । एतेन कर्त्तुरिति नेप्सिततमापेक्षया क्तस्य च (२।३।६७) वर्त्तमान इत्यनेनेयं षष्ठी । अपितु क्रियापेक्षया शेषलक्षणैवेति दर्शयति । ननु च नेह क्रियोपात्ता । तत् कथं तदपेक्षया षष्ठी प्रयुज्यते ? यद्यपि नोपात्ता तथापि कर्त्तुः क्रियापेक्षत्वात् कर्त्तृशब्दोऽयं सम्बन्धिशब्द इति कर्त्तृसम्बन्धिनीं क्रियामुपस्थापयतीत्यदोषः । ईप्सितशब्दो ह्यस्ति रूढिशब्द ईप्सितोऽभिप्रेत इति । अस्ति च क्रियाशब्द आप्तुमिष्ट ईप्सित इति । तत्रेह क्रियाशब्दो गृह्यते । नेतरः । नहि रूढिशब्दस्य क्रियया कर्त्तृसाध्यया सम्बन्ध उपपद्यते । ईप्सित इति । आप्लृ व्याप्तौ । सन् । द्विर्वचनम् । आप् ज्ञप्यृधामीदितीत्त्वम् (७.४।५५) । अत्र (७।४।५८) लोपोऽभ्यासस्येत्यभ्यासलोपः । ईप्स इति स्थिते क्तप्रत्यये कृत इटि चातो लोप (६।४।४८) इत्यकारलोपे चेप्सितशब्दः सम्पद्यते । तेनार्थद्वयमिहोपात्तम् । प्रकृत्यर्थः प्रत्ययार्थश्च । तत्राप्तुमित्यनेन प्रकृत्यर्थं दर्शयति । इष्टतममित्यनेन प्रत्ययार्थम् । कर्मण इति । अश्वस्य । तस्य बन्धनक्रियया

आप्तुमिष्टतमत्वात् कर्मत्वम् । स हि भक्षणक्रियया माषानाप्तुमिच्छति । पयसौदनं भुङ्क्ते इति । असति हि तमब्ग्रहणे पयसोऽपि स्यात् । तदपि कर्त्तुर्भुजिक्रियया व्याप्तु मिष्टम्भवति । तमब्ग्रहणे तु सति न भवत्यतिप्रसङ्गः । प्राधान्यादोदनस्यैवेप्सिततमत्वात् । प्राधान्यं ह्योदनस्य संस्कार्य्यत्वात् । पयसस्त्वप्राधान्यं संस्कारकत्वात् । कर्मेत्यनुवर्त्तमान इति । अधिशीङ्स्थासां कर्मेत्यतः (१।४।४६) । पुनरित्यादि । पूर्वं कर्मग्रहणमाधारेण सम्बद्धम् । अतस्तदनुवृत्तौ तस्यानुवृत्तिः स्यादत आधारनिवृत्त्यर्थं पुनः कर्मग्रहणं क्रियते । यदि पुन राधारोऽनुवर्त्तेत ततः किं स्यादित्यत्राह आधारस्यैव हि स्यादिति । हिशब्दो यस्मादर्थे । यस्मादाधारस्यानुवृत्तौ तस्यैव स्यात् तस्मात् तन्निवृत्त्यर्थं पुनः कर्मग्रहणमिति सम्बन्धः । क्व पुनराधारस्यैव स्यादित्याह गेहमित्यादि । आधारानुवृत्तौ तु यत्र न भवति तद्दर्शयितुमाह ओदनं पचतीत्यादि । आदि-शब्देनौदनं भुङ्क्ते इत्येवमादे र्ग्रहणम् । अथ नदी कूलं कर्षतीत्यादौ कथं कर्मसंज्ञा ? कथञ्च न स्यात् ? नद्यादेरचेतनत्वात् । अचेतनानामीप्साया असम्भवात् । नैतदस्ति । अत्र नदीति पदान्तरसम्बन्धादीप्साया अभावोऽचेतनस्यापि भावः प्रतीयते । मच पदसंस्कारे पदान्तरसम्बन्धगम्योऽर्थ उपयुज्यते । तेन कूलं कर्षतीत्यादाविच्छामात्रमाश्रिता व्याप्तिः । कर्म च संस्क्रियते । यद्यपि पश्चान्नद्या सह सम्बन्धादचेतनत्वमिच्छाया अभावश्च प्रतीयते तथापि च तद्बहिरङ्गत्वादन्तरङ्गसंज्ञाकार्य्यं न शक्नोति निवर्त्तयितुम् । अनेनैव न्यायेन यत्र व्याप्तिर्नास्तीच्छामात्रञ्च केवलं तत्रापि कर्मसंज्ञा भवति यथा ग्रामं गन्तुमिच्छामि नच मे गमनशक्तिरस्तीति । तच्च कर्म त्रिविधम् । निर्व्वर्त्त्यं विकार्य्यं प्राप्यञ्च । तत्र निर्वर्त्त्यं यदसदेवोत्पाद्यते । यस्य जन्म क्रियते तन्निर्वर्त्त्यम् । यथा कटं करोति । कटो ह्यसन्नेव क्रियते । विकार्य्यं यल्लब्धसत्त्वाकमवस्थान्तरमापाद्यते यथा काष्ठानि भस्मीकरोति । नात्र काष्ठान्यसन्त्येव जन्यन्ते कारणान्तरेभ्यः प्रागेवोत्पन्नत्वात् । उत्पन्नानि तु केवलं भस्माख्यामवस्थामापाद्यन्ते । प्राप्यं यत्र व्याप्तिव्यतिरेकेण क्रियाकृता विशेषा न विभाव्यन्ते यथाऽदित्यं पश्यतीति । नहि दृशिक्रियया व्याप्यमानस्य सवितुः प्राप्तेरन्यः क्रियाकृतविशेष उपलभ्यत इति प्राप्यमेतत् कर्म ।

## ५० । तथा युक्तञ्चानीप्सितम् ।

चकारोऽवधारणे । अतएव वृत्तावाह तेनैवेति । अनीप्सितमिति यद्यप्ययं प्रसज्यप्रतिषेधः स्यात् तदा ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीत्यादौ वृक्षमूलादीनां कर्म्मसंज्ञा न स्यात् । तथाहि प्रसज्यप्रतिषेधे सत्यनेन योगेनानीप्सितस्यैव कर्मसंज्ञा विधीयते । वृक्षमूलानि च न तावदीप्सितानि । पूर्व्व मनभिसन्धाय प्रवृत्तेः । नाप्यनीप्सितानि । अप्रतिकूलत्वात् । ततश्चानीप्सितस्य कर्मसंज्ञा विधीयमाना तेषामीप्सितादन्यत्वेनानीप्सितानाञ्च स्यात् । पर्य्युदासे तु सत्यनेन योगेनेप्सितादन्यस्य कर्मसंज्ञा विधीयते । भवन्ति च यथोक्तप्रकाराणि वृक्षमूलानीप्सितादन्यानि । अतस्तेषामपि कर्मसंज्ञा सिध्यतीत्येतदालोच्य पर्य्युदासोऽयमिति दर्शयितु माह ईप्सितादन्यदित्यादि । किं पुनस्तदित्यादि । द्वेष्यमित्यादि । द्वेष्यं प्रतिकूलं यथा विषचौरादि । इतरदप्रतिकूलं यथोक्तप्रकाराणि वृक्षमूलानि । भक्षयतीति । भक्ष अदने । चौरादिकः ।

## ५१ । अकथितञ्च ।

अपादानादिभिर्विशेषकथाभिरिति । कारकसामान्यकथाया व्यवच्छेदार्थमेतत् । यदि हि केनाप्यकथितस्य कर्मसंज्ञा स्यात् तदा माणवकस्य पितरं पन्थानं पृच्छतीत्यत्राकारकस्यापि माणवकस्य कर्मसंज्ञा स्यात् । परिगणनमिति । अन्यधातुव्यवच्छेदार्थमेतत् । तेन दुह प्रपूरण इत्येवमादीनामेव धातूनां प्रयोगेऽकथितस्य कर्मसंज्ञा विधीयते । नान्येषाम् । उपयुज्यत इत्युपयोग इति कर्मसाधनो घञन्तः । उपयुज्यत इति । इष्टार्थसिद्धौ व्यापार्य्यत इत्यर्थः । पयःप्रभृतीति । प्रभृतिशब्देन भिक्षादीनां ग्रहणम् । तस्य निमित्तं गवादीति । अत्राप्यादिशब्देन पौरवादे ग्रहणम् । तस्योपयुज्यमानपयःप्रभृतिनिमित्तस्येति । उपयुज्यमानञ्च तत् पयःप्रभृति चेति विशेषणसमासं कृत्वोपयुज्यमानपयःप्रभृते र्निमित्त मिति षष्ठीसमासः । गवादेरिति । आदिशब्देन पौरवादे ग्रहणम् । ननुच पात्र्यादिकमप्युपयोगनिमित्त मिति । तेन विनोपयोगस्य पयसोऽसम्भवात् । आदि-

शब्देन कांस्यपात्रादे र्ग्रहणम् । विहितात्र करणादिसंज्ञेति । आदिशब्देनाधिकरणसंज्ञाया ग्रहणम् । तदर्थमिति । करणादेः कर्म्मसंज्ञानिवृत्त्यर्थमित्यर्थः । अर्थशब्दस्य निवृत्तिवचनत्वात् । अपूर्वविधाविति । पूर्वग्रहणमत्रान्यविधे रुपलक्षणार्थम् । एतदुक्तं भवति यस्यान्यो विधिर्नास्ति तस्य कर्म्मसंज्ञेति । तेन यत्रापि वक्ष्यमाणे हेतुकर्त्तृसंज्ञे इति तत्राप्येषा संज्ञा न भवतीति दोग्धाप्युपयोगस्य निमित्तं तस्य कर्म्मसंज्ञा न भवति । सूत्रेऽप्यकथित मिति कथननिवृत्तिपरायां चोदनायां भूतकालो न विवक्ष्यते । उपलक्षणत्वात् । तेन योऽपि कथयिष्यमाणो हेतुकर्त्तृसंज्ञाभ्यां तस्यापि कर्म्मसंज्ञा न भवतीत्युक्तं भवति । त्रविशासिगुणेनेति । कः पुनर्गुण इत्याह साधनमिति । साधनं हि क्रियाया उपकारकम् । यच्चोपकारकं तदुपकार्य्यम् प्रधानमपेक्ष्य गुणो भवति । कतरत् पुनः साधन मित्याह । प्रधानं कर्म्मेति । किं पुनस्तदित्याह । धर्म्मादिकमिति । आदिशब्देन पथ्यादे र्ग्रहणम् । प्रधानत्वन्तु धर्मादे स्तदर्थत्वाच् शिष्यादिप्रवृत्तेः । सम्बध्यत इति सचत इत्यस्यार्थकथनम् । तथाहि षच समवाय इति पठ्यते । समवायश्च सम्बन्ध एव । सचते तेन गुणेन सम्बन्धमुपैति । यच्च येन सम्बन्धमुपैति तत् तेन सम्बध्यते । उक्त मित्याचरित मित्यस्य विवरणम् । सूत्रकारेणेत्येतदपि कविनेत्यस्य । गां दोग्धि पय इति । दुह प्रपूरणे । आदादिकः । दादेर्धातोर्घः (८।२।३२) । झषस्तथो (८।४।४०) र्धोधः । झलाञ्जश् झशीति (३।४।४३) जश्त्वम् । ननुचात्र विहिता ऽपादानसंज्ञा । अस्ति ह्यत्रापायो गोः । दुहेः क्षरणार्थत्वात् । क्षरति गौः क्षीरम् । तद् गो दोग्धा क्षारयति । एवञ्च तत् क्षार्य्यमाणं ततोऽपक्रामतीति स्पष्ट एवापायः । ततो नेदमुदाहरणमुपपद्यते । नैतदेवम् । सत्यपि ह्यपाये नात्र गोरवधित्वं विवक्षितम् । किं तर्हि ? क्षीरं प्रति निमित्तभावमात्रम् । यद्येवं गोः कारकत्वं न स्याद् यथा वृक्षस्य पर्णं पततीत्यत्र वृक्षस्य न । क्षरणक्रियां प्रति निमित्तभावेनाविवक्षितत्वात् । नैतत् । अवधित्वं ह्यत्र गो र्न विवक्षितम् । क्षरणं प्रति निमित्तभावस्तु विवक्षित एव । वृक्षस्य पर्णं पततीत्यत्र तु पतनं प्रति वृक्षस्य निमित्तभावमात्रमपि न विवक्षितं न केवलमवधिभाव

इत्यसमानम् । पौरवं गां याचत इति । ननु चात्र कथितापादानादिसंज्ञा ह्यसौ पौरवाद् गामादत्त इति । अस्त्येवापायः । नैतदस्ति । नहि याच्नादेवापायो भवति । किन्तर्हि याचितो ऽसौ यदि ददाति तदापायेन युज्यते । गामवरुणद्धि व्रजमिति । ननु च कथितात्र व्रजस्य कर्मसंज्ञा ऽधिकरणसंज्ञा वा । यदा प्रवेशयतीत्यर्थस्तदा कर्मसंज्ञा विहिता । अथ स्थापयतीत्यर्थस्तदाधिकरणसंज्ञा प्रसज्येत । सत्यमेतद् यदा व्रजस्य कर्मत्वमधिकरणत्वं वा विवक्ष्यते । न चैतदिह विवक्षितम् । किं तर्हि ? अवरोधनक्रियां प्रति निमित्तभावमात्रम् । अस्याञ्चावस्थायां कर्माधिकरणसंज्ञे निरवतारे । व्रजेन हेतुना गामवस्थापयत्ययमत्रार्थो वेदितव्यः । न तु क्वावस्थापयतीत्येतदिह चिन्त्यत एव । माणवकं पन्थानं पृच्छतीति । प्रच्छ ज्ञीप्सायां तुदादिः । ग्रहिज्यादिसूत्रेण (६।१।१६) सम्प्रसारणम् । ननु च कथितात्रापादानसंज्ञा । अस्ति ह्यत्रापायः । स हि तस्मादुपदेशमादित्सते । नैतदस्ति । नहि प्रश्नमात्रेणापायो भवति । किं तर्हि ? पृष्टः सन् यद्यसावाचष्टे तदापायेन युज्यते । सत्यप्यपाये नात्र माणवकोऽवधिभावेन विवक्षितः । किं तर्हि ? प्रश्नक्रियां प्रति निमित्तभावमात्रेण । पौरवं गां भिक्षत इति । भिक्ष याच्ञायामनुदात्तेत् । अथ किमर्थं याचिभिक्ष्योर्द्वयोरुपादानम् ? यावताऽनयोरर्थभेदो नास्ति । न चेयं संज्ञा शब्दाश्रया । किं तर्हि ? अर्थाश्रया । तथाहि याचिना समानार्थस्यान्यस्यापि ग्रहणं भवति । देवदत्तं शतं प्रार्थयते देवदत्तं शतं मृगयत इति । तस्मात् सत्यपि शब्दभेदे न युक्तं तयोः पृथग् ग्रहणम् । एवं तर्हि याचिरत्रानुनये वर्त्तते । तेन क्रुद्धं याचतेऽविनीतं याचत इति । तदर्थं पृथग् ग्रहणं स्यात् । वृक्षमवचिनोति फलानीति । ननु चात्र विहितापादानसंज्ञा । तथाहि वृक्षात् फलान्यादत्त इत्यपायोऽत्रार्थः । नैतदस्ति । नह्यत्र वृक्षोऽवधित्वेन विवक्षितः । किन्तर्हि फलावचयनस्य हेतुभावमात्रेण । वृक्षेण हेतुना फलावचयनं करोतीत्यर्थः । तस्य वृक्षस्य हेतुभावः किमवधिभूतस्याधिकरणभूतस्य वेत्येवमादिका चिन्ता न कृता । एवं माणवकं धर्मं ब्रूते । माणवकं धर्ममनुशास्तीति । ब्रूञ् व्यक्तायां वाचि । शासु अनुशिष्टौ । अदादी । ननु च कथितात्र सम्प्रदान-

संज्ञा । अस्ति ह्यत्र सम्प्रदानत्वम् । संप्रदेयेन धर्मेणाभिप्रेयमाणत्वात् । नैतदस्ति । ददातिकर्मणाभिप्रेयमाणस्य संप्रदानसंज्ञा विहिता । न चात्र धर्मो ददातिकर्म । ब्रूविशास्योरदानार्थत्वात् । अथापि दानार्थता स्याद् ? एवमपि माणवकेन निमित्तेन धर्मं ददातीत्ययमर्थः स्यात् । माणवकस्य सम्प्रदानत्वेनाविवक्षितत्वात् । धर्मदाननिमित्तत्वेन विवक्षितत्वात् । ब्रूविशासिगुणेन चेति चकारोऽनुक्तसमुच्चयार्थः । तेन नयतिप्रभृतीनां प्रयोगेऽप्य कथितस्य कर्मसंज्ञेष्यते । तथाचोक्तं—

नीवह्योर्हरतेश्चैव गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥१॥ इति । (D)

अत्रापि श्लोके चकारो जयतिप्रभृतीनां प्रयोगेऽकथितस्य समुच्चयार्थः । किमुदाहरणम् ? अजां नयति ग्रामं देवदत्तः । अजां वहति ग्रामं देवदत्तः । अजां हरति ग्रामं देवदत्तः । शतं जयति देवदत्तं यज्ञदत्तः । शतं गर्गान् दण्डयतीति । ननु चोभयेषामपि कर्तुरीप्सिततमं कर्मेत्यनेनैव (१।४।४९) कर्मसंज्ञा सिद्धा । यदि तर्ह्यजादीनाप्सिततमत्वं विवक्ष्यते न ग्रामादीनां तदा कथं कर्मसंज्ञा ? तथापि तथायुक्तमित्यनेन (१।४।५०) सिद्धा । यदा तर्हि ग्रामादीनामीप्सितत्वं प्रकर्षरहितं विवक्ष्यते तदा न सिध्यति । अकर्मणाञ्च धातूनां कालभावाध्वगन्तव्यदेशानां कर्मसंज्ञेष्यते । तथाचोक्तं—

कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।
देशाश्चाकर्मकाणाञ्च कर्मसंज्ञा भवन्ति च ॥१॥ (E) इति वक्तव्यम् ।

इति । तस्मात् तदर्थोऽनुक्तसमुच्चयार्थश्चकारः कृतः । कालो—मास मास्ते मासं स्वपितीति । भावो—गोदोहमास्ते गोदोहं स्वपितीति । अध्वा गन्तव्यः—क्रोशमास्ते क्रोशं स्वपितीति । अध्वा चासौ गन्तव्यश्चेति

---

(D) इदमकथितञ्चेति ( १।४।५१ ) सूत्रस्थं श्लोकवार्त्तिकम् ।

(E) इदमप्यकथितञ्चेति ( १।४।५१ ) सूत्रस्थं वार्त्तिकम् । इदानीन्तनपुस्तकेषु त्वस्य शेषांशो देशश्चाकर्मणां कर्मसंज्ञो भवतीति वक्तव्यमित्येवं दृश्यते ।

विशेषणसमासः। कडाराः कर्मधारय इति (२।२।३८) विशेष्यस्य पूर्वनिपातः। देशः—कुरूनास्ते कुरून् स्वपितीति। सर्व एते कालादयोऽकथिताः। पूर्वविधेः कस्यचिदप्रवृत्तत्वात्।

## ५२। गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणि कर्त्ता स णौ।

यापयतीति। अर्त्तिह्रीत्यादिना (७।३।३६) पुक्। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। उत्तरसूत्रेऽन्यतरस्यांग्रहणमुभयोर्योगयोः शेषभूतो विज्ञायते। सा च व्यवस्थितविभाषा। तेन नीवह्योर्न भविष्यति। वहेरित्यादि। नियच्छति विशिष्टे विषयेऽवस्थापयतीति नियन्ता सारथिः। अविद्यमानो नियन्ता कर्त्ता यस्य स तथोक्तः। तस्य। नीवह्योः प्रतिषेधो वक्तव्य इति योऽनन्तरोक्तः स वहेरनियन्तृकर्त्तृकस्य भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। तस्यैवान्यतरस्यांग्रहणस्य व्यवस्थितविभाषात्वान् नियन्तृकर्त्तृकस्य वहेः कर्मसंज्ञा भविष्यतीति। आदिखाद्योरित्यादि। अत्रापि वक्तव्यशब्दस्य पूर्ववदेवार्थः। व्याख्यानमपि पूर्ववदेव कर्त्तव्यम्। भक्षयति पिण्डीं देवदत्त इति। चुरादिणिच्। भक्षयति पिण्डीं देवदत्तेनेति हेतुमण्णिच्। भक्षयति बलीवर्द्दान् शस्यमिति। भक्षिरत्र हिंसार्थः। सर्वे सचेतना भावा इत्यस्मिन् दर्शने हिंसितं शस्यमिति शस्यस्य भक्षणेन देवदत्तो हिंसितो भवति। यस्य हि तत् शस्यं तस्य हिंसा गम्यते। शब्दकर्मणामिति। शब्दग्रहणेनेह पारिभाषिकं कर्म गृह्यते। नतु क्रिया। क्रियाग्रहणे हि कर्मग्रहणमनर्थकं स्यात्। कारकाधिकारादेव कारकस्य क्रियापेक्षत्वात् शब्दात्मिकायां क्रियायां वर्त्तमाना धातवो ग्रहीष्यन्त इति। तत् किं कर्मग्रहणेन? यदि तर्हि पारिभाषिकं कर्म गृह्यते जल्पति देवदत्तो जल्पयति देवदत्तम्। विलपति देवदत्तो विलापयति देवदत्तम्। आभाषते देवदत्त आभाषयति देवदत्तम्। पश्यति देवदत्तः कार्षापणम्। दर्शयते देवदत्तं कार्षापणमित्यत्र न प्राप्नोति। शब्दादन्यस्य पारिभाषिकस्य कर्मणो विवक्षितत्वात्। नैष दोषः। बुद्ध्यर्थत्वाद् भविष्यति।

अत्र हि जल्पतिप्रभृतयस्त्रयस्तावच् शब्दसाधने बोधने वर्त्तन्ते । जल्पति देवदत्त इति । वचनेन बोधयतीत्यर्थः । एवमन्यत्रापि । पश्यति कार्षापणमित्यत्र दृशि श्चक्षुःसाधने ज्ञाने वर्त्तते । चक्षुषा जानीत इत्यर्थः । तस्माद् बुद्ध्यर्थत्वात् सिद्धम् । अध्यापयतीति । क्रीङ्जीनां (६।१।४८) णावित्यात्त्वम् । अर्त्तिह्री्त्यादिना (७।३।३६) पुक् । किमर्थं पुनरिदं सूत्रम् ? यावता ण्यन्ते धातौ प्रयोजक-व्यापारेण प्रेषणाध्येषणाख्येन व्याप्तुमिष्टतमत्वात् प्रयोज्यस्य कर्त्तुरीप्सित-तमं कर्मेत्यनेनैव (१।४।४९) कर्मसंज्ञा सिद्धा । सत्यम् । नियमार्थं वचनम् । प्रयोजकव्यापारेण व्याप्यमानस्य यदा कर्मसंज्ञा तदा गत्यर्थादीनामेव । नान्येषामिति ।

## ५३ । हृक्रोरन्यतरस्याम् ।

गत्यर्थादयो निवृत्ताः । तेनोभयत्र विभाषेयम् । यदा हरतिर्गतौ वर्त्तते ऽभ्यवहारे वा करोतिश्चाकर्मको भवति तदा प्राप्ते । यदा तु हरति स्तेयादौ वर्त्तते करोतिश्च सकर्मको भवति तदा ऽप्राप्ते । उपसंख्यान-मिति । प्रतिपादनमित्यर्थः । एतच्च प्रकृतत्वात् कर्मसंज्ञायाः । तत्रेदं प्रतिपादनम् । अकथितञ्चेत्यत(१।४।५१)श्चकारोऽनुवर्त्तते । स चानुक्तसमुच्च-यार्थः । तेनाभिवादिदृशोरप्यात्मनेपदे कर्मसंज्ञा भविष्यतीति । अभिवादयत इति । णिचश्चे(१।३।७४)त्यात्मनेपदम् । दर्शयत इति । अत्रापि णेरणावित्या-दिना (१।३।६७) ।

## ५४ । स्वतन्त्रः कर्त्ता ।

अस्त्ययं स्वतन्त्रशब्दो बहुव्रीहिः । स्वं तन्त्रं यस्य स स्वतन्त्रः । अस्ति च समासप्रतिरूपको रूढिशब्दः प्रधानार्थवृत्तिर्यथा स्वतन्त्रोऽयमिह देवदत्त इति । प्रधानभूत इति गम्यते । तत्र यदि पूर्वो गृह्येत तदा तन्तुवायस्यैव स्यात् । विस्तृता हि तन्तव स्तन्त्रम् । तच्च तन्तुवायस्यैवास्ति । देवदत्तः पचतीत्यादौ न स्यात् । इतरस्य तु ग्रहणे सर्वत्र भवति । तस्माद् व्याप्तेर्न्यायात् सएव गृह्यत इति मत्वाह स्वतन्त्र इति प्रधानभूत इति । यद्येवमप्रधान-मपेक्ष्य प्रधान मुच्यत इति यत्राधिकरणादीन्यपराण्यप्रधानानि कारकाणि

सन्ति देवदत्तः काष्ठैरग्निनोदनं स्थाल्यां पचतीत्यादौ तत्रैव स्यात्। यत्र तु तेषामविवक्षा ऽस्ते देवदत्तः शेते देवदत्त इत्यादौ तत्र न स्यादिति यो देशयेत् तं प्रत्याह अगुणभूत इति। एवं मन्यते। प्रधानेनागुणभाव उपलक्ष्यते। गुणभावो यत्र नास्ति स कर्त्तेति। कारकान्तराविवक्षायामप्यगुणभावोऽस्त्येवेति सर्वत्र भवति। ननु च सामग्र्यधीना हि क्रियासिद्धि रेकस्याप्यभावे न सिध्यति। तत् कस्यात्र प्राधान्यं यत्परिग्रहाय स्वतन्त्रग्रहणं क्रियत इत्याह। यः क्रियासिद्धावित्यादि। यद्यपि क्रियासिद्धौ सर्वेषां व्यापारस्तथापि स्वातन्त्र्यं यस्य विवक्ष्यते सएव स्वतन्त्र इत्युच्यते। नान्य इति। देवदत्तः पचतीत्यत्र देवदत्तः कर्त्तृसंज्ञकत्वात् कर्त्तृप्रत्ययेनोच्यते लकारेण।

## ५५। तत्प्रयोजको हेतुश्च।

तस्य प्रयोजकस्तत्प्रयोजक इति। ननु च कर्त्तरि चेत्यनेन (२।२।१६) षष्ठीसमासप्रतिषेधेनात्र भवितव्यमित्याह निपातनात् समास इति। प्रयोजक इति। प्रेरक उपदेशको व्यापारक इत्यर्थः। न चान्येन प्रयुज्यमानस्य स्वव्यापारे स्वातन्त्र्यं हीयते। अन्यथा ह्यकुर्वत्यपि कारयतीति स्यात्। प्रयोजकत्वं द्विविधम्। मुख्यमितरच्च। देवदत्तः कटं कारयतीत्यत्र देवदत्तस्य मुख्यम्। भिक्षा वासयतीत्यत्र भिक्षाणां वासहेतुत्वात् प्रयोजकत्वमुपचरितम्। न मुख्यम्। नहि भिक्षा यूयं वसथेत्येवं प्रयुञ्जते। इह च कारकाधिकारे तमब्ग्रहणव्यतिरेकेणातिशयो न विवक्षित इति साधकतमं (१।४।४२) करणमित्यत्र तमब्ग्रहणेन ज्ञापित मेतत्। तेन यस्यापि प्रयोजकत्व मुपचरितं—न मुख्यं—तस्यापि हेतुसंज्ञा भवत्येव। संज्ञासमावेशार्थश्चकार इति। असति तस्मिन्नेकसंज्ञाधिकारादत्र कर्त्तृसंज्ञा न स्यात्। अतः संज्ञासमावेशार्थं चकारः क्रियते। हेतुत्वादित्यादिना संज्ञाद्वयस्य प्रयोजनं दर्शयति। प्रयोजकव्यापारे हि हेतुमति चेति (३।१।२६) णिच् विधीयते। तस्य हेतुत्वं प्रयोजकस्य हेतुत्वे सत्युपपद्यते। हेतुत्वात् प्रयोजको णिचो निमित्तं भवति। कर्त्तृप्रत्ययेन च लकारेणाभिधानं कर्त्तृसंज्ञायां सत्यां भवतीति कर्त्तृत्वात् कर्त्तृप्रत्ययेन लकारेणोच्यत इति।

५६ । प्राग्रीश्वरान्निपाताः ।

च वा ह अह इत्यत्र निपातसंज्ञायां सत्यां स्वरादिनिपातमव्ययमित्यव्यय संज्ञा (१।१।३७) भवति । निपाता आद्युदात्ता भवन्तीत्याद्युदात्तत्वञ्च । अथ किमर्थं प्राग्ग्रहणम् ? यावता पञ्चम्युच्चारणसामर्थ्यादेव प्रागित्यस्य दिक्छब्दस्याध्याहारो भविष्यति। न च परागित्ययमपि दिक्शब्दोऽस्ति। अतो नास्याध्याहार आशङ्कनीयः । तदध्याहारे हि चादयोऽसत्त्व (१।४।५७) इत्येवमादयो योगा निपातसंज्ञासम्बन्धाभावादसम्बन्धाः स्युः । तस्मात् प्रागित्येतदेवाध्याहरिष्यते । तत् किं प्राग्वचनेनेत्याह प्राग्वचनमित्यादि । एका संज्ञेत्यनुवर्त्तते । निपातसंज्ञा चादिषु प्रादिषु वा क्रियायोगे चरितार्था । तत्रासति प्राग्वचने निपात संज्ञाया उपसर्गादिसंज्ञाभिरनवकाशाभिर्बाध्यमानत्वात् ताभिः सह तस्याः समावेशो न स्यात् । इष्यते चात्र तदर्थं प्राग्वचनम् । तस्मिन् सत्येवं सम्बन्धः क्रियते । रीश्वराद् यावन्तः प्राग् व्यवस्थिता स्ते सर्वे निपातसंज्ञका भवन्ति । निपाताश्च सन्त उपसर्गादिसंज्ञका इति । तेन निमित्तमेव निपातसंज्ञोपसर्गसंज्ञानां भवति । न च निमित्तिना निमित्तं व्याहन्यते । अन्यथाहि तस्य निमित्तत्वमेव न स्यात् । अध्याहृते तु प्राक्शब्दे रीश्वराद्ये प्राग् व्यवस्थितास्ते सर्वे निपातसंज्ञका भवन्त्येषोऽर्थोऽभिमतः स्यात् । नतु निपाताः सन्त उपसर्गादिसंज्ञका इत्येषोऽप्यर्थो लभ्यते । सूत्रोपात्ते तु प्राक् शब्द एषोऽर्थो लभ्यत एव। अन्यथा तस्य वैयर्थ्यं स्यात् । अथ किमर्थं रेफादिक ईश्वरशब्दो गृह्यते प्राग्रीश्वरादिति। न च प्रागीश्वरादित्येवोच्येत । प्रत्यासत्तेरनन्तर एव हीश्वरशब्दो ग्रहीष्यत इत्यत आह रीश्वराद्वीश्वरान्माभूदिति । रेफसहित ईश्वरो रीश्वरः । शाकपार्थिवादित्वान् मयूरव्यंसकादित्वाद्वा समासः। रीश्वरादित्युच्यमाने वीश्वरान् मा भूत् । अधिरीश्वर (१।४।९७) इत्यस्यैवेश्वरशब्दस्य ग्रहणं यथा स्यात् । ईश्वरे तोसुन्कसुनावित्यत्र (३।४।१३) यो वीश्वरशब्दस्तस्य ग्रहणं मा भूत् । तस्य ग्रहणे बहूनां संज्ञा भवत्यतो व्याप्तेन्यायादस्यैव ग्रहणं स्यात् । ननु च वकारस्तत्र नास्त्येव । तत् किमुच्यते वीश्वरान् मा भूदिति ? एवं मन्यते । यदा सूत्राणि संहितया पठ्यन्ते शकि णमुल्कमुलावीश्वरे (३।४।१२) तोसुन्कसुनाविति (३।४।१३) तदा लीशब्दस्य

य औकारस्तस्यावादेशे कृत ईश्वरशब्दो वकारसहितो भवतीति। नैतदस्ति। रेफाधिकस्येश्वरशब्दस्य ग्रहणे न प्रयोजनम्। यद्यपि परस्येश्वरशब्दस्य ग्रहणे तन्निबन्धना व्याप्तिरस्ति तथाप्यनन्तरस्यैवेश्वरशब्दस्य ग्रहणं भविष्यति। न परस्य। कथम्? ज्ञापकात्। यदयं कृन्मेजन्त इति (१।१।३९) कृतो मान्त-स्यैजन्तस्याव्ययसंज्ञां शास्ति तज्ज्ञापयत्यनन्तरस्येश्वरशब्दस्य ग्रहणम्। नेतर-स्येति। अन्यथा हि णमुलादीनां निपातत्वादेवाव्ययसंज्ञा सिद्धेति कृन्मेजन्त इति वचन (१।१।३९) मनर्थकं स्यात्। नैतदस्ति ज्ञापकम्। यस्मादीश्वरे तोसुन्कसुनावित्यस्मात् (३।४।१३) परोऽपि कृदेजन्तो मान्तश्चास्ति। कृत्यार्थे तवैकेन्केन्यत्वन (३।४।१४) आभीक्ष्ण्ये णमुल् (३।४।२२) चेत्येवमादिः। तत् कथं कृन्मेजन्त इत्येतज् ज्ञापकं स्यात्? एवं तर्हि यदयमव्ययीभावस्याव्ययीभा-(१।१।४१)वश्चेत्यव्ययसंज्ञां शास्ति तज् ज्ञापयत्यनन्तरो य ईश्वरशब्दस्तस्य ग्रहण-मिति। अन्यथा ह्यव्ययीभावश्चेत्येत (१।१।४१) दपार्थकं स्यात्। निपात-त्वादेवाव्ययीभावस्याव्ययसंज्ञायाः सिद्धत्वात्। अस्यापि ज्ञापकता मपाकर्त्तु-माह समासेष्वव्ययीभाव इति। सर्वेषां समासानां निपातत्वादव्ययसंज्ञायां प्राप्तायामव्ययीभावश्चेतेयतद्वचनं (१।१।४१) नियमार्थं स्यात्। समासेषु तत्पुरुषादिषु मध्ये ऽव्ययीभाव एवाव्ययसंज्ञो भवति। नान्य इति। एवं तर्हि लौकिकन्यायादनन्तरस्यैवेश्वरशब्दस्य ग्रहणं भविष्यति। लोके ह्योदकान्तं प्रियं प्रोथ (F) मनुव्रजेदिति य एवानन्तर उदकान्त स्तमेव गत्वा तत एव बान्धवा निवर्त्तन्ते। न व्यवहितात्। तस्मादिहाप्यनेनैव न्यायेना-नन्तरादेवेश्वरशब्दान्निपातसंज्ञा निवर्त्तिष्यत इत्यत आह लौकिकं चातिवर्त्तत इति। लौकिकमपि न्यायं लोकोऽतिक्रम्य वर्त्तते यस्माद् द्वितीयमप्युद-कान्तं स्नेहात् कथाप्रसङ्गाद् वा गत्वा निवर्त्तन्ते बान्धवाः। तदेवं रेफाधिक ईश्वरशब्द उच्चार्य्यते। तेन वीश्वरान् मा भूदिति स्थितमेतत्।

## ५७। चादयोऽसत्त्वे।

असत्त्व इति पर्य्युदासोऽयं वा स्यात् प्रसज्यप्रतिषेधो वा? तत्र यद्ययं

---

(F) प्रोथं पर्य्याप्तमित्यर्थः। प्रोथृ पर्य्याप्ताविव्यस्मात् पचाद्यच्। क्रियाविशेषणत्वान्नपुंसकम्।

पर्य्युदासः स्यात् तदा सत्त्वादन्यत्र वर्त्तमानाश्चादयो निपातसंज्ञका भवन्तीत्येषः सूत्रार्थः स्यात् । ततश्च पशुशब्दस्य चादिपरिपठितस्य जातिव्यवच्छिन्ने द्रव्ये वर्त्तमानस्य निपातसंज्ञा स्यात् । यो हि जातिविशिष्टे द्रव्ये वर्त्तते स जातिद्रव्यसमुदायात्मकमर्थमाह । यश्चैवंविधोऽर्थः स द्रव्यात् केवलादन्यो भवति । निपातसंज्ञायां सत्यां पशुरिति सविभक्तिकस्य श्रवणं न स्यात् । प्रसज्यप्रतिषेधे त्वेष दोषो न भवति । तत्र हि यत्र द्रव्यगन्धोऽप्यस्ति तत्र सर्वत्र प्रतिषेधेन भवितव्यम् । अस्ति चेह द्रव्यगन्धः । पशुत्वजात्याश्रितस्य द्रव्यस्यापि पशुशब्देनाभिधानात् । तस्मात् प्रसज्यप्रतिषेध एवायं युक्त इत्यालोच्याह प्रसज्यप्रतिषेधोऽयमिति । क्व तर्हि वर्त्तमानः पशुशब्दोऽसत्त्ववचनो भवति ? यत्र वृत्तौ निपातसंज्ञां लभते दृश्यर्थे यथा लोधं नयन्ति पशु (G) मन्यमाना इति । अत्र दृश्यर्थेन पशुशब्देन मननं विशिष्यते । दर्शनमेतत् मननं सम्यग् ज्ञानमित्यर्थः । सत्त्वशब्दोऽयमिह सत्तायां वर्त्तत इति कस्यचिद् भ्रान्तिः स्यात् । अतस्तान्निराकर्त्तुमाह सत्त्वमिति च द्रव्यमुच्यत इति । चशब्दोऽवधारणे । द्रव्यमेव न सत्तेत्यर्थः । यदि ह्यत्र सत्त्वशब्देन सत्तोच्यते प्रतिषेधोऽनर्थकः स्यात् । नहि चादिषु मध्ये शब्दः सत्तावाची कश्चिदस्ति । तस्माद् द्रव्यमेवोच्यते । इदं तर्हि सर्वनामप्रत्यवमर्शयोग्यो योऽर्थस्तद्द्रव्यमिति । तथाचोक्तं—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥१॥ इति ।

भेद्यत्वेन विशेष्यत्वेनेत्यर्थः । अत एवावसीदति यत्र गुणो विशेषणभावेनेति सत्त्वं तद्द्रव्यमुच्यते । चणिति पठ्यते । तस्य णकारो विशेषणार्थो निपातैर्यद् यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तमिति ( ८।१।३० ) । स तु चेच्छब्दस्यार्थे वर्त्तते । यत्रेति पठ्यते । तस्य तद्धित (१।१।३८) आसर्व्वविभक्तिरित्यव्ययसंज्ञा सिद्धैव । निपातैर्यद्यदिहन्त इति (८।१।३०) विशेषणार्थं निपातसंज्ञोच्यते ।

---

(G) पशु सम्यगित्यर्थः । लोधमनवगतम् । पशु मन्यमानाः सम्यग् ज्ञात्वेत्यर्थः । निरुक्ते तु लुब्धमृषिं नयन्ति पशुं मन्यमाना इति सानुस्वारपाठात् पशुशब्दः सत्त्ववाची ।

प्रसति निपातत्वे त्रैङ् पालने यं त्रायत इति यत्र इत्यस्यातोऽनुपसर्गे (३।२।३) क इति कप्रत्ययान्तस्य ग्रहणं स्यात्। नञिति पठ्यते। नञो अकारो नलोपो (६।३।७३) नञ इति विशेषणार्थः। नलोपो नस्येत्युच्यमाने पामनपुत्र इत्यत्रापि स्यात् यदि तत्रालुगुत्तरपद (६।३।१) इत्युत्तरपदग्रहणसामर्थ्यलब्धं पूर्वपदं नशब्देन विशेष्यते नान्तस्य पूर्वपदस्येति। अथ तु पूर्वपदे न नशब्दो विशेष्यते पूर्वपदस्य नस्येत्यतोऽसत्यपि अकारे न भवति पामनपुत्र इत्यत्र नलोप इति। नहि तर्हि नशब्दः पूर्वपदं किं तर्हि पामनशब्दः। अथ क्रियमाणेऽपि अकारेऽनुबन्धे स्त्रैणपुत्र इत्यत्र कस्मान्न भवति? अकारस्य वृद्धौ प्रत्ययसम्बन्धिन- श्चरितार्थत्वात्। निपातसम्बन्धिनस्तु न क्वचिच्चरितार्थत्वम्। अतस्तेन प्रत्यय सम्बन्धिना अकारेण तु तुल्यमाख्यातुं न शक्यत इति न भवति। तथेति। थः प्राग्दिशो (५।३।१) विभक्तिरिति विभक्तिसंज्ञकस्थाल्प्रत्ययान्तस्तथाशब्दो नेह तस्येदं ग्रहणम्। तस्य तद्धितश्चे(१।१।३८)त्यनेनैवाव्ययसंज्ञायाः सिद्ध- त्वात्। आद्युदात्तत्वञ्च लित्स्वरेण। कस्य तर्हि ग्रहणम्? ततसदृशस्याव्युत्- पन्नस्य। ननु च तस्यापि विभक्तिस्वरप्रतिरूपकाश्चेत्यनेनैव सिद्धं निपातत्वम्। सत्यमेतत्। तस्यैवायं प्रपञ्चः। यथातथाशब्दस्य ग्रहणं तस्यैव प्रपञ्चः। अथ वेलायां मात्रायां यथाऽस्ति कथं कुत इत्येतेषामपि ग्रहणं तस्यैव प्रपञ्चः। विभक्तिप्रतिरूपकत्वात्। मन्ये ब्रूहीति। आद्युदात्तार्थ मुभयोः पाठः। मन्य इति दिवादिः कर्मण्यात्मनेपदम्। अन्तोदात्तः प्राप्तो यक्स्वरेण। ब्रूहीति च प्रत्ययस्वरेण। विभक्तिप्रतिरूपकाश्च निपाता उपाजेऽन्वाजे इत्येवमादयः। स्वरप्रतिरूपका अचो ये न भवन्त्यच्सदृशाः। तथाच वक्ष्यति ऋति ऌवर्ण वचनं कर्त्तव्यम्। ऌति ऌ वा वचनमिति (६।१।१०१, वा)। एवञ्जातीयकानां निपातसंज्ञाद्वारेण सत्त्वमेवाख्यायते। पशुर्वै पुरुषः पशुः पुरोडाश इति। अत्र पशुशब्दः पुरुषे पुरोडाशे च सत्त्वे वर्त्तत इति न भवत्येव निपातसंज्ञा।

## ५८। प्रादयः।

अथ किमर्थं पृथग्योगकरणम्? न चादिष्वेव प्रादयः पठेरन्नित्याह पृथग्योगकरणमित्यादि। उत्तरसंज्ञोत्तरसूत्रे ज्ञाता संज्ञोपसर्गसंज्ञा।

तस्या विशेषणं व्यवच्छेदः प्रादिभ्योऽन्यस्माद्व्यावर्त्तनमुत्तरसंज्ञाविशेषणम् । तदर्थः प्रयोजनं यस्य तदुत्तरसंज्ञाविशेषणार्थम् । एतदेव स्पष्टीकर्त्तुमाह चादीनामुपसर्गसंज्ञा मा भूदिति । एकयोगे हि सति यथा प्रादीनामुपसर्गसंज्ञा भवति तथा चादीनामपि स्यात् । अतः प्रादीनामेवोपसर्गसंज्ञा यथा स्याच्चादीनां मा भूदित्येवमर्थं पृथग् योगः क्रियते । पराः सेना इति । सेनाया द्रव्यत्वात् तत्र वर्त्तमानस्य पराशब्दस्येह ग्रहणं न भवति । परा उत्कृष्टाः परदेशस्थिता वा । यत्र त्वेकवचनं पठ्यते परा सेनेति तत्र रूपोदाहरणं वेदितव्यम् । द्विवचनबहुवचनयोस्तु निपातत्वादव्ययसंज्ञायां सत्यां विभक्तेर्लुक् स्यात् ।

## ५९ । उपसर्गाः क्रियायोगे ।

प्रणयतीति । प्रशब्दस्योपसर्गत्वादुपसर्गादसमासेऽपि (८।४।१४) णोपदेशस्येति णत्वम् । प्रनायको देश इति । अत्र नयनक्रियया प्रशब्दस्य योगो नास्तीत्युपसर्गसंज्ञा न भवति । ननु चात्रापि गमिक्रियया योगोऽस्त्येवेति स्यादेव तस्योपसर्गसंज्ञा । नैतदस्ति । क्रियायोगग्रहणं ह्येव मनर्थकं स्यात् । कथम्? प्रादीनां क्रियायोगाव्यभिचारात् । तस्मात् क्रियायोगग्रहणसामर्थ्याद् यं प्रति क्रियायुक्ताः प्रादय स्तं प्रति गत्युपसर्गसंज्ञका भवन्ति । नान्यं प्रति । नचेह नयनक्रियया युक्तः प्रशब्दः । किन्तर्हि? गमिक्रिययेति नयतिं प्रत्युपसर्गसंज्ञको न भवति । मरुच्छब्दस्योपसंख्यानमिति । तत्वविधाविति शेषः । अन्यथा हि निपाता आद्युदात्ता (फिट्, ८०) उपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वमपि स्यात् । अन्तोदात्तश्चेष्यते मरुच्छब्दः । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । मरुच्छब्दस्योपसर्गसंज्ञायाः प्रतिपादनं कर्त्तव्यमित्यर्थः । तत्रेदं प्रतिपादनम् । उपसर्ग इति योगविभागः क्रियते । अत्र च प्रादय इति नाभिसम्बध्यते । तेन मरुच्छब्दस्य तत्वविधावुपसर्गसंज्ञा भवतीति । अतएव योगविभागाच्छ्रच्छब्दस्याङ्विधावन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा भवतीति वेदितव्यम् । योगविभागस्येदं लिङ्गम् प्रज्ञाश्रद्धार्चावृत्तिभ्यो (५।२।१०१) णः । तिरोऽन्तर्धाविति (१।४।७१) च निर्देशः । ततः क्रियायोग इति द्वितीयो योगः । अत्र च प्रादय

इति सम्बध्यते। किमर्थमिदम् ? पूर्वणैव सिद्धमिति पूर्वयोगस्यासर्वविषयत्व-ज्ञापनार्थम्। तेन नातिप्रसङ्गः। प्रादीनामक्रियायोग उपसर्गसंज्ञा मा भूदित्येवमर्थञ्च। मरुत्त इति। अच उपसर्गात् त इति (७।४।४७) क्तप्रत्यये क्ते हितकारनिर्देशाद्दातेः सर्वादेशः। ननु च सत्यामुपसर्गसंज्ञायां मरुच्छब्दस्यानजन्तत्वात् तत्वेन न भवितव्य मित्यत आह संज्ञाविधानसामर्थ्या-दित्यादि। यथा ह्युपसरज इत्यत्र डित्करणसामर्थ्यादभस्यापि टिलोपो भवति तथेहाप्यनजन्तादपि तत्वं भविष्यति। अन्यथा हीदं वचन मपार्थकं स्यात्। मरुच्छब्दस्योपसर्गसंज्ञाया अन्यकार्याभावादिति भावः। श्रच्छब्द-स्योपसंख्यानमिति। अत्राप्युपसंख्यानशब्दस्य स एवार्थः। प्रतिपादनमपि तदेव। ननु च भिदादिपाठादेव हि श्रद्धेति सिद्धम्। तत् कथं तत्सिद्धये श्रच्छब्दस्योपसर्गसंज्ञा क्रियते ? एवम्मन्यते। अनार्षस्तत्र पाठ इति।

६० । गतिश्च ।

प्रकृत्येति। गतिसंज्ञायां सत्यां कुगतिप्रादय (२।२।१८) इति समासः। समासेऽनञ्पूर्वे क्त्वो ल्यबिति (७।१।३७) ल्यप्। प्रकृतमिति। क्ते चेत्यनु-वर्त्तमाने (६।२।४५) गतिरनन्तर (६।२।४९) इति प्रकृतिस्वरेणाद्युदात्तः प्रशब्दः। यत् प्रकरोतीति। प्रशब्दादनन्तरस्य तिङ्ङतिङ इति (८।१।२८) निघाते प्राप्ते निपातैर्यद्यदीत्यादिना (८।१।३०) प्रतिषेधे तिपः पित्त्वादनु-दात्तत्वम्। सति शिष्टस्वरस्य बलीयस्त्वमन्यत्र विकरणस्वरेभ्य इति (६।१।१५८, वा) विकरणस्वरस्य प्रत्ययाद्युदात्तत्वं न भवति। करोतेरेव तु भवति धातोरिति (६।१।१६२)। शेषमनुदात्तं भवति। प्रशब्दस्योपसर्गाश्चाभि-वर्जमित्याद्युदात्तत्वे प्राप्ते गतिर्गताविति (८।१।७०) निघातेऽनुवर्त्तमाने तिङि चोदात्तवतीति (८।१।७१) करोतिशब्दे तिङन्त उदात्तवति परतोऽनुदात्तत्वं भवति। तत्र हि पूजनात् पूजितमनुदात्तं (८।१।६७) काष्ठादिभ्य इत्यतोऽनुदात्तमिति वर्त्तते। एतच्च प्रयोजनत्रयमुत्तरत्र गतिसंज्ञाया वेदि-तव्यम्। अथ किमर्थो योगविभागः ? न गतिग्रहणं पूर्वयोग एव क्रियत इत्यत आह। योगविभाग उत्तरार्थ इति। उत्तरत्रेत्यादिना योगविभाग-

स्योत्तरार्थतां दर्शयति । यद्युत्तरत्राप्युपसर्गसंज्ञा स्यात् तदा किं स्यादित्यत आह उरीस्यादित्यत्रेत्यादि । चकारः संज्ञासमावेशार्थ इति । असति चकार एकसंज्ञाधिकारादेकत्र संज्ञाद्वयस्य विधानात् पर्य्यायः स्यात् । न समावेशः । प्रणीतमित्यादिना संज्ञासमावेशस्य फलं दर्शयति । गतिरनन्तर इति (६।२।४९) स्वर इति । उदाहरणद्वयेऽप्युपसर्गादिति (८।४।१४, ८।३।६५) णत्वषत्वे भवत इति । प्रणीतमिति । उपसर्गादसमासेऽपि णोपदेशस्येति (८।४।१४) णत्वम् । अभिषिक्तमिति । उपसर्गात् सुनोतीत्यादिना (८।३।६५) षत्वम् । कारिकेत्यादि । धात्वर्थनिर्देश एतदुपसंख्यानं कर्त्तव्यम् । योऽन्यः कर्त्तरि कारिकाशब्दो ण्वुलन्तस्तस्य कारिकां कृत्वेत्येवं भवति । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । उत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् कारिकाशब्दस्य गतिसंज्ञा भवतीति । पुनश्चनसावित्यादि । पुनश्चनःशब्दौ छन्दसि विषये गतिसंज्ञकौ च भवत इतेतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानन्तूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थतामाश्रित्य कर्त्तव्यम् । पुनरुत्स्यूतमिति । सिवु तन्तुसन्ताने । निष्ठा । उदित्त्वादुदितो वेति (७।२।५६) विभाषेट्त्वाद् यस्य विभाषेतीट्प्रतिषेधः (७।२।१५) । च्छ्वोः शूडनुनासिके चेति (६।४।१९) वकारस्योट् । यणादेशः । चनोहितमिति । दधाते र्हिरिति (७।४।४२) हिरादेशः । गतिरनन्तर इति (६।२।४९) प्रकृतिस्वरेणाद्युदात्तत्वम् । चनःशब्दो हि निपाता आद्युदात्ता ( फिट्, ८० ) भवन्तीत्याद्युदात्तः ।

## ६१ । ऊर्य्यादिच्विडाचश्च ।

च्व्यन्ता डाजन्ताश्चेति । ननु च पदसंज्ञायामन्तग्रहणेन ज्ञापितमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति । अतश्च्विडाचोरेव गतिसंज्ञया भवितव्यम् । तत् किमुच्यते च्व्यन्ता डाजन्ताश्चेति ? एवम्मन्यते । क्रियायोग इति वर्त्तते । न च प्रत्ययमात्रस्य क्रियायोगः सम्भवति । तस्मात् क्रियायोगानुवृत्तिसामर्थ्यात् तदन्तस्यैव संज्ञा विज्ञायत इति भवत्येव तदन्तस्य संज्ञा । सा तु विशेषानुपादनाद् धातुमात्रेण योगे प्राप्नोतीत्यत आह च्विडाचोरित्यादि ।

अभूततद्भावे कृभ्वस्तियोगे (५।४।५०) च्विर्विहितः। अव्यक्तानुकरणादित्यादावपि (५।४।५७) सूत्रे कृभ्वस्तियोगस्यानुवृत्ते डाजपि तत्रैव विहितः। तेन च्विडा-चोस्तावद् धात्वन्तरेण योगासम्भवात् कृभ्वस्तियोगे गतिसंज्ञाविधानम्। अतस्तत्साहचर्यादूर्यादीनामपि तैरेव योगे विधीयते। ऊर्यादिभ्यश्चार्थस्या-प्रतीतेर्न शक्यन्ते ते च्व्यन्ता इति विज्ञातुम्। अतस्तेषां पृथग् ग्रहणम्। तामेव च तेभ्यश्चार्थस्याप्रतीतिमर्थान्तरप्रदर्शनेन प्रतिपादयितुमाह उरी-उररीत्यादि। औषड़ादीनां स्वधापर्यन्तानां चादिषु पाठादक्रियायोगेऽपि निपातसंज्ञा भवति। आविःशब्दः साक्षात्प्रभृतिषु पठ्यते। तेन तस्य विभाषा (१।४।७२) कृञीति करोतियोगे विभाषा गतिसंज्ञा। शुक्लीकृत्येति। अस्य (७।४।३२) च्वाविति ईत्वम्। पटपटाकृत्येति। वा क्यष (१।३।९०) इत्यत्र पटपटाशब्दो व्युत्पादितः।

## ६२। अनुकरणं चानितिपरम्।

अनितिपरमिति। अत्रेतिपरशब्द इतेः पर इति पञ्चमीति (२।१।३७) योगविभागात् तत्पुरुषो वा स्याद्? इतिः परो यस्मादिति बहुव्रीहिर्वा? तत्र यद्याद्यः पक्ष आश्रीयेत तदेतिखाट्कृत्येत्यत्र प्रतिषेधः स्यात्। इह तु न स्यात्। खाड़िति कृत्वा आगत इति। अनिष्टञ्चैतत्। द्वितीये तु पक्ष एष दोषो न भवति। अतस्तमेवाश्रित्याह इतिः परो यस्मादि-त्यादि। निरष्ठीवदिति। ष्ठिवु निरसने। सुब्धातुष्ठिवुष्वष्कतीनां प्रति-षेधो वक्तव्य इति (६।१।६४,वा) प्रतिषेधाद्धात्वादेः षः सः इति (६।१।६४) सत्वं न भवति। ष्ठिवुक्लमुचमां शितीति (७।३।७५) दीर्घत्वम्।

## ६३। आदरानादरयोः सदसती।

प्रीतिसम्भ्रम आदर इति। प्रीत्या सम्भ्रमः प्रीतिसम्भ्रमः प्रीतिपूर्विका प्रत्युत्थानासनादिदानक्रियेत्यर्थः। परिभवौदासीन्यमिति। परिभवोऽवज्ञा। तिरस्कार औदासीन्यम्। कर्त्तव्यं प्रत्युत्थानासनादिदानं प्रत्युपेक्षा। परिभवेणौदासीन्यं परिभवौदासीन्य मिति। तृतीयेति (२।१।३०) योग-विभागात् समासः। अथवा परिभवश्चौदासीन्यञ्च परिभवौदासीन्यम्।

अथ किमर्थमनादरग्रहण मसद्ग्रहणञ्च क्रियते ? नादरे सदित्येवोच्यते ? अथ कथमिदानीमनादरेऽसच्छब्दस्याव्ययसंज्ञा स्यात् ? कथञ्च समासादि कार्य्यम् ? तदन्तविधिनासच्छब्दस्यापि निपातसंज्ञायां गतिसंज्ञायाञ्च सत्यां सच्छब्दस्य निपातस्याव्ययसंज्ञा विधीयमाना ऽव्ययसंज्ञायां तदन्तविधेरुपसंख्यानादसच्छब्दस्याप्यव्ययसंज्ञा भविष्यति। कुगतिप्रादय इत्यत्र (२।२।१८) च सुबन्तस्य प्रकृतत्वाद् गत्यन्तस्य सुबन्तस्य समासो विधीयमानोऽसच्छब्दस्यापि भविष्यति। गतिरनन्तर (६।२।४९) इत्यत्रापि पूर्वपदमित्यनुवर्त्तते। गतिर्गतावित्यत्रापि (८।१।८०) पदस्येति। तेन गत्यन्तस्य पूर्वपदस्य प्रकृतिस्वरो विधीयमानस्तथा गत्यन्तस्य पदस्यानुदात्तो विधीयमानोऽसच्छब्दस्यापि भविष्यति। तस्यापि गत्यन्तत्वात्। भवतु तदन्तविधिना यथोक्तं कार्य्यम्। अनादरावगतिस्तु कथं स्याद् ? असत्यनादरग्रहणे न सदसदिति नञाऽदरप्रतिषेधात्। आदरश्चेत् प्रतिषिद्धः किमन्यदनादरात् स्यात्। नैतद् युक्तमुच्यते। नञ्समासो हि तत्पुरुषः सदृशमेव कार्य्यं प्रतिपादयति यथा ऽब्राह्मणमानयेति। तत्रेह यद्यनादरग्रहणं न क्रियेत तदा सत् सदृशं यत् तदसद् यत्रादरप्रसङ्गस्तत्रैव स्यात्। गुरु मसत्कृत्य गतः। यत्र त्वप्रसक्त एवादरस्तत्र न स्यात्। भृत्यमसत्कृत्य गतः। अनादरग्रहणे तु सति बहुव्रीहि र्विज्ञायते। अविद्यमान आदरो यस्मिन्नित्यनादर इति। बहुव्रीहिश्चात्यन्ताभावे प्रसक्त्यभावे च भवतीति सर्वत्र संज्ञा सिध्यति। तस्मादनादरग्रहणं कर्त्तव्यम्। तस्मिंश्च क्रियमाणे सत्यसद्ग्रहणमपि कर्त्तव्यमेव। अन्यथा हि किमनादरग्रहणेन विशिष्येत यस्यानादरे वर्त्तमानस्य गतिसंज्ञा विधीयते ? नहि सच्छब्दस्यानादरे वृत्तिः सम्भवति। यद्यपि तस्य न सम्भवति तदन्तस्यासच्छब्दस्य सम्भवतीति चेत् सत्यं सम्भवति। नतु तस्य गतिसंज्ञा लभ्यते· तदन्तविधेरभावात्। प्रकृते नहि तदन्तविधिर्भवति। नचेह किञ्चित् प्रकृत मस्ति। तस्मादसच्छब्दार्थं मनादरग्रहणम्। यदि तु यथा गोष्पदं (६।१।१४५) सेवितासेवितप्रमाणेष्वित्यत्रासेविते गोष्पदशब्दो न सम्भवतीत्यगोष्पदशब्दार्थमसेवितग्रहणं विज्ञायते तथेहापि सच्छब्दोऽनादरे न सम्भवतीत्यसच्छब्दार्थमनादरग्रहणं विज्ञायेत तदा शक्यमसच्छब्दस्य ग्रहण-

मकर्त्तुम् । असद्ग्रहणं तु क्रियते तदा विस्पष्टार्थम् । सत्कृत्वा ऽसत्कृत्वेति । शोभनाशोभनार्थाविह सदसच्छब्दौ । विद्यमानाविद्यमानार्थौ वा ।

### ६४ । भूषणेऽलम् ।

अलं कृत्वेति । पर्य्याप्ताविहालं शब्दो वर्त्तते ।

### ६५ । अन्तरपरिग्रहे ।

अन्तःशब्दोऽयम् मध्येऽधिकरणभूते वर्त्तते । परिग्रहे च । तत्र परिग्रहप्रतिषेधादितरत्र संज्ञा विधीयते । यस्त्वस्य स्वरादिषु पाठः स परिग्रहेऽप्यव्ययसंज्ञार्थः । अन्तर्हत्येति । मध्ये हत्वेत्यर्थः । वा (६।४।३८) ल्यपीत्यनुनासिकलोपः । वक्तव्य इति व्याख्येय इत्यर्थः । व्याख्यानन्तु पूर्वमेव कृतम् । अन्तर्धेति । आतश्चोपसर्गे (३।३।१०६) इत्यङ् । अन्तर्द्धिरिति । उपसर्गे घोः (३।३ ९२) किरिति किप्रत्ययः । अन्तर्णयतीति । उपसर्गादसमासेऽपीति ( ८।४।१४ ) णत्वम् ।

### ६६ । कणेमनसी श्रद्धाप्रतीघाते ।

कणेशब्दः सप्तम्यन्तप्रतिरूपको निपातः । स चेहाभिलाषातिशये वर्त्तमानो गृह्यते । तस्य हि श्रद्धाप्रतीघात इत्युपाधिः सम्भवति । मनःशब्दोऽपि तत्साहचर्य्यादभिलाषवृत्तिरेव विज्ञायते । कणे हत्वा मनो हत्वेति । अत्र कणेशब्दः सूक्ष्मे तण्डुलावयवे वर्त्ततेऽधिकरणभूते । मनश्शब्दश्चेतसि ।

### ६७ । पुरोऽव्ययम् ।

पुरस्कृत्येति । पूर्वस्माद् देशादागत इत्यस्मिन्नर्थे पूर्वाधरावराणामसि (५।३।३९) पुरधवश्चैषामित्यसिप्रत्ययः पूर्वशब्दस्य च पुरादेशः । तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञा (१।१।३८) । विसर्जनीयस्थानिकस्य सकारस्योपचार इत्येषा संज्ञा पूर्वाचार्य्यप्रणीता । नमस्पुरसोर्गत्योरिति (८।३।४०) सकारः । पूः पुरौ पुरः कृत्वा गत इति । पुरः कृत्वेतीदं प्रत्युदाहरणम् । पूः पुराविव्येतयोस्तूपन्यासस्तत्साहचर्य्येण पुरःशब्दस्यानव्ययत्वप्रदर्शनार्थः । पॄ पालन-

पूरणयोः। भ्राजभासेत्यादिना (३।२।१७७) क्विप्। उदोष्ठ्यपूर्वस्येत्युत्वम् (७।१।१०२)। रपरत्वञ्च। गतिसंज्ञाया अभावादिह समासादि कार्य्यं न भवति। नमस्पुरसोर्गत्योरिति (८।३।४०) विसर्जनीयस्य सकारोऽपि न भवति। ननु च यद्यत्र गतिसंज्ञा स्याद् गतिसमासे कृते सुपो निवृत्त्या भवितव्यम्। तदा पुर इति रूपं न स्यात्। असति तस्मिन् संज्ञापि निवर्त्तते। नैतदस्ति। यद्यपि विभक्तौ निवृत्तायां पुर इति रूपं न स्यात् तथापि नैवं संज्ञा निवर्त्तते। एकदेशविकृतस्यानन्यत्वात्।

## ६८। अस्तं च।

अस्तंशब्दो मकारान्तोऽव्ययमिति। अव्ययमित्यत एव विशेषणोपादान-सामर्थ्यादव्ययत्वं विज्ञेयम्। चादेराकृतिगणत्वाद्वा। अस्तं कृत्वा काण्डं गत इति। असु क्षेपणे। निष्ठा। पूर्ववदिट्प्रतिषेधः। चकारोऽव्ययमित्य-स्यानुकर्षणार्थः। यद्येवं चानुकृष्टत्वादुत्तरत्र तस्यानुवृत्तिर्न स्यात्। उत्तर-त्रापि चकारस्तदनुकर्षणार्थोऽनुवर्त्तिष्यत इत्यदोषः।

## ६९। अच्छ गत्यर्थवदेषु।

अच्छशब्दोऽव्यय मभिशब्दस्यार्थ इति। अभिराभिमुख्ये। अच्छोद्येति। यजादित्वाद्वच्यादिसूत्रेण (६।१।१५) संप्रसारणम्। अच्छमित्यकलुषमित्यर्थः।

## ७०। अदोऽनुपदेशे।

उपदेशः परस्यार्थकथनम्। तच्च परस्य प्रत्यायनार्थं भवतीत्याह उपदेशः परार्थ इति। अदः कृत्वेति। एतत् कृत्वेत्यर्थः।

## ७१। तिरोऽन्तर्द्धौ।

तिरोभूत्वा स्थित इति। अनृजुर्भूत्वा। वा पार्श्वतोभूत्वेत्यर्थः।

## ७२। विभाषा कृञि।

तिरस्कृत्येति। तिरसोऽन्यतरस्यामिति (८।३।४२) विसर्जनीयस्य सत्वम्।

७३। उपाजेऽन्वाजे।

७४। साक्षात्प्रभृतीनि च।

साक्षात्प्रभृतिषु च्व्यर्थवचनमिति। च्व्यर्थ उच्यते कथ्यते येन तत् च्व्यर्थ वचनम्। च्व्यर्थव्याख्यानम्। एतेनैतदुक्तम् भवति साक्षात्प्रभृतीनां च्व्यर्थो येन प्रतिपाद्यते ऽस्मिन् संज्ञाविधौ तच् च्व्यर्थवचनं कर्त्तव्यमित्यर्थः। किमर्थम्? असाक्षाद्भूतं यदा साक्षात् क्रियते तदा गतिसंज्ञा यथा स्यात्। यदा त्वसाक्षाद्भावो न क्रियते किंतु साक्षाद्भूतस्य प्रत्यक्षभावमुपगतस्यैव सतो योऽन्यो विशेषः कश्चित् क्रियते तदा मा भूदिति। एवं मिथ्याप्रभृतीनाम्। अमिथ्याभूतानां मिथ्याभावो यदा क्रियते तदा यथा स्यात्। अन्यदा मा भूत्। तदेवं व्याख्यानम्। ऊर्य्यादिच्विडाचश्चेत्यत्र (१।४।६१) च्विग्रहणमच्छगत्यर्थ-वदेष्वित्यत्र(१।४।६९) च्व्यर्थग्रहणमिह मण्डूकप्लुतिन्यायेनानुवर्त्तते। तेन च्व्यर्थे वर्त्तमानानां साक्षात्प्रभृतीनां गतिसंज्ञा विधीयत इति। व्यवस्थित-विभाषाविज्ञानाद्वा च्व्यर्थ एव वर्त्तमानानां तेषां संज्ञा भविष्यतीति। च्व्यर्थता चोभयथा सम्भवति। च्व्यन्तानामच्व्यन्तानाञ्च। तत्र यदा च्व्यन्तता भवति तदोर्य्यादिच्विडाचश्चेति (१।४।६१) नित्यं संज्ञा भवति। अन्यदा त्वनेन गतिसंज्ञा विभाषा भवति। व्यवस्थितविभाषया चास्य सूत्रस्य च्व्यर्थेष्वेव प्रवृत्तिः। मकारान्तत्वनिपातनमपि लवणादीनामच्व्यन्तानां न भवति। विभाषितगतिसंज्ञायाः सन्नियोगेन हि तेषां मकारान्तत्वनिपातनम्। अग्नौवशिप्रभृतयो विभक्तिप्रतिरूपकनिपाता द्रष्टव्याः। प्रादुराविःशब्दावूर्य्यादिषु पठ्येते। तयोः करोतियोगे विभाषार्थ इह पाठः।

७५। अनत्याधान उरसिमनसी।

उरसिमनसिशब्दौ विभक्तिप्रतिरूपकौ निपातौ। उरसिकृत्येति। अभ्युप-गम्येत्यर्थः। मनसिकृत्येति। निश्चित्येत्यर्थः।

७६। मध्येपदेनिवचने च।

मध्येपद इति सप्तम्यन्तप्रतिरूपकौ निपातौ। निवचन इति। यथा-

भावेऽव्ययीभावो निष्टर्णं निवुसमिति यथा। निवचनेकृत्येति। उच्चारण-सामर्थ्यात् सप्तम्याः समासेऽप्यलुग् भवति। एवमुत्तरत्र।

७७। नित्यं हस्तेपाणावुपयमने।

हस्तेकृत्य पाणौकृत्येति। सप्तम्याः पूर्ववदलुक्। दारकर्मेति। भार्य्याकरणम्।

७८। प्राध्वम् बन्धने।

बन्धन इति निमित्तसप्तमीयम्। प्राध्वंशब्दस्यानुकूल्यवृत्तित्वाद् बन्धन इत्यस्य विशेषणं नोपपद्यत इति सामर्थ्यात् तदर्थस्य विशेषणं विज्ञायत इत्यत आह तदानुकूल्यमित्यादि। बन्धनं हेतु र्यस्य तत् तथोक्तम्। प्राध्वंकृत्येति। बन्धनेन निमित्तेनानुकूल्यं कृत्वेत्यर्थः। प्राध्वं कृत्वेति। समर्थमध्वगमने शकटमध्वाभिमुखं कृत्वेति गम्यते। उपसर्गादध्वन (५।४।८५) इत्यच् समासान्तः। नस्तद्धित इति (६।४।१४४) टिलोपः। प्रगतमध्वानमिति प्रादिसमासः। लक्षणप्रतिपदोक्तपरिभाषयैवात्र प्राप्तौ सिद्धायां लाक्षणिकोऽपि प्राध्वंशब्दो यत्र बन्धनेनाभिसम्बध्यते तत्रापि गतिसंज्ञा भवतीति ज्ञापनार्थं बन्धनग्रहणम्। तेन यदा बन्धनेनैव शकटस्याध्वनि सामर्थ्यादध्वाभिमुखता विवक्ष्यते तदा प्राध्वंकृत्य शकटं गतमित्येतदपि सिद्धम्भवति।

७९। जीविकोपनिषदावौपम्ये।

औपम्यविषय इति। उपमीयतेऽनयेत्युपमा। आतश्चोपसर्ग (३।३।१०६) इत्यङ्। तस्या भाव औपम्यम्। ष्यञ्। तत् पुनः क्रियाकारकसम्बन्धः। समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्य इति वचनात्। विषयग्रहणेनौपम्य इति सप्तम्या विषयसप्तमीत्वं दर्शयति। सम्भवति च जीविकोपनिषदावुपमाभूते प्रत्यौपम्यविषयभावः। तेन विनोप-माया अभावात्। जीविकाकृतेऽन्यत्रादि। जीविकामिव कृत्वा। उपनिषदमिव कृत्वेत्यर्थः। जीविका जीवनोपायः। उपनिषद्रहस्यं हेतुश्च। यत् तत्-सदृशं तज् जीविकेव जीविका। उपनिषदिवोपनिषदिति जीविकोपनिषद्भ्या-मुपमीयते।

## ८० । ते प्राग् धातोः ।

नियमार्थमेतत् । नियमः पुनः संज्ञानियमो वा स्यात् ते प्रादयो यदा धातोः प्राक् प्रयुज्यन्ते तदैव गत्युपसर्गसंज्ञका भवन्तीति ? प्रयोगनियमो वा ? ते प्रादयो गत्युपसर्गसंज्ञकाः सन्तो धातोः प्राक् प्रयोक्तव्या इति ? तत्र यदि पूर्वको नियम आश्रीयेत तदा संज्ञावाक्यानामयमेकदेशो विज्ञायेत ते प्रादयो धातोः प्राक् प्रयुज्यमाना गत्युपसर्गसंज्ञका भवन्तीति । तथाच गत्युपसर्गसंज्ञयोरनभिनिर्वृत्तत्वात् ते गत्युपसर्गसंज्ञका इति प्रत्यवमर्शो न युज्यते । निपातसंज्ञायाश्चाभिनिर्वृत्तत्वात् त इत्यनेन निपाता एव प्रत्यवमृश्येरन् । ततश्च निपातसंज्ञाया नियमः स्यात् । इतरत्र तु नियमेनायं योगो गत्युपसर्गसंज्ञावाक्यानामेकदेशभूतो भवतीति न भवत्येष दोषप्रसङ्गः । संज्ञानियमस्य चाप्राक्प्रयुज्यमानानां संज्ञानिवृत्तिः फलं स्यात् । तच्चायुक्तम् । नह्यप्राक्प्रयुज्यमानानां सत्यामपि संज्ञायां किञ्चिदनिष्टमापद्यते । इतरस्य तु नियमस्याप्राक्प्रयोगाभावः फलम् । तच्च युक्तम् । नहि गत्युपसर्गसंज्ञकानामप्राक्प्रयोग इष्यते । तस्मात् प्रयोगनियम एव न्याय्य इति तमाश्रित्याह ते गत्युपसर्गसंज्ञका इति । तथाचेत्यादि । यादृशो नियमः कृतस्तदनुरूपं तत्सदृशमेवेत्यर्थः । ननु च नैव कश्चित् प्रपठतीति प्रयोक्तव्ये पठति प्रेति प्रयुङ्क्ते । ततोऽनिष्टादर्शनादपार्थकमेतत् । नैतदस्ति । यद्यपि भाषायां धातोः परेण प्रयुज्यमानास्ते गत्युपसर्गसंज्ञका न दृश्यन्ते छन्दसि तु दृश्यन्ते । तत्र य एव मन्दबुद्धिः प्रतिपत्ता तेषां छन्दसि धातोः परे प्रयोगं दृष्ट्वा यथैव ते छन्दसि विषये धातोः परेण प्रयुज्यन्ते तथा भाषायामपि प्रयोक्तव्या इति मन्यते तं प्रति व्युत्पादनार्थत्वान् नास्ति वैयर्थ्यप्रसङ्गः । अथ किमर्थं तेग्रहणम् ? यावता प्रकृतत्वादेव गत्युपसर्गसंज्ञकानां प्राक् प्रयोगेण सम्बन्धो विज्ञास्यत इत्याह तेग्रहणमित्यादि । असति तेग्रहणे गतिसंज्ञकानामनन्तरत्वात् त एव प्राक्प्रयोगेण सम्बध्येरन् । तेग्रहणे तूपसर्गसंज्ञा अपि निर्दिश्यन्त इति तेषामपि सम्बन्ध उपपद्यते । तस्मादुपसर्गाणामपि प्राक् प्रयोगनियमो यथा स्यादित्येवमर्थं तेग्रहणम् । ननु च यं प्रति

क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीत्यन्तरेणापि धातुग्रहणं धातोरेव प्राक् प्रयोगो विज्ञास्यते। नहि धातोरन्यत्र क्रियास्ति। तत् कथं धातोरित्युच्यते? नैतदस्ति। प्रकर्त्तुमिच्छति प्रचिकीर्षतीत्यत्रापि धातोश्च प्राक् प्रयोगो यथा स्यात्। अत्र सनः सम्बन्धिन्येषणक्रियया युक्तः प्रशब्द इति सनं प्रति गत्युपसर्गसंज्ञा यथा स्यात्। ततश्चासति धातुग्रहणे तत एव प्राक् प्रयुज्येत। धातुग्रहणे तु चिकीर्षतेर्धातोः प्राक् प्रयुज्यते। न सनः।

## ८१। छन्दसि परेऽपि।

## ८२। व्यवहिताश्च।

छन्दसि व्यवहितानां प्रयोगवचनाद् भाषायां व्यवहितानां प्रयोगो न भवतीत्युक्तं भवति। यद्येवं गतिव्यवधानेऽपि प्राक् प्रयोगो न प्राप्नोति समाहरतीत्यादौ। नैष दोषः। नहि तुल्यजातीयको व्यवधायको भवति। गत्युपसर्गजातेराश्रयणान् नास्ति व्यवधानम्। आ मन्द्रैरित्यादि। अत्राङो मन्द्रैरित्यादिभिः पदैर्व्यवधानेऽपि यातेर्धातोः प्राक् प्रयोगः। आयाहीति। एतेनाङो याहीत्यनेन सम्बन्धं दर्शयति।

## ८३। कर्मप्रवचनीयाः।

कर्मप्रवचनीया इति वक्ष्यमाणानां संज्ञिनां बहुत्वाद् बहुवचनेन निर्देशः। महत्याः संज्ञायाः करणस्यैतत् प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति। भूते कृत्यल्युटो (३।३।११३) बहुलमिति कर्त्तर्य्यनीयर्। कर्मशब्दः क्रियावचनः। के च कर्म प्रोक्तवन्तः? ये संप्रति क्रियां न त्वाहुः। तदेव मन्वर्थसंज्ञाकरणद्वारेण ये क्रियां द्योतितवन्तो नतु संप्रति द्योतयन्ति ते कर्मप्रवचनीयसंज्ञा भवन्तीत्युक्तं भवति। यदि सम्प्रति न क्रियां द्योतयन्ति किन्तर्हि द्योतयन्ति? सम्बन्धविशेषम्। यथा शाकल्यस्य संहितामनु प्रावर्षदित्यत्र हि निशमनक्रियया संहिताप्रवर्षणयो यः सम्बन्ध उपजनितो हेतुहेतुमद्भावलक्षणस्तमनुशब्दो द्योतयति। कर्मप्रवचनीयसंज्ञायां सत्यां कर्मप्रवचनीययुक्ते (२।३।८) द्वितीयेति द्वितीया भवति।

८४ । अनुर्लक्षणे ।

लक्षणशब्दोऽत्र चिह्ने वर्त्तत इति मत्वा कश्चिच्चोदयति किमर्थमित्यादि। इतरस्तु लक्षणेत्थम्भूताख्यानभागवीप्सास्वित्यादौ सूत्रे। तत्र चिह्ने ज्ञापके वर्त्तमानस्य लक्षणशब्दस्य ग्रहणम्। इह तु कारके हेतौ। अतस्तेन न सिध्यतीत्यनेनाभिप्रायेण तं प्रत्याह हेत्वर्थन्तु वचनमित्यादि। तु शब्दोऽवधारणे हेत्वर्थमेवेति। हेतुशब्दोऽत्र कारकहेतुवचनो न ज्ञापकहेतुवचनः। अन्यथा ह्यपरिहार एवायं स्यात्। हेतुरर्थो यस्य तत् तथोक्तम्। हेतौ वर्त्तमानस्यानोः कर्मप्रवचनीयसंज्ञा यथा स्यादित्येवमर्थमिदं वचन मित्यर्थः। किमर्थं पुनर्हेतौ वर्त्तमानस्य तस्येयं संज्ञा विधीयत इत्याह हेतौ तृतीयाया मित्यादि। संहिता हि वर्षणस्य हेतुः। अनुडुद्यज्ञः सेकस्य। तथाहि संहितामनुनिशम्य श्रुत्वा प्रावर्षत्। अनुडुदयज्ञच्चानुनिशम्यासिञ्चत्। तत्र यदि हेतावनोरेषा संज्ञा नोच्येत शाकल्यस्य संहितामनु प्रावर्षदित्यादौ हेतावि॑ति (२।३।२३) तृतीया स्यात्। तस्मात् तां बाधित्वा द्वितीयैव यथा स्यादित्येवमर्थं हेतावियं संज्ञाऽनो र्विधीयते।

८५ । तृतीयार्थे ।

नदीमन्ववसितेति। सहार्थोऽत्र तृतीयार्थः। सहयुक्तेऽप्रधान इति (२।३।१९) सहार्थयोगे तृतीयाविधानात्। अन्ववसितेति। षिञ् बन्धन इत्यस्य निष्ठायां रूपम्।

८६ । हीने ।

अनु शाकटायनं वैयाकरणा इति। शाकटायनमपेक्ष्यान्ये वैयाकरणा हीना इति। अपेक्षयात्र जनितो यः सम्बन्धस्तेन व्यतिरिच्यते शाकटायन इति। ततः षष्ठ्यां प्राप्तायां तदपवादेन द्वितीया विधीयते। एकयैव विभक्त्योभयस्योऽपि सम्बन्धो द्योतित इति। तेन सम्बन्ध्यन्तरवाचिनो वैयाकरणशब्दादपरा सम्बन्धविभक्ति र्न भवति।

८७ । उपोऽधिके च ।

अधिकमध्यारूढमुच्यते। नचानधिकेन विनाधिकं सम्भवति। तेनाधि-

के सम्बन्धे ऽध्यारूढ़क्रियाजनिते संज्ञेयं विज्ञायते। चकाराद्दीने च। उपख्यार्थ्यां द्रोण इति। खार्य्यां द्रोणोऽधिक इत्यर्थः। यस्मादधिक (२।३।९) मित्यादिना सप्तमी। तयैव सम्बन्धस्याभिहितत्वाद् द्रोणशब्दात् कर्मप्रवचनीययुक्ते द्वितीयेति (२।३।८) द्वितीया न भवति।

## ८८। अपपरी वर्ज्जने।

प्रकृतेन सम्बन्धिनेति। वर्षादिना। कस्यचिदिति। त्रिगर्त्तादेः। अप त्रिगर्त्तेभ्य इति। पञ्चम्यपाङ्परिभिरिति (२।३।१०) पञ्चमी। परि परि त्रिगर्त्तेभ्य इति। परेर्वर्जन इति (८।१।५) द्विर्वचनम्। ओदनं परिषिञ्चतीति। सर्वतः सिञ्चतीत्यर्थः। शे मुचादीनामिति (७।१।५९) नुम्। कर्मप्रवचनीयसंज्ञाया अभावादुपसर्गसंज्ञैव भवति। तेनोपसर्गात् सुनोतीत्यादिना (८।३।६५) षत्वं भवति।

## ८९। आङ् मर्य्यादावचने।

यत्राङो मर्य्यादायामभिविधौ च कार्य्यमिच्छति तत्रोभयोरपि ग्रहणं करोति यथाङ् (२।१।१३) मर्य्यादाभिविध्योरित्यादि। इह तु मर्य्यादाग्रहणमेव कृतं नाभिविधिग्रहणम्। अतोऽभिविधावनया संज्ञया न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह वचनग्रहणादित्यादि। वचनग्रहणे हि सति बहुव्रीहिर्लभ्यते। मर्य्यादेत्येतद्वचनं यत्र सूत्रे तन्मर्य्यादावचनम्। तत्रायमर्थो भवति। यत्र मर्य्यादाग्रहणमस्ति सूत्रे तत्र य आङ् स कर्मप्रवचनीयसंज्ञो भवति। तत् पुनः सूत्रमाङ् मर्य्यादाभिविध्योरित्येतत् (२।१।१३)। तत्र चाङ् मर्य्यादाभिविध्योर्वर्त्तमान उपात्त इतुभयत्रापि भवति। अन्ये त्वाहुः। मर्य्यादाविशेषो ह्यभिविधिः। सैव हि मर्य्यादा यदा कार्य्येणाभिसम्बध्यते तदाभिविधिरित्युच्यते। यदा तु नाभिसम्बध्यते तदा मर्य्यादेति। तत्रेह वचनग्रहणाद् विशेषो नाश्रीयते। तेन मर्य्यादा वचनमात्र उक्तिमात्रे भवति। अन्यथा हि मर्य्यादायामित्येवं वाच्यं स्यात्। किं वचनग्रहणेनेति? यदि तर्हि मर्य्यादाविशेष एवाभिविधिरिति तर्ह्याङ् मर्य्यादाभिविध्योरी (२।१।१३)·

षदर्थे क्रियायोगी मर्य्यादाभिविधौ च य (H) इत्यत्राभिविधिग्रहणं किमर्थम् ? मर्य्यादासामान्यस्यैव प्रपञ्चार्थम्। मर्य्यादासामान्यस्यैवायं भेद इति प्रदर्शनार्थमित्यर्थः। आ पाटलिपुत्त्राद्दृष्टो देव इति। पूर्ववत् पञ्चमी। आ मथुराया इति। वृष्टो देव इत्यपेक्षते। एकत्रोदाहरणे वर्जनक्रियाजनितमवध्यवधिमद्भावलक्षणं सम्बन्धमाङ् द्योतयति। अपरत्र व्याप्तिक्रियाजनितम्। कः पुनर्वर्जनस्य मर्य्यादायाश्च विशेषो येन पूर्वसूत्रे वर्जनमभिधायेह मर्य्यादाग्रहणं करोति? अयमस्ति विशेषः। वर्जने हि तत्परित्यागेनान्यत्र सामान्येन वर्षणादिना सम्बन्धो गम्यते यथा आ त्रिगर्त्तेभ्यो वृष्टो देव इति। अत्र हि यस्यां दिशि व्यवस्थितो वक्तेदं वाक्यं प्रयुङ्क्ते तस्यां दिशि यो देशो य स्तथान्यासु दिक्षु तत्र सर्वत्रैव त्रिगर्त्तान् वर्जयित्वा वृष्ट इति गम्यते। मर्य्यादायान्त्विदं वाक्यं प्रयुङ्क्त आ पाटलिपुत्त्राद्दृष्टो देव इति। तत्सम्बन्धिन्यामेव दिशि यो व्यवस्थितो देशस्तस्य देशस्य वर्षणेन सम्बन्धः प्रतीयत इत्येष विशेषः। ईषदर्थे क्रियायोगी मा भूदिति। ईषदर्थ आकडार इति। क्रियायोगी समाहरतीति। पूर्वत्र संज्ञाया अभावात् पञ्चमी न भवति। इतरत्र गतिर्गताविति (८।१।७०) निघातो भवति। यस्तु वाक्यस्मरणयोराकारो वर्त्तते तस्याङित्त्वादिह ङकारोच्चारणादेव संज्ञाया अप्रसक्तिः।

## ९०। लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः।

लक्षणं ज्ञापको हेतुश्चिह्नमिहाभिप्रेतम्। लक्ष्यते चिह्न्यते येन तल्लक्षणम्। कञ्चित्प्रकारमापन्नमित्थम्भूतम्। तस्याख्यानमित्थम्भूताख्यानम्। भू प्राप्तावात्मनेपदी। तस्मादा (गणसूत्र २०२) धृषाद्वेति विभाषितणिचो यदा चुरादिणिज् नास्ति तदा क्तान्तस्य भूत इति रूपम्भवति। स्वीक्रियमाणोंऽशो भागः। यस्त्वस्वीक्रियमाणे ऽंशे भागशब्दः प्रयुज्यते प्रियङ्गोर्भागो नगरस्य भाग इति स स्वीक्रियमाणांशसादृश्यात्। पदार्थान् व्याप्तुमिच्छा वीप्सा। एते च लक्षणादयः प्रत्यादीनां न द्योत्याः। किं तर्हि? विषयभूताः। अतएवाह विषयभूतायामिति। एतच्चाभिधेयवल्लिङ्गवचनानि भवन्तीति लिङ्गविपरिणामं कृत्वा

(H) १।१।१४ सूत्रभाष्यस्थोऽयं भाष्यकारीयश्लोकांशः।

लक्षणादिभिः सम्बध्यते। यदि लक्षणादयः प्रत्यादीनां न द्योत्या स्तर्हि किं ते द्योतयन्ति ? सम्बन्धविशेषम् । वृक्षं प्रति विद्योतते विद्युदिति। अत्र वृक्षो लक्षणम् । विद्योतमाना विद्युल्लक्ष्या। सा हि वृक्षं प्राप्य विद्योतत इति तयोः प्राप्तिक्रियाजनितोऽत्र लक्ष्यलक्षणभावः सम्बन्धः प्रतिशब्देन द्योत्यते। साधुर्देवदत्तो मातरं प्रतीति। प्रतिना देवदत्तस्य मातृविषया साधुभावापत्तिराख्यायते। अत्रापि मातरं प्राप्य साधुभावापत्तिरिति प्राप्ति क्रियाजनित एव मातुः साधुभावापत्तेश्च विषयविषयिभावलक्षणः सम्बन्धः प्रतिनाऽख्यायते। यदत्र मामित्यादि। यो भागो मामभिभजते स दीयतामित्यर्थः। अत्रापि विभजनक्रियाजनितः स्वीकारक्रियाजनितो वा स्वस्वामिभावः सम्बन्धः। मामिति। अस्मच्छब्दस्य त्वमावेकवचन (७।२।९७) इति मादेशः। द्वितीयायाञ्चेत्यात्वम् (७।२।८७)। वृक्षं वृक्षं प्रति सिञ्चतीति। अत्र वीप्सा द्विर्वचनेनैव द्योत्यते। प्रतिशब्दस्य तु सेकक्रियाजनितो वृक्षाणां यः सम्बन्धः साध्यसाधनभावलक्षणः स एव द्योत्यः। वृक्षादिनिमित्तं साधनम्। सेकः साध्यः। द्वितीया चेह सकर्मकत्वात् सिचेः सेकेन व्याप्तुमिष्टतमानां वृक्षाणां कर्मत्वे सति कर्मणि (२।३।२) द्वितीयेत्यनेनैव सिद्धा। कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया निवर्त्तितत्वादुपसर्गात् सुनोतीत्यादिना (८।३।६५) षत्वं न भवति। परिषिञ्चतीति। सर्वतः सिञ्चतीत्यर्थः। अथेत्यादि चोद्यम्। वर्जनेत्यादि परीहारः। अपशब्दसाहचर्य्यादित्यत्रैवोपपत्तिः। तत्र हि कर्मप्रवचनीयाधिकाराद् वर्जनार्थस्यापशब्दस्य ग्रहणं वर्जन एव। तस्यापपरी वर्जन (१।४।८८) इति कर्मप्रवचनीयसंज्ञा विहिता। तस्मात् तेन साहचर्य्याद् वर्जनार्थस्य परे र्ग्रहणम्। अतस्तेनापि योगे वर्जन एव विषय इयं पञ्चमी विधीयते। न लक्षणादिषु।

## ९१। अभिरभागे।

यदत्र मामभिष्यादिति। श्नसोरल्लोप (६।४।१११) इत्यकारलोपः। कर्मप्रवचनीयसंज्ञाया अभावादुपसर्गत्वमस्त्येव। तेनोपसर्गप्रादुर्भ्यामस्तिर्यच्पर (८।३।८७) इति षत्वम्। मामिति। यद्यप्यस्तिरकर्मकस्तथाप्यकर्मका अपि

धातवः सोपसर्गाः सकर्मका भवन्तीति कर्मणि द्वितीया। ननु चाभिशब्दो भागसम्बन्धस्य द्योतक इति तेनास्तेः सम्बन्धो नास्ति। तत् कथं सकर्मकता ? नैतदस्ति। अस्तिसंबन्धद्वारेण ह्यभिशब्दो भागसम्बन्धं द्योतयति। अन्यथा हि यदि तस्यास्तिना योगो न स्यात् तदोपसर्गसंज्ञापि न स्यात्। तत श्चोपसर्गसंज्ञानिबन्धनमभिष्यादिति षत्वमपि न स्यात्।

## ९२। प्रतिः प्रतिनिधिप्रतिदानयोः।

अभिमन्युरर्जुनतः प्रतीति। अर्जुनो मुख्यः। तत्सदृशोऽभिमन्युः। सोऽर्जुनमनुकरोतीत्यत्रानुकरणक्रियाजनितः सम्बन्धविशेषोऽनुकार्य्यानुकरणभावः प्रतिना द्योत्यते। प्रतिनिधिप्रतिदाने च (२।३।११) यस्मादिति पञ्चमी। प्रतियोगे पञ्चम्यास्तसिः। माषानस्मै तिलेभ्य इति। तिलानां पूर्वदत्तानां माषाणां प्रतिदानमिह निर्य्यातनम्। तिलान् गृहीत्वा माषान् ददातीत्यर्थः। दानग्रहणक्रियाजनितोऽत्र सम्बन्ध उत्तमर्णाधमर्णभावलक्षणः।

## ९३। अधिपरी अनर्थकौ।

अनर्थान्तरवाचिनाविति। एतेनानर्थान्तरवाचित्वादनर्थकावित्युक्तम्। न त्वर्थाभावादिति दर्शयति। यदि ह्यविद्यमानार्थत्वादनर्थकौ स्यातां निरर्थकमिदं सूत्रं स्यात्। तथाहि कर्मप्रवचनीयसंज्ञा गत्युपसर्गसंज्ञाबाधनार्थाऽनेन विधीयते। न चानर्थकयोरधिपर्य्योर्गत्युपसर्गसंज्ञाप्राप्तिरस्ति। यं प्रति क्रियायुक्ताः प्रादय स्तं प्रति गत्युपसर्गसंज्ञाविधानात्। अनर्थकयोश्च क्रियायोगासम्भवात्। कुतोऽध्यागच्छतीत्यादि। कुत इत्यपादाने (२।३।२८) पञ्चमी। कर्मप्रवचनीयेति (२।३।८) द्वितीया न भवति। उपपदविभक्तेः कारकविभक्तिर्बलीयसीति ( परिभाषा, १०३ ) वचनात्। सूत्रारम्भस्य तु प्रयोजनमाख्यातमेव। कुत इति। किंशब्दात् पञ्चम्यास्तसिलिति ( ५।३।७ ) तसिल्। कु तिहोरिति ( ७।२।१०४ ) कुभावः। कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञयोर्बाधितत्वाद् गतिर्गताविति (८।१।७०) निघातो न भवति। ननु चागच्छतीत्युक्त आगमनं विशिष्टं प्रतीयते। अध्यागच्छति पर्य्यागच्छतीति। अधिपरियोगे त्वागमनस्योपरिभावः सर्वतोभावश्चावगम्यत

इत्यपरो विशेषः । तत् कथमनर्थान्तरवाचित्वमनयोः ? नैतदस्ति । यदा तयोरप्यर्थयोः प्रकरणादेः कुतश्चिदवगतयोरधिपरी प्रयुज्येते तदा तयोरनर्थान्तरवाचित्वं वेदितव्यम् । कथं पुनरवगतार्थयोः प्रयोग उक्तार्थानामप्रयोग इति वचनात् ? सत्यम् । अवगतार्थस्यापि प्रयोगो दृश्यते यथा ब्राह्मणौ द्वाविति । लोकस्य प्रयोगे गुरुलाघवं प्रत्यनादरात् ।

## ९४ । सुः पूजायाम् ।

सुसिक्तं भवतेति । भवच्छब्दात् कर्त्तरि तृतीया । द्वितीया तु पूर्ववदेव न भवति । धात्वर्थः स्तूयत इति । शोभनोद्भावनं स्तुतिः । सैव तस्य पूजा । उपसर्गाश्रयं षत्वं न भवतीति । कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया बाधितत्वादिति भावः । सुषिक्तं किं तवात्रेति । क्षेपोऽयं न पूजा ।

## ९५ । अतिरतिक्रमणे च ।

अतिस्तुतमेव भवतेति । निष्पन्नेऽपि फले स्तुतिः प्रवृत्तेत्यर्थः । शोभनं कृतमित्यर्थ इति । पूजामाविष्करोति ।

## ९६ । अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ।

पदार्थ इति । अन्यस्य पदस्यार्थो लक्ष्यते । न स्वार्थो नापि स्वसम्बन्धिनः पदस्यार्थः पदार्थः । स्वपदार्थग्रहणे स्वसम्बन्धिपदार्थग्रहणे वा पदार्थग्रहणमनर्थकं स्यात् । अपिशब्दस्य हि योऽर्थो यश्चापिशब्दसम्बन्धिनः स्यादित्यादेः पदस्य स पदार्थ एवेति किं पदार्थग्रहणेन ? तस्मात् पदार्थग्रहणसामर्थ्याद् विशिष्टपदस्यार्थो विज्ञायतइत्याह पदान्तरस्येत्यादि । सर्पिषोऽपि स्यादिति । कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया निवर्त्तितत्वादुपसर्गप्रादुर्भ्यामस्तियच्पर इति षत्वं (८।३।८७) न भवति । अथ सर्पिःशब्दाद् द्वितीया कथं न भवति ? अपिशब्देन तस्य योगाऽसम्भवात् । सर्पिषो हि या मात्रा सापिशब्देन युक्ता न सर्पिः । मात्राशब्दात् तर्हि कस्मान्न भवति ? तस्य प्रयोगाभावात् । यदा तु प्रयुज्यते तदा कर्मप्रवचनीय संज्ञैव नास्ति । अप्रयुज्यमानस्य पदान्तरस्यार्थे तद्विधानात् । अधिकार्थवचनेनेति । अधिकार्थो मूलकसहस्रसेकादिः । तस्य वचनेन सेकादावर्थे

क्रियायां यच्छक्तेरप्रतिघातस्याविष्करणं प्रकाशनं तत् सम्भावनम्। अपि सिञ्चेन् मूलकसहस्रम्। अपि स्तुयाद्राजानमिति। तस्य सेके स्तुतौ च सामर्थ्यं न विहन्यत इत्यर्थः। सम्भावनेऽलमिति चेत् सिद्धाप्रयोग (३।३।१५४) इति लिङ्। कामाचाराभ्यनुज्ञानमिति। कामचार इच्छया प्रवृत्तिः। तस्याभ्यनुज्ञानं कामचाराभ्यनुज्ञानम्। अपि सिञ्च अपि स्तुहीति। सिञ्च वा स्तुहि वा यथेष्टमभ्यनुज्ञातोऽसीत्यर्थः। धिग् जाल्मं देवदत्तमिति।

उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु।
द्वितीयाम्रेड़िताम्तेषु ततोऽन्यत्रापि दृश्यते ॥१॥

इत्युपसंख्यानाद्द्वितीया (२।३।२, वा)। अपि सिञ्चेत् पलाण्डुमिति। अर्हे कृत्यतृचश्चेति (३।३।१६९) लिङ्। पलाण्डुमिति कर्मणि द्वितीया। अपि सिञ्च अपि स्तुहीति। एकस्मिन् कर्त्तरि स्तुतिसेकक्रिययोश्चीयमानता। अत्र समुच्चयः। सिञ्च च स्तुहि चेति प्रसिद्धसमुच्चयार्थस्य चशब्दस्य प्रयोगेण तमेव समुच्चय मुदाहरणे व्यक्तीकरोति।

## ९७। अधिरीश्वरे।

तदयं स्वस्वामिकसम्बन्ध इति। परिपालनादिक्रियाजनितोऽत्र सम्बन्धः। तत्रेत्यादि। सर्व्वत्र हि सम्बन्धे किञ्चिदनूद्यते किञ्चिदाख्यायते। यत् प्रसिद्धं तदनूद्यते। यदप्रसिद्धं तदाख्यायते विधीयते ज्ञाप्यते यथा यः कुण्डली स देवदत्त इति। कुण्डलित्वानुवादेन देवदत्तत्वं विधीयते। यच्च विधीयते तत् प्रधानम्। इतरदप्रधानं विशेषणम्। तत्र यदा स्व मप्रसिद्धत्वाद्विधीयते तदा स्वामी प्रधानत्वाद् व्यतिरेकमापद्यत इति तत एव कर्म्मप्रवचनीयसंज्ञा-युक्तत्वाद् व्यतिरेकनिबन्धनविभक्तौ षष्ठ्यां प्राप्तायां तदपवादो यस्मादधिकं यस्य चेश्वरवचनं तत्र (२।३।९) सप्तमीति सप्तमी भवति। तयैव सम्बन्धस्य द्योतितत्वात् स्वात् प्रथमैव भवति। न सप्तमी। यदा तु स्वाम्यप्रसिद्धत्वाद् विधीयते तदा विपर्य्ययो वेदितव्यः।

## ९८। विभाषा कृञि।

अधिरीश्वर इति वर्त्तते। तेन प्राप्ते विभाषेयम्। अधिपूर्वः करोति-

विनियोगे वर्त्तते । विनियुक्तस्यैवैश्वर्य्यं सम्पद्यते । यदत्र मामधिकरिष्यतीति । मामिति कर्मणि द्वितीया । अधिकरिष्यतीति । अत्र निपातैर्यद्यदी-त्यादिना (८।१।३०) निघाते प्रतिषिद्धे ऽस्य प्रकृतिस्वरेणाद्युदात्तत्वं भवति ।

## ९९ । लः परस्मैपदम् ।

ल इति प्रथमा वा स्यात् षष्ठी वा ? तत्र यदि प्रथमा स्याल्लकारस्यैव परस्मैपदसंज्ञा स्यात् । न तदादेशानां तिबादीनाम् । कामं तेषामपि स्थानि-वद्भावेन स्यात् । तङानावात्मनेपदमित्यत्र (१।४।१००) तु ल इत्यनेन तङानयोः सम्बन्धो नोपपद्येत । नहि तङानौ लौ भवतः । अत्र तङानभावी लकार एव तङानावित्येवमभिहितः । साहचर्य्याद्वा लादेशौ तङानावेव । ल इत्युक्ता-विति व्याख्येयम् । तथाच व्याख्यानद्वारेणेष्टार्थप्रतिपत्तौ साध्यायां प्रति-पत्तिगौरवं स्यात् । षष्ठीपक्षे त्वेष दोषो नास्ति । अतस्तमाश्रित्याह लइति षष्ठीत्यादि । नन्वयमपि पक्षो दोषवानेव । लादेशस्य हि परस्मैपद-संज्ञा विधीयमाना तिङां न स्यात् । तेषां परत्वात् तिङस्त्रीणि त्रीणीत्यादिना (१।४।१०१) प्रथमपुरुषादिसंज्ञया भवितव्यम् । परस्मैपदसंज्ञायास्तु शतृक्वस्वो-श्चावकाशः । नैष दोषः । यदयं सिचि वृद्धिः (७।२।१) परस्मैपदेष्वित्याह तज् ज्ञापयति भवति च तिङां परस्मैपदसंज्ञेति । स हि परस्मैपदे परे सिचि विधीयते । नहि सिज्विषये शतृक्वसू सम्भवतः । तिप्तस्झीत्यादि रूपोदाहरणमात्रम् ।

## १०० । तङानावात्मनेपदम् ।

कतीह निघ्नाना इति । निपूर्वाद्धन्तेस्ताच्छील्यवयोवचनशक्तिषु चानश् इति (३।२।१२९) चानश्प्रत्ययः । गमहनेत्यादिनोपधालोपः (६।४।९८) । हो हन्तेर्ञ्णिन्नेष्विति (७।३।५४) कुत्वम् । यद्यनादेशोऽपि चानशात्मनेपद-संज्ञकः स्यात् परस्मैपदिनो हन्तेर्न स्यात् ।

## १०१ । तिङ स्त्रीणित्रीणि प्रथममध्यमोत्तमाः ।

तिङ इति प्रथमाबहुवचनम् । तिङः संज्ञिनः किम्भूताः ? त्रीणि त्रीणीत्येवम्भूता इत्यर्थः । वचनापेक्षया नपुंसकलिङ्गेन निर्देशः । वीप्सायाञ्चैतद्

द्विर्वचनम् । यदि तिङस्त्रीणि त्रीणि वचनानि प्रथममध्यमोत्तमपुरुषसंज्ञकानि भवन्त्येवं सति षट् त्रिकाः संज्ञिनः संज्ञास्तिस्र इति यथासंख्यं न प्राप्नोति । वैषम्यात् । तत्र यद्येकस्यानेकसंज्ञाविधानवैयर्थ्यादेका संज्ञा भवेन् न त्वेकैकस्य तिस्र स्तथापि सैवैकैका भवन्तीत्यव्यवस्था वा स्यात् । नैष दोषः । इह हि परस्मैपदग्रहणमात्मनेपदग्रहणञ्चानुवर्त्तते । तदनुवृत्तौ च द्वौ राशी भवतः । नवानां तिङां परस्मैपदसंज्ञकानामेको राशिः । तथा नवानामात्मनेपदसंज्ञकानां द्वितीयः । तत्र प्रथमे राशौ ये त्रयस्त्रिका ये च द्वितीये राशौ त्रयस्त्रिका स्तैरिदं सूत्रं प्रत्येकमभिसम्बध्यते । परस्मैपदेषु तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमास्तथात्मनेपदेषु तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमा इति । एवं हि सति न भवति संख्यातानुदेशाभावप्रसङ्गः । तमेवार्थं दर्शयितुमाह तिङोऽष्टादश प्रत्यया इति । नवेत्यादिना राशिद्वयं दर्शयति । तत्रेत्यादिना प्रथमे राशौ ये त्रयस्त्रिका स्तैरस्य सूत्रस्य सम्बन्धं करोति । आत्मनेपदेष्वित्यादिनापि द्वितीये राशौ ये त्रयस्त्रिकास्तैश्च ।

## १०२ । तान्येकवचनद्विवचनबहुवचनान्येकशः ।

तानीति बहुवचनं संज्ञासमावेशार्थम् । अन्यथा ह्येकसंज्ञाधिकारे सति वचनप्रामाण्यात् पुरुषवचनसंज्ञाः पर्य्यायेण प्रवर्त्तेरन् । एवञ्च तत्राडुत्तमस्य पिच्चेत्यादिना (३।४।९२) विधीयमानमाड़ादिकार्य्यं पाक्षिकं स्यात् । अस्मिंस्तु सति भवति संज्ञासमावेशः । तच्छब्देन हि त्रीणि त्रीणि लब्धपुरुषसंज्ञकानि तान्येवैकवचनादिसंज्ञकानि भवन्तीति प्रत्यवमृश्यन्ते । तेन यानि लब्धप्रथमपुरुषादिसंज्ञकानि तान्येवैकवचनादिसंज्ञकानि भवन्ति । ननु च त्रिकाणां प्रथमादिसंज्ञैकैकस्य चैकवचनादिसंज्ञा । तत्र विषयभेदादेकसंज्ञाधिकारेऽपि विरोधो नास्त्येवेति । नैष दोषः । तदस्ति पुरुषादिसंज्ञापि हि प्रत्येकमेव । नहि समुदायो नामान्यस्त्रिकेभ्योऽस्ति । तस्मात् तिबादय स्त्रिका एव संज्ञिनः । त्रिग्रहणन्तु मर्य्यादार्थम् । त्रित्वसंख्यापरिच्छिन्नास्तिङः प्रत्येकं पुरुषसंज्ञाः प्रतिपद्यन्ते । तस्मात् प्रथमादिसंज्ञानामेकवचनादिसंज्ञानाञ्चैकविषयतैवेति संज्ञासमावेशार्थं तानीत्युक्तम् ।

## १०३ । सुपः ।

सुबिति प्रत्याहारग्रहणम् । प्रथमैकवचनात् सुशब्दादारभ्य सप्तमीबहुवचनस्य सुपः पकारेण । अथ कपः पकारेणायं प्रत्याहारः कस्मान्न विज्ञायते ? सप्तमीबहुवचनस्य पकारस्य वैयर्थ्यप्रसङ्गात् । स ह्यनुदात्तार्थः स्यात् । प्रत्याहारार्थो वा । तत्रानुदात्तार्थो न भवति । अनुदात्तस्य सुप्त्वादेव सिद्धत्वात् । तत्र यदि प्रत्याहारार्थोऽपि न स्यात् तदास्यापार्थकत्वमेव स्यात् । तस्मात् तेनैवायं प्रत्याहारो विज्ञायते । न तु कपः पकारेण । स्वरविधौ तस्य चरितार्थत्वात् ।

## १०४ । विभक्तिश्च ।

चकारः पुरुषादिसंज्ञासमावेशार्थः । विना तेनैकसंज्ञाधिकारे वचनप्रामाण्यात् पर्य्यायः स्यात् । तिङो विभक्तित्वे प्रयोजनं न विभक्तौ तुस्माः (१।३।४) इतीत्संज्ञाप्रतिषेधः । सुपस्त्वेतच्चान्यच्च त्यदाद्यत्वादि ।

## १०५ । युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।

नियमार्थमेतदिति दर्शयितु माह लस्येत्यधिकृत्येत्यादि । एतच्च नियमार्थत्वे कारणम् । सिद्धे सत्यारम्भो नियमार्थो भवति । नासिद्धे । स पुनरयं नियम उपपदार्थनियमो वा स्यात् तिङो युष्मद्युपपदे मध्यम एव ? पुरुषनियमो वा स्याद् युष्मद्येवोपपदे मध्यम इति वा ? तत्र यदि प्रथमो नियम आश्रीयते त्वया कुर्वता त्वया कुर्वाणेनेति युष्मद्युपपदे लस्य शतृशानजादेशौ न भवतः । तस्मात् तदर्थं यत्नान्तरमास्थेयम् । इतरत्र तु न किञ्चिद् यत्नसाध्यमतो द्वितीयपक्षमाश्रित्याह तेषामनेनेत्यादि । व्यवहिते चाव्यवहिते चेति । ननु च परस्परं सन्निकृष्टं यत्पदं तदुपपदमुच्यत उपोच्चारितं पदमुपपदमिति कृत्वा । यच्च व्यवहितं तदव्यवहितापेक्षया विप्रकृष्टमतो व्यवहितेन भवितव्यम् । नैष दोषः । यस्मात् सन्निकृष्टं विप्रकृष्टमित्यव्यवस्थितमेतदुभयग्रहणम् । सापेक्षत्वाद् परापरवत् । तत्र यद्यव्यवहितमपेक्ष्य व्यवहितं विप्रकृष्टं भवति तथाप्यन्यद् विप्रकृष्टतरमपेक्ष्य सन्निकृष्टं भवतीतीतरत्र व्यवहितेनापि भवितव्यम् ।

यद्येवमुपपदग्रहणं किमर्थम्? पूर्वभूतेऽपि यथा स्यादित्येवमर्थं कृतम्। अन्यथा युष्मदीत्येतावत्युच्यमाने तस्मिन्निति निर्दिष्टे पूर्वस्येति (१।१।६६) परभूत एव युष्मदि पूर्वस्य मध्यमः स्यात्। न तु पूर्वभूते परस्य। उपपदग्रहणादत्रापि भवति। पूर्वेण परेणापि प्रयुज्यमानमुपपदं भवत्येव। समानाधिकरण इत्यनेन समानाभिधेय इति व्याचक्षाणोऽयमधिकरणशब्दोऽभिधेयवचनः सूत्र उपात्त इति दर्शयति। तत् पुनरभिधेयं यत्र लकार उत्पद्यते कर्त्तरि कर्मणि वा कारके प्रत्यासत्तेस्तदेव विज्ञायत इत्याह तुल्यकारक इत्यादि। तुल्यं कारकं यस्य तत् तथोक्तम्। तुल्यशब्देन समानशब्दस्यार्थो दर्शितः। प्रयुज्यमानेऽप्रयुज्यमानेऽपीति। अनेन स्थानिन्यपीत्यस्यार्थमाचष्टे। स्थानशब्दः प्रसङ्गवाची। स्थानमस्यास्तीति स्थानी। कस्य च स्थानम्? तस्यैव स्थानमस्ति यस्यार्थो गम्यते शब्दो न प्रयुज्यते। तदेतदुक्तम्भवति। अप्रयुज्यमानेऽपि युष्मदि। अपिशब्दात् प्रयुज्यमानेऽपि। समानाधिकरणग्रहणं किम्? त्वया पच्यत इत्यत्र मा भूत्। भिन्नं ह्यत्राधिकरणम्। तथाहि त्वयेत्येतत् कर्त्तृवाचि। कर्त्तरि तृतीयाविधानात्। पच्यत इति कर्म्मवाचि। कर्मणि लकारविधानात्।

## १०६। प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च।

प्रहासे गम्यमान इति। यत्र भूतार्थाभावाद् वचनैव केवलं तत्र वक्तुरभिप्रायाविष्करणेन प्रहासो गम्यते। मन्योपपद इति। मन्यतिरुपपदमुपोच्चारितं पदं यस्य स तथोक्तः। मध्यमस्य धातोर्विधानाद् धातुरन्यपदार्थो विज्ञायत इत्याह धातोरिति। स चैकवदिति। यत्र द्वौ मन्तारौ बहवो वा तत्रायमेकवद्भावो विधीयते। अन्यत्र तु मन्तुरेकत्वादेवैकवचनं सिद्धम्। मध्यमोत्तमयोरिति। यथाक्रमं युष्मदस्मदोरुपपदयोः समानाधिकरणयोरप्रयुज्यमानयोरप्यर्थस्य विद्यमानत्वात्। यथा प्रत्युदाहरणे पूर्वकमुपपदग्रहणं युष्मच्छब्देनाभिसम्बद्धमिहानुवर्त्ततेति तन्मन्यतिनाऽशक्यमभिसम्बन्धुमिति पुनरुपपदग्रहणं क्रियते। मन्यतेरिति श्यना निर्देशो मन ज्ञान इत्यस्य दैवादिकस्य ग्रहणं यथा स्यान् मनु अवबोधन इत्यस्य तानादिकस्य ग्रहणं मा भूदितेत्येवमर्थः।

तेनेह न भवति । एहि मनुषे रथेन यास्यामि नहि यास्यसि यातस्तेन ते पितेति । एवं हि मनोतेर्भवति ।

१०७ । अस्मद्युत्तमः ।

यदा युष्मदस्मदी द्वे अप्येते उपपदे स्त स्तदा कथं भवितव्यम् ? यदि कर्तृशक्ती आधारप्रतिनियते अपेक्ष्येते तदाऽख्यातमपि पृथगेव प्रयुज्यते । पचसि पचामि चेति । अथाविरोधाच्छक्तिद्वयेऽपि लकार उत्पद्यते तदा विप्रतिषेधादुत्तम एव भवति त्वञ्चाहञ्च पचाव इति । यद्यपि त्यदादीनां यद् यत् परं तच्छिष्यत (I) इत्यस्मच्छब्दस्य शेषो भवति तथापि स्थानिन्यपीति मध्यमस्य प्राप्तौ सत्यां परत्वादुत्तम एव भवति । आवां पचाव इत्यत्र अस्मच्छब्दस्य युष्मदर्थोऽपि वाच्यः । अन्यथा हि द्विवचनं न स्यात् । न ह्यस्मच्छब्दस्यैव द्वित्वमुपपद्यते ।

१०८ । शेषे प्रथमः ।

१०९ । परः सन्निकर्षः संहिता ।

परशब्दोऽतिशये वर्त्तत इति । यथा परं सुखं परं दुःखमिति । एतेन यद्यपि परशब्दो दिगादिष्वप्यर्थेषु वर्त्तते तथापीहातिशये वर्त्तमानस्य तस्य ग्रहणमिति दर्शयति । सन्निकर्षः प्रत्यासत्तिः संश्लेषश्च । तत्रेह प्रत्यासत्ति-र्गृह्यत इति दर्शयन्नाह सन्निकर्षः प्रत्यासत्तिरिति । संश्लेषस्तु न गृह्यते । तस्य वर्णेष्वसम्भवात् । संश्लेषो ह्येककालानां भवति । न च वर्णानामेककाल-तास्ति । क्रमेणोच्चारितत्वादुच्चरितप्रध्वंसितत्वात् । सत्यामपि चैककाल तायां न सम्भवत्येव वर्णानां संश्लेषः । तथाहि संश्लेषः संयोगतो वा स्यात् समवायतो वा । तत्र पूर्वको द्रव्यस्यैव स्यात् । न तु शब्दस्य निर्गुणा गुणा इति कृत्वा । इतरोऽपि नैव शब्दस्य सम्भवति । नहि वर्णो वर्णे समवैति । शब्द-स्याकाशसमवायित्वात् । न च संयोगसमवाययोरतिशयः सम्भवति । सर्व-त्रैकरूपत्वात् । तथाच पर इति विशेषणं नोपपद्यते । प्रत्यासत्ति स्त्वपेक्षा-

(I) इदं त्यदादीनि सर्वैर्नित्य ( १।२।७२ ) मिति सूत्रस्थवार्त्तिकानुवादमूलकं वृत्तिकृद्वाक्यम् । दीक्षितेनापीदं गृहीतम् ।

कृतभेदात् प्रकर्षाप्रकर्षाभ्यां प्रयुज्यमानापरग्रहणेन विशिष्यत इति युक्तं तस्य विशेषणत्वम् । कः पुनरसौ परः सन्निकर्ष इत्याह अर्द्धमात्रेत्यादि । अर्द्धं मात्राया इत्यर्द्धं नपुंसकमिति (२।२।२) समासः । अर्द्धमात्रायाः कालोऽर्द्धमात्राकालः । यावता कालेनार्द्धमात्रोच्चार्य्यते सोऽर्द्धमात्राकालः । अतिशयेन सन्निकृष्टान् वर्णानुच्चारयति वक्तरि पूर्वस्य वर्णस्य ये निष्पादका स्ताल्वादयस्तेषां व्यापारोपरतौ वर्णान्तरस्य च ये निष्पादका स्ताल्वादयस्तेषां व्यापारोपवेशन-मर्द्धमात्राकालमाहुः । स वर्णानां व्यवधानो व्यवधायको यस्मिन् सोऽर्द्धमात्रा-कालव्यवधानः सन्निकर्षः । यदि वर्णानामर्द्धमात्राकालव्यवधानः सन्निकर्षः कथं तर्हि दध्यत्रेत्यादौ व्यवधायककालो नोपलभ्यते ? वर्णाः संश्लिष्टा एवोपलभ्यन्ते ? नैतत् । तस्य कालस्य सूक्ष्मतयोपलब्धुमशक्यत्वाविरन्तरा वर्णास्तत्रोपलभ्यन्ते । नतु व्यवधायकस्य कालस्याभावात् । किमर्थं पुनरेतदा-रभ्यते । यावता परमेव सन्निकर्षं संहितेति वदन्त्याचार्य्याः । तथाहि संहिता-मधीष्वेत्युक्ते परं सन्निकर्षमेवाधीते शिष्यः । नैतदेवम् । पदस्य पदान्तरेण यदानन्तर्य्यं सा संहितेति लोकेऽभिधीयते । तथाच वक्तारो वदन्ति संहिता-मधीते न पदानि । पदान्यधीते न संहितामिति । तथाचैकपदे हि संहिताकार्य्यं न स्यादिको यणचीति (६।१।७७) कुमार्य्यौ कुमार्य्य इति । सति त्वस्मिन् वर्णानां सन्निकर्षविशेषस्यानेन संहितासंज्ञा विधीयत इति सर्व्वत्रैव भवति ।

## ११० । विरामोऽवसानम् ।

विरतिर्व्विराम इति भावे घञ् । विरामो वर्णोच्चारणाभावोऽवसानसंज्ञो भवति । विरम्यतेऽनेनेति विराम इति विरामशब्दस्य द्वितीयमर्थं दर्शयति । कृत्यल्युटो ( ३।३।११३ ) बहुलमिति बहुलवचनादसंज्ञाया मपि हलश्चेति ( ३।३।१२१ ) घञ् । अत्र पक्षे येनान्त्येन वर्णेन विरम्यते सोऽवसानसंज्ञो भवति । तत्र पूर्व्वस्मिन् पक्षेऽभावे पौर्वापर्य्याभावात् खरवसानयो (८।३।१५) रित्यत्रावसानापेक्षया विषयसप्तमीयं विज्ञायते । न परसप्तमी । खरपेक्षया तु परसप्तमोयम् । अन्ये तु यद्यभावे पौर्व्वापर्य्यं न सम्भवतीत्यवसानापेक्षया

खरवसानयोरिति (८।३।१५) परसप्तमी नोपपद्यते तदेको यश्ची-(६।१।७७) त्यादावपि परसप्तमी नोपपद्यते । कथम् ? वर्णानां क्रमभावित्वात् । उच्चरित-प्रध्वंसित्वाच्च । यदेगस्ति तदाज् नास्ति यदा त्वजस्ति तदेग् नास्ति । अथात्र बुद्धिप्रकल्पितं पौर्व्वापर्य्य माश्रित्य परसप्तमीष्यते तदा खरवसानयो (८।३।१५) रित्यत्रापि तथैवेष्टव्येति मन्यमाना अवसानापेक्षयापि परसप्तमीमिच्छन्ति । अपरे त्वन्त्यस्य तु वर्णस्यावसानसंज्ञायां सत्यां खरवसानयोरिति (८।३।१५) षष्ठी विज्ञायते । अत्रावसानापेक्षया स्थानषष्ठी । रेफस्यावसानस्य विसर्जनीय इति खरपेक्षया त्वानन्तर्य्यलक्षणा षष्ठीति वदन्ति । तन्मते स्थानषष्ठ्यां हि रो रीत्यतो (८।३।१४) रेफस्यानुवृत्तस्य यत् स्थानित्वं तद् विरुध्यते । तदेवमेकापि विभक्ति-र्यथायोगं विभज्यते । ननु चाभावपक्षेऽपि पूर्वस्मिन्नपि भागेऽनुच्चारणमस्ति । तत्रापि विसर्जनीयः प्राप्नोति रथ इति । अस्ति ह्यत्रापि रेफात् प्रागुच्चारणम् । नैष दोषः । तत्र हि प्रकृतं पदग्रहणं रेफेण विशिष्यते रेफान्तस्य पदस्येति । नच पूर्वेण रेफेण रेफान्तं पदं भवति । नन्वेवमप्यर्थस्यैषा संज्ञा स्यादिति खरव-सानयोरित्यत्र (८।३।१५) तस्मिन्निति निर्दिष्टे पूर्वस्येति (१।१।६६) परिभाषा नोपतिष्ठते । शब्दे हि सप्तमीनिर्दिष्टे सतीयमुपतिष्ठते । नार्थे । तदनुपस्थाने च परेण रेफेण रेफान्तस्य रथ इत्येतस्य पदस्य पूर्वो यो रेफस्तस्य व्यवहितस्यापि विसर्जनीयः स्यात् । नैष दोषः । ज्ञापकान्न भविष्यति । यदयमुरण् रपर इति (१।१।५१) व्यवहितस्य रेफस्य विसर्जनीयमकृत्वा निर्देशं करोति तज् ज्ञापयति व्यवहितस्य रेफस्य विसर्जनीयो न भवतीति । नन्वत्र लोके प्रसिद्धेरेवान्त्ये वर्णे ऽवसानशब्दस्य संप्रत्ययो भविष्यति । प्रसिद्धो हि लोकेऽन्त्ये वर्णे ऽवस्यतेः प्रयोगः । तथाहि केनावस्यतीत्युक्ते वक्तारो वदन्तीकारेणोकारेण वेति । इकारादिवर्णेनावसानं करोतीत्यर्थः । ततः प्रदेश एवावसानग्रहणं कर्त्तव्य-मिति नार्थः संज्ञासंज्ञिप्रणयनेन । नैतदस्ति । अवपूर्वो हि स्यतिः परि-समाप्तावपि वर्त्तते ऽवसितो वाद इति । अवगमेऽपि वर्त्तते ऽवसितोऽर्थ इति । पराभवेऽपि वर्त्तते द्वयोर्विवादे ऽवसितो देवदत्त इति । तत्र यदीयं नारभ्यते तदावसानग्रहणे सन्देहः स्यात् किमभिधानावसानशब्दस्य ग्रहणमिति । विरामोऽवसानमिति तु संज्ञासंज्ञिसम्बन्धे क्रियमाणे परि-

समासग्रादिरर्थो निवर्त्तितो भवति। एवमपि नार्थः संज्ञासंज्ञिसम्बन्धेन। प्रदेश एव ह्यन्तग्रहणं कर्त्तव्यं खरन्त्ययोरिति। एतदपि नास्ति। एवं हि सन्देहः स्यात् किमन्त्यस्य वर्णस्येत पदस्याहोस्विद् वाक्यस्येति। ततान्त्यस्य विशेषणार्थं वर्णग्रहणं कर्त्तव्यं स्यात्। तस्मात् संज्ञासंज्ञिसम्बन्धः कर्त्तव्यः। वृक्षः प्लक्ष इति। खरवसानयोर्विसर्जनीयः ( ८।३।१ ) ।(I)

---

(I) The Editor had at his disposal chiefly the following MSS.—(क), (ख), (ग), (घ) & (ङ) as detailed below,—to collate and prepare the press-copy of the first *Adhyaya* of the *KasikaVivaranaPanjika.*

(क) The contents of this MS, all in Bengali characters, are :—काशिका १।१. न्यास—१।१, १।२, १।३, २।१, २।२. २।३, & २।४. We have called it the वङ्गीयपुस्तक or the Bengal MS., At the end of the न्यास १।१, there is the following entry in it :—

"प्रणम्य दुर्गां जयदां सदाशिवः पुरोगपादानुगपञ्जिकामिमाम्।
रसाङ्कतर्केन्दुयुते शकेऽलिखच्छुचौ गुरावह्नि च पूर्णिमातिथौ॥"

Which gives 1696 Saka i. e. 1774 A.D. and at the end of the न्यास २।४, it also contains :

श्रीवार्षाकपपादपद्मसतुलं वन्द्यं सुरैर्योगिभि-
र्नत्वा श्रीलसदाशिवोऽलिखदिमं न्यासाख्यग्रन्थं द्विजः।
शाके वाणनवाङ्गचन्द्रमिलिते मासे त्विषे चेऽह्नि
व्याकाराम्बुधितारणालिमसिते पक्षे च भूते तिथौ॥

Which gives the date 1695 Saka i. e. 1773 A.D. It has been got from a village in District Rajshahi. The scribe betrays often carelessness and commits awful misspellings.

(ख) This MS. is marked No 34 of 1881—82 and it belongs to the Library of the Deccan college, Poona. Professor V. S. Ghate of this college was extremely kind to the editor in lending him the copy when the latter approached him with his prayer and for this favour the editor shall ever be grateful to him. Its contents are the न्यास १।१, १।२, १।३, १।४, ४।१, ४।२ ( with some omissions in the middle), ४।३, ४।४, ५।१, ५।२, ५।३ & ५।४. Further accounts of this MS. will be supplied in the Introduction. It was copied in

दधिँ मधुँ इति । अणोऽप्रगृह्यस्यानुनासिक ( ८।४।५७ ) इति । अत हि वावसान ( ८।४।५६ ) इत्यतोऽवसानग्रहणमनुवर्त्तते ।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां प्रथमाध्यायस्य चतुर्थः
पादः समाप्तः ॥ १ । ४ ॥
समाप्तश्चायं प्रथमाध्याय इति ॥ १ ॥

---

संवत् १६८२-८४ वर्षेषु i. e. 1625-27 A D. We have called it the पुनापुस्तक or the Deccan MS.. It is in the Debanagar characters.

(ग) The contents of this MS. are the न्यास १।२, १।३, १।४, २।१, २।२, २।३ & २।४. At the end of २।४ is the stanza.—

वागीशाद्यप्रणतचरणश्रीलविश्वेश्वरोमा
पादाम्भोजद्वयनतियुतश्रीलदेवेन्द्रनामा ।
पुस्तीमेतामलिखदद्दनि चौणीसूनोः शकाब्दे
वह्निचणीजलधिधरणीसंख्यकेऽतिप्रमोदात् ॥

Which gives its date 1713 Saka i. e. 1791 A.D. This MS. was kindly lent to the editor by Pundit Girish Chandra BedantaBhushon of the Rajshahi H. K. Sanskrit College, for which he is immensely thankful to the Pundit. It is a tolerably fair copy.

(घ) This MS. belongs to the Rajshahi Government College Library and its contents are the न्यास १।४, २।१, २।२, २।३, ३।१ ( incomplete ), ७।२ & ८।१ ( also.incomplete ). A good copy.

(ङ) Its contents are १।४ न्यास only. It comes from a village Halsa in Rajshahi from the house of Pundit Kalisarana Smrititirtha. It is also a good copy.

The MSS. (ग), (घ) & (ङ) are all in Bengali characters

गौड़ग्रन्थमाला ।
श्रीमत्कुमारशरत्कुमाररायेण प्रवर्त्तिता
श्रीमदक्षयकुमारमैत्रेयेण पर्य्यवेक्षिता च ।

अथ

# काशिकाविवरणपञ्जिका ।

बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचिता ।
शास्त्रिश्रीश्रीशचन्द्रचक्रवर्त्तिभट्टाचार्य्येण संस्कृता ।

THE

# KASIKA VIVARANA PANJIKA

(THE NYASA.)

A COMMENTARY ON VAMANA-JAYADITYA'S KASIKA.

BY
JINENDRA BUDDHI.

EDITED
WITH OCCASIONAL NOTES.
BY
SRISH CHANDRA CHAKRAVARTI B. A.
SENIOR PROFESSOR OF SANSKRIT, RAJSHAHI COLLEGE,
RAJSHAHI, BENGAL.

Vol. I. Part 3.

PUBLISHED BY THE VARENDRA RESEARCH SOCIETY OF RAJSHAHI

1915.

Rs. 1/4 Foreign 1s. 8d.

अथ

# काशिकाविवरणपञ्जिका।

## द्वितीयाध्यायस्य

## प्रथमः पादः।

### १। समर्थः पदविधिः।

परिभाषेयमिति। परितो व्यापृता भाषा परिभाषा। तथाचोक्तं (A) परिभाषा पुनरेकदेशस्था सर्वं शास्त्रमभिज्वलयति यथा वेश्म प्रदीपः। कुतः पुनरेतद् विज्ञायते परिभाषेयं नाधिकार इति? पदविधिग्रहणाल्लिङ्गात्। उत्तरत्र हि सर्वः पराङ्गवद्भावादिरनुक्रंस्यमानः पदविधिरेव। तत्र यद्ययमधिकारः स्यात् पदविधिग्रहणमनर्थकं स्यात्। व्यावर्त्याभावात्। परिभाषायान्त्वस्यां परिभाषा ह्येकदेशस्थापि सर्वत्र शास्त्रे व्याप्रियत इत्यसति पदविधिग्रहणे वर्णविधावप्युपतिष्ठेत। ततो वर्णविधिनिरासार्थं क्रियमाणं पदविधिग्रहणमर्थवद्भवति। तस्मात् पदविधिग्रहणाल्लिङ्गात् परिभाषेयं नाधिकार इत्यवसीयते। यद्येवमिसुसोः सामर्थ्ये (८।३।४४) न च वाहाहैवयुक्ते (८।१।२४) इत्येवमादिषु योगेषु सामर्थ्यग्रहणं युक्तग्रहणञ्च किमर्थं क्रियते? यावता पदस्येति तत्रानुवर्त्तते। तत्र पदविधित्वादेवासामर्थ्ये न भविष्यति। सत्यमेतत्। यदर्थं तु क्रियते तत् तत्रैव प्रतिपादयिष्यामः। विधिशब्दोऽयमस्त्येव भावसाधनो विधानं विधिरिति। अस्ति च कर्मसाधनो विधीयत इति विधिः। तत्र भावसाधने विधिशब्द आश्रीयमाणे पदानामपरिनिष्पन्नानां परिनिष्पादनं पदविधिरिति पदेषु कर्मणि कृद्योगलक्षणा षष्ठी। तेषां विधिना सम्बन्धात्।

(A) अस्यैव (२।१।१) सूत्रस्य भाष्यं भाष्यकृतेति शेषः।

कर्मसाधने तु परिनिष्पन्नानां व्यवस्थितानामेव पदानां यत् समासादि कार्य्यं विधीयते स पदविधिः । तत्र पदेषु च शेषलक्षणा षष्ठी भवति । विधीयमानस्य कार्य्यस्य पदसम्बन्धित्वेनोपादानात् । तत्र यदीह भावसाधनो विधिशब्द आश्रीयेत तदा विभक्तिविधानमेव संगृहीतं स्यात् । समासपराङ्गवद्भाव-तद्धितवृत्त्यादिकं न संगृह्येत । नहि तत्र पदानामसतां विधानम् । किं तर्हि ? व्यवस्थितानामेव पदानां समासादि कार्य्यं विधीयते । इतरत्र तु विधिशब्द आश्रीयमाणे तेऽपि संगृहीता भवन्तीति मन्यमानः कर्मसाधनं विधिशब्दमाश्रित्याह विधीयत इति विधिरिति । ननु चात्रापि पक्षे विभक्तिविधानं न संगृह्येत । नहि कर्मणि (२।३।२) द्वितीयेत्येवमादिशास्त्रेण व्यवस्थितानां पदानां किञ्चित् कार्य्यं विधीयते । अपि तु पदान्येव विधीयन्ते । यदि न संगृहीतं स्यान् न नाम । न च तदसंग्रहे किञ्चिदनिष्ट मापद्यत इत्युत्तरत्र प्रतिपादयिष्यामः । समासादिरिति । आदिशब्देन तद्धितवृत्त्यादीनां ग्रहणम् । समर्थः शक्त इति । स्वकार्य्यनिर्वर्त्तनक्षम इत्यर्थः । स हि लोके समर्थ इत्युच्यते । स्वार्थप्रतिपादनमेव शब्दानां स्वकार्य्यम् । ये चेह लौकिका वैदिकाश्च शब्दा अधिकृता स्ते सर्वएव स्वकार्य्यप्रतिपादनं प्रति समर्थाः । तस्मात् समर्थ इति विशेषणोपादानसामर्थ्याद्विशेषः कश्चिदाश्रीयते । स च विशेषो वृत्त्यर्थं यद्वाक्यमुपादीयते । प्रत्यासत्ते स्तदर्थप्रतिपादने या शक्तता तल्लक्षणो विज्ञायत इत्याह विग्रहवाक्यार्थाभिधान इत्यादि । विशेषेण गृह्यते विज्ञायतेऽनेनेति विग्रहः । विग्रहश्च तद्वाक्यञ्चेति विग्रहवाक्यम् । अथवा विशेषेण ग्रहणं विग्रहः । विग्रहार्थं यद्वाक्यं तद् विग्रहवाक्यम् । शाकपार्थिवादित्वान् मध्यपदलोपी समासः । विग्रहवाक्यस्यार्थो विग्रहवाक्यार्थः । तदभिधाने तत्प्रत्यायने यः शक्तः स समर्थो वेदितव्यः । यथा राजपुरुष इत्ययं समासः । एतदर्थं यद्वाक्यं राज्ञः पुरुष इति तस्य योऽर्थ स्तदभिधाने राजपुरुष इत्ययं शब्दः शक्तः । ततोऽपि तदर्थस्य प्रतीतेः । स पुनरर्थः संसर्गः । भेदश्च । भेदसंसर्गौ वा । तत्र स्वविशेषस्य स्वामिविशेषेण स्वामिविशेषस्य च स्वविशेषेण यः सम्बन्धः स संसर्ग आख्यायते । स्वान्तरस्य स्वाम्यन्तरेभ्यः स्वाम्यन्तरस्य स्वान्तरेभ्यश्च व्यावृत्तिर्भेद आख्यायते । तत्र

संसर्गवादिनो मते संसर्ग एव शब्दार्थो व्यावृत्तिस्त्वर्थसंगृहीता। न ह्यव्यावर्त्यमानयोः स्वस्वामिनोः सम्बन्ध्यन्तरेभ्यः संसर्ग उपपद्यते। भेदवादिनस्तु व्यावृत्तिरेव शब्दार्थः। संसर्गोऽर्थसंगृहीतः। नहि व्यावर्त्यमानस्य सम्बन्ध्यन्तरेणासम्बद्धस्य स्वाम्यादे रवस्थानमस्ति। उभयवादिनस्तु उभय एव शब्दार्थः। यदि विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो विज्ञायत एवं सति समासतद्धितविषयमेव सामर्थ्यमिति पराङ्गवद्भावविभक्तिविधानयोरियं परिभाषा नोपतिष्ठेत। नहि तत्र विग्रहवाक्यार्थाभिधानमस्ति। यदि नोपतिष्ठेत न नाम। न च तदनुपस्थाने किञ्चिदनिष्टमापद्येत। तथाहि पराङ्गवद्भावे तावन् निमित्तग्रहणं दर्शयिष्यति भाष्यकारः। तत्र च निमित्तस्य निमित्तिना सामर्थ्यमस्त्येव मद्राणां राजन् परशुना वृश्चन्निति। विभक्तिविधानेऽपि या स्तावत् कारकविभक्तय स्ता येष्वेव कारकेषु कर्मादिषु विधीयन्ते तेषां क्रियया सम्बन्धोऽस्त्येव। उपपदविभक्तिष्वपि सहयुक्ते ऽप्रधान (२।३।१९) इत्येव मादिषु युक्तग्रहणादीनि सन्ति। तत्रापि सामर्थ्यमस्त्येव। तत्रैवं सम्बन्धे सति विभक्तय इष्यन्ते। नतु विग्रहवाक्यार्थाभिधानलक्षणसामर्थ्ये। एवं तावन्मुख्यार्थवृत्तिः समर्थशब्दो दर्शितः। इदानी मुपचरितवृत्तिं दर्शयितु माह अथवेत्यादि। समर्थानि पदान्याश्रयो यस्य स समर्थपदाश्रयः। तद्भावः समर्थपदाश्रयत्वम्। ततो हेतोः समासादिः समर्थ उच्यते। आश्रयस्य समर्थत्वादुपचारेणाश्रितोऽपि तथेति व्यपदिश्यते। कारणधर्मस्य कार्य्ये उपचारात्। यथा नड्वलोदकं पादरोगः। समर्थानामित्यनेन वाक्ये व्यपेक्षालक्षणं सामर्थ्यमाह। तथाहि राज्ञः पुरुष इत्यत्र वाक्ये राजा पुरुष मपेक्षते ममायमिति। पुरुषोऽपि राजान मपेक्षते ऽहमस्येति। संसृष्टार्थानामित्यनेन समासे पदाना मेकार्थीभावलक्षणं सामर्थ्यं दर्शयति। एकार्थीभावश्च पृथगवस्थितानां भिन्नार्थानां पदानां समासे साधारणार्थता नामावस्थाविशेषः। वाक्ये हि साधारणार्थता नास्ति। भिन्नार्थत्वात्। अतएव तत्र भेदनिबन्धना षष्ठ्युपजायते राज्ञः पुरुष इति। वृत्तौ तूभयपदव्यवच्छिन्नार्थाभिधानात् साधारणार्थता भवति। एतेनैतदुक्तं भवति समासे हि विशेषणं विशेष्य मनुप्रविशत्येकार्थीभवति विशेष्येण सह। वाक्ये हि

विशेषणं विशेष्यात् पृथगवतिष्ठत इति । यस्मिन्नसति वाक्ये राज्ञो गौश्चाश्वश्च पुरुषश्चेति भेदनिबन्धनसमुच्चयप्रतिपादनाय चशब्दः प्रयुज्यते । समासे तु यस्मिन् सति स निवर्त्तते राज्ञो गवाश्वपुरुषा इत्ययमैकार्थीभावो वेदितव्यः । पश्य देवदत्त कष्टं श्रितो विष्णुमित्रो गुरुकुलमिति । अत्र कष्टशब्दस्य पश्येत्यनेन सम्बन्धो नतु श्रितशब्देन । तेन सामर्थ्याभावात् समासो न भवति । ननुच श्रितादीनां श्रुतत्वात् तैरेव द्वितीयां विशेषयिष्यामः श्रितादीनां सम्बन्धिनी या द्वितीयेति । का च श्रितादीनां द्वितीया ? या श्रितादिनिमित्ता । नचेह श्रितादिनिमित्ता द्वितीया । किं तर्हि ? पश्यतिक्रियानिमित्ता । तत् किमेतन्निवृत्त्यर्थेन समर्थग्रहणेन ? नैतदस्ति । समर्थग्रहणे सति श्रितादीनां द्वितीयेति शक्यते व्यपदेष्टुम् । असति तु तस्मिन् द्वितीया मात्रं श्रितादिभिः समस्यत इति विज्ञायते । एवं सापेक्षस्यापि समासः स्यादेव महत् कष्टं श्रित इति । भवति ह्यत्र श्रितादिनिमित्ता द्वितीया । तस्मात् समर्थग्रहणं कर्त्तव्यम् । किं त्वं करिष्यसि शङ्कुलया खण्डो देवदत्त उपलेनेति । अत्रोपलेन तृतीयान्तेन कृतं खण्डनम् । अत स्तत्कृतत्व मस्तीति प्राप्नोति समासः । समर्थग्रहणान्न भवति । समर्थग्रहणे तु सत्ययमर्थो भवति यस्यैव तृतीयान्तस्य समास स्तेनैव यदि कृतं खण्डनमिति । न चेह तत्कृतं खण्डन मतो न भवति समासः । एव मन्यत्राप्यसामर्थ्यादसमासो वेदितव्यः । यणादेशो नित्यश्च तुग् भवतीति । द्वावप्येतौ वर्णविधी । तेनासामर्थ्येऽपि भवतः । नित्यश्च तुग् भवति दीर्घादित्यनेन (६।१।७५) । यस्तु पदान्ता (६।१।७६) द्वेत्यनेन विकल्पित स्तुग् विधीयते स पदविधिरतोऽसामर्थ्ये न भवति । अन्ये तु यणादेशोऽनित्यश्च तुग् भवतीत्यकारप्रश्लेषं वर्णयन्ति । एवञ्चाहुः—पदान्ताद्वेत्यनेन (६।१।७६) विकल्पितस्तुग् भवतीति । पदान्ताद्वेत्यत्र (६।१।७६) ह्यन्तग्रहणस्यैतदेव प्रयोजनं पदान्तभक्तस्तुगागमो यथा स्यात् । पदभक्तो मा भूदिति । तेन विकल्पितो यस्तुग् विधीयते स पदविधिर्न भवति । तेनासामर्थ्येऽपि भवति ।

## २ । सुबामन्त्रिते पराङ्गवत् स्वरे ।

पराङ्गवदिति । अत्राङ्गशब्दोऽवयववचनः । परस्याङ्गवत् परैकदेशवद्भवति ।

तद्ग्रहणेन गृह्यत इत्यर्थः। एवं तादात्म्यातिदेशोऽयं विज्ञायत इत्याह तादात्म्यातिदेशोऽयमिति। तादात्म्यं तत्स्वभावत्वम्। सुबन्तमित्यादिना तमेव तादात्म्यातिदेशं स्पष्टीकरोति। सुबन्तमामन्त्रितमनुप्रविशतीति। तदान्तर्भवतीत्यर्थः। कुण्डेनाटन्निति। अत्र कुण्डशब्दोकार आमन्त्रितस्वरः। एवमन्यत्रापि ससुप्कस्यामन्त्रितस्य स्वरो वेदितव्यः। पीड्ये पीड्यमानेति। हे पीड्यमान त्वदीयया पीड़याहं पीड्ये बाध्येऽहमित्यर्थः। पीड़ अवगाहने। चुरादिणिच्। उभयत्र कर्मण्यात्मनेपदम्। एकत्रोत्तमपुरुषैकवचनमिट्। अन्यत्र शानच्। सार्वधातुके यक्। णिलोपः। तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोरि (६।१।१८६) तीटोऽनुदात्तत्वम्। यकः प्रत्ययस्वरेणाद्युदात्तत्वम्। एकादेश उदात्तेनोदात्त (८।२।५) इत्येकार उदात्तः। पीड्यमानेत्यस्य तु पीड्य इत्यस्मात् पदादुत्तरस्यामन्त्रितस्य चेति (८।१।१९) निघातः। गेहे गार्ग्य इति। गेहशब्द उञ्छादिपाठादन्तोदात्तः। सप्तम्येकादेशः पूर्ववदुदात्तः। गार्ग्य इति ञित्स्वरेणाद्युदात्तः। पृथक् स्वर एवात्र भवति। देवदत्त कुण्डेनाटन्निति। यदि परग्रहणं न क्रियेत तदा देवदत्तशब्दं पूर्वमप्यामन्त्रितं प्रति सुबन्तस्यानुप्रवेशः स्यात्। ततश्च देवदत्तशब्दात् पदात् परस्याटन्नित्येतस्यामन्त्रितस्य चेति (८।१।१९) निघातः स्यात्। ननु च परग्रहणे क्रियमाणे कुण्डशब्दस्य पराङ्गवद्भावे सत्याद्युदात्तत्वे षाष्ठिके कृते देवदत्तशब्दात् पदात् परस्याटन्नित्येतस्य निघातेन भवितव्यमेव। नैतदस्ति। अपादादौ हि स निघातः। पादादित्वञ्चेह विवक्षितम्। तत्र च देवदत्ते त्यामन्त्रितस्वरेणा(६।१।१९८)द्युदात्तः। एवं कुण्डेनाटन्नित्यपि। आमन्त्रितनिघातोऽत्र न भवति। पादादित्वात्। यथा मृत्पिण्डीभूतः स्वरं लभेतेति। कथं नाम सुबन्तसमुदायो मृत्पिण्ड इवैकीभूत एकरूपतामिवापन्नः स्वरं लभेतेत्येवमर्थमङ्गग्रहणम्। किमर्थं पुनरेकीभूतस्य स्वरप्राप्तये यत्नः क्रियत इत्यत आह उभयोरित्यादि। यद्यङ्गग्रहणं न क्रियेत ततश्च कार्य्यातिदेशशास्त्रातिदेशव्यपदेशातिदेशानामन्यतमः स्यात्। तथाच सति यथा परस्य कार्य्यमाद्युदात्तत्वमामन्त्रितव्यपदेश आद्युदात्तशास्त्रं च तथा सुबन्तस्य पूर्वस्यापि स्यादिति। ततश्चोभयोरप्याद्युदात्तत्वं स्यात्। अङ्गग्रहणे तु सति तादात्म्याति-

देशोऽयं भवति । तेन मृत्पिण्डीभूतः सुबन्तसमुदाय आमन्त्रिताद्युदात्तरूपं स्वरं लभत इति न भवतूभयोराद्युदात्तत्वप्रसङ्गः । स्वाश्रयमपि कार्य्यं यथा स्यात् । आं कुण्डेनाटन्नित्यत्राटन्नितीत्यस्य पदात् परस्यामन्त्रितस्येति (८।१।१९) निघाते प्राप्ते न लुडित्यतो (८।१।२९) नेत्यनुवर्त्तमान आम एकान्तरमामन्त्रितमनन्तिक इत्यनेन (८।१।५५) विधीयमानो निघातप्रतिषेधोऽसति वत्करणे न प्राप्नोति । एकान्तरताया अभावात् । परमेव हि स्यात् सुबन्त मसति वत्करणे । न च तथाभूतेनैकान्तरतायुक्ता । वत्करणे तु सति भवति कदाचित् स्वाश्रयमप्यनङ्गत्वमितुत्पपद्यत एकान्तरता । तेन निघातप्रतिषेधः सिध्यति । तत्रायं स्वरविभागः । आमित्यस्य निपातस्वरेणाद्युदात्तत्वम् । कुण्डशब्दस्यापि पराङ्गवद्भावे सत्यामन्त्रितस्वरेणाद्युदात्तत्वम् । तथा निघातप्रतिषेधे सत्यटन्नितीत्यस्यापि षाष्ठिकेनाद्युदात्तेन भवितव्यम् । कूपे सिञ्चन्निति । अत्र पराङ्गवद्भावो नास्तीति पदादित्वं सकारस्य भवति । तेन सात्पदाद्योरिति ( ८।३।१११ ) षत्वप्रतिषेधः स्यात् । चर्म नमन्निति । अत्रापि पराङ्गवद्भावाभावात् समानपदस्थौ निमित्तनिमित्तिनौ न भवत इति समानपदाश्रयं णत्वं न भवति । सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्येत्यादि । किं पुनः कारणं समानाधिकरणस्य न प्राप्नोति यत इद मुपसंख्यानं क्रियत इत्याह अनन्तरत्वादिति । तस्मिन्निति निर्दिष्टे (१।१।६६) पूर्वस्येत्यत्र निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वाद् व्यवहिते न प्राप्नोतीत्युपसंख्यायते । तीक्ष्णया सूच्या सीव्यन्नित्यत्र सीव्यन्नित्येतस्मिन् परतस्तीक्ष्णयेत्यस्य व्यवहितस्यापि पराङ्गवद्भावादाद्युदात्तत्वं भवति । उच्चैरधीयानेति । उच्चैः शब्दस्य पराङ्गवद्भावाभावादामन्त्रितनिबन्धनमाद्युदात्तत्वं न भवति । तस्मिन्नसति तत्रान्तोदात्तत्वमेव भवति । स्वरादिष्वन्तोदात्तस्य पाठात् । तथाहि तत्रैव (१।१।३७) सनुतर उच्चैस् नीचैरित्येवमादीनि पृथक्पर्य्यन्तान्युपदिश्यैते सनुतरप्रभृतयोऽन्तोदात्ताः पठ्यन्त इत्युक्तम् । अधीयानेत्यस्य यदा पादादित्वं विवक्ष्यते तदाद्युदात्तत्वमन्यत्रामन्त्रितस्य चेति (८।१।१९) निघातः ।

## ३ । प्राक् कडारात् समासः ।

प्राग्वदिति । अत्र समाससंज्ञायां सत्यां कस्यचित्समासान्ते (१।२।४६)

त्येवमादिकार्यं भवति। अथ किमर्थं प्राग्वचनम्? यावता पञ्चमीनिर्देशादेव प्रागित्यस्याध्याहारो भविष्यति। न च परागित्ययमपि दिक्छब्दोऽस्ति। अतस्तस्याप्यध्याहारः स्यादित्याशङ्कनीयम्। तदध्याहारे कडारसंशब्दनात् परे येऽनुक्रंस्यन्ते तेषां समाससंज्ञा स्यात्। तथाच कडारसंशब्दनादनन्तर-मेव समासाधिकारं कुर्यात्। इह तु कृतः। तस्मादिह करणसामर्थ्यात् समासाधिकारस्य प्रागित्यस्याध्याहारो भविष्यति। ततो नार्थः प्राग्वचने-नेत्याह प्राग्वचनमित्यादि। उत्तरत्राऽव्ययीभावादिसंज्ञाभिः सह समास-संज्ञायाः समावेशो यथा स्यादित्येवमर्थं प्राग्वचनम्। असति तु तस्मिं स्ताभिरनवकाशाभिरियं संज्ञा बाध्येत। अस्यास्तु समाससंज्ञायाः सह (२।१।४) सुपेत्यत्र सहेति योगविभागेन यः समासः क्रियते सोऽवकाशः स्यात्। अनुप्रावर्षत्। अनुव्यचलदिति। तिङन्तेनात्र समासः। असत्यपि सावकाशत्व एकसंज्ञाधिकारे वचनप्रामाण्यात् पर्य्यायेण वृत्तिः स्यात्। नतु समावेशः। साक्षात् सूत्रेणोपात्ते तु प्राग्वचने सति भवति समावेशः। कथम्? एवं हि सम्बन्धः क्रियते। कडारात् प्राग् यावन्तो व्यवस्थिताः सर्वे ते समाससंज्ञका भवन्ति। समाससंज्ञकाः सन्तोऽव्ययीभावादिसंज्ञां लभन्त इति। तेन निमित्तमेव समाससंज्ञाऽव्ययीभावादिसंज्ञानाम्। न च निमित्तिना निमित्तं विहन्यते। अन्यथा तस्य निमित्तत्वमेव न स्यादिति युक्तः सूत्रोपात्तेन प्राग्वचनेन समावेशः। अध्याहृते तु तस्मिन् कडारसंशब्दनात् प्राग् यावन्तो व्यवस्थिताः सर्वे ते समाससंज्ञका भवन्तीत्येषोऽर्थो लभ्यते। न तु समाससंज्ञकाः सन्तो-ऽव्ययीभावादिसंज्ञका इत्येषोऽपि। साक्षात् सूत्रोपात्ते तु तस्मिन्नेषोऽपि लभ्यते। अन्यथा तस्य सूत्रे साक्षादुपादानमनर्थकं स्यात्।

### ४। सह सुपा।

सहग्रहणं योगविभागार्थमिति। ननु चासति तस्मिन्नेकैकस्य संज्ञा स्यात्। ततश्च ऋक्पाद इत्यत्र ऋक्पूरब्धूः पथामानक्षे (५।४।७४) इत्यत्राकारः समासान्तः स्यात्। इह च राजाश्व इत्यत्र समासस्येति (६।१।२२३) द्वौ स्वरौ स्याताम्। तस्मात् सहभूतयो (B) रेव समाससंज्ञा यथा स्यादेकैकस्य मा

(B) एकीभूतयोः पदयोः समाससंज्ञेति पुनापुस्तके पाठान्तरम्।

भूदित्येवमर्थं सहग्रहणं कस्मान्न विज्ञायते ? एवम्मन्यते । सुपेति तृतीयैव सहार्थं गमयति यथा वृद्धो ( १।२।६५ ) यूनेति । समास इति च महती संज्ञा क्रियते ऽन्वर्थसंज्ञा यथा विज्ञायेतेति । कथं नामान्वर्थसंज्ञा क्रियते ? समसनं समासः संक्षेप इत्यर्थः । संक्षेपश्चानेकवस्तुविषयः । तेनासत्यपि सहेत्यस्मिन् सहभूतयोरेव समाससंज्ञा भविष्यति । न प्रत्येकमिति । अनुव्यचलदिति । तिङन्तेनात्र समासः । अत्र तिङ्ङतिङ इति ( ८.१।२८ ) निघाते कृते समाससंज्ञायां सत्यां तन्निबन्धनमन्तोदात्तत्वं भवति ।

## ५ । अव्ययीभावः ।

यथावृद्धमित्यत्राव्ययीभावत्वे सत्यव्ययीभावश्चेति ( २।४।१८ ) नपुंसकत्वे नाव्ययीभावादतोऽम् (२।४।८३) त्वपञ्चम्या इत्येष विधिर्भवति । अन्वर्थसंज्ञा चेयमिति । अनव्ययमव्ययं भवतीत्यव्ययीभावः । पूर्वपदार्थप्राधान्यमित्यादिना ऽन्वर्थसंज्ञायाः फलमाह । प्रायेण ह्यव्ययीभावे पूर्वपदमव्ययं परपदमनव्ययं समुदायो नाव्ययम् । स यदि पूर्वपदवशेन तस्य पूर्वपदस्य यो धर्मोऽव्ययत्वं तत् प्रतिपद्यते ततोऽनव्ययस्वभावः सन्नव्ययस्वभावो भवति । एवञ्च पूर्वपद-वशेन तद्धर्म्मं प्रतिपद्यते यदि पूर्वपदं प्रधानं भवति । नान्यथा । प्रधानवशेन हि वस्तुनः स्वधर्म्मपरित्यागेन धर्मान्तरापत्तिर्युक्ता । तथाहि प्रधाने राजनि हसति तद्भृत्या अपि हसन्ति । तस्मिन् रुदति तेऽपि रुदन्ति । नत्वप्रधाने चेटीपुत्रादौ । तदेवमन्वर्थसंज्ञेयं भवन्ती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति । तेन यदा पूर्वपदार्थस्य प्राधान्यं भवति तदाव्ययीभावो भवति । नान्यथेत्युक्तम्भवति ।

## ६ । अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रति शब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्त-वचनेषु ।

स्त्रीष्वधिकृत्य कथा प्रवर्त्तते ऽधिस्त्रीति । अनभिहित इति सूत्रे (२।३।१) तिङ्कृत्तद्धितसमासैः परिसंख्यान(२।३।१, वा) मिति परिगणनं कृतम् (C) ।

---

(C) वार्त्तिककारेणेति शेषः ।

तेनाधिशब्देन द्योतितेऽपि सप्तम्यर्थे स्त्रीशब्दात् सप्तमी भवति। तेन तदन्त एव समस्यते। अधिशब्दस्तु प्रथमान्तः। अव्ययीभावश्चेति (२।४।१८) नपुंसकत्वम्। ह्रस्वो नपुंसके इति ह्रस्वः (१।२।४७)। विभक्तिशब्देनेह कारकमुच्यते विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा। तच्चेहाधिकरणं विवक्षितमित्याह सप्तम्यर्थेऽव्ययमिति। उपकुम्भमिति। समीपार्थेनोपशब्देनोपजनिते व्यतिरेके कुम्भशब्दात् षष्ठी भवतीति षष्ठ्यन्त एव समस्यते। सुमद्रमिति। यदा मद्रैर्विशिष्यमाणत्वात् समृद्धेः प्राधान्यं भवति तदायं समासः। मद्राणामाधिक्येन ऋद्धिर्वर्त्तत इत्यर्थः। यदा तु मद्राः समृद्ध्या विशिष्यमाणाः प्रधानभावमनुभवन्ति तदा कुगतिप्रादय ( २।२।१८ ) इति तत्पुरुषो भवति सुमद्रा इति। समृद्धिमन्तो मद्रा इत्यर्थः। दुर्गवदिकमिति। गवदिकानामृद्धिविगमो वर्त्तत इत्यर्थः। ननु चार्थाभाव इत्यनेनैव तत्सिद्धम्। तथाह्यर्थाभावो वस्त्वभावः। ऋद्धिविगमोऽपि वस्त्वभावो भवत्येव। तत् कोऽत्र विशेषो येनार्थाभावादृद्धिविगमस्य पृथगभिधानं क्रियते? अयमस्ति विशेषः। उत्तरपदार्थाभावो हि द्रव्याभावो यथा निर्मक्षिकमिति। मक्षिकाणामभाव उच्यते। नतु दुर्गवदिकमित्यत्र गवदिकानामभावः। किं तर्हि? तदीयाया ऋद्धेर्विगमः। अर्थाभाव इति। अथार्थग्रहणं किमर्थम्? धर्माभावे प्रसज्यप्रतिषेधो मा भूद् यथा न भवति ब्राह्मणोऽब्राह्मण इति। ब्राह्मणत्वं धर्मोऽत्र प्रतिषिध्यते। नतु वस्त्वभावः। किञ्चेतरेतराभावे च मा भूद्। गौरश्वो न भवतीति। अत्राप्यर्थान्तरत्वं प्रतिषिध्यते। नतु वस्त्वभावः। अत्ययोऽभूतत्वमिति। अस्यैव पर्य्यायोऽतिक्रमः। अतिक्रम इत्युत्पत्त्यभावः प्रध्वंसाभाव इत्यर्थः। अर्थाभावस्तु क्वचिद्देशे सर्व्वदैव वस्तुनोऽभावो नतूत्पन्नस्य पश्चादभाव इत्यत्ययोऽर्थाभावाद् भिद्यते। उपभोगस्येत्यादिनाऽर्थाभावाद् भेदं दर्शयति। अर्थाभावो हि क्वचिद्देशे कालत्रयेऽप्यभावः। असम्प्रति पुनरुपभोगस्य यो वर्त्तमानः कालस्तस्यैव प्रतिषेध इति भिद्यते ऽसंप्रत्यर्थाभावात्। अतितैसृकमिति। तिसृका नाम ग्रामः। तत्र (४।३।५३) भवस्तत (४।३।७४) आगत इति वाण्। तैसृकम्। न तैसृकस्य वर्त्तमानः काल उपभोगस्येत्यर्थेऽतितैसृकमिति भवति। अनुरूपमित्यत्र योग्यतायामनु-

शब्दः । योग्यं रूपं वहतीत्यर्थः । प्रत्यर्थमिति । प्रतिशब्दोऽव्ययमत्र वीप्सायाम् । अर्थमर्थम्प्रति प्रत्यर्थम् । ननु चात्र नित्यसमासत्वाद् वाक्येन न भवितव्यम् ? नैतदस्ति । प्रतिशब्दस्य वीप्सायामर्थे कर्मप्रवचनीयसंज्ञा विहिता तद्योगे द्वितीया यथा स्यादितेऽवमर्थम् । तस्याश्च वाक्य एव प्रयोगो नान्यत्रेति तेन सत्यपि नित्यसमासत्वे वाक्यमपि भवति । यथाशक्तीति । पदार्थानतिवृत्तौ यथाशब्दः । पदमत्र शक्तिशब्दस्तस्यार्थः शक्तिरेव । तस्या अनतिवृत्तिरनतिक्रमः । यथाशक्ति करोतीति शक्त्यनतिक्रमेण करोतीत्यर्थः । ज्येष्ठानुपूर्व्येणेति । ज्येष्ठानुक्रमेणेत्यर्थः । सचक्रमिति । अव्ययीभावे (६।३।८१) चाकाल इति सहशब्दस्य सभावः । एवं सकिखोत्यादावपि सभावो वेदितव्यः । गुणभूतेऽपीत्यादि । यदि सादृश्य इति नोच्येत तदा पूर्वपदार्थप्रधानोऽव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात् प्रधानं भवति तदैव स्यात् । सादृश्यं किख्याः सकिखीति गुणभूते तु न स्यात् । अस्माद् वचनाद् भवति । सदृशः किख्येति । सादृश्यवतः प्राधान्यप्रदर्शनेन सादृश्यस्य गुणभावं प्रदर्शयितुं सदृशः किख्या इत्युक्तम् । सादृश्यप्राधान्ये विवक्षिते हि सादृश्यमिति भावप्रत्ययेन युक्तो निर्देशः स्यात् । सकिखीति । पूर्ववद् ह्रस्वः । ननु च सम्पत्तिः समृद्धिरेव । तत् कथं पृथगुच्यत इत्यत आह सम्पत्तिरनुरूपम्मित्यादि । सब्रह्म बाभ्रवाणामिति । तेषा मनुरूपमात्मभाव इत्यर्थः । अधिकार्थवचनेनेति । तृणानामभ्यवहारोऽधिकार्थस्तद्वचनेन । न किञ्चिदित्यादिना वाक्येनाधिकार्थतां दर्शयति । यो हि तृणान्यभ्यवहरति स कथमन्यदभ्यवहार्य्यं परित्यजति ? ननु चान्तशब्दः परिसमाप्तौ वर्त्तते । तत्र च साकल्यमस्त्येव । तत् कथमन्तवचनं साकल्यात् पृथगुच्यत इत्यत आह अन्तशब्द इत्यादि । यावतोऽध्ययनस्य परिग्रह—एतावन्मयाध्येतव्यमिति—तदपेक्षया या समाप्तिः सोऽन्तः । स चासाकल्येऽप्यध्ययनस्य भवतीति साकल्यात् पृथगुच्यते । साग्न्यधीत इति । अग्निपर्य्यन्तमधीत इत्यर्थः । अग्न्यर्थो ग्रन्थस्तादर्थ्यादग्निशब्देनोच्यते । यावतोऽध्ययनस्य परिग्रहस्तस्याग्निरन्तः । नतु ततः परेणाध्ययनमेव नास्तीति । तत्तु नाधीयत इत्यसाकल्यमत्रेत्याह इयमित्यादि । सुबोधम् ।

## ७। यथाऽसादृश्ये।

ये ये वृद्धा इत्यनेन यथावृद्धमित्यत्र यथाशब्दो वीप्सायां वर्त्तत इत्याचष्टे यथा देवदत्तस्तथा यज्ञदत्त इति। देवदत्तसदृशो यज्ञदत्त इत्यर्थः। ननु च यथाशब्दोऽयमुपमानं यज्ञदत्त इत्युपमेयमपेक्षते। तत्र सापेक्षमसमर्थं भवतीत्यसामर्थ्यादेव समासो न भविष्यति। तत् किमर्थमसादृश्य इति प्रतिषेधेन? नैतदस्ति। नह्यत्र यथाशब्द उपमानम्। किं तर्हि? यथा देवदत्त इत्येष समुदायः। तस्मात् तस्यैवोपमेयापेक्षयाऽसामर्थ्यम्। नतु यथाशब्दस्य।

## ८। यावदवधारणे।

इयत्तापरिच्छेद इति। इयतो भाव इयत्ता परिमाणं तस्याः परिच्छेदो निश्चयः। यावन्ति पात्राणीत्यादिना तमेवेयत्तापरिच्छेदं विस्पष्टीकरोति। नावधारयामीत्यादिनेयत्तापरिच्छेदाभावं दर्शयति।

## ९। सुप् प्रतिना मात्रार्थे।

वृक्षं प्रतीत्यत्र लक्षणे प्रतिशब्दो वर्त्तते। न मात्रार्थे। ननु परं सुब्ग्रहणं किमर्थम्? यावता सुबामन्त्रित (२।१।२) इत्यतः सुब्ग्रहणमनुवर्त्तिष्यत इत्यत आह सुब्ग्रहणमित्यादि। सुब्ग्रहणं पूर्वं ह्यव्ययेन सम्बद्धम्। अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मादव्ययनिवृत्त्यर्थमिदमन्यत् सुब्ग्रहणं क्रियते।

## १०। अक्षशलाकासंख्याः परिणा।

कितवव्यवहार इत्यादि। कथं पुनः कितवव्यवहार इष्यमाणोऽपि तत्र लभ्यते? स्वभावत एव समासस्य तत्र वृत्तेः। नह्यर्था अतिदिश्यन्ते। लौकिकत्वात् तेषाम्। तस्येत्यादि। तस्य पातयितुस्तस्य च विघात इत्यनेन सम्बन्धः। विघातः पराजयः। एतस्येति। अक्षादेरेव प्रत्यवमर्शः। अभेदविवक्षायामेकवचनम्। एतस्यान्यथा पात इत्यनेन सम्बन्धः। अन्यथेति। जये य उक्तः पातप्रकारस्तदपेक्षयाऽन्यथात्वं विवक्षितम्। पञ्चस्वेकरूपासु

जय एव भवतीति पञ्च परीति समासो न भवतीति भावः । जये हि यदक्षादीनां वृत्तं तदपेक्षयान्यथापातत्वे सति समासेन भवितव्यम् । न च पञ्चस्वेकरूपास्वन्यथात्वं सम्भवति । अतएव जयस्तदा भवति यदा पञ्चाप्येकरूपा भवन्ति । उत्ताना अवाञ्चो वा । एतेन प्रकारेण परेण (D) चतुष्परीत्यत्रोपपत्तिर्दर्शिता । परेणेति । अतिशयेनेत्यर्थः । अक्षादयस्तृतीयान्ता इत्यादि । अन्यथा वृत्तावयं समास इष्यते । तत्र चाक्षादीनामन्यथावृत्तौ कर्तृत्वं करणत्वं वा भवति । अतस्तृतीयया भवितव्यमिति तदन्ता एव समस्यन्ते । पूर्वोक्तस्येति । अक्षादेरित्यर्थः । कुत एतत् ? अक्षादयस्तृतीयान्ता इति पूर्वमक्षादेरेवोक्तत्वात् । अभेदविवक्षायामेकवचनम् । षष्ठी चेयं शेषविवक्षायां वृत्तशब्दापेक्षया सम्बन्धलक्षणा । वृत्तशब्दस्त्वध्याहर्त्तव्यः । यथा न तदिति । अक्षादेः पूर्वोक्तस्य यथा वृत्तमभूत् पूर्वं जये तथा वृत्तं यदि संप्रति न भवत्येवं समासो भवति । नान्यथा । पूर्ववृत्तस्यान्यथात्वद्योतने समासोऽयम् । तच्चैकेनापि क्रियते । ततो द्विवचनाद्यपेक्षया निष्प्रयोजनमित्याह एकत्वेऽक्षशलाकयोरिति । अक्षशलाकयोरेकवचनान्तयोरित्यर्थः । ततोऽयं न्यायसिद्ध एवार्थः श्लोकेन संगृहीतः । अथवोत्तरं विभाषाग्रहणमिहापि सिंहावलोकितन्यायेन सम्बध्यते । सा च व्यवस्थितविभाषा । तेन वचनसिद्धएवायमर्थो वेदितव्यः । अक्षादय इति किम् ? पाशकेनेदं न तथा वृत्तं यथा पूर्वं जये । परिणेति किम् ? सुबन्तमात्रेण सह समासो मा भूत् । कितवव्यवहार इति किम् ? अक्षेणेदं न तथा वृत्तं यथा पूर्वं शकटेन । एकत्व इति किम् ? अक्षाभ्यामक्षैर्वा न तथा वृत्तं यथा पूर्वं जये ।

## ११ । विभाषा ।

## १२ । अपपरिबहिरञ्चवः पञ्चम्या ।

ननु बहिःशब्दयोगे न केनचित् पञ्चमी विधीयते । तत् कथं तदन्तेन समास इत्याह बहिःशब्दयोग इत्यादि । यदेतत् पञ्चम्यन्तेन सह बहिःशब्दस्य समासविधानं तज्ज्ञापयति भवति हि बहिःशब्दयोगे पञ्चमीति । अथो-

(D) परमेणेति मुद्रितकाशिकायां पाठः । न्यासकारमते तु परेणेति । अतिशयेनेत्यस्यार्थः ।

पादानसामर्थ्याद् बहिःशब्दयोगे पञ्चमी न सम्भवतीत्यपञ्चम्यन्तेनैव सुबन्त-मात्रेण समास इत्येवं कस्मान्न विज्ञायते ? अशक्यमेतद् विज्ञातुम्। पञ्चमी-ग्रहणस्य वैयर्थ्यप्रसङ्गात्। तथाह्यपपरी वर्जन (१।४।८८) इत्येवमपपर्य्योः कर्म्म-प्रवचनीयसंज्ञायां सत्यां ताभ्यां योगे पञ्चम्यपाङ्परिभिरिति (२।३।१०) पञ्चम्यैव भवितव्यम्। नान्यया विभक्त्या। अञ्चुशब्देनापि योगे ऽन्यारादित्यादिना (२।३।२९) पञ्चम्यैव भवितव्यमित्यपार्थकं पञ्चमीग्रहणं स्यात्। ननु चाकर्म-प्रवचनीयौ यावपपरी तयोरपञ्चम्यन्तेन समासो मा भूदित्येवमर्थं पञ्चमीग्रहणं स्यात् परिगतोऽपगत इति ? नैतदस्ति। परत्वाद्धि तयोः कुगतिप्रादय (२।२।१८) इति तत्पुरुषेण भवितव्यम्। ननु च नाप्राप्ते ह्येतस्मिन्नय-मारभ्यमाणो बाधको भवति ? नैतदस्ति। कर्मप्रवचनीयौ यावपपरी तत्रावकाशः स्यात्। तत्र हि कर्मप्रवचनीयानां प्रतिषेधं वक्ष्यति। तस्माद् बहिःशब्दस्य पञ्चम्यन्तेनैव समासविधानम्। नान्येन। अन्यथा पञ्चमीग्रहण-मनर्थकं स्यात्। तस्मात् साधूक्तं बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकमिति।

## १३। आङ् मर्य्यादाभिविध्योः।

अथ मर्य्यादाभिविधिग्रहणं किमर्थम् ? यावता पञ्चमीत्यनुवर्त्तते। आङा च कर्मप्रवचनीयेनैव योगे पञ्चमी विधीयते। एतयोरेवार्थयोराङ्-मर्य्यादावचन इत्याङः कर्मप्रवचनीयसंज्ञा। नान्यत्र। तत्रान्तरेणापि मर्य्यादाभिविधिग्रहणं तयोरेवार्थयोः समासो भविष्यति। नान्यत्रेति। सत्यमेतत्। तथापि मन्दधियां सुखावबोधनार्थम् मर्य्यादाभिविधिग्रहणम्।

## १४। लक्षणेनाभिप्रती आभिमुख्ये।

अभ्यग्नि प्रत्यग्नीति। अग्निमभि। अग्निं प्रतीति विग्रहः। कर्म्मप्रवचनीययुक्ते द्वितीया (२।३।८)। कर्म्मप्रवचनीयसंज्ञा त्वेकस्याभिरभाग (१।४।९१) इत्यनेन। अपरस्य लक्षणेत्थम्भूताख्यानेत्यादिना (१।४।९०)। अत्र चाग्नि र्लक्षणम्। तेन शलभपातो लक्ष्यते। अत्राभिमुख्ये चाभिप्रती वर्त्तेते। तथाह्यग्नेरभिमुखमेव शलभाः पतन्ति नापि पार्श्वतो नापि पृष्ठत इत्यर्थोऽवगम्यते। स्रुघ्नं प्रतिगत

इति । स्रुघ्नान् मथुरां प्रस्थितो दिङ्मोहात् स्रुघ्न मेव प्रतिनिवृत्त इति नात्र स्रुघ्नो लक्षणं । यदुद्दिश्य हि गच्छति तल्लक्षणं भवति । यदा तु दिङ् मोहाद्यत एव प्रस्थित स्तमेव प्रतिगच्छति तदा तदप्रतीतं कथं लक्षणम् भवति ? स्रुघ्नमिति । तथा युक्तञ्चानीप्सितमिति (१।४।५०) कर्मसंज्ञायां सत्यां कर्मणि द्वितीया । येनाग्निस्तेनागत इति भवत्यत्राग्नि र्लक्षण माभिमुख्य-मप्यस्ति । अभिप्रती तु न स्त इति । तेन येनतेनशब्दाभ्यां सह समासो न भवति । अभ्यङ्का गावः प्रत्यङ्का गाव इति । अभिनवः प्रतिनवो ऽङ्क आसामिति बहुव्रीहिः । अभिशब्दोऽत्राभिनवार्थे वर्त्तते । प्रतिशब्दश्च प्रतिनवार्थे । अङ्कोऽत्र भवति गवां लक्षणम् । आभिमुख्यन्तु नास्ति । ननु चात्र परत्वाद् बहुव्रीहिणा भवितव्यम् ? अतः स बाधको भविष्यति किमाभिमुख्यग्रहणेन ? नैवम् । असत्याभिमुख्यग्रहणे ऽशेषत्वात् कुतो बहुव्रीहि र्भवति ? अथवैतज् ज्ञापयति बहुव्रीहिरव्ययीभावेन बाध्यत इति । तेन द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणमिति सिद्धभवति । अन्यथाहि स्वपदार्थे चरितार्थोऽव्ययीभावो द्विमुनि व्याकरणमित्यत्रान्यपदार्थे परत्वाद् बहुव्रीहिणा बाध्येत ।

## १५ । अनु र्यत्समया ।

यस्य समया यत्समयेति षष्ठीसमासोऽयम् । ननु च समयाशब्दयोगेऽभितः परितः समयानिकषेत्याद्युपसंख्यानाद् (२।३।२, वा) द्वितीयया भवितव्यम् । अतः षष्ठ्येव तावन्न सम्भवति । कुतः पुनस्तस्याः समासः ? अथापि कथञ्चित् षष्ठी स्यात् तथापि समयाशब्दस्याव्ययत्वात् पूरणगुणेत्यादिना (२ २ ११) षष्ठीसमासप्रतिषेधेन भवितव्यम् । नैष दोषः । योगग्रहणादिह समयाशब्दार्थेन योगे द्वितीया विज्ञायते । स चार्थो मुख्य एव गृह्यते । न गौणः । स पुनर्मुख्योऽर्थः समीपम् । नचेह समयाशब्दस्य मुख्यो-ऽर्थोऽस्ति । किन्तर्हि ? गौणोऽर्थः । अनुरेव समयाशब्देनोच्यते । तस्मा-च्छेषलक्षणा षष्ठ्येव न्याय्या । अतएव द्रव्यवाचित्वादव्ययसंज्ञाया अभावात् पूरणगुणेति (२।२।११) प्रतिषेधो नोपपद्यते । अनुर्यत्समयेति । एतेनानु-

शब्दार्थे समयाशब्दो वर्त्तत इति दर्शयति। ननुच समयाशब्दस्य समीप मर्थ स्तत् कथमनुशब्दः समयाशब्देनोच्यत इत्याह यस्य समीपवाचीति। एतेन समयाशब्दार्थाभिधायित्वादनुशब्दः समयाशब्देनोपचाराद्व्यपदिष्ट इत्याचष्टे। भवत्युपचारेण हि तदर्थाभिधायिनि तद्व्यपदेशो यथा सीताहरणं काव्य मिति। तेनेत्यनेन यस्यानुशब्दः समयावाची स परामृश्यते। ननुच सोऽर्थ स्तत् कुत स्तेन समासः? अर्थे कार्य्यासम्भवात् तद्वाचिनि शब्दे कार्य्यं विज्ञायते। तथाच तेनेत्यस्य तद्वाचिना शब्देनेत्ययमर्थोऽत्र-गम्यते। अनुवनमिति। तेनेत्यनेन यत् षष्ठ्यन्तं तेन वनशब्देन समासः। वनस्यान्विति समीपसमीपिसम्बन्धे षष्ठ्येव युक्ता। वनं समयेति पूर्वोक्तेनोपसंख्यानेन वनशब्दाद् द्वितीया। वृक्षमनु विद्योतते विद्युदिति। अत्र कर्मप्रवचनीयलक्षणा द्वितीया। अनुशब्दोऽत्र लक्षणे वर्त्तते। न सामीप्ये।

## १६। यस्य चायामः।

अत्राप्युपचारेणायामवाचित्वादनुरेवायामशब्देनोक्तः। अनुगङ्गं वाराणसीति। यद्यपि गङ्गावाराणस्यावुभे अप्यायामवत्यौ तथाप्यायामवत्तया गङ्गायाः प्रसिद्धत्वाद् गङ्गैवात्र लक्षणम्। न वाराणसी। प्रसिद्धं हि लक्षणं भवति। नाप्रसिद्धम्। तस्माद् गङ्गयैवात्र समासो भवति। न वाराणस्या। यमुनायामेन मथुरायामो लक्ष्यत इति। यमुनया तद्वत्या लक्षणभूतयेति वेदितव्यम्। यस्माद् यस्यायामवाच्यनुशब्द स्तेन लक्षणभूतेन सुबन्तेन समस्यते। यमुनायाश्चायामवाच्यनुशब्दो न यमुनायामस्य। नह्यायामस्यापर आयामोऽस्ति तस्माद् यमुनायामेनेति हेतावियं तृतीया। यमुनायामेन हेतुना तद्वत्या यमुनया लक्षणभूतया करणभावमापन्नया वा मथुरायामो लक्ष्यत इत्यय मर्थो वेदितव्यः।

## १७। तिष्ठद्गुप्रभृतीनि च।

तिष्ठद्गुप्रभृतीनां गणपाठादेव कृतसाधुत्वाना मिह प्रकरणे संकीर्त्तन मव्ययीभावसंज्ञार्थम्। नतु सुबन्तेन समासार्थम्। अतएवाह समुदाया एव निपात्यन्त इति। तथाभूतानां पाठ एवैषां निपातनम्। अव्ययीभाव

संज्ञानि भवन्तीति । अनेन संज्ञामात्रं विधीयते । नत्वेषां सुबन्तेन समास इति दर्शयति । तिष्ठद्गु वहद्गु इति । पूर्वपदस्य शत्रादेशो निपात्यते । गोस्त्रियोरुपसर्जनस्येति ( १।२।४८ ) ह्रस्वः । तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु कालः । वहन्ति गावो यस्मिन् काले स वहद्गु कालः । चकारोऽवधारणार्थ इति । असति तस्मिन् परमतिष्ठद्ग्विति सन्महदित्यादिना ( २।१।६१ ) परमशब्देन समासः स्यात् । अवधारणार्थे तु तस्मिं स्तिष्ठद्गुप्रभृतीनीत्येवम्भूतान्येवावतिष्ठन्ते । आयतीगव मिति । पुंवद्भावाभावः समासान्तश्च भवति । आयत्यो गावो यस्मिन् काले स आयतीगवम् । खलेयवम् । खलेबुसमिति । सप्तम्या अलुग् निपात्यते । लूयमानयवमिति । शानज् निपात्यते । तथा पूयमानयव मित्यत्रापि । एते कालशब्दा इति । तिष्ठद्गुप्रभृतयः संह्रियमाणबुसपर्य्यन्ताः । समभूमि समपदातीति । समत्वं भूमेः समत्वं पदाते रिति पूर्वपदार्थप्राधान्ये ऽव्ययीभावः । उत्तरपदार्थप्राधान्यविवक्षायान्तु समपदातिः समभूमि रिति विशेषणसमास स्तत्पुरुषो भवति । अन्ये मकारान्तं समशब्दं पठन्ति । सम्भूमि सम्पदातीति । सुषमं विषमं दुःषम मपरसममिति समशब्देनेति । सुषमादयश्चैते पूर्वपदार्थप्राधान्ये समासाः । अत्र शोभनत्वं समस्येत्येवमादि वाक्यं द्रष्टव्यम् । उत्तरपदार्थप्राधान्ये तु प्रादिसमासो विशेषणसमासश्च यथायोगं कर्त्तव्यः । आयतीसममिति । समाशब्दः संवत्सरवाची । तेन समासः । आयती समा आयतीसमम् । एवं पापा समा पापसमम् । पुण्या समा पुण्यसमम् । अन्ये तु तृतीयासमासं वर्णयन्ति । आयत्या समा आयतीसमम् । एवमन्यत्रापि । प्रगतत्वमह्नः प्राह्णम् । अयमपि पूर्वपदार्थप्रधानः । उत्तर पदार्थप्राधान्ये तु तत्पुरुष एव भवति । प्राह्णे कल्याणनामानावेतौ तिष्य पुनर्वसू इति । एवं प्ररथं प्रदक्षिणं प्रमृग मपरदक्षिणं संप्रत्यसम्प्रति । इच् ( ५।४।१२७ ) कर्मव्यतीहार इतीचोऽव्ययीभावत्वे प्रयोजन मव्ययसंज्ञा मपुंसकत्वञ्च । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं वृत्तमिति । तत्र तेनेदमिति सरूप इति ( २।२।२७ ) समासः । इच् कर्मव्यतीहार ( ५।४।१२७ ) इतीच् समासान्तः । अन्येषामपि दृश्यत (६।३।१३७) इति दीर्घः । दण्डादण्डीति ।

१८ । पारे मध्ये षष्ठ्या वा ।

ननुच प्रकृतैव महाविभाषा । तयैव विकल्पो भविष्यति । तत् किं वा-ग्रहणेनेत्याह वावचनादित्यादि । गतार्थम् । यदि तर्हि वावचनात् पक्षे षष्ठीसमासो भवति महाविभाषया किं क्रियत इत्याह महाविभाषयेत्यादि ।

१९ । संख्या वंश्येन ।

एकलक्षण इति । एकस्वभावः । सन्तानः प्रबन्धः । सन्तानिनामेक-लक्षणत्वात् सन्तानोऽप्येकलक्षणो भवति । तत्र विद्ययैकलक्षणो वैयाकरणवंश उपाध्यायवंश इति । जन्मना ब्राह्मणवंशः क्षत्रियवंश इति । तत्र भवो (४।३।५३) वंश्य इति दिगादित्वाद् (४।३।५४) यत् । द्वौ मुनी इति पाणिनिकात्यायनौ । व्याकरणस्येति सम्बन्धलक्षणा षष्ठी । त्रिमुनि व्याकरणस्येति । पूर्वौ द्वौ भाष्यकारस्तृतीयः । विद्ययेति व्याकरणाख्यया । तद्गतामिति । पाणिनि-प्रभृतीनाम् । अभेदविवक्षेति । यौ तौ द्वौ मुनी तावेव व्याकरणमित्यति-शयेन विद्यया योगं तयोराख्यातुमभेदविवक्षा यदा क्रियते तदा सामानाधि-करण्यं भवति । द्विमुनि व्याकरणमिति ।

२० । नदीभिश्च ।

चकारेण संख्येत्यनुकृष्यते । बहुवचननिर्देशेनार्थस्येदं ग्रहणं न स्वरूपस्य । नापि संज्ञायाः । तेन सर्वैर्नदीवाचिभिः समासो विज्ञायत इत्याह नदीवचनैरित्यादि । समाहारे चायमिष्यत इति । चकारोऽवधारणे । समाहार एव नान्यत्रेति । यद्येवं समाहारग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम् । यत एव हेतोरक्षादीनां परिणा सह कितवव्यवहार एव समासो भवति तत एव हेतोरयमपि समाहार एव भविष्यति । सप्त गङ्गाः समाहृताः सप्तगङ्गमिति । पूर्ववद् ह्रस्वः । अन्यपदार्थे तु न भवति । (E) द्वैरावतीको देश इति । पञ्चनदम् । सप्तगोदावरमिति ।

---

(E) द्विशरावतीक इति पाठान्तरम् । It is in the पुना MS. as well as in my 2nd and 13th MSS.

कृष्णोदकपाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्य्याश्च नद्याश्च संख्याया उत्तरे यदि ॥ १ ॥

इति वचनादच् समासान्तः ।

२१ । अन्यपदार्थे च संज्ञायाम् ।

कृष्णवेण्णेति । कृष्णा चासौ वेण्णा चेति विशेषणसमासः । शीघ्रगङ्ग इति बहुव्रीहिः ।

२२ । तत्पुरुषः ।

कष्टश्रित इति । तत्पुरुषसंज्ञायां सत्यां तत्पुरुषे (६।२।२) तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरत्वम् । अथ किमर्थमियम्महती संज्ञा विधीयत इत्याह पूर्वाचार्य्यसंज्ञा चेयमिति । तदङ्गीकरणं किमर्थमित्याह तदङ्गीकरणमित्यादि । उपाधिर्विशेषणम् । कः पुनरसौ तदीय उपाधिरित्याह उत्तरपदार्थप्रधानस्तत्पुरुष इति ।

२३ । द्विगुश्च ।

समासान्ताः प्रयोजनमिति । तत्पुरुषस्याङ्गुलेः (५।४।८६) संख्याव्ययादेरित्यत स्तत्पुरुष इत्यनुवर्त्तमाने राजाहःसखिभ्यष्टच् (५।४।९१) गोरतद्धितलुकीति (५।४।९२) च द्विगोरपि यथा स्यात् । पञ्चराजीति । पञ्चानां राज्ञां समाहार इति तद्धितार्थोत्तरपदसमाहारे चेति (२।१।५१) समासः । संख्यापूर्वो द्विगुरिति (२।१।५२) द्विगुसंज्ञा । टच् । न स्तद्धित इति (६।४।१४४) टिलोपः । अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति (२।४।३०, वा) स्त्रीलिङ्गता । द्विगोरिति (४।१।२१) ङीप् । द्व्यह त्र्यह इति । अह्नष्टखोरेवेति (६।४।१४५) टिलोपः । रात्राह्नाहाः (२।४।२९) पुंसीति पुंस्त्वम् । पञ्चगवमिति । स नपुंसकमिति (२।४।१७) नपुंसकत्वम् । सत्यप्यकारान्तत्वे स्त्रीत्वं न भवति । पात्रादीनां प्रतिषेधो वक्तव्य (२।४।३०, वा) इति वचनात् ।

२४ । द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।

श्रितादिभिरित्यादि । श्रितादिषु समासकारणत्वेनोपात्तेषु सत्सु गमि-

गम्यादीनां समासस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। एतैरपि समासः प्रतिपादयितव्यः। तत्रेदं प्रतिपादनम्। द्वितीयेति योगविभागः क्रियते। तेन गमिगामिप्रभृतिभिरपि समासो भवति। न चैवं श्रितादिग्रहणमनर्थकम्। पूर्वविषयस्यासर्वविषयत्वज्ञापनार्थत्वात्। आदिशब्दः प्रकारवाची। गमिगामिशब्दयोरेकतरोपादानेनैव सिद्धे द्वयोरुपादानमुणादीनामन्येषाञ्च यथा स्यात्। अन्यथा यदि गमिग्रहणमेव क्रियेत तदाऽऽदिशब्दस्य प्रकारवाचित्वाद् गमिप्रकाराणामुणादीनामेव ग्रहणं स्यात्। अथ गामिग्रहणमेव क्रियेत तदा गामिप्रकाराणामनुणादीनां स्यात्। तस्माद् द्वयोरपि ग्रहणं कर्त्तव्यम्। ग्रामं गमीति। गमेरिनि(उण्, ४।४४६)रितीनिप्रत्ययः। स च भविष्यत्काले। भविष्यति गम्यादय (३।३।३) इति वचनात्। ग्रामङ्गामीति। आवश्यकाधमर्ण्ययो (३।३।१७०) रित्यावश्यके णिनिः। अकेनोर्भविष्यदाधमर्ण्ययोरिति (२।३।७०) षष्ठीप्रतिषेधः। ओदनं बुभुक्षुरिति। भुजेः सन्नन्तात् सनाशंसभिक्ष (३।२।१६८) उरित्युप्रत्ययः। न लोकेत्यादिना (२।३ ६९) षष्ठीप्रतिषेधः। कष्टं श्रित इत्यादावप्यनेनैव षष्ठीप्रतिषेधः।

## २५। स्वयं क्तेन।

तस्य द्वितीयया सह सम्बन्धो नोपपद्यत इति। द्वितीयार्थासम्भवात्। इतिशब्दो हेतौ। यतस्तस्य द्वितीयया सह सम्बन्धोऽनुपपन्न स्तस्माद् द्वितीयाग्रहणमुत्तरार्थ मनुवर्त्तते। नत्वेतदर्थम्। स्वयंधौतौ पादाविति। धावु गतिशुद्ध्योः। अस्योदित्वाद् विभाषितेट्। यस्य (७।२।१५) विभाषेतीट्प्रतिषेधः। च्छ्वोः (६।४।१९) शूडनुनासिके चेत्यूट्। एत्येधत्यूट्स्विति (६।१।८९) वृद्धिः। स्वयंविलीनमाज्यमिति। लीङ् श्लेषणे। स्वादय ओदित इत्योदित्त्वादोदित (८।२।४५) श्चेति नत्वम्। कृद्ग्रहणे गतिकारकपूर्वस्यापि (प,२८) ग्रहणमिति गतिपूर्वस्यापि समासो भवति। कः पुनरत्र समासे सति विशेषो यावता विनापि तेनैतद्रूपं सिध्यतीत्याह ऐकपद्यमित्यादि।

## २६। खट्वा क्षेपे।

स चेत्यादि। एवकारेण वाक्यार्थतां क्षेपस्य निरस्यति। स्यादेतत्।

वाक्यार्थोऽपि चेपः । तेन वाक्यमपि भविष्यतीत्याह नहीत्यादि । वाक्येन हि क्रियाकारकसम्बन्धमात्रं गम्यते । नतु चेपः । खट्वारोहणञ्चेत्यादि । विरुद्धो मार्गो विमार्गः । तेन प्रस्थानं गमनम् । अधीत्य स्नात्वा गुरुणाभ्यनुज्ञातेन खट्वा रोढ़व्या । यत् त्वन्यथा खट्वारोहणं तद् विमार्गप्रस्थानम् । नतु खट्वारोहणमेव । इह च खट्वारूढ़ इत्यादौ खट्वारोहणं विमार्गप्रस्थानस्योपलक्षणं वेदितव्यम् । किं पुनः कारणमेवं विज्ञायत इत्याह सर्व एवेत्यादि । आरूढ़ इत्याङ्पूर्वस्य रुहेः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु कृतेषु रूपम् । जाल्म इत्ययुक्तकारीत्यर्थः ।

## २७ । सामि ।

असत्त्ववाचित्वादिति । द्रव्याधारा हि कर्मशक्तिः । अतो द्रव्यवाचिन एव द्वितीयया सम्बन्धो भवति । नासत्त्ववाचिनः ।

## २८ । कालाः ।

चराचरा इति । अनत्यन्तसंयोगप्रतिपादनार्थम् । चरन्ति भ्रमन्तीति चराचरा अनवस्थिता इत्यर्थः । वा चरिचलिपतिवदीनामच्याक्चाभ्यासस्येति ( ६।१।१२,वा) चरेः पचाद्यचि द्विर्वचनमभ्यासस्याक्चागमश्च । कदाचिदहर्गच्छन्तीत्युत्तरायणे । कदाचिद्रात्रिमिति दक्षिणायने । एतेन तदेवानवस्थितत्वं व्यक्तीकुर्वन्नह्नो रात्रेश्च तैर्मुहूर्त्तैरनत्यन्तसंयोगमाचष्टे । अहरतिसृता इति । रोऽसुपीत्य ह्नो (८।२।६९) नकारस्य रेफः । अहःसंक्रान्ता इति । क्रमु पादविक्षेपे । पूर्ववदिट्प्रतिषेधः । अनुनासिकस्य (६।४।१५) क्विझलोरिति दीर्घः । मासप्रमित इति । माङ् माने । आदिकर्मणि कर्त्तरि (२।४।७१) चेति कर्त्तरि निष्ठा । द्यतिस्यतीत्यादिनेत्त्वम् ( ७।४।४० ) । मासं प्रमातुमारब्ध इति मासस्यैकदेशस्य प्रतिपदश्चन्द्रमसा योगं दर्शयन् मासस्य तेनानत्यन्तसंयोगमाचष्टे । कालस्य हि कृत्स्नस्य स्वेन सम्बन्धिना व्याप्तिरत्यन्तसंयोगः । नच प्रतिपच्चन्द्रमसा मासस्येह व्याप्तिः संयोगोऽस्तीति नेहात्यन्तसंयोगः ।

## २९ । अत्यन्तसंयोगे च ।

कृत्स्नसंयोग इति । कृत्स्नस्य सकलस्य संयोगः कृत्स्नसंयोगः । कृत्स्नस्य

कालस्य मुहूर्त्तादेः स्वेन सम्बन्धिना सुखादिना संयोगः सम्बन्धोऽत्यन्तसंयोगः । एतदेव स्पष्टीकर्त्तुमाह कालस्येत्यादि । मुहूर्त्तं सुखमिति । कालाध्वनोरत्यन्त-संयोग (२।३।५) इति द्वितीया । अत्र मुहूर्त्तस्य कालस्य स्वेन सम्बन्धिना सुखेन व्याप्तिः ।

## ३० । तृतीया तत्कृतार्थेन गुणवचनेन ।

तत्कृतेत्येतदर्थशब्देनासमस्तमेव । अविभक्तिकञ्च । तृतीयाविभक्तेः सुपां सुलुगिति ( ७।१।३९ ) लुप्तत्वात् । एतच्च गुणवचनेनेत्यस्य समानाधिकरणं विशेषणम् । अतएव कीदृशेनेति स्पष्ट. सन्नाह । तत्कृतेनेति । तदिति सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्श इति तृतीयान्तकृतेनेति दर्शयति । तृतीयान्तेन गुणवचनस्य करणत्वं न सम्भवतीत्यतः सामर्थ्यात् तदर्थकृतेनेति विज्ञायत इत्यत आह तृतीयान्तार्थकृतेनेति यावदिति । अर्थद्वारेण चेदं गुणवचनस्य विशेषणं वेदितव्यम् । तृतीयान्तार्थकृतो गुणवचनार्थ इति । सोऽपि तथोच्यते । एतदुक्तं भवति । तृतीयान्तार्थकृतेन गुणवचनार्थेनेति । अर्थ एव हि तृतीयान्तार्थेन क्रियते । नच गुणवचनशब्दः । गुणमुक्तवान् गुणवचनः । कृत्यल्युटो बहुलमिति (३।३।११३) कर्त्तरि ल्युट् । अथवा करणे । गुण उक्तोऽनेनेति गुणवचनः । यश्च पूर्वं गुणे वर्त्तित्वा पश्चात् तद्वति द्रव्ये वर्त्तते स गुणवचनः । गुणेनेत्युच्यमाने घृतेन पाटवमित्यादौ प्रसङ्गः । अतस्तन्निवृत्त्यर्थं वचनग्रहणम् । तस्मिंश्च सति गुणे वर्त्तित्वा तद्वति द्रव्ये यो वर्त्तते तेनैव समासो भवति । नतु गुण एव यो वर्त्तते तेन सह । नच पाटवादयः शब्दाः पूर्वं गुणे वर्त्तित्वा पश्चात् तद्वति द्रव्ये वर्त्तन्ते । अपि तु गुण एव । वचनग्रहणात् तैः सह समासो न भवति । शङ्कुलाखण्डो गिरिकाण इति । खण्डकाणशब्दावत्र खण्डने निमीलने च क्रियारूपापन्ने गुणे वर्त्तित्वा पश्चान्मतुब्लोपादभेदोप-चाराद् वा तद्वति द्रव्ये वर्त्तेते इति गुणवचनौ भवतः । धान्यार्थ इति । भवत्ययमर्थशब्दस्तत्कृतो नतु गुणवचन इति पृथगस्योपादानं क्रियते । अर्थशब्दश्चायं प्रयोजनवाची यथा किमर्थमागतोऽसीत्यभिहिते केन प्रयोजने-नेत्यवगम्यते । अभिधेयवचन इत्यन्ये । सर्वत्र करणे तृतीया । अक्ष्णा काण इति । अङ्गविकारलक्षणे येनाङ्गविकार ( २।३।२० ) इति तृतीया । नात्र

तृतीयान्तेनाख्या देवदत्तस्य काणत्वं कृतम् । किं तर्हि ? अन्येन केनापि । अक्ष्णा तु केवलं काणत्वयुक्तो देवदत्तो लक्ष्यते । गोभिर्वपावानिति । वपा अस्य सन्तीति वपावान् । भवति वपावान् देवदत्तस्तृतीयान्तार्थकृत स्तथाहि स गोभिर्वपावान् कृतः । ननु वपावानित्ययं शब्दो गुणमुक्तवानिति न गुणवचनः । ततस्तेन सह समासो न भवति ।

## ३१ । पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ।

युक्तः समसदृशशब्दाभ्यां समासो यावता ताभ्यां योगे तुल्यार्थैरतुलोपमाभ्यामिति (२।३।७२) तृतीयाविधानम् । इतरैस्तु पूर्वादिभिः कथं तृतीयासमास उपपद्यते ? नहि तद्योगे केनचित् तृतीया विहितेत्याह अस्मादेवेत्यादि सुबोधम् । पूर्वादिष्ववरस्योपसंख्यानमिति । पूर्वादिषु समासकारणत्वेनोपात्तेषु सत्स्ववरशब्दस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः । अवरशब्देनापि तृतीयासमासः प्रतिपाद्यत इत्यर्थः । तत्रेदं प्रतिपादनम् । उत्तरसूत्रे बहुलग्रहणं क्रियते । तेनावरशब्देनापि समासो भवति ।

## ३२ । कर्त्तृकरणे कृता बहुलम् ।

भिक्षाभिरुषित इति । हेतौ (२।३।२३) तृतीया विहिता । वसेर्वच्यादिसूत्रेण ( ६।१।१५ ) संप्रसारणम् । शासिवसिघसीनाञ्चेति ( ८।३।६० ) षत्वम् । वसतिक्षुधोरितीट् ( ७।२।५२ ) । दात्रेण धान्यं लूनवानिति । ल्वादिभ्यश्चेति ( ८।२।४४ ) निष्ठानत्वम् । पादहारक इति । पादाभ्यां ह्रियत इति पादहारकः । पादाभ्यामिति पञ्चमी चतुर्थी वा । हारक इति कृत्यल्युटो बहुलमिति (३।३।११३) कर्मणि ण्वुल् । गलेचोपक इति गले चुप्यत इति । चुप मन्दायां गता वित्यस्मात् पूर्ववदेव ण्वुल् । तत्पुरुषे कृति बहुलमित्यलुक् ( ६।३।१४ ) ।

## ३३ । कृत्यैरधिकार्थवचने ।

स्तुतिनिन्दाप्रयुक्तमिति । स्तुत्या निन्दया वा यत् प्रयुक्तं प्रवर्त्तितं तत् स्तुतिनिन्दाप्रयुक्तम् । तदर्थमुच्चारितमित्यर्थः । अध्यारोपितार्थवचनमिति ।

अध्यारोपितोऽर्थोऽस्मिन्नेव बुद्ध्या समारोपित स्तस्य वचनमिति षष्ठीसमासः। कर्तृकरण इति । अर्थे कार्य्यासम्भवात् तदभिधायिनि सुबन्ते कार्य्यं विज्ञायते । काकपेयेति । पा पान इत्यचो (३।१।९७) यत् ईद् (६।४।६५) यतीत्वम् । अत्र सम्पूर्णतोयत्वोद्भावनं नद्याः स्तुतिः । अध्यारोपितः पुनरत्रार्थः काकपेयत्वम् । एवं नाम सम्पूर्णतोया नदी यत् तटस्थैरपि काकैः शक्या पातुम् । श्वलेह्यः कूप इति । ऋहलोर्ण्यत् ( ३।१।१२४ ) । अत्राप्यासन्नोदकत्वोद्भावनं कूपस्य स्तुतिः । अध्यारोपितः पुनरत्रार्थः श्वलेह्यत्वम् । एवं नामासन्नोदकः कूपो यतः श्वभिरपि लिह्यते । वाष्पच्छेद्यानि तृणानीति । अत्र मार्दवातिशयोद्भावनं तृणानां स्तुतिः । अध्यारोपितः पुनरत्रार्थो वाष्पच्छेद्यता । एवं नाम मृदूनि तृणानि यद्वाष्पेणापि शक्यानि च्छेत्तुम् । कण्टकसञ्चेय ओदन इति । अत्रापि वैषद्यातिशयोद्भावनं विक्लिन्नतोद्भावनञ्चौदनस्य स्तुतिः । अध्यारोपितः पुनरत्रार्थः कण्टकसञ्चेयत्वम् । एवं नामौदनस्य विषदतातिशयो विक्लेदश्च यत् कण्टकेनापि शक्यः सञ्चेतुम् । एवं तावत् स्तुतिप्रयुक्तेऽधिकार्थवचन उदाहरणानि । निन्दाप्रयुक्तेऽधिकार्थवचन एतावन्त्येव द्रष्टव्यानि । तथाहि काकपेया नदीत्यत्राल्पतोयत्वोद्भावनं नद्या निन्दा । अध्यारोपितः पुनरत्रार्थस्तदेव पूर्वोक्तं काकपेयत्वम् । एवं श्वलेह्यादावपि पूर्वोक्त एवाध्यारोपितोऽर्थो द्रष्टव्यः । एवं नामाल्पतोया नदी यत् काकैरपि शक्यं पातुमिति । श्वलेह्यः कूप इत्यत्राप्यशुद्धतोयत्वोद्भावनं निन्दा । एवं नामाशुचिः कूप यच् श्वभिरपि लिह्यत इति । वाष्पच्छेद्यानि तृणानीति । क्वथितत्वोद्भावनं निन्दा । एवं नाम क्वथितानि तृणानि यद् वाष्पेणापि च्छिद्यन्ते । कण्टकसञ्चेय ओदन इति । अल्पतोद्भावनं निन्दा । एवं नामाल्प ओदनो यत् कण्टकैरपि चीयत इति । ननु च बहुलवचनादधिकार्थेऽपि पूर्वेणैव सिद्धः समासः । तत् किमर्थमिदमित्याह पूर्वस्येत्यादि । ते वै विधयः सुसंगृहीता येषां लक्षणं प्रपञ्चश्चेति । सुसंगृहीतं यथा स्यादिति पूर्वस्यायं प्रपञ्चः क्रियते ।

## ३४ । अन्नेन व्यञ्जनम् ।

दध्योदन इति । ननुच क्रियाकृतः कारकाणां सम्बन्धो नतु स्वतः । नच वृत्ताविह काचन क्रिया श्रूयत इति सामर्थ्याभावः । असति च सामर्थ्ये

समासाभावः । अथासत्यपि सामर्थ्ये वचनसामर्थ्यात् समासो भवतीति चेदास्यतां दध्ना । ओदनो भुज्यतां देवदत्तेनेत्यत्रापि स्यादित्यत आह दृष्टावित्यादि । नह्यसत्यामुपसेचनक्रियायां संस्कार्य्यं संस्कारकं वा सम्भवति । अस्ति चेह तदुभयमित्यतस्तद्भावादेव समासान्तर्भूता क्रिया गम्यते । तद्द्वारकश्चान्नव्यञ्जनयोः सम्बन्ध इति विद्यत एव सामर्थ्यम् ।

## ३५ । भक्ष्येण मिश्रीकरणम् ।

मिश्रीकरणमिति । अमिश्रं मिश्रं क्रियतेऽनेनेति मिश्रीकरणम् । खरविशदमभ्यवहार्य्यं भक्ष्यमिति । तत्रैव भक्ष्यशब्दस्य रूढ़त्वात् ।

## ३६ । चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ।

तदर्थेनेत्यादि । यदि तादर्थ्यमात्रे समासः स्याद् बलिरक्षितग्रहण-मनर्थकं स्यात् । तथाहि कुवेरबलि गोरक्षितमित्यत्रापि तादर्थ्यं गम्यत एव । तस्माद् बलिरक्षितग्रहणाल्लिङ्गात् तादर्थ्ये प्रकृतिविकारभावे समासो भवतीति विज्ञायते । ननु च सम्प्रदाने चतुर्थ्यर्थं बलिरक्षितग्रहणं स्यात् । नैतदस्ति । ददातिकर्म्मणा ह्यभिप्रेयमाणस्य क्रियया वा सम्प्रदानसंज्ञेष्यते । न चेह ददातिकर्म्मणा क्रियया वा ऽभिप्रेयमाणतास्ति । तत् कुतः सम्प्रदाने चतुर्थी ? केन पुनस्तादर्थ्ये चतुर्थी भवतीत्याह अस्मादेवेत्यादि । यदि तादर्थ्ये चतुर्थी न स्यात् तदा तदर्थग्रहणमनर्थकं स्यात् । तस्माद् यदेतत् तदर्थेन चतुर्थ्यन्तस्य समासविधानं तदेव ज्ञापकं तादर्थ्ये चतुर्थी भवतीति । अर्थेनेत्यादि । कर्त्तव्यमिति शेषः । नित्यसमास उच्यते कथ्यते प्रत्याख्यते येन तन्नित्यसमासवचनं व्याख्यातव्यम् । एतदुक्तं भवति । येनार्थशब्देन नित्यसमासः प्रत्याख्यते तद्व्याख्यानं कर्त्तव्यमिति । तत्रेदं व्याख्यानम् । विभाषाग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा विज्ञायते । तेनार्थशब्देन नित्यसमासो भविष्यति । सर्वलिङ्गता चेति । परवल्लिङ्गं ( २।४।२६ ) द्वन्द्वतत्पुरुषयोरिति परवल्लिङ्गतायां प्राप्तायां सर्वलिङ्गता विधीयते । एषा तु लोकाश्रयत्वाल्लिङ्गस्येति सिद्धा । अथवा बहुलग्रहणानुवृत्तेः सर्वमेतत्

सिद्धम्। गोहितं गोसुखमिति चतुर्थी चाशिष्यायुष्येत्यादिना ( २।३।७३ ) चतुर्थी। हितयोगे त्वनाशिष्यपि चतुर्थी भवति। तथाहि वक्ष्यति हितयोगे चतुर्थी वक्तव्येति ( २।३।१३, वा )।

## ३७। पञ्चमी भयेन।

भयभीतभीतिभीभिरिति वक्तव्यमिति। एवं हि त्रिभिरपि भीतादिभिः समासो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। स्वयमेव व्याख्यातु माह पूर्वस्येत्यादि। यथैव हि कर्तृकरणे कृता (२।१।३२) बहुलमिति तृतीयान्तस्य समासो विधीयमानो बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादन्यविभक्त्यन्तस्यापि समासो भवति पादहारको गलेचोपक इति तथा वृकभीत इत्यादावपि समासो भविष्यति। तस्मात् पूर्वकस्य बहुलग्रहणस्यैवोदाहरणप्रदर्शनार्थोऽयं योगः प्रपञ्चार्थो वेदितव्यः। तथा चेत्यादि। यस्मात् पूर्वकेणैव बहुलग्रहणेन सिद्धं तस्यैवायम्प्रपञ्चः। तस्मात् तत एव बहुलग्रहणाद् ग्रामनिर्गत इत्याद्यपि सिद्धं भवति। आदिशब्देन वृकभीतादेर्ग्रहणम्।

## ३८। अपेतापोढमुक्तपतितापत्रस्तैरल्पशः।

अल्पश इति। बह्वल्पार्थाच्छस् कारकादन्यतरस्यामिति (५।४।४२) शस्। अल्पा पञ्चमी समस्यत इति। अल्पेभ्यः प्रातिपदिकेभ्य उत्पन्ना या पञ्चमी सा समस्यते। नतु सर्वेभ्यः प्रातिपदिकेभ्य इत्यर्थः।

## ३९। स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन।

स्तोकान्मुक्तः। कृच्छ्रान्मुक्त इति। करणे (२।३।३३) स्तोकाल्पकृच्छ्रेत्यादिना पञ्चमी। अन्तिकादागतः। दूरादागत इति। दूरान्तिकार्थेभ्यो ( २।३।३५ ) द्वितीया चेत्यनेन।

## ४०। सप्तमी शौण्डैः।

शौण्डैरिति। बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह शौण्डादिभिरिति। केन पुनर्विहितायां सप्तम्यां तदन्तस्य शौण्डादिभिः समासो विधीयते ? सप्तम्यधिकरणे ( २।३।३६) चेत्यनेनेति चेद् वार्त्तमेतत्। तथाह्यधिकरणं कारकम्।

तच्च क्रियापेक्षम् । नचाक्षशौण्ड इत्यादौ वृत्तौ काचन क्रिया श्रूयते । तत् कुतोऽधिकरणस्येह सम्भवः ? नच शक्यते वक्तुमस्मादेव वचनाच्छौण्डादिभिर्योगे सप्तमी भविष्यतीति । देवदत्तः शौण्ड इत्यत्रापि प्रसङ्गः स्यादित्यत आह वृत्तावित्यादि । अस्त्येवात्र प्रसक्तिक्रिया । सा तु समासार्थ एवान्तर्भूतेति गम्यमानत्वाद् वृत्तौ क्रियापदं न प्रयुज्यते । तस्या यत् साधनमधिकरणं तत्र सप्तमीत्यदोषः । अन्तः शब्दस्त्वत्राधिकरणप्रधान एव पठ्यते । तस्य प्रयोगे तत्सामानाधिकरण्यमेव सप्तम्याः कारणम् । वनेऽन्तर्वनान्तर्वसतीति । पूर्वपदार्थप्राधान्ये तु विभक्त्यर्थे यदव्ययमित्यव्ययीभाव (२।१।६) एव भवति । अन्तर्वणमिति । अधिशब्दोऽत्र पठ्यते । तस्याधिकरणप्राधान्ये सत्यव्ययीभावः । अधिस्त्रि । आधेयप्राधान्ये तु तत्पुरुषो ब्राह्मणेष्वधि ब्राह्मणाधीन इति । ब्राह्मणाधिशब्दः केवलो न प्रयुज्यते । अषड्क्षाशितेत्यादिना ( ५।४।७ ) ऽध्युत्तरपदात् स्वार्थिकस्य नित्यस्य खस्य विधानात् ।

## ४१ । सिद्धशुष्कपक्वबन्धैश्च ।

## ४२ । ध्वाङ्क्षेण क्षेपे ।

ध्वाङ्क्षेणेत्यर्थग्रहणमिति । अर्थप्रधानत्वान्निर्देशस्य । यत्र हि शब्दप्रधानो निर्देश स्तत्र स्वरूपग्रहणं भवति । अन्यत्र त्वर्थग्रहणमेवेति प्रतिपादितमेतत् प्राक् । अर्थप्रधानत्वन्तु निर्देशस्याविच्छिन्नाचार्य्यपारम्पर्य्योपदेशाद् विज्ञायते । बहुलग्रहणानुवृत्तेरर्थस्येदं ग्रहणं वा । अपिच क्षेप इत्युच्यते । क्षेपश्चार्थकारित एवेत्यर्थग्रहणमेव युक्तम् । अर्थग्रहणे च सति ध्वाङ्क्षपर्य्यायैरपि समासो भवति । अत आह ध्वाङ्क्षवाचिनेत्यादि । तीर्थे ध्वाङ्क्ष इवेति । उपमानभावे सति ध्वाङ्क्षस्य क्षेपो गम्यते नान्यथेति दर्शयितुमिवशब्दः प्रयुक्तः । समासे तु समास एवोपमानार्थस्यान्तर्भूतत्वादिवशब्दो गतार्थो न प्रयुज्यते । यथैव हि तीर्थध्वाङ्क्षाश्चिरं स्थातारो न भवन्ति तद्वदन्योऽपि यः कार्य्ये प्रत्यनवस्थितः स तीर्थध्वाङ्क्ष इत्युच्यते । यदाह अनवस्थित इत्यर्थः । कार्य्ये प्रत्यनवस्थितत्वमेव क्षेपः ।

## ४३ । कृत्यैर्ऋणे ।

यत्प्रत्ययान्तेनैव समास इष्यत इति। कथं पुनर्यत्प्रत्ययेनैव लभ्यते? अल्पश इत्यनुवृत्तेः। मासदेयमिति। पूर्ववद् यदीत्वञ्च। सप्तमी ह्यत्रौपश्लेषिकेऽधिकरणे वेदितव्या। मासे ह्यतीते योऽनन्तरो दिवसः स मासं प्रत्युपश्लिष्टो भवति। यस्य च भावेन (२।३।३७) भावलक्षणमित्यनेन वा। मासातिक्रमणभावेन हि ऋणदानभावो लक्ष्यते। अथ ऋण इत्युच्यते। तत्रेदं न सिध्यति। पूर्वाह्णेगेयं साम प्रातरध्येयोऽनुवाक इत्यत आह ऋणमित्यादि। ऋणं हि नियोगतो निर्य्यातयितव्यमिति नियोगसहचरितम्। अतः साहचर्य्यात् तेन नियोगोऽवश्यम्भाव उपलक्ष्यते। एतच्च कृत्यैरिति बहुवचननिर्देशाल्लिङ्गाद् गम्यते। कथम्? कृत्यैरिति बहुवचनमत्र विवक्षितम्। तच्च ऋणग्रहणस्य नियोगोपलक्षणार्थत्वे (F) प्रकृतिभेदेन भिद्यमाने कृत्ये सति प्रसज्यते। नत्वन्यथा। यत्प्रत्ययस्यैकत्वात् तेनैव समासस्येष्टत्वात्।

## ४४ । संज्ञायाम् ।

समुदायोपाधिरिति। संज्ञायामिति। नेदं पूर्वपदस्योत्तरपदस्य वा विशेषणम्। किन्तर्हि? समुदायस्य। समुदायेन चेत् संज्ञा गम्यत इति। किमेवं सति सिध्यतीत्यत आह तेनेत्यादि। अत्रैवोपपत्तिमाह नहीत्यादि।

## ४५ । क्तेनाहोरात्रावयवाः ।

एतत् (G) तु ते दिवाहृत्तं रात्रौ हृतञ्च द्रक्ष्यसीत्यादि। नात्राहरवयवाः रात्र्यवयवाश्च सन्ति। किन्तर्हि? कृत्स्नमेवाहः कृत्स्ना च रात्रिरिति। तेनेह समासो न भवति।

## ४६ । तत्र ।

तत्रेत्येतत् सप्तम्यन्तमिति। सप्तमीसाधर्म्यात्। त्रल्प्रत्यय एवात्र सप्तमी शब्देनोक्तः। भवति हि ताद्धर्म्यात् ताच्छब्द्यं यथा गौर्वाहीक इति। सप्तमी

---

(F) नियोगोपलक्षणार्थत्वात् प्रकृतिभेदेन भिद्यमाने सति युज्यते is in the 2nd MS. & in the Poona Book.

(G) उलूखले राभरणे: पिशाची यदभाषतेति, श्लोकस्य पूर्वांशः।

साधर्म्यं पुनस्त्वलोऽधिकरणार्थत्वात् । यथैव ह्यधिकरणप्रत्यायनाय सप्तमी प्रयुज्यते तथा त्वलपि । अथ मुख्यैव सप्तमीविभक्तिः कस्मान्न विज्ञायते ? तस्यास्तत्र शब्देऽसम्भवात् । असम्भवस्तु त्वलैव तदर्थस्य द्योतितत्वात् । अन्यस्त्वाह यदा विभक्त्यादेशास्त्वलादयस्तदा स्थानिवद्भावेनैवैतत् सप्तम्यन्तं भवति । आदेशपक्षस्तु तत्र वृत्तिकृता नाश्रित इत्यसम्यगेतत् । अन्तशब्दश्चात्रावयववचनः । सप्तमीत्वल्प्रत्ययोऽन्तोऽवयवो यस्य तत् तथोक्तम् ।

## ४७ । क्षेपे ।

अवतप्तेनकुलस्थितमिति । तत्पुरुषे कृति बहुलमिति (६।३।१४) सप्तम्या अलुक् । कः पुनरत्र क्षेपः ? कार्येष्वनवस्थितता । यदाह एतच्चापलमित्यादि । यथा ऽवतप्ते देशे नकुला न चिरं स्थातारो भवन्ति तद्वदन्योऽपि योऽर्थानारभ्य न चिरं तेष्ववतिष्ठते तं प्रतीदमुच्यते ऽवतप्तेनकुलस्थितमिति । उदके विशीर्णमित्यादा वप्यारम्भस्य निष्फलता क्षेपः । अतएवाह निष्फलं यत् क्रियते तदेव मुच्यत इति । प्रवाहेमूत्रितमिति । मूत्र प्रस्रवणे चुरादिः ।

## ४८ । पात्रेसमितादयश्च ।

युक्तारोह्यादिपरिग्रहार्थ इति । युक्तारोह्यादिषु युक्तारोह्यादिभिर्वा परिग्रहोऽर्थः प्रयोजनं यस्य पाठस्य स तथोक्तः । किमर्थं पुनर्युक्तारोह्यादिषु परिग्रहस्तेषामिष्यत इत्याह पूर्वपदाद्युदात्तत्वं यथा स्यादिति । युक्तारोह्यादीनां हि युक्तारोह्यादयश्चेत्यनेन ( ६।२।८१ ) पूर्व्वपदाद्युदात्तत्वं विधीयते । तत्र यदि ये क्तान्ता स्ते न पठ्येरं स्तदा तेषामाद्युदात्तत्वं न स्यात् । कथं पुनः पात्रेसमितादयो युक्तारोह्यादिग्रहणेन गृह्यन्ते ? यतस्तेषां विधीयमानमाद्युदात्तत्वं पात्रेसमितादीनामपि भवतीत्याह युक्तारोह्यादिषु हीत्यादि । उदुम्बरमशकादिषूपमया क्षेप इति । यस्तत्रैवावरुद्धो न क्वचिद् गच्छति तमेव विशिष्टं मन्यते नास्मात् परमस्तीति सोऽदृष्टविस्तार उच्यत उदुम्बरमशक इति । एवमन्यत्राप्युपमानात् क्षेपः । प्रतिषिद्धसेवनेनेति । यः कश्चित् प्रतिषिद्धमाचरति स मातरिपुरुष इत्युच्यते । निरीहतयेति ।

यो न किञ्चित् कर्त्तुं समर्थः स पिण्डीशूर इत्येवमादिभिः पदैरभिधीयते। चकारोऽवधारणार्थ इति। पात्रेसमितादय एव यथा स्युः। यदन्यत् समासान्तरं तेषां प्राप्नोति तन्मा भूदिति। तेन परमपात्रेसमिता इति सन्महदित्यादिना (२।१।६१) समासान्तरं न भवति।

## ४९। पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन।

भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्येत्यादि। भिन्नप्रवृत्तिनिमित्तग्रहणं पर्य्यायनिवृत्त्यर्थम्। एकग्रहणं गौरश्व इत्यादिनिवृत्त्यर्थम्। पूर्वकाल इत्यर्थनिर्देश इति। अर्थप्रधानत्वान्निर्देशस्य। तेन स्वरूपग्रहणं न भवतीति भावः। परिशिष्टानां स्वरूपग्रहणमिति। शब्दप्रधानत्वान्निर्देशस्य। पूर्वकालोऽपरकालेनेति। कुतः पुनरनुक्तोऽप्येषोऽर्थविशेषो लभ्यते। सम्बन्धिशब्दत्वात् पूर्वकालस्य? नह्यनपेक्ष्यापरकालं पूर्वकालः सम्भवति। अतः पूर्वकालपरिग्रहे कृते सत्यपरकालस्यापि परिग्रहः कृत एव। स्नातानुलिप्त इति। पूर्वं स्नातः पश्चादनुलिप्त इत्यत्र स्नातशब्दः स्नानेन निमित्तेन प्रयुक्तः। अनुलिप्तशब्दोऽनुलेपनेन। तयोश्चैकत्रार्थे वृत्तिरित्यस्ति सामानाधिकरण्यम्। एकशाटीति। एका चासौ शाटी चेति। पुंवत् (६।३।४२) कर्मधारयेत्यादिना पुंवद्भावः।

## ५०। दिक्संख्ये संज्ञायाम्।

पूर्वेषुकामशमीत्यादि ग्रामाणां संज्ञा। पूर्वा चासाविषुकामशमी चेति पूर्वेषुकामशमी। मन्दधियां पूर्वोत्तरपदविभागमात्रप्रदर्शनार्थं वाक्यं कृतम्। नह्यत्र वाक्येन भवितव्यम्। नहि वाक्येन संज्ञा गम्यते।

## ५१। तद्धितार्थोत्तरपदसमाहारे च।

एकस्या अपि सप्तम्या विषयभेदेन भेदं दर्शयितुमाह तद्धितार्थविषय इत्यादि। यदि तद्धितार्थेऽभिधेय इत्येवं विज्ञायेत तदा पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्। तदर्थस्य समासेनैवोक्तत्वादित्येतन् मनसि कृत्वा

तद्धितार्थापेक्षया विषयसप्तमीयमिति दर्शयितुं तद्धितार्थे विषय इत्युक्तम् । तद्धिता अणादय स्तेषामर्थोऽपत्यादिः । तस्मिन् विषये । अनन्यत्रभावो विषयशब्दस्यार्थः । यथा मत्स्यानां जलं विषय इति । पौर्वशाल इति । पूर्वस्यां शालायां भव इति तद्धितार्थे विषयभूते प्राक् समासः । ततः सुब्लुक् । तत स्तद्धितः । पूर्वशालाप्रिय इति । पूर्वा शाला प्रिया ऽस्येति पूर्वं पदानां त्रयाणां बहुव्रीहिः । पश्चात् प्रियशब्द उत्तरपदे परतः पूर्वयोः पदयोस्तत्-पुरुषः । तस्मिन् सति समासान्तोदात्तत्वं भवति शालेत्यत्र । समाहारे दिङ् न सम्भवतीति । समाहारो हि समूहः । स च भिन्नार्थानामेवैककालानां भवति । बुद्धया युगपदर्थानां परिग्रहादेककालत्वम् । नत्वभिन्नवस्तुनः । संख्यैव च भेदमाचष्टे । तस्या भिन्नार्थाभिधायित्वात् । नतु दिक्शब्दः । तस्य प्रतिनियतविषयत्वात् । तस्मात् समाहारे दिक्शब्दो न सम्भवतीति स न तत्र समस्यते । पाञ्चनापितिरिति । पञ्चानां नापितानामपत्यमिति तद्धितार्थे विषयभूते प्राक् समासः । पश्चादत (४।१।९५) इञ् । पञ्चकपाल इति । पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे विषयभूते पूर्वं समासः । पश्चादण् । तस्य द्विगोर्लुगनपत्य (४।१।८८) इति लुक् । पञ्चगवधनमिति । पञ्च गावो धनमस्येति प्राक् त्रयाणां पदानां बहुव्रीहिः । उत्तरकालं धनशब्द उत्तरपदे परतः पूर्वयोः पदयो स्तत्पुरुषः । तस्मिन् सति गोरतद्धित लुकीति (५।४।९२) टच् समा-सान्तः । तत्र हि तत्पुरुषस्याङ्गुलेरित्यत (५।४।८६) स्तत्पुरुषग्रहणमनुवर्त्तते । पञ्चपूलीति । पञ्चानां पूलानां समाहार इति विग्रहः । द्विगु(२।४।१) रेकवचनमित्येकवद्भावः । अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत(२।४।२०,वा) इति स्त्रीलिङ्गता । द्विगोरिति (४।१।२१) ङीप् । ननु समाहारः समूहः । समूहश्च तद्धितार्थो भवतीत्यपार्थकं समाहारग्रहणम् ? तद्धितार्थ इत्येव सिद्धत्वात् । नैतदस्ति । पञ्चकुमारीत्यत्र हि समूहप्रत्ययस्य द्विगोर्लुगनपत्य (४।१। ८) इति लुकि कृते लुक् (१।२।४९) तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुक् स्यात् । समाहारे तु पृथक् गृह्णीते तद्धितानुत्पत्तिरेवात्र विषये समाख्यायते । ततो न भवत्येष दोषः । पञ्चानां कुमारीणां समाहारः पञ्चकुमारि । एक-विभक्ति चापूर्वनिपात ( १।२।४४ ) इत्युपसर्जनसंज्ञायां गोस्त्रियोरुपसर्जनस्येति

( १।२।४८ ) इत्युपसर्जनह्रस्वत्वम्। कथं पुनरत्रैकविभक्तित्वम्? षष्ठ्यैवैकया योगात्। तथाहि समाहारः समूहः। तेन च तत्सम्बन्धे षष्ठ्यैव भवितव्यम्। अतः समाहारः कुमारीणाम्। समाहारं कुमारीणां पश्य। समाहारेण कुमारीणामित्येवमादिभिरनेकाभिर्विभक्तिभिर्युज्यमानेऽपि समाहारशब्दे कुमारीशब्दः षष्ठ्यैवैकया युज्यत इत्येकविभक्तिकत्वम्।

## ५२। संख्यापूर्वो द्विगुः।

समासान्तो भवतीति। टच्। राजाहः (५।४।९१) सखिभ्यष्टजित्यनुवृत्तेः।

## ५३। कुत्सितानि कुत्सनैः।

कुत्सितशब्दोऽयमिह रूढिमाचष्टे। तथाच निष्ठा भूतकालं नोपादत्ते। कुत्सनशब्देन च कुत्साहेतुर्धर्मो गृह्यते। कुत्स्यते गर्ह्यतेऽनेनेति कृत्वा। बहुवचननिर्देशस्तु स्वरूपविधेर्निरासार्थः। तेन कुत्सितवाचिनां कुत्सनवचनैः सह समासो विज्ञायते। नतु कुत्सितशब्दस्य कुत्सनशब्देन। अत आह कुत्सितवाचीनीत्यादि। शब्दप्रवृत्तिनिमित्तकुत्सायामयं समासो वेदितव्यः। कुतः पुनरेतल्लभ्यते? प्रत्यासत्तेः। शब्दस्य हि प्रवृत्तिनिमित्तं प्रत्यासन्नम्। अतस्तत्कुत्सायामेव समासेन भवितुं युक्तम्। वैयाकरणखसूचि रिति। वैयाकरणश्चासौ खसूचिश्चेति विग्रहः। यः पृष्टः सन् व्याकरणे खमाकाशं सूचयतीति निरीक्षते निष्प्रतिभो भवति स एवमुच्यते। अत्र हि वैयाकरणत्वं वैयाकरणशब्दस्य प्रवृत्तिनिमित्तं तत् कुत्स्यते। तत् पुनः व्याकरणाध्येतृसम्बन्धो व्याकरणवेदितृसम्बन्धो वा। तेन हि निमित्तेन वैयाकरणशब्दः पुरुषे वर्त्तते। एवमन्यत्रापि शब्दप्रवृत्तिनिमित्तकुत्सायां समासो वेदितव्यः। याज्ञिककितव इति। कितव इव कितवः। यथाहि कितवः किं तवास्तीति धनवत्तामात्रमपेक्षमाणो द्यूते प्रवर्त्तते नतु तस्य जात्यादिक मपेक्षते तथा याज्ञिकोऽपि याजने प्रवर्त्तमानो यस्तृष्णया ऽयाज्यस्य धनवत्तामात्र मपेक्षते नतु तस्य यागार्हतां स याज्ञिककितव इत्युच्यते। अत आह अयाज्ययाजनतृष्णापर उच्यत इति। मीमांसक दुर्दुरूढ इति। मीमांसको मीमांसाध्ययनफल मनवाप्य नास्तिको जात इति प्रतीयते। वैयाकरण-

श्चौर इति । ननु चौरत्वेन गर्ह्यमाणो वैयाकरणः कुत्सितो भवत्येव । तदभिधायी च वैयाकरणशब्दः । तत् कथमिदं प्रत्युदाहरण मुपपद्यत इत्याह नह्यत्रेत्यादि । प्रत्यासत्तेर्हि शब्दप्रवृत्तिनिमित्तस्य कुत्सायां समासेन भवितव्यम् । नचेह वैयाकरणशब्दस्य प्रवृत्तिनिमित्तं कुत्स्यते । यस्माच्चौरोऽपि सम्यग् व्याकरणं ह्यधीते वा । तस्मान्नात्र शब्दप्रवृत्तिनिमित्तं कुत्स्यते । किं तर्हि ? यत्र तद् वैयाकरणत्वं वर्त्तते स कुत्स्यते । वैयाकरणत्वन्तु तस्योपलक्षणमेव केवलं योऽसौ वैयाकरणः स चौरः । यथा यः कम्पते सोऽश्वत्थ इति । अत्र कम्पन मश्वत्थस्योपलक्षणम् । कुत्सितो ब्राह्मण इति । भवत्यत्र कुत्सितशब्दः कुत्सिताभिधायी । नतु ब्राह्मणशब्दः कुत्सनवचनः ।

## ५४ । पापाणके कुत्सितैः ।

पापाणकशब्दौ कुत्सनाभिधायिनावित्युक्तम् । यद्येवमत्र पूर्व्वेणैव सिद्धः समासः । किमर्थमिद मुच्यत इत्याशङ्क्याह तयोरित्यादि । यदि पूर्व्वेण स्यात् समास स्ततः कुत्सितशब्दस्य प्रथमानिर्दिष्टत्वात् पूर्व्वनिपातः स्यात् । पापाणकशब्दयोस्तु परनिपातः । तस्मात् तयोः पूर्व्वनिपातार्थमिदमारभ्यते । कुत्सितग्रहणं विस्पष्टार्थम् । अन्यथा पूर्व्वयोगादेव कुत्सित इत्यनुवर्त्तिष्यत इति तन्न कर्त्तव्यमेव स्यात् ।

## ५५ । उपमानानि सामान्यवचनैः ।

उपमीयतेऽनेनेत्युपमानमिति । सादृश्येन येन परिच्छिद्यते तदुपमान मित्यर्थः । यथा गौरिव गवय इत्यत्र गौरुपमानम् । तेन हि सादृश्येन गवयः परिच्छिद्यते । यादृशो गौ स्तादृशो गवय इत्यर्थः प्रतीयते । सामान्य मनेकसाधारणं भवति । इह चोपमानस्य श्रुतत्वात् तस्य चोपमेयापेक्षत्वादुपमानोपमेययो रेव साधारणो धर्म्मः सामान्यं विज्ञायत इत्याह उपमानोपमेययोरित्यादि । तद्विशिष्टोपमेयवचनैरयं समास इति । तेन सामान्येन धर्म्मेण विशिष्टं यदुपमेयं तद्वचनैरयं समासो भवति । कुतः पुनः सामान्यवचनै रित्युक्ते सत्येष विशेषो लभ्यते । न्यायात् । तथाहि सामान्य मुक्तवन्तः

सामान्यवचना यथा गुणमुक्तवन्तो गुणवचना इति। कदा च ते सामान्यवचना भवन्ति ? यदा सामान्य मभिधाय सामान्यविशिष्टे तद्वति द्रव्ये वर्त्तन्ते। तत्र सामान्यवदुपमानस्य सम्बन्धिशब्दत्वादुपमेयमेव विज्ञायत इति न्यायप्राप्त एवार्थो वृत्तिकृता दर्शितः। शस्त्रीश्यामा देवदत्तेति। अत्रोपमानं शस्त्री। उपमेया देवदत्ता। प्रसिद्धं ह्युपमानं भवति। नाप्रसिद्धम्। शस्त्र्येव श्यामगुणत्वेन प्रसिद्धा। न देवदत्ता। तयोः सामान्यं साधारणो धर्म्मः श्यामत्वम्। तच् श्यामत्व मुक्त्वा श्यामशब्दो देवदत्तायामभेदोपचारात् मतुब्लोपाद्वा वर्त्तत इति सामान्यवचनो भवति। ननु च समानाधिकरणेनेत्यनुवर्त्तते? इह च शस्त्रीशब्दस्य शस्त्र्यां वृत्तिः। श्यामाशब्दस्य देवदत्तायाम्। अतो वैयधिकरण्यात् समासेन न भवितव्यम्। नैतदस्ति। सर्वत्र ह्युपमानोपमेययोर्भेदात् तद्वाचिनोर्वैयधिकरण्यमेव। उच्यते चेदं वचनम्। अतो वैयधिकरण्येऽपि वचनसामर्थ्यात् समासो भविष्यति। अथवा शस्त्रीशब्दोऽप्यत्र देवदत्तायां वर्त्तते। तेन सामानाधिकरण्य एवायं समासः। शस्त्री चासौ श्यामा चेति शस्त्रीश्यामा। ननु च शस्त्रीशब्दोऽयं जातिवचनः शस्त्रीत्वं प्रवृत्तिनिमित्तमुपादाय तद्वति वर्त्तते। नच तच् शस्त्रीत्वं देवदत्तायामस्ति। तत् कथं तत्र वर्त्तते ? नैष दोषः। सर्व एवामी शब्दा गुणमुपादाय तद्वति द्रव्ये वर्त्तन्त इत्यपि दर्शन मस्ति। तत्र श्यामत्वं गुणमुपादाय शस्त्रीशब्दो देवदत्तायां वर्त्तिष्यते। ताद्धर्म्याद्वा देवदत्ता शस्त्रीशब्देनाभिधास्यते। भवति हि ताद्धर्म्यात् ताच्छब्द्यमित्युक्तं प्राक्। ताद्धर्म्यं पुनः श्यामगुणत्वम्। फाला इव तण्डुला इति। भवन्ति हि फाला उपमानम्। तथाहि ते दीर्घत्वादिना सादृश्येन तण्डुला उपमीयन्ते। तण्डुलशब्दस्तु सामान्यवचनो न भवति। ननु च तण्डुलशब्दोऽपि तण्डुलत्वं सामान्यमुपादाय तद्वति द्रव्ये वर्त्तत इति भवत्येव सामान्यवचनः। तदयुक्तमिदं प्रत्युदाहरणम्। नैतदस्ति। तथाह्युपमानोपमेययोः साधारणो धर्मः सामान्यमित्युक्तम्। नच तण्डुलत्वं फालानामस्ति। किं तर्हि ? तण्डुलानामेव।

**५६। उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।**

सामर्थ्यादुपमानवचनैरिति। यद्यप्युपमानवचनैरिति सूत्रे नोपात्तं तथा-

प्युपमेयमुपमानापेक्षमित्युपमितशब्दः सर्वान्यशब्दत्वादुपमानत्वं व्याघ्रादीनां गमयति । तेन विशेषानभिधानेऽपि सामर्थ्यादुपमानवचनैस्तैः समासो विज्ञायते । नचेत् सामान्यवाची शब्दः प्रयुज्यत इति । उपमानोपमेययोः साधारणो धर्म्मः शौर्य्यादि सामान्यम् । यदि तद्वाची शब्दो न प्रयुज्यत एवं सति समासो भवति । नान्यथा । ननु च सामान्यस्य समासेऽन्तर्भूतत्वात् तद्वाचिनां शब्दानां प्रयोगो नास्ति । तत् किं प्रतिषेधेन ? नैतदस्ति । साधारणधर्म्मः सामान्यं हि समासेऽन्तर्भूतम् । नतु तद्विशेषः । तत्रासति प्रतिषेधे विशिष्टसाधारणधर्मवाचिनः प्रयोगः स्यादेवेति कर्त्तव्यः प्रतिषेधः । न कर्त्तव्यः । कथम् ? सामान्यशब्दप्रयोगे हि सति तदपेक्षत्वेन सापेक्षमसमर्थं भवतीत्यसामर्थ्यादेव समासो न भविष्यति । एवं तर्ह्येतज् ज्ञापयति । भवति हि प्रधानस्य सापेक्षस्यापि समास इति । पुरुषश्चात्रोपमेयत्वात् प्रधानः । उपमानन्तु व्याघ्रादि तदर्थत्वादप्रधानम् । किमेतेन ज्ञापकेन प्रयोजनम् ? राजपुरुषः शोभन इत्येवमादि सिद्धं भवति । विशेषणं विशेष्येणेति प्राप्त इति । ननु च विशेषणस्य विशेष्येण समानाधिकरणेन समासं वक्ष्यति । उपमानोपमेययोश्च भेदाद्वैयधिकरण्यम् । तत् कुतो विशेषणं विशेष्येणेति प्राप्तिः ? एवम्मन्यते । पुरुषादावुपमेये वर्त्तमानैर्व्याघ्रादिभिरुपमानशब्दैरयं समासो भवति । यथा चोपमानशब्दानामुपमेयवृत्तित्वे सामानाधिकरण्यं तथा पूर्वसूत्र एव व्याख्यातम् ।

## ५७ । विशेषणं विशेष्येण बहुलम् ।

भेदकं विशेषणमिति । शिषॢ विशरण इत्यस्माद् धातोर्विपूर्वात् करणे ल्युट् । विशिष्यतेऽनेनेति विशेषणम् । तस्येदं लक्षणं भेदकमिति । यत् सामान्याकारेण प्रवृत्तमनेकप्रकारवद् वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थापयति तद् भेदकं विशेषणमिति । भेद्यं विशेष्यमिति । विशेषणीयं विशेष्यम् । विपूर्वात् तस्माद्धातोर् ऋहलोर्ण्यदिति (३।१।१२४) कर्मणि ण्यत् । तस्येदं लक्षणं भेद्यमिति । यदनेकप्रकारवद् वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थाप्यते तद् भेद्यं विशेष्यमिति । अथ किमर्थं विशेषण

विशेष्ययोरुभयोरुपादानं क्रियते ? न । अन्यतरस्यैव क्रियेत ? सम्बन्धिशब्दत्वाद्धि तयोरन्यतरोपादानेनैवेतरस्याप्यवगतिर्भवत्येव । सत्यमेतत् । यत्र पूर्वोत्तरपदे प्रत्येकं विशेषणविशेष्यभूते भवत स्तत्रैव समासो भवतीति ज्ञापनार्थमुभयोरुपादानम् । यथा नीलोत्पलमिति । अत्र नीलार्थो भ्रमरादिभ्यो व्यावर्त्त्योत्पलार्थेनोत्पले व्यवस्थाप्यते । उत्पलार्थोऽपि रक्तोत्पलादिभ्यो व्यावर्त्त्य नीलार्थेन नीले व्यवस्थाप्यत इत्यस्ति प्रत्येकं विशेषणविशेष्यभावः । स यत्र नास्ति तत्र तु न समासः । यथा वृक्षः शिंशपेति । वृक्षो हि शिंशपात्वं व्यभिचरति । शिंशपा तु न वृक्षत्वम् । अतस्तत्प्रकारान्तरेभ्यः पलाशादिभ्य स्तं व्यवच्छिनत्तीति शिंशपा तस्य विशेषणं भवति । न तु विशेष्यम् । वृक्षस्तु विशेष्यः । शिंशपार्थस्तु वृक्षत्वं न व्यभिचरतीति न तस्यासौ विशेषणं भवति । अथ किं न भवितव्यमेव शिंशपावृक्ष आम्रवृक्ष इति ? विशेषणसमासेन भवितव्यं यदा शिंशपादिशब्दानां विशेषे वृत्तिर्नावधार्य्यते । तथाहि शिंशपादिशब्दाः फलस्य वृक्षस्य मूलस्य च वाचकाः सामान्यशब्दा इति तदर्थानां वृक्षत्वव्यभिचाराद्विशेष्यभावो वृक्षश्च विशेषणं भवति । यदा तु कुतश्चित् प्रकरणादर्थाद्वा वृक्षाद्यर्था एवावसितवृत्तयो भवन्ति तदा न भवितव्यम् । ननु च वृक्षार्थावसितवृत्तित्वाद्वृक्षशब्दस्य तदा प्रयोग एव नोपपद्यते । उक्तार्थत्वात् । उक्तार्थानामप्रयोग इति वचनात् । ततश्च समासस्याप्रसङ्ग एव । तत् किं तन्निवृत्त्यर्थेनोभयग्रहणेन ? नैतदेवम् । क्वचिदुक्तार्थानामपि लोके प्रयोगो दृश्यते यथा ऽपूपौ द्वावानयेति । यदि तर्हि यत्रोभयोः प्रत्येकं विशेषणविशेष्यभाव स्तत्र समासेन भवितव्यमेवं सति प्रत्येकमुपसर्जनत्वं स्यात् । उभयोरपि विशेषणत्वात् । विशेषणस्येह सूत्रे प्रथमानिर्दिष्टत्वात् । ततश्चोत्पलनीलमित्यपि स्यात् । नीलोत्पलमिति तु सर्वदैवेष्यते । नैष दोषः । यस्मादेकतरम् प्रधानमितरदप्रधानम् । द्वयोः प्राधान्ये परस्परानुपकारित्वादसम्बन्धयोरेकत्र प्रयोगो न स्यात् । अप्राधान्येऽपि द्वयोः प्रधानापेक्षावतोर्नास्ति परस्परोपकारित्वमिति न स्यादेवैकत्र प्रयोगः । तस्मादेकमत्र प्रधानमपरं त्वप्रधानम् । यच्चाप्रधानं तदेवोपसर्जनसंज्ञं भवति । नेतरत् । अन्वर्थत्वादुपसर्जनसंज्ञाया उप समीपे विशेष्ये

स्वार्थं सृजति क्षिपतीति । नीलशब्दस्याप्रधानम् । तदर्थस्य गुणस्याप्राधान्यात् । उत्पलशब्दस्तु प्रधानम् । तदर्थस्य द्रव्यस्य प्राधान्यात् । तस्मान्नीलशब्द एवोपसर्जनम् । नोत्पलशब्द इति न भवति पूर्वोक्तदोषावसरप्रसङ्गः । यत्रोभावपि गुणशब्दौ तत्र पर्यायेणोपसर्जनभावः । यथा कुब्जखञ्जः खञ्जकुब्ज इति । अथ कुतोऽत्र द्रव्यस्य प्राधान्यमवसितम् ? उच्यते । यथा श्वेतं छागमालभेतेत्यस्यां देशनायां श्वेतगुणस्याभावे ऽन्यवर्णस्यापि च्छागस्यालम्भनाच्छागाभावे श्वेतगुणस्यान्यद्रव्यस्यानालम्भनाच्च । नहि च्छागाभावे पिष्टकपिण्डीमालभ्य याज्ञिकः कृती भवति । यदि च प्रधानं गुणः स्यात् तदा यथा छागाभावे पिष्टकपिण्डी नालभ्यते तथा श्वेतगुणाभावे ऽन्यगुणोऽपि च्छागो नालभ्यते । न च स नालभ्यते । तस्माद् द्रव्यमेव प्रधानम् । न गुण इति । ननु चोत्पलशब्दोऽपि नैव द्रव्यशब्दो जातिनिमित्तत्वात् । तत् कथमस्य प्राधान्यम् ? अथ जातिमतो द्रव्यस्याभिधानाज् जातिशब्दोऽपि द्रव्यशब्दोऽयमिति व्यवस्थाप्यते । एवं नीलशब्देऽप्यतिप्रसङ्गः । सोऽपि हि गुणनिमित्तो नीलगुणद्रव्यस्याभिधानाद् द्रव्यशब्दः स्यात् । नैष दोषः । जातिर्हि द्रव्यस्योत्पत्तेः प्रभृत्या विनाशात् स्वाधारं द्रव्यं नैव जहाति । अतो द्रव्यात्मभूतत्वाज्जातिस्तन्निमित्तकः शब्दो द्रव्यशब्दो व्यवस्थाप्यते । गुणाः पुनरपायिनोऽनपायिनो वा सत्येतस्मिन् द्रव्ये वर्त्तन्ते निवर्त्तन्ते च । तस्मान्नैते द्रव्यात्मभूता इति न तन्निमित्तशब्दो द्रव्यशब्दो व्यवस्थाप्यत इत्यलमतिप्रसङ्गेन । तक्षकः सर्प इति । ननु च तक्षकः सर्पस्य विशेषणं भवत्येव । तथाहि सर्प इत्युक्ते सर्पसामान्यं प्रतीयते । न सर्पविशेषः । तक्षकः सर्प इत्युक्ते सर्पविशेषोऽतक्षकाद् व्यावृत्तोऽवसीयते । तदयुक्तं प्रत्युदाहरणमेतत् । नैतदस्ति । उक्तं ह्येतत् । यत्रैकैकस्योभयत्र भावस्तत्र समास इति । नतु कदाचित् सर्पार्थस्य तक्षको विशेष्यो भवति । कथं न भवति ? तक्षकस्य सर्पत्वाव्यभिचारात् । ननु च तक्षकशब्दोऽस्ति नामधेयशब्दः । अस्ति च क्रियाशब्दस्तक्ष्णोतीति तक्षक इति । उभयोर्भिन्न एवार्थः । तत्र तक्षकशब्दस्यानेकप्रकारत्वेन प्रकारान्तरनिवृत्तये युज्यत एव सर्पस्य तक्षकोऽपि विशेष्यः । नैतदस्ति । न नामधेयस्य क्रियाशब्देन तुल्यमर्थाभिधानसामर्थ्यम् । अवयवार्थानुसारेण हि क्रियाशब्दोऽर्थं

बोधयति। समुदायरूपेण तु नामधेयम्। अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति तस्यां सत्यां क्रियाशब्दार्थविषयापेक्षा नोपजायत एव। लोहितस्तक्षक इति। भवति लोहितो विशेषणम्। नतु तक्षको विशेष्यम्। तस्य लोहितत्वाव्यभिचारात्। यदि तर्हि तक्षको न विशेष्या लोहितोऽपि विशेषणं न स्यात्। विशेषणस्य विशेष्यापेक्षत्वात्। नच शक्यं तक्षकाद् यदर्थान्तरं पटादिकं विशेष्यं तदपेक्षया लोहितस्य विशेषणत्वं परिकल्पयितुम्। एवं हि लोहिताद् यदर्थान्तरं तीव्रविषादिकं विशेषणं तदपेक्षं तक्षकस्यापि विशेष्यत्वं प्रसज्येत। तस्माद् विस्पष्टार्थमुभयोर्ग्रहणमित्यपरे।

५८। पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च।

पूर्वस्यैवायं प्रपञ्च इति। तेनैव सिद्धत्वात्। अस्ति ह्यत्रापि प्रत्येकं पूर्वोत्तरपदयोर्विशेषणविशेष्यभावः।

५९। श्रेण्यादयः कृतादिभिः।

श्रेण्यादिषु च्व्यर्थवचनमिति। अभूततद्भावे वर्त्तमानानां समासो यथा स्यात्। यदा हि श्रेण्यादिशब्दानामर्था अपरिनिष्पन्ना एव निष्पाद्यन्ते तदा समास इष्यते। यदा तु निष्पन्ना एव ते रूपान्तरेण क्रियन्ते तदा श्रेणयः कृता दण्डिताः सत्कृता वेत्येवमाद्यर्थविवक्षायां नेष्यते। कृतशब्दस्य दण्डितादिशब्दानामर्थेषु वृत्तिर्न सम्भवतीत्येतच्च नाशङ्कनीयम्। करोतेः क्रियासामान्यवाचित्वात्। अनेकार्थत्वाद्वा धातूनाम्। श्रेण्यादिषु च्व्यर्थवचन मित्यस्यायमर्थः। च्व्यर्थ उच्यते प्रत्याय्यते येन तच्व्यर्थवचनम्। कर्त्तव्यमिति। येन श्रेण्यादिषु समासकारणत्वेनोपात्तेषु च्व्यर्थता प्रतिपद्यते तद्व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्। बहुलग्रहणमिहानुवर्त्तते। तेन च्व्यर्थानामेव समासो भवतीति नाच्व्यर्थानाम्। च्व्यन्तानामित्यादि। च्वेर्विकल्पेन विधानाद् द्विविधाश्च्व्यर्थाः। च्व्यन्ता अच्व्यन्ताश्च। तत्र ये श्रेण्यादयोऽच्व्यन्तास्तेषामनेन समासः। च्व्यन्तानां तूर्यादिच्विडाचश्चेति ( १।४।६१ ) गतिसंज्ञायां सत्यां परत्वात् कुगतिप्रादय (२।२।१८) इति समासो भविष्यतीति।

६०। क्तेन नञ्विशिष्टेनानञ्।

अयं विशिष्टशब्दोऽस्त्येव सावधारण आधिक्ये वर्त्तमानो यथा देवदत्त-

यज्ञदत्तावाढ्यावभिरूपौ प्रेक्षावन्तौ। देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः। स्वाध्यायेनैवाधिक इति गम्यते। अन्ये तु गुणाः समाना एव भवन्ति। अस्ति च निरवधारण आधिक्ये वर्त्तमानो यथा देवदत्तयज्ञदत्तावाढ्यावभिरूपौ प्रेक्षावन्तौ। देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः। स्वाध्यायेनाधिक इति गम्यते। अन्ये तु गुणाः समाना भूयांसो वा। ते न विवक्षिता भवन्ति। यद्यपि चाभिन्नरूपमेव वाक्यद्वयमेतत् तथापि प्रकरणादेः कुतश्चिदर्थभेदो गम्यते यथाराच्छब्दे दूरान्तिकार्थभेदः। तत्र यदि निरवधारण आधिक्ये वर्त्तमानो विशिष्टशब्दो गृह्येत तदा सिद्धश्च तदभुक्तश्चेत्यत्रापि स्यात्। अस्त्यत्र नञाधिकं क्तान्तम्। तस्मात् सावधारण आधिक्ये वर्त्तमानं विशिष्टशब्दं परिगृह्याह नञेव विशेषो यस्येत्यादि। प्रकृत्यादिकमिति। आदिशब्देन प्रत्ययोपसर्गयोः परिग्रहः। अनञिति। अविद्यमानो नञ् यस्मिन् क्तान्ते तदनञ्। कृतश्च तदकृतश्चेति। कथं पुनरेकमेव वस्तु कृतं स्यादकृतञ्च? अवयवधर्मेण समुदायस्य तथा व्यपदेशाददोषः। कृतभागसम्बन्धात् कृतम्। अकृतभागसम्बन्धात् तदेवाकृत मित्युच्यते। अथवा यदर्थं कृतं तत्रासामर्थ्यादकृतं यथा पुत्रकार्य्यासामर्थ्यात् पुत्रोऽप्यपुत्र इति। यदि नञेव विशेषो यस्य सर्वमन्यत् प्रकृत्यादिकं तुल्यं तेन समास एवं सति यस्य नुड्प्यधिक इडागमो वा तेन सह समासो न भवतीत्याह नुडिटावित्यादि। यत्तु नञ्विशिष्टं क्तान्तं तदभक्तौ नुडिटौ। अतस्तद्ग्रहणेन गृह्येते। अतो नास्य भेदकौ तौ। अभेदकावित्यर्थः। तेन तदधिकमपि नञ्विशिष्टमेव भवतीति तेन समासो भवत्येव। अशिताऽनशितेनेति। तस्मान्नुड्चीति (६।३ ७४) नुट्। क्लिष्टाक्लिशितेनेति। क्लिशः क्त्वानिष्ठयोरिति (७।२।५०) पक्ष इट्। अनञिति शक्यमकर्त्तुम्। यदि स नञ् समस्येत तदा नञ्विशिष्टता नोपपद्यते। द्वयोरपि नञ्सम्बन्धात्। तस्माद् नञ्विशिष्टग्रहणादेवानञ् समस्यत इत्येषोऽर्थो लभ्यत इत्यनञ्ग्रहणमनर्थकम्। तत् क्रियते विस्पष्टार्थम्। कृतापकृतादीनामित्यादि। कृतापकृतप्रभृतीनामुपसंख्यानं प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्। बहुलग्रहणमिहानुवर्त्तते। तेन कृतापकृतादीनामपि समासो भवतीति। कृताप

कृतमिति। तदेकदेशस्येष्टस्य करणात् कृतम्। अपकृतञ्च तदेकदेशस्यानभिमतस्य करणात्। भुक्तविभुक्तमिति। भुक्तन्त्वभ्यवहृतत्वाद् विभुक्तञ्चाशोभनत्वात्। विशब्दोऽत्राशोभनत्वं प्रतिपादयति विरूपवत्। अथवा भुक्तञ्च तदेकदेशस्याभ्यवहृतत्वाद् विभुक्तञ्च विशेषेणाभ्यवहृतत्वाद् भुक्तविभुक्तम्। एवं पीतविपीतम्। गतञ्च तत् प्रत्यागतञ्चेति गतप्रत्यागतम्। यातञ्च तत् पूर्वमनुयातञ्च पश्चाद् यातानुयातम्। क्रयाक्रयिकेति। महान् क्रयः क्रयशब्देनोच्यते। अल्पस्तु क्रयिकाशब्देन। क्रयावयवसम्बन्धात् क्रयः। क्रयिकावयवसम्बन्धात् क्रयिका। क्रयश्चासौ क्रयिका चेति क्रयाक्रयिका। अन्येषामपि दृश्यत इति (६।३।१३७) दीर्घः। एवं पुटश्चासौ पुटिका चेति पुटापुटिका। फलञ्च तत् फलिका चेति फलाफलिका। मानञ्च तदुन्मानिका चेति मानोन्मानिका। समानाधिकरणाधिकार इत्यादि। अत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनन्तु पूर्ववदेव।

### ६१। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः।

पूज्यमानवचनैरिति वचनादित्यादि। पूज्यमानत्वं ह्येवमुत्तरपदस्य भवति यदि सदादयः पूजावचना भवन्ति। नान्यथा। तस्मात् पूज्यमानग्रहणात् सदादयः पूजावचना विज्ञायन्ते। अतएव सच्छब्देन प्रशस्यमानचोग्रहणं न भवति। नहि तौ पूजामाहतुः। उत्कृष्टा गौः कर्दमादिति। उद्धृतेत्यर्थः। अथ कथं महाद्रुमो महोदधिरिति समासः? नह्यत्र पूजा गम्यते। किन्तर्हि? प्रमाणातिरेक उत्तरपदार्थस्य। यद्यप्येवं तथापि बहुलग्रहणानुवृत्तेर्भविष्यति।

### ६२। वृन्दारकनागकुञ्जरैः पूज्यमानम्।

वृन्दारकादयो जातिशब्दाः। ते चोपमानत्वे सति पूजावचना भवन्ति। तत्र व्याघ्रादेराकृतिगणत्वादुपमितं व्याघ्रादिभिरित्येवं (२।१।५६) सिद्धे सामान्यप्रयोगेऽपि यथा स्यादित्येवमर्थोऽयमारम्भः। पूज्यमानमिति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्त इति। न ह्यन्यथा पूज्यमानत्वमुपपद्यत इति भावः। सुसीमो नाग इति। ननु च विशेषणं विशेष्येणेति वर्त्तते। नच

नागादन्यः सुसीमोऽस्ति । संज्ञा ह्येषा नागस्यैव । एवं तर्हि प्रत्युदाहरणदिगियं वृत्तिकृता दर्शिता । इदन्त्वत्र प्रत्युदाहरणम् । देवदत्तो नागो यस्मात् मूर्खं इति ।

## ६३ । कतरकतमौ जातिपरिप्रश्ने ।

जातिपरिप्रश्न एव व्युत्पाद्येते इति । किंयत्तदोर्निर्द्धारणे (५।३।९२) इत्यनुवर्त्तमाने वा बहूनामित्यादिना ( ५।३।९३ ) । स्यादेतत् । कतरशब्द-विशेषणार्थं जातिपरिप्रश्नग्रहणमित्याह कतरशब्दोऽपीत्यादि । तदेव ज्ञापय-तीति । यदि तर्हि कतमशब्दो जातिपरिप्रश्न एव वर्त्तमानो गृह्यते जातिपरिप्रश्नग्रहणमनर्थकं स्यात् । विनापि तेन यथोक्तया नीत्या कतरकतम-शब्दौ जातिपरिप्रश्न एव वर्त्तमानौ ग्रहीष्येते । तथाचेत्यादि । यतएव कतमशब्दस्य जातिपरिप्रश्नादन्यत्रापि वृत्ति रेवञ्च कृत्वा भवतां देवदत्तः कतम इति प्रत्युदाहरणमुपपद्यते । अन्यथा तन्नोपपद्येत । तस्य जातिपरिप्रश्नाद-न्यत्राप्रवृत्तेः ।

## ६४ । किं क्षेपे ।

किंसखेति । अनङ् सौ (७।१।९३) वित्यनङादेशः । अथ किंराजेत्यादौ राजाहःसखिभ्यष्टच् (५।४।९१) गोरतद्धितलुकीति (५।४।९२) टच् समासान्तः कस्मान्न भवतीत्याह किमः क्षेप इत्यादि । अत्र न (५।४।५९) पूजनादित्यतो नेत्यनुवर्त्तते ।

## ६५ । पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कय-णीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः ।

विशेषणमित्यादिना समासे प्राप्ते वचनमिदं परनिपातार्थम् । गुणशब्दा ह्येते । तत्र यदि तेन समासः स्यात् तदैषां पूर्वनिपातः प्रसज्येत । अथ धूर्त्तग्रहणं किमर्थम् ? यावता कुत्सनशब्दोऽयम् । कुत्सितानि कुत्सनैरितिएवं (२।१।५३) समासः सिद्ध इत्याह धूर्त्तग्रहणमकुत्सार्थमिति । शब्दप्रवृत्तिनिमित्त-कुत्सायां कुत्सितानि कुत्सनैरिति (२।१।५३) समासो विहितः । अयन्तु जातेः स्वयमकुत्सिताया धूर्त्तसम्बन्धे विवक्षिते समासो विज्ञायते । न कुत्सायाम् ।

## ६६ । प्रशंसावचनैश्च ।

रूढ़िशब्दाः प्रशंसावचना गृह्यन्त इति । त्रिप्रकारा हि प्रशंसाशब्दाः । केचिज्जातिशब्दाः परार्थे प्रयुज्यमानाः प्रशंसामाचक्षते यथा सिंहो देवदत्त इति । केचिद् गुणशब्दा गुणगुणिसम्बन्धेन प्रशंसावचना भवन्ति यथा रमणीयो ग्रामः शोभनः पाचक इति । केचिद्रूढ़िशब्दा मतल्लिकादयः । तेषां प्रशंसैव शब्दार्थः । तदिह वचनग्रहणात् प्रशंसायामेव ये वर्त्तन्ते ते गृह्यन्ते रूढ़िशब्दाः । गोप्रकाण्डमिति । शोभनः प्रशस्तो गौरित्यर्थः । योगविभागोऽसन्देहार्थः । यदि पूर्वयोग एव प्रशंसावचना गृह्येरं स्तदा सन्देहः स्यात् किं पोटादिभिः प्रत्येकं वचनमभिसम्बध्यते ऽथ प्रशंसयेति । पोटादिभिः सम्बन्धे तत्पर्य्यायैरपि समासः स्यात् ।

## ६७ । युवा खलतिपलितवलिनजरतीभिः ।

खलत्यादिभिः समानाधिकरणैरित्यादि । यद्येवं किमर्थं जरतीभिरिति स्त्रीलिङ्गेन निर्देशः । जरद्भिरित्येवं नाम निर्देशः कर्त्तव्यः स्यात् । नहि जरतीशब्देन स्त्रीलिङ्गेन युवशब्दस्य पुंलिङ्गस्य सामानाधिकरण्यमुपपद्यत इत्याह जरतीभिरिति स्त्रीलिङ्गेन निर्देश इत्यादि । कथं पुनरनेन निर्देशेनैषा परिभाषा शक्यते ज्ञापयितुम् ? यद्येषा परिभाषा न स्यात् तदा जरतीभिरित्येवं निर्देशोऽनर्थकः स्यात् । तथाच समानाधिकरणाधिकारात् समानाधिकरणेन जरतीशब्देनायं समासो विज्ञायते । नच तेन स्त्रीलिङ्गेन पुंसि वर्त्तमानस्य युवशब्दस्य सामानाधिकरण्यं भवति । तदेष निर्देशः कथमर्थवान् भवति ? यद्येषा परिभाषाऽवतिष्ठते । तस्यां हि सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्य ग्रहणं भवतीत्युपपद्यते । युवतिजरतीशब्दयोः सामानाधिकरण्यम् । तस्मिंश्च सति तयोः समासः । तदेवं जरतीभिरिति निर्देशो ज्ञापयत्येषा परिभाषास्तीति । नन्वेवमपि जरत्या समास उच्यमाने जरता न प्राप्नोति युवजरन्निति । नैष दोषः । वृत्त्यन्तरे हि जरद्भिरिति पठ्यते । उभयथाप्याचार्य्येण शिष्याः प्रतिपादिता इत्युभयं सिध्यति ।

## ६८ । कृत्यतुल्याख्या अजात्या ।

तुल्यपर्य्यायाश्चेति । अथ स्वरूपग्रहणं कस्मान्न विज्ञायते ? एवमन्यते ।

न्त्यइत्यर्थग्रहणम् । अत स्तत्साहचर्य्यात् तुल्य इत्यर्थस्यैव ग्रहणं युक्तम् । तत्रार्थे कार्य्यासम्भवात् तद्वाचिनां समासो विज्ञायत इत्याख्याग्रहणं तुल्यनामधेयपरिग्रहार्थम् । अन्यथा गौर्वाहीक इत्यत्रापि स्यात् । गोशब्दस्येह साहश्यार्थत्वात् । सर्वं एव हि शब्दाः परपदार्थे प्रयुज्यमानाः साहश्यं गमयन्ति । आख्याग्रहणे तु क्रियमाणे गोशब्दोऽत्र तुल्यनामधेयं न भवतीति समासाभावः । भोज्योष्णमित्यादावुष्णादयः शब्दा गुणवचनाः । तत्रासत्यस्मिन् योगे विशेषणसमासे सति तेषां पूर्वनिपातः स्यात् । अतः परनिपातार्थं आरम्भः । तुल्यमहानिति । यद्यप्यत्र सन्महदित्यादिना (२।१।६१) समासः प्राप्नोति तथापि परत्वादनेनैव भवति । तुल्याख्यस्यावकाशः तुल्यश्वेत इति । तस्य चातुल्याख्यायामवकाशो महापुरुष इति । भोज्य ओदन इति । ओदन शब्दोऽत्र जातिवचनः ।

## ६८ । वर्णो वर्णेन ।

विशेषणं विशेष्येणेति वर्त्तते । तत्र यदि द्वयोरपि वर्णशब्दयोः स्वरूपग्रहणमिह स्याद् विशेषणविशेष्यभावो नोपपद्येत । अभिन्नार्थत्वात् । नहि तदेव देवदत्तस्य विशेषणत्वं विशेष्यत्वञ्चोपपद्यते । अथाप्येकस्य स्वरूपग्रहणं स्यादपरस्यार्थग्रहणम् ? एवमप्येकः सामान्यवाची स्याद् वर्णशब्दः । द्वितीयस्तु विशेषवाची कृष्णादिशब्दः । ततश्च प्रत्येकं विशेषणत्वं विशेष्यत्वञ्च न स्यात् । यत्र च तदुभयमस्ति तत्र समास इति प्रागुभयग्रहणस्य प्रयोजनमुक्तम् । तस्मादुभयत्राप्यर्थग्रहणं विज्ञायत इत्याह वर्णविशेषवाचीत्यादि । कृष्णसारङ्गो लोहितसारङ्ग इति । ननु च कृष्णशब्दो लोहितशब्दश्चावयवे वर्त्तते । सारङ्गशब्दस्तु समुदाये यथा शबलशब्दः । तत् कथमवयववृत्तेः कृष्णादिशब्दस्य समुदायवृत्तिना सारङ्गादिशब्देन सामानाधिकरण्यमित्याह अवयवद्वारेणेत्यादि । कृष्णशब्द उपलक्षणम् । लोहितशब्दोऽप्येवमेव समानाधिकरणो भवति । कृष्णावयवसम्बन्धात् समुदाय एव कृष्ण इत्युच्यते । लोहितावयवसम्बन्धाल्लोहित इति । अतएव गौणत्वादत्र सामानाधिकरण्यस्य विशेषणं विशेष्येणेत्यादिना (२।१।५७) समासो न प्राप्नोतीतीदमारभ्यते । अथ सारङ्गशब्दस्यापि पक्षे पूर्वनिपातः कस्मान्न भवति ? अनुपसर्जनत्वात् । उक्तं ह्येतदुपसर्जनमिति

महत्याः संज्ञायाः करणं मन्वर्थसंज्ञा यथा विज्ञायेतेति। तेनाप्रधानमुपसर्जनमिति नचात्र समुदायोऽप्रधानम्। किं तर्हि? प्रधानमेव। अवयवानान्तु तदर्थत्वादप्राधान्यम्। अतोऽवयववचनस्यैव कृष्णशब्दादेरुपसर्जनत्वम्। न समुदायवचनस्य सारङ्गादिशब्दस्य।

## ७०। कुमारः श्रमणादिभिः।

तैः सह स्त्रीलिङ्ग एव कुमारीशब्दः समस्यत इति। नतु पुंलिङ्ग इत्यवधारणेन दर्शयति। नहि पुंलिङ्गस्य स्त्रीलिङ्गेन सामानाधिकरण्यमुपपद्यत इति भावः। तैरुभयथेति। स्त्रीलिङ्गः पुंलिङ्गश्च। कथं पुनः पुंलिङ्गैः समास उच्यमानः स्त्रीलिङ्गैः स्यादित्यत आह प्रातिपदिकग्रहण इति। गतार्थम्।

## ७१। चतुष्पादो गर्भिण्या।

चतुष्पाद इति चत्वारः पादा यासां ताश्चतुष्पादः। पादस्य लोपोऽहस्त्यादिभ्य (५।४।१३८) इत्यन्तस्य लोपः। चतुष्पाज्जातिरिति वक्तव्यमिति। चतुष्पादो जातिवचना एव गर्भिण्या समस्यन्त इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। पोटादि (२।१।६५) सूत्रादिह जातिग्रहणमनुवर्त्तते। तेन चतुष्पाज्जातिवाच्येव गर्भिण्या समस्यते। नान्यदिति।

## ७२। मयूरव्यंसकादयश्च।

मयूरव्यंसक इति। मयूरश्चासौ व्यंसकश्चेति मयूरव्यंसकः। व्यंसकशब्दस्य पूर्वनिपाते प्राप्ते परनिपातार्थः पाठः। एवं चात्र मयूर व्यंसकादीनां यवनमुण्डपर्य्यन्तानाम्। छन्दसि हस्तेगृह्येत्यादि। समासेऽनञ्पूर्वे (७।१।३७) क्त्वो ल्यप्। भाषायान्तु हस्तेगृहीत्वा पुनर्दत्त्वेत्येवं भवति। एहीडादयोऽन्यपदार्थ इति। एहि ईड इति यत्र कर्मणि वर्त्तते तदुच्यत एहीडमिति। एवमेहियवमिति। एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा। एवमपेहिवाणिजा प्रेहिवाणिजा। एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता। एवमपेहि स्वागता। प्रोह कटमिति यस्यां सा प्रोहकटा। एवं प्रोहकर्द्दमादय आहरवसनान्ताः। क्रन्धि विचक्षणेति यस्यां क्रियायां सा क्रन्धिविचक्षणा। उद्धरोत्-

सृजेति। तिङन्तयोः समासः। आख्यातमाख्यातेन क्रियासातत्य इत्येवं सिद्धे ऽसातत्यार्थं वचनम्। उद्धरोत्सृजेति यस्यां क्रियायां सा उद्धरोत्सृजा। क्रियाप्रधानश्चायं समासः। उत्पतनिपता। उच्चमविषमा। एवमुद्धरोत्सृजेत्यादिकमसातत्यविषयमेव। उच्चावचमिति निपात्यते। उदक् चावाक् चेति विग्रहः। उच्चैश्च नीचैश्चेति विग्रहोच्चनीचमिति निपात्यते। आचितश्चोपचितश्चेति विग्रहाचाचोपचम्। आचितञ्च पराचितञ्चेत्याचपराचम्। निश्चितञ्च प्रचितञ्चेति निश्चप्रचम्। न किञ्चन अकिञ्चनम्। स्नात्वाकालकः। पीत्वास्थिरकः। भुक्तासुहित इत्येतेषामन्तोदात्तार्थः पाठः। ल्यब्भावश्च निपात्यते। प्रोष्यपापीयानिति। ऐकपद्यमैकस्वर्य्यञ्च समासाद् भवति। एवमुत्पत्यपाकलादीनाम्। निपत्यरोहिणी। निषद्यश्यामा। अपेहिप्रसवा। इहपञ्चमी। इहद्वितीयेति। ऐकपद्यमैकस्वर्य्यञ्च समासे भवति। जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधातीति। जहीति लोण्मध्यमपुरुषैकवचनम्। तदन्तं कर्मणा च बहुलं समस्यत आभीक्ष्ण्ये गम्यमाने समासेन चेत् कर्त्ता चाभिधीयते। जहि जोड़मित्याभीक्ष्ण्येन य आह स उच्यते जहिजोड़ इति। जहिस्तम्ब इति। लोट्। सिप्। हन्तेर्ज (६।४।३६) इति जादेशः। जोड़ादेरत्र कर्मभावः। आख्यातमित्यादि। तिङन्तं तिङन्तेन सह समस्यते क्रियासातत्ये गम्यमाने। अश्नीत पिवतेत्यसकृद् यत्रोच्यते तत्राश्नीतपिवतेति प्रयुज्यते। क्रियाप्रधानश्चायं समासः। एवं पचतभृज्जतेत्येवमादयो वेदितव्याः। भिन्धि लवणं भिन्धि लवणमिति यत्राभिधीयते सा भिन्धिलवणा। एवं पचलवणेति।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य
प्रथमः पादः॥ २।१॥

---

अथ

# काशिकाविवरणपञ्जिका।



## द्वितीयाध्यायस्य

## द्वितीयः पादः।

### १। पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे।

सामर्थ्यादेकदेशवचना इति। यदि हि पूर्वादयः शब्दा एकदेशवचना न स्युस्तदोत्तरपदस्यैकदेशित्वं न गम्येत। एकदेशिन एकदेशापेक्षत्वात्। तस्मात् सामान्योक्ता अपि पूर्वादयः शब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्त इति विज्ञायते। एकाधिकरणग्रहणमेकदेशिनो विशेषणमित्यस्यार्थं विस्पष्टीकर्त्तुमाह एकञ्चेत्यादि। एकमित्येकसंख्याविशिष्टं द्रव्यमित्यर्थः। एकद्रव्यमित्यनेनाधिकरणशब्दोऽत्र द्रव्ये वर्त्तमान उपात्त इति दर्शयति। नन्वेकदेशिनेति तृतीयान्तमेतत्। एकाधिकरण इत्येतत् सप्तम्यन्तम्। तत् कथं तयो र्भिन्नविभक्तिकयोः सामानाधिकरण्येन विशेषणविशेष्यभाव उपपद्यते? कथञ्च न स्यात्। भिन्नार्थत्वात्। नैतदस्ति। छन्दोवत् सूत्राणि भवन्तीत्यतो व्यत्ययो (३।१।८५) बहुलमिति बहुलवचनात्। एकाधिकरण इत्यत्र तृतीयार्थ एवैषा सप्तमी। न सप्तम्यधिकरणे (२।३।३६) चेत्यनेन। अतो नास्ति भिन्नार्थत्वमित्यदोषः। षष्ठीसमासापवादोऽयं योग इति। एकदेशिनेति वचनात् पूर्वादयः शब्दा एकदेशवचना आश्रीयन्ते। सम्बन्धिशब्दा हि नियतमेव प्रतियोगिनमुपस्थापयन्ति। तत्रावयवावयविसम्बन्धे सत्येकदेशिनः षष्ठ्यामुपजनितायां षष्ठीति (२।२।८) समासः प्राप्नोति। अतस्तदपवादोऽयं योग इति। पूर्वकाय इत्यत्र काय एकदेशी। एकद्रव्यञ्च। एकसंख्यायुक्तत्वात्। पूर्वं नाभेः कायस्येति। नाभेरिति दिग्योगलक्षणा पञ्चमी। नाभेरुपरिष्टाद् यत् पूर्वं तत् कायस्येत्येषोऽर्थो विवक्षितः। तेनात्र नाभिरेकदेशिनी न

भवति। किं तर्हि ? अवधिभूता। तद्वाची नाभिशब्दः पञ्चम्यन्तो न समस्यते। यस्त्वेकदेशो कायस्तद्वाचिनः कायशब्दस्य भवत्येव समासः। सत्यपि पूर्वशब्दस्य सापेक्षत्वे कायस्य प्राधान्यात् प्रधानस्य च सापेक्षस्यापि समासो भवतीति ज्ञापितमेतदुपमितं व्याघ्रादिभिः (२।१।५६) सामान्याप्रयोग इत्यत्र। पूर्वञ्छात्राणामामन्त्रयस्वेति। अत्र बहुत्वसंख्याविशिष्टैकदेशिनश्छात्रा इति न भवति समासः। ननु चात्र परत्वान्न निर्द्धारण इति (२।२।१०) षष्ठीसमासनिषेधो भविष्यति। तत् किमेवाधिकरणग्रहणेन ? नैतदस्ति। यदि तर्ह्यामन्त्रयस्वेत्येतन्नापेक्ष्यते तदा पूर्वञ्छात्राणामित्येतावद्वाक्यं परिसमाप्यते। तदा निर्द्धारणाभावाद् नायं तस्य प्रतिषेधस्य विषय इत्यसत्येकाधिकरणे ऽनेकसंख्येनाप्येकदेशिना समासः स्यात्। अथ सर्वं हि वाक्यं क्रियया परिसमाप्यत इति पूर्वं छात्राणामित्यत्र यां काञ्चित् क्रिया मध्याहृत्य निर्धारणं परिकल्प्येतैवं पूर्व्वं कायस्येत्यत्रापि निर्द्धारणं स्यात्। अस्ति ह्यत्राप्यपकर्षणक्रिया निर्द्धारणहेतुः। तथाच तस्यैव योगस्य विषये क्रियारभ्यमाणोऽयं योगस्तदपवादः स्यात्। नचोत्सर्गापवादयोर्विप्रतिषेध उपपद्यते। तत् कथं परत्वान्न निर्द्धारण (२।२।१०) इति प्रतिषेधः प्रवर्त्तते ? संख्याविसायपूर्वस्येत्यादि। यदयं संख्याविसाय (६।३।११०) पूर्वस्याह्नस्येत्याह ततो ज्ञापकादवसीयते सर्वेणैकदेशिनाऽह्नः समासो भवतीति। अन्यथा हि सायपूर्वत्वमह्नशब्दस्य नोपपद्यत इत्ययुक्तमेतद् वचनं स्यात्।

## २। अर्द्धं नपुंसकम्।

समप्रविभागे त्वर्द्धशब्दो नपुंसकमाविष्टलिङ्गस्तस्येदं ग्रहणमिति। यद्येवं समग्रहणमेव कर्त्तव्यम्। नैवं शक्यमनेकार्थत्वात् समशब्दस्य। तथाहि स निम्नोन्नतादिरहितेऽपि देशे वर्त्तते यथा समे देशे यजेतेति। निम्नोन्नतादिरहिते देशे यजेतेत्यर्थः। अथापि समप्रविभाग इत्युच्यत एवमपि गुरुत्वं स्यात्। तस्मान् नपुंसकग्रहणं कर्त्तव्यम्। न कर्त्तव्यम्। अर्द्धमिति नपुंसकलिङ्गेन निर्देशादेव हि नपुंसकस्य ग्रहणं भविष्यति। नैतदस्ति। असति हि नपुंसकग्रहणे शब्दरूपापेक्षया नपुंसकनिर्देश इति विज्ञायेत यथा स्वमज्ञातिधना-

ख्यायाम् (१।१।३५)। बन्धुनि (६।१।१४) बहुव्रीहाविति च। ततश्चार्द्धशब्दस्य नपुंसकलिङ्गताऽनाश्रिता स्यात्। एवमनपुंसकलिङ्गेऽपि समस्येत। तस्मादर्द्धशब्दस्य नपुंसकलिङ्गत्वमाश्रयितुं नपुंसकमिति वक्तव्यम्। अर्द्धपिप्पलीति। परवल्लिङ्गमिति (२।४।२६) स्त्रीलिङ्गता। अथात्र गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वत्वं कस्मान्न भवति? अनुपसर्जनत्वात्। उपसर्जनत्वञ्चैकविभक्ति (१।२।४४) चेति। अत्र विभाषा छन्दसीत्यतो (१।२।३६) विभाषाग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा प्रतिपादिता। ग्रामार्द्ध इति ग्रामस्यैकदेश इत्यर्थः। अर्द्धं पशोर्देवदत्तस्येति। देवदत्तशब्देन सह समासो न भवति। अनेकदेशित्वाद् देवदत्तस्य। नह्यसावेकदेशी। किन्तर्हि? स्वामी। यस्त्वेकदेशी पशुशब्द स्तेन सह भवत्येव समासः। सत्यपि पशुशब्दस्य सापेक्षत्वे पशोः प्राधान्यात् समासो भवत्येव। अर्द्धपशुर्देवदत्तस्येति।

### ३। द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्।

अन्यतरस्यांग्रहणात् सोऽपि षष्ठीसमासो भवतीति। ननु च पूरणप्रत्ययान्ता एते द्वितीयादयः शब्दाः। तत्र पूरणेत्यादिना (२।२।११) समासनिषेधेन भवितव्यम्। तत् कथं सोऽपि भवतीत्याह। पूरणेत्यादि। यद्यत्र षष्ठीसमासस्य प्रतिषेधः स्यात् तदान्यतरस्यांग्रहणमनर्थकं स्यात्। वाक्यस्य तु महाविभाषयैव सिद्धत्वादिति भावः। द्वितीयं भिक्षाया इति। भिक्षाया द्वितीयो भाग इत्यर्थः। द्वितीयं भिक्षाया भिक्षुकस्येति। भिक्षुकेण सहात्र समासो न भवति। नह्यसावेकदेशी। किं तर्हि? स्वामी। तुर्यशब्दश्चतुरश्छयतावाद्यक्षरलोपश्चेति (५।२।५१, वा) यत्प्रत्ययान्तः पूरणार्थस्य प्रतिपादकः।

### ४। प्राप्तापन्ने च द्वितीयया।

द्वितीयासमासे प्राप्त इति द्वितीयाश्रितेत्यादिना (२।१।२४) समासविधानात् सोऽपि भवतीति। अपिशब्दादयमपि भवति। प्राप्तजीविक इति। एकविभक्ति (१।२।४४) चेत्यादिनोपसर्जनत्वम्। ह्रस्वत्वन्तु गोस्त्रियोरुपसर्जनस्येति (१।२।४८)। अत्र च परवल्लिङ्गमित्यादिना (२।४।२६) जीविकाया यल्लिङ्गं तत् समुदायस्य कस्मान्न भवति? द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो

वक्तव्य (२।४।२६, वा) इति वचनात् । तेन प्राप्तापन्नयोर्यल्लिङ्गं तत् समुदायस्य भवति । अथ यदा प्राप्ता जीविकामिति विगृह्य समासः क्रियते तदा किमुदाहरणम् ? प्राप्तजीविकेति । टापः श्रवणं (A) कस्मान्न भवति ? स्त्रियाः पुंवदिति (६।३।३४) योगविभागात् पुंवद्भावेन टापो निवर्त्तितत्वात् ।

## ५ । कालाः परिमाणिना ।

सामर्थ्यात् परिमाणवचना इति । एवं ह्युत्तरपदस्य परिमाणिवाचित्वं गम्यते यदि कालशब्दाः परिमाणवचना भवन्ति । नान्यथा । तस्मात् काला इत्यविशेषाभिधानेऽपि सामर्थ्यात् परिमाणवचनाः कालशब्दाः समस्यन्त इति विज्ञायते । ननु च कालः परिमाणमेव न भवति । अनवधित्वात् । तत् कथं तदभिधायिनः शब्दाः परिमाणवचना भवन्ति ? नैष दोषः । यद्यपि मुख्यस्य परिमाणस्य वाचका न भवन्ति गौणस्य तु भवन्त्येव । इह हि मुख्यं परिमाणत्वं कालस्य मासादेर्न भवतीति सामर्थ्यात् परिच्छेदहेतुमात्रम् परिमाणसाधर्म्यमुपादायोपचारेण कालाः परिमाणत्वेनाभिमताः । मासादयो ऽपि हि जातादेः सम्बन्धिनीरादित्यगतीर्गमयन्ति । अतो भवन्ति परिच्छेद-हेतवः । षष्ठीसमासविषये योगारम्भ इति । परिमाणपरिमाणिसम्बन्धे हि परिमाणिवाचिनः षष्ठ्या भवितव्यम् । यत्र च षष्ठी भवति स षष्ठी-समासस्य विषयः । तेनायं षष्ठीसमासस्य विषये योग आरभ्यते । मासजात इत्यत्र जातः परिमाणी । तस्य परिमाणं मासः । द्व्यहजात इति द्वयोरह्नोः समाहार इति द्व्यहः । राजाहःसखिभ्यष्टच् (५।४।९१) । अह्नष्टखोरेवेति (६।४।१४५) टिलोपः । न संख्यादेः समाहार (५।४।८९) इत्यह्नादेशप्रतिषेधः । द्व्यह्नो जातस्य द्व्यहजातः । अथ काला इति बहुवचननिर्देशः किमर्थः ? स्वरूपविधिनिरासार्थं इति चेत् ? नैतदस्ति । नहि स्वरूपग्रहणे सत्युत्तर-

(A) एतत्तु भाष्यानुक्तम् । तत्र चकारेण अकारप्रश्लेषोऽनुमितः । तथाहि "नायमनुकर्षणार्थश्चकारः । किं तर्हि ? अत्वमनेन विधीयते &.=" (2. 2. 4. भाष्यम्) । द्वितीयया च इति भट्टोजिमते च्छेदः । कैयटमतानुसारी नागोजिस्तु प्राप्तापन्ने इत्युत्तरमकारप्रश्लेष इत्याह । "सौत्रत्वाच्च निर्देशस्य प्रकृतिभावः प्रगृह्याश्रयो न भवतीति कैयटः ।

पदस्य परिमाणिवाचित्वं गम्यते । कालशब्दस्यापरिमाणवाचित्वात् । तस्मात् परिमाणिग्रहणादेव कालविशेषवाचिनां मासादीनां ग्रहणं भविष्यति । एवन्तर्हि बहुवचननिर्देशोऽयं मात्राधिक्येन सूत्रप्रबन्धस्यार्थाधिक्यसूचनार्थः । तथाचोक्तम् । इङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेनाचार्य्याणामभिप्राया लक्ष्यन्त इति । तेन संख्यापूर्वपदस्त्रिपदोऽप्ययं परिमाणिना तत्पुरुषसमासो भवतीत्येषोऽर्थो लभ्यते । तेन द्व्यह्नजात इत्येवमादि सिद्धं भवति । द्वे अहनी जातस्येति विगृह्य त्रिपदे तत्पुरुषे कृते जातशब्द उत्तरपदे परतः पूर्वयोः पदयो स्तद्धितार्थोत्तरपदसमाहारे (२।१।५१) चेति द्व्यवयवस्तत्पुरुषो भवति । पूर्ववट् टच् । अह्नोह्न एतेभ्य (५।४।८८) इत्यह्नादेशः ।

## ६ । नञ् ।

नञो ञकारो नलोपो नञ इति (६।३।७३) विशेषणार्थः । पामनपुत्रादिषु मा भूत् । लोमादिपामादिपिच्छादिभ्यः शनेलचः (५।२।१००) । अथाब्राह्मण इति किंप्रधानोऽयं समासः ? उत्तरपदार्थप्रधानस्तत्पुरुषो यथा राजपुरुष इति । पूर्वपदार्थप्रधानोऽव्ययीभावो यथा ऽमक्षिकमिति । अन्यपदार्थप्रधानो बहुव्रीहि र्यथाऽब्राह्मणको देश इति । यद्येव मब्राह्मणमानयेत्युक्ते ब्राह्मण-मात्रस्यानयनं प्राप्नोति । अथ निवृत्तिपदार्थकोऽयं ब्राह्मणशब्दः । सा च निवृत्तिः स्वाभाविकी नञा द्योत्यत इति मतम् । एवं च सत्यभावएवा-स्यार्थ इत्यब्राह्मणमानयेत्युक्ते न कस्यचिदानयनं प्राप्नोति । नैष दोषः । सर्वं हि पदं स्वार्थे प्रयुज्यमानं प्रयोगप्रतिज्ञानमपेक्षते ।

तथाचोक्तम्—

"आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया" । इति ।

तत्र द्विविधं ज्ञानम् । सम्यक् मिथ्या चेति । उभयमप्येतद् ब्राह्मणशब्दः प्रवर्त्तयति । तत्र सम्यग् ज्ञानपूर्वके ब्राह्मणशब्दप्रयोगे नास्ति नञो व्यापारः । नहि तत्र नञा किञ्चित् क्रियते । मिथ्याज्ञानपूर्वके तु विद्यत एव तस्य व्यापारः । तत्र हि तेन मिथ्याज्ञानप्रभवतापरस्याख्यायते । मिथ्याज्ञानं च दुष्टेन्द्रियहेतुकम् । तच्च सादृश्याद्दृते न सम्भवतीति प्रतिषेधे सत्युत्तरपदार्थ-

सदृशः समासार्थो जायते । तथाचोक्तम् । नञिव युक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिरिति ( प, ७५ ) । तस्मादब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशे क्षत्रियादौ प्रतीतिर्भवतीति न भवति पूर्वोक्तदोषावसरप्रसङ्गः ।

## ७ । ईषदकृता ।

ईषद् गुणवचनेनेति वक्तव्यमिति । ईषदित्येतदव्ययं गुणवचनेन समस्यते । न सर्वेणाकृदन्तेनेत्येतद्रूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । विभाषेत्येनुवर्त्तते । सा च व्यवस्थितविभाषा विज्ञायते । तेन गुणवचनेनैव समासो भविष्यति । नान्येन । ईषद् गार्ग्य इति गार्ग्यशब्दोऽयं जातिवचनो न गुणवचनः । नन्वकृतेत्युच्यते । तत्र ईषत्पीत ईषदुन्नत इत्यादि न सिध्यति । पीतादिशब्दस्य कृदन्तत्वात् । नैष दोषः । अव्युत्पन्ना ह्येते पीतादिशब्दा वेदितव्याः । नतु कृदन्ताः ।

## ८ । षष्ठी ।

कृद्योगा चेत्यादि । कृद्योगलक्षणा षष्ठी समस्यत इति व्याख्येयम् । तत्रेदं व्याख्यानम् । यदयं क्तेन च पूजाया मधिकरणवाचिना च कर्मणि च तृजकाभ्यां कर्त्तरि कर्त्तरि चेति (२।२।१२-१६) निषेधमारभते तज् ज्ञापयति कृद्योगा या षष्ठी सा समस्यत इति । अन्यथा प्रतिषेधारम्भोऽनर्थकः स्यात् । प्राप्त्यभावात् । इध्मव्रश्चन इति । करणे ल्युट् । कृत्यल्युटो बहुलमिति (३।३।११३) कर्त्तरि वा । कर्त्तृकर्मणोः (२।३।६५) कृतीति कर्मणि षष्ठी । पलाशशातन इति । शदेर्ण्यन्तस्य शदेरगतौ त (७।३।४२) इति दकारस्य तकारः । पूर्ववल्लुट् । षष्ठी च । किमर्थमित्युच्यते । यावता षष्ठीत्यनेनैव कृद्योगलक्षणाया अपि षष्ठ्याः समासः सिद्ध एवेत्यत आह प्रतिपदविधाना चेत्यादि । सुबोधम् ।

## ९ । याजकादिभिश्च ।

चकारोऽनुक्तसमुच्चयार्थः । तेन तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यं न वक्तव्यम् भवति । अनेनैव सिद्धत्वात् । तस्मिन् स्थिता स्तत्स्थाः । प्रकृतस्यान्यस्याभावात् तदित्यनेन गुणा एव प्रत्यवमृश्यन्ते । तेन गुणात्मन्येव

ये गुणा वर्त्तन्ते न कदाचिद् द्रव्यात्मनि तैः षष्ठी समस्यते। यद्यपि नास्त्येव हि स गुणो यो द्रव्ये न वर्त्तते सर्वस्य गुणस्य द्रव्याश्रितत्वात् तथापि गुणशब्दास्तु केचित् मतुब्लोपादभेदोपचाराद्वा तद्वति द्रव्ये वर्त्तमाना गुणमाधारानुगतं गमयन्ति यथा शुक्लः पटो लोहितः कम्बल इति। अपरे त्वाश्रयाद् विभक्तं द्रव्यं प्रत्यनुपसर्जनीभूतं गुणमाहु र्यथा चन्दनस्य गन्धः कपित्थस्य रस इति। तस्मादभिधानशक्तिव्यापारापेक्षया तत्स्थैरिति विशेषणं युक्तम्। तदेतदुक्तं भवति। ये गुणाः स्वशब्दैर्द्रव्यं प्रत्यनुपसर्जनभावापन्ना एव प्रत्याय्यन्ते तैः सह षष्ठी समस्यत इति चन्दनस्य गन्ध श्चन्दनगन्धः कपित्थस्य रसः कपित्थरसः। गन्धादयो हि स्वशब्दैराधारविभक्ता एव प्रत्याय्यन्ते। न तु कदाचिदाश्रयानुगता द्रव्यं प्रति विशेषणीभूताः।

## १०। न निर्धारणे।

मनुष्याणां क्षत्रियः शूरतम इति। यतश्च (२।३।४१) निर्धारणमिति षष्ठी। प्रतिपदविधाना चेत्यादि। षष्ठी शेष (२।३।५०) इति सामान्यलक्षण-विहितां षष्ठीं त्यक्त्वा याऽन्या विशेषलक्षणविहिता षष्ठी सा प्रतिपदविधाना। सा च षष्ठी न समस्यत इत्येतद्रूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। नेति योगविभागः क्रियते। तेन प्रतिपदविधाना षष्ठी न समस्यत इति। यद्येवं कथं गृहस्वामी विद्यादायादः पृथ्वीश्वर इति। प्रतिपदविधाना ह्येषा षष्ठी। स्वामीश्वराधिपतिदायादेत्यादिना (२।३।३९) विशेषलक्षणेन तस्या विधानात्। नैष दोषः। शेषलक्षणैव ह्यत्र षष्ठी। नहि स्वाम्यादिसूत्रेण (२।३।३९) षष्ठी विधीयते। किं तर्हि? सप्तमी। सा तु सप्तमी षष्ठीं बाधिष्यत इति चकारेण पुनः षष्ठीप्रतिप्रसवः क्रियते। नह्येवंविधा षष्ठी प्रतिपदविधाना भवति। अतएव न निर्धारण इति निषेधो विधीयते। यतश्च निर्धारण मित्यत्रापि (२।३।४१) चकारेण सैव शेषलक्षणा षष्ठी प्रतिप्रसूयते। अन्यथा ह्ययमपि प्रतिपदविधानैव षष्ठीति समासो न स्यात्। ततश्च न निर्द्धारण इति प्रतिषेधोऽनर्थकः स्यात्। सर्पिषो ज्ञानमिति। ज्ञोऽविदर्थस्येति (२।३।५१) करणे षष्ठी।

## ११ । पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।

छात्राणां पञ्चम इति । तस्य पूरणे (५।२।४८) डट् । नान्तादसंख्यादेर्मट् (५।२।४९) । समुदायसमुदायिसम्बन्धे शेषलक्षणा षष्ठी । एवं बलाकायाः शौक्ल्यं काकस्य कार्ष्ण्य मित्यत्र गुणगुणिसम्बन्धे शेषलक्षणैव षष्ठी वेदितव्या । ब्राह्मणस्य कर्त्तव्यमित्यत्र कृत्यानां कर्त्तरि (२।३।७१) वेति षष्ठी । अथ कथं गोविंशतिरिति षष्ठीसमासः ? यावता संख्याया गुणत्वात् प्रतिषेधेन भवितव्यम् । नैष दोषः । यदयं शतसहस्रान्ताच्च (५।२।११९) निष्कादित्याह तज् ज्ञापयति संख्यायाः समासो भवतीति । नहि तेन विना शतसहस्रान्तता निष्कस्य प्रातिपदिकस्य सम्भवति । तव्यता सानुबन्धकेन समासो भवत्येवेति । निरनुबन्धकपरिभाषया तस्याग्रहणात् । ब्राह्मणकर्त्तव्य मिति । गतिकारकोपपदात् कृदिति (६।२।१३९) प्रकृतिस्वरेणान्तस्वरित मुत्तरपदं भवति । यदि तर्हि निरनुबन्धकेनापि समासः स्यात् प्रकृतिस्वरे कृते प्रत्ययस्वरेण मध्योदात्तः स्यात् । स चानिष्टः । अतो निरनुबन्धकेन समासः प्रतिषिध्यते । नतु सानुबन्धकेन । किञ्च स्यादिति । एवं मन्यते । क्रियमाणेऽप्येतस्मिन् प्रतिषेधे विशेषणसमासेनात्र भवितव्यमेव । तदवश्यम्भाविनि समासे यदि षष्ठी समासः स्यात् तदा को दोषः स्यात् ? यत्परिहृतयेऽयं षष्ठीसमासः प्रतिषिध्यत इति ? पूर्वनिपातानियम इत्यादिना दोषमाह । यदि षष्ठी समासः स्यात् तदा द्वयोरपि पदयोः प्रथमानिर्दिष्टत्वादुपसर्जने सति पक्षे विशेषणस्यापि पूर्वनिपातःस्यात् । स च नेष्यते । विशेषणसमासे सति विशेषणस्यैव समासशास्त्रे प्रथमानिर्दिष्टत्वात् पूर्वनिपातो भवतीति न भवत्येष दोषप्रसङ्गः ।

## १२ । क्तेन च पूजायाम् ।

मतिबुद्धिपूजार्थेभ्यश्चेति (३।२।१८८) वक्ष्यतीति । क्तमिति वाक्यशेषः । तस्येदं ग्रहणमिति । एतेन मतिबुद्धीत्यादिना (३।२।१८८) सूत्रेण यो विहितः क्तस्तस्य पूजाया मन्यत्र च सर्वस्य विहितस्येदं ग्रहणम् । न केवलं पूजायां

यो विहित स्तस्यैवेष्यत इत्यभिप्राय: । अतएवाह पूजाग्रहणमुपलक्षणार्थ-मिति । कस्योपलक्षणार्थम् ? मतिबुद्धीत्यादौ सूत्रे (३।२।१८८) निर्दिष्टार्थस्य य: क्तो विधीयते तस्य मत्यादे: । तेन न केवलं पूजायां य: क्तो विहित स्तेन षष्ठीसमासप्रतिषेधो भवत्यपितु मतिबुद्ध्योरपि यो विहितस्तेनापि राज्ञां मत इति । क्तस्य च वर्त्तमान इति (२।३।६७) षष्ठी । पूजायां किम् ? छात्रस्य हसितं छात्रहसितम् । नपुंसके भावे (३।३।११४) क्त: । शेषलक्षणा षष्ठी ।

## १३ । अधिकरणवाचिना च ।

इदमेषामासितमिति । आस्यतेऽस्मिन्नित्यधिकरणे क्त: । अधिकरण-वाचिनश्चेति (२।३।६८) षष्ठी । एवं पीतमित्यादावपि । अधिकरणवाचिनेति किम् ? छात्रस्य हसितं छात्रहसितमिति ।

## १४ । कर्मणि च ।

उभयप्राप्तौ कर्मणीत्यस्या: (२।३।६६) षष्ठ्या इदं ग्रहणमिति । एतच्च पुन: कर्त्तरि चेति (२।२।१६) प्रतिषेधाद् विज्ञायते । यदि हि कर्मणि या काचित् षष्ठी तस्या: सर्वस्या इदं ग्रहणं स्यात् तदा कर्त्तरि चेति ( २।२।१६ ) पुन: प्रतिषेधं न कुर्य्यात् । अनेनैव सिद्धत्वात् । यत्र हि कर्त्तरि तृजकौ विहितौ तत्र नियोगत: कर्मणि षष्ठ्या भवितव्यम् । तस्मात् कर्त्तरि (२।२।१६) चेति पुन: प्रतिषेधवचनादुभयप्राप्तौ कर्मणि या षष्ठी विहिता तस्या अत्र ग्रहणमवसीयते । उभयप्राप्तौ कर्मणीति (२।३।६६) षष्ठ्या इह ग्रहणादिक्षुभक्षन: पलाशशातन इक्षुभक्षिकां मे धारयसीति समासनिषेधो न भवति ।

## १५ । तृजकाभ्यां कर्त्तरि ।

भवत: शायिकेत्यादौ भावे पर्य्यायार्हणोत्पत्तिषु ( ३।३।१११ ) ण्वुज् भवतीति कर्त्तृकर्मणो: कृतीति (२।३।६५) कर्त्तरि षष्ठी । तृचा योगे कर्त्तरि षष्ठी नास्ति । तेनैव कर्त्तुरभिहितत्वात् । तर्हि किमर्थं तृचो ग्रहणमित्याह तस्मादित्यादि । इक्षुभक्षिकां मे धारयसीति पूर्ववण् ण्वुच् । अत्रेक्षुशब्दात् कृद्‌योगे कर्मणि षष्ठी । म इति कर्त्तरि षष्ठी कृद्‌योगेव । उभयप्राप्तौ

( २।३।६६ ) कर्मणीत्यत्र न प्रवर्त्तते । अकाकारयोः प्रतिषेध इति (२।३।६६, वा ) वचनात् ।

## १६ । कर्त्तरि च ।

इतरत्र व्यभिचाराभावादिति । तृचि । सामर्थ्यादकस्येदं विशेषणम् । कर्त्तृग्रहणमित्यत्र हेतुः । सम्भवव्यभिचारे हि विशेषणविशेष्यभावो भवति । नहि तृच् कर्त्तारं व्यभिचरति । तस्य कर्त्तर्य्येव विधानात् । अकस्तु व्यभिचरति । तस्य भावेऽपि विधानात् । अतः सामर्थ्यादेकस्यैव विशेषणं कर्त्तृग्रहणम् । न तृचः । अपां स्रष्टेति । अपामिति कर्मणि षष्ठी । स्रष्टेति तृच् । व्रश्चादिना (८।२।३६) षत्वम् । सृजिदृशो (६।१।५८) र्झल्यमकितीत्यमागमः । ननु चेत्यादि । याजकादिपाठाद् भवितव्यमेवात्र समासेनेत्यभिप्रायः । सम्बन्धिशब्दस्येत्यादिना परीहारः । होतृशब्देन सम्बन्धिशब्देन साहचर्य्याद् भर्त्तृशब्दोऽपि सम्बन्धिशब्दस्तत्र गृह्यते । अयन्तु क्रियाशब्दो बिभर्त्तीति भर्त्ता । सक्तूनां पायक इत्यातो युक् (७।२।३३) चिण्कृतोरिति युक् । अथ किमर्थं तृचः सानुबन्धकस्योच्चारणम् ? तृणो निवृत्त्यर्थमिति चेन् नैतदस्ति । तद्योगे नलोकाव्ययनिष्ठेत्यादिना (२।३।६९) षष्ठीप्रतिषेधात् । एवं तर्ह्येतदेव ज्ञापकं तृन्योगेऽपि क्वचित् षष्ठी भवतीति । तेन भीष्मः कुरूणां भयशोकहर्त्तेत्यादि सिद्धं भवति । (B)

## १७ । नित्यं क्रीड़ाजीविकयोः ।

उद्दालकपुष्पभञ्जिकेति । रोगाख्यायां ण्वुल् (३।३।१०८) बहुलमित्यनुवर्त्तमाने संज्ञायामिति (३।३।१०९) ण्वुल् । उद्दालकपुष्पादिषु कर्मणि षष्ठी । दन्तलेखको नखलेखक इति । ण्वुल्तृचाविति ( ३।१।१३३) ण्वुल् । क्रीड़ायां विषये षष्ठीति सूत्रेण (२।२।८) महाविभाषया विकल्पेन समासे प्राप्ते जीविकायाञ्च कर्त्तरि चेति (२।२।१६) निषेधे प्राप्ते ऽयमारम्भः । तत्र नित्यग्रहणं किमर्थम् ? जीविकार्थम् । इतरत्र त्वारम्भसामर्थ्यान्नित्योऽयं भविष्यति।

---

B) क्वचिद् भयशोकहन्तेति पाठः ।

जीविकायान्त्वसति नित्यग्रहणे महाविभाषाधिकाराद् विकल्पेन समासः स्यादिति तदर्थं नित्यग्रहणं कृतमुत्तरार्थञ्च ।

## १८। कुगतिप्रादयः ।

कुशब्दोऽव्ययं परिगृह्यत इति । अलिङ्गसंख्यत्वादव्ययत्वम् । ननु निपातेषु पाठात् । नह्ययं तत्र पठ्यते । न द्रव्यवचन इति । पृथिव्यादौ यो द्रव्ये वर्त्तते तस्यात्र ग्रहणन्न भवति । कुत एतदित्याह गत्यादिभिः साहचर्य्यादिति । गतार्थम् । कोष्णमिति । ईषदर्थे चेति कोः (६।३।१०५) कादेशः । कवोष्णमिति । कवञ्चोष्ण (६।३।१०७) इति कवादेशः । कदुष्णमिति । कोः कत् (६।३।१०१) तत्पुरुषे ऽचीति कत् । कुपुरुष इति पापार्थे । दुष्कृतमिति । दुस् कृच्छार्थे वर्त्तते । इदुपधस्य (८।३।४१) चाप्रत्ययस्येति षत्वम् । सुस्तुतमिति सुशब्दोऽतिशये वर्त्तते । अतिस्तुतमिति अतिरतिक्रमणे । आबद्धमिति । आङ् क्रियायोगे मर्य्यादायां वा । पर्य्यादयो ग्लानाद्यर्थ इति पर्य्यादिराकृतिगणः । पर्य्यध्ययन इति परिग्लानोऽध्ययनायेत्यर्थः । वाससी इवेत्यादि । सर्वधातुभ्योऽसुन्नित्यनु (उण् ; ४।६२८) वर्त्तमाने वसेर्णिच्चेत्यसुन् (उण्, ४।६५७) प्रत्ययान्तो वासःशब्दो व्युत्पादितः । वस्त्रशब्दोऽ प्यौणादिकष्ट्रन्प्रत्ययान्तः । तेन द्वावप्येतौ ञ्नित्यादिर्नित्यमित्या (६।१।१९७) द्युदात्तौ । प्रादिप्रसङ्ग इत्यादि । प्रादिग्रहणे यः प्रसङ्गः समासशास्त्रस्य तत्र कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । लक्षणादिष्वर्थेषु कर्मप्रवचनीयसंज्ञा भवति । नच ते ऽर्थाः समासेन गम्यन्त इत्यनभिधानात् कर्मप्रवचनीयानां समासो न भवति । यत्र ते ऽर्था गम्यन्ते तत्र भवत्येव समासः । अतिस्तुतमिति ।

## १९। उपपदमतिङ् ।

एधानाहारको व्रजतीति । तुमुन्ण्वुलौ (३।३।१०) क्रियायां क्रियार्थायामिति ण्वुल् । एतयोर्योगयोः सुप्सुपेति नाभिसम्बध्यत इति । ननु चास्मिन्नेव योगे तदनभिसम्बन्धो युक्तो यत्रातिङ्ग्रहणमस्ति । ननु पूर्वसूत्रेण । नहि तत्रातिङित्येतदस्ति । एवं मन्यते । अतिङिति योगविभागः क्रियते ।

स च पूर्वसूत्रस्यापि शेषभूतो विज्ञायते। नन्वेवमप्यतिङिति प्रथमान्तेन निर्देशात् प्रथमान्तस्यैव सुबित्यस्य निवृत्तिर्युक्ता। न तृतीयान्तस्य सुपेत्यस्य। नैतदस्ति। सामान्येन सुबधिकारनिवृत्त्युपलक्षणार्थत्वाद् युक्ता द्वयोरपि निवृत्तिः। तेनेत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति। पूर्वयोगेऽप्यतिङ्ग्रहणाद् गत्युपसर्गसंज्ञकानां कृद्भिः सह प्राक् सुबुत्पत्तेः समासो भविष्यतीत्येतदुपपन्नं भवति। तथाहि तत्र गतयःकृद्भिः सह समस्यन्ते। अस्मिंस्तु योगेऽतिङ्ग्रहणात् कारकोपपदानां कृद्भिःसमासः सुबुत्पत्तेः प्रागुपपन्नो भवति। तथाह्यत्र कारकं कृद्भिः सह समस्यन्ते प्राक् सुबुत्पत्तेः। समासे सति यदिष्टं सिध्यति तद्दर्शयन्नाह अश्वक्रीतीति। अत्राश्वः करणं कारकम्। तद्वाचिनोऽश्वशब्दस्य कर्त्तृकरणे कृता (२।२।३२) बहुलमिति समासः। सुबुत्पत्त्यां सत्यां यदि स समासः स्यात् तदा प्रागन्तरङ्गत्वाट्टाप् स्यात्। ततः सुप्। पश्चात् समासः। ततश्च क्रीतात् करणपूर्वादिति (४।१।५०) ङीष् न स्यात्। अत इत्यधिकारात्। ङीषस्त्ववकाशो धनेन क्रीतं क्रयणं यस्याः। प्राक् सुबुत्पत्तेः समासे सति टाम् न क्रियते। प्रथमतः समास एव भवति। तेनादन्तत्वाद् ङीष् सिद्धो भवति। कथं पुनरश्वादेरुपपदत्वम्? यावता द्वितीयधात्वधिकारे सप्तम्या निर्देशः कृतः। नैष दोषः। नहि द्वितीयधात्वधिकारे यत् सप्तम्या निर्दिष्टं तदेवोपपदसंज्ञं भवति। अपितु यदप्युपोच्चारितम्पदं तदप्युपपदं भवत्येव। तदपि शास्त्र इतरेतरान्योन्योपपदाच्चेत्यादौ सूत्रे (१।३।१६) क्वचिदाश्रीयत एव। तस्मादश्वादिकमप्युपोच्चारितपदत्वादुपपदमिह विवक्षितम्। पदत्वं पुनस्तस्य पद्यते गम्यतेऽनेनार्थ इति कृत्वा। नतु सुबन्तत्वात्। इह सुपोऽसम्भवात्। सुबनुत्पत्तेः प्राक् समासाद्। यदि तर्हि यदुपोच्चारितं पदं तदपीहोपपदं गृह्यते तदातिप्रसङ्गः स्यात्। राजश्रितमित्यत्रापि प्राक् सुबुत्पत्तेः समासप्रसङ्गात्। ततश्च पदत्वाभावान्नलोपो न भवति। असर्वविषयत्वादस्य ज्ञापकस्येत्यदोषः। न ह्यनेन सर्वत्रगतिकारकोपपदानां कृद्भिः प्राक् सुबुत्पत्तेः समासो भवतीति ज्ञाप्यते। किं तर्हि? क्वचिदेवेष्टविषये। कथमेतज् ज्ञायते? तत्पुरुषे कृति बहुलमिति (६।३।१४) कृदन्त उत्तरपदे सप्तम्या अलुग्विधानात्। यदि तर्हि सर्वत्रैव गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः स्यात्

तदा सप्तम्याः कृदन्तउत्तरपदेऽलुग्विधानं नोपपद्यते विलेशय इत्यादौ। सप्तम्या असम्भवात्; तस्मात् क्वचिदेव प्राक् सुबुत्पत्तेः समासो न सर्वत्रेति। एवञ्च कृत्वा सा हि तस्य धनक्रीता प्राणिभ्योऽपि गरीयसीत्यादौ टाबन्तेन समास उपपन्नो भवति।

## २०। अमैवाव्ययेन।

स्वादुङ्कारं भुङ्क्ते इति। स्वादुमीति (३।४।२६) णमुल्। स्वादुमीत्येतस्मादेव मान्तनिर्देशादुपपदस्य मकारान्तत्वं निपात्यते। यदि पूर्वेणैव समासे सिद्धे नियमार्थं वचन मेवञ्च सति सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकार-करणं नियमार्थो भविष्यति। तत् किमर्थ मेवकारकरण मित्याह एवकारकरण मित्यादि। किमर्थं पुन स्तदुपपदविशेषणार्थं क्रियत इत्यत आह अमैव तुल्यविधान मित्यादि। येन वाक्येनामैव प्रत्ययो विधीयते नतु प्रत्ययान्तरं तेन यदुपपदं निर्दिश्यते तदमैव तुल्यविधानम्। तस्यैव समासो यथा स्यादित्येवमर्थमेवकारकरण मुपपदविशेषणार्थं क्रियते। स च समासः प्रत्यासत्तेरमैव भवति न प्रत्ययान्तरेणेति विज्ञायते। अग्रे भुक्त्वा। अग्रे भोज-मिति। अत्राग्रेशब्द उपपदं विभाषाग्रेप्रथमपूर्वेष्वित्यमा (३।४।२४) क्त्वाप्रत्ययेन च तुल्यविधानमिति न समस्यते। अव्ययग्रहणं स्पष्टार्थम्। नह्यनव्यय ममन्तमस्ति यन्निवृत्त्यर्थमव्ययग्रहण मर्थवद्भवति।

## २१। तृतीयाप्रभृतीन्यन्यतरस्याम्।

पर्य्याप्तो भोक्तुमिति। पर्य्याप्ति (३।४।६६) वचनेष्वलमर्थेष्वित्यत्र शकधृष-ज्ञाग्लाघटरभलभेत्यादेः (३।४।६५) सूत्रात् तुमुन्ग्रहणानुवृत्ते स्तुमुन्प्रत्ययः।

## २२। क्त्वा च।

अलं कृत्वा खलु कृत्वेति। अलंखल्वोः प्रतिषेधयोः (३।४।१८) प्राचां क्त्वा। स च तृतीयाप्रभृतिभ्यः पूर्वः।

## २३। शेषो बहुव्रीहिः।

उपयुक्ताद् योऽन्य इति। अभिहितादन्य इत्यर्थः। यत्रान्यः समासो नोक्त इति। यत्रान्या समाससंज्ञा न विहितेत्यर्थः। चित्रगुरिति। अत्र

बहुव्रीहित्वे सति बहुव्रीहौ प्रकृत्या पूर्वपदमित्येष (६।२।१) विधिर्भवति उन्मत्तगङ्गमिति । अन्यपदार्थे च (२।१।२१) संज्ञाया मित्यव्ययीभावः । असति हि शेषग्रहण इहापि बहुव्रीहिः स्यात् । ननुच बहुव्रीहौ प्राप्ते ऽव्ययीभावस्त्वारभ्यमाणस्तस्यैव बाधको भविष्यति । तत् कुतो बहुव्रीहि-प्रसङ्गः ? प्राक् कडारात् परं कार्य्यमित्यस्मिन् पक्ष इदं प्रत्युदाहरण मुपन्यस्तम् । तत्र हि पक्षे यदि शेषग्रहणं न क्रियेत ततोऽन्यपदार्थे च (२।१।२१) संज्ञायामिति वचनप्रामाण्यादव्ययीभावः स्यात् । परत्वाद्बहु-व्रीहिरित्येके । अयन्तु पक्षो वृत्तिकारेण नाश्रित इत्ययुक्त मेतत् । तस्मादा कडारादेका (१।४।१) संज्ञेत्यस्मिन् पक्षे व्यक्तिः पदार्थ इत्येतद्दर्शन-माश्रित्येदं प्रत्युदाहरण मुपन्यस्तम् । व्यक्तौ हि पदार्थे प्रतिलक्ष्ये लक्षणं प्रवर्त्तते । अत्रासति शेषग्रहणे यदेतद्विषयं लक्षणं तदकृतार्थमित्यवश्यं तेन प्रवर्त्तितव्यम् । एकसंज्ञाधिकाराच्च यौगपद्यं न सम्भवतीति वचन-प्रामाण्यादुभयप्रसङ्ग उभे अपि पर्य्यायेण स्यातामित्यपरे ।

## २४ । अनेकमन्यपदार्थे ।

अनेकग्रहणं सुबित्यनेन सम्बध्यते । प्रथमान्तत्वात् । न सुपेति तृतीया-न्तेन । प्राप्तोदको ग्राम इत्यादीनि द्वितीयादिविभक्त्यर्थेषु यथाक्रमं बहुव्रीहे रुदाहरणानि । प्रथमार्थे तु न भवतीति । अनभिधानात् । नहि वृष्टे देवे गत इति वाक्याद् योऽर्थः प्रतीयते स वृष्टदेवशब्दात् प्रतीयते । अनेकग्रहणं किमिति । एवं मन्यते । अनेकग्रहणमित्येकस्य मा भूदित्येव मर्थं स्यात् । एतच्चायुक्तम् । यथैव हि सुप्सुपेत्यधिकारात् समर्थपरिभा-षोपस्थानाच्च तत्पुरुष एकस्य न सम्भवति तथा बहुव्रीहिरपि न भविष्य-तीति किमर्थमनेकग्रहणमित्याह बहुनामपि यथा स्यादिति । सुप्सुपेत्य-धिकारात् समर्थपरिभाषोपस्थानाच्चानेकस्यैव समासे लब्धे सत्यनेकग्रहणं प्रचुरतरार्थं विज्ञायते । तेन बहूनामपि भवति । चित्रग्वादेः सकाशात् सुसूक्ष्मजटकेशादिषु प्रचुराणि पदानि भवन्ति । अथान्यपदार्थग्रहणं किमर्थम् । बहुव्रीहितत्पुरुषयोर्विषयविभागार्थम् । अविशेषेण तत्पुरुष उच्यमानोऽ-

नन्यपदार्थे कृतावकाशो ऽन्यपदार्थे परत्वाद्बहुव्रीहिणा यथा बाध्येत वीरपुरुषको ग्रामश्चित्रगुर्देवदत्त इति। बहुव्रीहिः समानाधिकरणानामि-त्यादि। समानाधिकरणानां पदानां बहुव्रीहिर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थमिदमित्याह। व्यधिकरणानां मा भूदिति। तत्रेदं व्याख्यानम्। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति। नच व्यधिकरणानां बहुव्रीहौ कृते विवक्षितार्थाभिधानमस्ति। नहि पञ्चभि-र्भुक्तमस्येति वाक्याद् योऽर्थः प्रतीयते स पञ्चभुक्तशब्दात्। तस्मादनभिधानाद् व्यधिकरणानां बहुव्रीहिर्न भविष्यति। यत्र त्वभिधानमस्ति तत्र वैयधि-करण्येऽपि भवत्येव समासः कण्ठेकाल इति। अव्ययानाञ्चेति। बहुव्रीहि-र्भवतीति सम्बन्धनीयम्। चकारादनव्ययानाञ्च क्वचित्। असमानाधि-करणार्थमिदम्। उच्चैर्मुखमिति। उच्चैःशब्दस्याव्ययस्यासत्त्ववाचित्वात् सत्त्ववाचिना मुखशब्देन नास्ति सामानाधिकरण्यम्। तथापि गमकत्वात् समासो भवत्येव। अनव्ययानामुदाहरणं कण्ठे स्थितः कालो यस्येति स कण्ठेकाल इत्येवमादि। कथं पुनस्तुल्येऽपि वैयधिकरण्ये पदानां क्वचिद्बहुव्रीहे-र्गमकत्वं भवति? क्वचिन्न भवतीति? शब्दशक्तिस्वभावात्। शब्दशक्तयश्च प्रति-नियताश्रयाः क्वचिदेव प्रवर्त्तन्ते। न सर्वत्र। सप्तम्युपमानपूर्वपदस्योत्तरपदलोप-श्चेति। सप्तम्यन्तं पूर्वपदं यस्योत्तरपदस्य तत् सप्तमीपूर्वपदम्। तस्य परेण पदान्तरेण समासो भवति। तस्य च सप्तम्यन्तपूर्वपदस्योत्तरपदलोपो भवति। कण्ठेस्थित इति विगृह्य सप्तमीति (२।१।४०) योगविभागात् समासः। तत्पुरुषे (६।३।१४) कृति बहुलमित्यलुक्। कण्ठेस्थितः कालोऽस्येति कण्ठेकालः। अत्र सप्तम्यन्तपूर्वपदस्य समानाधिकरणत्वात् सिद्ध एव बहुव्रीहिः। उत्तरपदलोपस्तु विधीयते। एवमन्यत्रापि वेदितव्यम्। उपमानं पूर्वपदं यस्योत्तरपदस्य तत् पदान्तरेण समस्यते। तस्योपमानपूर्वपदस्योत्तरपदलोपो विधीयते। उष्ट्रमुखमिव मुखमस्योष्ट्रमुखः। खरमुखः। अत्रोष्ट्र उपमानं पूर्वपदं मुखस्य। ननु चोष्ट्रमुखमुपमानं देवदत्तमुखस्य। नतूष्ट्रः। उपमानावयवत्वा-दुष्ट्रोऽप्युपमानमुच्यत इत्यदोषः। समुदायविकारषष्ठ्याश्चेति। उत्तरपद-लोपश्चेत्यनुवर्त्तते। समुदायषष्ठ्यन्ताद् विकारषष्ठ्यन्ताच्च पूर्वपदात् परं

यदुत्तरपदं तत् पदं पदान्तरेण समस्यते । तस्य च समुदायविकार-षष्ठ्यन्तपूर्वपदस्योत्तरपदस्य लोपो भवति । केशानां सङ्घातः केशसङ्घातः । स चूडास्येति केशचूड इत्यत्र समुदायसमुदायिसम्बन्धे षष्ठी । सुवर्णस्य विकारोऽलङ्कारोऽस्येत्यत्र विकारविकारिसम्बन्धे षष्ठी । प्रादिभ्य इत्यादि । उत्तरपदलोपश्चेत्यनुवर्त्तते । धातोर्जातं निष्पन्नं धातुजम् । प्रादिभ्यः पूर्वपदेभ्यः परं यद्धातुजमुत्तरपदं पतितशब्दादि तदन्तस्य बहुव्रीहिर्भवति । तस्य चोत्तरपदस्य वा लोपः । नञोऽस्त्यर्थानामित्यादि । नञ उत्तरेषां विद्यमानादीनामित्यर्थः । इह सुबिति वर्त्तते । अस्तिशब्दश्चायं तिङन्तः । अस्तिक्षीरेत्येवमादि न सिध्यतीति यो मन्येत तं प्रत्याह सुबधिकार इति । अस्तिक्षीरादेः समास उच्यते प्रतिपद्यते येन तदस्तिक्षीरादेर्वचनम् । व्याख्यानं कर्त्तव्यमित्यर्थः । तत्रेदं व्याख्यानम् । उपसर्गविभक्तिस्वरप्रति-रूपकाश्च निपाता भवन्तीति विभक्तिप्रतिरूपकोऽयमस्तिशब्दो निपातो न तिङन्तः । तेनास्तिक्षीरा ब्राह्मणीत्यादि सिद्धम्भवति ।

## २५ । संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ।

उपदशा इति । बहुव्रीहौ संख्येये ( ५।४।७३ ) डजबहुगणादिति डच् समासान्तः । टिलोपश्च । दशानां समीपे ये वर्त्तन्ते ते तथोच्यन्ते । ते पुनर्नवैकादश वा । पूर्वपदार्थप्रधानोऽयं समासः । यद्येवं कस्तर्ह्यव्ययी-भावस्यास्य च विषयविभागः । सोऽप्यव्ययीभावोऽव्ययस्य समीपे वर्त्तमान-स्याव्ययं (२।१।६) विभक्तीत्यादिना पूर्वपदार्थप्रधान एव विधीयते । उच्यते यदा समीपिनः प्राधान्यं तदा बहुव्रीहिः । यदा तु समीपस्य प्राधान्यं तदाव्ययीभाव इत्येष विषयविभागः । उपविंशा इति । पूर्ववड् डच् । ति विंशतेर्डितीति (६।४।१४२) टिलोपः । आसन्नदशा इति । दशानामासन्ना आसन्नदशाः । ते च पूर्ववन्नवैकादश वा । अदूरदशा इति । दशानामदूरा ये ते पुनः पूर्वोक्ता एव । अधिकदशा इति । दशानामधिकास्ते पुनरेकाद-शादयः । द्वित्रा इति । द्वौ वा त्रयो वेति विग्रहः । वार्थे चायं समासः । वार्थश्चायं संशयः । न विकल्पः । यदि वार्थ इह विकल्प आश्रीयते

ततो यदा द्वौ भवत स्तदा बहुवचनं न स्यात्। तस्मात् संशयोऽत्र वार्थः। संशयिते वार्थे बहुवचनं भवति यथा कति भवतः पुत्राः। उक्तञ्च भाष्ये ऽविज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यमिति। तत् कथम्? संशयज्ञानस्योभय पक्षपरामर्शित्वेन बह्वर्थविषयत्वात्। उभयपक्षापरामर्शत्वेन संशय एव न स्यात्। अथवा पञ्चैवात्र सदा भवन्ति। न कदाचित् द्वौ त्रयो वेति। तथाच द्वित्रा इत्युक्ते पञ्चैवेति गम्यते। सैषा पञ्चाधिष्ठाना वागिति ततो युक्तं बहुवचनम्। यदि तर्हि वार्थेऽयं समास स्तस्यार्थस्यान्यपदार्थत्वात् पूर्वेणैव सिद्ध समासः। न सिध्यति। मत्वर्थे हि पूर्वयोगः। अमत्वर्थार्थोऽयं योगः। अथवा प्रथमार्थं वर्जयित्वा ऽन्यत्र विभक्त्यर्थे पूर्वेण समासः। प्रथमार्थमिदं वचनम्। त्रिचतुरा इति। चतुरोऽच्प्रकरणे चतुरस्त्र्युपाभ्यामुप संख्यानमित्यच् (५।४।७७,वा) समासान्तः। द्विदशा इति। द्विर्दशेति विग्रहः। सुजर्थेऽयं समासः। दशसम्बन्धिनी याऽऽवृत्तिर्दशशब्देन लक्ष्यमाणा सा द्विशब्देनाख्यायते। सुजर्थश्च प्रत्ययार्थो नान्यपदार्थ इति पूर्वेण न सिध्यति। अथवा प्रथमार्थेऽपि चायम्। अमत्वर्थेऽपि। अतः पूर्वेण न सिध्यति। समास एव सुजर्थं गमयितुं समर्थ इति वृत्तौ सुज् न प्रयुज्यते। अधिका विंशतिर्गवामिति। विंशतिशब्दोऽत्र संख्यान एव वर्त्तते। न तु संख्येये द्रव्ये।

## २६। दिङ्नामान्यन्तराले।

दक्षिणपूर्वेति। प्रथमार्थेऽप्ययं समास इष्यते। अमत्वर्थेऽपि। ततपूर्वेण न सिध्यतीत्ययममत्वर्थ आरम्भः। प्रतिपदविधानार्थश्च। विभाषा दिक्समास (१।१।२८) इत्यत्र दिशां यः समासः प्रतिपदविहितस्तस्य ग्रहणमिष्यते। प्रतिपदविहितश्च समासो दिशामेव भवति यद्ययं योग आरभ्यते। नान्यथा। सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति। स पुनः स्त्रियाः पुंवदिति (६।३।३४) योगविभागेन सिध्यतीति वेदितव्यम्। नामग्रहणं रूढार्थमिति। लोके ये रूढा दिक्शब्दास्तत्परिग्रहार्थमित्यर्थः। ऐन्द्र्याश्च कौवेर्य्याश्चेति। नेमौ रूढिशब्दौ। किं तर्हि? यौगिकौ। इन्द्रस्येयमैन्द्री। कुवेरस्येयं कौवेरी। तस्येदमित्यण् (४।३।१२०)।

## २७। तत्र तेनेदमिति सरूपे।

इतिकरणेत्यादि। तत इति। समासादभिमतेऽर्थे यदि लौकिकी विवक्षा भवत्येवं समासोऽयमिष्यते। तस्माद्विवक्षार्थमितिकरणोऽत्र क्रियते। विवक्षार्थं इतिकरणो यमर्थं प्रतिपादयति तं दर्शयितु माह लौकिक-मर्थमनुसारयतीति। अनुगमयति प्रबोधयतीति यावत्। स पुन-र्लौकिकोऽर्थो ग्रहणादिरिति दर्शयन्नाह तत इत्यादि। यस्मादितिकरणो लौकिकमर्थमनुसारयति ततो हेतोर्ग्रहणादिरिति सर्वं लभ्यते। यत् तत्रे-त्यादिनाऽनन्तरोक्तमर्थं विस्पष्टीकरोति। गृह्यतेऽस्मिन्निति ग्रहणं केशादि। प्रहरन्त्यस्मिन्निति प्रहरणं मुसलादि। कर्मव्यतीहार इति परस्परग्रहणम्। परस्परप्रहरणञ्चेतिकरणादेव लभ्यत इति वेदितव्यम्। स्वरूपविधिरत्रे-तिकरणादेव न भवतीति वेदितव्यम्। दण्डैश्च दण्डैश्चेति करणे तृतीया। स चाव्ययमिति। तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावः। अव्ययीभाव- (१।१।४१) श्चेत्यव्ययसंज्ञाविधानात्। सरूपमिति। समानस्य ज्योतिर्जनपदेत्यादिना (६।३।८५) सभावः।

## २८। तेन सहेति तुल्ययोगे।

तुल्ययोगे वर्त्तमानमित्यादि। तुल्ययोगः समानसम्बन्धः। तं यदा सहशब्दो द्योतयति तदासौ तत्र वर्त्तते। सपुत्र इति। सह पुत्रेणेति विग्रहः कर्त्तव्यः। सहयुक्तेऽप्रधान इति (२।३।१९) तृतीया। वोपसर्जनस्येति (६।३।८२) सहस्य सभावः। अत्र सपुत्र आगतो देवदत्त इति देवदत्तस्य पुत्रस्य चागमनेन तुल्यसम्बन्धः सहशब्देन द्योत्यते। अथ कथं पुनः सकर्मक इत्यादौ स्यात्। कथञ्च न स्यादित्याह न ह्यत्रेत्यादि। प्रायिकमिति। असर्व्वविषयमित्यर्थः। कुतः पुनः प्रायिकत्वमस्य लभ्यते? इतिकरणात्। ननु चान्यदितिकरणस्य प्रयोजनमस्ति। किं तत्? सहशब्दः स्वरूपपदार्थको यथा गम्येत। अन्यथा ह्यर्थनिर्देशोऽयं विज्ञायेत। ततश्च साकं सार्द्धमित्यादयोऽपि समस्येरन्। नैवं ब्रूम इह सूत्रे य इतिकरणस्ततो लभ्यत इति। किं तर्हि? पूर्व-सूत्राद् योऽनुवर्त्तते तत इति।

## २९ । चार्थे द्वन्द्वः ।

कः पुनरयं चार्थो नामेत्याह समुच्चयोऽन्वाचय इत्यादि । समुच्चितिः समुच्चयः । साधनमेकं क्रियां वा प्रति क्रियासाधनानामात्मरूपभेदेन चीयमानताऽनेकत्वमिति यावत् । स पुनस्तुल्यबलानामनियतक्रमयौगपद्यानामेव भवति यथा गामश्वं पुरुषं पशुञ्चाहरहर्नयमानो वैवस्वतस्तृप्तिं नोपयातीति । अन्वाचयोऽपि यत्रैकस्य प्राधान्यम् । इतरदप्रधानम् । तदनुरोधेनान्वाचीयमानता । यथा भो वटो भिक्षामट गाञ्चानयेति । इतरेतरयोगः समाहारश्च समुच्चयस्यैव प्रभेदः । स एव हि परस्परापेक्षाणामवयवभेदानुगत इतरेतरयोगः । यथा देवदत्तयज्ञदत्ताभ्यामिदं कार्य्यं कर्त्तव्यम् । उभावपि तत्कार्य्यं प्रति परस्परापेक्षौ । तथाहि तदेकस्याप्यभावे न क्रियते । अवयवप्रधानश्चायमिति द्वित्वाद्द्विवचनम् भवति । परस्परापेक्षाणामेव तिरोहितावयवभेदः संहतिप्रधानः समाहारो यथा छत्त्रोपानहमिति । अत्रापि कस्याञ्चित् क्रियायां छत्त्रादेः परस्परापेक्षत्वम् । संहतिप्रधानत्वाच्चैकवचनम् । यदि तर्हि समुच्चयान्वाचयावपि चार्थौ तदा तयोरपि समासः प्राप्नोतीत्यत आह तत्रेत्यादि । समुच्चये तावत् परस्परानभिसम्बन्धा एव गवादयो नयनादिभिः सम्बध्यमानाः समुच्चीयन्त इत्यसामर्थ्यात् सत्यपि चार्थे तस्मिन् न भवति समासः । अन्वाचयेऽप्येकं सापेक्षं नेतरत् । यथा पूर्वोक्त उदाहरणे । तत्र हि गवानयनं भिक्षाटनमपेक्षते । नतु भिक्षाटनं गवानयनम् । विनापि तेन तदनुष्ठानात् । स यदि गां पश्यति तदा तामप्यानयति । नचेत् भिक्षामेवाटतीत्यन्यतरापेक्षारहिते चार्थे न भवति समासः । इतरेतरयोगे समाहारे च विधीयत इति । तत्र सर्वेषां सामर्थ्यस्य विद्यमानत्वात् । वाक्त्वचम् । वाग्दृषदमिति । द्वन्द्वाच्चुदषहान्तात् समाहार इति (५।४।१०६) टच् समासान्तः । जातिरप्राणिनामित्येकवद्भावः (२।४।६) ।

## ३० । उपसर्जनं पूर्वम् ।

पूर्ववचनं परप्रयोगनिवृत्त्यर्थमिति । ननु च परप्रयोगविपर्य्ययो लोके न दृष्ट एव । तत् कथं परप्रयोगनिवृत्त्यर्थेन पूर्व्वग्रहणेनेत्यत आह अनियमो हि

स्यादिति । सम्भावनायां लिङ् । एवं मन्यते । यद्यपि परप्रयोगविपर्य्ययो न दृष्ट स्तथाप्यसति नियामके वाक्ये पुरुषापराधाद् विपरीतप्रयोगोऽपि सम्भाव्येत । येषाञ्च वाक्यमेव समासीभवतीति दर्शनं तेषां वाक्यस्यानियतक्रमत्वात् तद्विकारोपि समासो ऽनियतक्रमः स्यादिति सूत्रारम्भः ।

## ३१ । राजदन्तादिषु परम् ।

पूर्वस्य परनिपात इति लिप्तवासिताद्युमगाढ़पर्य्यन्तेषु । उदूखलमुसलादयो ये द्वन्द्वा स्तत्र क्वचिदल्पाच्तरत्वात् पूर्वनिपातः प्राप्नोति क्वचिद् घ्यन्तत्वात् पूर्वनिपातः क्वचिदजाद्यदन्तत्वात् । क्वचित् तुल्यत्वादनियमः । दृषदुपलमिति प्रमादाच्चायं पाठो लक्ष्यते । अल्पाच्तरत्वाद् दृषच्छब्दस्य पूर्वनिपातः सिद्धः । अक्षिभ्रुवं दारगवमिति । अचतुरादि सूत्रेणाच् समासान्तः । स्थूलपूलासमिति । प्रमादपाठोऽयं लक्ष्यते । पूर्व्वोक्तादेव कारणात् ।

## ३२ । द्वन्द्वे घि ।

उपसर्जनमित्यन्वर्थसंज्ञाविज्ञानादप्रधानस्योपसर्जनसंज्ञा विहिता । द्वन्द्वे च सर्वेषां पदानां प्राधान्यम् । न कस्यचिदप्राधान्यमित्युपसर्जनसंज्ञाया अभावादनियमे प्राप्ते वचनमिदम् । अथ यत्र बहूनां पूर्वनिपातप्रसङ्ग स्तत्र किमेकस्यानियमो भविष्यत्युत सर्वेषामित्याह अनेकप्राप्तावेकस्येत्यादि । एष चार्थो जातिपदार्थस्याश्रयणाल्लभ्यते । व्यक्तौ तु पदार्थे प्रतिव्यक्ति शास्त्रप्रवृत्त्या भवितव्यम् । ततः सर्वेषां नियमः स्यात् । आकृतौ तु पदार्थे लक्ष्य एकं लक्षणं सकृदेव प्रवर्त्तते । तेन चैकस्य पूर्वनिपाते जातिः कृतार्थेति शेषाणामनियमो भवति । एवमुत्तरत्राप्येकस्य नियमः शेषाणान्त्वनियम इति वेदितव्यम् । विस्पष्टपटुरिति । विस्पष्टः पटुः । मयूरव्यंसकादित्वात् समासः ।

## ३३ । अजाद्यदन्तम् ।

द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेनेति । द्वन्द्वे घीति ( २।२।३२ ) । तस्मादजाद्यदन्तमित्येतद् भवति विप्रतिषेधेन । द्वन्द्वे घीत्यस्यावकाशः पटुगुप्तौ

पटुगुप्तौ। अजाद्यदन्तमित्यस्यावकाश उष्ट्रशशावुष्ट्रखरौ। इन्द्राग्नी इत्यत्रोभयं प्राप्नोति। अजाद्यदन्तं भवति विप्रतिषेधेन।

## ३४। अल्पाच्तरम्।

ऋतुनक्षत्राणामित्यादि। ऋतूनामानुपूर्व्यं प्रादुर्भावकृतम्। नक्षत्राणामुदयकृतम्। ऋतुनक्षत्राणामित्यत्रैव वर्णग्रहणं कस्मान्न कृतमिति पर्यनुयोगदोषमाशङ्क्याह समाक्षराणामित्यादि। असमानाक्षराणामपि वर्णानामानुपूर्व्येण पूर्वनिपात इष्यत इति पृथग्वचनम्। आनुपूर्व्यञ्च वर्णानां जन्मकृतमिति लोकव्यवहारे प्रसिद्धम्। प्रसिद्धिश्च श्रुतिकृता। श्रुतौ हि पठ्यते मुखतो ब्राह्मणमसृजत्। बाहुभ्यां राजन्यम्। ऊरुभ्यां वैश्यम्। पद्भ्यां शूद्रमिति। संख्याया अल्पीयस्या इति द्वन्द्वे चाद्वन्द्वे चेति वक्तव्यम्। द्वित्राः। त्रिचतुरा इति बहुव्रीहिः। नवतिशतमिति द्वन्द्वः।

## ३५। सप्तमीविशेषणे बहुव्रीहौ।

सर्वनामसंख्ययोरिति। यत्र गुणवचनेन सह समासः सोऽस्य विषयः। यत्र तु द्रव्यवाचिना तत्र सर्वनामसंख्ययोर्विशेषणत्वादेव पूर्वनिपातः सिद्धः। सप्तम्याः पूर्वनिपात इत्यादि। सप्तम्यन्तस्य पूर्वनिपाते प्राप्ते गड्वादिभ्यः परवचनं कर्त्तव्यमिति। सप्तम्यन्तं परमुच्यते कथ्यते येन व्याख्यानेन तत् परवचनम्। तत्रेदं व्याख्यानम्। आहिताग्न्यादेराकृतिगणत्वाद् गडुकण्ठप्रभृतयस्तत्रैव द्रष्टव्याः। तेन गड्वादिभ्यः परं सप्तम्यन्तं भविष्यति। कथं वहेगडुरिति। यदि गड्वादिभ्यः सप्तम्याः परवचनमिति भावः प्राप्तस्य च बाधा व्याख्येयेति। तत्रेदं व्याख्यानम्। वाहिताग्न्यादिष्वित्यतो (२।२।३७) वाग्रहणं क्रियते। सा च व्यवस्थितविभाषा विज्ञायते। तेन प्राप्तस्य परनिपातस्य बाधनं भविष्यति।

## ३६। निष्ठा।

ननु विशेषणमेवात्र निष्ठेति। कृतशब्दः क्रियाशब्दः। कटशब्दो द्रव्यवचनः। तत्र यथा गुणो द्रव्यस्य विशेषणं तथा क्रियापि। तथासति निष्ठान्तस्य विशेषणत्वात् पूर्वेणैव पूर्वनिपातः सिद्धः। कटे कृतमनेनेत्यादिना

विग्रहभेदेन निष्ठाया विशेषणत्वाभावं दर्शयति । अत्र हि विग्रहे सप्तम्यन्तमेव विशेषणम् । निष्ठान्तं विशेष्यम् । सामानाधिकरण्ये हि क्रियागुणौ विशेषणविशेष्यभावौ नियमेनानुभवतः । नहि वैयधिकरण्ये । तथाहि पटस्य शुक्लः काकस्य गतिरित्यत्र गुणादेर्विशेष्यत्वम् । व्यवच्छेद्यत्वात् । द्रव्यस्य तु विशेषणत्वं व्यवच्छेदकत्वात् । निष्ठायाः पूर्वनिपात इत्यादि । जात्यादिभ्यो निष्ठान्तं परमुच्यते । तेन तद्व्याख्यानं कर्त्तव्यम् । तत्रेदं व्याख्यानम् । सारङ्गजग्धीमासजातासुखजातादयः शब्दा आहिताद्याकृतिगणत्वात् तदन्तःपातिनः । तेन जातिकालसुखादिभ्यो निष्ठान्तं परं भवतीति । सारङ्गजग्धीति । सारङ्गशब्दो जातिवचनः । ततः क्तादल्पाख्यायामित्यनुवर्त्तमाने (४।१।५२) ऽस्वाङ्गपूर्वपदाद्वेति (४।१।५३) ङीष् । कथं कृतकट इति । कटशब्दस्य जातिवाचित्वादिति प्रश्नः । प्राप्तस्य चाबाधा व्याख्येयेति । तेन कृतकट इत्यत्रापि भविष्यतीति भावः । सा पुनरप्राप्तस्य चाबाधा पूर्ववदेव व्याख्येया । एवमुत्तरत्रापि व्याख्येया । प्रहरणार्थेभ्य इत्यादि । प्रहरणमर्थो येषां ते तथोक्ताः । तेभ्यः परे निष्ठासप्तम्यौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । अस्युद्यतो दण्डपाणिरित्येवमादीनां शब्दानामाहिताग्न्यादिषु पाठात् परे निष्ठासप्तम्यौ भवत इति ।

## ३७। वाऽऽहिताग्न्यादिषु ।

## ३८। कडाराः कर्मधारये ।

कडारादयो ये गुणशब्दास्तेषां विशेषणत्वं भवतीत्याह गुणशब्दानामित्यादि । गतार्थम् ।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य
द्वितीयः पादः समाप्तः ॥२।२॥



अथ

# काशिकाविवरणपञ्जिका।



## द्वितीयोऽध्यायः

### तृतीयः पादः।

१। **अनभिहिते।**

दधातेर्हिनोतेर्वा ऽनभिहित इत्यस्य रूपम्। समानत्वात्। अनेकार्थत्वाच्च धातूनाम्। न ज्ञायते किमर्थस्यानभिहितशब्दस्य ग्रहणमिति सन्देहः स्यात्। अतस्तं निराकर्त्तुमाह अनभिहिते ऽनुक्त इत्यादि। यद्यनभिहिते कर्म्मादौ द्वितीयादयो विभक्तयो भवन्तीति सामान्येनोच्येत ततो यथा कृतः कट इत्यत्र क्तप्रत्ययेन कर्म्मणोऽभिहितत्वात् कटशब्दाद् द्वितीया न भवति तथा कटं करोति भीष्ममुदारं शोभनं दर्शनीय मित्यत्र कटशब्दादुत्पद्यमानया द्वितीयया भीष्मादिगतस्य कर्म्मणोऽभिहितत्वाद् भीष्मादिभ्यो द्वितीया न प्राप्नोति। तस्मात् कश्चिद् विशेषोऽत्राभिमत इति मत्वा तं विशेषं पृच्छति केनानभिहित इति? इतरो विदिताभिप्राय आह तिङ्कृत्तद्धित समासैरित्यादि। क्रियत इति कर्मणि लकारः। सार्वधातुके (३।१।६७) यक्। रिङ् शयग्लिङ्क्षिति (७।४।२८) रिङादेशः। शत्यः शतिक इति। शताच्च ठन् यतावशत इति (५।१।२१) ठन्यतौ भवतः। बहुषु (१।४।२१) बहुवचनमित्यादि। तत्रेदमुक्तं कर्मादयोऽप्यपरे विभक्तीनां वाच्या। अत स्तदीये बहुत्वे बहुवचनम् भवतीति। एवञ्च ब्रुवता वृत्तिकृता कर्म्माद्याश्रितायां संख्यायां द्वितीयादयो विभक्तयो भवन्तीत्येतदुक्तं भवति। नच तत्र कश्चिद् विशेष उपात्तः। सन्ति च कर्म्मादयो ऽभिहिता अनभिहिताश्च। तत्र विशेषानुपादानाद् यथा ऽनभिहितकर्म्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो

विभक्तयो भवन्ति तथाऽभिहितकर्म्माद्याश्रयेष्वपि स्युः । अतोऽनभिहिता ये कर्म्मादय स्तदाश्रयेष्वेवैकत्वादिषु यथा विभक्तयो स्युरन्यत्र मा भूवन्नित्यनभिहित इत्येतद् विशेषण मारभ्यते । अनभिहितकर्म्माद्याश्रयेष्विति । अनभिहिताः कर्म्मादय आश्रया येषामिति बहुव्रीहिः । एतेन बहुषु बहुवचन ( १।४।२१ ) मित्यादेः शास्त्रस्यानभिहित इत्येतस्य च कर्म्मणि ( २।३।२ ) द्वितीयेत्येवमादिभिः सहैकवाक्यतां दर्शयति । अनभिहिते कर्म्मणि द्वितीया बहुषु बहुवचनमिति । एव मन्यत्राप्येकवाक्यता वेदितव्या । एकवाक्यता च गुणप्रधानभावमन्तरेण न सम्भवतीत्येकस्य गुणभावेन भवितव्यम् । अपरस्य प्रधानभावेन । तत्र विशेषणत्वादनभिहित इत्यस्य कर्म्माद्यपेक्षया गुणभावः । कर्म्मादीनां तु विशेष्यत्वात् प्राधान्यम् । एकत्वाद्य पेक्षया कर्म्मादीनान्तु विशेषणत्वादप्राधान्यम् । एकत्वादीनां विशेष्यत्वात् प्रधानभावः । अथ कथं कटशब्दादुत्पद्यमाना द्वितीया भीष्मादिपदानुगतं कर्म्माभिदधाति यथा निष्ठेति चेत् ? स्यादेतत् । यथा कटः कृतो भीष्म उदारः शोभनो दर्शनीय इत्यत्र करोतेः कर्म्मण्युत्पद्यमाना निष्ठा सर्वं भीष्मादिकमपि कर्म्माभिदधाति तथा कटशब्दादुत्पद्यमाना द्वितीयेति । वार्त्तमेतत् । कृत इति क्रियाकारकसम्बन्धनिमित्तमभिधानम् । क्रिया चोत्पद्यमाना सामर्थ्यात् सर्व्वाणि कारकद्रव्याण्याक्षिपति । ततः कृञ उत्पद्यमानः क्तः साधारणतया यावत् करोतेरुपयाति कर्म्मतां तावत् सर्व्वमेवाभिदधातीति युक्तम् । भीष्मादिगताया अपि कर्म्मतायाः क्तप्रत्ययेनाभिधानम् । कटस्तु विशिष्टद्रव्यवचनः । तत उत्पद्यमाना द्वितीया तद्गतमेव कर्म्म शक्नोत्यभिधातुम् । नान्यगतं किञ्चित् । तत् कथं तया भीष्मादिगतमपि कर्म्माभिधीयते ? तथाच निरर्थकं परिगणनम् । तस्मात् तिङ्कृत्तद्धित समासैरेवाभिधानं सम्भवतीति सम्भवदुदाहरणप्रदर्शनपरमेतत् परिसंख्यानं वेदितव्यम् । न परिगणनम् ।

## २ । कर्म्मणि द्वितीया ।

द्वितीया तिङ्विभक्तिरप्यस्तीति तस्या अप्यत्र ग्रहणमिति कस्यचिदाशङ्का स्यात् । अतस्तान्निराकर्तुमाह द्वितीयादयः शब्दा इत्यादि । कर्म्मशब्देनेह

साधनं कर्म्म गृह्यते । नतु क्रियाकर्म । तथाहि ये विभक्त्यर्था एकत्वादयस्तेषां विशेषणत्वेनैव • कर्मादयोऽनुक्रंस्यन्ते । नच क्रियाकर्मणि द्वित्वबहुत्वे स्तः । साधनकर्मणि तु विद्येते । तस्मात् तस्यैव ग्रहणं युक्तम् । नेतरस्य । उभसर्वतसोरित्यादि । उभसर्वशब्दयोस्तसिप्रत्ययान्तयोः प्रयोगे द्वितीयाविभक्तिः कार्य्या । शेषलक्षणायां षष्ठ्यां प्राप्तायामयमारम्भः । उभसर्वतसोरित्यत्र यद्यप्युभशब्दः पठितस्तथापि सामर्थ्यादुभयशब्दो गृह्यते । साधर्म्यात् । नह्युभशब्दस्तसिप्रत्ययान्तोऽस्ति । तस्य नित्यद्विवचनटाब्विषयत्वात् । तथाचोक्तम् । अन्याभावो नित्यद्विवचनटाब्विषयत्वादुभयोऽन्यत्रेति (१।१।२७,वा) । उभयतः सर्वत इति पञ्चम्यास्तसिल् । धिक्शब्दयोगेऽपि द्वितीया कार्य्या । तथोपर्य्यादिषु त्रिषु योगे द्वितीया कार्य्या । आम्रेडितान्तेष्विति । कृतद्विर्वचनेष्वित्यर्थः । उपर्युपरि ग्राममित्यादावुपर्य्यध्यधसः सामीप्य (८।१।७) इति द्विर्वचनम् । ततोऽन्यत्रापि दृश्यत इति । यथोक्तादन्यत्रापि दृश्यते द्वितीयेति सम्बन्धः । क्व चान्यत्र दृश्यत इत्यत आह अभित इत्यादि । पर्य्यभिभ्याञ्चेति (५।३।९) तसिः । अपिशब्दो विकल्पार्थः । अपि दृश्यते ऽपि न दृश्यते च । तेन हा तात हा मातरित्यादि सिध्यति ।

## ३ । तृतीया च होश्छन्दसि ।

यवाग्वा ऽग्निहोत्रं जुहोतीति । यद्यप्यत्र सुपां सुपो भवन्तीति (७।१।३९, वा) द्वितीयास्थाने तृतीयादेशविधानेऽप्येतत् सिध्यति तथापि पयसा जुहोत्याज्येन जुहोतीत्येवमादि न सिध्यति । तथाहि स्थानिवद्भावात् स्वमोर्नपुंसकादित्येकस्य (७।१।२३) लुक् प्राप्नोति । अपरस्यातोऽमित्यम्भावः (७।१।२४) ।

## ४ । अन्तरान्तरेण युक्ते ।

अन्तरान्तरेणशब्दौ निपातौ साहचर्य्याद् गृह्येते इति । अयमन्तराशब्दो यद्यपि स्त्रीप्रत्ययान्तोऽस्ति तथा ऽस्त्रीप्रत्ययान्तोऽपि । अन्तरेणशब्दस्त्वस्त्रीप्रत्ययान्त एव । तस्मादन्तरेणशब्देनास्त्रीप्रत्ययान्तेन साहचर्य्यादन्तराशब्दोऽप्यस्त्रीप्रत्ययान्तो गृह्यते । यश्चास्त्रीप्रत्ययान्तोऽन्तराशब्दः स निपात एवेत्य-

न्तराशब्दस्य तावन् निपातस्य ग्रहणम् । अतस्तेन निपातेन साहचर्य्यादन्तरेण शब्दस्यापि तस्यैव ग्रहणम् । तेनानिपातो यस्तृतीयान्तोऽन्तरेणशब्दो यश्च टाबन्तोऽन्तराशब्दस्ताभ्यां योगे द्वितीया न भवति । किं ते बाभ्रावाणां शालङ्कायनानाञ्चान्तरेण गतेन ? ग्रामयोरन्तरायां पुरि वसतीत्यन्तरशब्दोऽत्र-विशेषवचनः । गमिरपि ज्ञानवचनः । किं ते विशेषेण ज्ञानेनेत्यर्थः । षष्ठ्यपवादोऽयं योग इति । शेषलक्षणायां षष्ठ्यां प्राप्तायामस्यारम्भात् । षष्ठ्यपवादत्वमस्य योगस्यान्तरान्तरेणशब्दार्थप्रदर्शनद्वारेण विस्पष्टीकर्त्तुमाह तत्रेत्यादि । मध्यं हि सम्बन्धिशब्दत्वादमध्यभूतं द्वितीयं सम्बन्धिन मपेक्ष्य भवति । तत्र यदपेक्षं मध्यत्वं ततो मध्येन व्यतिरेके समुपजनिते षष्ठी प्राप्नोति । विनार्थोऽपि शेष एव । अत्रापि षष्ठ्येव प्राप्नोति । अन्तरा त्वाञ्च माञ्च कमण्डलु-रिति । तव मम मध्ये कमण्डलुरित्यर्थः । अथ कमण्डलुशब्दाद् द्वितीया कस्मान्न भवति ? सत्यप्यन्तरान्तरेणयोगे तस्य प्राधान्यात् । तथाहि कम-ण्डलोः स्वार्था प्रवृत्तिः । युष्मदस्मदोस्तु परार्था । कमण्डलुविशेषणत्वेन तयोः प्रवृत्तत्वात् । तत्र कमण्डलोः स्वार्थे वर्त्तमानात् प्राधान्येनावस्थितत्वात् प्रातिपदिकार्थादप्रच्युतत्वात् परत्वात् प्रथमैव भवति । द्वितीयायास्त्वप्रधाने युष्मदस्मच्छब्दे ऽवकाश इति ताभ्यां तेनैव प्रथमान्तेन कमण्डलुनोपजनिते व्यतिरेके षष्ठ्यां प्राप्तायां द्वितीया विधीयते । अन्तरेण पुरुषकार मिति । विना पुरुषकारेणेत्यर्थः । अन्तरा तक्षशिलां पाटलिपुत्रञ्च स्रुघ्नस्य प्राकार इति । अत्र स्रुघ्नः प्राकारविशेषणत्वेनोपक्षीणसामर्थ्य इति न भवति तस्यान्त-राशब्देन योगः ।

## ५ । कालाध्वनोरत्यन्तसंयोगे ।

कालाध्वनोरित्यर्थग्रहणम् । अत आह कालशब्देभ्योऽध्वशब्देभ्यश्चेत्यादि । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः । योजनस्यैकदेशे पर्वत इति । नात्र कालाध्वनोरत्यन्तसंयोग इति द्वितीया न भवति ।

## ६ । अपवर्गे तृतीया ।

अपवर्ग इति । अत्यन्तसंयोगस्य फलरूप मेतद् विशेषण मुपात्तम् ।

तत्र क्रियात्यन्तसंयोगस्यैव सम्भवति। नान्यस्येति सामर्थ्यादत्र क्रियात्यन्त-संयोग एव गृह्यते। सर्व्वस्याश्च क्रियायाः परिसमाप्तिरस्ति। तस्माद् विशेषणोपादानसामर्थ्यात् फलप्राप्तौ सत्यां क्रियायाः परिसमाप्तिरिहा-पवर्गो विज्ञायत इत्यत आह फलप्राप्तावित्यादि। कर्त्तृव्यापृत्ताविति। नहि मास मधीतोऽनुवाको न चानेन गृहीत इत्युक्तेऽपवर्गो गम्यते। किं तर्हि? कर्त्तुरशक्तिमात्रम्। न च तत्रापवर्गव्यपदेशः।

## ७। सप्तमीपञ्चम्यौ कारकमध्ये।

अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता द्व्यहाद् भोक्तेति। ननु चात्र देवदत्त एक एव कर्त्ता। कारकभेदे सति तन्निबन्धनो मध्यव्यपदेशो भवति। तत् कथमसति कारकभेदे कारकयो र्मध्ये कालो भवतीत्यत आह कर्त्तृशक्त्यो-रित्यादि। नहि द्रव्यं कारकम्। किं तर्हि? शक्तिः। सा चेह भिद्यते। तथाहि देवदत्ते द्वे शक्ती व्यवस्थिते। एकाद्य भुजेः साधनम्। अपरा द्व्यहेऽतीत इति कर्त्तृशक्तिभेदे सति युक्तो मध्यव्यपदेशः। कर्त्तृकर्मणोरित्यादि। इष्वासः कर्त्ता लक्ष्यं कर्म। कर्मापादानयोरिति। कर्म तदेव। अपादानं यतः परो निर्याति। कर्माधिकरणयोर्वेति। इहेत्यनेन यन्निर्दिश्यते तदधिकरणम्। कर्म च तदेव। तयोर्मध्ये क्रोश इति। क्रोशस्येहापादानाधिकरणत्वा-भावात् सप्तमीपञ्चम्यौ न भवतः। नहि क्रोशाच्छरोऽपैति। किन्तर्हि? तदेकदेशात्। नापि क्रोशे व्यवस्थितं लक्ष्यम्। किं तर्हि? तदेकदेश एव। तस्मात् क्रोशस्य शेषत्वात् षष्ठ्यां प्राप्तायां सप्तमीपञ्चम्यौ विधीयेते। अथात्र संख्यातानुदेशः कस्मान्न भवति? यावता कालाध्वनौ हि द्वौ। सप्तमी-पञ्चम्यावपि द्वे। अतएव साम्यात् संख्यातानुदेशेन भवितव्यम्। कालात् सप्तमी। अध्वनः पञ्चमीत्यत आह संख्यातानुदेश इत्यादि। स्वरितेनाधिकार (१।३।११) इत्यत्र स्वरितेनेति योगविभागः कृतः। तत् पूर्वेणापि सम्बध्यते। यत्र स्वरितत्वं प्रतिज्ञायते तत्र यथासंख्यं यथा स्यात्। इह तु स्वरितत्वं नास्त्यतो न भवति संख्यातानुदेशः।

## ८। कर्मप्रवचनीययुक्ते द्वितीया ।

शाकल्यस्य संहितामनुप्रावर्षदिति । अनुर्लक्षण इति (१।४।८४) कर्मप्रवचनीयसंज्ञा ।

## ९। यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।

उपखार्य्यां द्रोण इति। खार्य्या अधिको द्रोण इत्यर्थः। उपोधिके (१।४।८७) चेत्युपशब्दस्य कर्मप्रवचनीयसंज्ञा । यस्य चेश्वरवचनमिति । यस्येश्वरव्यपदेश इत्यर्थः । ईश्वरव्यपदेशस्तु स्वामिन एव सम्भवति । तत्रैव सप्तम्या भवितव्यमिति कस्यचिद् भ्रान्तिः स्यादतस्तान्निराकर्तुमाह यस्य चेश्वरवचनमित्यादि । यस्य-चेश्वरवचन मित्यनेन द्वयोरपि स्वस्वामिनोः पर्य्यायेण सप्तमी भवतीति। कथम् ? यावता ऽधिरीश्वर (१।४।९७) इत्यनेनाधिशब्दस्य कर्मप्रवचनीयसंज्ञा विहिता । ईश्वरस्तु स्वामी । स च स्वमपेक्ष्य भवति । स्वस्वामिसम्बन्धेऽधिशब्दः कर्मप्रचनीयसंज्ञो भवति । तत्र कदाचित् स्वामी कर्मप्रवचनीयविभक्त्या युज्यते । कदाचित् स्वमित्येतत् प्रतिपादितं प्रागेव । कथं पुनर्यस्य चेश्वरवचन-मित्युच्यमाने स्वमपि कर्मप्रवचनीयविभक्त्या युज्यते ? नहि तस्येश्वरव्यप-देशोऽस्ति ? एवं तर्ह्यनुक्तसमुच्चयार्थश्चकारः क्रियते । तेन यस्येश्वरव्यपदेशो नास्ति तत्रापि सप्तमी विज्ञायत इत्यदोषः ।

## १० । पञ्चम्यपाङ्परिभिः ।

अपपरिशब्दयोरपपरी वर्जने (१।४।८८) इत्यनेन कर्मप्रवचनीयसंज्ञा विहिता। आङश्चाङ्मर्य्यादावचने (१ ४।८९) इत्यनेन। वृक्षं परि विद्योतत इति। परिर्लक्षणेत्थम्भूताख्यानेत्यादिना (१।४।९०) ।

## ११ । प्रतिनिधिप्रतिदाने च यस्मात् ।

मुख्यसदृशः प्रतिनिधिरिति । मुख्यो यः कश्चित् कार्य्ये रूढः समर्थः प्रसिद्धः प्रधानभूतस्तेन सदृशो य स्तदभावे तस्य कार्य्यस्य सिद्ध्यर्थमुपादीयते स प्रतिनिधिः । अभिमन्युरर्ज्जुनतः प्रतीति । यतो मुख्यादर्जुनादभिमन्युः प्रतिनिधि स्ततः पञ्चमीविभक्तिर्भवति । प्रतियोगे पञ्चम्यास्तसिः । माषा-

नस्मै तिलेभ्यः प्रतियच्छतीति । ये तिलाः पूर्वं दत्तास्तेभ्यो माषाणां प्रतिदानम् । तिलेभ्य इति पञ्चमी भवति । तिलान् गृहीत्वा माषान् ददातीत्यर्थः । ननु च प्रतिः प्रतिनिधिप्रतिदानयोरिति (१।४।९२) प्रतेः प्रतिनिधिप्रतिदानयोरेवार्थयोः कर्मप्रवचनीयसंज्ञा । तयोरेव प्रतिना योग उपपद्यते । न तु यतस्ते तस्येति मन्यमान आह ननु चेत्यादि । सम्बन्धसम्बन्धादिति । सम्बध्यत इति सम्बन्धः प्रतिनिधिः । प्रतिदानञ्च । तदुभयमपि कर्मप्रवचनीयेन प्रतिना युज्यते । तेन सम्बन्धेन यः सम्बन्धःस सम्बन्धसम्बन्धः । कस्य पुनस्तेन सम्बन्धः ? यतः प्रतिनिधिः प्रतिदानञ्च तस्य । सम्बन्धिशब्दौ हि प्रतिनिधिप्रतिदानशब्दौ । तौ च नासति पूर्वविज्ञाते मुख्ये पूर्वदत्ते च भवत इति प्रतिनिधिप्रतिदानाभ्यां यस्य सम्बन्धस्तस्य ताभ्यां सम्बन्धोऽस्तीति ते अपि कर्मप्रवचनीयैर्युक्ते भवत इति । क्वचित् सम्बन्धिसम्बन्धादिति पाठः । तत्रापि प्रतिनिधिः प्रतिदानञ्च सम्बन्धिशब्देनोच्यते । तदुभयस्यापि कर्मप्रवचनीयेन सम्बन्धात् । तेन सम्बन्धिना यः सम्बन्धः स सम्बन्धिसम्बन्ध इति स एवार्थः ।

## १२ । गत्यर्थकर्म्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।

यदि क्रियामात्रमिह चेष्टाशब्देनोच्यते तदा चेष्टाग्रहणमपार्थकम् । सर्वो हि धातुः क्रियावचनः । तस्माद् विशेषणोपादानसामर्थ्यात् परिस्पन्दवचनोऽयं चेष्टाशब्दो विज्ञायते इत्याह परिस्पन्दक्रियाणामिति । परिस्पन्दः शरीरव्यापारः । सा क्रिया येषां ते तथोक्ताः । अध्वनीत्यर्थग्रहणमिति । अर्थप्रधानत्वान्निर्देशस्य । सप्तमीनिर्देशाच्च । यदीह स्वरूपग्रहणं स्यादनध्वन इति कुर्य्यात् । आस्थितप्रतिषेधश्चायं विज्ञायते । येन देशविशेषेण प्राप्यं ग्रामादिकं प्राप्यते स देशविशेषो लोकेऽध्वेति रूढ़ः । केन च प्राप्यं प्राप्यते ? यः पन्था आक्रान्त स्तेन । तस्मात् तस्यैवायं प्रतिषेधः । यदा तु स एवोत्पथेन प्राप्यते तदा तस्य पथोऽध्वव्यपदेशो न भवतीति भवत्येव तत्र चतुर्थी । द्वितीयाग्रहणं किमिति ? कर्मणि कारके चतुर्थ्यां विकल्पितायां पक्षे न्यायप्राप्तैव द्वितीयेति भावः । तत् क्रियते बाधकबाधनार्थम् ।

अपवादविषयेऽपि यथा स्यात् । अथार्थग्रहणं किमर्थम् ? न गतिकर्मणीत्ये-वोच्येत । यावता गतिरर्थ एव । नैतदस्ति । या गतिर्गमिनैव शब्दान्तर-सन्निधानाद्यनपेक्षयोच्यते तत्र यथा स्यात् । पादविहरणात्मिका च या गतिः प्रधानभूता तस्या एव ग्रहणं यथा स्यादित्येवमर्थम् । तेनेह न भवति । स्त्रियं गच्छति । अजां ग्रामं नयति । अत्र हि गमेर्मैथुनमर्थः स्त्रीशब्दसन्निधानाद् गम्यते । न तु गमेः केवलात् । नयतेश्च प्रापणमेवार्थः प्रधानभूतः । तद्विशेषणन्तु पादविहरणमप्रधानम् । यद्येवं ग्रामं गमयति ग्रामाय गमय-तीति ण्यन्ते गुणभूतत्वाद् गमेर्न सिद्ध्यति । गमि रत्र प्रेषणाध्येषणादिको ह्यर्थः प्राधान्यमनुगच्छति । नैष दोषः । नह्यत्र ग्रामो ण्यन्तस्य कर्म । किं तर्हि ? गमेरेव ।

## १३ । चतुर्थी संप्रदाने ।

देवदत्ताय रोचत इति । रुच्यर्थानां प्रीयमाण इति (१।४।३३) सम्प्रदान-संज्ञा । पुष्पेभ्यः स्पृहयतीति । अत्र स्पृहेरीप्सित (१।४।३६) इत्यनेन । तादर्थ्ये उपसंख्यानमिति । तच्छब्देन चतुर्थ्यन्तस्यार्थो निर्दिश्यते । तस्मा इदं तदर्थम् । तस्य भावस्तादर्थ्यम् । तत्र चतुर्थ्या उपसंख्यानं प्रतिपादनं कर्त्तव्य मित्यर्थः । तत्रेदं प्रतिपादनम् । चतुर्थीति योगविभागः क्रियते । तेन तादर्थ्येऽत्र चतुर्थी भवतीति। अथवा चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरिति ( २।१।३६ ) तादर्थ्ये चतुर्थ्याः समासवचनं ज्ञापकं भवति तादर्थ्येऽपि चतुर्थीति । क्लृपि सम्पद्यमान इत्यादि । क्लृपग्रर्थानां धातूनां प्रयोगे सम्पद्यमाने कर्त्तरि सम्पादनक्रियाविशिष्टे चतुर्थी वक्तव्या व्याख्येयेत्यर्थः । व्याख्यानन्तु तमेव योगविभागमाश्रित्य । तथोत्पातेन ज्ञाप्यमान इत्यादावपि । मूत्राय कल्पते यवागूरिति । यवागूर्मूत्रविकाररूपेण भवतीत्यर्थः । विकाररूपापत्तौ चतुर्थी विज्ञेया । तेनेह न भवति । देवदत्तस्य शालयः सम्पद्यन्त इति । यदा चाभेदविवक्षा तदा परत्वात् प्रथमैव भवति । न चतुर्थी । मूत्रमिदं सम्पद्यते यवागूरिति । उच्चारोऽयं संपद्यते यवौदन इति । यदा तु जनिकर्त्तुः प्रकृतिरिति (१।४।३०) प्रकृतेरपादानत्वं विवक्ष्यते तदा यवाग्वा इति

पञ्चम्येव स्यात्। मूत्रं सम्पद्यते यवाग्वा इति। वाताय कपिला विद्युदिति। अत्र कपिला विद्युदुत्पातो वातस्य लक्षणम्। तेन ज्ञाप्यमाने वाते चतुर्थी भवति। अरोचकिन इति। अत इनिठनाविति इनिः (५।२।११५)।

## १४। क्रियार्थोपपदस्य च कर्मणि स्थानिनः।

क्रियार्था क्रियोपपदं यस्येत्यादि। कथं पुनरयमर्थो लभ्यते? यावता नेह सूत्रे द्वितीयं क्रियाग्रहणमुपात्त मस्तीत्याह तुमुन्ण्वुलावित्यादि। तत्रोपपदं सप्तमीस्थमिति (३।१।९२) पारिभाषिकमुपपदं गृह्यते। तच्च तुमुन्ण्वुलौ क्रियायां क्रियार्थायामित्यस्मिन् (३।३।१०) विषये क्रियार्थोपपदं सम्भवतीति क्रियार्थोपपदग्रहणेनायं विषयो लभ्यते। तत्र विषये क्रियार्थैव क्रियोपपदं सम्भवतीत्यसत्यपि द्वितीये क्रियाग्रहणे यदत्र क्रियार्थोपपदं तत् क्रियैवेति गम्यते। स्थानिन इति। शब्दा स्तिष्ठन्त्यस्मिन्निति स्थानम्। तदस्यास्तीति स्थानी। एतदुक्तं भवति यस्यार्थः प्रतीयते नतु प्रयोगोऽस्ति स स्थानीत्युच्यत इति। एधेभ्यो व्रजतीति। आङ्पूर्वो हरतिरत्र स्थानी। तत्कर्म त्वेधाः। एधानाहर्त्तुं व्रजतीत्यर्थः। ननु चात्र तादर्थ्यमस्ति। अतस्तादर्थ्य इत्येवं सिद्धा चतुर्थी। तत् किमर्थमिदं वचनम्? नियमार्थम्। स्थानिनोऽप्रयुज्यमानस्यैव कर्मणि यथा स्यात्। प्रयुज्यमानस्य मा भूत्। भक्षिरत्र स्थानीति। प्रविश गृहं पिण्डीं भक्षयेति गम्यमानत्वात्। प्रविश तर्पणमित्यत्रापि पिबतिः स्थानी (A)। नतु क्रियार्थोपपद इति। तुमुन्नादिविशिष्टप्रत्ययान्तो हि क्रियार्थोपपदो भवति। अयन्तु लोडन्तः। नच लोट् क्रियार्थोपपदे विधीयत इति न भवति भक्षिरत्र क्रियार्थोपपदः।

## १५। तुमर्थाच्च भाववचनात्।

तुमुना समानार्थ इति इक्तौ गम्यमानत्वात् समानशब्दो न प्रयुक्तः। तुमर्थभाववचनप्रत्ययान्तादिति। तुमर्थो भाववचनप्रत्ययोऽन्तो यस्य स तथोक्तः। भाववचनाश्चेति (३।३।११) वक्ष्यति। तस्येदं ग्रहणमिति। स एव हि

---

(A) प्रविश जलम्। तर्पणं पिबेति वाक्यम्। करोतिः स्थानीति च केषुचित् पुस्तकेषु पाठः। तत्र प्रविश जलं तर्पणं कुर्विति वाक्यम्।

तुमर्थो भाववचनः सम्भवति । नान्यः । पाकाय व्रजतीति । यद्यप्यत्र तादर्थ्यं गम्यते तथापि चतुर्थी न भवति । तस्मिन्नेव तादर्थ्ये विहिते न भावप्रत्ययेन तस्योक्तत्वात् । यथा पाचको व्रजतीत्यत्र न भवति । तेन चतुर्थीविधानार्थमिदमारब्धम् । अथवा भाववचनादेव यथा स्यादिह मा भूत् पाचको व्रजतीति नियमार्थमेतत् । पाकस्त्यागो राग इति भावे घञ् । ननु च क्रियार्थोपपदग्रहणमनुवर्त्तिष्यते । तदर्थाद्विभक्तेर्विपरिणामं कृत्वैवमभिसम्बन्धः करिष्यते क्रियार्थोपपदाद्भाववचनादिति । यस्तु क्रियार्थोपपदो भाववचनः स तुमर्थ एवेति किं तुमर्थग्रहणेन ? नैतदस्ति । नहि क्रियार्थोपपदग्रहणं भाववचनस्य विशेषणं सम्भवति । किं तर्हि ? धातोरेव । तस्मात् तुमर्थग्रहणं कर्त्तव्यमेव । कारको व्रजतीति । तुमुन्ण्वुलाविति (३।३।१०) ण्वुल् । भवत्ययं तुमर्थो नतु भाववचनः । किं तर्हि ? कर्त्तृवचनः । तेन तदन्तान्न भवति ।

## १६ । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ।

अलमिति पर्य्याप्त्यर्थस्य ग्रहणमिति । तस्मै प्रभवति सन्तापादिभ्य(५।१।१०) इत्यलंशब्दसमानार्थेन प्रभवतिशब्देन योगे चतुर्थीनिर्द्देशाल्लिङ्गात् । ननु चास्माल्लिङ्गादर्थस्येदं ग्रहणं नतु शब्दस्येत्येषोऽर्थः प्रतीयते । न तु पर्य्याप्त्यस्येत्येषोऽर्थः । तथाच भूषणप्रतिषेधयोरपि ग्रहणं स्यात् । एवञ्च कन्यामलंकुरुते । अलं बाले रोदनेनेत्यादावपि चतुर्थी स्यात् । नैष दोषः । सामर्थ्यात् पर्य्याप्त्यर्थस्यैव ग्रहणं भविष्यति । कथम् ? कन्यामलंकुरुत इत्यत्रोपपदविभक्तेः कारकविभक्तिर्बलीयसीति (प,१०३) कर्मणि द्वितीयेति (२।३।२) द्वितीययैव भवितव्यम् । अलं बाले रोदनेनेत्यत्राप्यतएव हेतोः करणे तृतीययैव । अत्र हि रोदनं करणभावमापन्नमेव प्रतिषेधेन सम्बध्यत इति सामर्थ्यात् पर्य्याप्त्यर्थस्य ग्रहणं सम्पद्यते । चकारः पुनरस्यैव समुच्चयार्थ इति । यदेतन्नमःप्रभृतियोगे चतुर्थीविधानं तत्समुच्चयार्थश्चकारः । तेन पुनर्विधानाच्चतुर्थी (२।३।७३) चाशिष्यायुष्येत्यादिनाशीर्विवक्षायां पक्षे या षष्ठी विधीयते तामपि बाधित्वा चतुर्थ्येव भवति । यद्येवं कारकविभक्तिमपि बाधित्वा कन्यामलंकुरुत इत्यादौ

चतुर्थ्येव स्यात् । ततश्च यदुक्तं सामर्थ्यात् पर्य्याप्त्यर्थस्यैव ग्रहणं भविष्यतीति तन्नोपपद्यते । नैष दोषः । कारकविभक्तेर्बलीयस्त्वात् पुनर्विधानस्य चान्यत्र चरितार्थत्वात् । अथवा वक्ष्यमाणा विभाषा सिंहावलोकितन्यायेनेहाप्युपतिष्ठते । तेन कन्यामलंकुरुत इत्यादौ चतुर्थी न भवति ।

१७ । मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ।

अनादरस्तिरस्कार इति । अत्रैवानादरशब्दस्य रूढत्वात् । तिरस्कारः परिभवो ऽवज्ञानमित्यर्थः । न त्वा तृणाय मन्य इति । तृणादपि निकृष्टतरं त्वामहं मन्य इत्यर्थः । विकरणनिर्देशः किमर्थ इति । मनिकर्मणीति कस्मान्नोक्तम् । एवं हि लघु सूत्रं भवतीति । मन ज्ञान इत्यस्य दैवादिकस्य ग्रहणं यथा स्यात् । मनु बोधन इत्यस्य तानादिकस्य ग्रहणं मा भूदित्येवमर्थो विकरणनिर्देश इति दर्शयितुमाह न त्वां तृणं मन्व इति । अश्मानं दृषदं मन्य इत्यादौ यथाव्यवस्थितस्य वस्तुनः स्वरूपमाविष्क्रियत इत्यत्रानादरो न गम्यते । यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यमिति । अप्राणिग्रहणमपनीयानावादिग्रहणं कर्त्तव्यमित्यर्थः । यथान्यासे हि न त्वा नावम्मन्य इत्यत्र चतुर्थी स्यात् । न त्वा शुने मन्य इत्यत्र चतुर्थी न स्यादित्यभिप्रायः ।

१८ । कर्त्तृकरणयोस्तृतीया ।

तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानमिति । किं पुनः कारणं न सिद्ध्यति ? कर्त्तृकरणयोरभावात् । तयोस्त्वभावः प्रकृत्याभिरूप इत्यादौ क्रियाया अविद्यमानत्वादित्यभिप्रायः । प्रातिपदिकेनात्र सम्बन्धमात्रं प्रतीयते । नतु काचन क्रिया । नच तया विना कर्त्तृकरणे सम्भवतः । तयोः क्रियापेक्षत्वात् । ततश्च सम्बन्धलक्षणा षष्ठी स्यात् । प्रकृतेरभिरूपः । प्रायस्य याज्ञिकः । गोत्रस्य गार्ग्य इति । समेन धावति विषमेण धावतीति । यद्यप्यत्र क्रियाप्यस्ति तथापि नात्र समविषमशब्दौ करणत्वेन विवक्षितौ । किन्तर्हि ? कर्मत्वेन । ततश्च द्वितीया स्यात् । द्विद्रोणेन धान्यं क्रीणातीत्यादावपि द्विद्रोणादीनां कर्मत्वेन विवक्षितत्वाद् द्वितीयैव स्यात् । द्विद्रोणेन

धान्यं क्रीणातीति द्वौ द्वौ द्रोणौ कृत्वा धान्यं क्रीणातीत्येषोऽर्थो विवक्षितः । पञ्चकेन पशून् क्रीणातीति । पञ्च परिमाणमस्य पशुसङ्घस्य पञ्चकः संघः । पञ्चकं संघं कृत्वा पशून् क्रीणातीत्यर्थः । एवं साहस्रेणाश्वान् क्रीणातीति साहस्रं संघं कृत्वा । सहस्रं सहस्रं कृत्वेत्यर्थः । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । प्रतीयमानापि क्रिया कारकाणां निमित्तं भवत्येव । इह च प्रकृत्याभिरूप इत्यत्र करोत्यर्थः प्रतीयते । प्रकृत्या कृतोऽभिरूप इति । एवं प्रायेण याज्ञिकः प्रायेण वैयाकरण इत्यत्रापि करोत्यर्थो भवत्यर्थो वा गम्यते । गार्ग्योऽस्मि गोत्रेणेत्यत्रापि ज्ञाने भवने वा गम्यमाने गोत्रस्य करणत्वं प्रतीयते । समेन धावतीत्यादौ समेन विषमेण वा पथा करणेनेति गम्यते । द्विद्रोणेनेत्यत्रापि तृतीया न कर्मत्वं बोधयति । किं तर्हि ? करणत्वम् । अत्र हि द्विद्रोणाद्यर्थं हिरण्यादिकं मूल्यभूतं तादर्थ्याद् द्विद्रोणादिशब्देनोक्तम् । तस्यापि करणत्वमस्त्येवेति करण इत्येवं सर्वत्र तृतीया सिद्ध्यति ।

## १९ । सहयुक्तेऽप्रधाने ।

क्रियागुणद्रव्यसम्बन्धे हि सति सहयोगो भवति । अतः पुत्रेण सहागत इत्यादीनि क्रियादिसम्बन्धे यथाक्रममुदाहरणानि वृत्तिकृतोपन्यस्तानि । सर्वत्र च पुत्रस्यात्राप्राधान्यमिति ततस्तृतीया भवति । ननु चोभयोरपि पितापुत्रयोः क्रियादिसम्बन्धः प्रतीयते । तत् कुतः पुत्रस्याप्राधान्यमितरस्य प्रधानभाव इत्याह पितुरत्रेत्यादि । यद्युभयगतः क्रियादि सम्बन्धः प्रतीयते तथाप्युपात्तशब्दव्यापारापेक्षया प्रधानाप्रधानव्यवस्था । शब्देन यस्य क्रियादिसम्बन्धः प्रत्याय्यते तत् प्रधानमितरदप्रधानमिति । इह तु पितुरेव क्रियादिसम्बन्धः प्रत्याय्यते शब्देन । नतु पुत्रस्य । कुत एतत् ? शब्दशक्तिस्वाभाव्यात् । तथाविधा हि शब्दशक्तिर्यतः पितुरेवात्र क्रियादिसम्बन्धं शक्नोति प्रतिपादयितुम् । न पुत्रस्येति । एवञ्चागत इत्यादा वेकवचनमुपपद्यते । अन्यथा हि द्वित्वाद्द्विवचनं स्याद् यथा पितापुत्रावागताविति । पुत्रस्य तु प्रतीयमानत्वादप्राधान्यमिति । अर्थात् स

पुनरर्थः सहार्थयोगः। स च भेदाधिष्ठानत्वात् पुत्रस्य क्रियादिसम्बन्धमन्तरेण न सम्भवतीति सम्बन्धस्य नान्तरीयकत्वात् पुत्रस्यापि क्रियादिसम्बन्धं प्रत्याययति। सहार्थेन योगे तृतीयाविधानादिति। कुतः पुनरेतदवगतं सहार्थेन योगे तृतीयाविधानमिति ? युक्तग्रहणात्। तस्य चैतदेव प्रयोजनम्। सहार्थेन योगे तृतीया यथा स्यात्। नान्यत्। शिष्येण सहोपाध्यायस्य गौरिति। अत्र द्रव्यसम्बन्धः षष्ठ्यैवोपाध्यायस्योच्यत इत्यस्य प्राधान्यम्। तत्रासत्यप्रधानग्रहणे प्रधानेऽप्युपाध्याये स्यात्। ननु च परत्वात् षष्ठी भविष्यति। न भविष्यति। अशेषत्वात्। सति त्वप्रधानग्रहणे शेषोऽयं सम्पद्यत इति षष्ठी।

## २०। येनाङ्गविकारः।

अयमङ्गशब्दोऽवयवे प्रसिद्धः। स यदि तत्रैव वर्त्तमान इह गृह्यते तदात्रैव स्यात्। अक्षि काणमस्येति। अत्र ह्यक्ष्णः शरीरावयवस्य विकारः काणेन गुणेन द्योत्यत इति। इह तु न स्यादक्ष्णा काण इति। नह्यत्रावयवस्याक्ष्णो विकारो लक्ष्यते। किन्तर्हि ? अङ्गिनः समुदायस्येत्यत आह अङ्गशब्दोऽत्रेत्यादि। अङ्गमस्यास्तीत्यङ्गः। अर्श (५।२।१२७) आदित्वादच्प्रत्ययान्तोऽङ्गशब्द उपात्त इति दर्शयति। अङ्गिनोऽङ्गापेक्षत्वात्। यदपेक्षयाऽङ्गिनोऽङ्गित्वं तदेव येनेत्यनेन निर्दिश्यत इति दर्शयितु माह येनेत्यादि। विकृतेनेति सामर्थ्यास्लब्धमर्थं दर्शयति। नह्यविकृतेनाङ्गिनोऽङ्गेन विकारो लक्ष्यते। लक्ष्यत इति। द्योत्यत इत्यर्थः। अक्ष्णा काण इति। अत्राक्ष्णावयवेन विकृतेनाङ्गिनो देवदत्तस्य विकारो लक्ष्यत इति ततस्तृतीया विभक्तिर्भवति। कथं पुनरवयवेन विकृतेन समुदायस्तथा व्यपदिश्यत इत्याह अवयवधर्मेणेत्यादि। यथाढ्यमिदं नगरमित्यवयवधर्मेणाढ्यत्वेनात्र समुदायो व्यपदिश्यते तथेहाप्यवयवेन विकृतेन समुदायो व्यपदिश्यत इति। कथं पुनरत्राक्षिशब्दस्य प्रयोगः क्रियते ? यावता विनापि तेन काणत्वं गुणः समुदायस्य प्रतीयत एव। सत्यमेतत्। लौकिके शब्दप्रयोगे गुरुलाघवं प्रत्यनादरात्। यस्तु तदाद्रियते सोऽक्षिशब्दं न प्रयुङ्क्त एव। अक्षि काणमस्येति। अत्रासत्यङ्ग-

ग्रहणे काणशब्दात् तृतीया स्यात् । लक्ष्यते हि काणत्वेन गुणेनाक्ष्णो विकारः समुदायस्यावयवस्य ।

२१ । इत्थम्भूतलक्षणे ।

कञ्चित् प्रकारमित्यनेन इत्थमित्यस्यार्थमाचष्टे । तथाहि प्रकारवचन इदमस्थमुरिति (५।३।२४) थमुप्रत्यये विहित इत्थमित्येतद्रूपं भवति । सामान्यस्य भेदको विशेषः प्रकार उच्यते । आपन्न इत्यनेन भूतशब्दस्यार्थमाचष्टे । तथाहि भू प्राप्तावात्मनेपदीत्यस्य चौरादिकस्याधृषाद्वेति (ग,२०२) यदा णिज् नास्ति तदा क्तप्रत्यये भूत इति रूपं भवति । तस्येतीत्थम्भूतस्य । लक्षणमिति । लक्ष्यते चिह्न्यतेऽनेनेति लक्षणं चिह्नम् । अपि भवान् कमण्डलुना छात्रमद्राक्षीदिति । अत्र मनुष्यत्वं सामान्यम् । तस्य च्छात्रत्वं प्रकारः । तं प्राप्तस्य च्छात्रस्य कमण्डलुर्लक्षणम् । छात्रेणोपाध्यायमिति । मनुष्यत्वं सामान्यम् । तस्योपाध्यायत्वं प्रकारः । तं प्राप्तस्योपाध्यायस्य लक्षणं छात्रः । शिखया परिव्राजकमिति । मनुष्यत्वं सामान्यम् । परिव्राजकत्वं प्रकारः । तं प्राप्तस्य परिव्राजकस्य लक्षणं शिखा । लक्षणस्य समासेऽन्तर्भूतत्वादिति । एकार्थीभावाद् बहुव्रीह्यर्थेन लक्षणार्थस्यापृथग्भावादित्यर्थः । बहुव्रीहावेव वाच्यत्वेनान्तर्भावो लक्षणस्येति गतार्थत्वात् तृतीया न भवति । इत्थम्भूतलक्षण इति किं ? वृक्षं परि विद्योतते विद्युत् । नात्र विद्योतनत्वप्राप्तस्य कस्यचिद् वृक्षेण लक्षणम् । किं तर्हि ? विद्योतनस्यैव ।

२२ । संज्ञोऽन्यतरस्यां कर्मणि ।

माता संजानीत इति । ज्ञाजनोर्जा (७।३।७९) इति जादेशः । ई हल्यघोरितीत्वम् (६।४।११३) । संप्रतिभ्यामनाध्याने (१।३।४६) इत्यात्मनेपदम् । आध्याने त्वधीगर्थदयेशां (२।३।५२) कर्मणीति परत्वात् षष्ठी भवति । मातुः सञ्जानातीति । कृत्प्रयोगे चानाध्यानेऽपि कर्तृकर्मणोः (२।३।६५) कृतीति परत्वात् षष्ठ्येव भवति । मातुः संज्ञातेति ।

२३ । हेतौ ।

हेतुर्द्विविधः शास्त्रीयो लौकिकश्च । तत्र शास्त्रीयस्तत्प्रयोजको (१।४।५५)

हेतुः। लौकिकः फलसाधनयोग्यः पदार्थः। तत्र शास्त्रीये हेतौ कर्तृकरणयो- (२।३।१८) स्तृतीयेत्येवं सिद्धा तृतीया। तस्माल्लौकिकस्य हेतोरिदं ग्रहणमित्यत आह फलसाधनयोग्य इत्यादि। अनिष्पादयन्नपि फलं तत्साधनयोग्यः पदार्थो लोके हेतुरित्युच्यत इति योग्यग्रहणम्। धनेन कुलमित्यादौ कुलादीन्य कुर्वन्त्यपि धनादीनि तत्करणयोग्यतया लोके हेतुव्यपदेशमासादयन्तीति तेभ्यस्तृतीया। इह यूपाय दार्विति सदपि दारुणो हेतुत्वं न विवक्षितम्। किं तर्हि? कारणस्यान्यथात्वम्। तेन तादर्थ्ये चतुर्थी भवति।

## २४। अकर्त्तर्यृणे पञ्चमी।

शतेन बन्धित इति। बन्धेर्ण्यन्तस्य निष्ठायामेतद्रूपम्। शतमृणञ्च भवतीति। उत्तमर्णाय देयत्वात्। प्रयोजकत्वात् कर्त्तृसंज्ञेति। तत् प्रयोजको हेतुश्चेति (१।४।५५) चकारात् कर्त्तृसंज्ञाविधानात्। ननु लौकिको हेतुः पूर्वसूत्रे गृहीतः। स चेहानुवर्त्तत इति तत एव पञ्चमी विधीयते। न चात्र लौकिको हेतुः। किं तर्हि? पारिभाषिक इति प्राप्त्यभावादकर्त्तरीति प्रतिषेधोऽनर्थकः। नैतदस्ति। तत्र हि शास्त्रीये हेतौ तृतीया सिद्धैवेति लौकिकस्य हेतोर्ग्रहणम्। इह तु पञ्चमी विधीयते। न चात्रासौ शास्त्रीये हेतौ केनचित् सिध्यति। द्वावपीह हेतू गृह्येते। अथवा शास्त्रीयस्यापि हेतोर्लौकिकं हेतुत्वमविरुद्धमेव। यो हि बन्धने प्रयुङ्क्ते स तत्साधनयोग्यो भवत्येवेति।

## २५। विभाषा गुणेऽस्त्रियाम्।

धनेन कुलमिति। धनं द्रव्यम्। न गुणः। द्रव्याश्रितो हि गुणो भवति। न द्रव्यमेव। गुणशब्देन चात्र सम्बन्धिमात्रं परार्थरूपापन्नमुच्यते। तेनाग्निरत्र धूमादित्याद्यपि सिद्धं भवति। ननु चास्त्रियामित्युच्यते। तेन नास्तीह घटोऽनुपलब्धेरित्यादि न सिद्ध्यति। नैतदस्ति। विभाषा गुण इति योगविभागः कर्त्तव्यः। तेन यत्नेष्यते तत्र योगविभागादिष्टसिद्धि- रिति स्त्रियामपि भवत्येव।

## २६ । षष्ठी हेतुप्रयोगे ।

प्रयोगस्य शब्दधर्म्मत्वाद् हेतुरित्यनेन हेतुशब्द एव विज्ञायत इत्यत आह हेतुशब्दप्रयोग इति । एवञ्च हेतुशब्दस्य स्वरूपग्रहणे सति तत्पर्य्यायाणां निमित्तकारणादीनां प्रयोगे षष्ठी न भवतीति किमर्थं पुनरिदमुच्यत ? यावता शेषविवक्षयैवात्राध्ययनादिभ्यः षष्ठी भविष्यति । तत्सामानाधिकरण्याच्च हेतुशब्दादपि । एवं तर्हि सैव शेषविवक्षा ऽस्मिन् विषये वचनेनाख्यायते मन्दधियामनुग्रहाय ।

## २७ । सर्वनाम्नस्तृतीया च ।

निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायदर्शनमिति । एतच्चकारस्यानुक्तसमुच्चयार्थत्वाल् लभ्यत इति वेदितव्यम् । यद्यर्थग्रहणमेतत् कस्मात् पर्य्यायोपादानं कृतमित्याह पर्य्यायोपादानमित्यादि । असति पर्य्यायग्रहण एतत् स्वरूपग्रहणमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तान्निराकर्त्तुं पर्य्यायग्रहणम् ।

## २८ । अपादाने पञ्चमी ।

वृकेभ्यो बिभेतीति । भीत्रार्थानां (१।४।२५) भयहेतुरित्यपादानत्वम् । अध्ययनात् पराजयत इत्यत्र पराजेरसोढ़ ( १।४।२७ ) इत्यपादानत्वम् । विपराभ्याञ्जे (१।३।१९) रित्यात्मनेपदम् । पञ्चमीविधान इत्यादि । यदेतत् पञ्चमीविधानमत्र ल्यब्लोपे कर्म्मणि पञ्चमी स्यादित्युपसंख्यानं व्याख्यानं कर्त्तव्यमित्यर्थः । तत्रेदं व्याख्यानम् । इह पूर्वसूत्राच्चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन ल्यब्लोपे कर्मणि पञ्चमी भविष्यति । अधिकरणे चोपसंख्यानमित्यादि । अत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः । प्रतिपादनन्तु पूर्ववच्चकारानुक्तसमुच्चयार्थत्वमाश्रित्य कर्त्तव्यम् । प्रश्नाख्यानयोश्चेत्यादि । वक्तव्येति व्याख्यातव्येत्यर्थः । व्याख्यानन्तु तामेव चकारानुवृत्तिमाश्रित्य कर्त्तव्यम् । अथवात्रापादान इत्येवं सिद्धा पञ्चमी । तथाहि कुतो भवानित्यत्रागच्छतीति प्रतीयते । पाटलिपुत्रादित्यत्राप्यगच्छामीति । अतः स्फुटमेवापादान-

त्वम्। यतश्चाध्वकालेत्यादि। यतः प्रभृत्यध्वनः कालस्य निर्माण (B) मियत्तापरिच्छेदस्तत्र पञ्चमी वक्तव्या। एतदुक्तं भवति। अध्वनि काले च निर्मीयमाणे यदवधिभूतत्वेन विवक्ष्यते तत्र पञ्चमी वक्तव्या व्याख्येया। व्याख्यानन्तु पूर्ववच्चकारानुवृत्तिमाश्रित्य कर्त्तव्यम्। अथवाध्वनि निर्मीयमाणे ऽपादान इत्येवं सिद्धा पञ्चमी। तथाहि गवीधुमतः साङ्काश्यं चत्वारि योजनानीत्यत्र निःसृत्येति क्रिया गम्यते। अतो युक्तमेवापादानत्वम्। कार्त्तिक्या आग्रहायणी मास इत्यत्रापि परेणेति शब्दो गम्यते। तत्रोत्तर-सूत्रेण दिग्योगलक्षणा पञ्चमी भविष्यति। तद्युक्तात् काल इत्यादौ तदित्यनेन पञ्चमी सम्बध्यते। पञ्चमीयुक्तात् परो यः कालस्तत्र सप्तमी वक्तव्या व्याख्येया। व्याख्यानन्तु कार्त्तिक्या आग्रहायणी मास इत्यत्र यस्य च भावेन भावलक्षणमित्यनेन (२।३।३७) सप्तमी सिद्धा। कार्त्तिक्याः परो यो मासस्तत्सत्तया ऽग्रहायण्या भावो लक्ष्यते। अध्वनः प्रथमेत्यादि। तद्-युक्तादिति वर्त्तते। तत्र यदा साङ्काश्यस्य योजनादभेदो विवक्ष्यते तदा प्रथमा। गवीधुमतः साङ्काश्यं चत्वारि योजनानीति। भेदविवक्षायान्तु यस्य च भावेन भावलक्षणमिति (२।३।७३) सप्तमी। तथाहि गवीधुमतः सांकाश्यं चतुर्षु योजनेषु गतेषु सत्सु भवतीत्येषोऽर्थः प्रतीयते। तत्र योजनस्य सम्बन्धि गमनं साङ्काश्यभावस्य लक्षणम् भवति।

## २९। अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते।

अन्य इत्यर्थग्रहणमिति। अर्थद्वारक एव हि शब्दस्य शब्दान्तरेण योगो भवति। तस्मादर्थस्येदं ग्रहणं विज्ञायते। तेनेत्यादिना ऽर्थग्रहणस्य फलं दर्शयति। अथान्यो देवदत्ताद् यज्ञदत्त इति यज्ञदत्तशब्दादपि पञ्चमी कस्मान्न भवति? देवदत्तादुत्पन्नया पञ्चम्योभयगतस्याप्यन्यत्वस्य प्रति-पादितत्वात् तद्विशिष्टमन्यत्वमेकत एवोत्पाद्यमानया पञ्चम्या शक्यं प्रतिपाद-यितुमिति द्वितीयसम्बन्धिनः पञ्चमी न भवति। इतर इति निर्दिश्यमानस्य प्रतियोगी पदार्थ उच्यत इति। यथा क्वचित् प्रकरणे द्वौ प्रकृतौ देवदत्तो

(B) निमानमिति वङ्गीयपुस्तकेषु पाठः।

ऽन्यश्च कश्चित् । तत्रैकस्तावन्निर्दिश्यते देवदत्तः शूर इति । तस्य निर्दिश्य-मानस्य योऽसौ द्वितीयः सम्बन्धी प्रतियोगी स इतरशब्देनोच्यते यथेतरः कातर इति । शब्दग्रहणमित्यादि । शब्दग्रहणे सति दिशि दृष्टः शब्दो दिक्शब्द इत्येषोऽर्थो लभ्यते । तेन योऽपि संप्रति दिक्शब्दो देशे काले च वर्त्तते सोऽपि दिशि दृष्ट इति तद्योगे पञ्चमी भवति । तत्र देशवृत्तिना योगे पञ्चमी पूर्वो ग्रामात् पर्वत इति । कालवृत्तिनापि पूर्वो ग्रीष्माद्वसन्त इति । इतरथा हि दिग्वृत्तिनैव योगे स्यादिति । तत्रैव दिक्छब्दस्य मुख्यत्वात् । प्राग् ग्रामादिति । प्रपूर्वादञ्चतेः ऋत्विगादिसूत्रेण (३।२।५९) क्विन्प्रत्ययः । तदस्माद् यदा दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्-देशकाल (५।२।२७) इत्यादिना विहितस्यास्तातेरञ्चे (५।२।३०) लुगिति लुग् लुकि कृते तदेदमुदाहरणम् । दक्षिणा ग्रामादुत्तरा ग्रामाद् । दक्षिणाहि ग्रामादुत्तराहि ग्रामादिति । दक्षिणादाच् (५।२।३६) । आहि च दूरे (५।२।३७) । उत्तराच्च (५।२।३८) त्याजाही प्रत्ययौ ।

## ३० । षष्ठ्यतसर्थप्रत्ययेन ।

अतसर्थाः प्रत्यया दिक्शब्देभ्यः स्वार्थएव भवन्तीति तदन्तस्य दिक्-छब्दत्वात् पूर्वेण पञ्चम्यां प्राप्तायां वचनमिदम् । पुरो ग्रामस्येति । पूर्वाधरावर-राणामसि (५।२।३९) पुरधवश्चैषामित्यादिनाऽसिप्रत्ययः । पूर्वशब्दस्य पुरादेशश्च । पुरस्तादित्यत्रापि दिक्शब्देभ्यः (५।२।२७) सप्तमीत्यादिनाऽस्तातिप्रत्ययः । अस्ताति चेति पुरादेशः (५।२।४०) । उपरि ग्रामस्य । उपरिष्टाद् ग्रामस्येति । उपर्युपरिष्टा (५।२।३१) दित्यूर्ध्वशब्दस्योप इत्यादेशो रिलरिष्टातिलौ च प्रत्ययौ भवतः ।

## ३१ । एनपा द्वितीया ।

पूर्वेण षष्ठ्यां प्राप्तायां वचनमिदमिति । एनपोऽतसर्थत्वात् । तदर्थो योगविभागः कर्त्तव्य इति । एनपेति पृथग्योगः कर्त्तव्य एनपायोगे षष्ठी यथा स्यात् । अन्यथा हि द्वितीययासौ बाध्येत । ततो द्वितीयेति द्वितीयो योगः । अत्र चैनपेति वर्त्तते ।

३२ । पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।

पञ्चमीग्रहणमनुवर्त्तत इति । स्वरितत्वात् । इमे सर्वे पृथगादयोऽसहायेऽर्थे वर्त्तन्ते । भेदेनोपादानन्तु पर्य्यायान्तरनिवृत्त्यर्थम् । इह तृतीयापञ्चम्यौ मा भूताम् । हिरुग् देवदत्तस्य । विष्वग् देवदत्तस्येति । तत्रासत्यां पञ्चमीग्रहणानुवृत्तौ यथा हिरुगित्यादिना पर्य्यायान्तरेण योगे षष्ठी भवति तथा पृथगादिभिर्योगे पक्षे षष्ठी स्यान्न पञ्चमी । तस्मात् पञ्चमीग्रहणमनुवर्त्तनीयम् । यद्येवमनुवृत्तेरेव पक्षे भविष्यति । तत् किमर्थमन्यतरस्यांग्रहणम् ? सत्यम् । तत् कृतञ्च तस्या एवानुवृत्तेः सूचनार्थमुत्तरार्थञ्च ।

३३ । करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ।

यदा तु धर्म्ममात्रमित्यादि । यद्योगाद् द्रव्यं स्तोकादिव्यपदेशमासादयति ते गुणा धर्म्मशब्देनोच्यन्ते । तन्मात्रं स्तोकादिभिः शब्दैरभिधीयमानं करणत्वेन यदा विवक्ष्यते नतु द्रव्यं तदा स्तोकादिशब्दानामसत्त्ववचनता । यदा तु सोऽयमित्यभेदात् तद्वति द्रव्ये वर्त्तन्ते तदा तेषां सत्त्ववचनता भवति । क्रियाविशेषणे मा भूदिति । क्रियायाः साध्यत्वात् कर्मत्वम् । तद्विशेषणमपि कर्म भवति । तच्चासत्त्वं भवति । क्रियैव हि तावद् द्रव्यं न भवति । कुतः पुनस्तद्विशेषणं द्रव्यं भविष्यति ? एकार्थत्वेऽपि स्तोकादीनां भेदेनोपादानं पर्य्यायान्तरनिवृत्त्यर्थम् । इह मा भूत् । मात्रया मुक्त इति ।

३४ । दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।

विकल्पेन पञ्चम्यां विहितायां पक्षे शेषत्वादेव यद्यपि षष्ठी सिध्यति तथापि यदिह षष्ठीग्रहणं कृतं तच्चतुर्थी (२।३।७३) चाशिष्येत्यादिना ऽशिषि या चतुर्थी विधीयते तामपि बाधित्वा षष्ठ्येव यथा स्यादित्येवमर्थम् । दूरं स्थितं ग्रामस्य । अन्तिकं स्थितं ग्रामस्येति । ननु चान्यतरस्यांग्रहणे प्रकृते पुनरन्यतरस्यांग्रहणं किमर्थ मित्याह अन्यतरस्यांग्रहणमित्यादि । यदीहान्यतरस्यांग्रहणं न क्रियेत तदा पक्षे तृतीया स्यात् । तस्या एवानन्तरसूत्रे श्रुतत्वात् । पुनरन्यतरस्यांग्रहणं क्रियमाणं पञ्चमीविधानार्थं विज्ञायते ।

प्रयोजनान्तराभावात्। तथाहि तृतीयाविकल्पार्थं तावदेतन्न भवति। तृतीयाविकल्पो हि पूर्वेणान्यतरस्यांग्रहणेन सिध्यति। न चान्या काचिद्विभक्तिः प्रकृता। किन्तर्हि ? पञ्चमी। तस्मात् पञ्चमीविकल्पार्थमेतद् विज्ञायते।

## ३५। दूरान्तिकार्थेभ्यो द्वितीया च।

पञ्चमी चेति। तदनुवृत्तिसामर्थ्यात् तृतीयापि समुच्चीयत इति चकारेण। यथायथमिति। यथास्वं यो यस्यात्मीयो विषयस्तत्रासौ भवति। न विभक्त्यन्तरमित्यर्थः।

## ३६। सप्तम्यधिकरणे च।

दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्तीति। पूर्वसूत्रेण द्वितीयादयस्तिस्रः। अनेन सप्तमी। सप्तमीविधाने क्तस्येन्विषयस्येत्यादि। इन्विषयो यः क्त स्तदीये कर्मणि सप्तमी विधेया। कश्चेन्विषयः क्तः ? य स्तदन्तस्तेनैव सह प्रयुज्यत इत्यर्थः। अनन्यत्वभावार्थत्वादत्र विषयशब्दस्य। अधीती व्याकरण इति। अधीतं व्याकरणमनेनेति। श्राद्धमनेन (५।२।८५) भुक्तमित्यतोऽनेनेत्यनुवर्त्तमाने पूर्वादिनिरित्यत (५।२।८६) इनिरित्यनुवर्त्तमाने चेष्टादिभ्यश्चेतीनि (५।२।८८) प्रत्ययः। अत्र यद्यपि कर्मण्येव क्तो विहितस्तथापि तद्धित उत्पन्ने ऽधीतव्याकरणयोरभिसम्बन्धो निवर्त्तते। अस्ति च धात्वर्थस्य व्याकरणेन सम्बन्ध इति कर्मैव व्याकरणं भवतीत्यतो द्वितीया स्याद् यथा कृतपूर्वी कटमिति। तस्मात् सप्तम्या उपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। योऽसावधीती कर्त्ता तस्य व्याकरणं विषयत्वेन विवक्ष्यते। तस्मादधिकरण इत्येवं सिद्धा सप्तमी। साध्वसाधुप्रयोग इत्यादि। अनर्चार्थमिह साधुशब्दस्य ग्रहणम्। अर्चायां हि साधुनिपुणाभ्या मर्चायामित्यनेनैव (२।३।४३) सिद्धा सप्तमी। साधुर्देवदत्तो मातरीत्यादि। अत्राप्यधिकरण एव सप्तमी। तथाह्यत्र मातृस्थासु क्रियासु मातृशब्दो वर्त्तते। पितृस्थासु क्रियासु पितृशब्दः। तासाञ्च क्रियाणां साध्वसाधुतां प्रति विषयभावोऽस्तीति वैषयिकाधिकरण एव सप्तमी। वक्तव्यशब्दस्तु व्याख्येय इत्यर्थे वर्त्तते। एवमुत्तरत्रापि। कारकार्हाणाञ्चेत्यादि। भावप्रधानोऽत्र कारकशब्दः।

क्रियां प्रति येषां कारकत्वं साधनत्वं न्याय्यं ते कारकार्हा स्तेषां कारकार्हत्वे सप्तमी वक्तव्या। ऋद्धेष्वित्यादि। ऋद्धा हि भुजिक्रियां प्रति साधनभावमर्हन्ति। तेषामेव चेह कारकत्वं विवक्षितम्। एतदनुसारेण कारकार्हाणाञ्चाकारकत्व इत्येवमादेरर्थो वेदितव्यः। अत्रापि सर्वत्र यस्य च भावेन (२।३।३७) भावलक्षणमित्यनेनैव सिद्धा सप्तमी। तथाहि ऋद्धादिसम्बन्धिना भुजिक्रियादिलक्षणेनात्र भावेन दरिद्रादिसम्बन्ध्यासनादिभावो लक्ष्यते। चर्मणि द्वीपिनं हन्तीत्यत्र द्वीपिहननस्य निमित्तं चर्म। तस्य द्वीपिना कर्मणा सह संयोगः। अत्रापि चकारस्यानुक्तसमुच्चयार्थत्वात् सिद्धा सप्तमी। ननु च दूरान्तिकार्थानुकर्षणार्थश्चकारः। नार्थस्तदनुकर्षणार्थेन चकारेण। सप्तमीति योगविभागादेव दूरान्तिकार्थेभ्यः सप्तमी भविष्यति। अथवोत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् सप्तमी वेदितव्या।

## ३७। यस्य च भावेन भावलक्षणम्।

कीदृशी पुनः क्रिया क्रियान्तरं लक्षयतीत्यत आह प्रसिद्धा चेत्यादि। चकारोऽवधारणार्थः। प्रसिद्धैवेत्यर्थः। नहि स्वयमप्रसिद्धं परस्य लक्षणमुपपद्यते। अथ कथं फलायमानेष्वाम्रेषु गतः पक्वेष्वागत इत्यत्र सप्तमी? नह्यीह भावः श्रूयते। यद्यपि न श्रूयते तथापि गम्यते। फलायमानेषु (C) जातेष्वित्यर्थः।

## ३८। षष्ठी चानादरे।

अनादरस्तिरस्कारः परिभव इत्यर्थः। रुदत इति। रुदिर् अश्रुविमोचने। शतृप्रत्ययः।

## ३९। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च।

स्वामीश्वराधिपतीनामेकार्थत्वेऽपि भेदेनोपादानं पर्य्यायान्तरनिवृत्त्यर्थम्। इह मा भूत्। ग्रामस्य राजेति। षष्ठ्यामेव प्राप्तायामिति। शेषलक्षणायां षष्ठ्यां प्राप्तायाम्।

---

(C) फलायमानेष्वित्यत्र कलिकामात्रेष्विति दाक्षिणात्यपुस्तके पाठः।

## ४० । आयुक्तकुशलाभ्याञ्चासेवायाम् ।

आयुक्तता निपुणता च कटादिकरणविषयैवेति सप्तम्यामेव प्राप्तायां पक्षे षष्ठीविधानार्थं वचनम् । आसेवायामिति किम् ? आयुक्तो गौः शकटे । ईषद् युक्त इत्यर्थः ।

## ४१ । यतश्च निर्धारणम् ।

किमर्थं पुनरिदम् ? यावता निर्धार्य्यमाणोऽवयवः समुदायान्तर्भूतः । तत्र यदा समुदायस्याधिकरणत्वं विवक्ष्यते तदा सप्तमी सिद्धैवेति यथा वृक्षे शाखेति । यदा त्ववयवावयविसम्बन्धस्तदा षष्ठी यथा वृक्षस्य शाखेति । सत्यमेतत् । प्रपञ्चार्थं वचनम् ।

## ४२ । पञ्चमी विभक्ते ।

विभागो विभक्तमिति नपुंसके भावे (३।३।११४) क्तः । यस्मिन्निर्धारणाश्रय इति । यतो निर्धार्य्यते स इह निर्धारणाश्रय इति सर्वस्मिन्नेव निर्धारणाश्रये विभागोऽस्तीति विशेषणोपादानसामर्थ्याद् विभाग एव यत्र स निर्धारणाश्रयो विज्ञायते । तेन कृष्णा गवां सम्पन्नक्षीरतमेत्यत्र न भवति । तथाहि गोषु निर्धार्य्यमाण एकदेशो यस्माद् गोत्वेनान्तर्भूतः प्रतीयते तस्मान्नास्ति विभागः । यदा तु कृष्णेन गुणेन पृथग्भूतः प्रतीयते तदास्ति विभाग इति । नात्र निर्धारणाश्रयो विभाग एव । इह पुनर्माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इति न केनचित् प्रकारेण माथुराणां पाटलिपुत्रकेष्वन्तर्भावः । अपि च विभाग एव । तथाहि न पाटलिपुत्रकेषु माथुरत्वेन नाप्याढ्यतरत्वेन माथुराणामन्तर्भावः । तस्मादत्र विभाग एवेत्ययमस्य योगस्य विषयः । अन्ये त्वाहुः । यत्र राशीकृतस्य पृथक्करणं स पूर्वस्य योगस्य विषयः । यत्र तु पृथग्भूतस्यैव गुणान्तराविष्करणं सोऽस्य तत्र द्वयोरप्यवस्थयोर्विभाग एवेति कृत्वा । अयमपि योगः प्रपञ्चार्थ एव । विभागो हि सम्बन्धात् प्रच्युतिः । पाटलिपुत्रकाश्च सम्बन्धात् प्रच्यवमानानां माथुराणां सम्बन्धे प्रच्युतेरवधिभावमुपयान्तीत्यपादान इत्येवं पञ्चमी सिद्धा ।

## ४३ । साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ।

अप्रत्यादेरिति वक्तव्यमिति । के पुनः प्रत्यादयः ? येषां लक्षणेत्थम्भूताख्यानेत्यादिना ( १।४।९० ) कर्मप्रवचनीयसंज्ञा विहिता ते प्रतिपर्य्यनवः प्रत्यादयः ।

## ४४ । प्रसितोत्सुकाभ्यां तृतीया च ।

प्रसितशब्दोऽयं गुणवचनोऽप्यस्ति । प्रकृष्टः सितः प्रसितः । क्रियाशब्दोऽप्यस्ति यः षिञ् बन्धन इत्यस्य प्रपूर्वस्य निष्ठायां व्युत्पाद्यते । तत्रेहोत्सुकशब्देन क्रियाशब्देन साहचर्य्यात् क्रियाशब्दो विज्ञायत इत्यत आह प्रसितः प्रसक्त इति । य स्तत्र नित्य मेवाबद्धः स प्रसित शब्देनोच्यत इति । आबद्ध इवाबद्धः । यो हि यत्र प्रसक्तः स तत्राबद्ध इव भवति । केशैः प्रसितः केशेषु प्रसित इत्यादि । प्रसितत्वमुत्सुकत्वञ्च केशविषयमिति सप्तम्यधिकरणे (१।३।३६) इत्येव सिद्धा सप्तमी । पक्षे तृतीयाविधानार्थं वचनम् ।

## ४५ । नक्षत्रे च लुपि ।

नक्षत्रे च लुपीति । सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमीविधानम् । अतएवाह लुबन्तान्नक्षत्रशब्दादित्यादि । पुष्येणेत्यादि । नक्षत्रेण युक्तः (४।२।३) काल इति विहितस्याणो लुबविशेष इति (४।२।४) लुप् । पञ्चालेषु वसतीत्यत्रापि तस्य निवास इति (४।२।६९) विहितस्याणो जनपदे (४।२।८१) लुबिति लुप् । मघासु ग्रह इति । सामीप्येऽधिकरण एव सप्तमी । अत्र नक्षत्रेण युक्तः (४।२।३) काल इत्यस्यार्थस्याविवक्षितत्वादण् न भवति । अद्य पुष्य इति । पूर्ववदण् । लुप् । अधिकरण इत्यनुवर्त्तते । न चेहाधिकरणत्वं विवक्षितमिति भावः ।

## ४६ । प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ।

प्रातिपदिकार्थः सत्तेति । यदि जातिस्तदा देवदत्तादौ न स्यात् । अथ सतो भावः सत्ता तदाकाशकुसुमादौ न स्यादित्याह प्रातिपदिकार्थः सत्तेति । यत्रार्थान्तरनिरपेक्षा शब्दस्य प्रवृत्तिः स सर्वः प्रातिपदिकार्थः । सत्ताग्रहणं तूपलक्षणार्थम् । उच्चैर्नीचैरिति । अत्रोच्चैःशब्दस्य स्वार्थे जात्याद्य-

र्थान्तरनिरपेक्षा वृत्तिः । अत्र च प्रथमायाः प्रयोजनं सपूर्वायाः प्रथमाया (८।१।२६) विभाषेति विकल्पेन तेमयादि विधिर्य्यथा स्यात् । ग्राम उच्चैस्ते स्वम् । ग्राम उच्चैस्तव स्वमिति । पदसंज्ञा तु षष्ठ्याऽपि स्यादेव । कुमारी वृक्षः कुण्डमिति । ननु चात्रापि प्रातिपदिकार्थं इत्येवंसिद्धा प्रथमा । लिङ्गमपि प्रातिपदिकार्थं एव भवति । तथाच वक्ष्यति (D) स्त्रियामित्यत्र (४।१।३) सिद्धास्तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादय इति । नैतदस्ति । इदमपि हि तत्र वक्ष्यति (E) । अथवा पुनरिदमस्तु । स्त्रियामभिधेयायामिति । किञ्च स्त्रीत्वं प्रत्येषा गतिः स्यात् । पुंनपुंसके तु नियोगतो विभक्तिवाच्ये एव । तथाहि विना विभक्त्या तटशब्दः प्रयुज्यमानः किं पुंस्त्वमाचष्ट उत नपुंसकत्वमिति सन्देहः स्यात् । तत्र यथा राज्ञः पुरुष इत्यत्र प्रातिपदिकार्थेनानुपात्ते स्वस्वामिकसम्बन्धे तस्य चाभिधाने विभक्त्यपेक्षया षष्ठी भवति तथा पुंनपुंसकयोरपि षष्ठी स्यात् । तस्माल्लिङ्गग्रहणं कर्त्तव्यम् । द्रोणः । खारी । आढ़कमिति । ननु चात्रापि प्रातिपदिकार्थत्वादेव सिध्यति प्रथमा । तथाहि द्रोणादयः शब्दाः परिमाणे लौहे दारुमये वा ऽर्थान्तरनिरपेक्षा एव वर्त्तन्ते । सत्यम् । सिध्यति तदा यदा परिमाण एव वर्त्तन्ते । यदा तु पुनः परिमेये वर्त्तन्ते तदा न सिध्यति । तथाहि द्रोणादयः शब्दा द्रोणादिकं परिमाणमर्थान्तरं प्रवृत्तिनिमित्तमुपादाय व्रीह्यादौ परिमेये वर्त्तन्ते । कथं पुनस्ते तत्र वर्त्तन्ते ? सोऽयमित्यभेदसम्बन्धात् । द्रोणपरिमितो व्रीहिर्द्रोण इति । यद्येवं निमित्तरूपेण निमित्तिनोऽभिधानादव्यतिरिक्त एव प्रातिपदिकार्थ इति प्रातिपदिकार्थ इत्येव सिद्धा प्रथमा । न सिध्यति । नहि मुख्ये सति गौणस्याश्रयणं युक्तम् । नन्वेवमपि लिङ्गग्रहणादेवात्र प्रथमा भविष्यति । तत् किं परिमाणग्रहणेन ? नैतदस्ति । तस्य हि यत्र परिमाणं नास्ति सोऽवकाश इति । अत्र परिमाणाधिक्ये षष्ठ्येव स्यात् । तस्मात् परिमाणग्रहणं कर्त्तव्यम् । परिमाणग्रहणाच्च यत्र निमित्तादर्थान्तरे सोऽयमित्यभेदसम्बन्धाच्छब्दः प्रवर्त्तते

(D) वार्त्तिककार इति शेषः ।

(E) भाष्यकार इति शेषः । काशिकायान्त्वेते वाक्ये स्त्रियामिति (४।१।३) सूत्रव्याख्यायां न स्तः ।

तदुपलक्षणार्थं वेदितव्यम्। तेन परिमाणवदर्थान्तरभूतेष्वप्युन्मानादिषु प्रथमा भवति। द्रुतम्। पलम्। दीर्घं काष्ठम्। शुक्लः पटः। हस्तो मुष्टिर्वितस्तिरित्येवमादि सिद्धं भवति। कुत एतत्? मात्रशब्दात्। स ह्यत्र व्याप्तिवचनो गृह्यते यथा कन्यामात्रं वरयति ब्राह्मणमात्रं भोजयतीति। तेन परिमाणग्रहणस्यैवोपलक्षणार्थता विज्ञायते। यदि तु यथा पयोमात्रं भुङ्क्ते इत्यत्र मात्रशब्दो नियमार्थ स्तथेहापि नियमार्थ एव स्यात् ततश्चोन्मानादिषु प्रथमा न स्यात्। तस्य परिमाणादन्यत्वात्। उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यादिति। वचनग्रहणे त्वसत्युक्तेष्वेकत्वादिषु प्रथमा न स्यात्। अनभिहित (२।३।१) इत्यधिकारात्। ननु च परिगणनं तत्र कृतम्। तत् कुतोऽयं प्रसङ्गः? नैतदस्ति। प्रत्याख्यातं हि तत्र परिगणनम्। तथाहि कटः कर्म। भीष्मादयोऽपि कर्माणि। तत्र कर्मणीत्येव द्वितीया सिद्धा। कटशब्दादुत्पद्यमानया द्वितीयया सामान्यकर्मोक्तम्। न विशेषकर्म्म। तत्रावश्यं विशेषो वक्तव्य इति भीष्मादिभ्योऽपि विशेषाभिधानार्थं द्वितीया भविष्यति। अथवा कट एव कर्म। तत्सामानाधिकरण्याद् भीष्मादिभ्योऽपि द्वितीया भविष्यति। नार्थः परिगणनेन। यत् पुनरिदं तिङ्कृत्तद्धितसमासैः (२।३।१,वा) परिसंख्यानमिति वृत्तावुपन्यस्तं तदेभिरेवाभिधानं सम्भवतीति सम्भवप्रदर्शनार्थपरं वेदितव्यम्। यद्यप्येकादिभिरपि संख्याशब्दैरेकत्वादीनामभिधानं सम्भवति तथाप्यभिहितेऽपि तैरेकत्वादावर्थे वचनग्रहणाद् यत्नाद् भवितव्य' विभक्तेरिति। तैरप्यभिधानस्य सम्भवप्रदर्शनार्थं यत्नः कृतः। निपातस्यानर्थकस्येत्यादि। अथार्थविशेषणार्थं प्रातिपदिकग्रहणं कस्मान्न विज्ञायते? असति हि तस्मिन् न ज्ञायते कस्यार्थ इति। तथाचार्थमात्रे प्रथमा स्यात्। नैतदस्ति। प्रातिपदिकाद्धि प्रथमा विधीयते। तत्रासति प्रातिपदिकग्रहणे प्रातिपदिकार्थ एव भवतीति विज्ञायते। तस्माद् वृत्तिकारोक्तमेव प्रातिपदिकग्रहणस्य प्रयोजनं न्याय्यम्।

## ४७। सम्बोधने च।

सम्बोधनमभिमुखीकरणम्। तदधिके प्रातिपदिकार्थ इत्यभिमुखी·

कारकस्य क्रियापरत्वात् प्रातिपदिकार्थे तस्यान्तर्भावो नास्ति । तस्या-तदात्मकत्वात् । तस्मात् तेनाधिकः प्रातिपदिकार्थो भवति । अथ कथमिह प्रथमा ? हे पचन् हे पचमानेति ? कथञ्च न स्यात् ? शत्-शानजभ्यामुक्तत्वात् सम्बोधनस्य । एतावपि सम्बोधने चेति सम्बोधन एव वक्ष्यति । मा भूदनेन । पूर्वसूत्रेण भविष्यति । सम्बोधनार्थस्येह कृत्-तद्धितसमासाश्चेत्यनेन (१।२।४६) प्रातिपदिकार्थत्वात् । योगविभाग उत्तरार्थः ।

## ४८ । साऽमन्त्रितम् ।

तदन्तं शब्दरूपमिति । ननु च संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्ना-स्तीति ज्ञापितमेतत् सुप्तिङन्तं (१।४।१४) पदमित्यत्रान्तग्रहणेन । इह च संज्ञाविधौ प्रत्ययग्रहणम् । तत् कथं तदन्तस्य संज्ञा विधीयते ? नैतदस्ति । यद्यपि संज्ञाविधौ प्रत्ययग्रहणमिह तथापि तदन्तस्यैवेयं संज्ञा विधीयते । यदीह प्रत्ययमात्रस्य संज्ञाग्रहणं स्यात् तदा प्रदेशेषु तस्यैव ग्रहणं स्यात् । तथाच संज्ञाकरणमनर्थकं स्यात् । प्रदेशेषु सम्बोधन इत्येवं ब्रूयात् । एवमपि प्रत्ययमात्रस्य ग्रहणं लभ्यत एव । तस्यैव सम्बोधने विहितत्वात् । तस्मात् संज्ञाकरणादेव तदन्तस्य संज्ञा लभ्यते । सेति वचनं पूर्वसूत्रेणापि सम्बोधने या विहिता तस्या अपीयं संज्ञा यथा स्यात् । हे पचन् हे पचमानेत्यत्र । असति त्वस्मिन्ननन्तरस्य विधिर्वा भवति प्रतिषेधो वेति पूर्वसूत्रेणैव या विहिता तस्या एव स्यात् सेत्येतदुच्यमानं सर्वनामपदं सामान्येन प्रवर्त्तत इति कृत्वा । अतः सम्बोधनमात्रे या प्रथमा तां प्रतिपादयति । तेन सर्वत्र संज्ञा सिद्धा भवति । आमन्त्रितसंज्ञायां सत्यां हे देवदत्त इत्यादावा-मन्त्रितस्येत्याद्युदात्तत्वं (६।१।१९८) भवति । आमन्त्रितमिति महत्याः संज्ञायाः करणं वैचित्र्यार्थम् ।

## ४९ । एकवचनं सम्बुद्धिः ।

हे पटो हे देवदत्त इति । अत्र सम्बुद्धिसंज्ञायां सत्यां सम्बुद्धौ (७।३।१०६) चेत्यधिकृत्य ह्रस्वस्य गुण (७।३।१०८) इति गुण एङ् ह्रस्वात् (६।१।६९) सम्बुद्धेरिति मो लोपो यथायोगं भवति । अथ सुग्रहणमेव कस्मान्न कृतम् ।

न च सप्तमीबहुवचनस्य प्रसङ्गः। सम्बोधनप्रथमाधिकारात्। सततम्। किन्तु नैतदस्ति। प्रत्ययमात्रस्य संज्ञाविधानार्थमेकवचनग्रहणं कृतम्। हे पचन् हे पचमानेति। अन्यथा हि पूर्व्वेण यथा तदन्तस्य संज्ञा विहिता तथेहापि स्यात्। नचेहासंज्ञिनः कश्चिद् विशेषोऽङ्गीक्रियत इति सुशब्देन तदन्तमेव लभ्यते। ततश्च तदन्तस्यैव संज्ञा स्यात्। तथाचैङ्ह्रस्वात् (६।१।६९) सम्बुद्धेरिति सोर्लोपो विधीयमान आदेः (१।१।५४) परस्येत्यादेरेव स्यात्। प्रत्ययमात्रस्य न स्यात्। तस्मात् प्रत्ययमात्रस्यैव संज्ञा यथा स्यादित्येवमर्थमेकवचनग्रहणम्।

## ५०। षष्ठी शेषे।

कर्मादीनां प्रकृतत्वात् तदपेक्षया शेषत्वं विज्ञायत इत्याह कर्मादिभ्यो योऽन्य इति। कर्मादयः कारकविशेषा स्तस्य सम्बन्धस्य हेतुभूताः। स तु फलभूतः। हेतुफलयोश्च प्रसिद्धमन्यत्वमिति तेभ्योऽन्यो भवति। प्रातिपदिकार्थव्यतिरेक इति। व्यतिरेक आधिक्यम्। अथवा येन प्रातिपदिकार्थो व्यतिरिच्यते व्यतिरेकीक्रियते स व्यतिरेकः। प्रातिपदिकार्थस्य व्यतिरेकः प्रातिपदिकार्थव्यतिरेकः। स शेषः। कः पुनरसावित्याह स्वस्वामिकसम्बन्धादिरिति। आदिशब्देनावयवावयविप्रभृतेः सम्बन्धस्य ग्रहणम्। सम्बन्धश्च यद्यपि द्विष्ठस्तथापि तस्यैकत्वादेकत एव सम्बन्धिन उत्पद्यमानया षष्ठ्या विभक्त्या ऽभिहितत्वाद् द्वितीयसम्बन्धिनः षष्ठी न भवति। एकस्मादुत्पद्यमानापि षष्ठी विशेषणादेव भवति। न विशेष्यात्। विशेष्यात्तु प्रथमैव भवति। यस्माच्छेषशब्दोऽयं यथा प्रकृतादन्यविशेषण माचष्टे तथा परार्थमपि। एवं ह्यभियुक्ताः पुरुषा उपदिशन्ति शेषः परार्थ इति। राज्ञः पुरुष इति स्वस्वामिकसम्बन्धस्योदाहरणम्। अत्र पुरुषस्य प्राधान्यं विशेष्यत्वात्। राज्ञोऽप्राधान्यं विशेषणत्वात्। विशेषणस्य परार्थत्वाच् शेषभाव इति ततः षष्ठी भवति। यदा तु द्वावपि विशेषणभूतौ तृतीये सम्बन्धिन्यपेक्षितौ भवत स्तदा द्वाभ्यामपि षष्ठी भवति। राज्ञः पुरुषस्य गृहमिति। पशोः पाद इति। अत्रावयवावयविसम्बन्धे षष्ठी। पितुः

पुत्र इत्यत्र जन्यजनकसम्बन्धे षष्ठी। अथ शेषग्रहणं किमर्थम्? यावता कर्मणि (२।३।२) द्वितीयेत्येवमादौ प्रत्ययनियमोऽर्थनियमश्चेति द्वावपि पक्षौ। तत्र प्रत्ययनियमपक्षे यदि शेषग्रहणं न क्रियेत तदा कर्मण्येव द्वितीयेति कर्मानियतम्। द्वितीया तु नियता। अतस्तत्रापि षष्ठी स्यादिति शेषग्रहणं कर्त्तव्यम्। शेष एव यथा स्यादन्यत्र मा भूदिति। अर्थनियमपक्षे तु शेषग्रहणं शक्यमकर्त्तुम्। यावता कर्मणि द्वितीयैवेति कर्म नियतम्। द्वितीया त्वनियता। तस्यामन्यत्रापि प्राप्तायां षष्ठीत्युच्यमानं सूत्रमिदं नियमार्थं भविष्यति। यत्र षष्ठी चान्या च प्राप्नोति तत्र षष्ठेव भवति। एवमन्यत्रापि वेदितव्यम्।

## ५१। ज्ञोऽविदर्थस्य करणे।

यद्यपि बहवो विदयः सन्ति तथापि यस्यार्थे जानातेर्वृत्तिः सम्भवति तस्यैव विदेः प्रतिषेधकरणं युक्तम्। विद ज्ञान इत्यस्यैवार्थे जानातेर्वृत्तिः सम्भवति। तस्मादविदर्थस्येत्यनेन ज्ञानार्थस्यैव प्रतिषेधो विज्ञायत इत्याह अज्ञानार्थस्येत्यादि। सर्पिषो जानीते मधुनो जानीत इति। अपह्नवे ज्ञ (१।३।४) इत्यनुवर्त्तमाने ऽकर्मकाच्चेत्यात्मनेपदम् (१।३।४५)। मधुन इति। इकोऽचि (७।१।७३) विभक्ताविति नुम्। सर्पिषा करणभूतेन प्रवर्त्तत इत्यर्थः। यस्य प्रियतमं सर्पिस्तस्य प्रवृत्तिं प्रति सर्पिषः करणभूतत्वात्। धातूनामनेकार्थत्वाज्जानातिरिह प्रवृत्त्यर्थः। सर्पिषि रक्तः प्रतिहतो वेति। सर्पिषि रक्तत्वं प्रतिहतत्वञ्च चित्तभ्रान्तेः कारणमाह। यदि सर्वमेव ग्राह्यं तदात्मना सर्पिःस्वभावतया प्रतिपद्यते। एवं सत्यविदर्थता नोपपद्यते। ज्ञानार्थत्वादित्यत आह। मिथ्याज्ञानमज्ञानमेवेति। ज्ञानकार्य्याकरणादिति भावः। अविपरीतविषयपरिच्छेदो हि ज्ञानकार्य्यं तच्च मिथ्याज्ञानेन न क्रियत इति मिथ्याज्ञानमज्ञानमुच्यते। यथा पुत्त्रकार्य्याकरणात् पुत्रोऽप्यपुत्त्र इति।

## ५२। अधीगर्थदयेशां कर्मणि।

अधीगिति। इक् स्मरणे इत्यस्याधिपूर्वस्य ग्रहणम्। अधीगित्यनेन समानार्था अधीगर्थाः। ककारानुबन्धकरणमस्य धातोरत्रैव सूत्रे विशेषणार्थम्।

अध्ययनार्थानामित्युच्यमाने सन्देहः स्यात् कोऽयं धातुरिति। अधिपूर्वस्यो-च्चारणेनाधिपूर्वस्यैवास्य प्रयोग इति दर्शयति। कर्मणि कारक इत्यादि। यदा तदेव कर्म शेषकार्य्यत्वाच्छेषत्वेन विवक्ष्यते न कर्मत्वेन तदा तत्र षष्ठी भवति। अध्येतीति। अदादित्वाच्छपो लुक्। एवमीष्ट इति। व्रश्चादि-सूत्रेण (८।२।३६) षत्वम्। मातुर्गुणैः स्मरतीति। अत्र कर्मग्रहणाद् गुणानां करणभूतानां शेषविवक्षायामपि षष्ठी न भवति।

५३। कृञः प्रतियत्ने।

एधो दकस्योपस्कुरुत इति गन्धनादिसूत्रेणात्मनेपदम् (१।३।३२)। उपात् प्रतियत्नेत्यादिना (६।१।१३९) सुट्।

५४। रुजार्थानां भाववचनानामज्वरेः।

रुजेति केचिद्भिदादिषु पठन्ति। ये न पठन्ति तेऽपि चिन्तिपूजिक थिकुम्बिचर्चश्चेति (३।३।१०५) चकारस्यानुक्तसमुच्चयार्थत्वादस्मादेव निपातनाद्वा रुजाशब्दस्य साधुत्वं वर्णयन्ति। रुजा ऽर्थो येषां ते रुजार्थाः। भाववचना-नामिति। यदि भावार्थाभिधायिनां रुजार्थानामित्येषोऽर्थो विवक्षितः स्यात् तदा ऽनर्थकमिदं वचनं स्यात्। सर्वएव हि रुजार्था भाववचनाः। तस्मा-न्नात्र धातुवाच्यो भावो विवक्षितः। किं तर्हि? प्रत्ययवाच्यो यत्र भाव इति (३।३।१८) घञ् विधीयते। वचनशब्दोऽयं कर्त्तृसाधनः। वक्तीति वचनः। कृत्य-ल्युटो बहुलमिति (३।३।११३) कर्त्तरि ल्युट्। नच रुजार्थानां यो भावस्तस्य वचनक्रियां प्रति कर्त्तृत्वं सम्भवतीति सामर्थ्याद्वचनशब्देन प्रकृत्यर्थं परित्यज्य प्रत्ययार्थो विवक्षित इति प्रतीयते। स पुनः कर्त्तृशक्तिः। भाववचनानामिति बहुव्रीहिः। भावो वचनः कर्त्ता येषां ते भाववचनाः। भावकर्त्तृका इत्यर्थः। एतत् सर्वं चेतसि कृत्वाह भावकर्त्तृकाणामिति। भावकर्त्तृकाणामित्येवं नोक्तं वैचित्र्यार्थम्। चौरस्य रुजतीति। रुजो भङ्गे। तौदादिकः। अत्र रोगो भावः कर्त्ता। चौरस्यामयतीत्यत्राप्यामयः। अम रोगे। चौरादिकः। एति जीवन्तमानन्दो नरं वर्षशतादपीति। अस्यात्रानन्दो भावः कर्त्ता। नत्वेति धातू रुजार्थः। किं तर्हि? गत्यर्थः। नदी कूलानि रुजतीति।

रुजिरत्न द्रव्यकर्तृको न भावकर्तृकः । नद्या द्रव्यत्वात् । नैतद् युक्तं प्रत्युदाहरणम् । रुजाशब्दो हि रूढ़िशब्दत्वाद् व्याधिमेवाचष्टे । नचात्र व्याधिवचनः । किं तर्हि ? भङ्गवचनो रुजिः । एवं तर्हि प्रत्युदाहरणदिगियं दर्शिता वृत्तिकृता । इदन्त्वत्र प्रत्युदाहरणम् । श्लेष्मा पुरुषं रुजतीति । व्याधिना ग्राहयतीत्यर्थः । ज्वरयतीति । ज्वर रोगे । हेतुमण्णिच् । घटादित्वान्मित्त्वम् । मितां ह्रस्व (६।४।९२) इति ह्रस्वः । सन्तापयतीति । तप सन्तापे । हेतुमण्णिच् । सन्तापोऽत्र भावः कर्ता ।

## ५५ । आशिषि नाथः ।

सर्पिषो नाथत इति । सर्पिर्यस्य नास्त्यतोऽर्थित्वादाशास्ते स सर्पिर्मे भूयादिति । आशिषि नाथ ( १।३।२१,वा ) इत्युपसंख्यानादात्मनेपदम् । माणवकमुपनाथतीति । याचत इत्यर्थः ।

## ५६ । जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ।

न दैवादिकस्येति । हिंसायामिति वचनात् । अस्य च तत्राप्रवृत्तेः । अतएव हि ण्यन्तस्यैव ग्रहणम् भविष्यति । तत् किमर्थो ण्यन्तस्य निर्देश इति ? कः पुनराह ण्यन्तस्य निर्देश इति ? अत्र हीकारोऽयं धातुनिर्देशार्थ कृतः । इक्श्तिपौ धातुनिर्देश ( ३।३।१०४, वा ) इति । यद्येवं जासीत्याकारः कथं श्रूयते ? उच्यते । आकारमुच्चार्य्य विकृतनिर्देशः कृतः । विकृतनिर्देशस्तु यत्रास्यैतद्रूपं भवति तत्रैव यथा स्यादिह मा भूद् दस्युमजीजसदिति । लुङ् । णिश्रीत्यादिना (३।१।४८) च्लेश्चङ् । णौ चङ्युपधाया (७।४।१) ह्रस्वः । चङीति (६।१।११) द्विर्वचनम् । सन्वल्लघुनीत्यादिना सन्वद्भावः (७।४।९३) । सन्यत (७।४।७९) इतीत्त्वम् । दीर्घो लघोरिति (७।४।९४) दीर्घः । नाटक्राथयोरपि विकृतनिर्देशस्यैतदेव प्रयोजनम् । इह मा भूत् । दस्युमनीनटदिति । दस्युमचिक्रथदिति । क्रथेर्वृद्धिश्च प्रयोजनम् । एतच्च निपातनाद्वृद्धिरिति ब्रुवता वृत्तिकारेण दर्शितम् । निप्रहन्निति । धातूपसर्गनिर्देशमात्रमिह तन्त्रम् । नतूपसर्गयोः सङ्घातो नाप्यानुपूर्वी । तयोरविवक्षितत्वात् । तेन निप्रशब्दयोर्व्यस्तसमस्तयोर्विपरीतानुपूर्वीकयोश्च ग्रहणं

विज्ञायत इत्याह सङ्गातविगृहीतविपर्य्यस्तस्य ग्रहणमिति। चौरस्य प्रणिहन्तीति। नेर्गदनदेत्यादिना (८।४।१७) णत्वम्। चौरस्योन्नाटयतीति। नट अवस्कन्दने। चुरादि णिच्। चौरस्योत्क्राथयतीति पूर्ववण्णिच्। ननु च णिचि कृते ऽत उपधाया (७।२।११६) इति वृद्धिः सिद्धा। तत्किमर्थमुच्यते निपातनाद्वृद्धिरिति। अत आह अयं हीत्यादि। ह्रस्वत्वं स्यादिति। मितां ह्रस्व (६।४।९२) इत्यनेन। चौरस्य पिनष्टीति। पिष्लृ सञ्चूर्णने। रुधादित्वाच्छ्नम्। धानाः पिनष्टीति। अत्र हिंसा नास्ति। तस्याः प्राणिधर्म्मत्वात्। इदञ्चाभावकर्त्तृकाणामपि यथा स्यादित्येवमर्थमारब्धम्। चौरस्योज्जासयति देवदत्तः।

## ५७। व्यवहृपणोः समर्थयोः।

शतस्य व्यवहरतीति। शतं क्रयविक्रयेण विनियुङ्क्ते दीव्यतीति वेत्यर्थः। शतस्य पणत इत्यत्रापि स एवार्थः। अनुदात्तेत्त्वादात्मनेपदम्। आयप्रत्ययः कस्मान्न भवतीति? गुपूधूपेत्यादिना (३।१।२८) प्राप्नोतीति भावः। स्तुत्यर्थस्येत्यादि। यद्यपि पण व्यवहारे स्तुतौ चेति स्तुतिव्यवहारयोः पणिः पठ्यते तथापि स्तुत्यर्थस्यैव पणतेरायप्रत्यय इष्यते। न व्यवहारार्थस्य। तत्र वृत्तिकारः स्वयमेव युक्तिं वक्ष्यति। स्तुत्यर्थेन पणिना साहचर्य्यात् तदर्थ एव पणिरायमुत्पादयति। न व्यवहारार्थ इति शलाकां व्यवहरतीति। परिगणयतीत्यर्थः। अत्र व्यवहारार्थे पणिर्न वर्त्तत इत्यसमानार्थत्वम्। ब्राह्मणान् पणायतीति। स्तौतीत्यर्थः। पणायतीत्यस्यार्थे व्यवहरते र्वृत्तिर्नास्तीत्यसमानार्थता।

## ५८। दिवस्तदर्थस्य।

ब्राह्मणान् दीव्यतीति। स्तौतीत्यर्थः। हलि चेति (८।२।७७) दीर्घः। यदि तदर्थस्यैव भविष्यति पूर्वयोग एव दिवो ग्रहणं कर्त्तुं युक्तं स्यात्। तत् किमर्थो योगविभाग इत्यत आह योगविभाग उत्तरार्थः।

## ५९। विभाषोपसर्गे।

शलाकां प्रति दीव्यतीति। अत्रार्थान्तरे क्रीडादौ दीव्यतिर्वर्त्तते।

## ६० । द्वितीया ब्राह्मणे ।

ब्राह्मण इति । ब्राह्मणशब्दः शतपथस्याख्या । गामस्येति शेषषष्ठी । सभायामित्येतदपेक्षया । तदहरित्येतदुदाहरणम् । स्वमोर्नपुंसकादित्यमो (७।१।२३) लुक् । अहन्नित्यनुवर्त्तमाने (८।२।६८) रोऽसुपीति (८।३।१६) नकारस्य रेफः । विसर्जनीयः । दीव्येयुरिति लिङ् । झेर्जुस् । अतो येय (७।२।८०) इतीयादेशः । लिङः (७।२।७९) सलोपोऽनन्त्यस्येति सलोपः । सोपसर्गस्य विभाषया षष्ठ्यां प्राप्तायां नित्यं द्वितीयाविधानार्थं वचनं कस्मान्न भवतीत्याह सोपसर्गस्येति । विभाषोपसर्गे (२।३।५९) इत्यनेन व्यवस्थितविभाषयापि च्छन्दसि नित्यं द्वितीया भविष्यतीति तदर्थकमिदं वचनं नोपपद्यते ।

## ६१ । प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ।

इष्यतेर्दैवादिकस्येति । इष गतावित्यस्य श्यना निर्देश इष्यन्तराणां निवृत्त्यर्थः । लोण्मध्यमपुरुषैकवचनेन निर्देशस्तु लकारान्तरस्य पुरुषान्तरस्य वचनान्तरस्य च निवृत्त्यर्थः । तद्विषय एवेति । लोण्मध्यमपुरुषैकवचन-विषय एव । अग्नये छागस्येत्यादि । छागस्य विकारश्छागः । तत्राग्निर्देवता सम्प्रदानम् । छागविकारो वपादि सम्प्रदेयं हविः कर्म । अनुप्रेष्येति । अतो (६।४।१०५) हेरिति हेर्लुक् । अनुब्रूहीति सेर्ह्यपिच्चेति (३।४।८७) हिरादेशः । अदादित्वाच्छपो लुक् । भाषाविषयेऽप्ययं योगः । उत्तरसूत्रे छन्दोग्रहणात् । जुहुधीति । हुझल्भ्यो (६।४।१०१) हेर्धिरिति धिभावः । अग्नये गोमयानि प्रेष्येति । ननु च गोमयानि हवींषि भवन्त्येव । तत् कथं प्रत्युदाहरणम्? नैवम् । देवतासम्प्रदानग्रहणादेव सम्बन्धिशब्दत्वाद्धविर्ग्रहणे सिद्धे पुनर्हविर्ग्रहणादभ्यवहार्य्यस्य हविषो ग्रहणं विज्ञायते । नच गोमयान्यभ्यवहार्य्याणि भवन्तीति युक्तं प्रत्युदाहरणम् । हविषः प्रस्थितस्येत्यादि । प्रस्थितशब्देन यद्विशिष्यते हविस्तत् प्रस्थितम् । तस्य षष्ठ्याः प्रतिषेधो वक्तव्यः । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । विभाषोपसर्गे (२।३।५९) इत्यतो विभाषाग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा । तेन हविषः प्रस्थितस्य न भवति ।

६२। चतुर्थ्यर्थे बहुलं छन्दसि।

बहुलग्रहणं किमिति। विभाषाग्रहणानुवृत्तेरेव सिध्यतीति मन्यमानस्य प्रश्नः। कृष्णो रात्र्यै हिमवतो हस्तीति। अत्र बहुलग्रहणात् सप्तम्यर्थेऽपि चतुर्थी भवति। वक्तव्येति व्याख्यातवेरत्यर्थः। तत्रेदं प्रतिपादनम्। बहुलग्रहणमिह क्रियते। तेन क्वचित् षष्ठ्यर्थेऽपि चतुर्थी भवति। क्वचिदन्यदेवेत्येषोऽपि बहुलग्रहणस्यार्थोऽभिमत एव।

६३। यजेश्च करणे।

घृतस्य यजत इति। यजिरत्र देवपूजायां वर्त्तते। तत्र च घृतस्य करणभावः।

६४। कृत्वोऽर्थप्रयोगे कालेऽधिकरणे।

पञ्चकृत्व इति। संख्यायाः क्रियाभ्यावृत्तिगणने (५।४।१७) कृत्वसुच्। द्विरह्न इति। द्वित्रि (५।४।१८) चतुर्भ्यः सुच्। गम्यते हि द्विस्त्रिश्चतुर्वेति। प्रकरणादेरिति भावः। ननु च बहिरङ्गः प्रकरणाद्यर्थ इति पञ्चकृत्व इत्यन्यत्र च वचनस्य चरितार्थत्वादिह न भविष्यति। एवं तर्ह्येतज् ज्ञापयति प्रकरणाद्यर्थोऽपि विभक्तीनां निमित्तमिति। तेन वृद्धो (१।२।६५) यूनेति सहयुक्तेऽप्रधान (२।३।१९) इति सहार्थे गम्यमाने तृतीया भवतीति।

६५। कर्त्तृकर्मणोः कृति।

आसिकेति। भावे पर्य्यायार्हणोत्पत्तिषु (३।३।१११) ण्वुच्। स्रष्टेति। सृजेस्तृच्। सृजिदृशोर्झल्यमकितीत्यम् (६।१।५८)। व्रश्चादिना (८।२।३६) षत्वम्। तद्धितप्रयोगे मा भूदिति। अथ तिङ्प्रयोगे मा भूदित्येवमर्थमपि कृद्ग्रहणं कस्मान्न भवति? तत्र न लोकाव्ययनिष्ठेत्यनेन (२।३।६९) षष्ठीप्रतिषेधात्। कृतपूर्वी कटमिति। पूर्वादिनिरित्यत (५।२।८६) इनिरित्यनुवर्त्तमाने सपूर्वाच्चेतीनिप्रत्ययः (५।२।८७)। अत्र कर्त्ता तद्धितेनैवोक्त इत्यत्र षष्ठ्याः प्रसङ्गो नास्ति। कर्म तु तेनानभिहितमित्यसति कृद्ग्रहणे कटादेः कर्मणः षष्ठी स्यात्। ननु चात्र वाक्यमेवैतन्नोपपद्यते। तथाहि कर्मणो निष्ठयाभिहितत्वाद् द्वितीययात्र न भवितव्यम्। नापि

तद्धितेन। असामर्थ्यात्। तत् पुनरसामर्थ्यं सापेक्षत्वात्। तथाहि कृतः कटः पूर्वमनेनेति कृतशब्दः कटमपेक्षते। नैवम्। धातोरुत्पद्यमाना निष्ठा कथं कटशब्दस्य कर्मतामभिदध्यात्? तस्या हि कर्मसामान्यमेवाभिधातुं सामर्थ्यं न कर्मविशेषम्। वाक्ये तर्हि कथं तया कटशब्दस्य कर्मत्वमभिधीयते। तत्र युक्तमभिधानम्। कृत इत्यनेन सामानाधिकरण्यात्। तद्धिते तूत्पन्न एकार्थीभावात् सामानाधिकरण्यं निवृत्तमिति केन कटादेः कर्मभावोऽभिधीयते? क्रिया तु प्रकृत्यर्थत्वाद् यथा वाक्ये गुणीभूता साधनसम्बन्धमनुभवति तथा वृत्तावपीति करोत्यर्थापेक्षं कटशब्दस्य कर्मत्वमुपपद्यते। तस्माद् भवितव्यमेव द्वितीयया। किञ्च वृत्तिसमानार्थेन वाक्येन भवितव्यम्। नच वृत्तौ वाह्यं कटादिकं कर्म गम्यते येन प्रत्यय उत्पादयिष्यते। वाक्ये कटादिकर्मापेक्षा निष्प्रयोजनेति गम्यते। तस्मादेवं विग्रहः कर्त्तव्यः। कृतं पूर्वमनेनेति। ततश्च नास्ति सापेक्षत्वमिति भवत्येव तद्धितः। इतरथा हीति। यदि शेषग्रहणमनुवर्त्तेत इत्यर्थः। कर्त्तरि च कृतीत्येवं ब्रूयादिति। एवमपि ह्युच्यमाने शेष इत्यनुवृत्तौ चकारकरणात् कर्मणीत्येतल्लभ्यत एव। किं कर्मग्रहणेन? तस्मात् पुनः कर्मग्रहणं शेषाधिकारनिवृत्त्यर्थम्। पुनः कर्मग्रहणेन हि पूर्वस्य कर्म्मग्रहणस्य निवृत्तिराख्यायते। तन्निवृत्तौ तत्सम्बद्धमनुवृत्तमपि शेषग्रहणं निवर्त्तते।

## ६६। उभयप्राप्तौ कर्मणि।

उभयप्राप्ताविति बहुव्रीहिरिति। तेन तत्पुरुषशङ्कां निरस्यति। बहुव्रीहेराश्रयणस्य प्रयोजनं वक्ष्यति। उभयग्रहणेन प्रकृतत्वात् कर्तृकर्मणी सम्बध्येते। उभयोः प्राप्तिर्यस्मिन् कृतीत्यनेनैकस्मिन्नेवेत्यभिप्रायः। कर्मण्येवेति नियमस्य स्वरूपं दर्शयति। उभयप्राप्तावेव कर्मणीत्येष तु विपरीतनियमो न भवति। मा भूत् पूर्वसूत्रेण कर्मणि षष्ठीविधानस्य वैयर्थ्यमिति। आश्चर्यो गवां दोहोऽगोपालकेनेति। दुहेर्भावे घञ्। तत्रोभयप्राप्तौ कर्मण्येव गोषु षष्ठी भवति। नाऽगोपालके कर्त्तरि। अत्र च क्त्वोऽर्थप्रयोग (२।३।६४) इत्यतः प्रयोगग्रहणं नानुवर्त्तते। तेन गम्यमानेऽपि कर्मणि षष्ठी

भवति यथा ऽन्तर्द्धौ ( १।४।२८ ) येनादर्शनमिच्छतीत्यत्र ह्यप्रयुज्यमानस्यात्मनः कर्मत्वं गम्यते। पानमिति। ल्युट् चेति (३।३।११५) भावे ल्युट्। इह तु न भवति। आश्चर्यमिद मोदनस्य च पाको ब्राह्मणानाञ्च प्रादुर्भाव इति। नह्यत्रैकस्मिन् कृत्युभयोः प्राप्तिः। तथा ह्योदनस्य पाक इत्यत्र कर्मण्येवौदने प्राप्तिः। नतु ब्राह्मणेषु कर्त्तृषु। नहि पाकस्य कर्त्तृत्वेन विवक्षिता ब्राह्मणाः। किन्तर्हि ? प्रादुर्भावस्य कर्त्तृत्वेन। ब्राह्मणानां च प्रादुर्भाव इत्यत्रापि प्रादुर्भाव इत्येतस्मिन् कृति कर्त्तृष्वेव ब्राह्मणेषु प्राप्तिः। न कर्मण्योदने। नहि प्रादुर्भावस्योदनः कर्म। भवतेरकर्मकत्वात्। पाकस्यैव त्वोदनः कर्मत्वेन विवक्षितः। अकाकारयोरित्यादि। नियमस्यायं प्रतिषेधः। अकाकारयोः प्रयोगे नियमो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। चतुर्थ्यर्थे बहुलं छन्दसीत्यतो (२।३।६२) बहुलग्रहणमनुवर्त्तते। तेनाकाकारयोः प्रयोगे नियमो न भविष्यतीति। शेषे विभाषेत्यस्याप्यर्थो बहुलग्रहणसमाश्रयणेन व्याख्यातव्यः। भेदिकेति। पूर्ववद्भावे ण्वुच्। चिकीर्षेति। अ प्रत्ययादित्यकारप्रत्ययः (३।३।१०२)।

## ६७। क्तस्य च वर्त्तमाने।

राज्ञां मत इति। मतिबुद्धीत्यादिना (३।२।१८८) क्तः। राज्ञामिति कर्त्तरि षष्ठी। कर्म्म तु निष्ठयाभिहितम्। अथेह कस्मान्न भवति ? शीलितो देवदत्तेन। रक्षितो देवदत्तेनेत्यादि ? शीलितादिष्वपि मतिबुद्धिपूजार्थेभ्यश्चेति (३।२।१८८) चकारस्यानुक्तसमुच्चयार्थत्वाद् वर्त्तमान एव क्तो विधीयते। यद्यप्येवं तथापि बहुलग्रहणानुवृत्तेरिह न भविष्यतीत्यदोषः। अथवा प्रकरणादेवात्र वर्त्तमानकालता गम्यते। पदार्थस्तु भूतत्वमेव प्रतिपादयति। न वर्त्तमानताम्। यस्य तु पदार्थो वर्त्तमान स्तत्प्रयोगे भवत्येव षष्ठी यथा कान्तो हरिश्चन्द्र इव प्रजानामिति। शेषविज्ञानात् सिद्धमिति। उपसंख्यानं प्रत्याचष्टे तथाचेत्यादिना। यस्तूपसंख्यान मारभते तस्य कर्त्तृत्वविवक्षायामपि षष्ठ्येव भवति न तृतीयेति दर्शयति।

## ६८ । अधिकरणवाचिनश्च ।

तस्य प्रयोगे षष्ठी विभक्ति र्भवतीति । यथासम्भवं यत्र कर्त्तैव सम्भवति तत्र कर्त्तरि भवति यथेदमेषामासितमिति । अत्रासेरकर्मकत्वात् कर्त्तैव सम्भवति । न कर्म्म । यत्र तु कर्म्म कर्त्तापि सम्भवति तत्रोभयत्रापि यथेदमेषां भुक्तमोदनस्येति । भुजेः सकर्म्मकत्वात् कर्माप्यस्त्येवौदनः । उभयप्राप्तौ कर्म्मणीति (२।३।६६) नियमः कस्मान्न भवति ? कर्त्तृकर्मणोः कृतीत्यस्याः (२।३।६५) षष्ठ्याः प्राप्तेरेव नियमो विज्ञायते । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प,६२) । मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति वा (प,६१) । अधिकरणे चेति वक्तव्ये वाचिग्रहणमधिकरणक्तोपलक्षणं मा विज्ञायीत्येवमर्थम् । उपलक्षणार्थत्वे हि तस्यार्थान्तरवृत्तेरपि ध्रौव्यगतिप्रत्यवसानार्थेभ्य उत्पन्नस्य क्तस्य प्रयोगे षष्ठी स्यात् । वाचिग्रहणे तु यदा भावे क्तप्रत्ययो भवति तदा षष्ठी न भवति । तदा कर्त्तरि तृतीयैव भवति । इहानेनासितमिति । नह्यत्राधिकरणवाची क्तः । क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यश्चेति (३।४।७६) चकाराद् यथाप्राप्तञ्चेति भावे कर्त्तरि च विधानात् । यदा तु कर्त्तरि क्तो भवति तदा तेनैवाभिहितत्वात् तत्र षष्ठी न भवति । इहेम आसिता इति चकारः पूर्वापेक्षया समुच्चयार्थः ।

## ६९ । न लोकाव्ययनिष्ठाखलर्थतृनाम् ।

किकिनौ च गृह्येते इति । यद्यपि किकिनोरलादेशत्वात् स्थानिवद्भावेन लग्रहणेन तयो ग्रंहणं नास्ति तथापि लिट् (३।२।१७१) चेत्यतिदेशेन भवितव्यम् । विशेषातिदेशे हि नान्तरीयकः सामान्यातिदेश इति । विशेषस्य सामान्येनाविनाभावादिति । तेन सामान्यनिबन्धनः प्रतिषेधः किकिनोरपि सिध्यतीति युक्तं तयोरपि ग्रहणम् । पचमान इति शानच् । स्वरितेत्त्वादात्मनेपदम् । पेचान इति । लिटः कानज् वेति (३।२।१०६) वचनात् कानच् । द्विर्वचनम् । अत (६।४।१२०) एकेत्यादिनैत्त्वाभ्यासलोपौ । पेचिवानिति । क्वसुश्चेति (३।२।१०७) क्वसुः । एत्वाभ्यासलोपयोः कृतयो र्वस्वेकाजाद्घसामितीट् (७।२।६७) । उगिदचामिति (७।१।७०) नुम् । सान्तमहेत्यादिना

(६।४।१०) दीर्घः। ददिः। पपिरिति। आदृगमहनजनः किकिनौ लिट् चेति (३।२।१७१) किकिनोरन्यतरः। लिट् चेत्यतिदेशाद्द्विवचनम्। आतो लोप इटि (६।४।६३) चेत्याकारलोपः। चिकीर्षुरिति। सनाशंसभिक्ष उः (३।२।१६८)। अलंकरिष्णुरिति। अलं कृञित्यादिने ष्णुच् (३।२।१०६)। आगामुक इति। लषपतेत्यादिनोकञ् (३।२।१५४)। उक प्रतिषेध इत्यादि। प्रतिपाद्यत इति शेषः। प्रतिपादनन्तु बहुलग्रहणानुवृत्तिमाश्रित्य कर्त्तव्यम्। कृत्वेति। समानकर्त्तृकयोरिति (३।४।२१) क्त्वा। अव्ययप्रतिषेधइत्यादि। अत्रापि पूर्व्ववद्वाक्यशेषो वेदितव्यः। प्रतिपादनञ्च पूर्व्ववदेव। अथवा ऽव्ययीभावश्चेत्यत्र (१।१।४१) सर्वमिदं काण्डं स्वरादिषु पठ्यत इत्यादिना वृत्तिकारेण प्रतिपादनं कृतम्। संज्ञापूर्वको विधि रनित्य इति (प,९४) वा। उदेतोरिति। उत्-पूर्वादिणो भावलक्षणे स्थेण् कृञ्वदिचरीत्यादिना (३।४।२६) तोसुन्। विसृप इति। सृपितृदोःकसुन् (३।४।१७)। ईषत्कर इति। ईषदित्यादिना (१।३।१२६) खल्। ईषत्पान इति। आतो (३।३।१२८) युच्। आत्मनो नकारादिति। ताच्छीलिकस्य तृणः सम्बन्धिनो नकारादित्यर्थः। पवमान इति। पूङ् पवने। पूङ्यजोः (३।२।१२८) शानन्। नडमाघ्नान इति। ताच्छील्यवयोवचनशक्तिषु (३।२।१२९) चानश्। गमहनेत्यादिनोपधालोपः (६।४।९८)। हो हन्तेरित्यादिना (७।३।५४) कुत्वम्। अधीयन्निति। इङ्धार्य्योः (३।२।१३०) शतृकृच्छ्रिणीति शत्रादेशः। इयङादेशः। उपसर्गेण सह दीर्घः। कर्त्तेति। आ क्वे (३।२।१३४) स्ताच्छील्येत्यादिना तृन्। द्विषः शतुर्वा वचनमिति। द्विषः परो यः शतृप्रत्यय स्तस्य प्रयोगे वावचनं कर्त्तव्यम्। अभिधानाभिधेययोरभेदोपचारात्। वेत्यनेन वार्थ उक्तः। वार्थोऽपि विकल्पः। विकल्प उच्यते प्रत्याय्यते येन तद्वावचनम्। तस्य व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्। बहुलग्रहणमिहानुवर्त्तते। तेन द्विषः शतुर्विकल्पेन प्रतिषेधो भविष्यति। द्विषन्निति। द्विषोऽमित्र इति (३।२।१३१) शतृप्रत्ययः।

७०। अकेनोर्भविष्यदाधमर्ण्ययोः।

अकस्य भविष्यत्काल इति। नाधमर्ण्ये। तस्य तत्रासम्भवात्। इनस्तु

भविष्यदाधमर्ण्ययोरिति । तस्योभयोरपि सम्भवात् । ननु च साम्याद् इह संख्यातानुदेशेन भवितव्यम् । नैतदस्ति । स्वरितेन हि संख्यातानुदेशो भवति । नचेह तदर्थं स्वरितत्वं प्रतिज्ञायते । कटं कारको व्रजतीति । तुमुण् (३।३।१०) ण्वुलावित्यादिना ण्वुल् । ग्रामं गमीति । गमेरिनिः । स च भविष्यति गम्यादय इति (३।३।३) वचनाद् भविष्यत्कालविषयः । शतं दायीति । आवश्यकाधमर्ण्ययो (३।३।१७०) र्णिनिः । यवानां लावक इति । ण्वुल् (३।१।१३३) तृचाविति ण्वुल् । अवश्यंकारीति । आवश्यके णिनिः । वर्षशतस्य पूरक इति । पूरी आप्यायने । चौरादिकः । तस्माण्ण्वुल्तृचाविति (३।१।१३३) भविष्यत्काले ण्वुल् । सहि त्रिषु कालेषु भवति । भविष्यदधिकारविहितस्याकस्येदं ग्रहणमिति । इह हि भविष्यदिति स्वर्य्यते । स्वरितेनाधिकारावगतिर्भवति । तेन भविष्यदधिकारविहितस्येदमकस्य ग्रहणम् । न सर्वस्य ।

## ७१ । कृत्यानां कर्त्तरि वा ।

गेयो माणवकः साम्नामिति । भव्यगेयेत्यादिना (३।४।६८) कर्त्तरि गेयशब्दो व्युत्पादितः । गायतीति गेयः । साम्नामिति कर्मणि षष्ठी नित्यमेव भवति । वक्तव्य इति व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । न लोकाव्ययनिष्ठेत्यत्र (२।३।६९) नेति योगविभागः कर्त्तव्यः । तेनोभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो भविष्यति । अथवा कृत्यानामिति योगविभागाश्रयणात् । अत्र च नेत्यनुवृत्तेः । वेति व्यवस्थितविभाषाविज्ञानाद्वा । उभयप्राप्तौ कृत्ये षष्ठीप्रतिषेधो भविष्यति । तेन स्रष्टव्या शाखा ग्रामं देवदत्तेनेति । सृजेरनुदात्तस्य (६।१।५९) चर्दुपधस्यान्यतरस्यामित्यमागमो भवति । अत्र देवदत्ते कर्त्तरि षष्ठी मा भूदिति । एवमुभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्य इत्युक्तम् । कर्मणि तु शाखायां कृतेनाभिहितत्वादेव षष्ठी न भविष्यति । ग्रामस्याप्रधानत्वादेव यथैव हि कृत्याः प्रधाने कर्मणि भवन्ति नाप्रधाने तथा षष्ठ्यपि । नचेह ग्रामः प्रधानं कर्म । किं तर्हि ? शाखेति ।

७२ । तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ।

तुल्यार्थैः सदृशार्थैरित्यर्थः । अर्थग्रहणं पदान्तरनिरपेक्षया ये तुल्यार्थता-माहुस्तत्परिग्रहार्थम् । तेन पदान्तरसान्निध्येन द्योतका इवादयो निवर्त्तिता भवन्ति गौरिव गवय इति । यथा गौ स्तथा गवय इति । स्वरूप-निवृत्त्यर्थन्त्वर्थग्रहणं न भवति । बहुवचननिर्देशादेव स्वरूपविधेर्निरस्तत्वात् । इहापि पितुस्तुल्यः प्रज्ञयेति प्रज्ञाशब्दात् षष्ठी न भवति । हेतुत्वेन करणत्वेन वा प्रज्ञाया विवक्षितत्वात् । इतरथाहि तृतीयानुकृष्येतेति । तस्या अनन्तर-सूत्रे श्रुतत्वात् । अन्यतरस्यांग्रहणस्य त्वेतदेव प्रयोजनमिति । तदेव चकारेणानुकृष्यत इति ।

७३ । चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ।

तृतीयानिर्देशादेवार्थग्रहणे सिद्धेऽर्थग्रहणादर्थशब्दः पृथगेव निमित्तं विज्ञा-यते । कथं पुनस्तृतीयाग्रहणादर्थग्रहणं सिध्यति ? अपरिसमाप्तत्वादस्य वाक्यस्य योग इत्यध्याह्रियते । स चार्थैरेव सम्भवति । न शब्दैरिति सामर्थ्यादर्थ-ग्रहणं सिध्यति ।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य
तृतीयः पादः समाप्तः ॥२।३॥



अथ

# काशिकाविवरणपञ्जिका।

—०◇◇◇◇—

## द्वितीयोऽध्यायः।

## चतुर्थः पादः।

### १। द्विगुरेकवचनम्।

अत्र यदि पारिभाषिकमेकवचनं गृह्येत तदानुप्रयोग एकवचनं न स्यात् पञ्चपूलीयं शोभनेति। अनुप्रयोगस्याद्विगुत्वात्। यदि पारिभाषिकमेकवचनमिहाभिप्रेतं स्यात् तदा द्विगोरेकवचनमित्येवं ब्रूयात्। तस्मादन्वर्थस्यैकवचनस्येदं ग्रहणं न पारिभाषिकस्येति मनसि कृत्वाह एकस्य वचनमेकवचनमिति। एतेनैकवचनशब्दस्य षष्ठीसमासतां दर्शयन्नन्वर्थतां दर्शयति। एकस्य वचनं वाचक मेकवचनमिति। वक्तीति वचनम्। कृत्यल्युटो बहुलमिति कर्त्तरि (३।३।११३) ल्युट्। एकवचनस्यैवार्थं पर्य्यायान्तरेण स्पष्टीकर्त्तुमाह एकार्थस्येत्यादि। ननु चैकवचनमिति पुंलिङ्गेन भवितव्यम्? कथम्। द्विगोः पुंलिङ्गत्वात्। न। लिङ्गसामान्यस्य विवक्षितत्वान्नपुंसकलिङ्गेनैव सामान्येन निर्देशः कृत इत्यदोषः। तदनेन प्रकारेणेति। अन्वर्थस्यैकवचनशब्दग्रहणात्मकेनेत्यर्थः। न चानेकार्थाभिधायिनः शब्दस्य वचनशतैरप्येकार्थाभिधायित्वं शक्यते कर्त्तुम्। शब्दानामर्थाभिधायित्वस्य स्वाभाविकत्वात्। उच्यते चेदं वचनम्। ततः सामर्थ्यादतिदेशोऽयं विज्ञायत इत्यत आह द्विग्वर्थस्यैकवद्भावो विधीयत इति। अस्यैवार्थं स्पष्टीकर्त्तुमाह द्विग्वर्थ एकवद्भवतीति। यद्येवं तद्धितार्थे यो द्विगुस्तस्याप्येकवद्भावः प्राप्नोति। पञ्चसु कपालेषु संस्कृतौ संस्कृता वा पञ्चकपालौ पञ्चकपाला इत्यत आह समाहारे द्विगोश्चेत्यादि। चकारोऽवधारणे। समाहारद्विगोरेवेति यावत्। कथं पुनः समाहारद्विगोरेव ग्रहणं लभ्यते?

एवं मन्यते । द्वन्द्वश्चेत्यत्र (२।४।२) चकारेण द्विगुरनुकृष्यते । यस्मिन्नर्थे द्वन्द्व एकार्थो भवति तस्मिन्नेवार्थे द्विगोरप्येकवद्भावो यथा स्यादिति । द्वन्द्वश्च समाहार एवैकार्थो भवति । नान्यत्र । तस्माद् द्विगोरप्येकवद्भावस्तत्रैव भवति । अतः समाहारे द्विगोरेवेदं ग्रहणं युक्तम्भवति । यदि तर्हि समाहारद्विगोरेवेदं ग्रहणं तदा निष्प्रयोजनोऽतिदेशः । तथाहि समाहारो द्विगोरर्थः । समाहारश्च भावसाधनः । समाहरणं समाहारः समुदायः । स चैक एव । तत्र न्यायप्राप्तमेवैकवचनमिति निष्फलः सूत्रारम्भः । नैतदस्ति । यतः समुदायिभ्योऽनन्यः समुदाय इत्यस्मिन् दर्शने ऽनेकद्रव्यात्मकत्वात् समुदायस्यैकवचनं न सिध्यतीतीदमारब्धम् । तथाचोक्तं भाष्ये प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचनविधानमिति । प्रत्यधिकरणं प्रतिद्रव्यम् । वचनस्योत्पत्तौ प्रत्यभिधेयद्रव्यसमवायिनी संख्या विभक्तेः प्रयोजिकोत्पद्यते । द्विगोश्च योऽर्थः सोऽनेकद्रव्यात्मकः । तथाहि पञ्चपूलाः समाहृताः । समाह्रियमाणानां पूलानां पञ्चसंख्यावच्छिन्नत्वात् संख्यासामानाधिकरण्याच्च पञ्चैतानि द्रव्याणीति कृत्वा समुदायस्यैकवचनं न सिद्ध्यति । तत्रासत्यस्मिन् वचने बहुत्वाद् बहुवचनं स्यात् । अत एकवद्भावो विधीयत इति वाक्यार्थः । समुदायिभ्योऽन्यः समुदाय इत्यस्मिन् दर्शने सूत्रमिदं प्रत्याख्यातव्यमेव । तथाचोक्तम् भाष्ये नवा समाहारैकत्वादिति । नवा योगारम्भेणेवार्थः । यस्मादेकोऽयमर्थः समाहारो नाम । तत्रैकत्वादेकवचनं भविष्यतीति वाक्यार्थः । पञ्चपूलीति । अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति (२।४।३०,वा) स्त्रीत्वे सति द्विगोरिति (४।१।२१) ङीप् । अर्थस्यैकत्वादित्यादिना ऽर्थातिदेशस्य फलं दर्शयति ।

## २ । द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम् ।

अत्राङ्गशब्दः समुदाये परिसमाप्यते प्रत्येकं परिसमाप्यते वा ? तत्र यदि समुदाये परिसमाप्येत तदेकमेवेदं वाक्यं स्यात् । तथाच व्यतिकरः प्रसज्येत । प्राणितूर्य्यसेनाङ्गानां परस्परसहितानां यो द्वन्द्वो व्यतिकीर्णावयवस्तस्यैकवद्भावः स्यात् । प्रत्येकं परिसमाप्तौ त्वेष दोषो न भवति ।

तत्र हि प्राण्यङ्गानां द्वन्द्व एकवद्भवतीत्येवमादीनि त्रीणि वाक्यानि सम्बध्यन्ते । स्वविषये यत्र बहुवचनान्तं वाक्यं क्रियते तत्र प्रथमेन वाक्येन प्राण्यङ्गानां प्राण्यङ्गैरेव यः समासस्तस्यैकवद्भावो विधीयते । द्वितीयेन वाक्येन तूर्य्याङ्गानां तूर्य्याङ्गैः । तृतीयेन सेनाङ्गानां सेनाङ्गैरिति न भवति सङ्करप्रसङ्गः । नहि चतुर्थं वाक्यमस्ति येन व्यतिकीर्णावयवस्य द्वन्द्वस्यैकार्थता स्यादिति मन्यमानः प्रत्येकं वाक्यपरिसमाप्तिपक्षमाश्रित्याह अङ्गशब्दस्येत्यादि । तथा तूर्य्याङ्गानामिति द्वन्द्व एकवद्भवतीत्यपेक्ष्यते । एवं सेनाङ्गानाञ्चेत्यत्रापि । पाणिपाद मिति । अत्र यदि प्राण्यङ्गमपि प्राणिग्रहणेन गृह्यते तदा जातिर (२।४।६) प्राणिनामिति प्रतिषेधे प्राप्ते वचनमिदम् । अथ न गृह्यते तदा जातित्वादेव सिद्धे व्यतिकरनिरासार्थम् । मार्दङ्गिकपाणविकमिति । द्वन्द्वाप्यप्राणिना (२।४।६) मिति प्रतिषेधे प्राप्ते वचनमिदम् । अप्राणिनान्तु जातिर (२।४।६) प्राणिनामित्येवं सिद्धं यथा पणवमृदङ्ग मिति। रथिकाश्वारोहमिति। रथिकाश्चाश्वारोहाश्चेति वृत्तिपदार्थस्य बहुत्वं दर्शयितव्यम् । यस्माद् बहुत्वमेव सेनाङ्गत्वे कारणम् । बहुत्वाभावे सेनाङ्गत्वन्नास्तीति रथिकाश्वारोहाविति भवितव्यम् । हस्त्यश्वादिषु परत्वात् पशुद्वन्द्वविभाषयैव भवितव्य मिति । विभाषा ( २।४।१२ ) वृक्षमृगेत्यादिना । इतरेतरयोग इत्यादिना द्वन्द्वप्रकरणस्य प्रयोजनं दर्शयति । प्राण्यङ्गादीनां समाहार एवेत्यादिना विषयविभागार्थतां स्पष्टीकरोति ।

## ३ । अनुवादे चरणानाम् ।

चरणशब्द इत्यादिना सूत्रस्य विषयं दर्शयति। तथाहि यो हि कठादिप्रोक्ताध्ययनविशेषः शाखा तत्र यदा चरणशब्दो वर्त्तते तदा जातिरप्राणिनामित्येव (२।४।६) सिद्धम् । यदा तु शाखानिमित्तकः पुरुषेषु वर्त्तते तदाऽप्राणिनामिति प्रतिषेधान्न सिद्ध्यतीतीदमारभ्यते । शाखानिमित्तक इति । शाखा निमित्तमस्येति बहुव्रीहिः । प्रमाणान्तरावगतस्येति । शब्दात् प्रमाणाद् यदन्यत् प्रमाणं तत् प्रमाणान्तरम् । तत् पुनः प्रत्यक्षादि । तेनावगतस्य परिच्छिन्नस्य शब्देन संकीर्त्तनमात्रमिति मात्रशब्दोऽर्थावगतिव्युदासार्थः । उदगात् प्रत्यष्ठादिति । उत्पूर्वादिणः प्रति पूर्वात् तिष्ठते लुङ् । इणो गा (२।४।४५)

लुङीति गादेश:। गातिस्थेति सिचो (२।४।७७) लुक्। कठकालापमिति। कठेन प्रोक्तमधीयत इति कठा:। कठशब्दात् प्रोक्तार्थे कलापिवैशम्पायनान्तेवासिभ्यश्चेति (४।३।१०४) णिनि:। तस्य कठचरकाल्लुक् (४।३।१०७)। तत स्तदधीते (४।२।५९) तद्वेदेत्यण्। तस्य प्रोक्ताल्लुक् (४।२।६४)। छन्दोब्राह्मणानि च तद्विषयाणीति (४।२।६६) तद्विषयता। कलापिना प्रोक्तमधीयत इति कालापा:। प्रोक्तार्थे कलापिनोऽण्। इनण्यनपत्य इति (६।४।१६४) प्रकृतिभावे प्राप्ते सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिशूकरसद्मसुपर्वणामुपसंख्यानमिति (६।४।१४४,वा) टिलोप:। ततस्तदधीते (४।२।५९) वद्वेदेत्यण्। तस्य प्रोक्ताल्लुगिति (४।२।६४) लुक्। पूर्व्ववत् तद्विषयता च। कठाश्च कालापाश्च कठकालापम्। यदा तु प्रथमत एव उपदेश इति। अनवगतस्यैव प्राक् प्रमाणान्तरेण शब्देनार्थं प्रत्यायन मर्थस्य प्रश्ने प्रतिवचने वोपदेश: स यदा भवति तदात्र प्रत्युदाहरणम्। उदगुरिति। आत इति (३।४।११०) झेर्जुस्। उस्यपदन्तादिति (६।१।९६) पररूपत्वम्। स्थेणोरद्यतन्याश्चेति वक्तव्य मिति व्याख्येयमित्यर्थ:। तत्रेदं व्याख्यानं। तुल्यार्थैरतुलोपमाभ्यामित्यत: (२।३।७२) सूत्रादन्यतरस्यामित्यनुवर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन स्थेणोरद्यतन्यामनुवादे चरणानामेकवद्भावो भविष्यति। नान्यत्रेति। अद्यतनीति। लुङ: पूर्वाचार्य्यप्रणीतैषा संज्ञा। अनन्दिषुरिति। टुनदि समृद्धौ। सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९) झेर्जुस्। उदयन्तीति। इणो यण्णिति (६।४।८१) यणादेश:।

## ४। अध्वर्य्युक्रतुरनपुंसकम्।

अध्वर्य्युवेद इति। एतेनाध्वर्य्युशब्देनात्र यजुर्वेदो लक्ष्यत इति दर्शयति। अथाध्वर्य्योर्ऋत्विग्विशेषस्य य: क्रतुरिति क्रतुविशेषणमेवाध्वर्य्युग्रहणं कस्मान्न विज्ञायते? असम्भवात्। को हि तस्य क्रतुर्भवति? अपितु धनव्ययशीलस्य। यदपि तस्य क्रतौ कर्त्तृत्वमस्ति तदपि ऋत्विगन्तरेण साधारणमित्यध्वर्य्युणैकेन तस्य विशेषणमयुक्तम्। ननु चाथर्ववेदविहितो य: क्रतु स्तन्निवृत्त्यर्थमध्वर्य्युणैकेन कथं विशेषणं न स्यात्? नहि तत्राध्वर्य्यव: सन्ति।

नैतदस्ति । यदि ह्येतावत् प्रयोजनमभिमतं स्यात् तदाऽनथर्वण इति प्रतिषेधमेव कुर्य्यात् । लघीयसी हि साक्षात् प्रतिषेधे प्रतीतिर्भवति । त्रयीग्रहणं वा कुर्य्यात् । यदि चाध्वर्य्युणा क्रतुर्विशेष्येत तदेषुवज्रावित्यत्रापि स्यात् । इषुवज्रावपि ह्यध्वर्य्योः क्रतू भवतः । तयोरपि तत्कर्त्तृकत्वात् । तस्मादध्वर्य्यूणां यजुर्वेदविदां यो वेदः सोऽध्वर्य्युशब्देनोपलक्ष्यते । स पुनर्यजुर्वेदः । तत्राध्वर्य्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्य्युक्रतुरिति । इतिकर्त्तव्यतोपदेशः प्रयोगश्चानुष्ठानात्मको विधानशब्देनोक्तः । यदि तर्ह्यध्वर्य्युक्रतुवाचिना मनपुंसकलिङ्गानां द्वन्द्व एकवद्भवतीति सूत्रार्थस्तदा सूत्रेऽध्वर्य्युक्रतुशब्दस्यानपुंसकमित्यस्य च द्वन्द्व इत्यनेन प्रकृतेन सामानाधिकरण्येन निर्देशो नोपपद्यते । अतोऽध्वर्युक्रतुवाचिनामनपुंसकलिङ्गानामिति वक्तव्यं स्यादित्यत आह अध्वर्युक्रतुरनपुंसकमिति । गौणोऽयं निर्देश इति । गौण इत्यमुख्य औपचारिक इत्यर्थः । अध्वर्युक्रत्ववयवो द्वन्द्व उपचारेणाध्वर्य्युक्रतुरित्युक्तः । स एवानपुंसकलिङ्गावयवोऽनपुंसकमिति । गौणनिर्देशस्तु लाघवार्थ वेदितव्यः । यदि पुनरनपुंसकमित्यनेन मुख्यया वृत्त्या द्वन्द्व एवोच्येत तदा स नपुंसकमित्यस्यापवादोऽयं विज्ञायेत । अर्काश्वमेधमित्यादि । अर्कश्चाश्वमेधश्चेत्यर्काश्वमेधम् । सायाह्नश्चातिरात्रश्चेति सायाह्नातिरात्रम् । इषुवज्रावित्यादि । इषुवज्रप्रभृतयोऽध्वर्य्युक्रतवो न सम्भवन्ति । नहि तेषामध्वर्य्युवेदे विधानम् । किन्तर्हि ? सामवेदे । राजसूयवाजपेये इति । एतौ राजसूयवाजपेयशब्दौ पुंलिङ्गावपि स्तः । तत्र यदा नपुंसकलिङ्गौ प्रयुज्येते तत्रेदं प्रत्युदाहरणम् । सोमयागेष्विति । यत्र यत्र सोमपानं विहितं ते सोमयागाः । तेष्वेव क्रतुशब्दो रूढः । न च दर्शपौर्णमासौ सोमयागौ । अनपुंसकमितुपादानात् स्वरूपग्रहणमिह न भवति । नहि क्रतुसामान्यो नपुंसकलिङ्गो भवति ।

## ५ । अध्ययनतोऽविप्रकृष्टाख्यानाम् ।

अधीतिरध्ययनमिति भावसाधनोऽध्ययनशब्दः । कर्मसाधनो वा । अधीयत इत्यध्ययनमिति । अध्ययनत इति । आद्यादिभ्यस्तसुपसंख्यान-

मिति (५।४।४४,वा) हेतुतृतीयान्तात् तसिः। अत आह अध्ययनेन निमित्ते-नेति। अविप्रकृष्टेति। अविप्रकृष्टाऽऽख्या येषां ते ऽविप्रकृष्टाख्याः। निमित्तस्य साधारणत्वादविप्रकृष्टता। तत् पुनर्निमित्तं सूत्रोपात्तमेवाध्ययनमाख्यानाम-धेयम्। पदकक्रमकमिति। पदमधीते क्रममधीत इति क्रमादिभ्यो वुन् (४।२।६१)। क्रमकवार्त्तिकमिति। वृत्तिमधीत इति वार्त्तिकः। क्रतूक्थादि-सूत्रान्तात् (४।२।६०) ठक्। कथं पुनः पदस्याध्येतुः क्रमस्य चाध्ययनेन निमित्तेनाविप्रकृष्टता भवतीत्याह सम्पाठ इत्यादि। यस्मात् पदानां क्रमस्य च यः पाठः स नातिभिन्नः। ग्रन्थोऽपि तादृश एव। अतः प्रत्यासन्नः। यतश्च पदान्यधीत्य क्रमोऽध्येतव्यस्ततोऽपि संपाठस्तयोः प्रत्यासन्नः। ततश्च तेन सम्पाठेनाध्ययनेन निमित्तेन पदक इति क्रमक इति च या ऽध्येतुराख्या सापि प्रत्यासन्ना भवतीत्यभिप्रायः। पितापुत्राविति। आनङ् ऋतो (६।३।२५) द्वन्द्व इत्यानङादेशः। तत्र हि पुत्रेऽन्यतरस्यामित्यतः (६।३।२२) पुत्र इत्यनुवर्त्तते। अत्रापि पितेति पुत्र इति चाख्ये प्रत्यासन्ने। साधारणत्वान्निमित्तस्य। तथाहि जन्यजनकभावो द्वयोरपि तयोर्निमित्तम्। याज्ञिकवैयाकरणमिति। यज्ञमधीते याज्ञिकः। क्रतूक्थादिना (४।२।६०) ठक्। व्याकरणमधीते वैयाकरणः। तदधीते (४।२।४९) तद्वेदेत्यण्। अस्त्यत्राध्ययननिमित्तत्वमनयोराख्ययोः। न तु प्रत्यासत्तिः। नहि यज्ञाध्ययनेन व्याकरणाध्ययनेन वा तयोःक्रियाप्रत्यासत्तिर्नापि ग्रन्थ-प्रत्यासत्तिः।

## ६। जातिरप्राणिनाम्॥

अयमपि गौण्या वृत्त्या जातिर्द्वन्द्व इति सामानाधिकरण्येन निर्देशः कृतः। जातिवाच्यवयवो द्वन्द्वो जातिरित्युक्तः। जातेश्च स्वरूपग्रहणं न भवति। अप्राणिनामिति प्रतिषेधात्। आराशस्त्रीति। ह्रस्वो नपुंसके (१।२।४७) प्रातिपदिकस्येति ह्रस्वः। नन्दकपाञ्चजन्याविति। संज्ञाशब्दयोरेव द्वन्द्वोऽयम्। न जातिशब्दयोः। अनेनाप्राणिनामित्यस्य पर्युदासतां दर्शयति। तेनायमर्थो भवतीत्याह नञिवयुक्तेत्यादि। रूपरसगन्धस्पर्शा इत्यादि गुणजातिः। गमना-

कुञ्चनप्रसारणानीति क्रियाजातिः । जातिपरत्वे चेति । यदा जातिः प्राधान्येन विवक्षा तदा जातिः परत्वे प्रधानत्वे सति जातिशब्दानामयमेकवद्भावो भवति । न नियतद्रव्यविवक्षायामिति । यदा क्वचिद् देशादौ नियतानां द्रव्यविशेषाणां विवक्षा भवति तदा जातिशब्दस्य प्रयोगेऽप्येकवद्भावो न भवति । कुत एतत् ? जातिरित्यभिधानात् मुख्या जातिराश्रीयते । न गौणी । एतच्च प्रधाने कार्य्यसंप्रत्ययाल्लभ्यते । एतदुक्तम्भवति । यदा जातिरेव व्यक्तिविशेषमाश्रित्य प्रयुज्यते तदा नैकवद्भावः । यदा तु व्यक्तिविशेषमनाश्रित्य प्रयुज्यते तदैवैकवद्भाव इति । वदरामलकानीति । अत्र वदरामलकानाञ्च व्यक्तिप्रयुक्तानां प्रतीतिः । न जातिशब्दानाम् । अतएव व्यक्त्याश्रयं बहुवचनम् । अन्यथा जातेर्द्वित्वाद्द्विवचनमेव स्यात् । न बहुवचनम् । अप्राणिनामिति पर्य्युदासोऽयम् । तेनायमर्थो लभ्यते । नञिवयुक्त न्यायेन रूपरसस्पर्शादीनान्नैकवद्भाव इति । अप्राणिनामिति प्रतिषेधे बहुत्वं श्रूयमाणं विधावपि बहुत्वं गमयति । तेन बहुप्रकृतेरेव द्वन्द्व एकवद्भवति । न द्विप्रकृतेः । आराशस्त्राविति ।

## ७ । विशिष्टलिङ्गो नदी देशोऽग्रामाः ।

विशिष्टशब्दोऽयं भेदवचनः । योऽपि क्तेन ( २।१।६० ) नञ्विशिष्टेनानञ् इत्यत्र सावधारणाधिको विशिष्टशब्दो व्याख्यातः सोऽपि भेदद्वारेणैव प्रतिपत्तव्यः । तेनेह वृत्तिकारोऽपि भिन्नलिङ्गानामपीत्याह । अग्रामा इति प्रतिषेधादनयोः स्वरूपग्रहणन्न भवतीत्याह नदीवाचिनामित्यादि । यदि नदीवाचिनां द्वन्द्वो देशवाचिनाञ्चैकवद् भवतीत्ययमत्र सूत्रार्थोऽभिमत स्तत् कथं नदीदेश इत्ययं द्वन्द्व इत्यनेन प्रकृतेन सामानाधिकरण्येन निर्देश इत्याह नद्यवयवो द्वन्द्वो नदीत्युच्यत इत्यादि । एतेन गौणः सूत्रे निर्देश इति दर्शयति । नदीदेश इत्ययं यदि द्वन्द्वसमास स्तदा व्यतिकीर्णावयवो द्वन्द्वो यस्य कश्चिदवयवो नदी कश्चिद्देशस्तस्यैकवद्भावः स्यात् । किञ्च द्वन्द्वो भवन्नेष समाहारे वा स्यादितरेतरयोगे वा ? तत्र पूर्वस्मिन् पक्षे स नपुंसकमिति (२।४।१७) नपुंसकत्वं स्यात् । इतरत्र तु द्विवचनमितीमं दोषं

इत्याह नदीदेश इति । असमास एवायं निर्देश इति । मद्रकैकया इति । मद्राश्च कैकयाश्च मद्रकैकयाः । अथ नदीग्रहणं कस्मात् क्रियते ? न देशग्रहणादेव नदीग्रहणं सिद्धमित्यत आह नदीग्रहणमदेशत्वादिति । कस्मात् पुनर्नदी देशो न भवतीत्याह जनपदो हि देश इति । तत्रैव देशशब्दस्य रूढ़त्वात् । यत् पुनर्नदीदेश इत्युच्यते तत् तात्स्थ्यात् । भवति हि तात्स्थ्यात् ताच्छब्द्यं यथा मञ्चा क्रोशन्तीति । तथाचेत्यादि । तस्माज्जनपद एव देशो नान्यः पर्वतादिः । एवञ्च कृत्वा देशग्रहणेन पर्वतादीनां ग्रहणं न भवति । अग्रामा इत्यत्रेत्यादि । लोके हि ग्रामग्रहणेन नगरग्रहणं भवति । तथाह्यभक्ष्यो ग्राम्यशूकर इत्युक्ते नागरोऽपि न भक्ष्यते । ततश्चेहा-ग्रामा इति प्रतिषेधः क्रियमाणो नगराणामपि प्राप्नोति । तस्मादग्रामा इति प्रतिषेधे नगरप्रतिषेधो वक्तव्यः । अग्रामा इत्यनेन नगराणां यः प्रतिषेधः प्राप्नोति तस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यो व्याख्येय इत्यर्थः । तेन नगराणां विधिरेव भवति । तत्रेदं व्याख्यानम् । यदयं प्राचां (७।३ १८) ग्रामनगराणा-मित्यत्र ग्रामनगरयो र्भेदेनोपादानं करोति तज् ज्ञापयतीह शास्त्रे ग्रामग्रहणेन नगराणां ग्रहणं न भवतीति । तेनाग्रामा इति प्रतिषेधो नगराणां न भवति । उभयतश्चेत्यादि उभयस्मिन्नित्यर्थ उभयतः । यत्र कश्चिदवयवो ग्रामः कश्चिन्नगरं तत्र ग्रामाणां य प्रतिषेध उच्यते स एव वक्तव्यो व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । अग्रामा इति प्रसज्यप्रतिषेधोऽयं विज्ञेयः । न चेद् द्वन्द्वे ग्रामा विद्यन्त इति । तेन यत्र ग्रामगन्धोऽप्यस्ति तत्राप्येक-वद्भावो न भवतीति ।

## ८। क्षुद्रजन्तवः ।

क्षुद्रशब्दोऽयमस्त्येव यः कार्पण्यवति पुरुषे वर्त्तते यथा क्षुद्रो देवदत्त इति । कृपण इति गम्यते । अस्ति च शीलहीने ऽङ्गहीने च यथा क्षुद्राभ्यो (४।१ १३१) वेति । अत्र ह्यनियतपुंस्का विकलाङ्गाश्च स्त्रियः क्षुद्राग्रहणेन गृह्यन्ते । अस्ति च परिमाणापचये यथा क्षुद्रास्तण्डुला इति । इह तु जन्तुशब्दसन्निधानात् प्राणिशरीरस्याल्पतामाचष्टे । तेन परिमाणापचये

वर्त्तमानस्य क्षुद्रशब्दस्य ग्रहणं विज्ञायत इत्याह अपचितपरिमाणः क्षुद्र इति । अल्पशरीर इत्यर्थः । अपचितपरिमाणता चापेक्षाभेदादनवस्थितेति । अस्थिरेत्यर्थः । क्षुद्रजन्तुशब्दस्याभिधेयं प्रति स्मृतीरुपन्यस्यति क्षुद्रजन्तुरनस्थिः स्यादिति । क्षुदिर् संपेषणे । क्षुद्यत इति क्षुद्रः । औणादिकः स्फायीतञ्चीत्यादिना (उण्, २।१७०) रक् । क्षुद्रश्चासौ जन्तुश्चेति क्षुद्रजन्तुः । अनस्थिरिति । यस्यास्थीनि न विद्यन्ते । केवलं यस्य चर्मशोणितमांसमस्ति स क्षुद्रजन्तुः । अथवा क्षुद्र एव य इति । स्मृत्यन्तरमाह चोदयितुं यः शक्यते स क्षुद्रजन्तुः । शब्दार्थवशात् प्रसिद्ध एव लोके क्षुद्रजन्तुर्ग्राह्यः । स पुनर्मशकादिरङ्गे यस्यात्मीयं शोणितं नास्ति । येषां वा गोचर्म्ममात्रं राशिं हत्वापि नरः पतितो न भवति ते प्रसिद्धाः क्षुद्रजन्तव उच्यन्ते । शतं वा प्रसृतौ येषामिति । अपरा स्मृतिः । प्रसृतौऽञ्जलौ बद्धं येषां प्राणिनां शतं प्रसृतिर्भवति शतेन वा प्रसृतिः पूर्य्यते ते क्षुद्रजन्तवः । केचिदा नकुलादपीति । केचिद् वर्णयन्ति नकुलपर्य्यन्ताः क्षुद्रजन्तव इति । इयमेव स्मृतिः प्रमाणमिति । अस्याः सर्वस्मृत्यनुग्राहिणीत्वात् । तथा ह्येतदुपलक्षितेषु क्षुद्रजन्तुषु स्मृत्यन्तरदर्शिता अपि क्षुद्रजन्तवोऽन्तर्भवन्ति । इतरा अपि स्मृतयः प्रमाणं कस्मान्न भवन्तीतयाह इतरासामितयादि । अनस्थ्यादीनां स्मृतीनामा नकुलादपीति स्मृतया विरोधः । तस्मान् नैताः प्रामाण्येनाभ्युपगम्यन्ते । तेन सर्वत्रेदं सिद्धं भवति । क्षुद्रजन्तव इति बहुवचननिर्देशाद्बहुप्रकृतेरेवैकवद्भावो यथा स्यात् । तेनेह न भवति यूकालिक्षे दंशमशकाविति । अयञ्च प्राणिजातयर्थ आरम्भः । क्षुद्रजन्तव इति किमिति ? ननु च सूत्रस्याभावे किं प्रत्युदाहरणं स्यात् ? एवं मन्यते । अन्यथा हि जन्तव इति सूत्रं कर्त्तव्यम् । ततश्चातिप्रसङ्गः स्यादिति ।

## ९ । येषां च विरोधः शाश्वतिकः ।

प्रतिपक्षभावमात्रं लोके विरोधशब्देनोच्यते । तस्येह ग्रहणे सति छायातपावग्निजले इत्यत्रापि स्यादिति मत्वा वैरमिह विरोधोऽभिमत इति दर्शयितुमाह विरोधो वैरमिति । एवं मन्यते । क्षुद्रजन्तव इत्यतो जन्तु-

ग्रहणमनुवर्त्तते। तेन जन्तूनां यो विरोधस्तस्येह ग्रहणं विज्ञायते। स च वैरस्वभाव एवेति। शाश्वतिको नित्य इति। शश्वदिति त्रैकाल्यमुच्यते। तत्र भवः शाश्वतिकः। कालाट् (४।३।११) ठञ्। अस्मादेव निपातनात् ताल्लादपि को न भवति। यश्च त्रैकाल्ये भवति स नित्यः। गोपालिशालङ्कायना इति। गोपालयश्च शालङ्कायनाश्च गोपालिशालङ्कायनाः। नात्र शाश्वतिको विरोध इत्येकवद्भावो न भवति। चकारः पुनरस्यैव समुच्चयार्थं इति। प्रकृतस्यान्यस्य समुच्चेतव्यस्याभावादस्यैकवद्भावस्य समुच्चयार्थश्चकारो विज्ञायते। तेन किम्भवतीत्याह तेन पशुशकुनीत्यादि। पशुशकुनिविभाषाया ( २।४।१२ ) अवकाशो महाजोरभ्रम् महाजोरभ्राः। हंसचक्रवाकं हंसचक्रवाका इति। नित्यविरोधिनामेकवद्भावस्यावकाशो ब्राह्मणनास्तिकमिति (A)। श्वसृगालम्। अश्वमहिषम्। काकोलूकमित्यत्रोभयप्राप्तौ परत्वात् पशुशकुनिविभाषा ( २।४।१२ ) स्यात्। चकारस्य पुनरस्यैव समुच्चयार्थत्वादनेन नित्यमेकवद् भवति।

## १०। शूद्राणामनिरवसितानाम्।

यद्यपि षिञ् बन्धन इति सिनोतिर्बन्धने वर्त्तते तथापि निरवपूर्वो वहिष्करणे वर्त्तत इत्याह निरवसानं वहिष्करणम्। यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति तस्मात् ते ततो वहिष्कृताः पृथक् कृताः। न लभन्ते तत्र भोक्तुमित्यर्थः।

## ११। गवाश्वप्रभृतीनि च।

गवाश्वादीनि कृतैकवद्भावानि गणे पठ्यन्ते। तेषामनेन साधुत्वमात्रं विधीयते। नत्वेकवद्भाव इति दर्शयन्नाह गवाश्वादीनीति। गवाश्वमित्येवमादीनामजैडकपर्य्यन्तानां पशुद्वन्द्वविकल्पे वचनमिदम्। कुब्जवामनप्रभृतीनां त्रयाणामप्राप्ते। श्वचाण्डालमित्यविरोधार्थम्। विरोधे हि येषाञ्च विरोध (२।४।९) इत्येवं सिद्धम्। कदा च श्वचाण्डालस्याविरोधः ? यदा विरोधं द्वन्द्वो

(A) श्रमणब्राह्मणमिति—is the reading in my 3rd. & in the Deccan MSS.

नाचष्टे केवलस्त्रार्थमात्रे वर्त्तते तदा श्वचाण्डालमिहास्तीति। स्त्रीकुमारं दासीमाणवकमितत्रप्राप्ते वचनम्। शाटीपिच्छकमिति जातिरप्राणिनामिति (२।४६) सिद्धे ऽबहुप्रकृतत्वर्थः पाठः। उष्ट्रखरमुष्ट्रशशमिति। पशुद्वन्द्वविभाषाप्राप्तौ नित्यार्थम्। मूत्रशकृदादीनां मांसशोणितपर्य्यन्तानामप्राणिजातीनामबहुप्रकृतत्वर्थः पाठः। दर्भशरप्रभृतीनां तृणोलपपर्य्यन्तानां तृणद्वन्द्वविभाषायां प्राप्तायां वचनम्। दासीदासादीनां त्रयाणामप्राप्ते। पुमान् (१।२।६७) स्त्रियेत्येकशेषो न भवत्यस्मादेव निपातनात्। गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तमिति। कथम्? तथा रूपस्याश्रयणात्। गणपाठे हि यदेषां शब्दानां रूपं तदाश्रितम्। तेन यथोच्चारितानामेकवद्भावलक्षणं द्वन्द्ववृत्तं भवति। रूपान्तरे तु नायं विधिरिति। यदा ऽवङ् (६।१।१२३) स्फोटायनस्येत्यवङ् नास्ति तदा रूपान्तरे जाते ऽनेन सूत्रेण यो विधिः क्रियते स न भवति। पशुद्वन्द्वविभाषैव प्रवर्त्तते।

## १२। विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्।

वृक्षादिग्रहणेनेह वृक्षादिविशेषवाचिनां ग्रहणम्। कथम्? यस्मादत्र हि वृक्षादिभिर्द्वन्द्वः प्रत्येकं विशिष्यते। तेनैषा विभाषा तुल्यजातीयेष्वेवावतिष्ठते। विरूपेषु तुल्यजातीयेष्वपि। न स्वरूपेषु। तेषां द्वन्द्वो नास्ति। एकशेषविधानात्। विरूपेष्वपि न पर्य्यायेषु। तेषां द्वन्द्वाभावात्। द्वन्द्वाभावश्च युगपत्प्रयोगाभावात्। युक्तार्थाभावाच्च। चार्थाभावस्त्वर्थभेदाभावात्। भिन्नाधिष्ठाना हि चार्थता। न च पर्य्यायाणां भिन्नार्थता सम्भवति। तस्माद् विरूपेष्वेव वृक्षादिविशेषवाचिष्वस्या विभाषाया उपस्थानम्। तेन विशेषग्रहणं वृक्षादिषु विज्ञायते। न स्वरूपग्रहणम्। नापि पर्य्यायग्रहणम्। अथ सामान्यविशेषवाचिनां ग्रहणं कस्मान्न विज्ञायते। सम्भवति हि सामान्य विशेषवाचिनां द्वन्द्वो यथा गोबलीवर्द्दमिति। न। अनभिधानात्। नहि वृक्षधवमित्येवं लोकेऽभिधानमस्ति। धवशब्दादेव तदर्थाभिधायिनो वृक्षशब्दस्यार्थस्यावगतत्वात्। धवादिशब्दप्रयोगे वृक्षादिशब्दस्य प्रयोगानर्हत्वात्।

गोवलीवर्दमित्यत्र तु बलीवर्दसन्निधाने गोशब्दस्य स्त्रीगवीष्वेव वृत्तेर्द्वावपि विशेषवाचिनाविति युक्तो द्वन्द्वः। येऽत्राप्राणिवाचिनस्तेषां जातिरप्राणिना-मित्येकवद्भावे (२।४।६) नित्ये प्राप्ते वचनमिदं विभाषार्थम्। परिशिष्टानामप्राप्ते। पशुग्रहणेनैव मृगादिग्रहणे सिद्धे पुनर्मृगादिग्रहणं किमर्थम्? तुल्यजातीयानां द्वन्द्वोऽयमेकवद्भवतीत्युक्तम्। अत्र पशुग्रहणेनैव सिद्धे मृगादिग्रहणे सत्यपि पश्वन्तरैरेषां परस्परेण वा द्वन्द्वो मा भूदित्येवमर्थम्। पशुद्वन्द्व इत्येवं सिद्धेऽश्ववडवग्रहणं नियमार्थम्। योऽन्य एतयोः पर्यायस्तत्र मा भूद् हयवड्वे इति। बहुप्रकृतिरिति। बह्वर्था बहुवचनान्ता वा प्रकृतिर्यस्य स बहुप्रकृतिः। बह्वर्थानां फलादीना मेषां बहुवचनान्तानां वा द्वन्द्व एकवद् भवतीत्यर्थः।

## १३। विप्रतिषिद्धञ्चानधिकरणवाचि।

अद्रव्यवाचिनामिति। एतेनाधिकरणशब्दोऽत्र द्रव्ये वर्त्तते नाधार इति दर्शयति। नहि विप्रतिषिद्धवाचिनां शब्दानामाधारे वृत्तिरस्ति। विभक्त्यर्थत्वादाधारशक्तेः। शीतोष्णे इति। शीतोष्णयोः सहानवस्थान-लक्षणेनैव विरोधेन विरुद्धत्वाद्विप्रतिषिद्धवाचित्वम्। तथा सुखदुःखयोरपि। कामक्रोधाविति। क्रुद्धोऽपि काममाचरतीति नानयोर्विप्रतिषिद्धत्वम्।

## १४। न दधिपयआदीनि।

यथायथमिति। यथास्वं यस्य यदात्मीयं लक्षणं तेनेत्यर्थः तत्र दधि-पयसी इत्यादीनां त्रयाणां व्यञ्जनवाचित्वाद् विभाषैकवद्भावप्राप्तिः। ननु च सर्पिर्मधुनी मधुसर्पिषी इति राजदन्तादिष्वनयोर्निपातनादेवैकवद्भावो न भविष्यति। नैतदस्ति। पाक्षिको हि व्यञ्जनैकवद्भावः। तत्र यस्मिन् पक्षे स नास्ति तस्मिन्निपातनं पूर्वनिपातव्यभिचारार्थं स्यात्। इतरस्मिन्नपि पक्ष एकवद्भावनिषेधार्थोऽत्र पाठः। यद्येवमनेनैव सिद्धत्वाद्राजदन्तादिषु पाठोऽनर्थकः स्यात्। नानर्थकः। बहुवचनार्थत्वात्। सर्पिर्मधूनि। मधुसर्पींषीति। ननु तत्रापि द्विवचनान्तावेव पठ्येते? यद्यप्येवं तथापि शब्दाश्रयत्वात् परनिपातस्यार्थधर्मत्वाद् द्वित्वं नापेक्ष्यते। अर्थाश्रयस्त्वेकवद्भाव इति तत्प्रतिषेधे युज्यते संख्या विवक्षितुम्। ब्रह्मप्रजापती इत्यादीनां

पञ्चानां समाहारैकत्वात् प्राप्तिः । शुक्लकृष्णाविति । विप्रतिषिद्धमित्यादिना (२।४।१३) । इध्मावर्हिषी इत्यादीनां समाहारैकत्वात् प्राप्तिः ।

## १५ । अधिकरणैतावत्त्वे च ।

अधिकरणं वर्त्तिपदार्थ इति । वर्त्तनं वर्त्तः समासः । भावे घञ् । वर्त्तोऽस्यास्तीति वर्त्ति समासावयवभूतम् । वर्त्ति च तत् पदञ्चेति वर्त्तिपदं तस्य पदस्यार्थोऽधिकरणमित्युच्यते । कथं पुनस्तस्याधिकरणत्वमित्यत आह सप्तीत्यादि । आधारो ह्यधिकरणम् । वर्त्तिपदार्थश्च समासार्थस्याधारो भवति । तत्र तस्य समवायात् । वर्त्तिपदार्थैर्ह्यवयवैरवयवी समासार्थ आरभ्यते । अवयवी चावयवेषु समवैति । तस्येति । वर्त्तिपदार्थस्य । दश इमे दन्तौष्ठा इति । द्वन्द्वश्चेत्यादिना (२।४।२) प्राप्तिः ।

## १६ । विभाषा समीपे ।

अधिकरणैतावत्त्वस्य प्रकृतत्वात् तदपेक्षयैव समीपत्वं विज्ञायत इत्यत आह अधिकरणैतावत्त्वस्य समीप इति । उपदशं दन्तौष्ठमिति । अत्राधिकरणैतावत्त्वं दशसंख्या । तत्समीपं नवैकादश वा । तत्र दशशब्द एतावत्त्वमाचष्टे । उपशब्दः सामीप्यम् । कथं पुनर्द्वन्द्वैकवद्भावो विकल्प्यमानोऽनुप्रयोगस्य लभ्यत इत्यत आह अव्ययस्येत्यादि । यद्यप्यर्थातिदेशादनुप्रयोगस्यापि विकल्पो लभ्यते तथापि परीहारान्तरमप्यस्तीति दर्शनार्थमस्योपन्यासः । तत्राव्ययस्य संख्याया अव्ययीभावो विहितोऽव्ययं (२।१।६) विभक्तीत्यादिना । बहुव्रीहिरपि विहितः संख्याव्ययासन्न (२।२।२५) त्यादिना । अत्रैकवद्भावपक्ष एकार्थस्य द्वन्द्वस्यैकार्थ एवाव्ययीभावोऽनुप्रयुज्यते । एकार्थत्वं पुनस्तस्य सामीप्यप्रधानत्वात् । यद्यप्यव्ययीभावोऽव्ययं तथाप्यभेदैकत्वं भेदाभावलक्षणं तस्यास्त्येव सामानाधिकरण्यम् । इतरत्र तु बह्वर्थस्य द्वन्द्वस्य बह्वर्थ एव बहुव्रीहिरनुप्रयुज्यते । बह्वर्थं पुनर्बहुव्रीहेः समीपिनः प्राधान्यात् । बहुव्रीहि र्हि समीपी प्रधानत्वाद् भेदसंख्यामुपादत्त इति बह्वर्थो भवति । उपदशमिति । अव्ययीभावे शरत्प्रभृतिभ्य (५।४।१०७) इत्यनुवर्त्तमाने

ऽनश्चेति (५।४।१०८) टच् समासान्तः । नस्तद्धित (६।४।१४४) इति टिलोपः । उपदशा इति बहुव्रीहौ संख्येये डजबहुगणादिति (५।४।७३) डच् ।

## १७ । स नपुंसकम् ।

पञ्चगवमिति । गोरतद्धितलुकीति (५।४।९२) टच् । सग्रहणं द्विगोरपि यथा स्यादित्येवमर्थम् । इतरथा ह्यनन्तरस्य विधिर्वा भवति प्रतिषेधो (प, ६२) वेत्यनन्तरस्यैव द्वन्द्वस्य स्यान्न व्यवहितस्य द्विगोः । नैतदस्ति । एकवचनमित्यनुवर्त्तते । तस्य नपुंसकमित्यनेन सम्बन्धे सति कुतो व्यवधानम् ? नह्येकवचनेन विशेषो द्वन्द्वोऽनेनापेक्ष्यते । किं तर्हि ? एकवचनमात्रम् । प्रसिद्ध्युपसंग्रहार्थं तर्हि सग्रहणम् । स इत्येतदनुवादो भविष्यति । अनुवादश्च प्रसिद्धस्यैव भवति । तथाच यथादर्शनमियं लिङ्गव्यवस्था ऽख्यायत इति । तेन द्वन्द्वैकवद्भावे नित्यं नपुंसकत्वं विज्ञायते । द्विगोश्चानियता । तेनाकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इत्येतदुपपन्नं भवति । पञ्चपूलीति । द्विगोरिति (४।१।२१) ङीप् । एतदेव द्विगोः स्त्रीप्रकरणे ङीब्विधानं ज्ञापकं क्वचित् स्त्रियां द्विगुर्भाष्यत इति । पञ्चखट्वं पञ्चखट्वीति । उपसर्जनह्रस्वत्वे कृते पक्षे ङीप् । पञ्चतक्षं पञ्चतक्षीति । नलोपे कृते पक्षे ङीप् ।

## १८ । अव्ययीभावश्च ।

अधिस्त्रीति । अव्ययं (२।१।६) विभक्तीत्यादिनाव्ययीभावः । ह्रस्वो (१।२।४७) नपुंसके प्रातिपदिकस्येति ह्रस्वत्वम् । उन्मत्तगङ्गं लोहितगङ्गमिति । अन्यपदार्थे च संज्ञायामिति (२।१।२१) समासः । पूर्ववद्ध्रस्वत्वम् । पूर्वपदार्थप्रधानस्यालिङ्गतैव प्राप्नोति । अधिस्त्रीत्यादौ पूर्वपदस्यालिङ्गत्वात् । अन्यपदार्थप्रधानस्याभिधेयलिङ्गतेति । उन्मत्तगङ्गमित्यादौ देशोऽभिधेयः । स च पुंलिङ्ग इति पुंलिङ्गत्वं प्राप्तम् । पुण्याहमिति । कर्मधारयः । राजाहः सखिभ्यष्टजिति (५।४।९१) टच्समासान्तः । रात्राह्नाहाः (२।४।२९) पुंसीति पुंलिङ्गतायां वचनम् । विपथमिति । पथः संख्याव्ययादेरिति (२।४।३०,वा) परवल्लिङ्गतायां प्राप्तायां वचनम् । कुगतिप्रादय इति (२।२।१८) समासः । चतुष्पथमिति

षष्ठीसमासः । समाहारद्विगौ तु पूर्वेणैव सिद्धम् । ऋक् पूरब्धूःपथामानक्षे इत्यकारः (५।४।७४) समासान्तः ।

## १९ । तत्पुरुषोऽनञ्कर्मधारयः ।

नञ्मात्रस्य तत्पुरुषस्याभावान्नञात्र नञ्समासो लक्ष्यत इत्याह नञ्समासमिति । वक्ष्यति विभाषासेनासुराच्छायेति (२।४।२५) । अनन्तरयोगेष्वस्याधिकारस्य प्रयोजनं नास्तीत्यतस्तानुल्लङ्घ्य व्यवहितस्य विभाषासेनासुरेत्यादि (२।४।२५) योगस्योपन्यासः । इत उत्तरेष्वनन्तरेषु योगेष्वस्य प्रयोजनाभावः । नहि संज्ञायां कन्थोशीनरेषु (२।४।२०) तत्पुरुषो नञ्समासः । कर्मधारयो वाऽस्तीत्यादिना भाष्ये प्रतिपादितः । दृढसेन इति बहुव्रीहिः । अथानञ्कर्मधारय इति कोऽयन्निर्देशः ? यदि स्यात्र नञ्कर्मधारययोर्द्वन्द्व स्तदा समाहारे वा स्यादितरेतरयोगे वा ? तत्र पूर्वस्मिन् पक्षे नपुंसकत्वं प्रसज्येत । इतरत्र तु द्विवचनम् । निर्देशस्य सौत्रत्वादुभयथाप्यदोषः । तथाहि च्छन्दोवत् सूत्राणि भवन्तीति । छन्दसि च लिङ्गवचनव्यत्ययं तृतीयेऽध्याये वक्ष्यति ।

## २० । संज्ञायां कन्थोशीनरेषु ।

प्रकृते न तदन्तविधिरिति प्रकृतस्य तत्पुरुषस्य कन्थया तदन्तविधिर्विज्ञायत इत्याह कन्थान्तस्तत्पुरुष इति । सौशमिकन्थमिति । सौशमीनां कन्था इति षष्ठीसमासः । दाक्षिकन्थेति । अस्तीयं ग्रामस्य संज्ञा । नतूशीनरेषु । किं तर्हि ? ततोऽन्यत्रेति ।

## २१ । उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।

उपज्ञायत इत्युपज्ञेति । आतश्चोपसर्ग इति (३।३।१०६) कर्मण्यङ् । उपक्रम्यत इत्युपक्रमः । अकर्त्तरि च कारके संज्ञायामिति (३।३।१९) कर्मणि घञ् । नोदात्तोपदेशस्येत्यादिना (७।३।३४) वृद्धिनिषेधः । यद्यप्युपज्ञेयस्योपक्रम्यस्य चेत्यादि । उपज्ञेयः परिज्ञेयः । उपक्रम्य उपक्रमितव्यः । आदिः प्राथम्यम् । पाणिन्युपज्ञमिति षष्ठीसमासः । तेन तत् प्रथमतः प्रणीतम् । अकालकमिति । स स्वस्मिन् व्याकरणे कालाधिकारं न कृतवान् ।

व्याडुग्रपञ्चं दशदुष्करणमिति। व्याड़िरप्यत्र युगपत्कालभाविनां विधीनां मध्ये दश दुष्करणानि कृत्वा परिभाषितवान् पूर्वं पूर्वं कालमिति (B)। वाल्मीकेः श्लोका वाल्मीकिश्लोका इति षष्ठीसमासः ।

## २२। छाया बाहुल्ये ।

पूर्वपदार्थधर्म्मो बाहुल्यमिति। अत्र हेतुमाह शलभादीनामित्यादि। शलभादीनां बहुत्वं शलभच्छायमित्यादौ हि गम्यते। नहि तेन विना छाया सम्भवति। अतः पूर्वपदार्थस्य शलभादेर्बाहुल्यं धर्म्मः।

## २३। सभा राजाऽमनुष्यपूर्वा ।

इह कस्मान्न भवति राजसभेतीति। स्वं रूपं (१।१।६८) शब्दस्याशब्दसंज्ञेति वचनादिहैव युक्तम् भवितु मित्यभिप्रायः। तदुक्तमित्यादि। एतेन पर्य्यायवचनस्यैवेष्यत इत्येतदाप्तवचनेन द्रढ़यति। यतः पर्य्यायवचनस्यैवेष्यते तस्मादेव हेतोरिदमुक्तम्। जित्पर्य्यायवचनस्यैवेत्यादि। कथं पुनः पर्य्यायवचनस्यैव भवतीत्येषोऽर्थो लभ्यते ? यावता नेह सूत्रे तथाविधं वचनमस्ति। एवं मन्यते। ननु च पूर्वग्रहणमस्ति। अतः पूर्वग्रहणादेषोऽर्थो लभ्यते। कथम् ? यदि स्वरूपग्रहणं स्याद् राजाऽमनुष्यादित्येवं ब्रूयात्। पञ्चम्येव हि दिक्छब्दमध्याहारयिष्यति। न च सभान्तस्य तत्पुरुषस्य पूर्वशब्दादन्यो दिक्छब्दोऽध्याहर्त्तुं शक्यत इति किं पूर्वग्रहणेन ? तत् क्रियते ऽर्थग्रहणं यथा स्यात्। अर्थग्रहणे च सत्यराजा ऽमनुष्यपूर्वा इति द्विष्प्रतिषेधो वर्ण्यते

---

(B) In the printed edition of the काशिका, it is व्याडुग्रपञ्चं दुष्करणम्। On this the पदमञ्जरी says दुषिति सङ्केतशब्दो यथाव हृत्करणम्। The वृत्तिकार again cites this example in मालोपज्ञोपक्रमच्छाये नपुंसके (६।२।१४)। But दशदुष्करण occurs in my 1st, 3rd, & 13th. MSS. as well as in the Poona one. The explanation supplied by the न्यासकार is perhaps not clear enough for those who are not acquainted with व्याड़ि's work. मैत्रेयरक्षित Explaining the Rule (2. 4. 21) in his तन्त्रप्रदीप, says :—"पूर्वं पूर्वं कालमिति। पूर्वं प्रथमं पूर्वं भूताख्यं कालं परिभाषितवान्। पश्चाद वर्त्तमानादिकमित्यर्थः। अथवा पूर्वं पूर्वमिति। प्रथमतरमित्यर्थः। पूर्वप्रथमयोरर्थातिशयविवक्षायां द्विर्वचनमिति (८।१।१२, वार्त्तिक) द्विर्वचनम्। अस्य दश दुष्करणानीत्यनेन सम्बन्धः। तदयमर्थः। प्रथमतरं दश दुष्करणानि कृत्वा कालमवर्त्तमानादिकं परिभाषितवान्।"

ऽराजपूर्वा ऽमनुष्यपूर्वेति । तदनेन नञिवयुक्तन्यायेन तत्सदृशा राजपर्य्याया गृह्यन्ते । ननु तद्विशेषाश्चन्द्रगुप्तादयः । नहि ते राजार्थस्य वाचका इति । अथवार्थग्रहणेऽस्मिन् विभाषा समीप (२।४।१६) इत्यतो विभाषाग्रहण-मनुवर्त्तते मण्डूकप्लुतिन्यायेन । सा च व्यवस्थितविभाषा विज्ञायते । तेनेह पर्य्यायवचनस्यैवेश्वरादेर्ग्रहणम् भविष्यति । नान्यस्य । अमनुष्यशब्दो हि रूढ़िरूपेण रक्षःपिशाचादिषु वर्त्तत इति । यद्येवममनुष्यकर्त्तृके (३।२।५३) चेत्यत्र यदुदाहरिष्यति जायाघ्नस्तिलकालकः पतिघ्नी पाणिरेखा श्लेष्मघ्नं मधु पित्तघ्नं घृतमिति तद्ग्राहन्यते । नैष दोषः । अत्र हि चकारः क्रियते । तस्यैव विधेः समुच्चयार्थः । तेन पुनर्विधानात् क्रत्यलुटो (३।३।११३) बहुलमिति वचनाद्वा रक्षःपिशाचादिभ्योऽन्यत्रापि भविष्यति । अथवा ऽमनुष्यशब्दोऽयं द्विविधः । अस्त्येवायमव्युत्पन्नो रूढ़िशब्दो यो रक्षःपिशाचादिषु वर्त्तते । अस्ति च व्युत्पन्नो नञ्समासः । तत्रेहाव्युत्पन्नस्य रूढ़िशब्दस्य ग्रहणम् । अमनुष्यकर्त्तृके चेत्यत्र (३।२।५३) व्युत्पन्नस्यारूढ़िशब्दस्य ग्रहणमित्यविरोधः । देवदत्तसभेति । देवदत्तशब्दो न राजपर्य्यायः । नाप्यमनुष्यवचनः ।

## २४ । अशाला च ।

सभाशब्दोऽयमस्त्येव कुटीवचनः । दीर्घा सभा ह्रस्वा सभेति । अस्ति च सङ्घातवचनो यथा ब्राह्मणानां सभा स्त्रीणां सभेति । इह चाशालेति कुटीवचनप्रतिषेधादितरो गृह्यत इत्यत आह सङ्घातवचन इत्यादि ।

## २५ । विभाषा सेनासुराच्छायाशालानिशानाम् ।

श्वनिशमिति । यस्यां निशायां श्वानो मत्ता विहरन्ति (C) सा श्वनिशं श्वनिशेति चोच्यत इति ।

## २६ । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।

किमर्थमिदम् ? इहायं द्वन्द्वः सर्वपदार्थप्रधानः । स यदा भिन्नलिङ्गा-

---

(C) स्वरन्तीति पाठान्तरम् । स्वरन्ति शब्दायन्ते भषन्तीत्यर्थः । स्वृ शब्दोपतापयोः । हरदत्त स्त्वाह यस्यां निशायां श्वान उपवसन्ति सा श्वनिश मित्युच्यते । सा पुनः कृष्णचतुर्द्दशी । तस्यां हि श्वान उपवसन्तीति प्रसिद्धि रिति । श्वनिशा कृष्णचतुर्द्दशीत्याहुरिति च भट्टोजिः । शुनश्चतुर्द्दश्यामुपवसतः पश्याम इति शावरभाष्ये ।

वयवो भवति तदा पूर्वोत्तरयोः पदयोर्भिन्नलिङ्गयोरनुग्राहकमेकं लिङ्गं नास्ति येन समुदायो व्यपदिश्यते। उभाभ्याञ्च युगपदसम्भवादशक्यो व्यपदेशः कर्त्तुम्। अतः पर्य्यायः स्यादिति द्वन्द्वे नियमार्थं वचनम्। तत्पुरुषोऽपि द्विविधः। पूर्वपदार्थप्रधान उत्तरपदार्थप्रधानश्चेति। ततो य उत्तरपदार्थप्रधानस्तत्पुरुष स्तस्य प्रधानत्वादेव परस्य यल्लिङ्गं तत्समुदायस्य भविष्यतीति तं प्रत्यनर्थकं वचनम्। यस्तु पूर्वपदार्थप्रधानस्तस्य पूर्वपदस्य यल्लिङ्गं तस्मिन् प्रसक्त उत्तरपदस्य यल्लिङ्गं तद्विधीयत इति तत्र विध्यर्थमेतद् भवति। द्वन्द्वस्य तत्पुरुषस्य चेति। एतेन द्वन्द्वतत्पुरुषयोरिति षष्ठीयमिति दर्शयति। न सप्तमी। यदीयं सप्तमी स्यात् तदा द्वन्द्वे तत्पुरुषे च यत् परं तदीयं लिङ्गं पूर्वपदस्यापद्येत। परशब्दस्य सम्बन्धिशब्दत्वात्। तथाच मयूरीकुक्कुटावित्यत्र पूर्वपदस्य स्त्रीप्रत्ययो निवर्त्तेत। तत्पुरुषेऽप्यर्द्धपिप्पलीत्यत्र पूर्वपदस्यापि स्त्रीप्रत्ययः स्यात्। तस्मात् षष्ठीयम्। तथाच सति समासार्थस्यायमतिदेशो विज्ञायते। पूर्वपदस्य न प्रतिषिध्यते। नापि विधीयत इति न भवति पूर्वोक्तदोषावसरप्रसङ्गः। समासार्थस्य लिङ्गातिदेशादनुप्रयोगोऽपि समासार्थस्यैव विशेषणमिति तल्लिङ्गमेव भवति। कुक्कुटमयूर्य्याविमे इति। उपसर्जनह्रस्वत्वं न भवति। उपसर्जनसंज्ञाया अभावात्। उक्तं ह्येतत् प्राक्। उपसर्जनमिति महत्याः संज्ञायाः प्रयोजन मन्वर्थसंज्ञा यथा विज्ञायेत। अप्रधानमुपसर्जनमिति। द्वन्द्वश्च सर्वपदार्थप्रधान इति नास्त्युपसर्जनसंज्ञा। अर्द्धपिप्पलीत्यादावपि सत्येकविभक्तियोगे यथा पिप्पल्यादेरुपसर्जनसंज्ञा न भवति तथोपसर्जनसंज्ञाविधावेव तत्प्रतिपादितम्। वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। तत्पुरुष इत्यनुवर्त्तमाने पुनस्तत्पुरुषग्रहणस्यैतत् प्रयोजनं तत्पुरुषविशेषस्य परवल्लिङ्गता यथा स्यादिति। तेन द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गता न भवति। अन्यथा यदि सर्वस्येयं तत्पुरुषस्य परवल्लिङ्गता स्यात् तदा परवल्लिङ्गं द्वन्द्वस्य चेत्येवं ब्रूयात्। चकाराद्धि प्रकृतस्य तत्पुरुषस्येति विज्ञास्यत एवेति। पञ्चकपाल इति तद्धितार्थे द्विगुः। संस्कृतार्थे उत्पन्नस्याणो द्विगोर्लुगनपत्य (४।१।८८) इति लुक्। प्राप्तजीविक इति। प्राप्तापन्ने च द्वितीययेति (२।२।४) समासः।

अलष्जीविक इति । पर्य्यादयो ग्लानाद्यर्थे (२।२।१८, वा) चतुर्थ्येति समासः । निष्कौशाम्बिरिति । निरादयःक्रान्ताद्यर्थे (२।२।१८, वा) पञ्चम्येति ।

## २७ । पूर्ववदश्ववडवौ ।

अश्ववडवयोर्विभाषैकवद्भावो विहित इति । विभाषा (२।४।१२) वृक्ष-मृगेत्यादिना । अर्थातिदेशश्चायम् । न निपातनमिति । निपातने हि पूर्ववदिति वचनमनर्थकं स्यात् । अश्ववडवावित्येवं ब्रूयात् । तेन द्विवचन-मतन्त्रमित्यादिना ऽर्थातिदेशस्य फलं दर्शयति । निपातने हि वचनान्तरे पूर्ववल्लिङ्गता न स्यात् ।

## २८ । हेमन्तशिशिरावहोरात्रे च च्छन्दसि ।

परवल्लिङ्गतापवादोऽयं योग इति हेमन्तशिशिरावित्यत्र नपुंसकत्वापवादः। परस्य शिशिरशब्दस्य नपुंसकत्वात् । अहोरात्रे इति । पुंलिङ्गत्वापवादोऽयम् । रात्राह्नाहाः पुंसीति (२।४।२९) पुंलिङ्गत्वे प्राप्ते छन्दसि लिङ्गव्यत्यय उक्त इति । व्यत्ययो बहुलमित्यनेन (३।१।८५) ।

## २९ । रात्राह्नाहाः पुंसि ।

परवल्लिङ्गतया स्त्रीनपुंसकयोः प्राप्तयोरिति । रात्रिशब्दस्य स्त्रीलिङ्गत्वा-दहःशब्दस्य च नपुंसकत्वात् । द्विरात्र इति । द्वयो रात्र्योः समाहारः । तद्धितार्थेत्यादिना (२।१।५१) समाहारे द्विगुः । अहः सर्वैकदेशसंख्यातपुण्याच्च (५।४।८७) रात्रेरित्यच् समासान्तः । अत्र ह्यच् प्रत्यनुपूर्वात् सामलोम्न (५।४।७५) इत्यतोऽजित्यनुवर्त्तते । पूर्वाह्ण इति । अह्नः पूर्वमिति विग्रह्य पूर्वापरेत्यादिना (२।२।१) समासः । राजाहःसखिभ्यष्टजिति (५।४।९१) टच् । अह्नोऽह्न एतेभ्य (५।४।८८) इत्यह्नादेशः । अह्नोऽदन्तादिति (८।४।७) णत्वम् । द्व्यह इति । पूर्ववत् समाहारे द्विगुः । पूर्ववट् टच् । न संख्यादेः समाहार इति (५।४।८९) प्रतिषेधादह्नादेशो न भवति । अह्नष्टखोरेवे-ति (६।४।१४५) टिलोपः । अनुवाकादय इति । केचिदाहुर्बहुव्रीहिरयम् । अनुक्रान्तो वाकोऽनयाऽनेन वा ऽनुवाकः । स्त्रीलिङ्गे नपुंसकलिङ्गे च प्राप्ते

वचनम्। अन्ये च मन्यन्ते योऽयं भावे घञ् स सामर्थ्यात् पुंलिङ्गः। तस्य हि नपुंसके भावे क्तोऽपवादः। स्त्रियाञ्च क्तिन्। तेनासौ सामर्थ्यात् पुंस्येवावतिष्ठते। यस्त्वकर्त्तरि कारके विधीयते स पुंसि नपुंसके च वर्त्तते। बाधकाभावात्। स्त्रियान्तु न भवति। यतः स्त्रियां क्तिनप्यकर्त्तरि च कारके विधीयते। स विशेषविहितो घञं बाधते। इह च वचेरकर्त्तरि च कारके (३।३।१९) संज्ञायामिति घञ् विहितः। अनूच्यते यत् पदं तदनुवाकः। कुगतिप्रादय इति (२।२।१८) समासः। अस्मिन् पक्षे नपुंसके प्राप्ते वचनम्।

## ३०। अपथं नपुंसकम्।

अपथमिति। पथो (५।४।७२) विभाषेति यदा समासान्तप्रतिषेधो नास्ति तदऋक्पूरब्धूः (५।४।७४) पथामानक्ष इत्यकारः समासान्तः। समासान्तनिर्देशाद् यदा समासान्तो नास्ति तदा पुंलिङ्गतैव भवति। अपन्था इति।

## ३१। अर्द्धर्चाः पुंसि च।

अर्द्धर्चा इति। बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह अर्द्धर्चादय इत्यादि। शब्दरूपाश्रया चेयमिति। शब्दरूप माश्रयो यस्याः सा तथोक्ता। शब्दरूपमाश्रित्यार्थमनपेक्ष्य द्विलिङ्गतेयं विधीयत इत्यर्थः। क्रियाशब्दस्याभिधेयवल्लिङ्गमिति भूतं कुण्डम्। भूता शाटी। भूतो घट इति। यौगिकस्याभिधेयवल्लिङ्गमिति लवणं शाकम्। लवणा यवागूः। लवणः सूप इति। लवणेन संसृष्टमिति संसृष्ट इति ठक् (४।४।२२)। तस्य लवणाल्लुगिति (४।४।२४) लुक्। अतएव तद्धितार्थयोगी भूतत्वाद् यौगिकोऽत्र लवणशब्दः। सारशब्द उत्कर्षे पुंलिङ्ग इति। यथा चन्दनसार इति। अपूर्व इति। अपूर्वशब्दोऽयं धर्माधर्मयोर्वर्त्तते तत्साधन इति। अदृष्टोपार्जनं प्रति यस्याङ्गभावः स तत्साधनमित्यर्थः। स पुनर्यागादिः। कर्म्मशब्दो नकारान्त एवोभयलिङ्ग इति कर्म कर्मा चेति। (D)

---

(D) धर्मशब्दो नकारान्त एवोभयलिङ्गः। धर्म धर्मा चेति क्वचित् पाठान्तरम्।

३२ । इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ।

आदेशः कथनमिति । प्रथमतः प्रतिपादनम् । शब्देनान्वादेशोऽनुकथनमिति । पश्चात् प्रतिपादनम् । तत्र यादृशमिहाभिप्रेतं तादृशं पश्चाद् वक्ष्यति । आभ्यां छात्राभ्यामित्यादि । आदेश एषः । अथो आभ्यामित्याद्यन्वादेश एषः । अथोशब्देनात्रान्वादेश उच्यते । ननु च त्यदाद्यत्वे कृते हलि लोपे (७।२।१०) चाथो आभ्यामित्यादिरूपं सिध्यत्येव । तस्मादनुदात्तमेव केवलं विधेयम् । आदेशवचनन्त्वनर्थकमित्यत आह आदेशवचनमित्यादि । अव्ययसर्व्वनाम्नामकच् प्राक् टेरित्यकच् (५।३।७१) प्रत्यये कृते सत्यप्यनाप्यक (७।२।११२) इत्यधिकारादिद्रूपस्य लोपो नास्तीत्यसत्यादेशवचने रूपं न सिध्यति । ननु च हलि लोप (७।२।११३) इत्यनेन हलादाविद्रूपस्य लोपेऽनेनाजादौ यथा स्यादित्येवमर्थं कस्मान्न भवति ? नैतदस्ति । सामर्थ्याद्धि हलादावेव भवितव्यम् । तत्र स्मैभावादिषु कृतेषु । तस्मात् साकच्कार्थमादेशवचनम् । साकच्कार्थे चास्मिन्नारब्धे शित्करणं सर्वादेशार्थम् । अन्यथा ह्यलोऽन्त्यस्य स्यात् । प्रयोजनाभावान्न भविष्यतीति चेत् ? न । अकारस्य त्वकारवचनं दीर्घादेशनिवृत्त्यर्थं विज्ञायते । अथानुदात्तवचनं किमर्थम् ? यावतोड़िदं (६।१।१७१) पदाद्यप्पुम्रैद्युभ्य इति विभक्तेरुदात्तत्वे कृतेऽनुदात्तं पदमेकवर्जमिति (६।१।१५८) प्रकृतेरनुदात्तत्वं भविष्यति । नैतदस्ति । सविभक्त्यर्थमनुदात्तवचनम् । सविभक्तिकस्यानुदात्तत्वं यथा स्यात् । तेन सर्वानुदात्तमेवाभ्यामिति पदमन्वादेशे भवति । यदि पश्चादुच्चारणमात्रमन्वादेशस्तदेह कस्मान्न भवति ? देवदत्तं भोजयेमञ्च यज्ञदत्तमिति । अस्ति ह्यत्राप्यन्वादेशः । ततश्च द्वितीयाटौस्स्वेन ( २।४।३४ ) इत्येनादेशः प्राप्नोतीत्यत आह नेह पश्चादुच्चारणमात्रमित्यादि । तेनेह न भवतीति । नह्यत्रैकस्याभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनम् । किं तर्हि ? अभिधेयान्तरस्य । तथाहि पूर्वं देवदत्तस्य प्रतिपादनम् । उत्तरकालं यज्ञदत्तस्य । कथं पुनरयं विशेषो लभ्यते ? यावता पश्चादुच्चारणमात्रे ऽन्वादेशशब्दः प्रसिद्धः । न च सामान्यशब्दः शब्दान्तरसन्निधानादिकमन्तरेण विशेषेऽवतिष्ठते । नैष दोषः । यस्माद्विभाषा सेनेत्यतो (२।४।२५) विभाषाग्रहणमनु-

वर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेनैवंविधविषय एवान्वादेशोऽत्र ग्रहीतव्यो नान्वादेशमात्रम्। तस्माद्विशिष्टस्यान्वादेशस्य ग्रहणं युक्तमिति भावः। यदपि च वक्ष्यति तत्र (२।४।३४) यत्र किञ्चिद्विधायेत्यादि तदपीममेव न्यायं हृदि कृत्वेति बोद्धव्यम्।

## ३३। एतदस्त्रतसोस्त्रतसौ चानुदात्तौ।

अथो अत्रेति। सप्तम्यास्त्रल् (५।३।१०)। अथो अत इति। पञ्चम्यास्तसिल् (५।३।७)। पुनर्वचनमनुदात्तार्थमिति। एतदोऽशिति (५।३।५) यः पाञ्चमिकोऽशादेशः स उदात्तः स्यात्। अनुदात्तश्चेष्यत इत्यनुदात्तार्थं वचनम्। अथ त्रतसोरिति किमर्थम्? यावता त्रतसौ चानुदात्ताविति वचनात् तयोरेव निमित्तभावो विज्ञास्यते? नैतदस्ति। अन्वाचयोऽपि विज्ञायेत यथा कर्त्तुः क्यङ् सलोपश्चेति (३।१।११)। अत्राविशेषेण क्यङ् भवति। तथात्राविशेषेण तावदशादेशो भवति। यत्र तु त्रतसौ स्तश्चेति तत्र तावनुदात्तौ भवतः। तस्मात् तावन्निमित्तभावार्थं त्रतसोरिति वक्तव्यम्। अथ त्रतसोरनुदात्तत्वं किमर्थम्? यावता लित्स्वर एव तयोरनुदात्तत्वं करिष्यति। नैतदस्ति। न ह्यत्र लित्स्वरोऽस्ति। अनुदात्तस्यादेशस्य विधानात्। ननु च लित्स्वरे कृत आदेशस्वरः क्रियते। यद्येवं लित्स्वरापवाद आदेशस्वरो विज्ञायेत। न चापवादविषयमुत्सर्गोऽभिनिविशते। तस्माद् यथा गोष्पदप्रमित्यत्र लिति पूर्वमनुदात्तभावो नास्तीति प्रत्ययस्वर एव भवति तथेहापि स्यादिति त्रतसोरनुदात्तार्थं वचनम्। ततश्चैतदपि सर्वमनुदात्तं पदं भवति। ताविति वक्तव्ये त्रतसोरिति वचनं स्पष्टार्थम्। गोष्पदप्रमिति। यावति विन्दजीवोः (३।४।३०)। चर्मोदरयोः पूरेः (३।४।३१)। वर्षप्रमाण ऊलोपश्चान्यतरस्यामिति (३।४।३२) णमुल्। ऊलोपश्च।

## ३४। द्वितीयाटौस्स्वेनः।

इदमेतदोरित्यादि। ननु चानन्तरत्वादेतद एवात्रानुवृत्तिः प्राप्नोति। नेदमो व्यवहितत्वादित्यत आह मण्डूकप्लुतिन्यायेनेत्यादि। एकमेवेदं विधानमिति। अयं दण्ड इत्यनेन दण्डस्य सत्तोपलक्षणमात्रं कृत्वा हरानेनेत्यने-

नैव हरणक्रियां प्रति दण्डस्य करणभावो निर्दिश्यत इत्येकं विधानम् । एतमातं ङितं विद्यादित्यत्रापीषदर्थे क्रियायोगे मर्य्यादाभिविधौ च य इती-(E) षदाद्यर्थस्याकारस्य निर्देशमात्रं कृत्वैतमातं ङितं विद्यादित्यनेन वेदनक्रियां प्रत्याकारमात्रस्य कर्मभाव एव विधीयत इत्येकमेव विधानम् ।

## ३५ । आर्द्धधातुके ।

वध्यादिति । आशिषि लिङ् । लिङाशिषीत्यार्द्धधातुक (३।४।११६) संज्ञा । हन्यादिति विधिनिमन्त्रणेत्यादिना (३।३।१६१) लिङ् । विषयसप्तमी चेयमिति । यदि परसप्तमी स्यात् तदा भव्यमित्यादि न सिध्यति । तथाहि हलन्तत्वादस्त्रादीनामृहलोर्ण्यदिति (३।१।१२४) ण्यति कृते तस्मिन् परतोऽस्तेर्भूः (२।४।५२) रजेर्व्यघञपो (२।४।५६) श्चक्षिङः (२।४।५४) ख्याञित्येत आदेशाः स्युः । तत्र द्वयोर्वृद्धौ कृतायां तृतीयस्य युकि कृते भाव्यं प्रवैयमाख्याय्य मित्यनिष्टं रूपं स्यात् । विषयसप्तम्यां त्वस्यामार्द्धधातुकत्वे विवक्षिते प्रागेव प्रत्ययोत्पत्तेरादेशाः स्युः । ततोऽजन्तत्वादचो यदिति (३।१।९७) यतीद्यतीतीत्त्वे (६।४।६५) कृते सर्व्वेषां गुणेऽस्त्रादेशस्य धातोस्तन्निमित्तस्यैवेत्यवादेशे (६।१।८०) च भव्यं प्रवेयमाख्येयमिति सिध्यति । तस्माद् विषयसप्तमीयम् । न परसप्तमी । कथं पुनर्विषयसप्तमीयं लभ्यते । यावता तस्मिन्निति निर्दिष्टे पूर्वस्येति (१।१।६६) परिभाषोपस्थानात् परसप्तम्येव न्याय्या । न विषयसप्तमी । नैतदस्ति । आर्धधातुक इति सामान्यनिर्देशात् । न च सामान्ये पौर्व्वापर्य्यमस्ति । बुद्ध्या पौर्वापर्य्यमस्तीति चेत् ? नैवम् । एवं हि गौरवं स्यात् । अथवाचो यदित्यज्ग्रहणं (३।१।९७) ज्ञापकं विषयसप्तमीयमिति । पश्चाद् यथा प्राप्तमित्यादि । आदेशेषु कृतेषूत्तरकालं यो यतः प्राप्नोति स ततो भवतीत्यर्थः ।

## ३६ । अदो जग्धि ल्यप् ति किति ।

प्रजग्धेति । समानकर्तृकयोः पूर्व्वकाल (३।४।२१) इति क्त्वा । कुगतिप्रादय इति (२।२।१८) समासः । समासेऽनञ्पूर्वे क्त्वो ल्यप् ( ३।१।३७ ) ।

(E) अयं भाष्यकारीयः श्लोकांशः । निपात (१।१।१४ ) एकाजनाङित्यत्र भाष्ये च स श्लोकः पठितः ।

जग्ध इति। झषस्तथोर्धोऽध इति (८।२।४०) तकारस्य धकारः। झलां जश् झशीति (८।४।५३) जश्त्वम्। धकारस्य दकारः। झरो झरि सवर्णे इति (८।४।६५) लोपः। अथेह्रेदितो नुम् धातोरिति (७।१।५८) नुम् कस्मान्न भवतीत्यत आह इकार उच्चारणार्थ इति। यथा ऽद भक्षण इत्यत्राकार उच्चारणार्थं स्तथैहापीकारो वेदितव्यः। अथ ल्यबग्रहणं किमर्थम्? ति कितीत्येव सिद्धम्। न सिध्यति। यस्मात् क्त्वाप्रत्ययस्य परत्वाल्ल्यबादेशः प्राप्नोति। नैतदस्ति। अन्तरङ्गत्वाज्जग्धादेशेन भवितव्यम्। अन्तरङ्गत्वन्तु तस्यैकपदाश्रयत्वात्। ल्यबादेशस्य तु बहिरङ्गत्वं समासाश्रयत्वात्। समासस्य चानेकपदाश्रयत्वात्। एवं तर्हि

जग्धौ सिद्धेऽन्तरङ्गत्वात् ति किति यल्ल्यबुच्यते।

तज्—ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्॥ इति

तेन दधाते र्जहातेश्च संपूर्वाद्विपूर्वाच्च क्त्वाप्रत्यये कृते द्यतिस्यतिमास्थामित्ति कितीत्यत (७।४।४०) स्ति कितीत्यनुवर्त्तमाने दधातेर्हि(७।४।४२)र्जहातेश्च क्त्वीति (७।४।४३) हिरादेशो ल्यबादेशं बाधित्वा प्राप्तः। अस्मादेव ज्ञापकाल्ल्यपा बाधितत्वान्न भवति संधाय विहायेति। एवं निर्दाय दुर्दायेति दो दद् घोरिति (७।४।४४) ददादेशो न भवति। प्रस्थायेत्यत्र द्यतिस्यतिमास्थामित्ति कितीतीत्वं (७।४।४०) न भवति। प्रखन्य प्रखायेति। जनसनखनां सञ्झलोरिति (६।४।४२) नित्यमात्त्वं न भवति। ये विभाषेति (६।४।४३) विभाषैव भवति। तत्र हि विड्वनोरनुनासिकस्यादित्यत (६।४।४१) आद्ग्रहणमनुवर्त्तते। प्रक्रम्य इति। क्रमश्च क्त्वीति (६।४।१८) दीर्घत्वं न भवति। तत्र हि ढ्रलोपे पूर्वस्य दीर्घोऽण इत्यतो (६।३।१११) दीर्घग्रहणमनुनासिकस्य क्विझलोः क्ङितीत्यतो (६।४।१५) झल्ग्रहणं क्ङिति चानुवर्त्तते। आपृच्छ्येति। च्छ्वोः शूडनुनासिके चेति (६।४।१९) शकारो न भवति। प्रदीव्येत्यत्रानेनैव सूत्रेणोड् न भवति। हलि (८।२।७७) चेति दीर्घत्वम्। प्रपठ्येत्यत्रार्द्धधातुकस्येतीड् (७।१।३५) न भवति।

## ३७। लुङ्सनो र्घस्लृ।

अघसदिति। लृदित्वात् पुषादिसूत्रेण (३।४।५५) च्ले रङादेशः। जिघत्-

सतीति । सः स्यार्द्धधातुक (७।४।४९) इति सकारस्य तकारः । घस्लृभावेऽच्युपसंख्यानमिति । घस्लृभावे कर्त्तव्ये ऽचि तस्योपसंख्यानं प्रतिपादनं कर्त्तव्य मित्यर्थः । तत्रेदं प्रतिपादनम् । उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थ स्तेन घस्लृभावोऽच्यपि भवति । प्रघस इति । पचाद्यच् (३।१।१३४) ।

## ३८ । घञपोश्च ।

घास इति भावे घञ् । प्रघस इति । उपसर्गेऽद (३।३।५९) इत्यप् । लुङ्सन्घञप्सु घस्लृ इत्येकयोगे कर्त्तव्ये योगविभागो वैचित्र्यार्थः ।

## ३९ । बहुलं छन्दसि ।

घस्तामिति ! लङ् । तसस्ताम् । आदादिकत्वाच्छपो लुक् । बहुलञ्छन्दस्यमाङ्योगे (६।४।७५) ऽपीत्यड़ागमाभावः । अथवा लुङुदाहरणमेतत् । मन्त्रे घसह्वरेत्यादिना (२।४।८०) च्लेर्लुक् । सग्धिरिति । स्त्रियां क्तिन् । घसिभसोर्हलि चेत्युपधालोपः (६।४।१००) । झलो (८.२'२६) झलीति सकारलोपः । अथ तु सिचोऽनेन लोपो विधीयते तदा च्छान्दसो वर्णलोपो द्रष्टव्यो यथेष्कर्त्तारमध्वर इति । पूर्ववत् तकारस्य धकारः । घकारस्य जश्त्वम् । समाना ग्धिरिति (F) पूर्वापरप्रथमेत्यादिना (२।१।५८) समासः । समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केष्विति (८।३।८४) सभावः अस्तामिति । झलो झलीति (८।२।२६) सिचो लोपः । तसस्ताम् । खरि चेति (८।४।५५) दकारस्य तकारः । अथवा लङुदाहरणमेतत् । अथ बहुलग्रहणं किमर्थम् ? अन्यतरस्यांग्रहणमेव कस्मान्न क्रियत इत्युक्ते कः पुनरेवं सति गुणो भवतीति पर्य्यनुयोगमाशङ्क्याह तदेवोत्तरार्थमपि भविष्यतीति । एतेनेहान्यतरस्यांग्रहणे सत्युत्तरसूत्रेऽन्यतरस्यांग्रहणं न कर्त्तव्यं भवतीतीमं गुणं दर्शयति । तर्हीहैवान्यतरस्यां ग्रहणमुत्तरसूत्रेऽनुवर्त्तिष्यते । यदि पुनरुत्तरसूत्रे बहुलग्रहणमनुवर्त्तेत तदा किं स्यात् ? अन्यदपि किञ्चित् कार्य्यं भवतीत्याशङ्क्येत । क्वचिदन्यदेवेत्येषोऽप्यर्थो हि बहुलग्रहणस्याभीष्ट एव । घस्तामित्यत्रोपधालोपो न भवतीति । घसिभसोर्हलि चेति (६।४।१००) प्राप्तः । स बहुलग्रहणान्न भवति ।

---

(F) सग्धिः स्त्री सहभोजन मित्यमरः ।

## ४० । लिट्यन्यतरस्याम् ।

लिटि परत इति । ननु चार्द्धधातुक (२ ३।३५) इति वर्त्तते । आर्धधातुक इति च विषयसप्तमीयमित्युक्तम् । तदयुक्तं लिटि परत इति वचनम् । नेदमयुक्तम् । आर्धधातुकशब्दस्यार्द्धधातुकत्वमनेकप्रत्ययसाधारणं सामान्यमर्थः । तेन च पौर्वापर्य्यं न सम्भवति । तद्धि देशतो वा भवति कालतो वा । सामान्यस्य चादेशत्वात् कालत्वान्नित्यत्वाच्च तेन सह देशकृतं कालकृतञ्च पौर्वापर्य्यं नोपपद्यते । अतो युक्ता ऽर्धधातुक इति (२।४।३५) विषयसप्तमी । इह तु लिटीत्यार्धधातुक उपात्तः । सम्भवति चानेन पौर्वापर्य्यम् । किञ्च लिटि परभूते घस्लृआदेशे विधीयमाने न किञ्चिदनिष्टमापद्यते । तस्मात् परसप्तम्येवैषा युक्ता । जक्षतुरिति । गमहनेत्यादिनोपधालोपः (६।४।९८) । शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम् । खरि चेति (८।४।५५) चर्त्वम् । आद । आदतुरादुरिति । अत आदेरित्यभ्यासस्य (७।४।७०) दीर्घः । ननु च घस्लृ अदन इत्येतस्य जघास जक्षतु र्जक्षुरिति भविष्यति । अद भक्षण इत्यस्यादादतुरादुरिति । अस्ति घसिः प्रकृत्यन्तरम् । सृघस्यदः क्मरजिति ( ३।२।१६० ) क्मरज्विधानात् । तत् कथमिह लिटि विकल्पविधानम् । घसेः प्रकृत्यन्तरस्यासर्वविषयत्वज्ञापनार्थम् । तेन तस्य सार्वधातुक आर्धधातुके च यत्र लिङ्ग नास्ति वचनञ्च तत्र प्रयोगो न भवति ।

## ४१ । वेञो वयिः ।

इकार उच्चारणार्थ इति । नानुबन्धः । तेन नुम् न भवतीति भावः । उवायेति । लिट्यभ्यासस्योभयेषामिति (६।१।१७) संप्रसारणम् । ऊयतुरूयुरित्यत्रापि ग्रह्यादिसूत्रेण ( ६।१।१६ ) संप्रसारणम् । अथ यकारस्य संप्रसारणं कस्मान्न भवतीत्याह लिटि वयो य इत्यादि । वेञ इति संप्रसारणं न भवतीति । वच्यादिसूत्रेण ( ६।१।१५ ) प्राप्तम् । वेञ इति ( ६।१।४० ) प्रतिषेधान्न भवति । तत्र हि न संप्रसारणे संप्रसारणमित्यतो (६।१।३७) नेति वर्त्तते । उवायेत्यादि रूपं वये रात्मनेपदित्वान्न सिध्यतीति सूत्रारम्भः ।

## ४२ । हनो वध लिङि ।

अकारान्तश्चायमादेश इति । कुत एतत् । शैलीयमाचार्य्यस्य यत्रेह प्रकरणे व्यञ्जनान्त आदेश स्तत्रोच्चारणार्थमिकारं करोति यथा जग्धिरित्यादौ । तस्मादिकारान्ताकरणादकारान्तोऽयमादेश इति विज्ञायते । हलन्तलक्षणेति । वदव्रजहलन्तस्याच (७।२।३) इत्यनेन या वृद्धिर्विधीयते सा हलन्तलक्षणा ।

## ४३ । लुङि च ।

आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लिङि मा भूदिति । अनेन योगविभागस्योत्तरार्थतां दर्शयति । एकयोगे हि सति लिङोऽप्युत्तरत्रानुवृत्तेस्तत्राप्यात्मनेपदेषु विकल्पः स्यात् ।

## ४४ । आत्मनेपदेष्वन्यतरस्याम् ।

आवधिष्टेति । आङो यमहन (१।३।२८) इत्यात्मनेपदम् । आवधिषतेति । आत्मनेपदेष्वनत (७।१।५) इत्यदादेशः । आहतेति । हनः सिजिति (१।२।१४) कित्त्वम् । अनुदात्तोपदेशेत्यादिना (६।४।३७) ऽनुनासिकलोपः । ह्रस्वादङ्गादिति (८।२।२७) सिचो लोपः ।

## ४५ । इणो गा लुङि ।

अगादिति । गातिस्थेत्यादिना (२।४।७७) सिचो लुक् । अगुरिति । आत इति (३।४।११०) झेर्जुस् । उस्यपदान्तादिति (६।१।९६) पररूपत्वम् । लुङीति वर्त्तमान इत्यादि । लुङि चेत्यतो (२।४।४३) लुङ्ग्रहणेऽनुवर्त्तमाने यत् पुनर्लुङ्ग्रहणं कृतं तस्यैतत् प्रयोजनम् परस्मैपदेष्वपि यथा स्यात् । नित्यश्चात्मनेपदेषु । एतेनैतद् दर्शयति । पूर्वकं हि लुङ्ग्रहण मात्मनेपदग्रहणेनान्यतरस्यांग्रहणेन च सम्बद्धम् । अतस्तदनुवृत्तौ तयोरप्यनुवृत्तिः स्यात् । तथाचात्मनेपदेष्वेव विकल्पेनादेशः स्यात् । तस्मादविशेषेण नित्यश्च यथा स्यादित्येवमर्थं पुन र्लुङ्ग्रहणं क्रियते । अगायीति । चिण् भावकर्म्मणोरिति (३।१।६३) चिण् । आतो युक् चिण्कृतोरिति (७।३।३३) युक् । चिणो (६।४।१०४) लुगिति तकारस्य लुक् । इण्वदिक इति वक्तव्यमिति । यथैणो

गादेशो लुङि भवति तथैक् स्मरण इत्यस्यापि भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। बहुलञ्छन्दसीत्यतो (२।४।३९) बहुलग्रहण मनुवर्त्तते मण्डूकप्लुतिन्यायेन। तेनेकोऽपि लुङि गादेशो भविष्यतीति।

## ४६। णौ गमिरबोधने।

गमयतीति। जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति (ग,सू,१८८) मित्त्वाद्ध्रस्वत्वम्।

## ४७। सनि च।

जिगमिषतीति। गमेरिट् परस्मैपदेष्विति (७।२।५८)। प्रतीषिषतीति। अजादे र्द्वितीयस्येति (६।१।२) सन्यङोरित्यनेन (६।१।९) स इत्यस्य द्विर्वचनम्। सन्यत (७।४।७९) इतीत्त्वम्। उपसर्गेकारस्य धातोरिकारेण सहाकः सवर्णे (६।१।१०१) दीर्घः। इङश्चेत्यादिना (२।४।४८) योगविभागस्योत्तरार्थतां दर्शयति। एकयोगे हि णेरप्युत्तरत्रानुवृत्तिः स्यात्। ततश्च तत्राप्यय मादेशः प्रसज्येत।

## ४८। इङश्च।

अधिजिगांसत इति। पूर्व्ववत् सन (१।३।६२) इत्यात्मनेपदम्। अज्झनगमां (६।४।१६) सनीति दीर्घः।

## ४९। गाङ् लिटि।

अधिजग इति। लिट स्तझयोरेशिरेजित्येश् (३।४।८१)। आतो लोप इटि (६।४।६४) चेत्याकारलोपः। गा इत्येतस्य द्विर्वचनम्। ननु लिटि परभूते तशब्दस्य परत्वात् प्रागेवेशादेशेन भवितव्यम्। पश्चाद् गाङादेशेन। ततश्च द्विर्वचने निमित्तेऽच्ययं गाङादेश इति द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावादिवर्णस्य द्विर्वचनं प्राप्नोति। तत् कथं गा इत्येतस्य द्विर्वचनम्? नैतदस्ति। यस्माल् लिण्मात्रापेक्षत्वाद् गाङादेशोऽन्तरङ्गः। लिडादेशविशेषाश्रयत्वादेशादेशो वहिरङ्गः। तस्मादन्तरङ्गत्वादेशादेशात् प्रागेव गाङादेशेन भवितव्यम्। ततश्च द्विर्वचननिमित्तेनायमच्यजादेश इति स्थानिवद्भावो न भवति। तत् कुत इवर्णस्य द्विर्वचनप्रसङ्गः? गाङोऽनुबन्ध-

करणं विशेषणार्थमिति। गाङ्कुटादिसूत्रे (१।२।१) गाङ्कुटादिभ्य इत्युच्यमाने कै गै शब्द इत्यस्यापि ग्रहणं स्यात्। ततश्चागासीनट इत्यत्र घुमादि (६।४।६६) सूत्रेणेत्वं प्रसज्येत। अथ क्रियमाणेऽपि ङकारे गाङ् गतावित्यस्य ग्रहणं कस्मान्न भवति? येन हेतुना न भवति स हेतु र्गाङ् कुटादिसूत्रे (१।२।१) एव दर्शितः। ननु चेङो ङित्त्वात स्थानिवद्भावेनैव ग्रहणं भविष्यति। तत् किं ङकारेणेत्यत आह नहीत्यादि। तत्र हि गाङित्येतस्य स्वरूपस्य ग्रहणम्। न च तत् स्थानिवद्भावेन लभ्यते। किं तर्हि? कार्य्यम्। यस्मात् स्थानिवदादेश इति कार्य्यातिदेशोऽयम्। न रूपातिदेशः।

## ५० । विभाषा लुङ्लृङोः ।

अध्यैष्टेति। आड्जादीना (६।४।७२) मित्याट्। आटश्चेति (६।१।९०) वृद्धिः।

## ५१ । णौ च संश्चङोः ।

णावितीङपेक्षयेत्यादि। णावितीयं या परसप्तमीङपेक्षया सा। संश्चङोरितीयं या परसप्तमी सा ण्यपेक्षयेत्यर्थः। अधिजिगापयिषतीति। णिच्। अर्त्तिह्रीत्यादिना (७।३।३६) पुक्। सन्। इट्। गुणायादेशौ। अध्यापिपयिषतीति। क्रीङ्जीनाणावित्यात्त्वम् (६।१।४८)। पुक्। अजादेर्द्वितीयस्येति (६।१।२) पा इत्यस्य द्विर्वचनम्। अध्यजीगपदिति। णिश्रीत्यादिना (३।१।४८) चङ्। णौ चङ्युपधाया ह्रस्वः (७।४।१)। सन्वल्लघुनीति (७।४।९३) सन्वद्भावात् सन्यत (७।४।७९) इतीत्त्वम्। दीर्घो लघो- (७।४।९४) रिति दीर्घः।

## ५२ । अस्तेर्भूः ।

ईहामासेति। ईहतेरिजादेश्च गुरुमतोऽनृच्छ (३।१।३६) इत्याम्। आस (२।४।८१) इति लेर्लुक्। कृञ्चानुप्रयुज्यते (३।१।४०) लिटीत्यस्तेर्लिट्परस्यानुप्रयोगः। प्रत्याहारग्रहणेनास्तेर्ग्रहणसामर्थ्यादिति। कृञ्चानु-

प्रयुज्यते लिटीत्यत्र ( ३।१।४० ) कृञिति प्रत्याहारग्रहणम्। अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरीति ( ५।४।५० ) कृग्रब्दादारभ्य कृञो द्वितीय-तृतीयशम्बबीजात् कृषा (५।४।५८) वित्या कृञो अकारात्। तेन च प्रत्याहार-ग्रहणेनास्तेरपि ग्रहणम्। तस्यैतदेव प्रयोजनम्। आसेत्येतदनुप्रयोगि रूपं यथा स्यादिति। यदि चास्तेरनुप्रयोगेऽपि भूभावः स्यात् तदासेत्येतदनुप्रयोगि रूपं न स्यादिति प्रत्याहारग्रहणमनर्थकम्। ततश्च कृभ्वनुप्रयुज्यते लिटीत्येवं ब्रूयात्। तत्राप्ययमर्थः। किमिदं प्रत्याहारग्रहणमुत करोतेरित्येव सन्देहः परिहृतो भवति। कृतश्च प्रत्याहारग्रहणम्। तस्मात् प्रत्याहारग्रहणसामर्थ्यादनुप्रयोगेऽपि भूभावोऽस्तेर्न भवति। तथाचोक्तम् इत्यादिना ऽनन्तरोक्तमेवार्थमाप्तवचनेन (G) द्रढयति। भूरिति दीर्घोच्चारणं निष्ठायां ह्रस्वश्रवणं मा भूद् भूतो भूतवानिति। अस्तेरिति श्तिपा निर्देशोऽस्यतेर्मा भूत्। नैतदस्ति। निरनुबन्धकपरिभाषयैवास्यतेर्न भविष्यति। तस्य ह्युकारोऽनुबन्ध उदितो वेति (७।२।५६) विशेषणार्थः कृतः। अस्तेस्त्वकार उच्चारणार्थो नानुबन्धः। एवं तर्हि श्तिपा निर्देशो वैचित्र्यार्थ इत्येके। निरनुबन्धकपरिभाषायाः प्रत्ययविधिविषयत्वादित्यपरे।

## ५३। ब्रुवो वचिः।

वक्तीति। चोः कुरिति (८।२।३०) कुत्वम्। उच इति। वच्यादिसूत्रेण (६।१।१५) संप्रसारणम्।

## ५४। चक्षिङः ख्याञ्।

नित्यमात्मनेपदं न भवतीति। यदि हि स्यात् अकारानुबन्धकरण-

---

(G) आप्तवचनेनेति। श्लोकवार्त्तिककारवचनेनेत्यर्थः। तथाचात्र श्लोकः—

अस्तौ विद्यायाश्विधितेष कृञ्पदं गृहीतुकामस्त्वितयं तदेव हि।

अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्त्तुर्वचनात् मनीषिणः ॥१॥ इति।

अनुप्रयोगविषये भुवा भूभावेनास्तेरबाधनमनिवृत्तिं मनीषिणः स्मरन्ति। कर्त्तुः सूत्रकारस्य वचनात्। मनीषिणः कर्त्तुरिति वेति पद्यार्थः। मुद्रितकाशिकायां कर्त्तुर्वचन मिति पाठः।

Though the latter half of this Stanza is undoubtedly by कात्यायन or the श्लोकवार्त्तिककार, as it is read as a वार्त्तिक in 6. 4. 110, the first half is considered by some, as अनार्ष and recently composed to make up the Stanza.

मनर्थकं स्यात्। तस्मात् कर्त्रभिप्राये क्रियाफले विवक्षित आत्मनेपदं स्यान्नान्यत्र। क्ष्शादिरपीति (H)। ककारशकारयोरकार उच्चारणार्थः। क्ष्श् स्याञित्येवंरूप आदेशो वक्तव्यः। कथं पुनरिष्यमाणोऽप्येवंविध आदेशो लभ्यते। पूर्वोक्तस्य बहुलग्रहणस्यानुवृत्तेः। अतएव बहुलग्रहणस्यानुवृत्तेर्वर्जनेऽसनयोश्चादेशप्रतिषेधो भवतीति व्याख्यानं कर्त्तव्यम्। संचक्षा इति। स्त्रियां क्तिन् (३।३।९४)। नृचक्षा इति। सर्वधातुभ्योऽसुन् (उण्, ४।१८८)। अत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घः। विचक्षण इति। कृत्यल्युटो बहुलमिति (३।३।११३) कर्त्तरि ल्युट्। बहुलमित्यादि। संज्ञायां छन्दसि च जग्ध्यादेशादिकार्य्यं बहुलं न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थम्? अन्नाद्यर्थम्। अन्नादयः शब्दाः साधवो यथा स्युः। व्याख्यानन्तु तदेव बहुलग्रहणमाश्रित्य कर्त्तव्यम्। अन्नमिति। अदो जग्धिरादेशो न भवति। बहुलग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तेः। वधक इति। हनो वध इत्यादिना (२।४।४२) वधादेशो लिङ्युच्यमानो हन्तेर्ण्वुल्प्रत्यये कृतेऽपि भवति। गात्रमिति। औणादिकष्ट्रन्। इणो गा लुङीति (२।४।४५) लुङ्युच्यमानो गादेशोऽत्रापि भवति। विचक्षण इति। चक्षिङः ख्याञादेशो न भवति ल्युटि। अजिरशब्दस्त्वजिरशिशिरशिथिरेति किरच्प्रत्ययान्त (उण्, १।५३) औणादिको निपातितः। तस्मादेव निपातनादजेर्व्यघञपोरिति (२।४।५६) विधीयमानो वीभावो न भवति। आदिशब्देन प्रघस इत्यादेर्ग्रहणम्।

## ५५। वा लिटि।

## ५६। अजेर्व्यघञपोः।

प्रवायक इति। ण्वुल्। प्रवयणीयमिति। अनीयर्। कृत्यच इति (८।४।२९) णत्वम्। घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्त्तव्य मिति। घञपोः प्रतिषेधे कर्त्तव्ये क्यपः प्रतिषेधस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः।

---

(H) There are some वार्त्तिकs, in the Rule 2. 4. 54, about this ख्याञादेश viz: चक्षिङः क्शाञ्ख्याञौ, ख्शादिर्वा &c...।

क्यपः प्रतिषेधनिमित्तत्वेन प्रतिषेधं प्रति सम्बन्धित्वेन विवक्षितत्वात् क्यप इति षष्ठी। तत्रेदं प्रतिपादनम्। संज्ञायां समजनिषदनिपतमनविदेत्यादिना (३।३।९९) संज्ञायां गम्यमानायामजेः क्यप् विधास्यते। नियतवर्णानुपूर्वीका च संज्ञा भवति। न चादेशे कृते संज्ञा गम्यते। तस्मात् संज्ञायां विधानात् क्यपि वीभावो न भवति। वलादावार्धधातुके विकल्प इष्यत इति। कथं पुनरिष्यमाणोऽपि लभ्यते? अजेरुदात्तत्वात्। स ह्योदर्थो धातुषूदात्तः पठ्यते। यदि चास्य नित्यं वीभावः स्यात् तदा तस्योदात्तपाठोऽनर्थकः स्यात्। नहि वीभावे विहित इट् प्राप्नोति। तस्यानुदात्तत्वात्।

## ५७। वा यौ।

यु इति ल्युटो ग्रहणमिति। अन्यस्यासम्भवात्। प्रवयणो दण्ड इति। प्राज्यतेऽनेनेति करणे ल्युट्। पूर्ववत्सत्वम्।

## ५८। ण्यक्षत्रियार्षञितो यूनि लुगणिञोः।

ण्यादयो गोत्रप्रत्यया इति। गोत्राद् यून्यस्त्रियामिति (४।१।९४) गोत्रप्रत्ययान्तादेव युवप्रत्ययविधानात्। तस्माद् यूनीञिति। अत (४।१।९५) इञित्यनेन। कौरव्यशब्दस्तिकादिषु पठ्यत इति। श्वौरसशब्दादनन्तरम्। क्षत्रियगोत्रस्य तत्र ग्रहणमिति। श्वौरसशब्देन क्षत्रियगोत्रप्रत्ययान्तेन साहचर्य्यात्। श्वौरसशब्दो हि जनपदशब्दात् क्षत्रियादञिति (४।१।१६८) क्षत्रियगोत्रप्रत्ययान्तः। ऋष्यण इति। ऋष्यन्धकवृष्णिकुरुभ्य (४।१।११४) श्चेत्यनेन। कुर्वादिभ्यो ण्य इति। वामरथ्यशब्दं व्युत्पादयति। तस्मात् कण्वादिभ्यो गोत्र (४।२।१११) इति शैषिकोऽस्मिति। ननु च वामरथ्यशब्दः कुर्वादिषु पठ्यते। न कण्वादिषु। तत् कथमेवमुक्तम्? यद्यपि न पठ्यते तथापि कुर्वादिषु वामरथ्यस्य कण्वादिवत् स्वरवर्जमिति पाठात् कण्वादिवद्भावोऽस्ति। अत एवमुक्तमित्यदोषः। दाक्षायण इति। यञिञोश्चेति (४।१।१०१) फक्। अब्राह्मणगोत्रमात्रादिति। इह केचिदुक्तमणिञो लुकि क्षत्रियगोत्रमात्राद् युवप्रत्ययस्योपसंख्यानमिति। तेषां वैश्यगोत्राच्च प्राप्नोति। तस्माद्

वैश्यगोत्रादपि यथा स्यादित्येवमर्थं मात्रग्रहणम् । ब्राह्मणक्षत्रियवैश्यानां हि गोत्राणि सम्भवन्ति । तत्र ब्राह्मणगोत्रं वर्जयित्वा ऽन्यतः सर्वस्माद्भवति । पूर्वके तु वाक्ये ऽतद्राजादपि क्षत्रियगोत्राद् यथा स्यादित्येवमर्थं मात्रग्रहणम् । तथाह्यणिञो लुकि तद्राजाद् युवप्रत्ययस्योपसंख्यानमिति कैश्चिदुक्तम् । तन्मतनिरासार्थमेतद्वाक्यमुपन्यस्तम् । बौधिः पितेत्येवमादिना क्षत्रियगोत्रोदाहरणानि दर्शयति । भाण्डीजङ्घिरित्येवमादिना वैश्यगोत्रोदाहरणम् । ब्राह्मणगोत्रप्रतिषेधादिह न भवति दाक्षायण इति । शाखावयवलक्षण इति । क्षत्रियगोत्रमधिकृत्येदमुक्तम् । भाण्डीजङ्घिरित्यत्र वैश्यगोत्रेऽत (४।१।९५) इञित्यनेनैव भवतीति वेदितव्यम् । पैलादिदर्शनात् सिद्धमिति । पैलादेराकृतिगणत्वात् तत्रैते द्रष्टव्या इति दर्शयति ।

## ५९ । पैलादिभ्यश्च ।

पीलाया (४।१।११८) वेत्यणिति । तत्र हि शिवादिभ्यो (४।१।११२) ऽणित्यतोऽण्ग्रहणानुवृत्तेः । अन्ये पैलादय इञन्ता इति । अत्रौदच्चिशब्दो बाह्वादित्वादिञन्तः । बाह्वादिषु ह्युदञ्चुशब्दः पठ्यते । उकारोच्चारणमतन्त्रम् । धातुप्रदर्शनार्थत्वात् । उदञ्चतीति ऋत्विगित्यादिना (३।२।५९) सूत्रेण क्विन् । उदचोऽपत्यमौदच्चिः । निपातनादनिदितामित्यादिना (६।४।२४) नलोपो न भवति । अच (६।४।१३८) इत्यकारलोपश्च । औलिङ्गिशब्दः शाखावयव इञन्तः । शेषास्त्वत ( ४।१।९५ ) इञितीञन्ता वेदितव्याः । शालङ्किरिति पठ्यते । स कथम् ? यावता नड़ादिषु शलङ्कु शलङ्कञ्चेति पाठाच् शालङ्कायन इति भवितव्यम् ? प्रकृत्यन्तरं शलङ्कुशब्दोऽस्ति । ततोऽयमिञ् विहित इत्येके । अस्मादेव निपातनाच्छलङ्कुशब्दादिञिति विज्ञायते । तत्संनियोगे च शलङ्कादेश इत्यपरे । तद्राजाच्चाण इति । तद्राजसंज्ञकाच्चाण उत्तरस्य युवप्रत्ययस्य लुग् भवति । अङ्गस्यापत्यमिति द्व्यञ्मगधेत्यादिनाऽण् (४।१।१७०) । आङ्गः । तस्यापत्यं युवा । आङ्ग एव । अणो द्व्यचः (४।१।१५६) इति फिञ् । तस्यानेन लुक् ।

६० । ञ्ञः प्राचाम् ।

अन्यत्र प्राग्ग्रहणं विकल्पार्थं दृष्टम् । अत इहापि विकल्पो मा विज्ञायी-त्याह गोत्रविशेषणमित्यादि ।

६१ । न तौल्वलिभ्यः ।

तौल्वल्यादिष्वान्तरङ्गातिशब्दः पौष्करसादिशब्दश्च बाह्वादौ इञन्तौ । बाह्वादिषु ह्यन्तरङ्गच्छब्दः पुष्करसच्छब्दश्च पठ्येते । अतोभयपदवृद्धिरनुशतिकादित्वात् । शेषास्त्वत (४।१।९५) इञितीञन्ताः ।

६२ । तद्राजस्य बहुषु तेनैवास्त्रियाम् ।

बहुषु वर्त्तमानस्येति । बहुष्वर्थेषु वर्त्तमानस्येत्यर्थः । अथ बहुवचने परत इत्येवं कस्मान्न व्याख्यायते ? अशक्यमेवं वक्तुम् । यतः संख्यावाची बहुशब्दो न बहुवचनवाची । यदि तु बहुवचने परत इत्ययमर्थोऽभिमतः स्यादस्त्रियामिति प्रतिषेधं न कुर्य्यात् । प्राप्त्यभावात् । न हि तद्राजान्ता-दुत्पन्नेन स्त्रीप्रत्ययेन व्यवहिते बहुवचने परतो लुकः प्राप्तिरस्ति । किञ्चा-त्रय इत्यत्र बहुवचने परतो लुकि विधीयमान उदात्तनिवृत्तिस्वरः प्रसज्येत । कथम् ? अत्रेरपत्यानि बह्नीतीतश्चानिञ (४।१।१२२) इति ढकि तस्य तद्धितस्य कित (६।१।१६१) इत्यन्तोदात्तत्वे कृते बहुवचने जसि परतोऽत्रिभृगुकुत्सवसिष्ठेत्यादिना (२।४।६५) लुकि कृते ऽनुदात्तस्य च यत्रोदात्तलोप (६।१।१६१) इति विभक्तेरुदात्तत्वं प्राप्नोति । तस्माद् बहुषु वर्त्तमानस्येत्ययमेवार्थः । बहुष्विति च तद्राजान्तस्य विशेषणम् । न तद्राजस्य । अन्यथा हि द्वन्द्वे दोषः प्रसज्येत । आङ्गश्च वाङ्गश्च सौह्मश्चा-ऽङ्गवङ्गसुह्मा इत्यत्र लुङ् न स्यात् । नह्यत्र तद्राजो बहुषु वर्त्तते । द्वन्द्वस्तु वर्त्तते युगपदधिकरणवचनो हि द्वन्द्व इति कृत्वा । तस्मात् तद्राजान्तस्यैवे-दं विशेषणम् । न तद्राजस्य । तद्राजसंज्ञकस्य प्रत्ययस्य बहुषु वर्त्तमान-स्यास्त्रीलिङ्गस्य लुग् भवतीत्ययं तु वृत्तिग्रन्थ एवमुन्नेयः । बहुषु वर्त्तमान-स्यास्त्रीलिङ्गस्य तद्राजान्तस्य यः सम्बन्धी तद्राजसंज्ञकः प्रत्ययस्तस्य तद्राज-

संज्ञकस्य प्रत्ययस्य लुग् भवतीति। कथम् ? तद्राजान्तस्यैवैतत् सामर्थ्यलब्धम्। न ह्यतद्राजान्तस्य तद्राजसंज्ञकः प्रत्ययः सम्बन्धी भवति। सूत्रेऽप्यन्तग्रहणं न कृतम्। प्रत्ययग्रहणपरिभाषयैव तदन्तस्य लब्धत्वात्। तथापि प्रत्ययान्तस्य लुगुच्यमानः प्रत्ययमात्रस्यैव विज्ञायते। प्रत्ययस्य लुक्श्लुलुप इति (१।१।६१) प्रत्ययादर्शनस्यैव लुक्संज्ञाविधानात्। तेनैव चेदिति। तद्राजप्रत्ययान्तेनैवेत्यर्थः। अङ्गा वङ्गाः सुह्मा इति। अङ्गस्यापत्यानि बहूनि। द्व्यञ्मगधेत्यादिनाऽण् (४।१।१७०)। तस्य लुक्। लोहध्वजा व्रीहिमन्त इति। पूगाञ् ञ्योऽग्रामणीपूर्वादिति (५।३।११२) ञ्यप्रत्ययः। तस्य लुक्। औपगवा इति। प्राग्दीव्यतोऽण्। प्रियवाङ्गा इति। बहुव्रीहिः। नात्र तद्राजप्रत्ययेन बहुत्वं कृतम्। किं तर्हि ? समासेन। नचासौ तद्राजप्रत्ययान्तः। ततस्तद्राजस्याविहितत्वात्। यद्येवं द्वन्द्वोऽपि तद्राजप्रत्ययान्तो न भवतीति तत्रापि लुग् न स्यात् ? नैतत्। यदि द्वन्द्वोऽपि तद्राजप्रत्ययान्तो न भवति तथापि प्रत्येकं द्वन्द्वावयवास्तद्राजप्रत्ययान्ता बह्वर्थाश्चेति तत्र भवत्येव लुक्। ननु च बहुष्वित्यर्थग्रहणम्। यश्च बह्वर्थस्तत्रावश्यमेव तत्कृतेन बहुत्वेन भवितव्यम्। तत् किं तेनैवेत्यनेन ? एवम्मन्यते। अन्तरङ्गत्वात् तद्राजप्रत्ययोत्पत्तिवेलायां यद्बहुत्वमुपजायते तदेव यदि गृह्येत—नतु यत्पदान्तरापेक्षं—ततश्च द्वन्द्वेषु लुग् न स्यात्। तेनैव ग्रहणं तु द्वितीयोऽयं यत्र इति। यः प्रत्ययान्तस्य बहुत्वं तेनैव क्रियते। यच्च पदान्तरापेक्षेणापि तत्र सर्वत्र भवतीति। यद्येवमिहापि प्राप्नोति प्रियवाङ्गा इति। नैष दोषः। एवकारो ह्यत्र क्रियते। स तुल्यजातीयापेक्षयैव नियमं करोति लोपिभिरेव यत् कृतं बहुत्वमिति। न च प्रियवाङ्गा इत्यत्र लोपिभिरेव कृतं बहुत्वम्। यस्मादत्र किञ्चिल्लोपि पदं किञ्चिदलोपि। एवञ्च नियमे सति द्वन्द्वोऽपि यत्र लोप्यलोपिनां तत्रापि न भवति गार्ग्यकाश्यपगालवानामिति (८।४।६७)। अत्र गार्ग्यकाश्यपयोर्यञिञोश्चेति (४।१।१०१) लोपः प्राप्नोति। गालवस्य तु ऋष्यणन्तत्वान्नास्ति लुकः प्राप्तिः। आङ्ग्य इति। टिड्ढाणञिति (४।१।१५) ङीप्।

## ६३। यस्कादिभ्यो गोत्रे।

अपत्यं पौत्रप्रभृति गोत्रमिति (४।१।१६२) पारिभाषिकमेवेदं गोत्रं गृह्यते

न लौकिक मिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह प्रत्ययविधेश्चान्यत्रेत्यादि। एतच्चोभयगतिरिह शास्त्रे सम्भवतीति लभ्यते। लौकिके गोत्रे गृह्यमाणे शास्त्रीयमपि तत्रान्तर्भवति। प्रत्ययविधौ तु लौकिकगोत्रस्य ग्रहणन्न भवतीति ज्ञापकात्। यदयं गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञित्यत्र ( ४।२।३९ ) गोत्रग्रहणं कृत्वा राजन्यग्रहणं करोति तज् ज्ञापयति प्रत्ययविधौ लौकिकगोत्रग्रहणन्न भवतीति। यास्काच्छात्रा इति। तस्येदमित्यण् (४।३।१२०)। पुष्करसच्छब्दोऽप्यत्र पठ्यते। स किमर्थः ? यावता बह्वच इञ प्राच्यभरतेष्वित्येवं ( २।४।६६ ) सिध्यति। न सिध्यति। न गोपवनादिभ्य इति ( २।४।६७ ) प्रतिषेधः प्राप्नोति। गोपवनादिषु हि केचित् तौल्वल्यादयश्चेति ( २।४।६१ ) पठ्यते। तौल्वल्यादिषु पुष्करसच्छब्दः पठ्यते। तौल्वल्यादीनाञ्च गोपवनादिषु पाठोऽस्तीत्ययमेव यस्कादिषु पुष्करसच्छब्दपाठो ज्ञापयति।

## ६४। यञञोश्च।

गार्ग्य इति। यञश्चेति ( ४।१।१६ ) ङीप्। यस्येति चेत्यकारलोपः ( ६।४।१४८ )। हलस्तद्धितस्येति यकारस्य ( ६।४।१५० ) च। तत्र हि सूर्यतिष्यागस्त्यमत्स्यानां य उपधाया ( ६।४।१४९ ) इत्यतो य इत्यनुवर्त्तते। अल्लोपोऽन ( ६।४।१३४ ) इत्यतो लोप इति च। वैद्य इति। शार्ङ्गरवाद्यञो (४।१।७३) ङीन्। दैप्या औत्सा इति। जातादौ शैषिकेऽर्थे यञञौ। यञादीनामित्यादि। यञादीनां बहुषु लुगुच्यमान एकत्वे द्वित्वे च प्राप्नोतीति वचनम्। एकद्वयोरिति च संख्याप्रधानोऽयं निर्देशो यथा द्व्येकयोर्द्विवचनैकवचने (१।४।२२) इति। एकत्वद्वित्वयोरिति यावत्। अन्यथा हि बहुत्वाद्बहुवचनं स्यात्। आदिशब्देनाञादीनां बहुषु लोपिनां ग्रहणम्। व्यवस्थायाञ्चादिशब्दः। उपसंख्यानशब्दस्य प्रतिपादन मर्थः। कर्त्तव्यमित्यध्याहार्य्यम्। तत्रेदं प्रतिपादनम्। वा यावित्यतो (२।४।५७) मण्डूकप्लुतिन्यायेन वाग्रहण मनुवर्त्तते। चकारो वात्रानुक्तसमुच्चयार्थः क्रियते। तेन यञादीनामेकद्वयो र्वा तत्पुरुषे षष्ठ्या लुग् भवतीति। यदि वेत्यनुवर्त्तते तदा बहुष्वपि विकल्पः स्यात्।

व्यवस्थितविभाषाविज्ञानाच्च भविष्यतीत्यदोषः । आङ्गकुलमिति । अत्राङ्ग-शब्दात् तद्राजसंज्ञकोऽण् । स च यञादिर्न भवति । तस्येह प्रकरणे यञादिभ्यः प्राङ् निर्देशात् । उपगार्ग्यमिति । अव्ययं विभक्तीत्यादिनाव्ययीभावः (२।१।६) । परमगार्ग्य इति । सन्महदित्यादिना (२।१।६१) प्रथमान्तयोस्तत्पुरुषः ।

६५ । अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ।

आत्रेय्य इति । टिड्ढाणञिति ङीप् (४।१।१५) ।

६६ । बह्वच इञः प्राच्यभरतेषु ।

भरता इति । येषां भरत आद्यः संज्ञाकारी ते भरताः । पान्नागारा इत्यादिषूदाहरणेष्वत इञ् (४।१।९५) । तस्य लुक् । बालाकय इति । बाह्वादित्वादिञ् । हास्तिदासय इति । अत इञ् (४।१।९५) । आर्जुनायन इति । यञिञोश्चेति (४।१।१०१) फक् ।

६७ । न गोपवनादिभ्यः ।

विदाद्यन्तर्गणोऽयमिति लुक्प्राप्तिं दर्शयति । ग्रैग्रवा इति । ओर्गुणः (६।४।१४६) । ननु चान्येऽपि हरितादयोऽत्र पठ्यन्ते । तत् किमित्यवधार्यत एतावन्त एव इत्यत आह परिशिष्टानामित्यादि । प्रमादपाठ इति । अनार्षः पाठ इत्यर्थः । यदि तेषां प्रमादपाठ एवं तर्ह्यविदादित्वादत्रप्येभ्यो न प्राप्नोतीत्यत आह ते हीत्यादि । ते हि चतुर्थेऽध्याये विदादिषु गोपवनादिभ्यः पूर्वे पठ्यन्त इति न भवत्येष दोषप्रसङ्गः । यस्त्विह गोपवनादिभ्योऽष्टभ्यः पर एषां पाठः स प्रमादपाठ इत्युच्यते ।

६८ । तिककितवादिभ्यो द्वन्द्वे ।

किमर्थं पुनस्तिककितवाभ्यां द्वाभ्यां गण उपलक्ष्यते । नैकेनैवोपलक्ष्येत ? नैतत् । कार्यिणा हि गण उपलक्षयितुं युक्तः । द्वन्द्वश्चात्र कार्यी । तेनैवोपलक्षयितुं युक्तः ।

६९ । उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ।

यदि द्वन्द्वे चाद्वन्द्वे च भवत्यद्वन्द्वग्रहणं तर्हि किमर्थमित्याह अद्वन्द्व-ग्रहणमित्यादि । द्वन्द्वग्रहणे नात्र द्वन्द्वाधिकारः सम्बध्यते । द्वन्द्वे द्वन्द्वाधि-

कार इति । तस्य नञा सम्बन्धे च द्वन्द्वाधिकारनिवृत्तिः प्रतीयते । अथ विषयोपग्रहणार्थमद्वन्द्वग्रहणं कस्मान्न विज्ञायते ? अद्वन्द्वे ऽद्वन्द्वविषय इति । यद्ययमर्थोऽभीष्टः स्याद्द्वन्द्वग्रहणं न कुर्य्यात् । विनापि तेनार्थस्य प्रतीतेः । कथम् ? तिककितवादयोऽपीह त्रयः पठ्यन्ते । उपकलमका भ्रष्टक-कपिष्ठलाः कृष्णाजिनकृष्णसुन्दरा इति । तेषाञ्चाद्वन्द्व एव ग्रहणं प्रयोजयति न द्वन्द्वः । पूर्वेणैव सिद्धत्वादिति । तेषां तावन्नियमेनाद्वन्द्वार्थं ग्रहणम् । तत् साहचर्य्यादितरेषामप्यद्वन्द्वार्थं ग्रहणं युक्तमिति निष्फलमेवाद्वन्द्वग्रहणं स्यात् । तस्माद्द्वन्द्वाधिकारनिवृत्त्यर्थमेतद् युक्तमिति । तेषां पूर्वेण नित्यमेव लुग् भवतीति । अन्यथा हि तिककितवादिषु तेषां पाठोऽनर्थकः स्यात् । अद्वन्द्वे त्वनेन विकल्प इति । प्रकृतत्वाल्लुको विज्ञेयः । तत्रोपकलमकशब्दाभ्यां नड़ादिफग्विधानात् तस्य लुग्विकल्पः । ततः परेभ्यः प्राक् कपिष्ठलशब्दादत इञः । कपिष्ठलमयूरकर्ण इत्येतेभ्यः शिवादिभ्योऽणः । खारीजङ्घादिभ्यः प्राक् कठेरणिशब्दादत इञः । कठेरणिशब्दादौत्सर्गिकस्याणः । कुषीतकादिभ्यः कृष्णपिङ्गलपर्य्यन्तेभ्योऽतइञः । अनुलोमशब्दाद् बाह्वादीञः । बाह्वादिषु हि लोमशब्दः पठ्यते । स च तदन्तविधिं प्रयोजयति । अनुगतानि लोमान्यस्येत्यनुलोमा । तस्यापत्यान्यानुलोमयो (I) ऽनुलोमान इति । शेषाणामत इञः ।

## ७० । आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ।

यद्यपि प्रत्ययान्तात् षष्ठ्युच्चारिता तथापि प्रत्ययस्यैव लुग् विज्ञायते । न तदन्तस्य । यस्मात् प्रत्ययादर्शनस्य लुगित्येषा संज्ञा विहिता । न तदन्तस्येत्यालोच्याह आगस्त्यकौण्डिन्ययोर्गोत्रप्रत्यययोरिति । व्यधिकरणे षष्ठी । आगस्त्यकौण्डिन्ययोर्याववयवौ गोत्रप्रत्ययौ तयोरित्यर्थः । तावेव प्रत्ययौ स्वरूपेण दर्शयन्नाह अणो यञश्चेति । यञो यद्यपि लुक् सिद्धस्तथापि पुनर्विधीयते । कुण्डिनजादेशेन तस्य बाधा मा विज्ञायीति । मध्योदात्तौ

---

(I) आनुलोमय इतीदं तु चिन्त्यम् । दित्यदित्यादि (४।१।८५) सूत्रस्थेन लोम्नोऽपत्येषु बहुष्विति वार्त्तिकेनात्र लोपाभावपक्षे बहुत्वकारप्रत्ययप्रसङ्गात् । कथं पक्षेऽनुलोमा इति न स्यात् ?

हि कुण्डिनीशब्द इति । कुण्डमस्यास्तीत्यत (५।२।११५) इनिठनाविति इनि प्रत्यये क्रते प्रत्ययस्वरेण । तदादेशोऽपि तथा स्यादिति । स्थानिवद्भावेन मध्योदात्तः स्यात् । चित्करणान्मध्योदात्तत्वं न भवति । किमर्थं पुनः प्रत्ययान्तयोरेवाय मादेशो न क्रियत इत्याह तयोरित्यादि । यदि प्रत्ययान्तयोरेवायमादेशः स्याद् गोत्रेऽलुगचीति (४।१।८९) प्रतिषेधो न स्यात् । यस्माल्लुकोऽसौ प्रतिषेधो नादेशस्येति स्यादेवात्रादेशः । ततश्चावृद्धादणेव स्यात् । एवञ्चागस्त्या इत्यनिष्टं रूपं स्यात् । यद्यपि वृद्धस्यादेशः स्थानिवद्भावाद्वृद्धग्रहणेन गृह्यते तथाप्यगस्तीया इति स्यात् । आगस्तीया इति न सिध्यति । नच स्थानिवद्भावो लभ्यते । वृद्धसंज्ञाया अल्विधित्वात् । इह प्रत्ययस्य तु लुकि परिशिष्टस्यादेशे विहिते गोत्रेऽलुगचीति (४।१।८९) लुकि च प्रतिषिद्धे वृद्धाच्छः (४.२।११४) सिद्धो भवति । तत्र विशेषो नास्तीति । सत्यामपि वृद्धसंज्ञायां कण्वादिभ्यो गोत्र इति (४।२।१११) च्छापवादेनाणैव भवितव्यम् । तस्मादिह यदि प्रत्ययान्तस्यादेशोऽथापि प्रक्रुतिमात्रस्योभयथापि कौण्डिना इति भवितव्यमिति नास्ति कौण्डिन्ये विशेषः ।

## ७१ । सुपो धातुप्रातिपदिकयोः ।

धातुप्रातिपदिकयोरिति । यदीयं सप्तमी स्यात् तदा ऽयमर्थो विज्ञायेत धातौ च प्रातिपदिके च या सन्निक्रुष्टा विभक्तिस्तस्या लुग् भवतीति । सन्निक्रुष्टत्वञ्चोपश्लेषमन्तरेण न सम्भवतीतीहापि स्याद् वृचः प्लच इति । अस्ति ह्यत्रापि प्रातिपदिकेन विभक्तेरुपश्लेषः । तस्मात् षष्ठीयं युक्तेति मत्वाह सुपो विभक्तेर्धातुसंज्ञाया इत्यादि । कथं पुनर्विभक्तेर्धातुसंज्ञा प्रातिपदिकसंज्ञा च भवतीत्यत आह तदन्तर्गता इत्यादि । नन्वेवमपि धातुप्रातिपदिकयोरेकदेशीभूता विभक्तयः स्यु र्न धातुसंज्ञका नापि प्रातिपदिकसंज्ञकाः । समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इत्यदोषः । पुत्त्रीयतीति । आत्मनः पुत्त्रमिच्छतीति सुप आत्मनः क्यच् (३।१।८) । क्यचि (७।४।३३) चेतीत्त्वम् । सनाद्यन्ता धातव इति (३।१।३२) धातुसंज्ञा । सा च सुबन्तात् क्यज् विहित इति ससुप्कस्यैव भवतीति । तेनात्र विभक्तिर्धात्वन्तर्गता

भवति। काष्टश्रित इति। कष्टं श्रित इति द्वितीया श्रितेत्यादिना (२।१।२४) समासः। कृत्तद्धितसमासाश्चेति (१।२।४६) प्रातिपदिकसंज्ञा। सापि सुबन्तानां समासो भवतीति ससुपकस्यैव भवति। तेनात्रापि विभक्तिः प्रातिपदिकान्तर्गता भवति। इह तु: प्रत्ययश्च इत्यत्राप्यप्रत्यय इति (१।२।४५) प्रातिपदिकसंज्ञा प्रतिषेधात् सविभक्तिकस्य प्रातिपदिकसंज्ञा नास्तीति नास्ति विभक्तेः प्रातिपदिकान्तर्भावः।

७२। अदिप्रभृतिभ्यः शपः।

७३। बहुलं छन्दसि।

त्राध्वमिति। त्रैङ् पालने। भौवादिकः। लोट्। ध्वमादेशः। टेरेत्वम्। सवाभ्यां (३।४।९१) वामावित्यमादेशः।

७४। यङोऽचि च।

अचि प्रत्यये परत इति। प्रत्ययग्रहणं मचीति न प्रत्याहारग्रहणमिति प्रदर्शनार्थम्। यदि हि प्रत्याहारग्रहणमभिमतं स्यात् तदाऽणीति णकारेणैव कुर्य्यात्। नहि यङन्तादणोऽन्येऽचः परे सम्भवन्तीत्यभिप्रायः। इदमेवाज्ग्रहणं ज्ञापकं सर्वे धातवः पचाद्यन्तःपातिन इति। लोलुव इति। धातोरेकाचो हलादेः क्रियासमभिहार इति (३।१।२२) यङ्। द्विर्वचनं सन्यङोरित्यनेन (६।१।९)। गुणो यङ्लुकोरिति (७।४।८२) गुणः। लोलू य इति स्थिते पचाद्यच्। यङो लुक्। न धातुलोप इत्यादिना (१।१।४) गुणप्रतिषेधः। अचि श्नु धात्वित्यादिनोवङ् (६।४।७७)। सनीस्रंसः। दनीध्वंस इति। स्रंसु ध्वंसु अवस्रंसने। पूर्ववद् यङादिकार्य्यम्। न लुमताङ्गस्येति (१।१।६३) प्रतिषेधात् प्रत्ययलक्षणेनानिदितामित्यादिना (६।४।२४) ऽनुनासिकलोपो न भवति। नीग्वञ्चुस्रंसुध्वंसु इत्यादिनाभ्यासस्य (७।४।८४) नीगागमः। लालपीति वावदीतीति। लपेर्वदेश्च दीर्घोऽकित (७।४।८३) इत्यभ्यासस्य दीर्घः। यङो वेतीट् (७।३।९४)।

७५। जुहोत्यादिभ्यः श्लुः।

अवनुवर्त्तते। न यङिति। शप एव स्वरितत्वप्रतिज्ञानात्। जुहोतीति।

श्लाविति (६।१।१०) द्विर्वचनम् । विभर्त्तीति । उरदित्यत्वम् (७।४।६६) । रपरत्वम् । भृञामिदितीत्त्वम् (७।४।७६) । नेनेक्तीति । णिजिर् शौचपोषणयोः । निजां त्रयाणां गुणः (७।४।७५) । श्लाविति (६।१।१०) द्विर्वचनम् ।

## ७६ । बहुलं छन्दसि ।

दाति धातीति । ददातिदधात्योः पूर्वसूत्रेण श्लौ प्राप्ते बहुलं प्रतिषिध्यते । शपो लुक् । विवष्टीति । वश कान्तौ । अदादित्वाच्छपो लुकि प्राप्ते श्लुः । श्लाविति (६।१।१०) द्विर्वचनम् । भृञामिदित्यनुवर्त्तमाने (७।४।७६) बहुलं छन्दसीतीत्त्वम् (७।४।७८) । व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । ष्टुना ष्टुरिति (८।४।४१) ष्टुत्वम् । बिभक्तीति । भज सेवायाम् । भौवादिकः । शपः श्लुः । पूर्ववदित्त्वम् । चोः कुरिति (८।२।३०) कुत्वम् । विवक्तीति क्वचित् पाठः । स च वच भाषण इत्येतस्यादादिकस्य वेदितव्यः ।

## ७७ । गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।

अगादिति । इणो गा लुङीति (२।४।४५) गादेशः । अपादिति । पा पाने । अभूदिति । भूसुवो स्तिङीति (७।३।८८) गुणप्रतिषेधः । गापाग्रहण इण्पिबत्योर्ग्रहणमिति । इणादेशस्य ग्रहणं तावद् गातीत्यत एव श्तिपा निर्देशाद् विज्ञायते । श्तिपा हि विकरणशून्य एवमर्थो निर्देशः क्रियते लुग्विकरणस्यैव ग्रहणं यथा स्यादिति । अन्यथा हि यदि गायतेर्ग्रहणमिष्टं स्यात् तदा गा इत्येवं ब्रूयात् । एवं तर्हि गामादाग्रहणेष्वविशेष (प, ११५) इत्युभयोरपि ग्रहणं भविष्यति । किं श्तिपा निर्देशेन ? तस्मादयमेव श्तिपा निर्देशो ज्ञापयतीणादेशस्यैवेदं ग्रहणं न गायतेरिति । पाग्रहणे पिबतेरेव ग्रहणमित्येतदपि लुग्विकरणालुग्विकरणयोरलुगविकरणस्यैव (प, ८१) ग्रहणमित्यनया परिभाषया विज्ञायते । अगासीदिति । कै गै शब्दे । यमरमनमातां (७।२।७३) सक् चेति सगागमः । सिच् । इट् च । अस्तिसिचोऽपृक्त ( ७।३।९६ ) इतीट् । इट ( ८।२।२८ ) ईटीति सिचो लोपः । अपासीदिति । पा रक्षणे । पूर्ववत् सगादिकार्य्यम् । अगासातामिति कर्मण्यात्मनेपदम् । आताम् । किमर्थं पुनः सिचो लुगुच्यते ? न लेरित्येवोच्येत ?

अत्राप्ययमर्थः सम्पाद्यते । उत्तरसूत्रे लिग्रहणं न कर्त्तव्यं भवति । नैतदस्ति । इह लेर्हि लुकि विज्ञायमाने मा हि गातामित्यादिः (६।१।१८७) सिचो-ऽन्यतरस्यामित्यादिः स्वरो (६।१।१८७) न सिध्येत् । स पुनरुदात्तः । अगुरित्यत्राप्यात इति (३।४।११०) सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९) झेर्जुस् भावो न सिध्यति । तस्मात् सिच एव लुग् वक्तव्यः ।

७८ । विभाषा घ्राधेट्शाच्छासः ।

घ्रा गन्धोपादाने । धेट् पाने । शो तनूकरणे । छो छेदने । षोऽन्तकर्मणि । धेटः पूर्वेण नित्ये प्राप्त इति । घुसंज्ञकत्वात् । अलुक्पक्षे पूर्ववत् सगादि-कार्य्यम् । धेटः सानुबन्धकस्य निर्देशो धाञ्परीहारार्थः । यदि कृतात्वो निर्दिश्येत तदा धाञोऽपि ग्रहणं स्यात् । अघ्रासातामिति । कर्मण्यात्मने-पदम् ।

७९ । तनादिभ्य स्तथासोः ।

अततेति । स्वरितञित (१।३।७२) इत्यात्मनेपदम् । अनुदात्तोपदेश (३।४।३७) इत्यादिनाऽनुनासिकलोपः । अतनिष्ट यूयमिति । मध्यमपुरुषबहु-वचनान्तमेतत् ।

८० । मन्त्रे घस-ह्वर-णश-वृ-दहाद्-वृच्-कृगमिजनिभ्यो लेः ।

सिच इत्यनुवर्त्तमाने पुनर्लिग्रहणमादिः (६।१।१८७) सिचोऽन्यतरस्या-मित्यादेः सिच्कार्य्यस्य निवृत्त्यर्थम् । उत्तरार्थञ्च । अक्षन्निति । अद भक्षणे । लुङ् । लुङ् सनोर्घस्लृ इति (२।४।३७) घस्लादेशः । ततश्च्लि लुङीति (३।१।४३) च्लिः । तस्यानेन लुक् । झेरन्तादेशः । इतश्चेतीकारलोपः (३।४।१००) । संयोगान्तस्येति (८।२।२३) तकारलोपः । गमहनेत्यादिनोपधालोपः (६।४।९८) । शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम् । झलाञ्जश् (८।३।५३) झशीति जश्त्वम् । खरि चेति (८।४।५५) चर्त्वम् । ह्वरेत्यागन्तुकेनाकारेण निर्देशः । मा ह्वरिति । लुङ् । तिप्गुणरपरत्वानि । हल्ङ्यादिलोपः (६।१।६८) । न माङ्योग ( ६।४।७४ ) इत्यडागमाभावः । प्राणङिति । णश अदर्शने ।

पूर्ववज्जुत्वादिकार्य्यम् । व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । झलाञ्जशोऽन्ते (८।२।३९) इति जश्त्वम् । षकारस्य डकारः । तस्य वावसान इति (८।४।५६) चर्त्वं टकारः । उपसर्गादसमासेऽपीति (८।४।१४) (J) णत्वम् । क्वचित् प्राणगिति पाठः । तत्र क्विन्प्रत्ययस्य कुरित्यतः (८।२।६२) कुरित्यनुवर्त्तमाने नशेर्वेति (८।२।६३) कुत्वम् । आवरिति । वृजस्तिप् । गुणो रपरत्वम् । हल्ङ्यादिना (६।१।६८) सिपो लोपः । धगिति । दह भस्मीकरणे । सिप् । हल्ङ्यादिना (६।१।६८) सिपो लोपः । दादेर्धातोर्घ इति (८।२।३२) हस्य घः । एकाचो वशो (८।२।३७) भषित्यादिना दकारस्य धकारः । घकारस्य जश्त्वं गकारः । तस्य चर्त्वं ककारः । अडागमस्य बहुलं छन्दस्यमाङ्योगेऽपीति (६।४।७५) निषेधः । आप्रादिति । प्रा पूरण इत्यस्मात् तिप् । परावर्गिति । वृजेस्तिप् । लघूपधगुणः । हल्ङ्यादिना (६।१।६८) लोपः । रात् सस्येति (८।२।२४) नियमात् संयोगान्तलोपाभावः । जकारस्य पूर्ववत् कुत्वं गकारः । तस्य चर्त्वं ककारः । अक्रन्निति । कृञो झेरन्तादेशः । संयोगान्तलोपः । यणादेशः (६।१।७७) । अग्मन्निति । गमेर्झेः पूर्ववदन्तादेशः । गमहनेत्युपधालोपः (६।४।९८) । अज्ञतेति । जनेर्झस्यात्मनेपदेष्वनत (७।१।५) इत्यदादेशः । पूर्ववदुपधालोपः । स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वम् । क्वचिदज्ञन्निति पाठः । तत्र झिः । ततः परस्मैपदं विधेयम् । ब्राह्मणे प्रयोगोऽयमिति । योऽयमनन्तरं मन्त्रे जनेरुक्तः स ब्राह्मणो मन्त्रव्याख्यानग्रन्थः । मन्त्रे जनेर्लुग् न दृश्यत इति तद्विषयमुदाहरणं नोपन्यस्तम् । यदि तर्ह्यमन्त्रे लुग् भवति मन्त्रग्रहणं किमर्थ मित्याह मन्त्रग्रहणमित्यादि ।

## ८१ । आमः ।

ईहाञ्चक्र इति । ईह चेष्टायाम् । लिट् । इजादेश्चेत्यादिना (३।१।३६) ऽम् । तस्य कृत्त्वे मकारान्तस्य कृदन्तत्वात् प्रातिपदिकसंज्ञा । सुः । आमः

---

(J) णत्वन्त्वत्र कथम् ? नशेः षान्तस्येति (८।४।३६) प्रतिषेधात् । न्यासव्याख्याने तन्त्रप्रदीपे सैवेयं स्त्वाह नशेः षान्तस्येति (८।४।३६) न भवति णत्वप्रतिषेधः । छान्दसत्वादिति । एतच्च बहुश्रुतैः सुधीभिर्विचार्य्यम् ।

स्वरादिपाठादव्ययत्वम्। अव्ययादाप्सुप इति (२।४।८२) सुलोपः। कृञ्चेत्यादिना (३।१।४०) लिट्परस्य कृञोऽनुप्रयोगः। आम्प्रत्ययवदित्यादिना (१।३।६३) ऽत्मनेपदम्। तत एशादेशः। द्विर्वचनम्। अभ्यासकार्य्यम्। आमो मकारस्यानुस्वारः। अनुस्वारस्य ययि (८।४।५८) परसवर्णः। अथेह कस्मान्न भवति जगाम शशामेति ? अर्थवदामो ग्रहणात्। अस्य चानर्थकत्वात्। प्रत्ययस्त्वनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यर्थवान्। इह तर्हि कस्मान्न भवत्यम रोग इति ? आमेति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव (प,११४) ग्रहणम्। अस्य तु लाक्षणिकत्वात्।

८२। अव्ययादाप्सुपः।

तत्र शालायामिति। तच्छब्दात् सप्तम्यास्त्रल्। तस्य प्राग् दिशो विभक्तिरिति (५।३।१) विभक्तिसंज्ञा। तदाद्यत्वम्। टाप्। तसिलादिष्वाकृत्वसुच इति (६।३।३५) पुंवद्भावः। तद्धितश्चासर्वविभक्तिरिति (१।१।३८) ऽलोऽव्ययत्वम्। तत उत्पन्नस्य टापो लुक्। केन पुनरव्ययाट्टाबुत्पद्यते ? अजाद्यतष्टाबिति (४।१।४) चेत्। न। स्त्रियां टापो विधानात्। अव्ययस्य चालिङ्गत्वात्। तस्मादव्ययाट्टापः सम्भव एव नास्तीत्यव्ययादपार्थकं टापो लुग्वचनम्। नापार्थकम्। स्त्रियामिति (४।१।३) गुणिप्रधाननिर्देशः। स्त्रीत्ववति पदार्थे टाबादय इति। स्त्रीत्ववति च तस्यां शालायामित्येतस्मिन् पदार्थे तत्रेत्येतदव्ययं वर्त्तते। यद्यपि वाक्यार्थोऽत्र स्त्रीत्वं तथापि वाक्यार्थतयैव तस्य स्त्रीप्रत्ययो द्योत्यते। सति च स्त्रीप्रत्यये पदार्थ एव स्त्रीत्वं भवति। ततष्टापो लुग् वक्तव्यः। कृत्वा हृत्वेति। क्त्वातोसुन्कसुन इति (१।१।४०) क्त्वाप्रत्ययस्याव्ययत्वम्। तत उत्पन्नस्य सुपो लुक्। केन पुनरव्ययात् सुबुत्पत्तिः। स्वादिसूत्रेणेति (४।१।२) चेत्? न। तत्र बहुषु बहुवचनमित्यादिना (१।४।२१) शास्त्रान्तरेण संख्याविशेषेषु स्वादीनां नियतत्वात्। अव्ययानाञ्चासंख्यत्वात्। स्यादेतत्। यत्र संख्यास्ति तत्र बहुषु बहुवचनमित्येवमादिना (१।४।२१) स्वादिनियमः कृतः। अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति। वार्त्तमेतत्। स्वादिसूत्रेण (४।१।२) हि बहुषु

बहुवचनमित्यादिना (१।१।२) शास्त्रान्तरेणैकवाक्यतायां स्वादीनां विधानात् । तथाहि तत्रोक्तं संख्याकर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरेण विहिताः । तेन सहास्यैकवाक्यतेति । एकवाक्यतायाञ्च कुतः स्वादीनां सामान्येन विधानम् । न ह्यपरं लक्षणमस्ति येन स्वादयः सामान्येन विहिताः । एवं तर्ह्येतदेवाव्ययादुत्पन्नस्य सुपो लुग्वचनं ज्ञापकं भवन्त्यव्ययात् स्वादय इति । नह्यनुत्पन्नस्य लुगुपपद्यते । एतदेव ज्ञापकं हृदि कृत्वोक्तमव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति ।

## ८३ । नाव्ययीभावादतोम् त्वपञ्चम्याः ।

एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवतीति । कथम् ? इह द्वयोरर्थयोर्विधानात् । विधायके च वाक्ये द्वे एव । तत्र नाव्ययीभावादत इत्येतत् प्रतिषेधस्य विधायकमेकं वाक्यम् । अम् त्वपञ्चम्या इत्येतदमो विधायकं द्वितीयं वाक्यम् । तत्र चात इत्येतदपेक्षते । अतएव वृत्तौ वाक्यद्वयमुपन्यस्तम् । अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग् भवतीत्येकं वाक्यम् । अमादेशस्तु तस्य भवत्यपञ्चम्या इति द्वितीयम् । तत्रापञ्चम्या इत्यनेनानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प,६२) पञ्चम्या अमादेश एव प्रतिषिध्यते । नत्वलुक् पूर्ववाक्येन विहितः । अतएवालुकि सति पञ्चम्याः श्रवणमेव भवति । एकवाक्यतायां हि सत्यां कार्यद्वयस्यैकया पाठप्रवृत्त्या विधीयमानत्वात् कार्यद्वयस्यापञ्चम्या इति प्रतिषेधः स्यात् । पञ्चमीं वर्जयित्वैतत् कार्यद्वयं वेदितव्यम् । वाक्यभेदे त्वपञ्चम्या इत्येतत् प्रत्यासन्नममादेशमपेक्षते । नतु वाक्यान्तरविहितमलुकम् । तेनापञ्चम्या इत्यनेन सम्बध्यमानः सामान्येन विधीयमानः सन्नलुक् पञ्चमीमप्यवगाहते । तस्मात् पञ्चम्याः श्रवणमेव युक्तम् । तुशब्देनाप्ययमर्थो लभ्यते । ननु च क्रियायाः कारकाणि भवन्ति । पूर्वपदार्थप्रधानश्चाव्ययीभाव उक्तः । पूर्वपदार्थस्य चासत्त्वभूतत्वात् क्रियामन्तरेण सम्बन्धाभावादपादानादिभावो नास्ति । तत् कुतोऽव्ययीभावात् पञ्चम्यादयो विभक्तयो भवेयुः । नैतदस्ति । पूर्व-

पदार्थप्राधान्येऽपि गुणभूतोत्तरपदार्थापेक्षः क्रियायोग उपपद्यते यथा पञ्चपूली-मानयेति। तत्र भावप्राधान्येऽपि गुणभूतद्रव्यापेक्षः क्रियासम्बन्धः।

८४। तृतीयासप्तम्योर्बहुलम्।

सुमद्रमिति। अव्ययं विभक्तीत्यादिना ( २।१।६ ) समुद्रावव्ययीभावः। उन्मत्तगङ्गमिति। अन्यपदार्थे च संज्ञायामित्यनेन (२।१।२१)। एकविंशति-भारद्वाजमिति। संख्या (२।१।१८) वंश्येनेति।

८५। लुटः प्रथमस्य डारौरसः।

परस्मैपदस्यात्मनेपदस्य च यथाक्रमं डारौरस इत्येत आदेशा भवन्तीति। यद्येवं परस्मैपदेषु तिप् तस् झीतेत्रतत् प्रतेत्रकं प्रथमपुरुषसंज्ञा। आत्मने-पदेष्वपि त आतां झ इति। तत्र स्थानिनः षट्। त्रय आदेशा इति वैषम्यात् संख्यातानुदेशाभावादेकैकस्य पर्य्यायेण सर्वे आदेशाः स्युः। नैष दोषः। आनन्तर्य्यतो हि व्यवस्था भविष्यति। तच्चार्थकृतमानन्तर्य्यम्। एकार्थस्यैकार्थः। द्व्यर्थस्य द्व्यर्थः। बह्वर्थस्य बह्वर्थ इति। कर्त्तेति। अनद्य-तने (३।३।१५) लुट्। तिप्। तस्यानेकाल्त्वाड् डा इत्ययं सर्व्वादेशः। ननु च नानुबन्धकृतमनेकाल्त्वम्। डकारश्चानुबन्धः। तत् कुतोऽनेकाल्त्वं यतः सर्वादेशः स्यात्? नैष दोषः। नह्यकृते सर्वादेशे चुटू (१।३।७) इतीत्संज्ञा भवति। इत्संज्ञाया अभावे चानुबन्धो न भवतीत्यनेकाल्त्वात् सर्वादेशो भवति। डित्यभस्यापि टेरिति (६।४।१४३) टिलोपः। कर्त्तारौ कर्त्तार इति। रि (७।४।५१) चेति सकारलोपः। एवमध्येतेत्येवमादीनि रूपाणीङ् अध्ययन इत्येतस्य। अत्र परमपि टेरेत्वं बाधित्वा ऽन्तरङ्गत्वाड् डादय आदेशा भवन्ति। अन्तरङ्गत्वं पुनस्तेषां स्थानिमात्रापेक्षत्वात्। टेरेत्वन्तु बहिरङ्गम्। तद्धि धातुमप्यपेक्षते। न केवलं स्थानिनम्। (K) आ तृतीयाध्यायपरिसमाप्ते-

---

(K) In addition to the MSS (क), (ग) and (घ) as detailed in P. 331, at the end of the first Adhyaya, the Editor had the following MSS. at his disposal to prepare the press copy of the Second Adhyaya of the Kasika Vivarana Panchika :—

धातोरित्य ( ३।१।७ ) स्याधिकृतत्वात् । थासः से इति ( ३।४।८० ) ज्ञापकं तिङादेशस्य टेरेत्वं न भवतीति । तेन कृतेष्वपि डारौरसूलेव भवति । कर्त्तासीति । तासस्त्योर्लोप इति (७।४।५०) सकारलोपः ।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य
चतुर्थः पादः ॥२।४॥
समाप्तश्च द्वितीयोऽध्यायः ॥२॥

---

(च) This MS containing न्यास 2/1, 2/2, 2/3 & 2/4 only, is marked No 33 of 1881-82 belonging to the Deccan college, Poona and was kindly lent by Professor V. S. Ghate. It is a modern copy ending thus :—श्रीसर्वेश्वरजगन्निवासार्पणमस्तु शके १७८८ फाल्गुने i.e. in 1867 A.D. It is in the Debanagar letters.

(छ) Its contents are न्यास 2/1, 2/2, 2/3, 4/1 (Incomplete), 7/1, 7/3 & 8/4. It belongs to the Varendra Research Society, Rajshahi and is written in Bengali character. At the end of its 2/1, is the Stanza :—

वाणेन्दुशैलेन्दुमिते शकाब्दे
प्रणम्य गोविन्दपदारविन्दम् ।
समर्थपादस्य च टिप्पणीं तां
लिलेख वै गोकुलकृष्णशर्म्मा ॥१॥

which gives शक १७१५ or 1793 A. D. as its date.

गौड़ग्रन्थमाला ।

श्रीमत्कुमारशरत्कुमाररायेण प्रवर्त्तिता
श्रीमदक्षयकुमारमैत्रेयेण पर्य्यवेक्षिता च ।

---

अथ

# काशिकाविवरणपञ्जिका ।

बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचिता

शास्त्रिश्रीश्रीशचन्द्रचक्रवर्त्तिभट्टाचार्य्येण संस्कृता ।

---

THE

# KASIKA VIVARANA PANJIKA

(THE NYASA)

A COMMENTARY ON VAMANA-JAYADITYA'S KASIKA

BY

JINENDRA BUDDHI.

---

EDITED

**WITH OCCASIONAL NOTES**

BY

SRISH CHANDRA CHAKRAVARTI, B. A.
SENIOR PROFESSOR OF SANSKRIT, RAJSHAHI COLLEGE,
RAJSHAHI, BENGAL.

**Vol. I. Part IV.**

---

PUBLISHED BY THE VARENDRA RESEARCH SOCIETY OF RAJSHAHI.

1916.

अथ

# काशिकाविवरणपञ्जिका।

———:०:———

## तृतीयोऽध्यायः।

### प्रथमः पादः।

१। प्रत्ययः।

प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इति। शास्त्रस्य लाघवार्थम्। यदि सन् प्रत्ययः क्यच्प्रत्ययः क्यङ्प्रत्यय इत्येवमेकैकं संज्ञिनमुपादायानेकेषां भिन्नैर्वाक्यैः प्रत्ययसंज्ञा विधीयेत तदा शास्त्रस्य गौरवं स्यात्। संज्ञिनां बहुत्वात्। नहि तेषां तथाविधं सामान्य मभिन्न मस्ति यदुपादायैकेन वाक्येनानेकेषां संज्ञा विधीयेत यथा वृद्धिर्यस्याचामादिस्तद् वृद्धमिति (१।१।७३)। ननु चेदमस्ति सामान्यं सबिति। एवञ्च सूत्रं करिष्यते सप् प्रत्यय इति। सबिति प्रत्याहारग्रहणं च सनः सकारादारभ्य कपः पकारेण। नैतदस्ति। अन्येऽपि बहवः पकाराः सन्ति। सिब्बहुलं लेटि (३।१।३४)। वदः सुपि क्यप् (३।१।१०६) चेत्येवमादयः। तत्र यदि प्रत्यासत्ति माश्रित्यानन्तरः पकारः प्रत्याहारार्थं गृह्येत तदा सिपः पकारेणैव प्रत्याहारग्रहणं विज्ञायेत। अथ व्याप्ति र्गृह्यते तदा तप्तनप्तनथनाश्चेति (७।१।४५) तनपः पकारेणैव स्यात्। स्यादेतत्। व्याप्ते रेव न्याय आश्रयितव्यः। नच तनपः पकारेण प्रत्याहारग्रहणं भविष्यति। अपि तु कप एव। इच एकाचोऽम्प्रत्ययवच्चेति (६।३।६८) वचनाज् ज्ञापकात्। अन्यथा षष्ठेऽपि प्रत्ययसंज्ञाव्यापारादपार्थकमिदं स्यात्। नैतदस्ति। असति हि प्रयोजने ज्ञापकं भवति। अस्ति ह्यस्य प्रयोजनम्। किं तत्? अम्प्रत्यय-प्रतिबद्धं विशिष्टमेव कार्य्यं यथा स्यात्। प्रत्ययमात्रप्रतिबद्धं मा भूदिति

नियमार्थं मेतत् स्यात् । तत् कुतो वैयर्थ्यम् ? अथापि कथञ्चित् कप: पकारेणैव प्रत्याहारो लभ्येतैवमपि प्रतिपत्तिगौरवं स्यात् । अतो लाघवार्थ-मधिकारेणैवेयं संज्ञा विधातुं युक्तेति मत्वाह प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इति । यद्येवं प्रतियोगं तेनोपस्थातव्यम् । तत्रासावुपस्थितः सन्नादिभिरेव सम्बध्यते न प्रकृत्यादिभिरिति नियमहेतुर्नास्ति । अतः प्रकृत्युपपदोपाधि-विकारागमानामप्येषा संज्ञा स्यात् । तत्र प्रकृतिर्गुप्तिज्किद्भ्यः (३।१।५) सन् । उपपदं स्तम्बकर्णयो रमिजपोः ( ३।२।१३ ) । उपाधिर्हरतेर्दृति-नाथयोः ( ३।२।२५ ) पशौ । यद्यपि पञ्चर्थस्य संज्ञायाः प्रयोजनं नास्ति तथापि तद्वाचिनोऽस्तीति तस्य स्यादेव । विकारो हनस्त ( ३।१।१०८ ) च । आगमस्त्वपुजतुनोः ( ४।३।१३८ ) षुक् । प्रत्ययसंज्ञायाञ्चैषां परत्वमाद्युदात्त-त्वञ्च स्यात् । यद्यपि युगपद् गुपादीनां परस्परापेक्षया सन्नादीनाञ्च परत्वं न सम्भवति तथापि पर्य्यायेण स्यात् । कदाचिद् गुपादयः परे स्युः कदाचिद् सन्नादयः । अन्यतो वा कुतश्चिद् गुपादयः परे भवेयुरित्यत आह प्रकृत्युपपद इत्यादि । एतच्च न्यायप्राप्तमेवोक्तम् । कथम् ? प्रकृत्युप-पदोपाधयस्तावत् परकार्य्यसिद्धये भूतविभक्त्या पञ्चम्यादिकया निर्दिश्यन्त इति तेषां पञ्चम्यादिविभक्त्यन्तं शब्दरूपं संज्ञासंज्ञिसम्बन्धं प्रतिपत्तुमयोग्यम् । तथाहि प्रथमान्तस्य वा सामानाधिकरण्येन संज्ञासंज्ञिसम्बन्धो भवति यत्र बुद्ध्याहितसंज्ञारूपः सोऽयमित्यभेदसम्बन्धमुपगतः संज्ञी संज्ञया सह निर्दिश्यते यथा वृद्धिरादैजिति (१।१।१) । षष्ठ्यन्तस्य वा यत्र संज्ञासंज्ञिनोर्भेदविवक्षायां संज्ञाशब्देन स्वरूपपदात्मकेनोपादीयमानेनोपजनितव्यतिरेकः षष्ठ्या संज्ञी निर्दिश्यते यथा स्वं रूपं ( १।१।६८ ) शब्दस्याशब्दसंज्ञेति । प्रकृत्यादयस्तु परोपकारयोग्यं विभक्तिविशेषमुपादाय वर्त्तन्त इत्यशक्य एषां संज्ञासम्बन्धः कर्त्तुम् । न च संज्ञासंज्ञिसम्बन्धयोग्यविभक्त्यध्याहारे सत्येषां संज्ञा भविष्यतीति युक्तं परिकल्पयितुम् । असति हि वचनस्यावकाशेऽध्याहारो युक्तो न तु सति । अस्ति चावकाशः सन्नादिः । अप्राधान्याच्च प्रकृत्यादीनामयुक्ता संज्ञा । प्रधाने हि कार्य्यसम्प्रत्ययो लोके दृष्टः । यथा बहुषु गच्छत्सु कश्चित् कञ्चित् पृच्छति कोऽयं याति । स आह राजेति । तत्र यः पृच्छति यश्चाचष्टे तयोरुभयोरपि

प्रधाने राजनि सम्प्रत्ययो भवति। तस्मादिहापि प्रधाने सनादौ कार्य्य-सम्प्रत्ययात् तस्यैव संज्ञा भविष्यति। प्राधान्यं पुनस्तस्यापूर्वस्य विधानात्। प्रकृत्यादीनां धात्वादिपाठे निर्ज्ञातस्वरूपाणां सनाद्यर्थोपादानादप्राधान्यम्। तत् कुतस्तेषां संज्ञा? आगमविकारयोर्यद्यपि संज्ञासंज्ञिसम्बन्धयोग्यतया प्रथमया निर्देशो विधेयत्वाच्च प्राधान्यं तथापि न भवति संज्ञा। यस्मात्प्रत्यय इति महती संज्ञा क्रियते। तस्या एतत्प्रयोजनमन्वर्थसंज्ञा यथा स्यात्। प्रतियन्त्यनेनेनार्थानिति प्रत्ययः। नच विकारागमाभ्यां कञ्चनार्थं प्रतियन्ति। यदि तर्ह्यन्वर्थसंज्ञेयमवेः को (५।४।२८) यावादिभ्यः (५।४।२९) कन्नितिप्रवमादीनां प्रत्ययसंज्ञा न प्राप्नोति। अर्थाभावात्। द्विविधो ह्यर्थः। लौकिकः शास्त्रीयश्च। तत्र पूर्वः पदेनैव प्रतीयते। द्वितीयस्त्वन्वयव्यतिरेकाभ्याम्। स च तेषां नास्ति। विना प्रत्ययैः प्रकृतेरेव तदर्थस्य प्रतीतेः। नैष दोषः। यद्यपि तेषामन्वयव्यतिरेकाभ्यामर्थो न समधिगम्यते तथाप्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यस्मादेवाप्तवचनात् समधिगम्यते। तस्मात् तैरपि स्वार्थं प्रतियन्तीति तेऽपि प्रत्यया इत्यलमतिप्रसङ्गेनेति स्थितमेतत् प्रकृत्यादीनां प्रत्ययसंज्ञा न भवतीति। कर्त्तव्यं करणीयमिति। तव्यदादेः प्रत्ययसंज्ञायां यस्मात् प्रत्ययविधिरिति तस्मिन् परतोऽङ्गसंज्ञा भवति। अथ कथं तदनन्तरं सनादिमतिक्रम्य व्यवहित एव तव्यदादि रुदाहृतः? तत्राद्युदात्तादेरपि प्रत्ययसंज्ञाकार्य्यस्य सम्भवात्। सनादौ तु तन्न सम्भवति। धातुस्वरेणैव बाधितत्वात्।

## २। परश्च।

अयमप्यधिकार इति। न केवलं प्रत्यय इत्यपिशब्दार्थः। योगे योग उपतिष्ठत इति। परिभाषाया अधिकारस्य भेदं दर्शयति। परिभाषा ह्येकदेश-स्थैव सर्वत्र शास्त्रे व्याप्रियते नतु प्रतियोग मुपतिष्ठते। परिभाषा वेति। पश्चान्तरं दर्शयति। एकदेशस्थैव सर्वत्र शास्त्रे व्याप्रियत इतेग्ष परिभाषा-धर्मो ह्यत्रौ न दर्शितः। अधिकारधर्मप्रदर्शनद्वारेणावगम्यमानत्वात्। यदि हि प्रतियोगमुपतिष्ठमाना परिभाषा कार्य्यसिद्धौ व्याप्रियेत तदाधिकारपरि-

भाषयोर्भेदो न स्यात्। तथाच तयोरिह भेदेनोपन्यासो निष्फलः स्यात्। लिङ्गवती चेयं परिभाषा। लिङ्गश्चास्याः प्रत्ययसंज्ञैव। धातोर्वेति क्रियावाचिन्याः प्रकृतेरिदमुपलक्षणम्। तेन तिङन्तमपि गृह्यते। तदपि क्रियाप्रधानत्वात् क्रियावाचीति शक्यते व्यपदेष्टुम्। प्रधानेन हि व्यपदेशा भवन्ति यथा राजधानीति। प्रातिपदिकाद्वेति। अक्रियाभिधायिन्याः प्रकृतेरिदमुपलक्षणम्। तेन ङ्याप्पावपि गृह्येते। तैत्तिरीयमिति। प्रोक्तार्थे तित्तिरिवरतन्तु (४।३।१०२) खण्डिकोखाच्छणिति छण्। तदस्मादधीते तद्वेदेत्यण् (४।२।५९)। तस्य प्रोक्ताल्लुगिति (४।२।६४) लुक्। अथ चकारः किमर्थः? यावता नात्र किञ्चित् प्रकृतमस्ति यच्चकारेण समुच्चीयत इत्याह चकारः पुनरित्यादि। अन्यस्य समुच्चेतव्यस्याभावादस्यैव समुच्चयार्थश्चकारो विज्ञायते। तेन बहुलाधिकारेऽपि ये प्रत्यया विधीयन्ते तेष्वप्युणादिषु परत्वं न विकल्प्यते। किमर्थं पुनरिदमुच्यते? परो यथा स्यात् पूर्व्वो मा भूदिति। नैतदस्ति प्रयोजनम्। तथाहि यमिच्छति पूर्वं तमाह विभाषा सुपो बहुच् पुरस्तात् (४।३।६८) त्विति। मध्ये तर्हि मा भूदिति। न। मध्ये यमिच्छति तमाह अव्ययसर्वनाम्नामकच् (४।३।७१) प्राक् टेरिति। य इदानीमतोऽन्यः प्रत्ययः सोऽन्तरेणापि वचनं पर एव भविष्यति। नैतदस्ति। येषामेव हि प्रत्ययानां देशो नियम्यते त एव नियतदेशाः स्युः। य इदानीमतोऽन्योऽनियतदेशः स कदाचित् परे कदाचित् पूर्वे कदाचिन्मध्ये स्यात्। तस्मात् परश्चेति वक्तव्यम्। न वक्तव्यम्। यस्माद् धातोः प्रातिपदिकादिति च दिग्योगलक्षणेयं पञ्चमी। अन्यस्यापादानादेः पञ्चमीनिमित्तस्याभावात्। तस्मादेषैव परदिक्छब्दाध्याहारं करिष्यति। नैतदस्ति। पूर्वदिक्छब्दाध्याहारः स्यात्। तथाच पूर्वेऽपि कदाचित् सन्नादयः स्युः। तस्मादित्युत्तरस्येत्यनया (१।१।६७) परिभाषया तर्हि व्यवस्था भविष्यति। नैतदस्ति। यत्र पञ्चमीनिर्दिष्टात् परस्य षष्ठीनिर्देशस्य कार्य्यं विधीयते सोऽस्य विषयः। न च सन्नादयः षष्ठ्या निर्दिश्यन्ते नापि तेषां सम्बन्धि कार्य्यं विधीयते। तेषामेव भाव्यमानत्वात्। ननु च प्रत्ययसंज्ञाकार्यं विधीयते। नैवम्। कथं पुनरसतां तेषां शक्यं संज्ञाकार्य्यं विधातुम्? किञ्च येषां

प्रत्ययसंज्ञैव न विधीयते कथेष्ठः ( उण्, १।१०३ ) ग्रमेर्ढं ( उण्, १।८८ ) इत्येवमादीनां तत्र का गतिः स्यात् ? न ह्येषां प्रत्ययसंज्ञेष्यते । तथाहि कण्ठः ग्रण्ट इत्यत्र प्रत्ययस्योच्यमानमिकादेशादिकार्यं न भवति । यद्येवं प्रत्ययस्योच्यमानं परत्वमपि न स्यात् । परश्चेत्यधिकारसामर्थ्याद् भविष्यति । असति ह्येतस्मिन् वचने सत्यपि तस्याः परिभाषाया उपस्थाने बहुलाधिकारे विधीयमानत्वादुणादिषु परत्वं विकल्पेत । तस्मात् कर्त्तव्यमेतत् ।

## ३ । आद्युदात्तश्च ।

अनियतस्वरप्रत्ययप्रसङ्ग इत्यादिना सूत्रारम्भस्य प्रयोजनं दर्शयति । अनियतोऽव्यवस्थितः स्वरो यस्य स तथा । स चासौ प्रत्ययश्चेति कर्मधारयः । तस्य प्रसङ्गशब्देन षष्ठीसमासः । अनियतस्वरो यः प्रत्ययस्तस्य प्रसङ्गे सति वचनमिदमादेरुदात्तार्थम् । अनियतस्वरप्रसङ्ग इति क्वचित् पाठः । तत्रा-नियतशब्दस्य स्वरशब्देन विशेषणसमासं कृत्वा प्रसङ्गशब्देन षष्ठीसमासः । अनियतानामुदात्तादीनां स्वराणां प्रसङ्गे सत्यादेरुदात्तार्थं वचनम् । अनेकाच्सु चेत्यादि । अनेकेऽचो येषां तेऽनेकाचः । तेष्वनेकाच्सु प्रत्ययेषु देशस्यानियमे सति वचनमादेरुदात्तार्थम् । आदेरेवोदात्तत्वं यथा स्यात् । मध्येऽन्ते च मा भूदिति । ये ह्येकाचः प्रत्ययास्तत्र देशस्याभावादसत्यप्यादिग्रहणे देशस्या-नियमो न सम्भवति । अतोऽनेकाच्सु चेत्युक्तम् । अनेकाचां ह्यसत्यादिग्रहण आदिमध्यान्तानामनियमेन स्वरः प्रसज्येतेत्यनेकाचः प्रत्ययादेर्यथाद्युदात्तार्थं वचनं नार्थं एतेन । यस्मादादेरनुदात्तादीनां मध्यान्तयोश्चोदात्तस्य प्रसङ्ग एव नास्ति । तथाहि यमनुदात्तमिच्छति करोति तत्र पकारमनुबन्धम् । आह चानुदात्तौ सुप्पिताविति ( ३।१।४ ) । स्वरितमपि यमिच्छति करोति तत्र तकारमनुबन्धम् । आह च तित् (६।१।१८५) स्वरितमिति । एकश्रुतिं यमिच्छति तत्रैकश्रुतिग्रहणं करोति । आह चैकश्रुतिर्दूरात् ( १।२।३३ ) सम्बुद्धाविति । अन्तोदात्तमपि यमिच्छति करोति तत्र चकारमनुबन्धम् । आह च चितोऽन्त उदात्तो ( ६।१।१६३ ) भवतीति । मध्योदात्तमपि

यमिच्छति करोति तत्र रेफमनुबन्धम्। आह चोपोत्तमं (६।१।२१७) रितीति। य इदानीमतोऽन्यः प्रत्ययः सोऽन्तरेणापि वचनमाद्युदात्त एव भविष्यति। नैतदस्ति। येषामेव हि स्वरो नियम्यते त एव नियतस्वराः स्युः। यस्त्वनियतस्वरः प्रत्ययस्तस्यानियमेनैव स्वरः प्रसज्येत। कदाचिदुदात्तः कदाचित् स्वरान्तरम्। उदात्तोऽपि भवन् कदाचिदादौ कदाचिन्मध्ये कदाचिदन्ते स्यात्। तस्मात् कर्त्तव्यमेतत्।

## ४। अनुदात्तौ सुप्पितौ।

पूर्वस्यायमपवाद इति। नाप्राप्ते तस्मिन्नस्यारम्भात्। सुबिति प्रत्याहारस्य ग्रहणम्। न सप्तमीबहुवचनस्य। तस्य पित्त्वादेवानुदात्तस्य सिद्धत्वात्। अतएव हस्तौ सुप इति बहुवचनेन निर्देशः कृतः। प्रत्याहारग्रहणञ्चेदं सुप एव पकारेण। नान्येन। तस्यानन्यार्थत्वात्। पचति पठतीति। अबत्रोदाहरणम्। न तिप्। तस्य तास्यनुदात्तेत्यादिनैव (६।१।१८६) सिद्धत्वात्।

## ५। गुप्तिज्किद्भ्यः सन्।

प्रत्ययसंज्ञा चाधिकृतैवेति। विस्पष्टार्थमेतत्। प्रत्ययशब्दः संज्ञात्वे नाधिक्रियते। आ पञ्चमाध्यायपरिसमाप्तेरित्यतो वचनादेव प्रतिपाद्यस्यावगतत्वात्। ननु च सत्यपि प्रत्ययसंज्ञाया इहोपस्थाने नैव तया सनो भवितव्यम्। यतः प्रत्यय इत्यन्वर्थसंज्ञेयम्। प्रतियन्त्यनेनार्थानिति प्रत्ययः। नच सना कञ्चनार्थं प्रतियन्ति। तस्यानर्थकत्वात्। नहीह सनः कश्चनार्थो निर्दिश्यते। नचानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भविष्यन्तीति स्वार्थ एव सन् भविष्यतीति युक्तं परिकल्पयितुम्। गोपनादेः स्वार्थस्य सन्नन्तादप्रतीतेः। अथानर्थकस्यापि प्रत्ययाधिकारे विधानसामर्थ्यात् संज्ञा भविष्यतीति चेत्? न। एवञ्च ह्ननस्त च (३।१।१०८) त्रपुजतुनोः षुगिति (४।३।१३८) विकारागमयोरपि स्यात्। नैष दोषः। अस्त्येव सनोऽर्थः। कः पुनरसौ? निन्दादिः। यदाह निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यत इति। कुतः पुनरेतदवसितं सनोऽर्था निन्दादय इति? अन्वयव्यतिरेकाभ्याम्। सति हि

सनि जुगुप्सत इत्यादौ तेऽर्थाः प्रतीयन्ते। असति तु सनि सत्स्वपि गुपादिषु गोपयतीत्यादौ ते न प्रतीयन्ते। तस्मादर्थवानेव सन्निति भवत्येव प्रत्ययसंज्ञा। जुगुप्सत इत्यार्द्धधातुकत्वाभावादिण् न भवति। आर्द्धधातुकत्वाभावस्तु सनो धातोरित्यविधानात्। कुहोश्चुरिति (७।४।६२) चुत्वं जकारः। तितिक्षत इति। जकारस्य चोः कुरिति(८।२।३०)कुत्वं गकारः। तस्य खरि चेति(८।४।५५) चर्त्वं ककारः। निन्दाक्षमेत्यादि। कथं पुनर्निन्दादिष्विष्यमाणो लभ्यते। वक्ष्यमाणं वाग्रहणं सर्वस्य शेषो विज्ञायते। सा च व्यवस्थितविभाषा। तेन निन्दादिषु नित्यं सन् भवति। अन्यत्र न भवति। प्रायिकश्चैतद् व्याधिप्रतीकारग्रहणम्। क्वचिदन्यत्रापि दर्शनात्। तथाहि चेत्रियच् परक्षेत्रे चिकित्स्य (५।२ ९२) इति चिकित्स्यशब्दस्यार्थमन्यथा व्याख्यास्यति। अथवा क्षेत्रियाणि च तृणानि शस्यार्थे क्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि। अथवा क्षेत्रियः पारदारिकः। परदाराः परक्षेत्रम्। तत्र चिकित्स्यो निग्रहीतव्य इत्यर्थः। संशयेऽपि दृश्यते विचिकित्सति मे मन इति। यद्यप्यत्रोपसर्गसम्बन्धात् संशयः प्रतीयते तथापि धातोरेव वाच्य इष्यते। उपसर्गस्य तु द्योत्यः। तस्मात् प्रायिकं व्याधिप्रतीकारग्रहणम्। प्रायेण हि लोके व्याधिप्रतीकारे चिकित्सतीति प्रयुज्यते। अन्यत्रेति। गोपनादौ। गोपयतीति हेतुमण्णिच्। तेजयति सङ्केतयतीति। हेतुमण्णिच्। चुरादिणिज् वा। भ्वादौ चुरादौ चानयोः पाठात्। अथ जुगुप्सत इत्यादौ कथमात्मनेपदं सन्नन्ताद्विधीयते? नच गुपादिभ्यः प्राक् सन आत्मनेपदं पश्याम इत्याह गुपादिष्वनुबन्धकरणमित्यादि। आत्मनेपदं यथा स्यादिति। गुपादिष्वनुबन्धोऽनुदात्तार्थः कृतः। तस्मादनुदात्तङित (१।३।१२) इत्यात्मनेपदं भवतीति भावः। ननु च कृतेऽप्यनुबन्धे न भवितव्यमेव तेभ्य आत्मनेपदेन। सना व्यवहितत्वात्। नैतदस्ति। अनुबन्धकरणसामर्थ्याद् भविष्यति। अथवाऽवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति जुगुप्सादय एव समुदाया अनुदात्तेतः। तेनाव्यवधानेनैव तेभ्य आत्मनेपदं भविष्यति। एवं स्थिते यदत्र द्वेष्यमापद्यते तत् पूर्ववत् सन (१।३।६२) इत्यत्रोपन्यस्तमपास्तञ्च। अथ किमर्थं सनोऽकार उपदिश्यते? यावता तस्यार्द्धधातुकेऽतो लोप इति (६।४।४८) लोपेन भवितव्यम्। सार्वधातुके

ऽपि यथा सईकारदेशेन। तत्र सत्यसति वाऽकारोपदेशे नास्ति कश्चिद् विशेष: । नैतदस्ति । इह प्रतीषिषतीति प्रपूर्वादिण: सनि विहिते यद्यकारोपदेशो न स्यादजादेर्द्वितीयस्येति (६।१।२) द्वितीयस्यैकाचो द्विर्वचनं विधीयमानं स इत्यस्य न स्यात् । अनच्कत्वात् सन: । अकारोपदेशे सति स इत्यस्य द्वितीयस्यैकाचो भवति । तदर्थोऽकारोपदेश: ।

## ६ । मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।

मान्बधी अनुदात्तेतौ । शेषौ स्वरितेतौ । इह दीर्घग्रहणादचश्चेति(१।२।२८) परिभाषोपस्थानादचाऽभ्यासो विशिष्यत इत्यजन्तस्याभ्यासस्य दीर्घो विधीयमानो नियतं हलादिशेषमपेक्षते। विना तेनाजन्तत्वाभावात् । तस्मिंस्तु सति न किञ्चित् प्रतीक्षणीयमिति तत् समनन्तरमेव दीर्घेण भवितव्यम् । ततश्चाभ्यासस्यावर्णस्य स्थाने भवन् वधेरित्त्वस्य बाधक: स्यात् । शेषाणान्तु ह्रस्वस्य । ततश्चानिष्टं रूपं स्यादिति यो मन्येत तं प्रत्याह अभ्यासस्येकारस्य दीर्घो भवतीति । कथं पुनरिकारस्य दीर्घो लभ्यते ? यावता विशेषविधि: सामान्यविधेर्बाधको भवति । विशेषविहितश्च दीर्घ: । ततोऽयं सामान्यविहितमित्त्वं बाधित्वाऽकारस्यैव प्राप्नोति । अत एवं मन्यते । दीर्घोऽकित (७।४।८३) इत्यत्र ज्ञापितमेतत् स्यात् । अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्त इत्यकिद्ग्रहणस्यैतत् प्रयोजनम् । इह मा भूद् यंयम्यते रंरम्यत इति । यदि चाभ्यासविकारेष्वपवादैरुत्सर्गा बाध्येरन्नेवं सत्यपवादत्वान्नुकि कृतेऽनजन्तत्वादेव दीर्घो न भविष्यति । किमकित इत्यनेन ? कृतश्चातस्ततो ज्ञापयति नाभ्यासविकारेषु बाध्यबाधकभाव इति । बीभत्सत इति । एकाचो बशो भषिति (८।२।३७) बकारस्य भकार: । धकारस्य खरि चेति (८।४।५५) तकार: । उत्तरसूत्र इत्यादि । अत्र हि सनो विधिमात्रमपेक्ष्यते वावचनेन । तत्त्वनन्तर एव विधि: । तेन त्रयाणामपि योगानां शेषो विज्ञायते । सर्वग्रहणं गुपादिसूत्रस्यापि शेषो विज्ञायत इति ज्ञापनार्थम् । अन्यथा ह्यनन्तरस्यैव सूत्रस्य शेषो विज्ञायेत । मानयतीति हेतुमण्णिच् । चुरादिणिज् वा । चुरादावप्यस्य पाठात् । निशानमिति । पचाद्यच् ।

७। धातोः कर्मणः समानकर्तृकादिच्छायां वा।

कर्तुः क्रियया व्याप्तुमिष्टतमस्य कर्मभाव उपपद्यते। नान्यथेत्यवश्यं या काचित् क्रियाऽपेक्षितव्येति। इह चान्या न श्रूयते। प्रत्ययार्थत्वेन चेच्छा सन्निधापिता। अतः सैवापेक्षितुं युक्ता। प्रत्यासत्तेर्न्यायात्। तस्मात् तयैव व्याप्यमानस्य कर्मभावो विज्ञायत इत्याह इषिकर्मेत्यादि। इषेः कर्मेति षष्ठीसमासः। प्रतियोग्यपेक्षत्वात् समानत्वस्य नियोगतः प्रतियोग्यपेक्षितव्यः। न च सूत्रे प्रतियोगी श्रूयते। तत्र पूर्वोक्तन्यायेनेषेरेव प्रतियोगित्वं विज्ञायत इत्याह इषिणैवेत्यादि। समान एकः कर्त्ता यस्येति बहुव्रीहिः। एककर्तृक इत्यर्थः। ननु च धातोः कर्मत्वं नोपपद्यते। तस्यार्थधर्मत्वात्। धातोश्च शब्दात्मकत्वात्। अथ करोतिं धातुमिच्छतीत्यादौ प्रयोगे धातोरपि कर्मता दृष्टेति चेत्? न ब्रूमः सर्वथा धातोः कर्मत्वं न भवतीति। किं तर्हि? य इह सन्नुत्पत्तिनिमित्तभावेनोपात्तः समानकर्तृकस्तस्य न सम्भवतीति ब्रूमः। यस्मात् समानकर्तृकत्वं साध्यमानस्यार्थस्य भवति। कर्मत्वं तु सिद्धस्वभावस्य। अङ्गीकृत्य च समानकर्तृकत्वं धातोः कर्मत्वे दोष उक्तः। इदानीं तदपि न सम्भवत्येव। तथाहि धातुः शब्दः क्रियायाश्च कर्त्ता भवतिं। न शब्दस्येत्यत आह कर्मत्वमित्यादि। अर्थद्वारकमिति। अर्थो द्वारमुपायो यस्य तदर्थद्वारकमिति। अर्थस्य कर्मत्वात् समानकर्तृकत्वाच्च तद्वचनोऽपि धातुरर्थधर्मेणोपचारात् कर्मसमानकर्तृकश्चोच्यते। यथा इन्द्रश्च (२।४।२) प्राणितूर्य्येत्यत्रार्थस्य प्राण्यङ्गत्वात् तद्वचनोऽपि प्राण्यङ्गमित्युच्यत इति भावः। चिकीर्षतीत्यत्र च करोतेरर्थ इच्छया व्याप्यमानत्वात् समानत्वात् कर्मसमानकर्तृकश्चेषिणा। यस्माद् य एवेषेः कर्त्ता स एव तस्यापि। अतस्तद्वारेण करोतिरपि कर्मसमानकर्तृकश्चेति भावः। ततः सन्। इको झलिति (१।२।९) सनः कित्त्वाद् गुणाभावः। अज्झनगमां (६।४।१६) सनीति दीर्घः। ॠत (७।१।१००) इद्धातोरितीत्त्वम्। रपरत्वम्। हलि चेति (८।२।७७) दीर्घः। इण्कोरि(८।३।५७) त्यनुवर्त्तमान आदेशप्रत्यययोरिति (८।३।५९) षत्वम्। द्विर्वचनम्। अभ्यासकार्य्यम्। धातुग्रहणं किमिति? धातुग्रहणं ह्येवमर्थं क्रियते। गमनमिच्छतीति सुबन्तात् मा

भूदिति । ननु चासत्यपि धातुग्रहणे ततः सन् भवितुं नोत्सहते । सुप आत्मनः (३।१।८) क्यजित्यपवादेन बाधितत्वात् । तस्मात् पारिशेष्याद्विनापि धातुग्रहणेन धातोरेव भविष्यतीत्यभिप्रायेणाह सोपसर्गादुत्पत्तिर्मा भूदिति । यदोपसर्गविशिष्टो धात्वर्थ इषिणा व्याप्यते तदासावुपसर्गविशिष्ट एव कर्मत्व मनुभवतीति तद्द्वारेणासौ सोपसर्ग एव धातुः । कर्मेति सोपसर्गादुत्पत्तिः स्यात् । ततश्च प्राचिकीर्षदित्यत्र द्विर्वचनं क्रियमाणं सन्नन्तस्यैकाचः प्रथमस्य द्विर्वचनं भवतीति सन्यङोरिति (६।१।९) समुदायादेः प्रशब्दस्य स्यात् । लङि च सोपसर्गस्याङ्गसंज्ञायां ततः प्रागडागमः स्यात् । यदि तर्हि सोपसर्गः कर्मधातोरुत्पत्तिर्न स्यात् । तस्याकर्मकत्वात् । नैतदस्ति । समुदायस्य हि कर्मत्वेऽवयवा अपि कर्मत्वमनुभवन्ति । अवयवात्मकत्वात् समुदायस्य । अभ्युपाय एव ह्यवयवकर्म्मता समुदायकर्मतायाः । अन्यथा यदि समुदाये कर्मण्यवयवाः कर्मभावापन्ना न भवेयु स्तदा महान्तं पुत्रमिच्छतीत्यत्र कर्मलक्षणावयवा द्वितीया न स्यात् । गमनेनेच्छतीति । करणत्वप्रदर्शनार्थं ल्युडन्तोपन्यासः । धातोरेव हि सनोऽनुत्पत्तिः प्रत्युदाहरणम् । अस्त्यत्र समानकर्त्तृकत्वम् । तथाहि य एवेषेः कर्त्ता स एव गमनस्य । स ह्यात्मीयेन गमनेन करणभावमापन्नेन किमपि वस्त्विच्छति । कर्मत्वन्तु गमेरर्थद्वारकं नास्तीति न भवत्यतः सन् । देवदत्तस्य भोजनमिच्छतीति । देवदत्तस्येति कर्त्तृकर्मणोः कृतीति (२।३।६५) कर्त्तरि षष्ठी । अत्र हि भोजनस्य देवदत्तः कर्त्ता । इषेस्तु यज्ञदत्त इति समानकर्त्तृकत्वं नास्ति। कर्त्तुं जानातीति । इच्छाग्रहणादिह ज्ञानेऽर्थे सन्न भवति। ननु चेषिकर्मा यो धातु रिषिणैव समान कर्त्तृक स्तत इच्छाया वा सन् भवतीत्युक्तम् । इह च यथेच्छा प्रत्ययार्थो नास्ति तथा धातोरिषिकर्मत्वमपि । इषिणा समानकर्त्तृकत्वञ्च । तदयुक्तं प्रत्युदाह रणम् । अङ्गत्रयवैकल्यात् । नैतदस्ति । सति हीच्छाग्रहणे तद्विशेषणद्वयं प्रत्यासत्तेर्लभ्यते । असति तु तस्मिन् यां काञ्चित् क्रियां प्रति धातोः कर्मत्वं विज्ञायते । प्रतियोगिमात्रापेक्षया च समानकर्त्तृकत्व मिति काक्षायुक्तता ? वावचनाद्वाक्यमपि भवतीत्युत्तरसूत्र इति शेषः । इह तु समानकर्त्तृकेषु तुमुन्नित्यत (३।३।१५८) एव विधानात् कर्त्तुमिच्छतीति वाक्यं भविष्यति ।

नित्यत्वे हि सन स्तस्य वचनस्यानर्थकं स्यात्। अन्यदपि वावचनप्रयोजन मुक्तमेव। तस्यैव समुच्चयार्थोऽपिशब्दः। धातोरिति विधानादित्यादि। आर्ध धातुकं शेष इत्यनेन (३।४।११४) धातोरित्येवं धातुशब्द मुच्चार्य्य विहितस्य प्रत्ययस्यार्धधातुकसंज्ञाविधानात्। इह धातोरित्येव सनो विधान मित्यार्धधातु-कसंज्ञा भवति। न पूर्वत्रेति। गुपादिसूत्रे (३।१।५) मानबधादिसूत्रे (३।१।६) च सन आर्धधातुकसंज्ञा न भवति। नहि तस्य तथा विधानमस्ति। आश-ङ्कायामुपसंख्यानमिति। आशङ्का सम्भावना। सा च प्रयोक्तृधर्मः। नदीकूलं पिपतिषतीत्यचेतनत्वात् कूलस्येच्छा न सम्भवतीति न प्राप्नोति। आशङ्के कूलं पतिष्यतीत्यस्मिन् विषय एवं प्रयोगः। श्वा मुमूर्षतीति। पूर्ववत् किस्व-दीर्घत्वे। उदोष्ठ्यपूर्वस्येत्युत्त्वम् (४।१।१०२)। रपरत्वञ्च। अत्र सत्यपि चेतनत्वे जीवनस्य प्रियत्वाच्छुनो मर्त्तुमिच्छा न सम्भवतीति न प्राप्नोति। एष च प्रयोगोऽ इमाशङ्के मरिष्यति श्वेत्यत्रार्थे वेदितव्यः। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। कर्त्तव्य इत्यध्याहार्य्यम्। प्रतिपादनन्तु धातोरिति योगविभागः कर्त्तव्यः। तेनाशङ्कायामपि सन् भविष्यति। इच्छासनन्तादित्यादि। इच्छायामर्थे यो विहितः सन् तदन्तात् सनः प्रतिषेधो व्याख्येयः। व्याख्यानन्तूत्तरत्र करिष्यामः। स्वार्थे यः सन् तदन्तात् सन्निष्यत एवेतीच्छाविशेषणं कृतम्। जुगुप्सिषत इति। अतो लोप (६।४।४८) इत्यकारलोपः। शैषिकादित्यादि। अश्वपत्यादि-भ्योऽर्थेभ्योऽदूरभव (४।२।७०) इत्येतत्पर्य्यन्तेभ्योऽन्यो योऽर्थः स शेषः। तत्र भवः शैषिकः। अध्यात्मादिभ्यष्ठञ्(४।३।६०,वा)। तस्माच्छैषिकाच्छैषिकः सरूपः प्रत्ययो नेष्टः। शालायाम्भव इति वृद्धाच्छः (४।२।११४) शालीयः। शालीये भव इति पुनश्छो न भवति। विरूपस्तु भवत्येव। अहिच्छत्रे भव आहिच्छत्रः। प्रागदीव्यतोऽण् (४।१।८५)। आहिच्छत्रे भव आहिच्छत्रीयः। अस्मान्वृद्धाच्छो (४।२।११४) भवति। मतुबर्थे भवः प्रत्ययो मतुबर्थीयः। गहादिभ्यश्चेति (४।२।१३८) छः। मतुबर्थोऽस्यास्तीति मतुबर्थिकः प्रत्ययः। अत इनि ठनाविति ठन् (५।२।११५)। मतुबर्थीयात् प्रत्ययान् मतुबर्थिकः सरूपः प्रत्ययो नेष्टः। दण्डोऽस्यास्तीति दण्डिकः। पूर्ववट् ठन्। दण्डिकोऽस्यास्तीति पुनष्ठन् न भवति। विरूपस्तु भवत्येव। दण्डोऽस्यास्तीति दण्डी। दण्डि-

नोऽस्यां शालायां सन्तीति दण्डिमती शाला। इत्यन्तात्मतुब् भवति । सनन्तान्न सनिष्यत इति। सरूप इति सम्बध्यते । तत्र यद्यपि सनो रूपसारूप्यव्यभिचारी नास्ति तथापि विशेषणसामर्थ्यादर्थसारूप्यमाश्रीयते । तेनेच्छासनन्तादिति गम्यते। पूर्वमिच्छासनन्तात् प्रतिषेधो वक्तव्य इत्यभिधानाच्च । यस्तु निन्दादिषु गुपादिभ्यः संस्तत इच्छासन् भवत्येव । तथाचैवं बृत्तावुदाहृतम् । एतत् सर्वं न्यायप्राप्तमेवोदाहृतम् । कथम् ? निष्पन्ना हि प्रकृतिः प्रत्ययविधौ निमित्तं भवति। न च सरूपशैषिकप्रत्ययविधानकाले तथाविधप्रत्ययान्ता निष्पन्ना प्रकृतिरस्ति। नापि सरूपमतुबर्थिकप्रत्ययविधानकाले तथाविधप्रत्ययान्ता निष्पन्ना प्रकृतिः। नापीच्छासनि विधीयमान इच्छासनन्तात् प्रकृतिर्लब्ध-सत्ताकास्ति । इदानीमेव हि तत्र भव (४।३।५३) इत्यादिभिर्लक्षणैः सरूपाणां शैषिकादीनां भाव्यमानत्वात् । तस्मादविद्यमानप्रकृतिकत्वात् ते यथोक्त-प्रकाराया: प्रकृते र्न सम्भवन्तीति ।

## ८। सुप आत्मनः क्यच् ।

आत्मशब्दः परस्य व्यावृत्तिं कुर्वाणो यस्तत्प्रतियोगिनमर्थमाचष्टे स इह परिगृह्यते । नतु योऽन्तर्व्यापारवर्ति पुरुषे भोक्तरि वर्त्तते । स इह गृह्यमाणोऽ-किञ्चित्करः स्यात्। तथाहि तेनेच्छा विशिष्येत सुबन्तं वा । तत्रेच्छा तावदात्मनः । अन्यस्य न सम्भवत्येवेति तद्विशेषणता तस्यायुक्ता । सुबन्त-मप्येषितात्मनेन वा सम्बध्यमानमात्मसम्बद्धमेव भवति। उभयोरपि तयो-रात्मसम्बन्धित्वात् । तस्मात् सुबन्तविशेषणत्वमपि तस्यायुक्तमिति परप्रति-योगिवचन एव गृह्यते। एवं हि परनिवृत्तिः शक्यते कर्त्तुम्। नान्यथा। अत्रापीच्छायाः सन्निधानात् तयैव व्याप्यमानस्य कर्मत्वं विज्ञायत इत्याह इषिकर्मण इति । आत्मग्रहणेन यदीच्छा विशिष्येत तदेहापि स्याद् राज्ञः पुत्रमिच्छतीति । राज्ञोऽपि पुत्र इष्यमाणे सत्यात्मन एवैषितुरिच्छा भवति । तस्मात् सुबन्तमेवात्मग्रहणेन विशेषयितुं युक्तमिति मत्वाह एषितुरात्मसम्बन्धिन इति। आत्मसम्बन्धित्वं तु सुबन्तस्यार्थद्वारकं वेदितव्यम्। अथैषितुरेवैतत् कुतो लभ्यते ? इच्छया सन्निधीयमानयैषितुः सन्निधापितत्वात्। एतदपि

कुतः ? तेन विना तदभावात् । पुत्रीयतीति । क्यचि ( ७।४।३३ ) चेतीत्वम् । सुब्ग्रहणमिह प्रातिपदिकनिवृत्त्यर्थं वा स्याद् धातुनिवृत्त्यर्थं वा ? तत्र प्रातिपदिकनिवृत्त्यर्थं तावन्नोपपद्यते । नहि सुबन्तात् प्रत्ययोत्पत्तौ प्रातिपदिकाद्वा कश्चिद् विशेषोऽस्ति । धातुनिवृत्त्यर्थमपि न युज्यते । ततो विहितस्य सनो बाधकत्वादित्यभिप्रायेणाह सुब्ग्रहणं किमिति ? वाक्यान्मा भूदिति । सुब्ग्रहणप्रयोजनमाह । असति सुब्ग्रहणे वाक्यादपि स्यात् । अत स्तन्निवृत्त्यर्थं कृतं सुब्ग्रहणम् । अथ किमिदानीं न भवितव्यमेव महापुत्रीयतीति ? भवितव्यं यदा समासे कृत एतद् वाक्यं भवति महापुत्र मिच्छतीति । यदा त्वेतद्वाक्यं भवति महान्तं पुत्र मिच्छतीति तदा न भवितव्यम् । पदसमुदायोपलक्षणञ्च वाक्यग्रहणं वेदितव्यम् । तस्मान् महान्तं पुत्रमित्यतः समुदायात् प्राप्तिराशङ्क्यते । नचैतद् वाक्यम् । अपरिसमाप्तार्थत्वात् । किञ्च स्याद् ? यद्यतः स्यात् प्रत्ययार्थे गुणीभूतयोर्महत्पुत्रशब्दयोरसत्येकार्थीभावलक्षणेऽसामर्थ्ये समासो न स्यात् । ततश्चोत्तरपदे विधीयमानमान्महतः (६।३।४६) समानाधिकरणजातीययोरित्यात्त्वं न स्यात् । अथवा प्रत्ययार्थे गुणीभूतस्य पुत्रशब्दस्य पूज्यमानताविशेषणं न स्यादिति सन्महदित्यादिना (२।१।६१) समासो न स्यात् । तदभावादात्त्वमपि न स्यात् । अथ क्रियमाणे सुब्ग्रहणे कस्मादेवात्र न भवति ? सुबन्तं ह्येतत् । नैतत् । प्रत्ययग्रहणपरिभाषया । यतः सुबुत्पन्नः सुब्ग्रहणे सति तदादेरेव ग्रहणं भवति । नचेह वाक्यात् सुबुत्पन्नः । किं तर्हि ? अवयवात् । तेन वाक्यादुत्पत्तिर्न भवति । अवयवात् तर्हि पुत्रशब्दात् कस्मान्न भवति ? अगमकत्वात् । वृत्तिसमानार्थेन हि वाक्येन प्रत्ययान्तेन भवितव्यम् । यश्चेह महान्तं पुत्रमिच्छतीति वाक्येनार्थः प्रतीयते नासौ प्रत्ययान्तेन । तथाहि महान्तं पुत्रीयतीत्युक्ते महान्तं कञ्चित् पुत्रमिवाचरतीत्येषोऽर्थो वाक्यार्थाद् भिन्नजातीय एव गम्यते । राज्ञः पुत्रमिच्छतीति । ननु च सापेक्षत्वादसामर्थ्ये सति न भविष्यति । किमात्मग्रहणेन ? कथमसामर्थ्यम् ? सापेक्षमसमर्थं भवतीति वचनात् । नैतत् । यदा तच्छब्दार्थात् प्रकरणाद्वाऽन्यपेक्षं निर्ज्ञातं भवति तदा प्राप्नोति । इह च प्राप्नोति पापमिच्छति । अव-

मिच्छतीति। अत्र हि तृतीयस्य परपदस्य प्रयोगमन्तरेणापि परस्येति गम्यते। नहि कश्चिदात्मनः पापमिच्छति। ककार इत्यादि। असति ककारेऽस्य ग्रहणं न स्यात्। न क्य इत्यत्र (१।४।१५) ककारानुबन्धवतो ग्रहणात्। चकारस्तदविघातार्थः। असति चकारेऽस्यैव ग्रहणं स्याद् यस्य ककार एवैकोऽनुबन्धः। क्यङ्क्यषोस्तु द्व्यनुबन्धकयो रेकानुबन्धक इति ग्रहणं न स्यात्। चकारे तु सति क्यच्क्यङ्क्यषो द्व्यनुबन्धका भवन्तीति सामान्यग्रहणस्य विघातो न भवति। अन्तोदात्तार्थस्तु चकारो न भवति। धातोरिति (६।१।१६२) तस्य सिद्धत्वात्। वक्तव्य इति व्याख्येय इत्यर्थः। व्याख्यानन्तु वेत्यनुवर्त्तमानस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम्। तेन मान्ताव्ययेभ्यः क्यज् न भवति। छन्दसीत्यादि। छन्दसि परेच्छायामपि क्यज् भवतीत्येतदर्थं रूपं व्याख्येय मित्यर्थः। व्याख्यानं पुनर्यदयं क्यचि कृते ऽश्वाघस्यादितीत्त्वबाधनार्थं (७।४।३७) मघशब्दस्यात्त्वं शास्ति तज् ज्ञापयति च्छन्दसि परेच्छायामपि क्यज् भवति। नहि कश्चिदात्मनोऽघ मिच्छति। अघायव इति। ज्ञापकसूत्रेणात्त्वम्। क्याच्छन्दसीत्युप्रत्ययः (३।२।१७०)। जसि चेति (७।३।१०९) गुणः। अवादेशः।

## ९। काम्यच्च।

ननु च द्वावप्येतौ क्यच्काम्यचौ सुबन्तात् कर्मण आत्मेच्छायां विधीयेते। तदेकयोग एव कथं न कृत इत्याह योगविभाग इत्यादि। सुप आत्मनः क्यच्काम्यचावित्येकयोगे सत्युत्तरत्र द्वयोरप्यनुवृत्तिः स्यात्। ननु च योगविभागेऽप्यानन्तर्य्यात् काम्यच एवानुवृत्तिः स्यात्। न क्यचः। नैष दोषः। चकारोऽत्र क्रियते क्यचोऽनुकर्षणार्थः। तदनुकर्षणस्यैतत् प्रयोजनम्। उत्तरसूत्रेऽनुवृत्तिर्यथा स्यात्। इह प्रयोजनाभावात्। काम्यजपि कस्मान्नानुवर्त्तत इति चेत्? न। योगविभागसामर्थ्यात्। अथ लशक्वतद्धिते (१।३।८) इति ककारस्येत्संज्ञा कस्मान्न भवतीत्याह ककारस्येत्संज्ञेत्यादि। ननु च लोप एव कार्य्यम्। न कार्य्यम्। लोप इह हि वर्णस्य कार्य्यार्थो भवत्युपदेशः। श्रवणार्थो वा। कार्य्यं तावदिह नास्ति। तत्र यदि श्रवणार्थो

न स्यादुपदेशोऽनर्थकः स्यात्। इदं तर्हि कार्य्यम्। अग्निकाम्यतीति गुणप्रतिषेधो यथा स्यात्। नैतत् प्रयोजनम्। सार्वधातुकार्द्धधातुकयो रङ्गस्य गुण उच्यते। धातो र्विहितश्च प्रत्ययः शेष आर्धधातुकसंज्ञो भवति। नचायं धातो र्विधीयते। किं तर्हि ? सुबन्तात्। इदं तर्हि प्रयोजनम्। उपयट्काम्यतीति। वच्यादिना (६।१।१५) संप्रसारणं यथा स्यात्। नैतदपि। यस्मात् तत्र यजादिभिः किद् विशिष्यते। यजादीनां यः किदिति। कश्च यजादीनां कित् ? यो यजादिभ्यो विहितः। नचायं तथा विहितः। अभ्युपगम्यापि प्रयोजनं परीहारान्तरमाह चकारादित्वाद्वेति। एवं मन्यते। क्रियते विन्यास एवम्। द्विचकारो निर्देशः। सुप आत्मनः क्यच्काम्यच्चेति। स इत् संज्ञकश्चकारः ककारस्येत्संज्ञापरित्राणार्थो भविष्यतीति। अथ द्वितीय श्चकारः किमर्थः ? यावता धातोरित्येवमन्तोदात्तत्वं (६।१।१६२) सिद्धम्। इह पुत्रकाम्यिष्यतीति सतिशिष्टस्वरमपि बाधित्वा चित्करणसामर्थ्यात् काम्यच एव स्वरो यथा स्यात्। उपयट्काम्यतीति। विजुपे च्छन्दसीति (३।२।७३) विच्। उपयजमिच्छतीति काम्यच्। व्रश्चादिना (८।२।३६) षत्वम्। तस्य जश्त्वं डकारः। तस्यापि वावसान (८।४।५६) इति चर्त्वं टकारः। (A)

## १०। उपमानादाचारे।

क्यजनुवर्त्तते। न काम्यजिति। अत्र च कारणं पूर्वमुक्तम्। आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैवोपमानस्य कर्मता। पूर्ववत् प्रत्यासत्तेः। अधिकरणाच्चेत्यादि। अधिकरणादाचारे क्यज् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु पूर्व्ववच्चकारकरणमनुवर्त्त्य तस्यानुक्तसमुच्चयार्थत्व माश्रित्य कर्त्तव्यम्।

## ११। कर्त्तुः क्यङ् सलोपश्च।

सलोपसन्नियोगेन चायं क्यङ् विधीयते। तेन यत्रैव सलोपस्तत्रैव स्यात् पयायत इत्यादौ। इह तु न स्यात् काकः श्येनायत इत्यादौ। एकं

(A) इदन्तु चिन्त्यम् अनवसानत्वात् पक्षे डकारश्रवणप्रसङ्गाच्च। खरि चेति चर् (८।४।५५)त्वेनात्र टकार इत्यन्ये।

श्चेदं वाक्यम् । चकारश्च समुच्चये । तेनैतदुक्तं भवति क्यङ्सलोपौ भवत इति । तथाच युगपदनयो र्विधानात् सलोपाभावे क्यङा न भवितव्यम् । युगपद् विधाने हि नान्यतराभावे कार्य्यमुपयुज्यते यथा ध्वाघ्वोरिच्चेत्यत (१।२।१७) आह अन्वाचयशिष्ट इत्यादि । एतदनेन हि । नायं समुच्चये चकारः । किं तर्हि ? अन्वाचये । तत्र द्वे वाक्ये भवतः । कर्त्तुः क्यङ् भवति सर्वत्र । यत्र त्वस्ति सकारस्तत्र तस्यापि लोपः । तत्राद्येन वाक्येन सलोपमनपेक्ष्य प्राधान्येन विधीयमानः क्यङ् सलोपाभावेऽपि प्रवर्त्तते । श्येनायत इति । अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः । सलोपविधावपि वाग्रहणं सम्बध्यत इति । अन्यथा पयस्यत इति न सिध्येत् । सा च व्यवस्थितविभाषेति । अन्यथौजसोऽप्सरसोरपि विभाषा सलोपः स्यात् । ओजसोप्सरसोर्नित्यं पयसस्तु विभाषयेति यदुक्तं सा च व्यवस्थितविभाषा भवतीति । तदनेन विस्पष्टी-करोति । अथ हंसायते सारसायत इत्यत्र सलोपः कस्मान्न भवतीत्याह सलोपविधौ चेत्यादि । यदि सलोपविधावपि कर्त्तुरित्येषा पञ्चमी स्यात् तदाऽलोऽन्त्यस्ये(१।१।५२)त्यस्यानुपस्थानाद् यत्रतत्रस्थस्य सलोपो भवन्निहापि स्यात् । न च सलोपविधौ कर्त्तुरित्येषा पञ्चमी । किं तर्हि ? षष्ठी । यस्मादर्थाद् विभक्तिविपरिणामो भवतीति स्थानषष्ठी सम्पद्यते । स्थान-षष्ठ्या चालोऽन्त्यस्येत्युपस्थाने(१।१।५२)ऽन्त्यस्यैव लोपेन भवितव्यम् । तेन हंसायत इत्यादौ न भवति लोपः । आचार इत्यादि । क्यङ् विषयोपलक्षणार्थम् । तेन क्यङपवादः क्विब् विधीयते । अत्र चावगल्भादीनामनुदात्तमकारमनुबन्ध-मासज्य निर्देशादवगल्भत इत्यात्मनेपदं भवति । किमर्थं पुनरवगल्भा-दिभ्यो विकल्पेन क्विब् विधीयते ? यावतावगल्भ आधृष्टे क्लीब मदे हुङृ होङ्-गतावित्यात्मनेपदिनः । तद्वैतेभ्यो यदा लकारस्तदावगल्भत इत्यादि भवि-ष्यति । यदा तु क्वतमुत्पाद्याच प्रातिपदिकानि कृत्वा क्यङुत्पाद्यते तदा-वगल्भायत इति भविष्यति । इदं प्रयोजनं विकल्पेन क्विब्विधानस्य । अवगल्भाञ्चक्र इति । कास्प्रत्ययादामन्त्र (३।१।३५) इत्याम् यथा स्यात् । अन्यथा ह्यप्रत्ययान्तात् प्रत्ययान्ताद्धातोरामुच्यमानो न स्यात् । सर्वप्रातिपदिकेभ्य इति । तैरप्यवगल्भाद्यनुकर्षणं कर्त्तव्यम् । अनुबन्धासञ्जनार्थम् । इह

चाचारे क्विब् वेत्यपेक्ष्यते । तेन सर्वप्रातिपदिकेभ्य आचार एव क्विब् भवतीति वाक्यं निष्पद्यते । अथ किमर्थं ककारपकारौ क्विपोऽनुबन्धावासज्येते ? यावता ककारस्य गुणप्रतिषेधः प्रयोजनम् । नचेह गुणप्राप्तिरस्ति । क्विपो धातोरित्यविधानात् सार्वधातुकत्वाभावात् । सार्वधातुकार्द्धधातुकयोर्हि गुण उच्यते । पकारस्य चानुदात्तत्वं प्रयोजनम् तच्च क्विपो न सम्भवति । अनच्कत्वात् । सर्वलोपित्वाच्च वेरपृक्तस्येति (६।१।६७) । तर्हि द्वावेतौ सामान्यग्रहणाविघातार्थौ । न । अन्यतरेणैव सामान्यग्रहणाविघातस्य सिद्धत्वात् । अन्यथा विज्विटोरपि तदर्थोऽनुबन्धः कर्त्तव्यः स्यादिति चिन्त्यमेतत् ।

## १२ । भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।

भुवीति । भवनं भूः । सम्पदादित्वाद् भावे क्विप् । इह हल्ग्रहणेन यथासम्भवं भृशादयो विशिष्यन्ते । विशेषणेन च तदन्तविधिर्भवतीत्याह हलन्तानाञ्चेत्यादि । इहापि पूर्ववदन्वाचयशिष्टो हलो लोपः । तेन तदभावेऽपि क्यङ् भवत्येव । हलो लोपविधौ भृशादिभ्य इति स्थानषष्ठी सम्पद्यते । अर्थाद् विभक्तिविपरिणामात् । तत्रालोऽन्त्यस्येति ( १।१।५२ ) नियमे सति भृशायत इत्यादावहलन्त्यस्य हलो लोपो न भवति । ननु च भृशादीनां बहुत्वात् तत्सम्बन्धेनाच्विभ्य इति बहुवचनेन भवितव्यम् ? तत्कथमच्वेरितेयक वचनेन निर्देश इत्याह अच्वेरित्यादि । भृशादच्वेः शीघ्रादच्वेरिति प्रत्येकमभिसम्बध्यते । तस्मादेकवचनं न्याय्यम् । किमर्थं पुनरित्यादि । अच्वेरित्यधिकृत्य प्रश्नः । कस्मान्न कर्त्तव्यमित्याह यावतेत्यादि । अभूततद्भाव इत्यादिना भवतिप्रयोगे च्विर्विधीयते । तत्र तेनैवोक्तार्थत्वाच्व्यन्तेभ्यः क्यङ् न भविष्यति । उक्तार्थानामप्रयोग इति कृत्वा । ननु चानुप्रयोगं बाधित्वा क्यङेव स्यात् । नैतदस्ति । अनवकाशा हि विधयो बाधका भवन्ति । सावकाशश्च क्यङ् । क्व ? अच्व्यन्ता ये भृशादयस्तत्र । अच्व्यन्ताच् च्वेर्विकल्पेन विधानात् । तत्राच्वेरित्यनुवर्त्तमाने च्व्यन्तेषूभयप्रसङ्गे परत्वादनुप्रयोगेणैव भवितव्यम् । अतएवाह तत्सदृशेत्यादि । नञिवयुक्तमन्यसदृशाधिकरणे (प,७५) । तथाह्यर्थ इति च्व्यन्तसदृशा भृशादयः कथं नाम प्रतीयेरन्नित्येव

मर्थोऽच्वेरिति प्रतिषेधः । तस्मादृव्यं च्व्यन्तस्याभूततद्भावविषयत्वात् । अर्थकृत-मेवाश्रीयते । न शब्दादिकृतमित्याह अभूततद्भावविषयेभ्य इत्यादि । इह भृशादिषु कैश्चिन्मनस्प्रभृतयः सोपसर्गाः पठ्यन्ते । तेभ्यः सोपसर्गेभ्य एव प्रत्ययः स्यात् । ततश्चोदमनायतेति सोपसर्गस्याङ्गसंज्ञात्वादुपसर्गात् प्रागडा-गमः स्यात् । सुमनाय्य गत इत्यत्र सोपसर्गस्य क्त्वान्तेऽनुप्रवेशात् तद्व्यतिरिक्त उपसर्गो नास्तीति समासो न स्यात् । ततश्च ल्यम् न स्यात् । नैतदस्ति । यथैव हि प्रकर्त्तुमैच्छदिति सोपसर्गस्यापि कर्मत्वे धातुग्रहणेनोपसर्गान्निष्कृष्य धातुमात्रात् प्रत्ययो भवति तथेहापि भविष्यति । ननु तत्र धातुग्रहण मस्तीति चेत् ? इहापि सुब्ग्रहण मनुवर्त्तत इति हेतुः । सुमनस इत्यादीनि सुबन्तसमुदायानि । तेन सुबन्तसमुदायात् क्यङ् । लङ् कस्मान्न भवति ? उच्यते । लङ्विधावपि धातुग्रहण मनुवर्त्तते । अथ लोप इत्यनुवर्त्तमाने पुनर्लोपग्रहणं किमर्थम् ? सकारनिवृत्त्यर्थम् । पूर्वकं हि लोपग्रहणं सकारेण सम्बद्धम् । अत स्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । ततश्च तस्यानन्तस्यापि लोपः प्रसज्येत । इतरथा हि तदनुवृत्ति रपार्थिका स्यात् ।

## १३ । लोहितादिडाज्भ्यः क्यष् ।

लोहितायत इति । वा क्यष (१।३।९०) इत्यात्मनेपदम् । पटपटायत इति । पटच्छब्दादव्यक्तानुकरणादिति ( ५।४।५७ ) डाच् । डाचि बहुलं द्वे इति ( ८।१।१२, वा ) द्विर्वचनं डाचः प्रागेव भवति । डाचीत्यस्य हि विषयसप्तमीत्वात् । डाचि कृते टिलोपः । द्विर्वचने योऽच्छब्द स्तद-वयवस्य तकारस्य नित्यमाम्रेडिते डाचीति ( ६।१।१०० ) पररूपम् पकारः । लोहितडाज्भ्यः क्यष्वचन मित्यादि । लोहितादिसूत्रेण यदेतत् क्यषो विधानं तल् लोहिताड् डाजन्तेभ्यश्चेत्यर्थः । ननु चान्यान्यपि नीलादिशब्दरूपाणि लोहितादिषु पठ्यन्ते । अतस्तेभ्योपि क्यषा भवितव्य-मित्याह भृशादिष्वित्यादि । लोहितशब्दादितराणि यानि तानि भृशादिषु द्रष्टव्यानि । यस्त्विह तेषां पाठः स प्रमादतः । अर्वाक्कालभावित्वादनार्षं

इत्यभिप्रायः । यदि तर्हि भृशादिष्वितराणि पठ्यन्त एवमादिशब्दस्यानर्थक्यम् । नहि किञ्चिदस्ति यत् तेनोपादीयेत । अत आह यानीत्यादि । यानि प्रमादाल्लोहितादिषु पठ्यन्ते तेषां भृशादिषु पाठो वेदितव्यः । नत्वपरिपठितानां वर्मादीनाम् । अतस्तेषामादिग्रहणेन ग्रहणे सति क्यषेव भवति वर्मायत इति । नलोपः प्रातिपदिकान्तस्येति (८।२।७) नलोपः । अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः । निद्रादयोऽत्रशब्दाः पठ्यन्ते । ते यद्यपि धर्ममात्रवचनास्तथापि क्यष्प्रवृत्तिविषये तद्वति द्रव्ये वर्त्तन्ते । शब्दशक्तिस्वाभाव्यात् । निद्रायत इति । अनिद्रावान् निद्रावान् भवतीत्यर्थः । कथं पुनरपरिपठितानां लोहितादित्वं भवतीत्याह आकृतिगणश्चायमिति । कथमेतज्ज्ञायत इत्याह तथाचेत्यादि । क्येति सामान्यग्रहणार्थमित्याह नःक्ये (१।४।१५) इति । तत्रैतत् स्यात् । परिपठितानां मध्ये यो नकारान्तस्तस्य पदसंज्ञार्थः ककारोऽनुबध्यत इत्याह नहीत्यादि । कथं पुनः क्यषा योगे डाज् भवति ? यावता कृभ्वस्तियोग इत्यनुवृत्तेः करोत्यादियोगे डाज् विधीयते । न क्यषा इत्याह कृभ्वस्तिभिरित्यादि । यदेतद् डाजन्तेभ्यः क्यषो विधानमेतदेव ज्ञापयति यथा कृभ्वस्तिभिर्योगे डाज् भवति तथा क्यषापीति । अन्यथा डाज्ग्रहण मनर्थकं यदि क्यषा योगे डाज् न स्यात् । ननु च यदा भवतियोगे डाज् भवति तदा तदन्तात् क्यष् भविष्यति । तत्कुत आनर्थक्यम् ? नैतत् । नहीदानीं क्यष् भवितु मर्हति । भुवो भवतिनैवोक्तार्थत्वात् । अच्वेरित्यनुवृत्तेरभूततद्भावे विज्ञायत इति । नञिवयुक्तन्यायेनेति भावः । यथैव हि पूर्वसूत्रे ऽच्वेरिति प्रतिषेधादमुना न्यायेनाभूततद्भावविषये क्यङ् विधीयते तथेहापि क्यषिति ।

## १४ । कष्टाय क्रमणे ।

क्यङनुवर्त्तते । न क्यषिति । क्यङ एव स्वरितत्वात् । चतुर्थीसमर्थादिति कष्टायेति निर्देशादेव चतुर्थी समर्थविभक्तिर्लभ्यते । अतस्तत्समर्थात् प्रत्ययो विज्ञायते । क्रमणशब्दोऽयमस्ति पादविहरणे । अस्ति चानार्जवे । तत्र क्रमण इत्यविशेषाभिधाने पादविहरणे प्रत्ययो मा विज्ञायीति विशेषण-

मुपात्तम् । जिह्मं पापमनार्जवमित्यनर्थान्तरम् । ततोऽनार्जव इत्यनेन क्रमेण विशेषिते सत्यनार्जवलक्षणं यत् क्रमणं तत्रैव प्रत्ययो विज्ञायते। न क्रमणमात्रे। एतच्च धातोः कर्मण इत्यादेः ( ३।१।७ ) सूत्राद्वाग्रहणस्यानुवर्त्तमानस्य व्यवस्थितविभाषात्वाल्लभ्यते । कष्टाय क्रमण इति तादर्थ्ये चतुर्थी । कष्टायत इति । कष्टाय क्रमणमनार्जवं करोतीत्यर्थः । अत्यल्पमिदमुच्यत इति । सर्वलक्ष्यासंग्रहात् । कथन्तर्हि वक्तव्यमित्याह सत्रकक्षेत्यादि । अस्मिन् न्यासान्तरे यद्यपि समर्थविभक्तिनिर्देशो नास्ति तथापि सुबधिकारात् तत्समर्थयोग्या विभक्तिरध्याहर्त्तव्या । सत्रं चिकीर्षतीति सत्रायते पापं कर्त्तुमिच्छतीत्यर्थः । अजः कष्टं क्रामतीति । क्रमिरत्र पादविहरणे । कष्टमिति कर्मपदमेतत् । कष्टं देशं गहनं क्रामतीत्यर्थः । अथवा कष्टमिति क्रियाविशेषणमेतत् । अजः कष्टं यथा भवति तथा सञ्चरतीत्यर्थः । क्रियाविशेषणपक्षेऽपि कष्टमिति द्वितीयान्तमेतत् । प्रतिपादितं हि करणे च स्तोकाल्पेत्यादौ ( २।३।३३ ) सूत्रे क्रियाविशेषणानां कर्मतेति । तेनात्र सूत्रे प्रत्युदाहरणे द्वितीयान्तस्य कष्टशब्दस्य निर्देशः । मूलोदाहरणेष्वपि द्वितीया समर्थविभक्तिरध्याहर्त्तव्येति विज्ञायते ।

## १५ । कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः ।

कर्मण इति पञ्चमी । रोमन्थतपोभ्यां पञ्चम्यन्ताभ्यां सामानाधिकरण्यात् । सत्यपि ताभ्यां सामानाधिकरण्ये द्विवचनं न भवति । प्रत्येकं वाक्यपरिसमाप्तेः । वर्त्तिचरोरिति । वर्त्तनं वर्त्तिः । ण्यन्तात् स्त्रियां क्तिन् । ननु च क्तिना न भवितव्यम् । ण्यासश्रन्थो युजिति (३।३।१०७) युचा बाधितत्वात् । अस्मादेव निपातनात् क्तिन् भविष्यतीत्यदोषः । चरणं चरिति सम्पदादित्वात् क्विप् । हनुचलन इत्यादि । अभ्यवहृतस्य यत् पुनरुद्गीर्य्य चर्वणं तद् हनुचलनम् । अत्रार्थे रोमन्थशब्दात् क्यङ् भवतीत्येतदर्थरूपं व्याख्येयम् । व्याख्यानन्तु वाग्रहणमनुवर्त्त्य तद्व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम् । वाग्रहणं त्ववश्यमनुवर्त्तयितव्यम् । रोमन्थं वर्त्तयतीति वाक्यं यथा स्यात् । कीटो रोमन्थं वर्त्तयतीति । उद्गीर्णं वहि-

गिरस्तमवगीर्णं वा दृष्टान्तेन निर्गतं रोमन्थाख्यं द्रव्यं वर्त्तयति। गुटिकां करोतीत्यर्थः। तेनात्र हनुचलनं न विद्यते। मूलोदाहरणे तु विद्यत एव। तथाहि रोमन्थायत इति। अभ्यवहृतं पुनराकृष्य चर्वयतीत्यर्थः। तच्चर्वणं हनुचलनात्मकमेव। अन्ये तु हनुचलने प्रत्ययमन्यथा प्रतिपादयन्ति। अस्ति चायं रोमन्थशब्दः क्रियापदार्थको यो रोमन्थशब्दात् प्रातिपदिकाद्धात्वर्थ इत्यादिना णिचमुत्पाद्य घञन्तो व्युत्पाद्यते। स ह्यभ्यवहृतस्य द्रव्यस्य पुनराकृष्य यच्चर्वणं तत्र वर्त्तते। अस्ति च द्रव्यवचनोऽयं य उद्गीर्णमवगीर्णं वा रोमन्थक्रियाविशिष्टं द्रव्यमाह। तत्र यः क्रियावचनस्तस्येदं ग्रहणम्। यतो द्रव्येऽप्ययं वर्त्तमानः क्रियाद्वारेणैव वर्त्तते। अतो द्रव्ये गौणः क्रियायां मुख्यः। गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्ययः (प, १६)। तेन क्रियावचनादेव भवति। न द्रव्यवचनादिति। तपसः परस्मैपदञ्चेति। वक्तव्यमित्यपेक्षते। ङित्त्वादात्मनेपदे प्राप्ते परस्मैपदं वक्तव्यं व्याख्येयम्। व्याख्यानन्त्वनुदात्तङित इति (१।३।१२) सूत्रे नपुंसकमनपुंसकेनेत्यादेः (१।२।६९) सूत्रात् मण्डूकप्लुतिन्यायेनानुवर्त्तमानस्यान्यतरस्यांग्रहणस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम्। तेन तपसः क्यङन्तादात्मनेपदं न भवति। तदभावाच्छेषात् कर्त्तरि परस्मैपदमिति (१।३।७८) परस्मैपदमेव भवति।

## १६। वाष्पोष्मभ्यामुद्वमने।

फेनाच्चेति (B) वक्तव्यमिति। फेनशब्दादुद्वमनेऽर्थे वर्त्तमानात् क्यङ् भवतीत्येतदर्थरूपं व्याख्येयम्। व्याख्यानन्तु भृशादिभ्य इत्यतः (३।१।१२) सूत्राच्चकारमनुक्तसमुच्चयार्थमनुवर्त्त्य कर्त्तव्यम्।

## १७। शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे।

करणशब्देनात्र क्रियोच्यते। न साधकतमम्। यस्मात् कर्मण (३।१।१५) इत्यधिकाराच्छब्दादिभ्यः कर्मभ्य एव प्रत्ययेन भवितव्यम्। तत्र यदि साधकतमे प्रत्ययः स्यात् प्रकृतिप्रत्ययावसम्बद्धौ स्याताम्। क्रियापेक्षत्वाच्च कर्मत्वस्य

(B) फेनशब्दे नकारो दन्त्यः। फेनमोनाविति दन्त्ये निर्देशात्। समुद्र इव काफेनाक्रान्त इति न्यास।

क्रियाया अभावे कर्मत्वं न स्यात् । तस्मात् क्रियावचन एव करणशब्दं निश्चित्याह करणे करोत्यर्थ इति । सुदिनेत्यादि । सुदिनादिभ्यः कर्मभ्यः करणे करोत्यर्थे क्यङ्प्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयम् । व्याख्यानन्त्विहापि तमेवानुक्तसमुच्चयार्थं चकारमनुवर्त्त्य कर्त्तव्यम् । अत एवानुक्तसमुच्चयार्थाच्चकारादटादीनामपि ग्रहणम् । तेनाटायत इत्याद्यपि सिद्धं भवति । अटाद्दैत्यादि । अटादीनां ग्रहणमुपादानमित्यर्थः । अयञ्च तत्करोतीति णिचि प्राप्त आरम्भः । सोऽपीष्यते । शब्दयति । वैरयतीति । तस्मादेतदर्थापि चकारानुवृत्ति र्वेदितव्या ।

## १८ । सुखादिभ्यः कर्त्तृवेदनायाम् ।

वेदनायामर्थेऽनुभव इति । प्रत्यक्षेण वस्तुन उपलब्धिरनुभवः । ननु च वेदनाशब्द उपलब्धिमात्रवचनो लोके दृष्टः तत्कथमेष विशेषो लभ्यते ? यथा लभ्यते तथोत्तरसूत्रे प्रतिपादयिष्यामः । कर्त्ता कारकम् । कारकञ्च क्रियापेक्षं क्रियाया एव भवति । वेदना चेह क्रिया श्रूयते । नान्या । तस्मात् तस्या एव कर्त्ता विज्ञायते । तस्याश्च यो वेदयिता स एव विज्ञायते । तस्मादविशेषाभिधानेऽपि वेदयितरि कर्त्तरि वर्त्तमानः कर्त्तृशब्दो गृह्यत इति । वेदयितुश्चेत् कर्त्तुरित्यादि । एतेन कर्त्तृग्रहणेन सुखादयो विशिष्यन्ते । नतु वेदनेति दर्शयति । यदि कर्त्तृग्रहणेन वेदना विशिष्येत कर्त्तुः सम्बन्धिनी चेद्वेदना भवतीति तदेहापि स्याद् देवदत्तस्य सुखं वेदयति प्रसाधक इति । प्रसाधकस्यापि सम्बन्धिनी वेदना भवत्येव । तथाहि सोऽपि तस्याः कर्त्ता । यथैव हि प्रसाध्यः सुखं वेदयते तथा प्रसाधकोऽपि । एतावांस्तु विशेषः । एकः प्रत्यक्षेण वेदयते । अपरश्चानुमानेन । सर्वथा हि तदकर्त्तृकत्वे वेदयत इत्येतन्न स्यात् । न ह्यकर्त्ता वेदयत इत्युच्यते । तस्मात् सुखादीनामेव कर्त्तृग्रहणं विशेषणं युक्तमिति भावः । ननु च सुखादिविशेषणत्वेऽपि स एव दोषः । यस्मात् प्रसाधकस्यापि जन्यजनकभावलक्षणेन सम्बन्धेन सुखादयः सम्बन्धिनो भवन्ति । नैतत् । सर्वत्रैव हि कर्त्तृसम्बन्धिनः सुखादयः । क्रियते चेदं कर्त्तृग्रहणम् । अतः कर्त्तृग्रहणसामर्थ्याद् विशिष्टो यः कर्त्ता सुखादीना-

भाश्रयः समवायिकारणं स एव गृह्यते। तेनाश्रयाश्रयिभावेन सम्बन्धेन कर्तृसम्बन्धिभ्यः सुखादिभ्यः प्रत्ययो विज्ञायते। न च प्रसाधकः सुखादीनां समवायिकारणम्। किं तर्हि ? निमित्तकारणम्। सुखादिसमवायिकारणस्य कर्तुर्ये सुखादय आश्रयाश्रयिभावेन सम्बन्धिन स्ते प्रत्यक्षेणोपलभ्यन्ते। तेन तदुपलब्धिरनुभवस्वभावा भवतीति युक्तमुक्तं वेदनायामर्थेऽनुभव इति। यदि तर्हि कर्तृग्रहणेन सुखादयो विशिष्यन्ते न वेदना ततश्च कर्तृवेदनायामिति षष्ठीसमासो न प्राप्नोति। असामर्थ्यात्। सौत्रत्वान् निर्देशस्य सत्यप्यसामर्थ्ये समासो भविष्यतीत्यदोषः। अथवा ऽसमास एव। षष्ठ्यास्तु अवणम्। सुपां सुलुगिति (७।१।३९) लुप्तत्वात्।

## १९। नमोवरिवश्चित्रङः क्यच्।

करणविशेषे पूजादाविति। आदिशब्देन परिचर्य्याश्चर्य्ययोर्ग्रहणम्। नमस इत्यादिनाऽनन्तरस्योक्तार्थस्य विषयविभागं दर्शयति। एष चार्थो यद्यपि करण इति करणसामान्यमनुवर्त्तते तथाप्यभिधानशक्तिस्वाभाव्याल्लभ्यते विनापि वचनेन यथा पचादीनां विक्लेदादिषु वृत्तिर्बहुव्रीहेश्च मत्वर्थे। नमस्यति देवानिति। ननु च नमस्यतिशब्दे नमःशब्दोऽस्ति। अतस्तद्योगे नमः स्वस्तीत्यादिना (२।३।१६) चतुर्थ्या भवितव्यम्। नैतदस्ति। अर्थवद्ग्रहणेनानर्थकस्ये (प,१५) त्यर्थवतो नमःशब्दस्य तत्र ग्रहणात्। इह च तस्यानर्थकत्वात्। सत्यपि चार्थवत्त्वे प्रत्ययार्थे गुणीभूतस्य पदान्तरेण सम्बन्धस्य कर्त्तुमशक्यत्वात्। अथवोपपदविभक्तेः कारकविभक्तिर्बलीयसीति (प,१०३) द्वितीयैव भवति। उपपद सम्बन्धनिरपेक्षत्वात् कारकविभक्तेर्बलीयस्त्वम्। उपपदविभक्तेस्तु पदान्तरसापेक्षत्वाद्दुर्बलत्वम्। नमस्यतीति। नमस्कारं करोतीत्यर्थः। वरिवस्यतीति। परिचरतीत्यर्थः। चित्रीयत इति। विस्मापयत इत्यर्थः।

## २०। पुच्छभाण्डचीवराण्णिङ्।

पुच्छादित्यादि। उदसन मूर्ध्वक्षेपणम्। पर्य्यसनं परितः क्षेपणम्। यदोदसने प्रत्ययस्तदा तस्य द्योतनार्थ उच्छब्दः प्रयुज्यत उत्पुच्छयत इति। यदा पर्य्यसने प्रत्ययस्तदा परिशब्दः परिपुच्छयत इति। णाविष्ठवत्

कार्य्यम् प्रातिपदिकस्ये (६।४।१५५,वा) तीष्ठवद्भावात् टिलोपः। समाचयनं राशीकरणम्। अर्जनमलब्धस्य लाभः। परिधानमाच्छादनम्।

## २१। मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्।

प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे (ग् १८६) त्यनेन मुण्डादिभ्यः सिद्धो णिच्। अयञ्च तस्यैव प्रपञ्चः। यद्यपि तस्य तत्करोतीत्यादिः प्रपञ्च उक्त स्तथापीह मन्दबुद्धीनामनुग्रहाय पुनरुच्यते। तन्निवृत्तौ वेति। भोजननिवृत्तौ। पयो व्रतयतीति। पयो भुङ्क्त इत्यर्थः। वृषलान्नं व्रतयतीति। वृषलान्नं न भुङ्क्त इत्यर्थः। हलिं गृह्णाति हलयति कलिं गृह्णाति कलयतीति। ननु चेह हलकलशब्दयोः सूत्र उपादानम्। तत् किं हलिकलिशब्दाभ्यां वाक्यं क्रियत इति यो देशयेत् तं प्रत्याह हलिकल्यो रित्यादि। एतेनैतद्दर्शयति। सूत्रेऽपि हलिकल्योरेव ग्रहणम्। तयोस्त्वत्वनिपातनं कृतम्। सन्वल्लघुनी-त्यादिना (७।४।९३) सन्वद्भावो मा भूदिति। अतो युक्तं हलिकल्यो र्ग्रहणम्। तथाहि नात्र णिज् दुर्लभः। गणसूत्रेणैव सिद्धत्वात्। केवलं प्रपञ्चार्थमिदमुच्यते। सच प्रपञ्चो हलिकल्यो रपि ग्रहण उपपद्यत एव। अयन्तु विशेषः। अकारा-न्तयोर्ग्रहणे सतीकारान्ताभ्यामपि गणसूत्रेणैव णिच् प्राप्नोति। तत्र कृते सतीष्ठ-वद्भावेन टिलोपः प्राप्नोति। अचो ञ्णितीति (७।२।११६) वृद्धिश्च। उभयो रपि तयो रनित्यत्वम्। तथाहि टिलोपस्य सत्यपि कृताकृतप्रसङ्गित्वे शब्दान्तर-प्राप्तयाऽनित्यत्वम्। तथाहि कृतायां वृद्धावैकारस्य प्राप्नोति। अकृतायान्त्वि-कारस्य। वृद्धे तु टिलोपे सत्यप्राप्तयाऽनित्यत्वम्। अप्राप्ति स्त्वनजन्तत्वात्। उभयो रनित्ययोः परत्वाद्वृद्धिः। तस्यां कृतायां टिलोपः। तत्राप्यग्लोप्यङ्गं न भवति। तथाच सति सन्वल्लघुनीति (७।४।९३) सन्वद्भावेऽभ्यासस्येत्त्वे दीर्घो-लघोरिति (७।४।९४) दीर्घत्वे चाचीकलदजीहलदित्यनिष्टं रूपं प्रसज्येत। हलिकलिशब्दयो स्तु कृतात्त्वयोर्ग्रहणे सति यद्यपि परत्वाद् वृद्धिर्भवति तथापि सत्यामपि तस्यामणेव लुप्यत इत्यग्लोप्यङ्गं भवति। ततश्च सन्वद्भावाभावादच-कलदजहलदितीष्टं रूपं सिध्यति। तत्र ययोर्ग्रहणे सतीष्टं सिध्यति तयो रेव ग्रहणं। नतु ययोर्ग्रहणेऽनिष्टं प्राप्नोति। नह्यनिष्टार्था शास्त्रे प्रवृत्तिर्युक्ता।

## २२। धातोरेकाचो हलादेः क्रियासमभिहारे यङ्।

एकाजिति। बहुव्रीहिरयं न तत्पुरुषः। हलादेरिति विशेषणात्। क्रियासमभिहारे वर्त्तत इति। एतेन क्रियासमभिहारस्य प्रकृतिविशेषणत्वं दर्शयति। तस्माद् यङ्प्रत्ययो भवतीति। कथं ? अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति तत्रैव क्रियासमभिहारे। विप्रकीर्णानामिकत्र राशीकरणं समुदायभावापत्तिर्मुख्यः समभिहारः। स च क्रियाणामुत्पन्नापवर्गिणीनां सहानवस्थानादेकेन च धातुनाऽनेकस्याः क्रियाया युगपदनभिधानान्न सम्भवतीति गौणं समभिहारं दर्शयितु माह पौनःपुन्य मित्यादि। उभयमपि ह्येतत् समभिहारसादृश्यादुपचारेण समभिहारे व्यपदेशमासादयति। यथा द्रव्याणां समाहृतानां द्रव्यान्तरैरव्यपेतानां समाहारो भवति तथा क्रियाणामपि क्रियान्तरैरव्यपेतानामेतदुभयं भवतीति सादृश्यम्। क्रिया च द्विप्रकारा। प्रधाना ऽप्रधाना च। तत्र प्रधानक्रिया विक्लेदनादिः। गुणक्रिया चाधिश्रयणादिः। तत्र यः फलान्तं पाकमवसाय्य क्रियान्तरमनारभ्य पुनः पाकमेवारभते स प्रधानक्रियां समभिहरति। तासां पौनःपुन्यं समभिहारः। यस्त्वधिश्रयणादीरेव क्रियाः क्रियान्तरैरव्यपेताः साकल्येन करोति स गुणक्रियाः समभिहरति। तासां भृशार्थता समभिहारः। फलातिरेको वा भृशार्थता। तथाहि यो ज्वलनफलमवाप्य ज्वलति दीप्यते वा स जाज्वल्यते देदीप्यत इति चोच्यते। पापच्यत इति। सन्यङोरिति (६।१।९) द्विर्वचनम्। दीर्घोऽकित इति (७।४।८३) दीर्घः। अत्र क्रियासमभिहारे द्वे भवत इति (८।१।१२, वा) द्वित्वं न भवति। क्रियासमभिहारे विधीयमानस्य यङः स्वयमेव तदभिव्यक्तौ सामर्थ्यात्। यस्तु क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोरिति (३।४।२) लोड् वक्ष्यते स क्रियासमभिहारव्यक्तौ स्वयमशक्त इत्यपेक्षते द्विर्वचनम्। न ह्यसौ क्रियासमभिहारे विधीयते। किं तर्हि ? कर्मादिषु। लः कर्मणि च भावे चाकर्मकेभ्य इति (३।४।६९) वचनात्। तेन तस्य प्रयोगे द्विर्वचनं भवत्येव। लुनीहि लुनीहीत्येवायं लुनाति। देदीप्यत इति। गुणो यङ्लुकोरिति (७।४।८२) गुणः। भृशं प्राटतीति। असति धातुग्रहण एकाज् यः शब्दो हलादिः क्रियासमभिहारे वर्त्तते

तस्माद् यङ्प्रत्ययो भवतीत्येष सूत्रार्थः स्यात् । ततश्च प्रपूर्वादटतेर्यङ् प्रसज्येत । प्रपूर्वस्याटतेर्यः समुदायस्तस्य यथोक्तविशेषणविशिष्टत्वात् । धातुग्रहणे सत्येष प्रसङ्गो न भवति । न ह्ययं धातुः । किं तर्हि ? धातूपसर्गसमुदायः । जागर्त्तीति । अदादित्वाच्छपो लुक् । अथ क्रियाग्रहणं किमर्थम् ? न समभिहार इत्येवोच्येत । नैवम् । साधनसमभिहारेऽपि स्यात् । नैतदस्ति । प्रकृतिविशेषणं ह्येतत् । न च प्रकृतेः साधनसमभिहारे वृत्तिः सम्भवति । अपिच करण इति वर्त्तते । तेन समभिहारो विशेषयिष्यते । करणसम्बन्धी चेत् समभिहारः । तत् कुतः साधनसमभिहारे प्रसङ्गः ? इदं तर्हि प्रयोजनम् । क्रियामात्रसमभिहारे यथा स्यात् । अन्यथा प्रधाने कार्य्यसंप्रत्ययात् प्रधानक्रियासमभिहार एव स्यात् । न गुणक्रियासमभिहारे । सूचीत्यादि । सूच पैशुन्ये । सूत्र अवमोचने । मूत्र प्रस्रवणे । अट गतौ । ऋट गतौ । अश भोजने । ऊर्णुञ् आच्छादने । आसां प्रकृतीनां यङ्विधौ ग्रहणं कर्त्तव्यम् । तच्च पूर्वस्यैव चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यते । किमर्थं पुनरासां प्रकृतीनां ग्रहणमित्याह अनेकाजहलाद्यर्थमिति । अनेकाज् अहलादिरर्थः प्रयोजनं यस्य तत् तथोक्तम् । सूच्यादीनां तिसृणां चुरादिणिजन्तानामनेकाजर्थं ग्रहणम् । ऊर्णोते स्त्वनेकाजर्थमहलाद्यर्थञ्च । शेषाणान्तु अहलाद्यर्थमेव । सोसूच्यत इति । णेरनिटीति (६।४।५१) णिलोपः । पूर्ववदभ्यासस्य गुणः । अटाट्यत इति । अजादेर्द्वितीयस्येति (६।१।२) ट्यशब्दस्य द्विर्वचनम् । हलादिः शेषः । दीर्घश्च । अरार्य्यत इति । यङि चेति (७।४।३०) गुणः । द्वितीयस्यैकाचो र्य्यशब्दस्य द्विर्वचनम् । न न्द्राः संयोगादय (६।१।३) इति तु नास्ति । यकारपरस्य रेफस्य प्रतिषेध इति वचनात् । अशाश्यत इति । द्वितीयस्यैकाचः श्य इत्यस्य द्विर्वचनम् । प्रोर्णुनूयत इति । अत्रापि नुशब्दस्य द्विर्वचनम् । रेफस्तु न द्विरुच्यते । तथैव प्रतिषेधात् । भृशं रोचते भृशं शोभत इति । अत्र नेष्यत इति । तदर्थं वेत्यनुवृत्तस्य व्यवस्थितविभाषात्वं व्याख्येयम् ।

## २३ । नित्यं कौटिल्ये गतौ ।

धातोरित्येव । गताविति प्रकृतिविशेषणमेतत् । गतौ वर्त्तमानाद्धातो-

रित्यर्थः । अमुमेवार्थं पर्य्यायान्तरेणाचष्टे गतिवचनाद्धातोरिति । चंक्रम्यते दंद्रम्यत इति । क्रमु पादविक्षेपे । द्रम हम्म मीमृ गतौ । नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुगागमः । योऽल्पीयस्यध्वनि गतागतानि करोति स कुटिलां गतिं सम्पादयं श्चंक्रम्यते दंद्रम्यत इति चोच्यते । अथ नित्यग्रहणं किमर्थम् ? यावताऽनभिधानादेवात्र वाक्यं न भविष्यति ? नहि चङ्क्रम्यत इति वृत्तेरर्थं कुटिलं क्रामतीति वाक्यं शक्नोति गमयितुम् । तथाहि कुटिलं क्रामतीति वाक्यात् संशयो भवति किं गतिकौटिल्यमुत मनःकौटिल्यमिति । चंक्रम्यत इति वृत्तौ त्वसंशयं गतिकौटिल्यमेव गम्यत इत्याह नित्यग्रहणमित्यादि । गतिकौटिल्यं विषयः । तत्र यङो नियमोऽर्थः प्रयोजनं यस्य तत् तथोक्तम् । गतिवचनादित्यादिना नियमस्य प्रयोजनं दर्शयति । न त्वित्यादिना तद्व्यवच्छेद्यम् । नित्यं सर्वकालं गतिवचनात् कौटिल्य एव भवति । नतु कदाचित् क्रियासमभिहारे । तेन भृशं क्रामतीति क्रियासमभिहारे पूर्वेण प्राप्तो यङ् न भवति ।

## २४ । लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ।

लुप्लृ छेदने । षद्लृ विशरणगत्यवसादनेषु । अभ्र वभ्र चर गत्यर्थाः । जप जल्प व्यक्तायां वाचि । जभ जृभी गात्रविनामे । दह भस्मीकरणे । दन्श दंशने । गृ निगरणे । धात्वर्थगर्हायामित्यनेन भावगर्हायामित्यस्यार्थमाह । गर्हितं लुम्पतीति । गर्हितमिति क्रियाविशेषणमेतत् । तेन भावगर्हात्र गम्यते । गर्हितत्वं छेदनस्य निरर्थकत्वात् । दोषदुष्टत्वाच्च । एवमुत्तरत्रापि गर्हितत्वं वेदितव्यम् । चञ्चूर्य्यत इति । चरफलोश्चेति (७।४।८७) नुक् । उतपरस्यात (७।४।८८) इत्युत्त्वम् । हलि चेति (८।२।७७) दीर्घः । जञ्जप्यत इति । जपजभेत्यादिना (७।४।८६) नुक् । दंशेरनुनासिकलोपं कृत्वा निर्देशो ज्ञापयति यङ्लुक्यप्यनुनासिकलोपो भवतीति । दंदशीति । निजेगिल्यत इति । ऋत (७।१।१००) इद्धातोरितीत्त्वम् । रपरत्वम् । द्विर्वचनम् । गिर्य्यौ शब्दस्य रेफयकारयोस्तु हलादिशेषेण निवृत्तिः । पूर्ववद् गुणः । ग्रो यङीति (८।२।२०) लत्वम् । साधु जपतीति । नात्र धात्वर्थस्य गर्हा । किं तर्हि ? प्रशंसा ।

मन्त्रं जपति वृषल इति । अत्र साधनस्य वृषलस्य गर्हा गम्यते । वृषलस्य शूद्रस्य वैदिकमन्त्रजाप्यं प्रत्यनधिकारात् । (C)

## २५ । सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्म्मवर्ण-चूर्णचुरादिभ्यो णिच् ।

चुरादिभ्योऽन्येषामिह ग्रहणं प्रपञ्चार्थम् । प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति सिद्धत्वात् । अर्थवेदेत्यादि । वक्तव्यशब्दस्य व्याखेय मित्यर्थः । व्याख्यानन्तु प्रातिपदिकाद्धात्वर्थे बहुलमिति कार्य्यान्तरविधानार्थाद् बहुल ग्रहणादेषां णिच्सन्नियोगेनापुग् भवतीति । सत्यशब्दस्य तु सत्याप इत्यत एव निपातनादापुग् भवतीति वेदितव्यम् । विपाशयतीति । पाशं विमोचयतीत्यर्थः । निरूपयतीति । रूपं पश्यतीत्यर्थः । अभिषेणयतीति । उपसर्गादित्यादिना (८.३।६५) षत्वम् । त्वचयतीति । ननु च त्वच्शब्दो हलन्तः । तस्माण्णिचि णाविष्ठवदितीष्ठवद्भावाट्टिलोपे प्राप्ते तत्र प्रकृत्यैकाजिति (६।४ १६३) प्रकृतिवद्भावे कृतेऽत (७.२।११६) उपधाया इति वृद्धिः प्राप्नोति । तत् कथं त्वचयतीति हि भवितव्यमित्याह अकारान्तोऽयं त्वचशब्द इति । शब्दान्तरमेवेदमकारान्तं त्वच्शब्दसमानार्थम् । अतएव त्वच इत्यकारान्तस्य सूत्रे निर्देशः । तस्याकारस्य लोपे कृते स्थानिवद्भावाद्वृद्धिर्न भवति । चुरादिभ्यः स्वार्थ इति । स्तेयादौ । ननु च नेह सूत्र आख्यानादयोऽर्था उपात्ताः । तत् कथं ते लभ्यन्ते ? अलब्धाश्च कथं निर्दिश्यन्त इत्याह स्वाभाविकत्वादित्यादि । शब्दानामर्थाभिधानं स्वाभाविकम् । नतु वाचनिकम् । तस्याशक्यत्वादिति प्रागेवोक्तम् । तस्मात् स्वभावत एव यो यस्यार्थस्याभिधायकः स सूत्रानुपात्तोऽप्यर्थो युक्त एव निर्देष्टुम् । यथायथमिति । यो यस्यात्मीय इत्यर्थः ।

## २६ । हेतुमति च ।

फलसाधनयोग्यः पदार्थो लोके हेतुरित्युच्यत इति । तस्य यदीह ग्रहणं

(C) अत्र तन्त्रप्रदीपे रचितः—'अत्र जाप्यशब्दो बहुलवचनात् सिध्यति । पोरदुपधादिति (३।१।९८) यत्प्रत्ययः सम्भवति । यद्यपि जपो नास्ति । व्यधजपोरनुपसर्गे (३।३।६१) इत्यपो धञपवादत्वात् । तेन शूद्रस्य जापं प्रत्यनधिकारादिति पाठोऽपि न सुकर इति । जपं प्रतीति क्वचित् पाठान्तरमिति'। केचिज् जप्यं प्रतीति च पठन्ति ।

स्यादिहापि णिच् स्यादध्ययनेन वसतीति। तस्मात् परिभाषिकस्य हेतोर्ग्रहण-मिति दर्शयितुमाह हेतुः स्वतन्त्रस्य प्रयोजक इति। स पुनर्यस्य तत्प्रयोजको हेतुश्चेति ( १।४।५५ ) हेतुसंज्ञा विहिता। कुतः पुनरेतदवगम्यते हेतुमद्-ग्रहणात्। पूर्वसूत्रे चुरादिग्रहणाच्च। इह हि करण इति वर्त्तते। धात्व-धिकाराच्च धातोः करणे क्रियायां णिच्प्रत्ययेन भवितव्यम्। यदि च लौकिकस्य हेतोर्ग्रहणं स्याद् हेतुमतीति करणविशेषणं न कुर्यात्। व्यावर्त्त्या भावात्। सर्वैव हि क्रिया हेतुमतीति। पूर्वसूत्रे च चुरादिग्रहणं न कुर्यात्। चुरादयोऽपि धातव एव। तदर्थश्च क्रियालक्षण एव। सत्यापपाशरूपवीणा-तूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णेभ्यश्च णिजित्येकयोगं कुर्यात्। एवं हि चकाराद्धातोः प्रकृतत्वात् करणे प्रत्ययो भविष्यतीति विज्ञास्यते। सोऽय-मेकयोगेनैव सिद्धे यत् पृथग्योगमारभते पूर्वसूत्रे च चुरादिग्रहणं करोति ततोऽवसीयते पारिभाषिकस्य हेतोर्ग्रहणमिति। तदीय इति। तत्सम्बन्धी क्रियात्मको व्यापारः। कः पुनरसावित्यत आह प्रेषणेत्यादि। भृत्यादेर्निकृष्टस्य क्वचिदर्थे नियोजनमादेशः प्रेषणम्। गुर्वादेराराध्यस्य सत्कारपूर्वव्यापारण-मध्येषणम्। आदिशब्देन तत्समर्थाचरणस्य। एतत् प्रेषणादिकं लक्षणं स्वभावो यस्य स तथोक्तः। ननु च चत्वारोऽत्र हेतुमन्तः सम्भवन्ति। प्रयोज्यः प्रयोज्यव्यापारोऽधिश्रयणादिः सर्वसाधनसाध्यश्च प्रधानक्रिया विक्लेदादिः प्रयो-जकव्यापारश्च प्रेषणाध्येषणादिः। चतुर्णामपि ह्येषां हेतुना सह सम्बन्धो-ऽस्ति। तत्र प्रथमस्य तदधिष्ठितस्य प्रवर्त्तनात् तदभिप्रायसम्पादनाच्च। द्वितीयस्य सम्बन्धाय हेतोः प्रवृत्तेः। तृतीयस्य तत्प्रवर्त्तितेन प्रयोज्येनाधि-श्रयणादिक्रियां कुर्वाणेन साधनात्। चतुर्थस्य तु तन्निर्वर्त्तितत्वात् तत्र च समवायात्। तत्र करण इत्यधिकारादयुक्तं प्रयोज्यस्य ग्रहणम्। इतरेषामेव ग्रहणं क्रियात्मकत्वात् सर्वेषां न्याय्यम्। तत् कस्मात् प्रयोजकव्यापार एव गृह्यते ? सत्यपि सर्वेषां क्रियात्मकत्वे तदग्रहणस्यैव न्याय्यत्वात्। तथाहि हेतुरिति कारकविशेषस्यैषा संज्ञा। कारकञ्च क्रियानिमित्तम्। तच्च तस्य निमित्तं भवति यद् यस्मिन् सत्येव भवति। असति तु तस्मिन् न भवत्येव। न च प्रयोज्यव्यापारः प्रयोजके सत्येव भवति। विनापि तेनार्थित्वादेव

प्रयोज्यस्याधिश्रयणादिव्यापारस्य सम्भवात् । सत्यपि च तस्मिन् प्रयुक्तस्यापि स्वार्थमपश्यतः प्रयोज्यस्याप्रवृत्तेः । तस्मात् प्रयोज्यस्य व्यापारं प्रति प्रयोजकस्य कारकत्वाभावाद्धेतुत्वं नास्तीति न स हेतुमान् । एतेन विक्लेदनादिरपि प्रधानक्रियाविशेषो हेतुमान्न भवतीति वेदितव्यम् । भवतु नाम तौ प्रति कथञ्चित् तस्य हेतुत्वम् । तथापि न तयोर्हेतुमत्त्वं युक्तम् । यस्माद्

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः ॥ १ ॥

इति वचनाद् (५।२।९४, वा) भूमादिविशिष्टस्यार्थस्य सत्तायां मतुबादयः प्रत्यया विधीयन्ते । इह च नित्ययोगादन्ये भूमादयोऽर्था न सम्भवन्ति । अप्रतीतेः । नहि यथा गोमानित्यत्र बहुत्वं प्रतीयते यथा च ककुदावर्त्तीत्यत्र च निन्दा यथा च रूपवानित्यत्र प्रशंसा यथा चोदरिणी कन्येत्यत्रातिशय स्तथा हेतुमतीत्यत्र । संसर्गोऽपीह न सम्भाव्यते । संसर्गो हि संयोगः । स च द्रव्ययोरेव परस्परं सम्भवति । यथा दण्डीत्यत्र दण्डपुरुषयोः । न च व्यापारो द्रव्यम् । अतो नास्ति केनचित् संसर्गः । तस्मान्नित्ययोगे एवायं मत्वर्थीयो यथा क्षीरिणो वृक्षा इति । न च प्रयोज्यव्यापारस्याधिश्रयणादेर्विक्लेदादेश्च हेतुना नित्ययोगोऽस्ति । उपरतेऽपि तस्मिन् प्रयोक्तरि तयोः सम्भवात् । सत्यपि तस्मिन् विरोधिसन्निधानादसम्भवाच्च । न चान्यतरासन्निधाने सम्बन्धो युज्यते । तस्य द्विष्ठत्वादिति । न तौ हेतुमन्तौ । प्रेषणादेस्तु प्रयोजको भवति निमित्तम् । तेन विना तदसम्भवात् । सति च तस्मिं स्तत् सम्भवात् । अतस्तं प्रति कारकत्वं तस्योपपद्यते । तेन तस्य हेतुसंज्ञा । नित्ययोगेऽपि मतुपो निमित्तमस्त्येव । उत्पत्तेः प्रभृत्या विनाशात् । प्रेषणादेर्व्यापारस्य हेतौ समवायात् । तस्मात् स एव हेतुमानिति तस्यैव ग्रहणं न्याय्यम् । तस्मिन्नभिधेय इति । प्रत्ययेन वाच्ये । एतेन प्रत्ययार्थविशेषणं हेतुमद्ग्रहणं न प्रकृत्यर्थविशेषणमिति दर्शयति । तेन प्रकृत्यर्थविशेषणपक्षे ये दोषा स्ते तत्पक्षानङ्गीकारेणैव निरस्ताः । येऽपि प्रत्ययार्थविशेषणपक्षे दोषाः सम्भाव्यन्ते ते भाष्य एवोद्भाविताः परिहृताश्च । इह त्वतिग्रन्थविस्तरभयान्न लिखिताः । अथेह कथं णिज् भवति ? भिक्षा वासयति । कारी-

षोऽग्निरध्यापयतीति ? कथञ्च न स्यात् ? अचेतनत्वात्। चेतनावतो ह्येतद् भवति प्रेषणमध्येषणं वा। नैष दोषः। उक्तं ह्येतत्। आदिग्रहणेन तत्समर्थाचरणस्य ग्रहणमिति। तच्छब्देन यत्र वसनादौ प्रयोज्यो नियुज्यते तत्सम्बध्यते तत्र वासादौ। ये समर्था योग्या अनुकूलास्तृप्तिविशेषादयस्तेषामाचरणं सम्पादनं तत्समर्थाचरणम्। तदपि प्रयोजकव्यापार एव। भिक्षा हि प्रचुरतरव्यञ्जनवत्यो लभ्यमाना रसमानुकूलं तृप्तिविशेषमुपजनयन्त्येव। कारीषोऽग्निरपि निर्वातप्रदेशेषु सुप्रज्वलितोऽध्ययनविरोधिनं शीतादिकृतमुपद्रवमुपशमयन्नध्ययनानुकूलं सामर्थ्यमादधाति। अतस्तयोरपि युक्तं प्रयोजकत्वम्। तत्करोतीत्यादि। तदिति कर्मपदम्। एतत् करोतीत्यर्थनिर्देशः। तदिति कर्मणः प्रातिपदिकात् करोतीत्यस्मिन्नर्थे णिच उपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। किमर्थमित्याह सूत्रयतीत्याद्यर्थमिति। तत्रेदं प्रतिपादनम्। चुरादौ प्रातिपदिकाद्धात्वर्थे इत्यस्य तत्करोतीत्ययं प्रपञ्चः पठ्यते। तेन सूत्रादिभ्यः प्रातिपदिकेभ्यः कर्मभ्यः करोत्यर्थे णिज् भवतीति। आख्यानात् कृत इत्यादिकं वाक्यमाख्यानात् कृदन्तादित्यादिना व्याचष्टे। आख्यायत इत्याख्यानम्। यत् किञ्चिदाख्यायते तत् सर्वं राजागमनादिकमपीहाख्यानमभिप्रेतम्। नतु संज्ञाभूतमेव कंसवधादिकम्। तस्य यो वाचकः शब्दः सोऽप्यभिधाने ऽभिधेयोपचारादाख्यानमित्युच्यते। कृदिति प्रत्ययग्रहणम्। प्रत्ययग्रहणे च तदन्तविधिर्भवतीत्याह कृदन्तादित्यादि। वक्तव्य इति। व्याख्येय इत्यर्थः। तदिति कर्मपदमेतत्। आचष्ट इति प्रत्ययार्थः। कृल्लुगिति। येन कृता तदन्तमाख्यानमुच्यते तस्य लुग् भवतीत्यनेन वक्ष्यमाणेन सम्बन्धः। प्रकृतिप्रत्यापत्तिरिति। यासौ प्रकृतिः प्रत्ययमुत्पादितवती साऽविकृतार्थेनैव रूपेणावतिष्ठत इत्यर्थः। प्रकृतिवच्च कारकमिति। चकारो भिन्नक्रमः कारकस्यानन्तरं द्रष्टव्यः। कार्य्यशब्दश्चात्राध्याहार्य्यः। तेनायमर्थो भवति। कृतो या प्रकृति र्हन्त्यादि स्तस्या यथा कार्य्यमडागमादि तथा ण्यन्ताया अपि भवतीति। किञ्च कारकञ्च प्रकृतिवद्भवतीति। कृतः प्रकृतेर्यादृशं कारकमभूण्ण्यन्ताया अपि प्रकृतेस्तादृशमेव भवतीति। तत्रेदं व्याख्यानम्। चुरादौ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति पठ्यते। तत्

करोतीत्यादिकश्च तस्यैव प्रपञ्चः । बहुलं तत्राधिकविधानार्थमिति सर्वमेतद् यथोक्तं भविष्यतीति । एवमुत्तरत्रापि व्याख्यानं कर्त्तव्यम् । किमर्थं पुनः कार्य्यशब्दमध्याहृत्य कार्य्यातिदेशो वर्ण्यते । आख्यानावयवभूतायाः प्रकृतेरड़ागमादिकार्य्यं यथा स्यात् । अन्यथा हि यदि प्रकृतिवच्च कारकं भवतीति कारकातिदेश एव क्रियेत तदा कृद्ग्रहणेन गतिकारकपूर्वस्यापि (प, २९) ग्रहणमिति कंसवधादिभ्यो णिचि कृते ऽङ्गसंज्ञा नामधातुत्वञ्च तेषामेव स्यात् । ततश्चाड्द्विर्वचने तेषामेव स्याताम् । किञ्च धातोः स्वरूपग्रहणे तत्प्रत्यये तत् कार्य्यं विज्ञायेत । कंसवधशब्दाच्च णिचि विहिते तत्वकुत्वेन स्याताम् । ततश्च कंसमघातयद् राजान मजीगमदित्यादि न सिध्येत् । कार्य्यातिदेशे यद्यपि समुदायेभ्यः कंसवधादिभ्यो णिज् विहित स्तथापि कृतो या प्रकृति र्हन्यादि स्तस्याः केवलाया अकृदन्ताया यथा ऽड़ागमादिकार्य्यं भवति तथा कृदन्ताया अपि णिचि विहिते भवतीति न भवत्येष दोषः । तस्मात् कार्य्यमतिदिश्यते । कंसं घातयतीति । हन्तेर्भावे हनश्च (३।३।७६) वधइत्यप्प्रत्ययः । तत् सन्नियोगेन वधादेशः । हननं वधः । कंसस्य वध इति षष्ठीसमासः । कंसवधशब्दाण्णिच् । अपो लुक् । प्रकृतेः प्रत्यापत्तिः । वधादेशपरित्यागेन हन्तेः स्वरूपेणावस्थानम् । अत उपधाया (७।२।११६) इति वृद्धिः । हो हन्तेर्ञ्णिन्नेष्विति (७।३।५४) हकारस्य घकारः । हनस्तोऽचिण्णलोरिति(७।३।३२)तत्वम् । कारकञ्च कंसवध इत्यस्याः प्रकृतेर्यादृशमासीत् तादृशमेव भवति। कर्म च कारकं कंस आसीत् । तथाच कृद्योगलक्षणायाः कर्मषष्ठ्याः कंसवध इति समासः । स कंस आख्यानक्रियायामप्यतिदेशात् कर्मैव भवति । असत्यतिदेश आख्यानक्रियायाः कंसवधशब्द स्तदर्थो वा कर्म्म स्यात् । तयोरेव तथा व्याप्यमानत्वात् । कंसस्त्वाख्यानक्रियायामुज्झितव्यापार एवेति कर्मभावं न प्रतिपद्येत । तस्मात् कारकातिदेशः । वलिं बन्धयतीति । बन्धनं बन्धः । भावे घञ् । शेषं समासादिकं पूर्ववद् यथायोगम् । राजानमागमयतीति । आगतिरागमनम् । भावे ल्युट् । राज्ञ आगमनमिति कर्त्तरि कृद्योगलक्षणायाः षष्ठ्याः समासः । शेषं कुक्त्वगादिकं यथायोगं पूर्ववत् । अथ राजानमिति कथं द्वितीया ? यावता राजागमनमित्यस्याः कृदन्तायाः प्रकृते

राजा कर्त्तासीत्। तत्र प्रकृतिवच्च कारकमित्यतिदेशाण्णिचि विहिते कर्तृत्वेनैव भवितव्यम्। ततश्च ल्युटो लुकि कृते प्रत्ययलक्षणेन कर्तृकर्मणोः कृतीति (२।३।६५) षष्ठ्यैव भवितव्यम्। अथ न लोकाव्ययेति (२।३ ६९)षष्ठीनिषेधः ? एवं तर्हि तृतीया प्राप्नोति। नैष दोषः। गतिबुद्धीत्यादिना (१।४।५२) गमेर्गत्यर्थत्वाद्राज्ञोऽत्र कर्मसंज्ञा। तेन द्वितीयैव न्याय्या। अन्ये त्वस्यैव चोद्यस्य परिहारार्थं कारकातिदेशमन्यथा वर्णयन्ति। नैवं विज्ञायते प्रकृतेरिव प्रकृतिवत् प्रकृतेर्यत् कार्य्यमिष्टं तत् णिजन्तस्यैव भवतीति। नह्यत्र तत्र तस्येवेति (५।१।११६) वतिः। किं तर्हि ? तेन तुल्यमित्यादिना (५।१।११५)। तस्मादेवं विज्ञायते प्रकृत्या तुल्यं वर्त्तत इति प्रकृतिवदिति। प्रकृतिशब्देनेह णिचो या प्रकृतिः कंसवध इत्यादिः सा विवक्षिता। तस्याश्चाख्यानक्रियया व्याप्यमानत्वात् कर्मत्वम्। अतः प्रकृतिवच्च कारकं भवतीत्यस्यायमर्थः। यथा णिचप्रकृतेराख्यानभूतायाः कर्मत्वं तथा कारकस्यापीति। तेन कर्त्तुः कर्मत्वं सिद्धं भवति। यद्येवं पुष्ययोगं जानाति पुष्येण योजयतीत्यत्रापि कर्मत्वं पुष्यस्य स्यात्। नैतदस्ति। यतः प्रकृतिवच्च कारकं भवतीत्युच्यते। न च पुष्यस्य कारकत्वं भवति। सहयोगे तृतीयाविधानात्। पुष्येण सह चन्द्रमसो यो योगस्तं जानाति पुष्येण योजयतीति। आङ्लोपश्चेत्यादि। मर्य्यादावाची य आङ् तस्य लोपो वक्तव्यः। चकारात् पूर्वोक्तञ्च णिजादिकार्य्यम्। कालात्यन्तसंयोग इति। कृत्स्नस्य कालस्य व्याप्तिः कालात्यन्तसंयोगः। तस्मिन् गम्यमाने। आरात्रिविवास (D) माचष्ट इति। विवसनं विवासः। भावे घञ्। रात्रेर्विवास इति षष्ठीसमासः। पश्चादाङ्-मर्य्यादाभिविध्यो (२।१।१३) रित्यव्ययीभावसमासः। रात्रिशब्दश्चेह रात्रिसहचरितासु क्रियासु वर्त्तते। वसिरपि (E) विपूर्वोऽतिक्रमे। तेनायमर्थो भवति। अस्तमयनात् प्रभृति याः प्रवृत्ताः क्रियास्ता यावदतिक्रान्ता रात्रिः साकल्येन कथयतीति। प्रकृतिवच्च कारकमित्यतिदेशात् कृल्लक्षणायां

---

(D) आरात्रिविराममाचष्ट इति। विरमणं विरामः। भावे घञ्। रात्रे विराम इति षष्ठीसमास इति पाठान्तरम्।

(E) रमिरपीति पाठान्तरम्।

कर्त्तरि षष्ठ्यां प्राप्तायां रात्रौ कर्मणि द्वितीया भवति। अतिक्रमणे हि रात्रिः कर्त्री। कर्मत्वञ्च तस्याः पूर्ववद् गत्यादिसूत्रेण (१।४।५२)। चित्रीकरणे प्रापीति। चित्रीकरणमाश्चर्य्यम्। प्रापीति सप्तम्या धात्वर्थो निर्दिश्यते। प्राप्त्यर्थविषयं यच्चित्रीकरणं तत् प्राप्तिकृतमित्यर्थः। तस्मिन् गम्यमाने णिच्। कृल्लुगादिकञ्च पूर्ववत्। उज्जयिन्या माहिष्मती विदूरदेश इति तावतो देशस्याल्पकालेनातिक्रमणमाश्चर्य्यम्। सूर्य्योद्गमनमिति। कर्त्तरि कृद्योगलक्षणायाः षष्ठ्याः समासः। सूर्य्य उद्गमने कर्त्ता। सम्भावयत इति। प्राप्नोतीत्यर्थः। भू प्राप्तावात्मनेपदी चुरादौ पठ्यते। तस्येदं रूपम्। सूर्य्यमुद्गमयतीति। सूर्य्योद्गमनशब्दाण्णिच्। ल्युटो लुक्। प्रकृतिवच्च कारकमित्यतिदेशात् पूर्ववत् कर्त्तरि षष्ठ्यां प्राप्तायां तस्य कर्मसंज्ञकत्वाद्द्वितीया। कर्मसंज्ञा तु पूर्ववत्। नक्षत्रयोगे ज्ञीति। नक्षत्रयोगे यत् प्रातिपदिकं वर्त्तते तस्मान्नक्षत्रयोगवाचिनो णिच्। कृल्लुगादिकं यथायोगं पूर्ववत्। ज्ञीति सप्तम्या धात्वर्थो निर्दिश्यते। तेन जानात्यर्थे णिज् भवति। पुष्येण करणभूतेन चन्द्रमसो योगः पुष्ययोगस्तस्माण्णिच्। घञ्। कृतो लुक्। प्रकृतिप्रत्यापत्तिः। प्रकृतिवच्च कारकमित्यतिदेशाज् ज्ञानक्रियायामकारकस्यापि पुष्यस्य करणत्वमिति करणे तृतीया। यदा तु पुष्येण सह चन्द्रमसो योग इत्यर्थो विवक्ष्यते तदा कारकातिदेशस्य विषयो न भवति। पुष्यस्याकारकत्वात्। पुष्येणेति तृतीया सहार्थ एव वेदितव्या।

## २७। कण्ड्वादिभ्यो यक्।

किं पुनरिमे कण्ड्वादयो धातव उत प्रातिपदिकानि ? तत्र यदि धातवो यकि कृते कण्डूरिति न सिध्यति। कण्डूयेति प्राप्नोति। ननु च वेत्यनुवर्त्तिष्यते। तत्र यदा यङ् नास्ति तदा कण्डूरिति भविष्यति। नैतदस्ति। नहि धातोः सुब्विभक्तिरुत्पत्तुमुत्सहते। तस्याः प्रातिपदिकाद् विधानात्। स्यादेतत्। यगन्तादन्येभ्योऽपीति (३।२।१७८) क्विपि कृते ऽतो (६।४।४८) लोपे वलि यकारलोपे (६।१।६६) च कण्डूरिति भविष्यति। असदेतत्। कर्त्तरि क्विप् विधीयते। कण्डूरिति च वेदनामात्रमुच्यते। न कर्त्ता। तथापि

सम्पदादेराकृतिगणत्वाद् भावे क्विपं विधाय कण्डूरिति व्युत्पाद्यते। एवमपि मन्तुर्वल्गुरिति न सिध्येत्। यदि तावद्देत्यनुवृत्त्या मन्तुवल्गुशब्दाभ्यां पक्षे यग् न भवति तदा विभक्तिस्ताभ्यां नोपपद्येत। तथाच मन्तु वल्गु इत्यविभक्तिकं रूपं स्यात्। अथापि ताभ्यां यकं विधाय क्विप् क्रियते ? एवमपि मन्तूर्वल्गूरित्यनिष्टं रूपं स्यात्। अवश्यं हि यकि कृते ऽकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घत्वेन भवितव्यम्। अथ प्रातिपदिकानि कण्ड्वादयस्तदा यकः ककारोऽनर्थकः स्यात्। सहि सार्वधातुकार्धधातुकयोरिति (७।४।८४) प्राप्तस्य गुणस्य क्ङिति चेति (१।१।५) प्रतिषेधो यथा स्यादित्येवमर्थं क्रियते। प्रातिपदिकत्वे तेषामेतत् प्रयोजनं नोपपद्यते। नहि प्रातिपदिकाद्विहितः प्रत्यय आर्धधातुकसंज्ञां लभत इति यो देशयेत् तं प्रत्याह द्विविधा इत्यादि। तत्रेति निर्धारणे सप्तमी। तेषु धातुप्रातिपदिकेषु मध्ये ये धातवः कण्ड्वादयस्तेभ्यो यक्। धात्वधिकारादित्यत्रैवोपपत्तिः। एतमेवार्थं द्रढयितुमाह तथाचेत्यादि। यत एवं धातुभ्यः प्रत्ययो विधीयते धात्वधिकारात्। न प्रातिपदिकेभ्यः। एवञ्च कृत्वा यकः ककारोऽनुबध्यते गुणप्रतिषेधार्थम्। यदि तु प्रातिपदिकेभ्यो यक् स्यात् तस्यानार्द्धधातुकत्वाद् गुणस्य प्राप्तिरेव नास्ति। तत्प्रतिषेधार्थं ककारानुबन्धकरणमनर्थकं स्यात्। धातुप्रकरणाद्धातुरिति। प्रत्ययमुत्पादयतीति शेषः। धातोरेकाच (३।१।२२) इत्यतो धातुग्रहणमनुवर्त्तते। तेन धातुरेव कण्ड्वादिशब्दः प्रत्ययमुत्पादयति। न प्रातिपदिकम्। कस्येत्यादि। यच्चेदं ककारानुबन्धासञ्जनमतोऽपि हेतोरेव धातुः प्रत्ययमुत्पादयति। अन्यथा ककारानुबन्धकरणं पूर्वोक्तया रीत्या निरर्थकमेव स्यात्। अतएव धातुभूतेभ्यः कण्ड्वादिभ्यो यग्विधानात् ककारानुबन्धासञ्जनाच्च तेषां धातुत्वं विज्ञायते। नह्यधातुभूतेभ्यो यग्विधानमुपपद्यते। नापि ककारानुबन्धकरणम्। प्रयोजनाभावात्। अथ प्रातिपदिकत्वं कण्ड्वादीनां कथमवसीयत इत्याह आह चायमित्यादि। चकारो हेतौ। यद्येते धातव एव स्युस्ततो यकि कृते ऽकृदिति (७।४।२५) दीर्घत्वस्य सिद्धत्वात् कण्डूञ् हृणीङ् महीङिति दीर्घं नोच्चारयेत्। उच्चारयति च दीर्घम्। अतोऽवसीयते धातुर्विभाषित इति। धातुत्वमेषां विकल्पित मित्यर्थः। ननु च

पक्षे यत्र यङ् नास्ति तत्रायगन्तेभ्यः क्विबादौ प्रत्यय उत्पन्ने कण्डूः कण्डूतिः कण्डूतः कण्डूतवानिति दीर्घस्य श्रवणं यथा स्यादित्येवमर्थं दीर्घोच्चारणं स्यात्। तत् कुतस्तस्यानर्थक्यम्। कथं पुनरयगन्तेभ्यः क्विबादयो भवन्ति? यकः पाक्षिकत्वात्। तदपि कुतः? वेत्यनुवृत्तेः। नैतत्। नित्यत्वादस्य विधेः। नित्यत्वन्तु वाग्रहणस्य निवर्त्तितत्वात्। कुतः पुनस्तन्निवृत्तिरवसीयते? आयादय इत्यादेः (३।१।३१) सूत्रारम्भात्। यद्यत्र वेत्यनुवृत्तिस्तदोत्तरत्राप्यनुवर्त्तनादायादयो वा भविष्यन्तीत्येतन्नारभेत। न च तदनारम्भे सार्वधातुकेऽप्यायादयो विकल्पेन प्राप्नुवन्ति। वाग्रहणस्य व्यवस्थितविभाषात्वात्। तस्मादायादय इत्यादेरारम्भाद्वाग्रहणनिवृत्तिरवसीयत इति नित्यं यका भवितव्यम्। ततश्च यद्येषां पक्षे प्रातिपदिकत्वं न स्याद् दीर्घोच्चारणं मनर्थकं स्यात्। तस्माद् दीर्घोच्चारणसामर्थ्यात् प्रातिपादिकत्व मेषामस्तीत्येकान्त एष पक्षः। तत्र धातुपक्षे कण्डूयत इत्यादयः सिध्यन्ति। प्रातिपदिकपक्षे त्वसति यकि कण्डूर्मन्तुर्वल्गुरित्यादयः। मगध इत्यादयो येऽकारान्ताः कण्ड्वादिषु पठ्यन्ते तेषामतो लोप (६।४।४८) इत्यकारलोपः। मगध्यति। सुख्यति। दुःख्यति। लेट्लोटौ शब्दौ पठ्यते। तयोः स्वरूपेणैव ग्रहणम्। नतु प्रत्ययत्वेन। कण्ड्वादिभिः स्वरूपशब्दैः साहचर्य्यात्।

## २८। गुपूधूपविच्छिपणिपनिभ्य आयः।

स्तुत्यर्थेनेत्यादि। पण व्यवहारे स्तुतौ च पन चेत्यनया ऽनुपूर्व्या गणे पाठः। तत्र पन चेत्यत्र स्तुतावित्यनुवर्त्तते। न व्यवहारार्थः। तेन पणिर्व्यवहारार्थः स्तुत्यर्थश्च। पनिः स्तुत्यर्थ एव। तदिह स्तुत्यर्थेन पणिना साहचर्य्यात् पणेरपि स्तुत्यर्थ एव गृह्यते। तेनासौ स्तुतावेव वर्त्तमानः प्रत्ययमुत्पादयति। नतु व्यवहारे। शतस्येति। व्यवहृपणोः समर्थयोरिति (२।३।५७) कर्मणि षष्ठी। अत्र पणायतीत्यत्रात्मनेपदं कस्मान्न भवति? यावता पणिरयमनुदात्तेत् पठ्यते? तत्रानुदात्तङित (१।३।१२) इति यथा केवलात्मनेपदं भवति तथायप्रत्ययान्तादपि। तेन भवितव्यमित्यत आह नुबन्ध इत्यादि। यो हि तस्यानुबन्धः स आयप्रत्ययरहिते पणतौ

चरितार्थ: कृतात्मनेपदकार्य्य:। तेनायप्रत्ययान्तादात्मनेपदं न भवति। तस्य धात्वन्तरत्वात्।

२८। ऋतेरीयङ्।

सौत्र इति। सूत्रे परिपठितत्वात्। सूत्रे भव: सौत्र:। घृणायां वर्त्तत इति। घृणा जुगुप्सा। तस्यामयं स्वभावत एव वर्त्तते। अथ कस्मादीयङुच्यते ? न च्छङित्येवोच्येत ? तस्येयादेश ऋतीयत इति सिध्यति। न सिध्यति। परत्वादिड़ागमे कृते सत्प्रत्ययादित्वादीयादेशो न स्यात्। ननु चान्तरङ्गत्वादीयादेश एव भविष्यति। अन्तरङ्गत्वन्तु तस्यायन्नादिषूपदेशिवद्वचनमिष्टस्वरसिद्ध्यर्थमिति (७।१।१, वा) वचनात्। एवं तर्ह्येतज् ज्ञापयति धातुप्रत्ययानामायन्नादयो न भवन्तीति। तेन शमे ढप्रत्यये कृते शण्ढ इत्येवमादय: सिद्धा भवन्ति। अथवा स्वरविधावुपदेशिवद्भाव: स्वरसिद्ध्यर्थमिति वचनात्। तेन नास्त्यन्तरङ्गतेति परत्वादिड़ागम: स्यात्। तस्मादीयङ् विधीयते।

३०। कमेर्णिङ्।

णकारो वृद्ध्यर्थ इति। अत उपधाया इति (७।१।११६) वृद्धिर्यथा स्यात्। यद्येवं किमर्थं न कम्यमिचमामिति (ग, सू, १८१) कमेर्मित्संज्ञा प्रतिषिध्यते ? मितां ह्रस्व इति (६।४।८२) ह्रस्वो मा भूदिति। नैतदस्ति। णित्करणसामर्थ्यादेव तन्न भविष्यति। अन्यथा णित्करणमनर्थकं स्यात्। नानर्थकम्। णेरनिटीति (६।४।५१) सामान्यग्रहणार्थत्वात्। यदा चायादय आर्धधातुके वेति (३।१।३१) णिङ् नास्ति तदा हेतुमण्णिचि ह्रस्वत्वं मा भूदिति मित्संज्ञा प्रतिषिध्यते।

३१। आयादय आर्धधातुके वा।

आर्धधातुकविषय इत्येतेनार्धधातुक इत्यस्य विषयसप्तमीत्वं दर्शयति। आर्धधातुकविषयत्वन्तु तद्विवक्षायां सत्यां बुद्धिस्थे तस्मिन् सम्भवति। नान्यथेत्याह आर्धधातुकविवक्षायामिति। केन पुनरभिसन्धिना विषयसप्तमीत्वमाश्रीयत इति ? एवं मन्यते। परसप्तम्यामुत्पत्तिर्वा विकल्प्यते निवृत्तिर्वा।

यद्युत्पत्तिस्तदा गुपे: स्त्रियां क्तिनि विहिते तत्र यदायप्रत्ययो नोत्पद्यते तदा कामं गुप्तिरितीष्टं सिध्यति । यदा तूत्पद्यते तदातो लोपे (६।४।४८) वलि लोपे (६।१।६६) च कृते गोपातिरित्यनिष्टमापद्येत । गोपायेतीष्टं न सिध्यति । अथ निवृत्तिस्तदा गुपेरायप्रत्ययान्ताद प्रत्ययादित्यकारे (३।३।१०२) कृते तत्र परतो यदा निवृत्तिर्न भवति तदा कामं गोपायेतीष्टं सिध्यति । यदा तु भवति तदा गोपेत्यनिष्टं प्राप्नोति । गुप्तिरिति सत्यामसत्यां वा निवृत्ताविष्टं न सिध्यति । विषयसप्तम्यां तूत्पत्तौ विकल्पितायामुत्पत्स्यते । आर्धधातुकमिति । आर्धधातुकविवक्षायामादावेव विकल्प: । तत्रानुत्पत्तिपक्षे स्त्रियां क्तिनि विहिते गुप्तिरिति सिध्यति । उत्पत्तिपक्षे गोपायेति । न च गोपातिरित्यनिष्टमपि । आयप्रत्ययान्तात् क्तिनोऽभावात् । नापि गोपेत्यनिष्टमापद्यते । आयप्रत्ययस्यानुत्पत्ते: । नित्यप्रत्ययप्रसङ्ग इति । पूर्व्वैस्त्रिभि: सूत्रैर्नित्यमायादिषु प्राप्तेष्वित्यर्थ: । तदुत्पत्तावित्यादि । तेषामायादीना मार्धधातुकविषय उत्पत्तिर्विकल्प्यते । नतूत्पन्नानां निवृत्ति: । यदि हि निवृत्तिर्विकल्प्येत तदार्धधातुके विषयभूते सत्यायप्रत्यये निवृत्ते प्रत्ययलक्षणेना प्रत्ययादि (३।३।१०२) त्यकारप्रत्यये विहिते विषयसप्तम्यामपि गोपेत्यनिष्टं स्यादितत्रभिप्राय: । यथायथमिति । यो यत: प्राप्नोति स पश्चादुत्पत्तिविकल्पादुत्तरकालं ततो भवतीतत्रर्थ: ।

## ३२ । सनाद्यन्ता धातव: ।

सनादयोऽन्ते येषामिति वाक्यविशेषेण बहुव्रीहिं दर्शयति । गमकत्वेन हि व्यधिकरणानामपि बहुव्रीहिर्भवत्येव यथा कण्ठेकाल उरसिलोमेति । आदिशब्देन क्यजादीनां णिङ्पर्य्यन्तानां ग्रहणम् । समुदाया इति । प्रकृतिप्रत्ययसमुदाया: । एतेन तद्गुणसंविज्ञानबहुव्रीहिं दर्शयति । अन्यथा सनाद्युपलक्षितानां प्रकृतीनामिव धातुसंज्ञा विधीयेत । धातुसंज्ञका इति । धातु: संज्ञा येषां ते धातुसंज्ञका: । धातुशब्दश्चात्र स्वरूपपदार्थको न भूवादिपदार्थक: । अन्यथा भूवादय: सनाद्यन्तानां संज्ञा: स्यु: । तच्चायुक्तम् । नहि तावतीनां संज्ञानां करणे किञ्चित् प्रयोजनमस्ति । आवर्त्तिन्यश्च संज्ञा

भवन्ति। नहि भूवादीनामेव सर्वेषामावृत्तिः क्वचिच्छास्त्रेऽस्तीति न तत्-पदार्थको धातुशब्दः। इह हि संज्ञाविधौ सनादीनां प्रत्ययानां ग्रहणम्। सुप्तिङन्तं (१।४। ४) पदमित्यत्र चान्तग्रहणेन ज्ञापितमेतत् प्रत्ययग्रहणे यस्मात् स विहितस्तदादेः (प,२४) स्तदन्तस्येति। एषा परिभाषा संज्ञाविधौ प्रत्ययग्रहणे प्रतिषिद्धा। तत्रासत्यन्तग्रहणे तदन्तविधिर्न स्यात्। इष्यते चातस्तदर्थमन्त-ग्रहणं कृतम्। तत्रानेनान्तग्रहणेनापूर्व एव तदन्तविधिः क्रियत इति मन्यमानो यो देशयेत् तं प्रत्याह यदि तर्हि सनाद्यन्तानामियं संज्ञा विधीयते तदा देवदत्तः प्राचिकीर्षदित्यत्र देवदत्तस्य सोपसर्गस्य च संज्ञा प्रसज्येतेति। अत आह प्रत्ययग्रहणपरिभाषयैवेत्यादि। नह्यनेनान्तग्रहणेनापूर्व एव तदन्त-विधिः क्रियते। किं तर्हि? पदसंज्ञाविधावन्तग्रहणेन प्रतिषिद्धा सती प्रत्यय-ग्रहणपरिभाषयैव पुनरिह प्रतिप्रसूयते। कृतप्रवृत्तिविघाता सती पुनः प्रवर्त्तत इत्यर्थः। ततश्च यतः सन्नादयो विहितास्तदादेरेव समुदायस्य संज्ञा भवति। न शब्दान्तरादेरिति भावः। अथ भूवादयो धातव (१।३।१) इत्यस्या-नन्तरं सनाद्यन्ताश्चेति कस्मान्नोक्तम्? एवं हि धातुग्रहणं द्विर्न कर्त्तव्यं भवति। नैवं शक्यम्। एवं हि क्रियमाणे सनादीनामियत्तापरिच्छेदो न स्यात्। इह तु क्रियमाणे णिङ्पर्य्यन्तानां ग्रहणं विज्ञायते। तर्हि सनाद्यन्ता धातव इत्यस्यानन्तरं भूवादयश्चेति कस्मान्नोक्तम्? एतदपि न। एवं हि क्रियमाणे सनाद्यन्तस्यानुक्रान्तापेक्षित्वाद् भूवादीनामप्यनुक्रान्तापेक्षित्वं स्यात्। ततश्चानुक्रान्तानामेव गुपादीनां धातुसंज्ञा स्यात्। नान्येषां भूवादीनाम्। अथ भूवादीनामनुक्रान्तापेक्षा न भवति सनादीनामपि न स्यात्। ततश्च सनादयः कप्पर्य्यन्ता गृह्येरन्निति सन्देहः स्यात्। तस्माद् यथान्यासमेव न्याय्यम्।

## ३३। स्यतासी लृलुटोः।

इह द्वे लृरूपे। एकं लृटः सम्बन्धि। द्वितीयं लृङः। द्वयोरपि तयोर्ग्रहणम्। इष्टत्वात्। विशेषानुपादानाच्च। ततश्चैते द्वे तृतीयश्च लुडिति त्रीणि निमित्तानि भवन्ति। निमित्तिनौ तु द्वौ स्यतासी इति वैषम्यम्।

अत: संख्यातानुदेशो न स्यादिति यो देशयेत् तं प्रत्याह लृरूपमित्यादि। टकारङकारयोरनुबन्धयो: परित्यागेन तत्कृतस्य भेदस्याभावाल् लृरूपं लृङ्लृटो: सामान्यमेकमेवेति निमित्तयोरपि द्वित्वम्। तेन संख्यातानुदेशो न विरुध्यत इत्यभिप्राय: । अत एवाह यथासंख्यमिति। करिष्यतीति। लृट् शेषे (३।३।१३) चेति लृट्। ऋद्धनो: (७।२।७०) स्य इतीट्। अकरिष्यदिति। लृङ्। अड़ागम:। इतश्चेतीकारलोप: (३।४।१००)। कर्त्तेति। अनद्यतने लुट् (३।३।१५)। लुट: प्रथमस्येत्यादिना (२।४।८५) तिपो डादेश:। टिलोप:। इदित्करणमित्यादि। इश्चासावित् इत्संज्ञकश्चेतीदित्। तस्य करणमिदित्करणम्। इकारस्येत्संज्ञकस्य करणमित्यर्थ:। अथवा इदिद् यस्य तासे: स इदित् तासि स्तस्य करणमिदित्करणमित्संज्ञकेकारस्य तासे: करणमित्यर्थ:। अनुनासिकलोपप्रतिबन्धार्थमिति। असति तु तस्मिन्ननिदितामित्यनुनासिकलोप: (६।४।२४) स्यात्। अतस्तस्य प्रतिबन्ध: प्रवृत्तिविघातो यथा स्यादित्येवमर्थमिदित्करणम्। मन्तेति। मन ज्ञाने। मनु अवबोधन इति वा। अनुदात्तङित (१।३।१२) इत्यात्मनेपदम्। संगन्तेति। अत्रापि संपूर्वाद्गमे: समो गम्यादिना (१।३।२९)। अत्रोभयत्रापि टिलोपे कृते ङित्वादात्मनेपदमाश्रित्यानुनासिकलोप: प्राप्नोति। स इदित्करणेन प्रतिषिध्यते। यदि तर्हि तासेरिदित्करणमनुनासिकलोपप्रतिबन्धार्थ मेवं सतीदितो नुम् (७।१।५८) धातोरित्यत्र यद्वक्ष्यति तासिसिचोरिदित्कार्य्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकार: पठ्यत इति तद्विरुध्यते। नास्ति विरोध:। भिन्नकर्तृकत्वात्। इदं हि जयादित्यवचनम्। तत् पुनर्वामनस्य। वामनवृत्तौ तु तासिसिचोरिकार उच्चारणार्थो नानुबन्ध: पठ्यते। तेन विरोधो नाशङ्कनीय:। केन पुनरभिसन्धिना जयादित्यस्तासेरिकारस्यानुनासिकलोपप्रतिबन्धार्थतां कृतवान्? वामन स्तूच्चारणार्थताम्? येनाभिसन्धिना स तावच्छ्रूयताम्। आभाच्छास्त्रीयमसिद्धत्वमनित्यम्। अनित्यत्वन्तु तस्य तत्रैव प्रतिपादयिष्यते जयादित्येन। आभाच्छास्त्रीयस्य टिलोपस्यासिद्धत्वमिह नास्ति। अनित्यत्वादित्यभिप्रेत्य तासेरिकारस्यानुनासिकलोपे प्रतिबन्धार्थतोक्ता। वामनेन त्वसिद्धत्वमिहास्त्येवेति मन्यमानेनोच्चारणार्थतोक्ता। नहि

टिलोपस्यासिद्धत्वे सतग्रनुनासिकलोपः प्राप्नोति । तदयुक्ता तत्प्रतिबन्धार्थतेकारस्य । यथैव हि गोनर्द्दीय आचार्य्यः (F) सन्निपातलक्षणपरिभाषाया उपस्थानमाश्रितग्रातिजरं ब्राह्मणकुलं तिष्ठति । अतिजरैर्ब्राह्मणकुलैरिति भवितव्यमितग्राहान्ये त्वनितग्रत्वादस्याः परिभाषाया अनुपस्थानमाश्रितग्रातिजरसं ब्राह्मणकुलमतिजरसैरिति भवितव्यमितग्राहु स्तथेदमपि प्रयोजनद्वयमाभाच्छास्त्रीयस्यास्तित्वमनस्तित्वञ्चाश्रितग्र वृत्तिकारावुक्तवन्ताविति (G) वेदितव्यम् । अन्ये चाचक्षते प्राग् भादसिद्धाधिकार इतीमं पक्षमाश्रित्येकारस्यानुनासिकलोपप्रतिबन्धार्थतोक्ता । सह तेनासिद्धाधिकार इत्याश्रित्योच्चारणार्थतेति । एतच्चाशक्यं विज्ञातुम् । प्राग् भादसिद्धाधिकार इतग्रस्य पक्षस्य जयादितग्रवामनाभ्यामनाश्रितत्वात् । अनाश्रितत्वं तु तत्रैव वृत्तावभिव्यक्तमिति तत एवावगन्तव्यम् । एवं च स्यादयो येन नाप्राप्तिन्यायेनान्तरङ्गत्वाच्च सर्वेषां यगादीनामपवादाः । अन्तरङ्गत्वं तु तेषां लावस्थायामिव विधानात् ।

## ३४ । सिब् बहुलं लेटि ।

जोषिषदिति । जुषी प्रीतिसेवनयोः । लिङर्थे लेट् । सिप इकार उच्चारणार्थः । पकारः स्वरार्थः । लेटोऽडा (३।४।९४) टावित्यट् । इतश्च लोपः

---

(F) From certain reference in कैयट, गोनर्द्दीय is taken as the भाष्यकार himself. But in the काशिका, न्यास and पदमञ्जरी, the name गोनर्द्दीय is given uniformly in 7. 2. 101 and in the other places, without any indication that he is the भाष्यकार। Kaiots' reference or statement is in the Rule आद्यन्तवदेकस्मिन् (1. 1 21)—भाष्यकारस्य गोनर्दंदेशीऽइव इति केचित् । आद्यन्तवदेकस्मिन्नित्यत्र ( १।१।२१ ) गोनर्दीयस्त्वाहेति भाष्यव्याख्यायां कैयटेन भाष्यकारस्त्वाहेत्युक्तत्वात् Others maintain that this may as well indicate that भाष्यकार is here stating the गोनर्द्दीयमत to support his own opinion which is the same with गोनर्द्दीय's. The गोनर्द country is identified with modern Gonda in Oude. एङ् प्राचां देश इत्यत्र (१।१।७२) काशिकायां गोनर्दीय इत्युदाहृतत्वाद् गोनर्ददेशः प्रागदेशविशेषः ।

(G) So, this is the distinct declaration by the न्यासकार that the महावृत्ति, वा सद्वृत्ति (i,e the काशिका वृत्ति ) was the joint work by वामन and जयादित्य। हरदत्त, भट्टोजि and हरिदीक्षित also say the same. सद्वृत्तिरित्यत्र माघपद्यम्—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥ १ ॥ इति ।

(३।४।९७) परस्मैपदेष्वितीकारलोपः । आर्धधातुकस्येड् (७।२।३५) वलादेरितीट् । लघूपधगुणः । आदेशप्रत्यययोरिति (८।३।५९) षत्वम् । तारिषदिति । तॄ प्लवनतरणयोः । सार्वधातुकार्धधातुकयोरिति (७।३।८४) गुणः । व्यत्ययो बहुलमिति (३।१।८५)वर्णव्यत्ययेन धात्वकारस्याकारः । शेषं पूर्ववत् । मन्दिषदिति । मदि स्तुतिमोदनस्वप्नगतिषु । इदितो नुम् धातोरिति (७।१।५८) नुम् । पदातीति । (H) पद गतौ । दिवादिरनुदात्तेत् । व्यत्ययेन परस्मैपदम् । शप् प्रत्ययश्च । अटा सह सवर्णदीर्घत्वम् । तिप इकारलोपोऽत्र न भवति । तद्विधौ वैतोऽन्यत्रेत्यतो (३।४।९६) वेत्यनुवृत्तेः । च्यावयातीति । च्युङ् च्युङ् ज्युङ् भ्रुङ् प्रुङ् प्लुङ् गतौ । हेतुमण्णिच् । सिपः पित्करणं वोभूयिषाता (I) यित्यत्रोदात्तनिवृत्तिस्वरेणोदात्तत्वे प्राप्तेऽनुदात्तार्थम् । यङन्ताद् वोभूयशब्दाल्लेट आत्मनेपदम् । त । टेरेत्वम् । एत ऐ (३।४।९३) । लेटोऽडाटावित्याट् (३।४।९४) । तास्यनुदात्तेन् ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोरिति (६।१।१८६) सार्वधातुकस्यानुदात्तत्वं पित्करणसामर्थ्यादन्तरङ्गोऽपि सिपस्वरं प्रतीक्षते । तेन कृते तस्मिन् सिप इडागमः । स चागमानुदात्तत्वेनानुदात्तः । अतो लोप इति (६।४।४८) यङोऽकारस्योदात्तस्य लोपः । उदात्तत्वन्तु तस्य धातुस्वरेण च । अनुदात्तस्य च (६।१।१६१) यत्रोदात्तलोप इत्युदात्तत्वे प्राप्ते पित्करणादनुदात्तत्वमिटो भवति ।

## ३५ । कास्प्रत्ययादाममन्त्रे लिटि ।

प्रत्ययग्रहणेनेह सन्नादीनां प्रत्ययानां ग्रहणम् । तत्र प्रत्ययग्रहणे यस्मादिति (प,२४) परिभाषया येन विधिस्तदन्तस्येति (१।१।७२) वा तदन्तविधिर्विज्ञायते । धात्वधिकाराच्च प्रत्ययग्रहणेनेह धातवो विशिष्यन्त इत्याह प्रत्ययान्तेभ्यो धातुभ्य इति । आम् प्रत्ययो भवतीति हलन्तपक्षमाश्रित्योक्तम् । अदन्तपक्षे त्वामः प्रत्ययो भवतीत्येवं वक्तव्यम् । तच्च नोक्तम् । वक्ष्यमाणादामोऽमित्त्वमदन्तत्वादित्यत एवावगम्यमानत्वात् । अमन्त्र इति विषयसप्तमीयम् । न परसप्तमी । तेन मन्त्रप्रतिषेधाद् भाषायां ब्राह्मणे च विषयेऽयं विधिर्विज्ञायते ।

---

(H) पतातीति मुद्रितपुस्तके पाठः । तत्र पत्लृ गतावित्यस्माल्लेट् ।

(I) इष्टानुविधिश्छन्दसीति वोभूयिषातायित्यस्य प्रयोगो विद्वद्भिर्बहुश्रुतैरनुसन्धातव्यः ।

ब्राह्मणो नाम मन्त्राणामेव व्याख्यानग्रन्थः। ननु च नञिवयुक्तन्यायेन ब्राह्मण एव भवितव्यं न भाषायाम् ? नैतत्। यदि भाषायामपि न स्याद् ब्राह्मण इत्येवं ब्रूयात्। कासाञ्चक्र इति। आम इति (२।४।८१) लेर्लुक्। लिटः कृत्त्वाल्लुप्ते तस्मिन् कृत्तद्धितसमासाश्चेति(१।२।४६)प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा। सुः। स्वरादिपाठात् तद्धितश्चासर्वविभक्तिरितयत्र (१।१।३८) चकारस्यानुक्तसमुच्चयार्थत्वाद्वाऽव्ययसंज्ञायां सोर्लुक्। अथ हल्ङ्याब्भ्य (६।१।६) इत्यनेनात्र सोर्लोपो भविष्यति। किमत्राव्ययसंज्ञया ? लोलूयाञ्चक्र इति। लोलूयशब्दाद् यङन्तादाम्। नोनावेति। णु स्तुतौ। णो न इति (६। ।६५) नत्वम्। यङ्। नोनूयत इति स्थिते यङोऽचि चेति (२।४।७४)·यङो लुक्। लिट्। तिप्। परस्मैपदानामिति (३।४।८२) णल्। वृद्धिः। अत्र प्रत्ययलक्षणेन प्रत्ययान्तादाम् स्यात्। अमन्त्र इति वचनान्न भवति। कास्यनेकाच इत्यादि। प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्त्तव्य मित्यर्थः। किमर्थमित्याह। चुलुम्पाद्यर्थमिति। यथान्यासे हि क इत्यस्मात् प्रजापतिवाचिनो विष्णुवाचिनो ऽशब्दादाचारक्विपि तदन्तादप्याम् प्रसज्येत। चकास्प्रभृतिभ्योऽप्रत्ययान्तेभ्यश्च न स्यात्। तस्मादिदं न्यासान्तरं द्रष्टव्यम्। अन्ये तु प्रत्ययग्रहणस्यानेकाजुपलक्षणान्न कर्त्तव्यमेतदिति मन्यन्ते। एतच्चायुक्तम्। नहि प्रत्ययग्रहणमनेकाजुपलक्षणार्थमुपपद्यते। एकाचामपि प्रत्ययान्तानां धातूनां विद्यमानत्वात्। यथा त्वेतन्न्यासान्तरं प्रत्याख्येयं भवेत् तथोत्तरत्र दर्शयिष्यामः। चकासाञ्चकार दरिद्राञ्चकारेति। चकासृ दीप्तौ। दरिद्रा दुर्गतौ। चुलुम्पाञ्चकारेति। चुलुम्पते धातुष्वपरिपठितस्यापि कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति (J) कात्यायनवचनप्रामाण्याद् धातुत्वं वेदितव्यम्। अथामो मकारस्य हलन्त्यमितीत् (१।३।३) संज्ञा कस्मान्न भवतीत्याह आमोऽमित्त्वमित्यादि। मकार इद् यस्य सोऽयं मित्। न मिदमित्। तस्य भावोऽमित्त्वम्। कथममित्त्वमित्याह अदन्तत्वादित्यादि। मकारान्तत्वे हि सति मकारस्येत्संज्ञा स्यात्। न चास्य मकारान्तत्वम्। किं तर्हि ? अदन्तत्वम्। तेनाकार एवोपदेशेऽजनुनासिक (१।३।२) इदितीत्संज्ञामनुभवन् मकारस्येत्संज्ञां प्रतिबध्नाति। यथा चामोऽमित्त्व मदन्तत्वादगुणत्वं

(J) It is a वार्त्तिक belonging to this Rule 3. 1. 35.

विदेस्तथा । गुणाभावोऽपि हि विदेर्विदाञ्चकारेत्यत्राकारान्तत्वादेव भवति । अथाकारान्तत्वे सत्यतो लोपे (६।४।४८) तस्याचः परस्मिन् (१।१।५७) पूर्वविधाविति स्थानिवद्भावादिकार उपधा न भवति । तेन लघूपधगुणो न भवति । अदन्तत्वं तु विदेरुषविदजागृभ्योऽन्यतरस्या (३।१।३८) मित्यनेनाम्प्रत्ययसन्नियोगेनाकारान्तत्वनिपातनात् । अभ्युपेत्यामो मकारान्तत्वममित्त्वं प्रतिपादयितु माह आश्वकासोर्विधानाच्चेति (K) । आमोऽमित्त्व मिति प्रकृतेन सम्बन्धः । दयायासश्चेत्यास (३।१।३७) आमो विधानात् । कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थ मित्युपसंख्यानाच्चकासेः । आदिग्रहणेन हि चकासेरपि ग्रहणम् । मकारस्येत् संज्ञयैतत् प्रयोजन मचोऽन्त्यात् परो यथा स्यादिति । यदि चामोऽमित्त्वं स्यात् तदा ऽश्वकासोरामो विधानमनर्थकं स्यात् । नहि तयोरचोऽन्त्यात् पर आमि भवत्यभवति वा कश्चिद् विशेषः । उभयथा ह्यकः सवर्णे इति (६।१।१०१) दीर्घत्वे तदेव रूपं स्यात् । तदेतदाश्वकासो रामो विधानं कथमर्थवद्भवति यद्यमित्त्वमामो भवति ? नान्यथा । नह्यन्यत् किञ्चित् प्रयोजनमस्तोति प्रयोजनाभावादित्संज्ञा न भविष्यति । आश्वकासोर्विधानसामर्थ्यात् सवर्णदीर्घत्व मिह न भविष्यति । मिदचोऽन्त्यात् पर इति (१।१।४७) परिभाषा वा नोपस्थास्यत इत्येतच्च नाशङ्कनीयं लक्ष्यविरोधमनिच्छता । एवं ह्यनिष्टं रूपं स्यात् । न चानिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता । यदि तर्ह्यामोऽदन्तत्वमेवं सत्याममन्त्र इति निर्देशो नोपपद्यते । सवर्णदीर्घत्व आमामन्त्र इति भवितव्यमित्याह पररूपं कृतन्त्वदिति । यथा सर्वत्र लोहितादिकतन्तेभ्य (४।१।१८) इत्यत्र पररूपं तथेहापीति न भवति निर्देशानुपपत्तिः ।

## ३६ । इजादेश्च गुरुमतोऽनृच्छः ।

इजादेरिति । इच् आदिर्यस्येति बहुव्रीहिः । इजिति प्रत्याहारग्रहणम् । गुरुरस्यास्तीति गुरुमान् । अनृच्छतिवर्जितः ऋच्छिना त्यक्तः । तद्रूपरहित इत्यर्थः । ईहाञ्चक्र इति । ईह चेष्टायाम् । ऊहाञ्चक्र इति । ऊह वितर्के । ततक्ष ररक्षेति । तक्षू त्वक्षू तनूकरणे । रक्ष पालने । इयज । उवपेति । यजि-

(K) आसकासोरामविधानाच्चेति मुद्रितकाशिकायां पाठः । आसः कासेर्विधानाच्चेति च क्वचित् पाठः ।

वध्योरुत्तमे णलि णलुत्तमोवेति (७।१।६१) णित्वाभावपक्षे वृद्ध्यभावाद् गुरुमत्ताभावः। केचिदियेषोवोषेति प्रत्युदाहरन्ति। इषु इच्छायाम्। उष दाहे। णलि लघूपधगुणः। द्विर्वचनम्। अभ्यासस्यासवर्णे (६।४।७८) इतीयङुवङौ। ननु च गुणे कृत एतावपि गुरुमन्तौ भवत इति भवितव्यमेवामात्र ? न भवितव्यम्। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ( प, ८६ ) लिट्सन्निपातो गुरुमत्ताया हेतुः। गुरुमत्ता चाम इति (२।४।८१) लिटमेव विहन्ति। अथवा गुरुमत इति नित्ययोगे मतुप्। तेन नित्यं यस्य गुरुणा सह योगस्ततो भवितव्यम्। न चेषेरुषेश्च नित्यं गुरुणा सह योगः। यद्येव मुच्छो विपाशे। उच्छाञ्चकारेत्यत्र तुकि कृते न प्राप्नोति। नैष दोषः। ऋच्छिप्रतिषेधो हि ज्ञापयत्यागमनिमित्ता गुरुमत्ता यस्य ततोऽपि भवतीति। आनर्छेति। ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु। छे चेति (६।१।७३) तुक्। ऋच्छत्यृतामिति (७।४।११) गुणः। द्विर्वचनं हलादिशेषः। अत आदेरिति (७।४।७०) दीर्घः। तस्मान्नुड् (७।४।७१) द्विहल इति नुट्। ननु च ऋच्छत्यृतामिति (७।४।११) ऋच्छतेरनन्तरे लिटि गुणवचनं ज्ञापकमृच्छेराम् न भवति। सति हि तस्मिँल्लिट आनन्तर्यं विहन्येत। तदपार्थकः प्रतिषेधः। नैतदस्ति। वचनसामर्थ्याद् व्यवधानेऽपि गुणः स्यात्। असति च तस्मिन्नागमनिमित्ता गुरुमत्ता यस्य ततोऽपि भवतीत्येतज् ज्ञापितं न स्यात्। तस्मादनृच्छ इति प्रतिषेधः कर्त्तव्यः। ऊर्णोतेरित्यादि। इजादित्वाद् गुरुमत्त्वाच्च प्राप्नोत्याम्। तस्मात् प्रतिषेधो वक्तव्यो व्याख्येय इत्यर्थः। व्याख्यानन्तु वक्ष्यमाणस्यान्यतरस्यांग्रहणस्य सिंहावलोकितन्यायेनानुवर्त्तितस्य व्यवस्थितविभाषात्वविज्ञानात् कर्त्तव्यम्। प्रोर्णुनावेति। अजादेर्द्वितीयस्येति (६।१।२) नु इत्यस्य द्विर्वचनम्। रेफस्तु न द्विरुच्यते। नन्द्राः संयोगादय (६।१।३) इति प्रतिषेधात्। अथवेत्यादि। णु स्तुतौ। तेन तुल्यं वर्त्तत इति नुवत्। तस्य भावो नुवद्भाव इति। नौतिना तुल्यं वर्त्तत इत्यर्थः। किं पुनस्तस्य प्रयोजनम् ? येनासौ तथा वाच्य इत्याह यङ्प्रसिद्धिः प्रयोजनमिति। नुवद्भावे सति यथा नौतेर्धातोरेकाच (३।१।२२) इति यङ् भवति नोनूयत इत्येवमूर्णोतेरपि प्रोर्णोनूयत इति। आमश्च प्रतिषेधार्थमिति नुवद्भावो वाच्य इत्यपेक्ष्यते। तस्मिन् सति यथा नौते रनिजादित्वाद् गुरुमत्ता-

भावाच्चाम् न भवति तथोर्णोतेरपि प्रोर्णुनावेति। एकाचश्चेडुपग्रहादिति। नुवद्भावो वाच्य इति सम्बध्यते। कर्मणि ल्यब्लोप इति पञ्चमी यथा प्रासादात् प्रेक्षते। आसनात् प्रेक्षत इति। इडुपग्रह इति। इट्प्रतिषेधः। एतदुक्तं भवति। एकाच इत्यनुवर्त्तमाने (७।२।१०) श्र्युकः किताति (७।२।११) य इडुपग्रहः क्रियते तदुद्दिश्य प्रयोजन मूर्णोतेर्नुवद्भावो वाच्य इति। तेन यथा नौतेः श्र्युकः (७।२।११) कितीतीट् प्रतिषेधो नुतो नुतवानिति तथोर्णोतेरपि प्रोर्णुतः प्रोर्णुतवानिति। अथवेडुपग्रहादिति हेताविय पञ्चमी यथा तदशिष्यं (१।२।५३) संज्ञाप्रमाणत्वादिति। एकाचो यत इडुपग्रहो विधीयते तस्मात् प्रयोजनाद्धेतो रूर्णोतेर्नुवद्भावो वाच्य इत्यर्थः। अथेजादेश्चेति किमर्थश्च-कारः? अनुक्तसमुच्चयार्थः। तेन कास्यनेकाच इति वक्तव्यं न भवति। यथाभ्यासेऽपि चकारेण चकासाञ्चकारेत्यादेः सिद्धत्वात्। ननु च यदीदं नोच्येत तदा प्रत्ययान्तोऽपि यो धातु रेकाच् ततोऽपि प्रसज्येत। यदि नेष्यते तदा वक्ष्यमाण मन्यतरस्यांग्रहण मनुवर्त्त्य व्यवस्थितविभाषात्व मङ्गीकर्त्तव्यम्।

## ३७। दयायासश्च।

पलायाञ्चक्र इति। परापूर्वस्यायते रुपसर्गस्यायताविति (८।२।१८) लत्वम्।

## ३८। उषविदजागृभ्योऽन्यतरस्याम्।

उषजागृभ्यां परस्मैपदिभ्यां साहचर्य्याद् विदेरपि परस्मैपदिनो ज्ञानार्थस्य ग्रहणम्। नतु सत्ताविचारणार्थयोरात्मनेपदिनोः। नापि लाभार्थस्योभय-पदिनः। जागर्त्तिनादादिकेन वा साहचर्य्याद्विदेरादादिकस्यैव ग्रहणमित्याह विद ज्ञान इति। विविदेत्यत्रादन्तत्वाभावाद् गुणो भवत्येव। आम्सन्नि-योगेन विदेरदन्तत्वं विज्ञायते। तेन तत्रैव गुणाभावो नान्यत्रेति। अत आह विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवतीति।

## ३९। भीह्रीभृहुवां श्लुवच्च।

भीह्रीभृहुवामिति पञ्चम्यर्थे षष्ठी। सुपां सुपो भवन्तीति (७।१।३९)। श्लुवदिति। श्लाविव श्लुवत्। तत्र तस्येवेति (५।१।११६) सप्तमीसमर्थाद्वतिः।

कार्य्यातिदेशश्चायम् । अतएवाह स्थुवच्चास्मिन् कार्य्यं भवतीति । द्वित्वमित्त्वञ्चेति । स्नाविति (६।१।१०) द्विर्वचनम् । भृञामिदितीत्त्वम् (७।४।७४) । असति ह्यतिदेशे लिङाश्रयं द्विर्वचनमामा व्यवधाने न स्याद् । इत्त्वमपि नैव स्यात् । तद्विधौ हि निजां त्रयाणां गुणः ( ७।४।७५ ) स्नावित्यतः स्नावित्यनुवर्त्तते । तस्मात् तस्योभयस्य सिद्धये स्थुवच्चेत्यतिदेशः ।

## ४० । कृञ्चानुप्रयुज्यते लिटि ।

अनुप्रयुज्यत इति । अनुप्रशब्दौ प्रत्येकं प्रथमान्ते पदे । युज्यत इत्यात्मनेपदे प्रथमपुरुषैकवचनान्तम् पदम् । आम्प्रत्ययस्येति । आम् प्रत्ययो यस्मादिति बहुव्रीहिः । पश्चादित्यनेनानुशब्दस्यार्थमाचक्षाणः प्राक् प्रयोगं निराकरोति । सावधारणफलत्वाच्च सर्ववाक्यानामाम्प्रत्ययस्यैव पश्चात् कृञ् प्रयुज्यते इत्यवधारणमिहाश्रितम् । तेन व्यवधाने प्रयोगो निराकृतो भवति । नहि व्यवधाने कृञनुप्रयुज्यमान आम्प्रत्ययस्यैवानुप्रयुक्तो भवति । अपि तु शब्दान्तरस्यापि । लिटि परत इत्यनेन प्रत्ययान्तरे परे प्रयोगाभावमाह । ननु चाम इति (२।४।८१) लिटो लुका भवितव्यम् । तत् कथं लिटि परतः कृञनुप्रयुज्यते ? नैष दोषः । न ह्ययमत्रार्थो लक्षणान्तरेण यो विहितो लिट् तत्र परतोऽनुप्रयुज्यते कृञिति । किं तर्हि ? अनेनैव सूत्रेण विधीयमाने लिटि परतः कृञनुप्रयुज्यत इति । लिट्परः कृञनुप्रयुज्यत इति यावत् । ननु च कृञित्युच्यते । पाचयाम्बभूव पाचयामासेति भवतेरस्तेश्चानुप्रयोगो न सिध्यतीत्याह कृञिति प्रत्याहारेणेत्यादि । अभूततद्भावे (५।४।५०) कृभ्वस्तियोग इतीमं कृशब्दं गृहीत्वा कृञो द्वितीयतृतीयशम्बबीजात् (५।४।५८) कृषाविति अकारेण प्रत्याहारग्रहणमेतत् । तेन प्रत्याहारग्रहणेन कृभ्वस्तयस्त्रयो गृह्यन्ते । तत्र च त्रयाणामप्यन्तर्भावादित्यदोषः । एवमप्यस्तेरनुप्रयोगो न सिध्यति । यस्मादस्तेर्भूरिति (२।४।५२) भूभावेन भवितव्यमित्याह तत्सामर्थ्यादिति । प्रत्याहारेण कृभ्वस्तीनां ग्रहणसामर्थ्यादस्तेर्भूभावो न भवति । तेषां प्रत्याहारग्रहणस्यैतत् प्रयोजन मस्तेरनुप्रयोगो यथा स्यात् । यद्यस्तेरनुप्रयोगस्य भूभावः स्यान्निष्फलं प्रत्याहारग्रहणं स्यात् । कृभ्वनुप्रयुज्यते लिटीत्येवं ब्रूयात् ।

तत्राप्ययमर्थः । किमिदं करोतेर्ग्रहणमुत प्रत्याहारस्येति सन्देहः परिहृतो भवति । यदि तर्हि कृञिति प्रत्याहारग्रहणमेवं सत्यभिविधौ सम्पदा चेति (५।४।५३) सम्पदानुप्रयोगः प्राप्नोति । तस्य प्रत्याहारेऽन्तर्भूतत्वात् । नैष दोषः । सनाद्यन्ता धातव (३।१।३२) इत्यतो धातुग्रहणमनुवर्त्तते । तेन च कृञ् विशिष्यते । कृञ् यो धातुरिति । न च सम्पदेत्ययं धातुः । किं तर्हि ? धातूपसर्गसमुदायः । तस्मान्नानुप्रयुज्यते । पाचयाम्बभूवेति । पचेर्ण्यन्तादाम् । अयामन्ताल्वाय्येत्न्विष्णुष्विति (६।४।५५) णेरयादेशः । भवतेर (७।४।७३) इत्यभ्यासस्यात्त्वम् । भुवो वुग् लुङ्लिटोरिति (६।४।८८) वुगागमः । किमर्थं पुनरिदमुच्यते ? यावता ऽमन्तमिदम् । अनभिव्यक्तक्रियापदार्थकम् । अतो हि क्रियाकालमात्रस्याभिव्यक्ति र्भवति । न साधनपुरुषसंख्यानाम् । नहि विना तिङन्तपदेन तासामभिव्यक्तिर्भवति । तस्मादपरिसमाप्तार्थत्वादेवामन्तस्यानुप्रयोगो भविष्यति । कृभ्वस्तीनामनुप्रयोगो यथा स्यात् पचादीनां मा भूत् । पचादीनामिति चेन्न । पचादीनां विशेषवाचित्वादनुप्रयोगस्यानुपपत्तेः । विशेषवाची ह्यनुप्रयुज्यमानः सामान्यवाचिनो ह्यामन्तस्यानुप्रयुज्यते । विशेषवाचिनो वा । तत्र न तावत् सामान्यवाचिन आमन्तस्य विशेषवाच्यनुप्रयोगमर्हति । तस्यासम्भवात् । कृभ्वस्तयो हि सामान्यवाचिनः । न च तेभ्यः केनचिदाम् विहितः । विशेषवाचिनोऽप्यामन्तस्य विशेषवाची समानार्थोऽनुप्रयुज्येत । भिन्नार्थो वा । तत्र समानार्थस्तावन्नानुप्रयुज्यते । उक्तार्थत्वात् । तस्मिंश्चानुप्रयोक्तुमिष्ट आमन्तस्य सकलक्रियाकालाद्यर्थाभिव्यक्तिर्भवति । सामर्थ्यात् स एवानुप्रयोक्तव्यो यत्र सर्वाभिव्यक्तिर्भवति । तत्र किमामन्तेन समानार्थेन पूर्वेण ? भिन्नार्थोऽपि नानुप्रयोगमर्हति । तदर्थानभिव्यक्तेः । अनुप्रयोगो ह्यामन्तस्यार्थस्याभिव्यक्तये क्रियते । न चात्यन्तभिन्नार्थेनामन्तवाच्यस्यार्थस्य सम्बन्धिनः साधनादयः शक्यन्तेऽभिव्यङ्क्तुम् । सामान्यवाचिना तु शक्यन्तेऽभिव्यङ्क्तुम् । विशेषसन्निधौ हि सामान्यशब्दस्य विशेषेऽवस्थानादामन्तस्य सन्निधौ सामान्यशब्दाः कृभ्वस्तयोऽनुप्रयुज्यमानास्तद्वाच्य एवार्थविशेषे वर्त्तन्ते । तस्मादेषामेव कृभ्वस्तीनामनुप्रयोगो भविष्यतीति नारब्धव्यमिदम् । नैतदस्ति । यथैव हि कृभ्वस्तयः क्रियासामान्य

वचना एवं विद्यतिरपीति तस्याप्यनुप्रयोगः स्यात्। तस्मात् तन्नि-वृत्त्यर्थमिदमारब्धम्। व्यवहितप्रयोगनिवृत्त्यर्थञ्च पाचयां देवदत्तश्चकारेति मा भूत्। व्यवहितप्रयोगनिवृत्तिस्त्ववधारणविशेषाल्लभ्यते। अवधारणन्तु सर्व-वाक्यानां व्यवच्छेदफलत्वात् सावधारणफलत्वाच्चकारस्यानुक्तसमुच्चयार्थत्वाद्वा लभ्यते। विपर्य्ययनिवृत्त्यर्थश्चारब्धव्यः। विपर्य्ययनिवृत्तिस्त्वनोः पश्चादर्थ-त्वाल्लभ्यते।

## ४१। विदाङ्कुर्वन्त्वित्यन्यतरस्याम्।

विदेर्लोट्याम्प्रत्यय इति। विदेर्लिट्याम् विहितो लोटि न प्राप्नोती-त्यतोऽपि निपात्यते। आममाश्रित्य लघूपधगुणः प्राप्नोतीति तदभावश्च। आम इति (२।४।८१) लेर्लुग् विधीयमानो लोटो न सिध्यतीत्यतो लोटो लुक्। लिट्-परस्य कृञोऽनुप्रयोग उक्तो लोट्परस्य न प्राप्नोति। सोऽपि निपात्यत इति सर्वत्र सम्बन्धनीयम्। कुर्वन्त्विति। बहुवचनम्। झेरन्तादेशः। एरुः (३।४।८६)। विकरणमाश्रित्य धातोर्गुणः। अत उत् सार्वधातुक (६।४।११०) इत्युत्त्वम्। विकरणस्य यणादेशः। इतिकरणमित्यादि। लोड्वचनाना-मुपलक्षणार्थत्वे सतीतिकरणस्य यदिष्टं तद्दर्शयितुमाह न केवलमित्यादि। कुरुतामिति। तस्थेत्यादिना (३।४।१०१) तसस्ताम्। कुर्विति। से ह्यपिच्चेति (३।४।८७) हिः। उतश्च प्रत्ययादित्यादिना (६।४।१०७) हेर्लुक्। कुरुतमिति। तसस्तम्।

## ४२। अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयां-क्रियाद्विदामक्रन्निति च्छन्दसि।

अभ्युत्सादयामिति। कुगतिप्रादय इति (२।२।१८) समासे कृत एकमेवेदं प्रथमान्तम्। एवं प्रजनयामित्येतदपि। शेषाण्यप्यामन्तानि प्रथमान्तान्येव। अकरिति। करोते र्लुङ्। प्रथमपुरुषैकवचनान्तम्। अक्रन्निति। प्रथमपुरुष बहुवचनान्तम्। सदिजनिरमीणामिति। षदॢ विशरणगत्यवसादनेषु। जनी प्रादुर्भावे। रमु क्रीड़ायाम्। ण्यन्तानामिति। हेतुमण्णिजन्तानाम्। पवतेरिति। पूङ् पवने। पुनातेरिति। पूञ् पवने। लिङ्याम् निपात्यत

इति । लिटि विङितत्वाल्लिङि न प्राप्नोति । ततो निपात्यते । अस्येति पुनातेः पवतेर्वा यन्तस्य । लुष्याम् निपात्यत इति । पूर्ववन्न प्राप्नोतीति कृत्वा । विदेरपि गुणाभावश्चेति । पुगन्तलघूपधस्येति गुणः ( ७।३।८६ ) प्राप्नोति । अतस्तदभावो निपात्यते । अभ्युत्सादयामिति । पूर्ववत्सेरयादेशः । लुङो लुक् । अकरिति । करोतेर्लुङ् । अड़ागमः । च्लिः । तस्य मन्त्रे घसह्वरेति (२।४।८०) लुक् । तिप् । गुण् । रपरत्वम् । हल्ङ्याब्भ्य इति (६।१।६८) तिलोपः । रेफस्य विसर्जनीयः । अभ्युदसीषददिति । णिश्रीत्यादिना (३।१।४८) चङ् । णौ चङ्युपधाया (७।४।११) इति ह्रस्वः । चङीति (६।१।११) द्विर्वचनम् । हलादिशेषः । सन्वल्लघुनीति (७।४।९३) सन्वद्भावे सतीत्त्वम् । दीर्घो लघोरिति (७।४।९४) दीर्घः । एषा प्रक्रिया यथायोगमुत्तरत्रापि वेदितव्या । प्रजनयामिति । जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेति ( ग, सू, १८८ ) मित्त्वाद् ह्रस्वत्वम् । चिकयामिति । ककारोऽप्यत्र निपात्यते । गुणायादेशौ । अचैषीदिति । अस्तिसिचोऽपृक्त (७।३।९६) इतीट् । सिचि वृद्धिः । रमयामिति । मितां (६।४।९२) ह्रस्वः । पावयामिति । आम इति (२।४।८१) लिङो लुक् । क्रियादिति । कृञ आशिषि लिङ् । तिप् । इतश्चेतीकारलोपः ( ३।४।१०० ) । यासुट् । रिङ् शयग्लिङ्क्ष्विति (७।४।२८) रिङादेशः । स्कोः संयोगाद्योरन्ते (८।२।२९) चेति सलोपः । पाव्यादिति । पूर्ववल्लिङ् । लिङाशिषीत्यार्द्धधातुकत्वा (३।४।११६) च्छपोऽभावः । णेरनिटीति ( ६।४।५१ ) णिलोपः । विदामिति । विदेर्लुङ् । आम् । गुणाभावः । लुङो लुक् । अक्रन्निति । कृञो लुङ् । च्लिः । झेरन्तादेशः । इतश्चेतीकारलोपः (३।४।१००) । संयोगान्तलोपः । च्लेर्मन्त्रे घसह्वरेति (२।४।८०) लुक् । अट् । यणादेशः । अवेदिषुरिति । सिच इट् । सिजभ्यस्तविदिभ्यश्चेति ( ३।४।१०९ ) झेर्जुस् । इतिकरणः प्रयोगदर्शनार्थ इति । अन्ये ऽप्येवंजातीयाश्छन्दसि वेदितव्या इत्यर्थः ।

## ४३ । च्लि लुङि ।

इकार उच्चारणार्थ इति । उच्चारणमेवास्यार्थो नान्यत् किञ्चित् प्रयोजन-

मित्यर्थः । एतेनेत्संज्ञाकार्य्यं न भवतीति दर्शयति । चकारः स्वरार्थ इति । चित ( ६।१।१६३ ) इत्यन्तोदात्तत्वं यथा स्यात् । अथ मन्त्रे घसह्वरण-शवृदहाद्वृच्कृगमिजनिभ्यो लेरित्यत्रेकारः (२।४।८०) सामान्यग्रहणार्थः । चकारस्तदविघातार्थः कस्मान्न विज्ञायते ? एवं मन्यते । मन्त्रे घसादिभ्यो नैवान्यो लिरस्ति यस्य सामान्यग्रहणार्थोऽयमिकारः स्यात् । तस्मिंश्चासति सामान्यग्रहणार्थे तदविघातार्थतापि चकारस्य नोपपद्यते । आम इत्यत्र (२।४।८१) तर्हीकारचकारौ कस्मान्न सामान्यग्रहणाविघातार्थौ भवतः ? तत्र हि मन्त्रे घसादि ( २।४।८० ) सूत्राल्लेरित्यनुवर्त्तते । तत्रेकार-चकारयोरभावे निरनुबन्धकग्रहणे न सानुबन्धकस्येति ( प, ८२ ) तस्यैव ग्रहणं स्यात् । न लिङ्लिटोः । नैतदस्ति । अत्र मा भूल्लिग्रहणानुवृत्तिः । अविशेषेणापि प्रत्ययमात्रस्य लुग् भविष्यति । नैवं सति किञ्चिदनिष्ट-मापद्यते । नहि सोऽस्ति प्रत्ययो यस्य लुकि सति किञ्चिदनिष्टं भवेत् । सत्यामपि लिग्रहणानुवृत्तौ न दोषः । अनेकस्मिन् ग्राह्ये सति सामान्यग्रहणं भवति । न चामः परस्यानेकं ग्राह्यमस्ति । नहि क्वचिदामः परो लिटो ऽन्यः प्रयोगोऽस्ति । तस्मादन्याभावाल्लिट एव ग्रहणम् । तत्र नार्थः सामान्यग्रह-णार्थेनेकारेण । नापि तदविघातार्थेन चकारेण । ननु च पावयाङ्क्रियादित्य-त्रान्योऽपि लिरस्ति । नैतदस्ति । निपातनादेव तत् सिद्धम् । तच्चावश्यं निपा-तनमाश्रयितव्यम् । अन्यथा क्रियमाणेऽपीकारे तदविघातार्थे च चकारे ऽभ्युत्सादयामिति न सिध्येत् । तस्मात् पूर्वोक्तमेव प्रयोजनं न्याय्यम् । यथोत्तरार्थ श्चकार स्तथोत्तरत्र प्रतिपादयिष्यामः । अथ किमर्थं च्लिप्रत्यय-मासज्य तस्य सिजादय आदिश्यन्ते । न सिचमेवोत्सर्गं विधाय तस्य क्सादय आदेशा विधीयेरन्निति ? नैवं शक्यम् । एवं हि शल इगुपधादनिटः क्स (३।१।४५) इत्यत्र च्लेरभावादनिड्ग्रहणं धातो र्विशेषणं विज्ञायेत धातोर-निट इति । तथाच गुहेर्न सिध्येदघुक्षदिति । तस्य ह्यूदित्वात् स्वरत्यादिना (७।२।४४) विकल्पेनेड्विधानान्नास्त्यनिट्त्वम् । च्लौ सत्यनिड्ग्रहणेन स एव विशिष्यते च्ले रनिट इति । गुहेश्च परस्य च्ले र्विभाषितेट्त्वाद् यदेण् नास्ति तदा च्ले रनिट्त्वात् क्सः सिद्धो भवति ।

## ४४ । च्लेः सिच् ।

इकार उच्चारणार्थ इति । एतेनेकोच्चारणादन्यप्रयोजनं नास्तीति दर्शयन्नित्संज्ञाया अभावमाह । ननु चासतीकारेऽनुबन्धेऽनिदिता (६।४।२४) मित्यनेनामंस्तेत्यत्रानुनासिकलोपः प्राप्नोति । ततस्तत्प्रतिषेधार्थोऽयमित्संज्ञकः कस्मान्न भवति ? एवं मन्यते । असत्यपीकारेऽनुबन्धेनैव सिजन्तस्यानुनासिकलोपेन भवितव्यम् । हनः सिजिति ( १।२।१४ ) कित्करणाज् ज्ञापकात् । तथाहि हन्तेः कित्करणस्यैतत् प्रयोजनमाहतेत्यत्रानुनासिकलोपो यथा स्याद् । यदि सिजन्तस्यानुनासिकलोपः स्याद् हन्तेः सिचः कित्करणमनर्थकं स्यात् । चकारः स्वरार्थ इति । अन्तोदात्तार्थः । ननु च सिचोऽनच्कत्वाच्चकारस्य स्वरार्थता नोपपद्यते । इटि कृते साच्को भवतीत्यदोषः । नन्वेवमपि लुङ्यत्राडागमस्योदात्तत्वे सतिशिष्टस्वरेणाद्युदात्तत्वेन भवितव्यम् । किमर्थश्चकारः ? यत्र तर्हि न माङ्योग(६।४।७४) इत्यड़ागमः प्रतिषिध्यते तत्र चकारस्य स्वरार्थता भविष्यति । ननु तत्रापि तिङ्ङतिङ (८।१।२८) इति निघातेन भवितव्यम् । तर्हि यत्र हि चेति (८।१।३४) निघातः प्रतिषिध्यते मा हि लावीदित्यादौ तत्र स्वरार्थो भविष्यति । ननु च च्लेस्तत्र स्थानिवद्भावादेव चित्स्वरो भविष्यतीति किमादेशे चकारोऽनुबध्यत इत्याह आगमानुदात्तत्वं हीत्यादि । यासुट उदात्तवचनेनागमानुदात्तत्वं ज्ञापयिष्यते । तच्च नाप्राप्ते स्वरान्तरे विधीयते । तथाहि ये प्रकृतिभक्ता आगमा अडानुक्प्रभृतय स्तेषां प्रकृतिस्वरः प्राप्नोति । ये च प्रत्ययभक्ता इडादयस्तेषां प्रत्ययस्वरः । तस्मादागमानुदात्तत्वं सर्वस्य स्वरान्तरस्य बाधकम् । ततश्चैव तद् यथा प्रत्यय स्वरं बाधते तथा चित्स्वरमपि स्थानिवद्भावकृतं बाधेत । तस्मादादेशेऽपि चकारोऽनुबध्यते । हिशब्दो यस्मादर्थे । इतिशब्दस्तस्मादर्थे । यस्मादेवं चित्स्वरमपि बाधेत तस्मात् स्थानिन्यादेशेऽपि हिश्चकारोनुबध्यते । ननु च मा हि लावीदित्यादावागमानुदात्तत्वं यदि स्याच् च्लेश्चित्करणमनर्थकं स्यात् । प्रयोजनाभावात् । तस्माच् च्लेश्चित्करणसामर्थ्यादागमानुदात्तत्वेन चित्स्वरो न बाधिष्यत इत्यपार्थकं सिचश्चित्करणम् । नापार्थकम् । पक्षे

सार्थकत्वात्। कथम्? इह हि यथा व्यक्तिपदार्थपक्षमाश्रित्य सरूपाणामेकशेष इत्येतत्(१।२।६४)सूत्रमारब्धं तथा व्यक्तिपदार्थपक्षमाश्रित्य द्विश्चकारोऽनुबध्यते। व्यक्तौ हि पदार्थे यथा चित्स्वरलक्षणं प्रतिलक्ष्यं प्रवर्त्तते तथागमानुदात्तत्वज्ञापकमपि यासुट उदात्तवचनम्। ततश्च मा हि लावीदित्यत्रागमानुदात्तत्वं तेन ज्ञापितमेव। तथाच यथेह चित्स्वरो भवति तथागमानुदात्तत्वेनापि भवितव्यम्। अन्यथा ह्येतद्विषयस्य ज्ञापकस्य वैयर्थ्यं स्यात्। न च द्वयोरप्यनुदात्तयोर्यौगपद्यं सम्भवतीति पर्य्यायः स्यात्। तत्र पक्षे स्थानिनश्चकारस्य सार्थकत्वात् कुतो वैयर्थ्यप्रसङ्गः? तस्माद् द्विश्चकारोऽनुबद्धः। अन्यथा ह्येकस्मिन् पक्षे सावकाशश्चित्स्वरः पक्षान्तर आगमानुदात्तत्वेन बाध्येत। द्विरनुबध्यमाने तु चकारे यद्यपि पक्षेऽनुदात्तोऽभिनिर्वर्त्तते तथाप्यभिनिर्वृत्ते तस्मिन् द्विश्चकारानुबन्धकरणसामर्थ्यात् पुनश्चित्स्वरोऽभिनिर्वर्त्तते। अतो न दोषः। स्पृशमृशेत्यादि। स्पृशिमृशिकृषिभ्यः शल इगुपधादनिटः क्स (३।१।४५) इति क्से प्राप्ते तृपिदृपिभ्यां पुषादित्वादङि प्राप्ते सिज्वा वक्तव्यो व्याख्येयः। तत्रेदं व्याख्यानम्। क्सविधौ विदांकुर्वन्त्वित्यन्यतरस्यामित्यतो (३।१।४१)मण्डूकप्लुतिन्यायेनान्यतरस्यांग्रहणमनुवर्त्तते। पुषादिसूत्रेऽप्यात्मनेपदेष्वित्यतः (३।१।५४)। सा च व्यवस्थितविभाषितोभयत एव विज्ञायते। तेन स्पृशिमृशिकृषिभ्यो विकल्पेन क्सो भविष्यति। अन्येभ्यस्तु नित्यम्। तृपिदृपिभ्यामन्यतरस्यामङ् च भविष्यति। अन्येभ्यस्तु पुषादिभ्यो नित्यमेव। तेन यस्मिन् पक्षे क्साङोरभाव स्तस्मिन् पक्षे सामान्यविहितः सिजेव भवति। अस्पृक्षदिति। स्पृश संस्पर्शे। क्सः। व्रश्चादिना (८।२।३६) षत्वम्। षढोः कः सीति (८।२।४१) कत्वम्। आदेशप्रत्यययोरिति (८।३।५९) षत्वम्। अस्प्राक्षीदिति। अनुदात्तस्य (६।१।५९) चर्दुपधस्यान्यतरस्यामित्यमागमः। वदव्रजेत्यादिना (७।२।३) वृद्धिः। ऋकारस्य यणादेशः। अस्पार्क्षीदिति। सिच्। यदाऽमागमो नास्ति तदा ऋकारस्यैव वृद्धिः। एवं मृश आमर्शने। कृष विलेखन इत्येतयोरपि रूपद्वयं वेदितव्यम्। अतृपदिति। तृप प्रीणने। अत्राप्सीदतार्प्सीदिति। पूर्ववत्। एवं दृप हर्षणमोचनयोरित्यस्यापि रूपत्रयं वेदितव्यम्।

४५ । शल इगुपधादनिटः क्सः ।

अधुक्षदिति । दुह प्रपूरणे । दादेर्धातोर्घः (८।२।३२) । एकाचो (८।२।३७) बशो भषित्यनेन दकारस्य भष्भावेन धकारः । घकारस्य खरि चेति (८।४।५५) चर्त्वं ककारः । अलिक्षदिति । लिह आस्वादने । हो ढ इति (८।२।३१) ढत्वम् । पूर्ववत् षत्वकत्वे । अधाक्षीदिति । दह भस्मीकरणे । पूर्ववड् ढत्वकत्वषत्वभष्भावचर्त्वानि । अकोषीदिति । कुष निष्कर्षे । लघूपधगुणः ।

४६ । श्लिष आलिङ्गने ।

अत्रेति । आलिङ्गने नियमार्थमेतदिति । पूर्वेण सिद्धे सत्यारम्भात् । अश्लिक्षदिति पूर्ववत् कत्वम् । समाश्लिषज्जतु काष्ठमिति । पुषादित्वादङ् । प्रत्यासत्तिरत्र नैरन्तर्यलक्षणा श्लिषेरर्थो न त्वालिङ्गनम् । यद्ययं पुषादौ पठ्यते कथमिदं नियमार्थम् ? सिद्धे सत्यारम्भो नियमाय भवति । नच पूर्वेण क्सः सिद्धोऽङा बाधितत्वात् । एवं मन्यते । श्लिष इति योगविभागः कर्त्तव्यः । किमर्थम् ? अङ्बाधनार्थम् । क्स एव भवति । नाङ् । तत आलिङ्गन इति किमर्थम् ? नियमार्थम् । आलिङ्गन एव क्सो भवति । अन्यत्राङेवेति । यद्येवं श्लिष इत्येवं योगविभागो यथाङं बाधते तथा चिण्भावकर्मणोरिति (३।१।६७) चिणमपि बाधेत । उपाश्लेषि कन्या देवदत्तेनेति । नैतदस्ति । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानि ( प, ६० ) त्ययमङं बाधते न चिणम् । अथवा चिण्भावकर्मणोरित्यत्र (३।१।६६) चिण् ते पद (३।१।६०) इत्यतश्चिणित्यनुवर्त्तमाने पुनश्चिण्ग्रहणस्यैतत्प्रयोजनं चिणेव यथा स्यात् । यदन्यत् प्राप्नोति तन्मा भूदिति । अथ श्रिषु श्लिषु प्रुषु प्लुषु दाह इत्येतस्य श्लिषो ग्रहणं कस्मान्न भवति । आलिङ्गने तस्य वृत्त्यसम्भवात् । अनिट इत्यधिकाराच्च । अस्य सेट्त्वात् ।

४७ । न दृशः ।

अदर्शदिति । अङ् । ऋदृशोऽङि गुण ( ७।४।१६ ) इति गुणः । अद्राक्षीदिति । सृजिदृशोर्झल्यमकितीत्यमागमः (६।१।५८) । वदव्रजेत्यादिना वृद्धिः (७।२।३) । पूर्ववत् षत्वकत्वे ।

## ४८ । णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् ।

चकारो विशेषणार्थ इति । चङी (६।१।११) त्यत्राङीत्युच्यमाने ऽस्यतिवक्तिख्यातिभ्योऽङित्यनेनापि ( ३।१।५२ ) विहितेऽङि द्विर्वचनं स्यात् । अचीकरदजीहरदिति । चङीति (६।१।११) द्विर्वचनं कृहृशब्दयोः । उरत्त्वम् । रपरत्वम् । कुहोश्चुरिति (७।४।६२) चुत्वम् । ककारस्य चकारः । हकारस्यापि झकारः । अभ्यासे चर्च्च इति (८।४।५४) झकारस्य जकारः । शेषमभ्युदसीषददित्यनुसारेण वेदितव्यम् । अशिश्रियदित्यादि । श्रिञ् सेवायाम् । द्रु द्रु गतौ । स्रु गतौ । अचि श्नुधात्वित्यादिना (६।४.७७) यथायोगमियङुवङौ । अकारयिषातामिति । कर्मणि द्विवचनमाताम् । इड्गुणायादेशषत्वानि । कमेरुपसंख्यानमिति । ननु कमेर्णिङिति (३।१।३०) णिङि कृते ण्यन्तत्वादेव कमेश्चङ् सिद्धः । तत् कथमुपसंख्यायत इत्याह आयादय इत्यादि । अचकमतेति । अनुदात्तेत्त्वादात्मनेपदम् । पूर्ववदभ्यासस्य चुत्वम् । णिङभावपक्षे सन्वद्भाव इति । नत्वणिङ्पक्ष इति दर्शयति । यस्मात् सन्वल्लघुनि चङ्पर (७।४।९३) इत्यस्य चङ् परो यस्माण्णेः स चङ्परो णिः । तस्मिन् परतो यदङ्गं तस्याभ्यासस्य सन्वत् कार्य्यं भवतीत्येषोऽर्थः । न चायमर्थो णिङभावपक्षे सम्भवति ।

## ४९ । विभाषा धेट्श्व्योः ।

अदधदिति । आतो लोप इटि (६।४।६४) चेत्याकारलोपः । पूर्ववदभ्यासस्य जश्त्वं दकारः । अधासीदिति । लुङ् । सिच् । यमरमनमातां (७।२।७३) सक् चेतीट् । प्रकृतेश्च सगागमः । अस्तिसिचोऽपृक्ते (७।३।९६) इतीट् । इट ईटीति (८।२।२८) सिचो लोपः । अशिश्वियदिति । पूर्ववदियङ् । अङ्प्यत्र विकल्प्यत इति । जृस्तम्भ्वित्यादि ( ३।१।५८ ) सूत्रेण । अश्वदिति । श्वयतेर(७।४।१८)त्यत्वम् । अतो गुणे पररूपत्वम् । अश्वयीदिति । ह्म्यन्तक्षणश्वसेत्यादिना (७।२ ५) वृद्धिप्रतिषेधे कृते गुणोऽयादेशः । अधिषातामिति । कर्मणि द्विवचनमाताम् । स्थाघ्वोरिच्चेति (१।२।१७)कित्त्वमित्त्वञ्च ।

## ५० । गुपेश्छन्दसि ।

यत्रायप्रत्ययो नास्ति तत्रायं विधिरिति । अनायप्रत्ययान्तस्योपादानात् । आयप्रत्ययान्तस्य धात्वन्तरत्वात् । अजूगुपतमिति । गुपू रक्षणे । लुङ् । द्विर्वचनम् । थस् । तस्य तस्थेत्यादिना (३।४।१०१) तम् । तुजादीनां दीर्घोऽभ्यासस्येति (६।१।७) दीर्घः । अगौप्तमिति । झलो झलीति सिचो ( ८।२।२६ ) लोपः । तस्यासिद्धत्वाद् वदव्रजेत्यादिना ( ७।२।३ ) वृद्धिः । अगोपिष्टमिति । ऊदित्त्वात् स्वरतीत्यादिना ( ७।२।४४ ) पक्ष इट् । नेटीति ( ७।२।४ ) वृद्धौ प्रतिषिद्धायां लघूपधगुणः । अगोपायिष्टमिति । आयप्रत्ययान्तात् सिच् । इट् । अतो लोपः ( ६।४।४८ ) । रूपत्रयमिति । पाश्चात्यम् ।

## ५१ । नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।

एभ्यो ण्यन्तेभ्य इति । ऊनयत्येलयतिभ्यां चुरादिण्यन्ताभ्याम् । पूर्वेणेति । णिश्रीत्यादिना (३।१।४८) । औनयीदिति । तिप् । सिच् । इट ईटीति ( ८।२।२८ ) सिचो लोपः । तस्यासिद्धत्वाद् वृद्धौ प्राप्तायां ह्म्यन्तक्षणेति (७।२।५) प्रतिषेधः । गुणायादेशौ । अङ्जादीनामित्याट् (६।४।७२) । आटश्चेति (६।१।९०) वृद्धिः । औनिनदिति । अजादेर्द्वितीयस्येति (६।१।२) द्विर्वचनम् । णिलोपः । ध्वनयीदिति । ध्वनयीदित्येतदेव निपातनाददन्तत्वम् । अतो लोपः (६।४।४८) । तस्य स्थानिवद्भावादत उपधाया (७।२।११६) इति वृद्धिर्न भवति । बहुलं छन्दस्यमाङ्योगेऽपीत्यड् (६।४।७५) निषेधः । अदिध्वनदिति । सन्वद्भावादित्त्वम् । ऐलिलदिति । अजादेर्द्वितीयस्येति (६।१।२) लिशब्दस्य द्विर्वचनम् । पूर्ववदाट् । आर्दिददिति । इहापि द्वितीयस्यैकाचो द्विर्वचनम् पूर्ववत् । रेफस्तु न द्विरुच्यते । नन्द्राः संयोगादय (६।१।३) इति प्रतिषेधात् । आट् । वृद्धिः ।

## ५२ । अस्यतिवक्तिख्यातिभ्योऽङ् ।

ब्रूआदेशो वेति । ब्रुवो वचिरिति (२।४।५३) । चक्षिङादेशो वेति । चक्षिङः ख्याञिति ( २।४।५४ ) । पर्यास्थतेति । उपसर्गादस्यत्यूह्यो र्वा

(१।३।२९,वा) वचनमित्युपसंख्यानादात्मनेपदम्। अस्यते (७।४।१७) थुक्। अवोचदिति। वच उम् (७।४।२०)। आख्यदिति। पूर्ववदाकारलोपः।

## ५३। लिपिसिचिह्वश्च।

अह्वदिति। पूर्ववदाकारलोपः। अथ किमर्थो योगविभागः? नास्यतिवक्तिख्यातिलिपिसिचिह्वश्चेत्येक एव योगः क्रियतामित्याह पृथगित्यादि। उत्तरसूत्रे लिपिप्रभृतिभ्य एवात्मनेपदेष्वङ्विकल्पो यथा स्यादित्येवमर्थो योगविभागः। एकयोगे ह्यस्यत्यादीनामप्युत्तरत्रानुवृत्तिः स्यात्। तथाच तेभ्योऽपि विकल्पेनाङ् प्रसज्येत।

## ५४। आत्मनेपदेष्वन्यतरस्याम्।

स्वरितञित इत्यात्मनेपदमिति। लिपिसिच्योः स्वरितत्त्वात्। ह्वयते स्तु ञित्त्वात्। अलिप्त। असिक्तेति। झलो झलीति (८।२।२६) सिचो लोपः। तस्या (८।२।२६) सिद्धत्वाल्लघूपधगुणः प्राप्तः। स लिङ्सिचावात्मनेपदेष्विति (१।२।११) कित्त्वान्न भवति। चोः कुरिति (८।२।३०) कुत्वम्।

## ५५। पुषादिद्युताद्य्लृदितः परस्मैपदेषु।

लृकार इद् येषां ते लृदितः। पुषादिरस्त्येव भ्वाद्यन्तर्गणः। पुष पुष्टौ। श्रिषु श्लिषु प्रुषु प्लुषु दाह इत्येवमादिः। अस्ति च दिवाद्यन्तर्गणः। पुष पुष्टौ। शुष शोषण इत्येवमादिः। अस्ति च क्र्याद्यन्तर्गणः। पुष पुष्टौ। मुष स्तेय इत्येवमादिः। तदिह कस्य ग्रहणमित्याह पुषादिर्दिवाद्यन्तर्गण इत्यादि। यदि भ्वाद्यन्तर्गणो गृह्येत पुषाद्यनन्तरं द्युतादीनां पाठात् पृथग् ग्रहणं न कुर्य्यात्। पुषादिग्रहणेनैव गृहीतत्वात्। तस्मात् स तावन्न गृह्यते। क्र्याद्यन्तर्गणोऽपि नैव गृह्यते। तत्र हि चत्वार एव पठ्यन्ते धातवः। पूर्वोक्तौ द्वौ खच भूतप्रादुर्भावे ग्रह उपादान इत्येतौ। यदि चैते विवक्षिताः स्युर्लृदित एवैतान् कुर्य्यात्। एवं पुषादिग्रहणं न कर्त्तव्यं भवति। तस्मात् पारिशेष्याद्दिवाद्यन्तर्गणानां पुषादीनां ग्रहणं विज्ञायते। अथ पुषादय लृदितः कस्मान्न कृताः? न। नहि ते लृदितः शक्यन्ते

कर्त्तुम् । ऌदित्त्वे हि तेषां य उदित आदितश्च पठ्यन्ते तेषामुदितो वा (७|२|२६) ऽदितश्चेत्येतयोः (७|२|२६) कार्य्ययोरभावः स्यात् । अथ द्युतादयः कस्माद् ऌदितो न कृताः । यत एव हेतोः पुषादय ऌदितो न कृत स्तत एव द्युतादयश्च । तेष्वपि हि केचिदुदित आदितश्च पठ्यन्ते । तत्र पुषादय आ दिवादि-परिसमाप्तेः । यत्तु ष्णिह प्रीतावित्यनन्तरं वृदिति वृत्करणं तद् रधादीनां परिसमाप्त्यर्थम् । न पुषादीनामित्याचार्य्याणां स्मृतिः । द्युतादयस्तु कृपू सामर्थ्य इत्येवंपर्य्यन्ताः । तदनन्तरं वृत् । घट चेष्टायामिति वृत्करणात् । व्यद्युतदिति । द्युद्भ्यो लुङीति ( १।३।९१ ) पक्षे परस्मैपदम् । अश्वितदिति । श्विता वर्णे । अगमदशकदिति । गम्लृ गतौ । शक्लृ शक्तौ । व्यद्योतिष्टेति । अनुदात्तेत्त्वादात्मनेपदम् । अलोटिष्टेति । रुट लुट प्रतीघाते ।

## ५६ । सर्त्तिशास्त्यर्त्तिभ्यश्च ।

असरदिति । ऋदृशोऽङि (७।४।१६) गुणः । अशिषदिति । शास (६।४।३४) इदङ्हलोरितीत्त्वम् । शासिवसीति (८।३।६०) षत्वम् । आरदिति । पूर्ववद् गुणः । अजादित्वादाट् । सवर्णदीर्घः । पृथगित्यादि । यदि पुषादिद्युताद्य्ऌदित्सर्त्तिशास्त्यर्त्तिभ्यश्चेत्येकयोग एव क्रियेत सर्त्तिप्रभृतिभ्यः परस्मैपद एव स्यात् । नात्मनेपदे । तस्मादेभ्य एवात्मनेपदेऽपि यथा स्यादित्येवमर्थं पृथग्योगकरणम् । समरन्तेति । सम्पूर्वादर्त्तेः समो (१।३।२९)गम्यादिनात्मनेपदम् । बहुलं छन्दस्यमाङ्योगेऽपीत्य(६।४।७५) डागमाभावः । छान्दसत्वादस्य प्रयोगस्य । ननु च यद्यात्मनेपदेष्वङ् भवत्येव तत् किं परस्मैपदेष्वित्यनुकर्षणार्थेन चकारेणेत्याह तच्चेत्यादि । तदिति परस्मैपदेष्वित्येतदपेक्षते । उत्तरत्रोपयोगं यास्यतीति । न त्विहैवोपयोगं याति । अन्यथा पृथग्योगकरण मनर्थकं स्यात् ।

## ५७ । इरितो वा ।

इश्च रश्च इरौ । तौ इतौ यस्य स इरित् । तत्रेकारस्योपदेशेऽजनु-(१।३।२) नासिक इदितीत्संज्ञा । रेफस्य हलन्त्यमिति (१।३।३) । अथवा इरिद् यस्यैव समुदायस्य तस्येत्संज्ञा । न प्रत्येकमवयवस्य । इरित्ययं समुदाय

इत्संज्ञको यस्य स इरित्। समुदायस्येत्संज्ञा ऽस्मादेव वचनाद् वेदितव्या। न ह्यन्येन केनचित् तस्येत्संज्ञा विहिता (L)। अभैत्सीदिति। वदव्रजेत्यादिना (७।२। ) वृद्धिः। अस्तिसिचोऽपृक्त (७।३।९६) इतीट्। अरुद्ध। अभित्तेति। स्वरितेत्त्वादात्मनेपदम्। पूर्ववत् सिचो लोपः।

## ५८। जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च।

स्तम्भेरुदित्करण मुदितो वेति (७।२।५६)विशेषणार्थम्। अस्तभदिति। अनिदितामित्यनुनासिकलोपः (६।४।२४)। अश्वदित्यादि। रूपत्रयं विभाषा धेट्श्व्योरित्यत्र (३।१।४९) व्युत्पादितम्। ग्लुचुग्लुञ्च्वो रन्यतरोपादाने रूपत्रयं सिध्यतीति। कथं कृत्वा? यदि तावद् ग्लुचिरुपादीयेत तस्याङि सिचि चाग्लुचदग्लोचीदित्येतद् रूपद्वयं सिध्यति। ग्लुञ्चेस्तु सिचि तृतीय मग्लुञ्चीदिति। अथ ग्लुञ्चि रुपादीयेत तस्याङि सिचि चाग्लुचदग्लुञ्चीदिति रूपद्वयं सिध्यति। ग्लुचेस्तु सिचि तृतीय मग्लोचीदिति। यद्येवं किमर्थमुभयोरुपादानम्? रूपत्रयं हि साध्यम्। तच्चान्यतरोपादानेऽपि सिध्यत्येवेत्यत आह अर्थभेदादित्यादि। तु शब्दोऽवधारणे। भिन्नो ह्यनयोरर्थः। तत्रान्यतरस्योपादाने य एव नोपादीयेत तत्रैवार्थेऽग्लुचदिति न सिध्येत्। तस्माद् भिन्नार्थत्वाद् द्वयोरुपादानम्। केचिदित्यादि। अनेकार्थत्वाद्धातूनामभिन्नार्थता न विरुध्यते। तस्मादुभयोरुपादानमग्लुचदित्यस्य सिद्धय इति।

## ५९। कृमृदृरुहिभ्यश्छन्दसि।

डुकृञ् करणे। मृङ् प्राणत्यागे। दृ विदारणे। रुह जन्मनि। तत्राद्यानां त्रयाणां सिचि प्राप्ते रुहेश्च शल इगुपधादनिट (३।१।४६) इति क्से प्राप्ते। अकरदिति। पूर्ववद् गुणः। अमरदिति। व्यत्ययेन परस्मैपदम्। भाषायान्त्वकार्षीत्। अमृत। अदारीत्। अरुक्षदिति भवति।

## ६०। चिण् ते पदः।

सामर्थ्यादित्यादि। तशब्दोऽयमस्यैवात्मनेपदैकवचनम्। अस्ति च परस्मै-

---

(L) सूत्रकारेणेति शेषः। The न्यासकार appears to ignore the वार्त्तिक "इर (१।३।७, वा.) उपसंख्यानम्।"

पदमध्यमपुरुषबहुवचनं यस्यस्य स्थाने विधीयते। तत्रास्य धातोरात्मनेपदित्वात् परस्मैपदबहुवचनं न सम्भवति । अतः पारिशेष्यादात्मनेपदैकवचनस्य ग्रहणम् । इयमेव च पारिशेष्यसिद्धिः सामर्थ्यम् । उदपादीति । चिणो लुगिति (६।४।१०४) तशब्दस्य लुक् । उदपत्सातामिति । आताम् । खरि (८।४।५५) चेति चर्त्वम् । उदपत्सतेति । झ आत्मनेपदेष्वनत (७ १।५) इत्यदादेशः । इह वेति निवृत्तम् । उत्तरत्रान्यतरस्यांग्रहणात् ।

## ६१ । दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।

जनी प्रादुर्भावे । बुध अवगमन इति । एतेन जन जनने बुध बोधन इत्यनयोः परस्मैपदिनोरिहाग्रहणमिति दर्शयति । दीप्यादिभिरात्मनेपदिभिः साहचर्याज्जनिबुध्योरात्मनेपदिनोरेव ग्रहणं न्याय्यमित्यभिप्रायः । अजनीति । जनिवध्योश्चेति ( ७।३।३५ ) वृद्धिप्रतिषेधः । अबोधीति । लघूपधगुणः । अबुद्धेति । पूर्ववत् सिचो लोपः । झषस्तथोर्धोऽध (८।२।४०) इति धकारः । झलाञ्जश् ( ८।२।३९ ) झशीति धातुधकारस्य दकारः । सर्वत्रानुदात्तेत्त्वादात्मनेपदम् । इह चिण्श्च्लीत्यादेः (३।१।४८) सूत्रात् कर्त्तरीत्यनुवृत्तेः कर्त्तर्य्येव विभाषा । भावकर्मणोस्तु चिण् भावकर्मणोरिति ( ३।१।६६ ) नित्यमेव चिण् भवति ।

## ६२ । अचः कर्मकर्त्तरि ।

कर्म चासौ कर्त्ता चेति कर्मकर्त्ता । यदा तदेव कर्म सौकर्य्यात् कर्त्तृत्वेन विवक्ष्यते तदा तस्य कर्त्तृत्वं भवति । एतच्च तशब्दस्य विशेषणम् । यस्तशब्द इति । प्राप्तविभाषेयमिति । कर्मवदित्यतिदेशा (३।१।८७) च्चिणादेशस्य प्राप्तत्वात् । अकारीति । अचो ञ्णितीति (७ ३।११५) वृद्धिः । अकृतेति । ह्रस्वादङ्गादिति सिचो (८।२ २७) लोप । तस्यासिद्धत्वाद् गुणः प्राप्त उश्चेति (१।२।१२) कित्त्वान्न भवति । अभेदीति । अत्रातिदेशान्नित्यमेव भवति । अकारि कटो देवदत्तेनेति । अत्र शुद्धे कर्मणि तशब्दः । तेन चिण् भावकर्मणोरिति ( ३।१।६६ ) नित्यमेव चिण् भवति । एतच्च कर्त्तरीत्येतदिह निवृत्तमित्यपेक्ष्य प्रत्युदाहृतमिति वेदितव्यम् ।

६३। दुहश्च।

न दुहस्नुनमां यक्चिणाविति (३।१।८९) प्रतिषेधे प्राप्ते वचनम्। दुहिग्रहणं तत्र यक्प्रतिषेधार्थम्। अदुग्धेति। शल इगुपधादनिटः (३।१।४५) क्स इति क्सः। तस्य क्सस्याचि (७।३।७२) त्यतः क्सस्येत्यनुवर्त्तमाने लुग्वा दुहदिहेति (७।३।७३) लुक्। दादेर्धातोर्घः (८।२।७२)। पूर्ववज्जश्त्वम्। अदोहीति। शुद्धे कर्मणि तशब्दः। तेनात्र नित्यं चिण् भवति।

६४। न रुधः।

कर्मवदित्यतिदेशे प्राप्तस्य चिणोऽयं प्रतिषेधः। अरुद्धेति। झलो (८।२।२६) झलीति सिचो लोपः। तस्यासिद्धत्वाल्लघूपधगुणः प्राप्तो लिङ् (१।२।११) सिचावात्मनेपदेष्विति कित्त्वान्न भवति। पूर्ववद् धत्वजश्त्वे।

६५। तपोऽनुतापे च।

तपस्तपःकर्मकस्यैवेत्यति (३।१।८८) देशाच्चिण् भावकर्मणोरिति (३।१।६६) प्राप्तस्य चिणोऽयं प्रतिषेधः। अतप्त तपस्तापस इति। उपवासादिलक्षणं तपस्तापसं तपति दुःखयतीत्यर्थः। तपसोऽत्र कर्त्तृत्वम्। तापसस्य तु कर्मत्वम्। यदा तु स तापसस्स्वर्गस्थीभूतः स्वर्गाय तपस्तप्यते तदायं प्रयोगोऽतप्त तपस्तापस इति। इदानीं तपसः कर्मत्वं तापसस्य कर्त्तृत्वम्। तपःशब्दश्चेह ज्ञानविशेषे स्वर्गाद्यवाप्तिहेतौ वर्त्तते। तपिरभ्यर्जने। अर्जितवान् ज्ञानविशेषं तापस इत्यर्थः। अन्ववातप्त पापेन कर्मणेति। यत् पूर्वं पापकर्म कृतं तेन पश्चात् तप्तोऽभ्याहत इत्यर्थः। कर्मण्यत्र लकारः।

६६। चिण् भावकर्मणोः।

भावकर्मणोरर्थयोरिति। तशब्दस्येदं विशेषणम्। भावकर्मणोर्यस्तशब्द इति। अथ चिण्ग्रहणं किमर्थम्? यावता चिण् ते पद (३।१।६०) इत्यतश्चिण्ग्रहणमनुवर्त्तत एव। स्यादेतत्। दीपजने (३।१।६१) त्यन्यतरस्यांग्रहणेन न रुध इति (३।१।६४) निषेधेन च सम्बद्धं तत्। अतो यदि तदनुवर्त्तेत तत्-सम्बद्धमेवानुवर्त्तेतेति। एतच्च नास्ति। अन्यतरस्यांग्रहणस्य पूर्वयोरेव

योगयोर्निवर्त्तितत्वात् । प्राप्तिपूर्वकत्वाच्च निषेधस्य । यदि भावकर्मणो श्चिणः प्राप्तिः स्यात् तदा तत्प्रतिषेधार्थं नेत्यस्यानुवृत्तिः स्यात् । न च तयो स्तस्य केनचित् प्राप्तिः । चिण्विधौ सर्वत्र कर्त्तरीत्यनुवृत्तेः । तदपार्थकम् पुनश्चिण्-ग्रहणमित्याह चिण्ग्रहणं विस्पष्टार्थमिति । असति चिण्ग्रहणे मन्दधियः प्रतिपत्तिगौरवं स्यात् । अतस्तमनुग्रहीतुं न्यायप्राप्तस्यैवार्थस्य स्पष्टीकरणाय पुनश्चिण्ग्रहणम् ।

## ६७ । सार्वधातुके यक् ।

भावकर्मणोरित्यनुवर्त्तते । तच्चेह सार्वधातुकस्य विशेषणमिति दर्शयन्नाह भावकर्मवाचिनीत्यादि । भावकर्मणोरर्थयोर्वर्त्तते यत् सार्वधातुकं तद् भावकर्म-वाचि । ताच्छील्य आवश्यके णिनिः । अथैवं कस्मान्न भवति भावकर्मणोरभि-धेययोः सार्वधातुके परतो यग् भवतीति ? अशक्यमेवं वक्तुम् । सार्वधातुक-वाच्यत्वेन भावकर्मणोः शास्त्रे प्रतिज्ञानात् । कुत एतदिति चेत् ? लः कर्मणि च भावे चाकर्मकेभ्य (३।४।६९) इति वचनात् । ननु चाकारि कटो भवता । अशायि भवता । अविभर्भवानित्यादौ सार्वधातुकाभावेऽपि कर्मादीनां प्रतीय-मानत्वात् सार्वधातुकार्थता नोपपद्यते । नहि यो यदभावे प्रतीयते स तस्यार्थो युज्यते । अन्वयव्यतिरेकसमधिगम्यत्वादर्थस्य । नैष दोषः । नह्ययं नियमो-ऽन्वयव्यतिरेकसमधिगम्यतयैवार्थवत्तया भवितव्यमिति । किं तर्हि ? प्रतिज्ञा प्रापिता च सा भवति यथा क्त्वादीनाम् । अस्ति च सार्वधातुकस्येति यत् किञ्चिदेतत् । शय्यत इति । अयङ् यि (७।४।२२) क्ङितीत्ययङादेशः । यग्-विधान इत्यादि । ननु च कर्मवदित्यतिदेशादेव यग् भविष्यतीति किमुपसंख्याने-नेत्यत आह विप्रतिषेधाद्धीत्यादि । कर्त्तरि (३।१।६८) शबित्यस्यावकाशः शुद्धः कर्त्ता भवतीति । सार्वधातुके यगित्यस्यावकाशः शुद्धं कर्म पच्यत ओदन इति । पच्यत ओदनः स्वयमेवेत्यत्र कर्मवद्भावाद् यक् प्राप्नोति । वत्करणात् स्वाश्रयमपि यथा स्यादिति कर्त्तृत्वस्य सम्भवाच्छबपि । तत्र परत्वाच्छबेव स्यात् । शप्शास्त्रं यक्शास्त्रात् परं भवति । तस्मात् कर्मकर्त्तरि यक उपसंख्यानं प्रतिपादनं कर्त्तव्यम् । प्रतिपादनं त्विदम् । ज्ञापकात् कर्म कर्त्तर्यपि यग्भविष्यतीति ।

किं तज्ज्ञापकम्। न दुहस्नुनमां यक्चिणाविति (३।१।८९) प्रतिषेधः। यदि हि कर्मकर्त्तरि यग् न स्यात् प्रतिषेधोऽनर्थकः स्यात्। विप्रतिषेधाद्धि शपो बलीयस्त्वं शास्त्रातिदेशत्वमभ्युपेत्योक्तम्। नत्वसौ शास्त्रातिदेशः। किं तर्हि? कार्य्यातिदेशः। कार्य्यातिदेशसूत्रमेव स्वतन्त्रं यगादेः कार्य्यस्य विधायकम्। तच्च परम्। अतो विप्रतिषेधाद् यक एव बलीयस्त्वम्।

## ६८। कर्त्तरि शप्।

पकारः स्वरार्थ इति। अनुदात्तौ (३।१।४) सुप्पितावित्यनुदात्तत्वं यथा स्यात्। शकारः सार्वधातुकसंज्ञार्थ इति। तिङ्शित् (३।४।११३) सार्वधातुकमिति सार्वधातुकत्वं यथा स्यात्। श्यन्प्रभृतीनामपि शकारस्यैतत् प्रयोजनं वेदितव्यम्।

## ६९। दिवादिभ्यः श्यन्।

शपोऽपवाद इति। तत्प्राप्तावेवास्यारम्भात्। नकारः स्वरार्थ इति। ञ्नित्यादिर्नित्यमिति (६।१।१९७) पदस्याद्युदात्तत्वं यथा स्यात्। दीव्यतीति। हलि चेति (८।२।७७) दीर्घः।

## ७०। वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः।

उभयत्र विभाषेयमिति। भ्रमेरनवस्थानार्थस्य क्लमित्रस्योश्च दैवादिकत्वात् प्राप्ते त्रुटे स्तौदादिकत्वाद् भ्राशप्रभृतीनां भौवादिकत्वादप्राप्ते। द्वयोरपि ग्रहणमिति। विशेषानुपादानात्। अर्थभेदाच्च। अन्यो हि चलनार्थः। अन्यश्चानवस्थानार्थः। तथाहि चलन्नपि कार्य्येषु स्थिरारम्भी स्थिर इत्युच्यते। अचलन्नपि कार्य्येष्वस्थिरारम्भाऽस्थिर इत्युच्यते। तत्रार्थद्वयेऽपि प्रत्ययद्वयं यथा स्यादिति द्वयोरपि ग्रहणम्। रूपभेदोऽप्यस्त्येव। चलनार्थस्य श्यनि विहिते दीर्घत्वन्न भवति। अशमादित्वात्। शपि तु द्वयोरपि तुल्यम्। तेन त्रीणि रूपाणि भवन्ति भ्रम्यति भ्रमति भ्राम्यतीति। भ्राश्यत इति। अनुदात्तेत्त्वादात्मनेपदम्। क्रामतीति। क्रमः परस्मैपदेष्विति (७।३।७६) दीर्घः। क्लामतीति। ष्ठिवुक्लमुचमां शितीति (७।३।७५) दीर्घः। क्लाम्यतीति। शमामष्टानां दीर्घः श्यनीति (७।३।७४) दीर्घः।

## ७१ । यसोऽनुपसर्गात् ।

अनुपसर्गादिति किम् ? आयस्यतीति । सोपसर्गान्नित्यमेव श्यन् भवति । ननु च संयसश्चे(३।१।७२)त्येतन्नियमार्थं भविष्यति । सम एवोपसर्गान्नान्यस्मादिति । तत् किमनुपसर्गग्रहणेन ? नैतदस्ति । तुल्यजातीयानां हि नियमो विज्ञायते । एवञ्च समित्येवं हलन्तोऽन्यहलन्तानामेव निवृत्तिं कुर्य्यात् । नाजन्तानाम् । लक्ष्यानुरोधेनोपसर्गमात्रापेक्षया नियमो विज्ञास्यते । ततश्चाजन्तानामपि निवृत्तिं करिष्यतीति चेत् ? एवमपि प्रतिपत्तिगौरवं स्यात् ।

## ७२ । संयसश्च ।

चकारो वेत्यनुकर्षणार्थः । अथ यसिग्रहणं किमर्थम् ? न सम इत्येवोच्येत ? पूर्वसूत्राद् यसिरनुवर्त्तिष्यते । नैतद् । एवं सम इत्येतावति वक्तव्ये सम इम वेक्लव्य इत्यस्येदं ग्रहणमित्याशङ्कमानो यमिग्रहणमिह निवृत्तमिति कश्चित् सम्भावयेत् । यसिग्रहणे तु धात्वन्तराशङ्का न भवति ।

## ७३ । स्वादिभ्यः श्नुः ।

सुनोतीति । सार्वधातुकमपिदिति (१।२।४) ङित्त्वाद् गुणाभावः ।

## ७४ । श्रुवः शृ च ।

श्रु श्रवण इति भ्वादौ पठ्यते । ततः शपि प्राप्ते श्नुर्विधीयते । श्रुव इति प्रत्ययविधौ पञ्चमी यदा त्वादेशेन सह सम्बध्यते तदार्थतः षष्ठी सम्पद्यते । तत्सन्नियोगेनेति । एतेन प्रत्ययान्तरे शृभावस्याभावं दर्शयति । शृण्वन्तीति । हुश्नुवोः सार्वधातुक (६।४।८७) इति यणादेशः ।

## ७५ । अक्षोऽन्यतरस्याम् ।

भौवादिक इति । अनेनाप्राप्तविभाषेयमिति दर्शयति ।

## ७६ । तनूकरणे तक्षः ।

तनूकरणेऽर्थे वर्त्तमानादिति । ननु चायं धातुर्भ्वादौ तनूकरण एव पठ्यते । तत् कस्मादस्य विशेषणस्योपादानमित्याह अनेकार्थत्वादित्यादि । सन्तक्षति वाग्भिरिति । निर्भर्त्सयत इत्यर्थः ।

७७। तुदादिभ्यः शः।

७८। रुधादिभ्यः श्नम्।

श्नम्प्रत्ययो भवतीति। शपोऽपवादः। कथं पुनर्भिन्नदेशेन श्नमा शब् बाध्यते ? नैतत्। नाभिन्नदेशतैव बाधायाः कारणम्। अपि त्वेकप्रयोजनतेति। विकरणो हि सार्वधातुकस्य धातोश्चार्थाभिधाने सहायतां प्रतिपद्येतेत्येवमर्थं विधीयते। सा च श्नमैव प्रतिपन्नेति शपा न भवितव्यम्। देशविध्यर्थं इति। विशिष्टे देशे विधानार्थं इत्यर्थः। स पुनर्देशोऽचोऽन्त्यात् परः। शकारः श्नान्नलोप (६।४।२३) इति विशेषणार्थं इति। नान्नलोप इत्युच्यमाने यज्ञानां यत्नानामित्यत्रापि नलोपः स्यात्। नामीति (६।४।३) दीर्घत्वे कृते नादिति व्यपदेशाभावान्न भविष्यतीति। नैतदस्ति। लोपेनैव हि प्राग् भवितव्यम्। तस्य परत्वादतो दीर्घो यञि (७।३।१०१) सुपि चेति (७।३।१०२) दीर्घत्वं यद्यपि लोपात् परं तथापि तेनेह न भवितव्यम्। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति (प, ८६) वचनात्। अकारान्तसन्निपातेन हि नुड् विधीयमानो नोत्सहतेऽकारान्ततां विहन्तुम्। इहापि तर्हि दीर्घत्वं न स्याद् वृक्षायेति। ङेर्य (७।१।१३) इति यादेशस्याप्यकारान्तसन्निपातेन विधानात्। नैष दोषः। कष्टाय क्रमणे (३। ।१४) इति निर्देशो ज्ञापयत्येषा परिभाषा न प्रवर्त्तत इति। षष्ठीबहुवचने ज्ञापकाभावात् प्रवर्त्तत एव। अथाप्यनित्यत्वान्न प्रवर्त्तते। एवमप्यसति शकारे सुपि चेति (७।३।१०३) परत्वात् कृते दीर्घत्वे स्थानिवद्भावादत्र लोपः स्यात्। एतच्च वृत्तिकारः स्वयमेव वक्ष्यति। विश्नानाम् प्रश्नानामित्यत्र यद्यपि शकारवान् नशब्दस्तथापि तस्य न भवति। लाक्षणिकत्वात्। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् (प,११४)। न तु लाक्षणिकस्येति। लाक्षणिकत्वन्तु विच्छिप्रच्छिभ्यां यजयाचयतविच्छप्रच्छो नङिति (३।३।९०) नङि कृते च्छोः शूड्नुनासिके चेति (६।४।१९) शकारे कृते श्नम्शब्दस्याभिनिर्वृत्तत्वात्। रुणद्धीति। पूर्ववद्धत्वजश्त्वे। रषाभ्यामिति (८।४।१) णत्वम्।

## ७९ । तनादिकृञ्भ्य उः ।

सनोति क्षणोतीति । षणु दाने । क्षणु हिंसायाम् । नियमार्थमिति । एतदेव तनादिकार्य्यं यथा स्यादित्येष नियमो यथा स्यात् । अन्यत् तनादिकार्य्यं मा भूदित्यनेन नियमस्य व्यवच्छेद्यं दर्शयति । तनादिभ्य (२।४।७९) इत्यादिना यदन्यत् तनादिकार्य्यं तदभावम् । असति हि नियमार्थे यथान्येभ्य स्तनादिभ्यो विभाषा सिचस्तथासो लुग् भवति— अतत अतथाः अतनिष्ट अतनिष्ठा— स्तथा करोतेरपि स्यात् । अस्मिं स्तु सति न भवति । तदभावे च ह्रस्वादङ्गा(८।२।२७)दित्याष्टमिक एव लोपो भवति । अकृत । अकृथाः । ननु सत्यपि तस्मिं स्तनादिकार्य्ये नैव किञ्चिदनिष्टमापद्यते । अलुक्पक्षेऽपि ह्रस्वादिति (८।२।२७) लोपप्रवृत्तेः । नैतत् । नाप्राप्ते सिचो लोपे लुगारभ्यमाणस्तस्य बाधकः स्यात् । पूर्वत्रासिद्ध(८।२।१)मित्यसिद्धत्वादयुक्ता लोपबाधेत्येतन्नाशङ्कनीयम् । यस्माद् वक्ष्यत्येतद् नास्त्यपवादेष्वसिद्धत्वम् । अपवादवचनप्रामाण्यादिति । यदि तर्हि करोतेरन्यत् तनादिकार्य्यं नेष्यते कस्मात् तर्हि भ्वादावेव न पठितः । कः पुनरेवं लाघवकृतो विशेषः ? भ्वादावपि पाठे नियोगतोऽस्य विकरणविधौ ग्रहणं कर्त्तव्यमित्यदेश्यमेतत् ।

## ८० । धिन्विकृण्व्योर च ।

भ्वादित्वाच्छपि प्राप्ते वचनम् । अकारादेशो भवतीति । अलोऽन्त्य (१।१।५२) परिभाषया । धिनोतीति । अतो (६।४।४८) लोपः । अथ लघूपधगुणोऽत्र कस्मान्न भवतीत्याह अल्लोपस्येत्यादि । अचः परस्मिन् (१।१।५७) पूर्वविधावित्यल्लोपस्य स्थानिवद्भावादनुपधत्वादिकारस्य गुणो न भवति । लाघवार्थं धिविकृव्योरिति वक्तव्ये नुमनुषक्तयोर्ग्रहणं कृतमुपदेशावस्थायामेव नुम्भवतीति ज्ञापनार्थम् । तेन नुम्विधावुपदेशिवद्वचनमिष्टस्वरसिद्ध्यर्थमिति न वक्तव्यं भवति ।

## ८१ । क्र्यादिभ्यः श्ना ।

## ८२ । स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।

चकारः श्नानुकर्षणार्थः । स्तभ्नातीति । आदावनिदितामित्यनुनासिक-

लोपः (६।४।२४)। श्नुश्नाभ्यां सह निर्देशात् तद्विषयतैवैषां धातूनामिति कस्यचिद् भ्रान्तिः स्यात्। अत स्तान्निराकर्त्तुमाह उदित्त्वप्रतिज्ञानादित्यादि। एषां ह्युकार इत्संज्ञकः प्रतिज्ञायते। तस्य क्त्वाप्रत्यय इड्विकल्पः फलम्। यदि त एतद्विकरणविषयाः स्यु रुदित्करणमनर्थकं स्यात्। तस्मादुदित्करणप्रतिज्ञानात् सर्वार्थत्वमेषामवसीयते। अर्थशब्दोऽयं विषयवाची। सर्वविषयत्वमित्यर्थः।

## ८३। हलः श्नः शानज् झौ।

पुषाण मुषाणेति। विध्यादौ लोट्। सेर्ह्यपिच्च (३।४।८७)। क्र्यादित्वाच् श्ना। तस्यानेन शानच्। चकारोऽन्तोदात्तार्थः। अतो हे रिति (६।४।१०५) हेर्लुक्। क्रीणीहीति। ई हल्यघोरितीत्त्वम् (६।४।११३)। ननु च श्नाप्रत्ययस्य प्रकृतत्वात् स एवेह स्थानित्वेन विज्ञास्यते, तत् किमर्थः श्न इति निर्देश इत्याह श्न इति स्थानिनिर्देश इत्यादि। शानच्शब्दोऽयमादेश इत्येष संप्रत्ययो यथा स्यादित्येवमर्थः श्न इति निर्द्देशः। किं पुनः कारणमसति तस्मिन्नेष संप्रत्ययो न स्यादित्यत आह प्रत्ययान्तरं हीत्यादि। सर्वे धातवोऽन्यगणपठिता अपि विषयो यस्य तत् तथोक्तम्। श्न इत्यस्मिन् ह्यसति स्थानिनिर्देशे श्नाप्रत्ययस्यानुवृत्ति र्न ज्ञायेत। ततश्च सर्वेभ्यो धातुभ्यो हलन्तेभ्यः शानजपवादः प्रत्ययो विज्ञायेत। श्न इत्यस्मिंस्तु सति श्नादेशोऽयं विज्ञायेतेति न भवत्येष दोषः। स्थानिवद्भावेनैवादेशस्य शित्त्वे सिद्धे पुनः शित्करणं जिमिदा स्नेहन इत्यस्माद्व्यत्ययेन यदा श्नाप्रत्ययो भवति तस्य च शानजादेश स्तदा मिदेर्गुणो मा भूत्। इतरथा ह्ययं गुणः प्रतिषेधविषय आरभ्यमाणो यथेह भवति मेद्यतीति तथेहापि स्यान् मिदान इति। पुनः शित्करणे तु सार्वधातुकमपिदिति (१।२।४) ङित्त्वमपि पुनः प्रवर्त्तते। तेन मिदेः प्रतिषेधविषयेऽपि गुण आरभ्यमाण इह न भवति।

## ८४। छन्दसि शायजपि।

अत्रापि चिच्छित्करणयोः पूर्वोक्तमेव प्रयोजनम्। गृहाणेति। ग्रह उपादाने लोट्। सिप्। हिः। ततः श्ना। तस्य शानच्। (६।४।१०५) हेर्लुक्।

ग्रह्यादिना (६।१।१६) संप्रसारणम् । गृभायेति क्वचित् पाठः । तत्र क्र्यग्रहो भैश्छन्दसीति (८।२।३२ वा) भत्वम् । बधानेति । बन्ध बन्धने । अनिदितामिति (६।४।२४) न लोपः । शेषं पूर्व्ववत् ।

## ८५ । व्यत्ययो बहुलम् ।

यथायथमिति । यो यस्यात्मीयो विषयो यथायथम् । यस्मिन् यस्मिन् विषय इत्यर्थः । किं पुनरयं व्यत्ययो नामेत्याह व्यतिगमनं व्यत्यय इति । तमेव व्यत्ययं स्पष्टीकर्त्तुमाह व्यतिकर इत्यादि । क्वचिदित्यादिना व्यत्ययस्य प्रकारान्तरं दर्शयति । भेदतीति । श्नमो विषये शपो विधानम् । मरती-त्यत्रापि शविषये शप् परस्मैपदञ्च । व्यत्ययेनैव । म्रियत इति । पूर्वव-द्रिङ् । तस्येयङ् । नेषत्विति । नयते र्लोट् । तिप् । एरुः (३।४।८६) । सिप् । तस्मात् परः शप् । धातोर्गुणः । सिपः षत्वम् । त्रिविकरणतायास्तूदाहरणं तरुषेम वृत्रमिति । तरतेराशिषि लिङ् । मस् । नित्यं ङित (३।४।९९) इति वस्ममोः सलोपः । यासुट् । छन्दस्युभयथेति (३।४।११७) सार्व-धातुकत्वाल् लिङ उप्रत्ययः । तस्मात् परः सिप् । तस्मादपि परोऽङ् । धातोर्गुणः । सिपः षत्वम् । अतो येय (७।२।८०) इतीयादेशः । अङा सहाद्गुणः (६।१।८७) । लिङः सलोपोऽनन्त्यस्येति (७।२।७९) सलोपः । लोपो व्योर्वलीति (६।१।६६) यलोपः । अथ व्यत्यय इत्येतावत् कथं नोक्तम् ? किं बहुलग्रहणेन ? पूर्वसूत्राद्यपि शब्दस्यानुवृत्तौ सत्यां छन्दसि व्यत्ययो भवति । अपिशब्दाद् यथाप्राप्तञ्चेति । एवमभिसम्बन्धे क्रियमाणेऽन्तरेणापि बहुलग्रहणं सर्वमिष्टं सिध्यत्येवेत्यत आह बहुलग्रहणमित्यादि । सर्वस्य प्रकृतस्याप्रकृतस्य विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थं बहुलम् । इतरथा ह्यसति बहुलग्रहणे प्रकृतानामेव स्यादीनां शानच् पर्य्यन्तानां स्यान्नानेषां श्नम्प्रभृतीनाम् । दृश्यते च तेषामपि । स बहुल-ग्रहण एव सति लभ्यते । एतमेवार्थं दर्शयितुमाह सुप्तिङुपग्रहेत्यादि । तत्र सुपां व्यत्ययो धुरि दक्षिणाया इति । धुरि दक्षिणायामिति प्राप्ते सप्तम्या विषये षष्ठी । तिङाम् । ये यूपाय तक्षति । तक्षन्तीति प्राप्ते । लादेश-

व्यङ्गक्रियाविशेषो मुख्य उपग्रहः। इह तु तद्व्यक्तिनिमित्तत्वात् परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्त्तते। एतदुक्तं भवत्यात्मनेपदपरस्मैपदयोर्व्यत्यय इति। स ब्रह्मचारिणमिच्छते। प्रतीतमन्यदग्निं युध्यति। इच्छति युध्यत इति प्राप्ते। लिङ्गस्य। मधो स्तृप्ता इवासत इति। मधुन इति प्राप्ते। नरस्य प्रथमपुरुषादेः। अथोपचारैर्दशभिर्वियूया इति। वियूयादिति प्रथमपुरुषविषये मध्यमपुरुषः। यु मिश्रणे। विपूर्वादाशिषि लिङ्। सिप्। यासुट्। अकृत्सार्वधातुकयोरिति (७।४।२४) दीर्घः। स्कोः संयोगाद्योरन्ते (८।२।२९) चेति सलोपः। कालस्य। सोऽग्नीनाधास्यमानेन। लुटो विषये लृट्। कालशब्दोऽत्र कालविषयत्वाल्लुडादिप्रत्ययेषु वर्त्तते। नहि मुख्यकालस्य व्यत्ययः शक्यते कर्त्तुम्। हलाम्। शुफितं मुखवीजम्। शुभितमिति प्राप्ते। शुभ शुम्भ शोभार्थे। निष्ठा। इट्। भकारस्य फकारः। अचाम्। उपगायन्तु मां पत्नयो गर्भिणयः। पत्न्यो गर्भिण्य इति प्राप्ते। ईकारस्य इकारः। स्वराणाम्। अन्तोऽवत्या (६।१।२२०) इत्यन्तोदात्तत्वं यथेह भवत्यश्ववतीं सोमवतीं प्रजावतीं सूर्य्यवतीं दृषदमिति तथेहापि स्यादश्ववती सोमवती प्रजावती। व्यत्यये तु सत्यश्वशब्दस्य प्रकृतिस्वर एव भवति। कः पुनः प्रकृतिस्वरः? आद्युदात्तत्वम्। तथाहि ङीपोऽनुदात्तत्वं पित्वात्। मतुपोऽप्यत एव। अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्निति (उण्, १।१४९) क्वन्प्रत्ययान्तत्वाद् नित्स्वरेणाद्युदात्तोऽश्वशब्दः। कर्त्तृग्रहणं कारकोपलक्षणार्थम्। कारकाणां व्यत्यय इत्यर्थः। आसादयन्निरुभयोर्वेदाः। आसादयन्ना इति प्राप्ते संप्रदानस्य करणत्वम्। यङिति प्रत्याहारग्रहणम्। सार्वधातुके यगिति (३।१।६७) यक आरभ्य लिङ्याशिष्यङित्यतो (३।१।८६) ङकारेण। यगादीनां प्रत्ययानामङ्पर्य्यन्तानां व्यत्यय इत्यर्थः। मुण्डा शुष्मस्य भेदतीति। श्नमि प्राप्ते शप्। एषां शप्प्रभृतीनां व्यत्ययमिच्छति। शास्त्रकृत् पाणिनिः। सोऽपि च सिध्यति बाहुलकेन। अपिशब्दात् स्यादिव्यत्ययः। बहुलस्य भावो बाहुलकम्। द्वन्द्वमनोज्ञादित्वाद् (५।१।१३३) वुञ्। चशब्दो हेतौ। यस्मादेवं प्रकृतानामप्रकृतानाञ्च बाहुलकेन व्यत्ययः सिध्यति तस्माद् बहुलग्रहणं कृतमिति।

## ८६ । लिङ्याशिष्यङ् ।

अपोऽपवाद इति । ननु चाशिषि यो लिङ् विहितस्तस्य लिङाशिषी-(३।४।११६) त्यार्द्धधातुकसंज्ञा । सार्वधातुके च शब् विहितः । तत् कथं अपो-ऽपवाद इत्याह च्छन्दस्युभयथेत्यादि । स्थादिभ्य एवाङ् दृश्यते । नान्येभ्य इत्यभिप्रायेणाह स्थागागमोत्यादि । उपस्थेयमिति । उपपूर्वात् तिष्ठते राशिषि लिङ् । मिप् । तस्य तस्थेत्यादिनाऽमादेशः (३।४। ०१) । यासुट् । उभय-संज्ञात्वेन सार्वधातुकत्वाल्लिङः सलोपोऽनन्तस्येति ( ७.२.७८ ) सलोपः । अतो येय (७।२ ८०) इतीयादेशः । आद् गुणः (६।१।८७) । आतो लोप इटि चेत्याकारलोपः (६।४।६४) । क्वचिदुपस्थेषमिति पाठः । तत्रार्द्धधातुकत्वात् सलोपाभावः । वलि यलोपः । उपगेयमिति । गै शब्दे । आदेच (६।१।४५) उपदेशेऽशितीत्यात्त्वम् । शेषं पूर्ववत् । गमेम इति । गमेः परस्य लिङो मस् । नित्यं ङित इति (३।४।९९) सलोपः । यासुड़ादि सर्वं पूर्ववत् । वोचेयमिति । वच भाषणे । सिप् । तस्याम् । अङ् । अङि परतो वच उम् (७।४।२०) । या इत्यस्य इय् । उभयत्वाद् गुणः (६।१।८७) । विदेयमिति । विद ज्ञाने (६।१।८७। शकेयमिति । शक्लृ शक्तौ । आरुहेयमिति । रुह जन्मनि । इयादेशादि सर्वं पूर्ववत् । दृशेरग् वक्तव्य इति । अङि हि सति ऋदृशो रङि गुण इति (७।४।१६) गुणः स्यात् । तथाच दृशेयमिति न सिध्येत् । अकि तु सति कित्त्वाद् गुणाभावो भवति । तस्मादग् वक्तव्यो व्याख्येयः । व्याख्यानन्तु बहुल-ग्रहणानुवृत्तेर्वक्तव्यम् ।

## ८७ । कर्मवत् कर्मणा तुल्यक्रियः ।

कर्मवदिति । तेन तुल्यं क्रिया चेद् वतिः (५।१।११५) । ननु तत्र तस्येवेति (५।१।११६) । तुल्यक्रिय इति प्रथमानिर्देशात् । अन्यथा तुल्यक्रिये तुल्यक्रियस्येति सप्तम्या षष्ठ्या वा निर्देशं कुर्य्यात् । तुल्या क्रियाऽस्येति तुल्य-क्रियः । केन तुल्यक्रियः ? कर्मणा । सापेक्षत्वेऽपि गमकत्वात् समासः । तुल्य-शब्दोऽयं सदृशवचनः । न च साधनस्य कर्मणः क्रियया सादृश्यमुपपद्यते । अत्यन्तभेदात् । तथाहि कर्मद्रव्यं परिनिष्पन्नम् । तद्विपरीतस्वभावा क्रिया ।

तस्मात् कर्मणीति कर्मशब्दोऽयं गौणस्तात्स्थ्यादुपचारेण कर्मस्थायां क्रियायां वर्त्तते यथा मञ्चाः क्रोशन्तीति। अत्र मञ्चशब्दः पुरुषेषु। उपचारस्तु कर्मस्थभावकानां कर्मस्थक्रियाणाञ्च कर्मवद्भावो यथा स्यात्। कर्तृस्थभावकानां कर्त्तृस्थक्रियाणाञ्च मा भूदित्येवमर्थः। एतत् सर्वं चेतसि कृत्वाह कर्मणि क्रियाकर्मेति। एतेन कर्मशब्दोऽयं कर्मस्थक्रियावाचीत्याचष्टे। कर्मस्थक्रियावाचिनि च कर्मशब्दे यः सूत्रार्थः सम्पद्यते तं दर्शयितुमाह कर्मस्थयेत्यादि। एवं स्थिते सूत्रार्थे तुल्यशब्दोऽयं साधारणवचन इति मन्यमानो यो देशयेद् यदि कर्मस्थया क्रियया तुल्यक्रियः साधारणक्रियः कर्त्ता कर्मवद्भवति तदा पचत्योदनं देवदत्त इत्यत्रापि स्यात्। यस्मादिहापि यासौ प्रधानक्रिया तामुद्दिश्य सर्वाणि कारकद्रव्याणि प्रवर्त्तन्ते। तया कर्मस्थया साधारणक्रियः कर्त्ता भवति। यथैव ह्यसावन्येषां कारकाणां सम्बन्धिनी तथा कर्त्तुरपीति तं प्रत्याह यस्मिन् कर्मणीत्यादि। तद्वद् यथाशब्दौ सादृश्यार्थौ प्रयुञ्जानः सदृशवचनोऽयं तुल्यशब्दो न साधारणवचन इत्याचष्टे यस्मिन् कर्मणि कर्तृभूतेऽपिकर्त्रवस्थायां प्रतिपन्नेऽपि तादृशी क्रिया लक्ष्यते यादृशी कर्मावस्थायां स कर्त्ता कर्मवद्भवति। सादृश्यञ्च किञ्चिद् भेदाधिष्ठानमित्यसाधारण एवाधिश्रयणादिलक्षणः कर्तृव्यापारो गृह्यते। ननु साधारणो विक्लेदादिलक्षणः। स चासाधारणः पचत्योदनं देवदत्त इत्यत्र कारकान्तरव्यापारविसदृशो देवदत्तस्य कर्त्तुर्व्यापार इति न भवति कर्मवद्भावः। अथवा कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवतीत्युक्ते सदृशवचनस्तुल्यशब्द इति मन्यमानो यो देशयेद् यद्येवं भिद्यमानः कुसूलः पात्राणि भिनत्तीत्यत्रापि प्राप्नोति। तथाहि यादृशी पात्रेष्ववयवविभागात्मिका क्रिया तादृश्येव कुसूले कर्त्तरि लक्ष्यत इत्यस्मिन् पूर्वपक्ष इदमाह यस्मिन् कर्मणीत्यादि। स इत्यनेन यस्मिन्नित्यनेन योऽर्थो निर्दिष्टः स एव प्रत्यवमृश्यते। एतेनैकद्रव्याधारयैव कर्मस्थया क्रियया तुल्यकियः कर्त्ता कर्मवद्भवतीति दर्शयन् पूर्वपक्षं प्रतिक्षिपति। एतच्च प्रत्यासत्तेर्न्यायाल्लभ्यते। एकद्रव्यसमवायिनो हि क्रिया प्रत्यासन्ना। द्रव्यान्तरसमवेता तु विप्रकृष्टा। ननु च शक्तिः कारकमिति दर्शनम्। न च कर्मशक्तिः कदापि कर्तृभावमापद्यते। तदयुक्त मुक्तं यस्मिन् कर्मणि

कर्तृभूतेऽपीति । शक्तिशक्तिमतोर्भेदस्याविवक्षायां शक्त्याधारं द्रव्यमेवैतदुक्त-मित्यदोषः । इदं तर्ह्ययुक्तमुक्तम् । तद्वत् क्रिया लक्ष्यते यथा कर्मणीति । यस्माद् य एव कर्मावस्थायां व्यापारः स एव कर्त्रवस्थायामपीति साहश्यं नोपपद्यते । तस्य भेदाधिष्ठाने सति सत्त्वात् । नैष दोषः । अवस्थाभेदेन क्रियाभेदाद् यद्यप्यवस्थावद् द्रव्यमभिन्नं तथाप्यवस्थाभेदोऽस्ति । अन्यैव हि कर्त्रवस्था । अन्या च कर्मावस्था । अवस्थाभेदेन क्रियाभेद इति तदधिष्ठानं साहश्यं भवति । इहातिदेशो निमित्तव्यपदेशशास्त्रकार्यभेदा-दनेकविधः । तत्रेह निमित्तातिदेशो न भवति । नहि कर्मणो यन् निमित्तं कर्तुरीप्सिततमत्वं तत् कर्तर्यतिदेष्टुं शक्यते । वस्त्वन्तरधर्म्माणां वस्त्वन्तरेण विरुद्धधर्मिणा सम्बन्धाभावात् । व्यपदेशातिदेशस्तु संज्ञापक्षान्न भिद्यते । संज्ञापक्षे तु वक्ष्यमाणो दोषः । वतिग्रहणञ्चानर्थकं स्यात् । शास्त्रातिदेशपक्षे तु शास्त्रमतिदिश्यते । तस्मिन्नतिदिष्टे तैरेव शास्त्रैर्यगादयः प्राप्यन्ते । ततश्च यद्ययं शास्त्रातिदेशः स्यात् कर्मकर्त्तरि परत्वाच्छबादयो बाधकाः स्युः । तत्र प्रतिविधेयं स्यात् । कार्य्यातिदेशे त्वनेनैव यगादयो विधीयन्ते । तेन येन कर्त्राश्रयाः कर्मकर्त्तरि शबादयः प्राप्नुवन्ति ते परत्वाद् यगादिभिर्बाध्यन्त इति न किञ्चित् प्रतिविधातव्यम् । प्रधानन्तु कार्य्यातिदेशः । तदर्थत्वादतिदेशशास्त्राणाम् । अतः कार्य्यातिदेशतामस्य दर्शयन्नाह कर्माश्रयाणीत्यादि । ननु च तुल्यक्रिय इति प्रथमानिर्देशात् तदन्तस्य कर्तुरतिदेशो विज्ञायते । न च सूत्रे कर्तृग्रहणमस्ति । यदपि च प्रकृतं तदपि सप्तम्यन्तम् । प्रथमानिर्दिष्टेन चेहार्थः । तत् कथं प्रथमान्त-कर्तृग्रहणमन्तरेण शक्यतेऽतिदेशः कर्तुमित्याह कर्त्तरीत्यादि । किं पुनर-स्यातिदेशस्य प्रयोजनमित्याह यगात्मनेपदेत्यादि । भिद्यत इति यक उदाहरणम् । अभेदीति चिणः । कारिष्यत इति चिण्वद्भावस्य । कर्मणि हि स्यसिच्सीयुट्तासिष्वित्यादिना (६।४।६२) चिण्वद्भावो विहितः । आत्मनेपदस्य तु सर्वाण्येवैतान्युदाहरणानि । स्वाश्रयमपीत्यादि । यद्विनाप्यतिदेशो न भवति तत् स्वाश्रयम् । तद् यथा स्यादित्येवमर्थं वत्करणम् । असति हि तस्मिन् संज्ञासूत्रमिदं स्यात् । ततश्च कर्मणा तुल्यक्रियः कर्त्ता कर्म-

संज्ञकः स्यात्। एवञ्च सति सकर्मकत्वान्नः कर्मणि च भावे चाकर्मकेभ्य इति (३।४।६९) भावे लकारो न स्यात्। वत्करणे तु सत्यतिदेशो भवति। तेन चाप्राप्तमेव कर्त्तुः कर्म कार्य्यं भवति न स्वाश्रयं कर्तृत्वम्। अकर्मकस्वभावत्वमपनीयते। तत्र तस्या व्यापारात्। एतेनाकर्मकाणां भावे लः सिद्धो भवति भिद्यते कुसूलेनेति। अथ भिद्यते कुसूलः स्वयमेवेत्यत्र कस्मात् कुसूलशब्दाद् द्वितीया न भवति ? एतदपि कर्म कार्य्यं भवत्यत आह लिङ्याशिष्यङितीत्यादि। द्वौ लकारौ यस्मिन् स द्विलकारको निर्देशः। यदि द्विलकारको निर्देशस्तदा किमित्याह तत्रेत्यादि। कार्य्यं प्रतीत्यध्याहार्य्यम्। द्विलकारनिर्देशे सति लिङ्याशिष्यङित्यतो (३।१।८६) लानुवृत्तेर्लान्तस्यैव कार्य्यं प्रति कर्त्ता कर्मवद्भवति। नतु प्रातिपदिकस्य। इतिकरणो हेतौ। यत एवं तस्मात् कुसूलाद् द्वितीया न भवति। करणाधिकरणाभ्यामिति। कर्मणेत्यसत्यस्मिन् करणाधिकरणस्थयापि क्रियया तुल्यक्रियः कर्त्ता कर्मवत् स्यात्। अस्मिंस्तु सति न भवति। साध्वसिश्छिनत्तीति। करणस्य कर्तृत्वविवक्षायां करणस्थयापि क्रियया छेद्यद्रव्यान्तःप्रवेशलक्षणया तुल्यक्रियोऽत्रासिः कर्त्ता। साधु स्थाली पचतीति। अत्राधिकरणस्य कर्तृत्वविवक्षायामधिकरणस्थया क्रियया सम्भवति धारणात्मिकया तुल्यक्रियः कर्त्ता। अथेह कस्मान्न भवति। पचत्योदनं देवदत्तः। राध्यत्योदनः स्वयमेवेति। भवति ह्यत्रापि कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता। तथाहि यादृश्योदने कर्मभूते क्रिया विक्लेदनलक्षणा लक्ष्यते तादृश्येव कर्त्तृभूतेऽपि। पचतिराध्यत्योरेकार्थत्वादित्याह धात्वधिकारादित्यादि। समानशब्दोऽयमेकपर्य्यायो यथा देवदत्तयज्ञदत्तयोः समाना मातेति। एका मातेति गम्यते। धातोरेकाच इत्यतो (३।१।२२) धातुग्रहणमनुवर्त्तते। कर्मादिशब्दाश्च सम्बन्धिशब्दाः। ये च सम्बन्धिशब्दास्ते प्रकृत्यैव नियतरूपं सम्बन्धिनमुपस्थापयन्ति। तथाहि मातरि भक्त्या प्रवर्त्तितव्यमित्युक्तेऽन्तरेणापि स्वस्यामिति वचनं स्वस्यां मातरीति गम्यते। तेन यं धातुमपेक्ष्य तस्य कर्मणः कर्तृत्वं तमेव धातुं सन्निधापयति। नान्यम्। ततश्च धातुग्रहणेऽनुवर्त्तमाने सत्ययमर्थो लभ्यते। यस्मिन् धातौ कर्मणोपस्थापिते यत्

कर्म्म तस्मिन्नेव धातौ स यदि कर्त्ता भवत्येवं सत्ययमतिदेशः । नान्यथा । तेन पचत्योदनं देवदत्तो राध्यत्योदनः स्वयमेवेत्यत्र न भवति । भिन्नयोर्धात्वो रोदनस्य कर्म्मकर्त्तृत्वासम्भवात् । अथवा धातोरिति येयमेका संख्या सा विवक्षिता । तेनैकस्मिन्नेव धातौ कर्मवद्भावो भवति । कर्मस्थभावकानामित्यादिना न्यायप्राप्तमेवार्थं दर्शयति । तथाहि कर्मस्थया क्रियया तुल्यक्रियस्य कर्त्तुः कर्म्मवद्भावो भवति । नच कर्त्तृस्थभावकानां कर्त्तृस्थक्रियाणां कर्त्ता तथाविधोऽस्ति । यद्यपि क्रियाभावशब्दयोरेक एवार्थः प्रतीयते तथाहि यस्य च भावेन (२।३।३७) भावलक्षणमित्यत्र क्रियाप्युपादीयते । लक्षणहेत्वोः क्रियाया (३।२।१२६) इत्यत्र च भावोऽपि परिगृह्यते । तथापीह द्वयोरुपादानसामर्थ्यादर्थभेदो द्रष्टव्यः । स परिस्पन्दनसाधनसाध्या क्रिया क्रियाशब्देनोच्यते । अपरिस्पन्दनसाधनसाध्या तु भावशब्देन । येषां कर्मस्थो भावः कर्मस्था च क्रिया येषां कर्त्तृस्थो भावः कर्त्तृस्था च क्रिया तेषामुदाहरणं दर्शयितुमाह कर्मस्थः पचते र्भाव इति । पच्यते घटः स्वयमेवेत्यत्र यदा तद्देशस्थघटकर्मकपाको निष्पद्यते तदाऽपरिस्पन्दनसाधनसाध्यस्वभावः पाकः कर्त्तृस्थो भवति । यदा तु देशान्तरं गच्छतः पाकद्रव्यस्य पाकाभिनिर्वृत्तिर्भवति तदा कर्मस्थैव पचेः क्रिया यथा पच्यत ओदन इत्यत्रोदाहरणे । कर्मस्था च भिदेः क्रियेति । भिद्यते कुसूलः स्वयमेवेति । अवयवविभागलक्षणा हि भिदेः क्रिया । सा च देशान्तरप्राप्तौ सत्यां भवतीति भिद्यते परिस्पन्दः । तेन कर्मस्था क्रिया भवति । मासासिभावः कर्त्तृस्थ इति । आसे र्धातोर्भाव आसिभावः । आसनं हि भावः । तस्याः परिस्पन्दनसाधनसाध्यत्वात् । तथाहि व्यापारोपरतावास्त इति प्रयुज्यते । माससहचरित आसिभावः । शाकपार्थिवादित्वात् समासः । मासासिभावः । कदा स माससहचरित आसिभावो भवति ? यदा मासमास्त इति प्रयुज्यते । मासमिति कर्मणि द्वितीया । कर्मसंज्ञा तु कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति (१।४।५१, वा) वचनात् । मासासिभावः कर्त्तृस्थो भवति । आसितरि समवायात् । तेनास्यते मासः स्वयमेवेति न भवति । कर्त्तृस्था च गमेः क्रियेति । गमनं पादविहरणात्मकम् ।

तत्र परिस्पन्दनसाधनसाध्यत्वाच्च क्रिया। सा च गन्तरि देवदत्तादौ समवेता। न कर्मणि ग्रामादौ। तेन कर्मस्थक्रियाभावाद् गम्यते ग्रामः स्वयमेवेति न भवति।

## ८८। तपस्तपःकर्मकस्यैव।

तपःकर्मकस्यैवेति। एवकार विस्पष्टार्थः। व्यवच्छेदफलत्वात्। सर्ववाक्यानामित्येवं तदर्थस्य लब्धत्वात्। यदि ह्यतपः कर्मकस्यापि स्यात् तपःकर्मग्रहणमनर्थकं स्यात्। नान्यकर्मकस्येत्यवधारणेन यद्व्यवच्छिन्नं तद्दर्शयति। क्रियाभेदादिति। क्रियाविसदृशत्वादित्यर्थः। पूर्वं हि क्रियासादृश्ये कर्मवद्भावो विहित इति वैसदृश्येन प्राप्नोति। अतो विध्यर्थमेतत्। अतएव कर्मस्थया क्रियया तुल्यत्वं न सम्भवतीति कर्मणा तुल्यक्रिय (३।१।८७) इत्येतन्नानुवर्त्तते। उपवासादीनीत्यादिना तमेव क्रियाभेदं दर्शयति। उपवासादिशब्देन तपःशब्दस्यार्थमाचष्टे। दुःखयन्तीत्यर्थ इत्यनेन तापसस्य कर्मावस्थायां तपि दुःखन मर्थ इति दर्शयति। स्वर्गाय तपस्तप्यत इति। तपः शब्दोऽत्र ज्ञानविशेषे स्वर्गाद्यवाप्तिहेतौ वर्त्तते। अर्जयतीत्यर्थ इत्यनेन तापसस्य कर्त्त्रवस्थायां तपिरर्जने वर्त्तत इति दर्शयति। निवर्त्तयतीत्यर्थ इति। न दुःखयतीति। तपसोऽचेतनत्वाद् दुःखासम्भवात्। उत्तपति सुवर्णमित्यादौ सुवर्णकर्मकत्वात् तपेः कर्मवद्भावो न भवति।

## ८९। न दुहस्नुनमां यक्चिणौ।

कर्मकर्त्तरि यक्चिणावुपदिष्टौ न भवत इति। कर्मकर्त्तरीति विशेषणम्। कर्मवत् कर्मणा तुल्यक्रिय इति (३।१।८७) प्राप्तयो र्यक्चिणोरयं प्रतिषेधो नतु चिण्वद्भावकर्मणोः। सार्वधातुके यगिति (३।१।६७) च। शुद्धे कर्मणि यौ प्राप्तौ तयोरपीति दर्शनार्थम्। एतच्चानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति परिभाषया ( प, ६२ ) लभ्यते। दुग्ध इति। यकि प्रतिषिद्धे शप्। तस्यादादित्वाल्लुक्। पूर्ववद् घत्वधत्वजश्त्वानि। अदुग्धेति। लुङ्। चिणि प्रतिषिद्धे क्सः। तस्य लुग्वेत्यादिना (७।३।७३) लुक्। प्रस्नुत इति। स्नु प्रस्रवणे। पूर्ववच्छपो लुक्। प्रास्नोष्टेति। लुङ्। नमत इति। नम

प्रह्वत्वे शब्दे । अन्तर्भावितण्यर्थोऽत्र नमिः कर्मणि वर्त्तत इति वेदितव्यम् । एवं हि कर्मस्थक्रियो भवति । अन्यथा कर्त्तृस्थक्रियत्वात् प्राप्तिर्नास्त्येवेति प्रतिषेधोऽनर्थकः स्यात् । अन्तर्भावितण्यर्थस्तु कर्मस्थक्रियो भवति । नमति दण्डं देवदत्तः । नमते दण्डः स्वयमेवेति । यथा ण्यन्तावस्थायाम् । यक्चिणोः प्रतिषेध इत्यादि । यक्चिणोः प्रतिषेधे कर्त्तव्ये अण्यादीनामपि तस्य प्रतिषेधस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः । प्रतिपादनन्तु नेति योगविभागादिष्टसिद्ध्यर्थात् कर्त्तव्यम् । णीति हेतुमण्णिच इतरस्य च णेर्ग्रहणम् । हेतुमण्णिच् । कारयति कटं देवदत्तः । कारयते कटः स्वयमेवेति । यकि प्रतिषिद्धे शप् । अचीकरत कटः स्वयमेवेति । चिणि प्रतिषिद्धे णिश्रीत्यादिना (३।१।४८) चङ् । णौ (७।४।१) चङ्युपधाया ह्रस्व इति ह्रस्वः । चङीति (६।१।११) द्विर्वचनम् । अभ्यासकार्य्यम् । इतरो णिः । पुच्छभाण्डचीवराण्णिङ् (३।१।२०) । उत्पुच्छयते गां गोपः । उत्पुच्छयते गौः स्वयमेव । यकि प्रतिषिद्धे शप् । एवमुत्तरत्रापि वेदितव्यम् । उदपुपुच्छत गौः स्वयमेवेति ।- चिणि प्रतिषिद्धे पूर्ववच्चङ् । एवमुत्तरत्रापि वेदितव्यम् । ग्रन्थ ग्रन्थ सन्दर्भे । चुरादौ ग्रन्थिग्रन्थी पठ्यते । आधृषाद्वेति (ग,सू, २०२) विभाषाणिचौ । तयोर्यदा णिज् नास्ति तदोदाहरणे । अन्यथा णीत्येवं सिद्धिः । ग्रन्थति ग्रन्थं देवदत्तः । ग्रन्थते ग्रन्थः स्वयमेव । अग्रन्थिष्ट ग्रन्थः स्वयमेव । श्रन्थति मेखलां देवदत्तः । श्रन्थते मेखला स्वयमेव । श्रन्थ ग्रन्थ सन्दर्भे इति क्र्यादावपि पठ्यते । तयोरप्ययं प्रतिषेधः । श्रथ्नीते मेखलां देवदत्तः । श्रथ्नीते मेखला स्वयमेव । ई हल्यघोरितीत्त्वम् (६।४।११३) । अश्रन्थिष्ट मेखला स्वयमेव । ग्रथ्नीते ग्रन्थं देवदत्तः । ग्रथ्नीते ग्रन्थः स्वयमेव । अग्रन्थिष्ट ग्रन्थः स्वयमेव । ब्रूते कथां देवदत्तः । ब्रूते कथा स्वयमेव । पूर्ववच्छपोलुक् । अवोचत कथां देवदत्तः । अवोचत कथा स्वयमेव । ब्रुवो (२।४।५३) वचिरिति वचिरादेशः । अस्यतिवक्तिख्यातिभ्योऽ (३।१।५२) ङित्यङादेशः । अच (७।४।२०) उम् । अन्तर्भावितण्यर्थत्वात् कर्मस्थक्रियात्वं वेदितव्यम् । आत्मनेपदाकर्मकाणामिति । आत्मनेपदविधावकर्मका ये धातवो गृह्यन्ते त आत्मनेपदाकर्मकाः । विकुर्वते सैन्धवाः स्वयमेवेति । आत्मनेपदेष्वनत-

(७।१।५) इत्यदादेशः । व्यकुषत सैन्धवाः स्वयमेवेत्यत्रापि कुषो विपूर्वाद-कर्मकाच्चेत्या(१।३।३५)त्मनेपदविधानादात्मनेपदाकर्मकत्वम् । अत्रापि वल्गने वर्त्तमानः करोतिरन्तर्भावितण्यर्थः कर्मस्थक्रियो भवति ।

## ९० । कुषिरजोः प्राचां श्यन् परस्मैपदञ्च ।

रञ्जेः कृतानुनासिकलोपनिर्देशो लाघवार्थः । यगात्मनेपदयोरपवादाविति । श्यन् यकोऽपवादः । परस्मैपदन्त्वात्मनेपदस्य । रज्यतीति । अनिदितामित्यनुनासिकलोपः (६।४।२४) । प्राग्ग्रहणं विकल्पार्थमिति । एतेन पूजार्थतामपनयति । पूजार्थे तस्मिन् विकल्पो न लभ्येत । कुष्यत इत्यादिना विकल्पार्थे प्राग्ग्रहणे यदिष्टं सिध्यति तद्दर्शयति । स्यादिविषये चेत्यादि । आदिशब्देन तासिप्रभृतीनां ग्रहणम् । चुकुषे ररञ्ज इति लिट् । आत्मनेपदम् । तप्रत्ययः । तस्यैशादेशः । कोषिषीष्टेत्याशिषि लिङ् । सीयुट् । सुट् तिथोरिति (३।४।१०७) सुट् । लघूपधगुणः । षत्वम् । ष्टुत्वञ्च । रङ्क्षीष्टेति । एकाच इतीट् प्रतिषेधः (७।२।१०) । चोः कुरिति (८।२।३०) कुत्वं गकारः । खरि चेति (८।४।५५) चर्त्वं ककारः । अकोषि । अरञ्जीति । लुङ् । चिण् ।

## ९१ । धातोः ।

यङ्विधौ धातोरित्यधिकारादिति । धातोरेकाच (३।१।२२) इति यङ्विधौ यद् धातुग्रहणं तस्येहाधिकारादित्यर्थः । इयञ्च धातुग्रहणस्यानर्थकत्वे युक्तिः । कृदुपपदसंज्ञार्थन्त्विति । आनर्थक्यमपाकरोति । ननु च पूर्वेणापि धातुग्रहणेन कृदुपपदसंज्ञे सिध्यत एव । किं पुनर्धातुग्रहणेनेत्यत आह अस्मिन्नित्यादि । अस्मिन्नेवेत्यवधारणं द्रष्टव्यम् । यदि पूर्वत्रापि धात्वधिकारे कृदुपपदे स्यातामिह करिष्यतीति स्यप्रत्ययस्य कृदतिङिति (३।१।९३) कृत्संज्ञा स्यात् । ततश्च कृत्तद्धितसमासाश्चेति (१।२।४६) प्रातिपदिकसंज्ञा प्रसज्येत । तस्याञ्च सत्यां सुबुत्पत्तिः । च्लि लुङीत्यत्र (३।१।४३) च तत्रोपपद(३।१।९२)मिति लुङोऽप्युपपदसंज्ञा स्यात् । ततश्च लुङ्युपपदे च्लिरित्ययमर्थश्च सम्भाव्येत । तस्मादिह धात्वधिकारे कृदुपपदसंज्ञे यथा स्यातां पूर्वत्र मा भूतामिति

पुनर्धातुग्रहणम् । अथाधिकारेणैते संज्ञे विधास्येते प्रत्ययसंज्ञावत् । तेन पूर्वत्र न भविष्यतीति चेत् ? नहि । सिंहावलोकितन्यायोऽप्यस्ति । अधिकारेण विधाने पूर्वत्रापि सम्भाव्येयाताम् । तत्र व्याख्यानं कर्त्तव्यम् भवेत् । व्याख्यानाच्च लघु धातुग्रहणं भवति । अवश्यञ्चान्यार्थं धातुग्रहणं कर्त्तव्यम् । तदन्यार्थं क्रियमाणं कृदुपपदसंज्ञाविधावपि विस्पष्टार्थं भविष्यति । तामेव चान्यार्थतां दर्शयितुमाह आर्धधातुकसंज्ञार्थमित्यादि । चशब्दाद्वाऽसरूपविधानार्थञ्चेत्ययमत्रार्थो वेदितव्यः । वाऽसरूपोऽस्त्रियामित्यस्मिन् (३।१।९४) धात्वधिकारेऽसरूपोऽपवादो बाधको यथा स्यात् । पूर्वत्र मा भूत् । तेन क्तादिभिः सिचः समावेशो न भवति । ननु च पूर्वेणापि धातुग्रहणेनार्द्धधातुकसंज्ञा सेत्स्यति । किं द्वितीयधातुग्रहणेनेत्यत आह धातोरित्येवमित्यादि । धातोरित्येवं धातुशब्दमुच्चार्य्य विहितस्यार्धधातुकसंज्ञा यथा स्यादित्येवमर्थं पुनर्धातुग्रहणमित्यर्थः । किमर्थं पुनर्धातोरित्येवं विहितस्यार्धधातुकसंज्ञोच्यत इत्याह इह मा भूदिति । असति द्वितीये धातुग्रहणे लूभ्यां लूभिरित्यत्रार्धधातुकसंज्ञा स्यात् । भवति ह्यत्र धातोः परः प्रत्ययः क्विबन्ता धातुत्वं न जहतीति कृत्वा । आर्धधातुकत्वे सत्यार्धधातुकलक्षण इट् प्रसज्येत । द्वितीयं तु धातुग्रहणं क्रियमाणं सामर्थ्याच्छब्दपदात्मकं भवति । तेनायमर्थो लभ्यते । धातोरित्येवं धातुसंशब्दनेन यो विहितः स आर्धधातुकसंज्ञो भवतीति । तेन लूभ्यामित्यादावार्धधातुकत्वं न भवति । नह्यत्र धातोरित्येवं प्रत्ययो विहितः । किं तर्हि ? प्रातिपदिकादित्येवम् (४।१।१)।

## ९२ । तत्रोपपदं सप्तमीस्थम् ।

सप्तम्या निर्दिष्टमित्यनेन सप्तमीस्थमित्यस्यार्थमाचष्टे । शब्दस्य ह्ययं संज्ञा विधीयते । स च कः सप्तमीस्थो भवति ? यस्याः सप्तम्या निर्देशः । कुम्भकार इत्युपपदसंज्ञायामुपपदमतिङिति (२।२।१९) समासः । गतिकारकोपपदात् कृदित्युत्तरपदस्य (६।२।१३९) प्रकृतिस्वरत्वं भवति । स्थग्रहणमित्यादि । निर्दिश्यतेऽनेनेति निर्देशः । सप्तमी निर्देशो यस्य स सप्तमीनिर्देशः । तत्प्रतिपत्त्यर्थं स्थग्रहणम् । एतदुक्तं भवति । सूत्रे यत् सप्तम्या निर्दिष्टं तस्य

संज्ञित्वेन प्रतिपत्तिर्यथा स्यादित्येवमर्थं स्थग्रहणम्। यदि पुनः स्थग्रहणं न क्रियेत ततः किं स्यादित्यत आह इतरथा हीत्यादि। इतरथा ह्यक्रियमाणे स्थग्रहणे संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति सैव सप्तम्युपपदसंज्ञां प्रतिपद्येत। नचासतः संज्ञिनः संज्ञा युक्तेति यत्र श्रूयते सप्तमी स्तम्बेरम इत्यादौ तत्रैव स्यात्। स्यादेतत्। नैतत् प्रत्ययग्रहणम्। किं तर्हि? सप्तमीशब्दस्य स्वरूपस्य ग्रहणमित्याह यत्रेत्यादि। गतार्थम्। स्थग्रहणात् त्वित्यादि। स्थग्रहणे तु क्रियमाणे ग्रन्थाधिक्यात् सूत्रे यस्य सप्तम्या निर्देश-स्तत् संज्ञित्वेन निर्दिश्यते। तेन सर्वं सिद्धं भवति। येषामियं संज्ञेष्यते तेषां सर्वेषामेव सूत्रे सप्तमीनिर्देशात्। तथाहि स्तम्बकर्णयोरित्यत्र (३।२।१३) स्तम्बकर्णशब्दौ सूत्रे सप्तम्या निर्दिष्टौ। सप्तम्यां जनेर्ड (३।२।९७) इत्यत्राप्युपसरादयः। कर्मण्यणित्यत्रापि (३।२।१) कर्माभिधायिनः कुम्भप्रभृतयः। ननु च लाघवार्थं संज्ञाकरणम्। तत् किमर्थं गुर्वी संज्ञा क्रियत इत्याह गुरुसंज्ञाकरणमित्यादि। उपशब्दः सामीप्ये। उपोच्चारितं पदमुपपदमित्यन्वर्थसंज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारो यथा स्यादित्येवमर्थं गुरुसंज्ञाकरणम्। समर्थपरिभाषोपस्थाने सति यदिष्टं सम्पद्यते तद्दर्शयितुमाह पश्य कुम्भमित्यादि। अन्वर्थसंज्ञायां हि सत्यामुपपदाश्रयः प्रत्ययः पदविधिर्भवति। यत्र च पदगन्धोऽप्यस्ति तत्र समर्थपरिभाषोपतिष्ठते। तेन पश्य कुम्भं करोति कटमित्यत्र कर्मण्यण् न (३।२।१) भवति। नहीह कुम्भस्य करोतिना सामर्थ्यम्। किं तर्हि? पश्येत्यनेन। पदशब्दोऽप्यत्रान्वर्थं एव। न पारिभाषिकः। तथाहि सुबन्तस्य पदसंज्ञा चोपपदसंज्ञाविधानकाले सुबन्ततयास्ति। यस्मादुपपदसंज्ञायां विहितायामुपपदाश्रयेऽपि प्रत्यय उपपदसमासोऽपि गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरिति (प,७६) सुबुत्पत्त्या भवितव्यम्। तस्मादन्वर्थोऽयं पदशब्दः। पद्यते गम्यतेऽर्थो येन तत् पदमिति। तत्रग्रहणं सप्तमीस्थस्य प्रत्ययोत्पत्तिं प्रति निमित्तभावे सत्युपपदसंज्ञा यथा स्यादित्येवमर्थम्। असति हि तत्रग्रहणे कर्मण्युपपदेऽनुपपदेऽपि प्रत्ययः स्यात्। यस्तु कर्मणीति सप्तम्या निर्देशः स यदा सप्तम्यन्तः सम्भवति तदा तस्योपपदसंज्ञार्थः स्यात्। नतु तस्मिन् सत्येव

प्रत्ययेन भवितव्यमित्येषोऽर्थो लभ्यते । तस्माद् यथोक्तप्रयोजनार्थं तत्र ग्रहणम् । ननु चानन्तरस्य धात्वधिकारस्य निर्देशार्थं तत्रग्रहणं कस्मान्न भवति ? तत्रैतस्मिन् धात्वधिकारेऽनन्तर उपपदसंज्ञा यथा स्यादिति । नैतदस्ति । अधिकारादप्येतत् सिद्धम् । उपपदसंज्ञाधिकरिष्यते । तेन वक्ष्यमाणेषु संज्ञिषु संज्ञा भविष्यतीति नार्थ एतदर्थेन तत्रग्रहणेन । तत्रैतस्मिन्नित्यादिस्तु वृत्तिग्रन्थ एव गृह्यते । एतस्मिन् धात्वधिकारे यत् सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति । तत्र च निमित्ते प्रत्यय इत्येषोऽर्थः सोपस्कारत्वाद् वृत्तिग्रन्थस्य लभ्यते ।

## ९३ । कृदतिङ् ।

कर्त्तव्यमिति । कृत्संज्ञायां सत्यां कृत्तद्धितसमासाश्चेति (१।२।४६) प्रातिपदिकसंज्ञा । चीयादिति । आशिषि लिङ् । लिङाशिषीत्यार्द्धधातुकसंज्ञा (३।४।११६) । अतिङिति यदि नोच्येत तिङोऽपि कृत्संज्ञा स्यात् । ततश्चा-कृत्सार्व्वधातुकयोरिति (७।४।२५) दीर्घत्वं न भवेत् । अतिङिति तु सत्यकृद्-यकारत्वाद् भवति ।

## ९४ । वाऽसरूपोऽस्त्रियाम् ।

अपवादविषयमुत्सर्गो नाभिनिविशत इत्येष उत्सर्गधर्मः । कृताच्च केषाञ्चिदुत्सर्गाणामपवादविषये प्रवृत्तिरिष्यते । सा च वचनमन्तरेण न सिध्यतीति तदर्थमिदम् । ननु चारभ्यमाणेऽप्येतस्मिन् नैवायमर्थः सम्पद्यते । तथाह्यस्योत्सर्गेण वा सम्बन्धः स्यादपवादेन वा । उभाभ्यां वा । तत्र यदि पूर्वकल्प आश्रीयेत तदा वाशब्देन विकल्पार्थेनोपस्थापितयोर्भावाभावयोर-स्यायमर्थः स्यात् । उत्सर्गोऽसरूपोऽस्त्रियां पक्षे भवतीति पक्षे न भवतीति । तथा चापवादस्य स्वस्मिन् विषये नित्याप्राप्तिः स्यात् । नह्यनेनापवादस्य किञ्चित् कृतम् । तेन सहास्यासम्बन्धात् । न च बाधकेऽपवादेऽविकल्पां प्रवृत्ति मनुभवति सति तत्रोत्सर्गः प्रवर्त्तितु मुत्सहत इति स्वविषय एव विकल्पः प्रवर्त्तेत । अथ द्वितीयस्तदायमर्थः स्यात् । असरूपोऽपवादोऽ-स्त्रियां विकल्पेन भवतीति । एवमपि नैवोत्सर्गस्यापवादविषये प्रवृत्तिर्लभ्यते ।

उत्सर्गोऽपवादविषयं परिहरति। तदपवादस्य बाधकत्वात्। तच्च बाधकत्व-मस्मिन्नपि पक्षे तदवस्थमेव। नह्यनेन तदपनीतम्। किं तर्हि? स्वस्मिन् विषये तस्य भावाभावौ प्रतिपादितौ। पक्षे भवति पक्षे न भवति। नचान्य-द्वचनमस्ति यतोऽपवादविषयमुत्सर्गोऽध्यास्ते। अपवादस्याभावपक्षे प्राप-कवचनमन्तरेणापि उत्सर्गो भविष्यति। प्रतिबन्धाभावादिति चेत्? सत्यमेतत् कार्य्यबाधायाम्। शास्त्रबाधायान्तु यत् कार्य्यस्य विधायकं तदपवादेन बाध्यमानं तद्विषयपरीहारेणैव प्रवर्त्तेत। तस्मिन् प्रवृत्ते पश्चादपवादे विकल्पेन प्रवृत्तिमनुभवत्यपि तद्विषय उत्सर्गप्रवृत्तिर्न सम्भवति। सामान्य-शास्त्रस्यातद्विषयत्वात्। अस्तु कार्य्यबाधापक्ष इति चेत्? न। अयुक्त-त्वात्। न ह्यबाधिते विधायके शास्त्रे तत्कार्य्यबाधा युज्यते। निदानो-च्छेदेन हि निदानिन उच्छेदः शक्यते कर्त्तुम्। नान्यथा। नहि प्रदीपे ऽनुच्छिन्ने तत्प्रभोच्छिद्यते। तस्मादपवादः शास्त्रमेव बाधते। तस्मिंश्च बाधिते सत्यपवादाभावपक्षेऽपि नैवोत्सर्गस्यापवादविषये प्रवृत्तिः स्यात्। अथ तृतीयः पक्षस्तदायमर्थः स्यात्। उत्सर्गोऽसरूपोऽस्त्रियां वा भवति। अपवादोऽपीति। एवमपि तयोः स्वस्मिन् विषये विकल्पेन प्रवृत्तिः स्यात्। नतूत्सर्गस्यापवादविषये। पूर्वोक्तादेव हेतोः। तस्मात् क्रियमाणेऽप्येतस्मिन् नैवाभिमतोऽर्थः सम्पद्यत इति यो देशयेत् तं प्रत्याह असरूपोऽपवाद-प्रत्ययो वा बाधको भवतीति। एतेनापवादस्यानेन सम्बन्धौ नतु भावा-भावौ विकल्प्येते। किं तर्हि? पक्षे बाधकत्वमिति दर्शयति। एवञ्च यस्मिन् पक्षेऽपवादो बाधको न भवति तस्मिन् विषये प्रतिबन्धाभावादुत्सर्गः प्रवर्त्तेत इति सिध्यति समावेशः। स्त्र्यधिकारविहितं प्रत्ययं वर्जयित्वेति। कथं पुनरस्त्रियामिति वचनादेषोऽर्थो लभ्यते? एवमन्यते। स्त्रीग्रहणमिह स्वर्य्यते। स्वरितेन चाधिकारावगतिर्भवति (१।३।११)। तेन स्त्र्यधिकारविहितमाश्रित्य यावुत्सर्गापवादौ विहितौ तद्विषये प्रतिषेधो विज्ञायत इति। अथैवं कस्मान्न विज्ञायते स्त्रियामभिधेयायामसरूपोऽपवादो बाधको वा न भवतीति? एवमशक्यं विज्ञातुम्। एवं हि विज्ञायमाने लव्या लवितव्येति यद्विषये तव्यो न स्यात्। एवं तर्हि कस्मान्न विज्ञायते? स्त्रियामित्येवं स्त्रीशब्द-

संशब्देन यः प्रत्ययो विहितः स इह स्त्रीशब्देनोक्तः । तत्र स्त्रियामित्येवं विहितेऽसरूपोऽपवादो बाधको वा न भवतीति? एवमशक्यं विज्ञातुम् । एवं हि विज्ञायमाने व्यावक्रोशी व्यावक्रुष्टिरिति णचो विषये क्तिनः प्रवृत्तिर्न स्यात् । यस्मात् कर्मव्यतीहारे णच् स्त्रियामिति (३।३।४३) णज् विहितः । स्त्रियां क्तिनपि । तस्मात् पूर्वोक्त एवार्थः । यद्येवं क्तल्युट्तुमुन्खलर्थेष्विति (प,६८) परिभाषा न प्राप्नोति । तेषामस्त्र्यधिकारविहितत्वात् । नपुंसके भावे क्तः (३।३।११४) । ल्युट् च (३।३।११५) । हसितं हसनम् । तयोर्विषये भाव इति (३।३।१८) घञपि प्राप्नोति । समानकर्त्तृकेषु (३।३।१५८) तुमुन् । इच्छति भोक्तुम् । तस्य विषय इच्छार्थेषु लिङ्लोटावपि (३।३।१५७) प्राप्नुतः । आतो (३।३।१२८) युच् । ईषत्पानम् । तस्य विषय ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु (३।३।१२६) खलिति खलपि प्राप्नोति । वावचनस्य व्यवस्थितविभाषात्वान्न भवतीत्यदोषः । ण्वुल्(३।१।१०३)तृचावित्युत्सर्गाविति । सामान्यविहितत्वात् । इगुपधज्ञाप्रीकिरः (३।१।१३५) क इत्यपवादः । विशेषविहितत्वात् । कर्मण्यणित्युत्सर्गः (३।२।१) । आतश्चोपसर्ग इति(३।१।१३६) कप्रत्ययोऽपवादः । ननु चानुबन्धकृतेनासारूप्येण सोऽप्यसरूप इत्याह । नानुबन्धकृत इत्यादि । अत्र ददातिदधात्योर्विभाषेति (३।१।१३९) विभाषाग्रहणं ज्ञापकम् । यदि ह्यनुबन्धकृतमसारूप्यं स्याद् विभाषाग्रहणमनर्थकं स्यात् । अनुबन्धकृतादसारूप्यादेव हि श्याद्व्यधेत्यादि (३।१।१४१)सूत्रेण पक्षे णो भविष्यति ।

## ९५ । कृत्याः प्राङ् ण्वुलः (M) ।

कृत्या इति बहुवचनेन निर्देशो बहुत्वात् संज्ञिनाम् । अथवा ऽनुक्तकृत्प्रत्ययसंग्रहार्थं बहुवचनम् । तेन केलिमर उपसंख्यानमित्येतत् कर्त्तव्यन्न भवति । ण्वुल्तृचाविति वक्ष्यतीति । अथ रोगाख्यायां ण्वुल् बहुलमित्यस्य (३।३।१०८) ण्वुलोऽवधित्वं कस्मान्न विज्ञायते ? ज्ञापकात् । यदय मर्हे कृत्यतृचश्चेति (३।३।१६९) कृत्यग्रहणं कृत्वा तृज्ग्रहणं करोति ततो ज्ञायते

---

(M) The real Rule is कृत्याः । The portion प्राङ् ण्वुलः is inserted by the वृत्तिकार । Says हरदत्तमिश्र "कृत्या इत्येतावदेव सूत्रं पठितं सूत्रकारेण । वृत्तिकारस्तु भाष्ये पूर्वपक्षरूपेण पठितं सूत्रे प्रक्षिप्तेप । विस्पिवा हि वृत्तेः कृतिर्वृत्तिकारेण ।" भट्टोजि too supports हरदत्त ।

नास्यावधित्वमिति। अन्यथा तृचोऽपि कृत्यत्वाद् भेदेनोपादानमनर्थकं स्यात्। यद्येवं प्राग्वचनमनर्थकं स्यात्। अतएव ज्ञापकात् तृच इयं संज्ञा न भविष्यति। नैतदस्ति। असति ह्येतस्मिन् ज्ञापकात् तृच एव न स्यात्। बहुलस्तु स्यादेव। स्यादेतत्। योगापेक्षं ज्ञापकम्। एतस्मिन् योगे कृत्यसंज्ञा भवतेरेषोऽर्थस्तृजग्रहणेन ज्ञाप्यते। तेन बहुलोऽपि न भविष्यतीति। एवमन्येषामजादीनां स्यात्। प्रतिपत्तिगौरवञ्च स्यात्। योगापेक्षस्य ज्ञापकस्य दुर्विज्ञानत्वात्।

## ९६। तव्यत्तव्यानीयरः।

तकाररेफौ स्वरार्थाविति। तकारस्तित् (६।१।१८५) स्वरितमिति स्वरितार्थः। रेफ उपोत्तमं रितीति (६।२।२१७) मध्योदात्तार्थः। वसे स्तव्यत् कर्त्तरि णिच्चेति। वस निवास इत्यस्मात् कर्त्तरि तव्यत्प्रत्ययो भवति। स च णिद् भवतीति। नचैतद् वक्तव्यम्। कृत्यल्युटो (३।३।११३) बहुलमिति सिद्धत्वात्। वसतीति वास्तव्यः। णित्त्वाद्वृद्धिः। केलिमर उपसंख्यानमिति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनन्तु प्रागेव कृतम्। पुनरपि क्रियते। कृत्यल्युटो बहुलमिति (३।३।११३) बहुलवचनात् केलिमर्प्रत्ययोऽपि कृत्यो भविष्यति। ककारः कित्कार्य्यार्थः। रेफः स्वरार्थः। स्वयमेव पच्यन्ते पचेलिमा माषाः। शब्दशक्तिस्वाभाव्यादत एव बहुलवचनाच्च कर्म-कर्त्तर्य्येव भवति। नान्यत्र।

## ९७। अचो यत्।

तकारो यतोऽनाव इति (६।१।२१३) विशेषणार्थ इति। आद्युदात्तार्थः। गेयमिति कै गै शब्दे। आदेच (६।१।४५) उपदेशेऽशितीत्यात्त्वम्। ईद् (६।४।६५) यतीत्त्वम्। गुणः। यावतेत्यादि। इह द्विविधा धातवः। हलन्ता अजन्ताश्च। तत्र ऋहलोर्ण्यदिति (३।४।६५) ण्यतं हलन्ताद्वक्ष्यति। अतः पारिशेष्यादेवाज्ग्रहणमन्तरेणाप्यजन्तादेव यद् भविष्यतीत्यतोऽज्ग्रहणमपार्थ-कमित्यभिप्रायः। अजन्तभूतपूर्वादिति। अजन्तश्चासौ भूतपूर्वश्चेति कर्म-धारयः। यः प्रागजन्त आसीत् संप्रति तु हलन्त स्ततोऽपि यथा स्यादित्ये-

वमर्थमज्ग्रहणम् । दित्सम् । धित्सम् । दाओ धाञश्च सन् । द्विर्वचनम् । सनि (७।४।५४) मीमितीस् । अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः (७।४।५८) । सः (७।४।४९) स्यार्द्धधातुक इति तत्त्वम् । अनुत्पन्न एवार्धधातुके विषयभाविन विवक्षिते ऽतो लोप (६।४।४८) इत्यकारलोपः । अस्यामवस्थायामसत्यज्ग्रहणे न स्यात् । अनजन्तत्वात् । तस्मिंस्तु सति भूतपूर्वमजन्तत्वमाश्रित्य भवति । पाक्षिकस्त्वेतत् प्रयोजनं वेदितव्यम् । क्व तस्मिन् पक्षे ? यदार्धधातुके विषयभाविन विवक्षिते ऽतो लोपो (६।४।४८) विधीयते । यदार्धधातुकस्तदा नेदं प्रयोजनम् । विस्पष्टार्थन्त्वज्ग्रहणं वेदितव्यम् । तकिशसीत्यादि । तक सहने । शसु हिंसायाम् । चते चदे याचने । यती प्रयत्ने । जनी प्रादुर्भावे । एषां यत्प्रत्ययस्योपसंख्यानं प्रतिपादनं कर्त्तव्यम् । प्रतिपादनन्तु बहुलग्रहणमाश्रित्य कर्त्तव्यम् । हनो वा वध चेति । हन्तेर्धातोर्यत्प्रत्ययो भवति । ण्यतोऽपवादः । वावचनात् पक्षे ण्यद् भवत्येव । यत्प्रत्ययस्तु तत एव बहुलवचनाल्लभ्यते । यदा यद् भवति तदा हन्तेर्वधादेशः । सोऽपि हनो (२।४।४२) वध लिङीत्यत्र बहुलं (२।४।३९) छन्दसीत्यतो बहुलग्रहणानुवृत्तेर्लभ्यते । घात्य इति । हनस्त इति (७।३।३९) तत्वम् । हो हन्तेरिति (७।३।५४) कुत्वम् ।

## ९८ । पोरदुपधात् ।

पाक्यम् । वाक्यमिति । चजोरिति (७।३।५४) कुत्वम् । कोप्यम् । गोप्यमिति । कुप क्रोधे । गुप गोपनकुत्सनयोः । गुप व्याकुलीकरणे । आप्यमिति । आप्लृ व्याप्तौ ।

## ९९ । शकिसहोश्च ।

## १०० । गदमदचरयमश्चानुपसर्गे ।

अनुपसर्गे इति । सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी । अतएवाह अनुपसर्गेभ्य इति । अविद्यमानोपसर्गेभ्य इत्यर्थः । अथैवं कस्मान्न विज्ञायत उपसर्गादन्यो ऽनुपसर्ग इति । अशक्यमेवं विज्ञातुम् । एवं हि विज्ञायमाने केवलेभ्यो न स्यात् । नञिवयुक्तन्यायेनोपसर्गसदृशस्य सुबन्तस्य ग्रहणे सति

वदः सुपि क्यप् चेत्यत्र (३।१।१०६) पुनः सुब्ग्रहणमनर्थकं स्यात्। यस्यै-वानुपसर्गस्य तत्रानुवृत्तेः। तस्मात् पूर्वोक्त एवार्थो युक्तः। नियमार्थमिति। अनुपसर्गादेव यथा स्यात्। सोपसर्गान्मा भूदिति। चरेरित्यादि। सोपसर्गार्थ-मिदम्। चरेर्धातोराङि चोपपदे यद्भवतीति। अगुरावभिधेये। स तु ज्ञापकादेव सिध्यतीति नोपसंख्येयः। यदयमाश्चर्यमनित्ये (६।१।१४७) सम्माननोत्सञ्जनाचार्यकरणेत्यादि (१।३।३६) करोति ततो ज्ञायते चरेराङि चागुरौ यद् भवतीति। आचर्या देश इति। गन्तव्य इत्यर्थः। गुरुरुपनेता।

## १०१। अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु।

अवद्यमिति। वदेर्नञ्युपपदे वदः सुपि क्यप् चेति (३।१।१०६) यत्क्यपोः प्राप्तयोर्यदेव निपात्यते। अनुद्यमिति। यजादित्वात् संप्रसारणम्। नलोपो (६।३।७३) नञः। तस्मान्नुडचीति (६।३।७४) नुट्। पण्यमिति। पणेर्व्य-वहारार्थस्य ण्यति प्राप्ते यन्निपात्यते। पाण्यमिति। स्तोतव्यमित्यर्थः। वर्येति। वृञो ण्यति प्राप्ते यन्निपात्यते। स्त्रियामित्यनेन सूत्रे लिङ्गनिर्देशस्य तन्त्रतां दर्शयति। अप्रतिबन्ध इति। अनेनानिरोधशब्दस्यार्थमाचष्टे। अप्रतिबन्धः प्रसराविघात इत्यर्थः। वृत्येति निरोधनीया। प्रसरविघातोऽस्याः कर्त्तव्य इत्यर्थः। एतच्च वृञ एतिस्तुशास्विति (३।१।१०९) क्यपि कृते ह्रस्वस्य पिति कृतीति (६।१।७१) तुकि च रूपम्। वार्या ऋत्विज इति। वृङ एतद् रूपम्। ऋत्विजो हि धनेन संविभक्तव्या इत्यस्यनिरोधः। स्त्रीलिङ्गता तु नास्तीति। ण्यदेव भवति। नन्वेतिस्तुशास्विति (३।१।१०९) क्यपा भवितव्यम्। नैतदस्ति। वृञो हि तत्र ग्रहणम्। वृङश्चात्रोदाहरणम्।

## १०२। वह्यं करणम्।

## १०३। अर्यः स्वामिवैश्ययोः।

वक्तव्यमिति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। तन्त्रेणेह द्वावर्यशब्दावुच्चारितौ। तत्रैक आद्युदात्तः। अपरोऽन्तोदात्तः। य आद्युदात्तः स वैश्ये निपात्यते। इतरस्तु स्वामिनीति।

## १०४ । उपसर्य्या काल्या प्रजने ।

प्राप्तकाला काल्येति । तदस्य प्राप्तमितप्रनुवर्त्तमाने (५।१।१०४) कालाद् (५।१।१०७) यदिति यत् । प्रजननं प्रजनः । भावे घञ् । जनिवध्योश्चेति (७।३।३५) वृद्धिप्रतिषेधः । उपसार्य्येति । उपसंक्रमणीयेतप्रर्थः ।

## १०५ । अजर्य्यं सङ्गतम् ।

जीर्य्यतेरिति । जृष् झृष् वयोहानौ । सङ्गमन इति । सङ्गमनं सङ्गतिः । ल्युट् चेति (३।३।११५) ल्युट् । एतेन सङ्गतमित्यत्र नपुंसके भावे क्त (३।३।११४) इति दर्शयति । कर्त्तरि यत्प्रत्ययो निपात्यत इति । तृजादीनामपवादः । अजरितेति तृच् ।

## १०६ । वदः सुपि क्यप् च ।

अनुपसर्ग इति वर्त्तत इति । ननु च सत्सुद्विषेत्यादौ (३।२।६१) सूत्रे वद्यतेप्रतदुपसर्गग्रहणं ज्ञापनार्थम् । अन्यत्र सुब्ग्रहण उपसर्गग्रहणं न भवतीति । एवञ्च ततएव ज्ञापकादुपसर्गे न भविष्यतीति किमिहानुपसर्गग्रहणानुवृत्त्या ? विस्पष्टार्थमित्येके । तत्र वाज्ञापनार्थमुपसर्गग्रहणं कर्त्तव्यम् । इह वानुपसर्गमनुवर्त्त्यमिति विकल्पदर्शनार्थमित्यपरे । ब्रह्मोद्यमिति । ब्रह्मणो वदनमित्यर्थः । भावे क्यप् । पूर्ववत् संप्रसारणम् । आद् गुणः (६।१।८७) । उपपदसमासः ।

## १०७ । भुवो भावे ।

यत् तु नानुवर्त्तत इति । पूर्वसूत्रे चानुकृष्टत्वात् । ब्रह्मभूयं गत इति । ब्रह्मत्वं प्राप्त इत्यर्थः । ननु च तयोरेव कृत्यक्तखलर्था (३।४।७०) इति भावकर्मणोः कृत्या विधीयन्ते । अनुपसर्ग इति चानुवर्त्तते । अनुपसर्गश्च भवतिरकर्म्मक इति सामर्थ्याद् भाव एव भविष्यति । न कर्मणि । किं भावग्रहणेनेत्याह भावग्रहणमुत्तरार्थमिति । एतेन हनस्त (३।१।१०८) चेत्यत्रोपयोगमाह तत्र भाव एव यथा स्यात् । भव्यमिति । अचो (३।१।९७) यत् । धातोर्गुणः । धातो (६।१।८९) स्तन्निमित्तस्यैवेत्यवादेशः ।

१०८। हनस्त च।

ब्रह्महत्येति। ब्रह्मणो हननमित्यर्थः। घात इति। पूर्ववत् तत्व-कुत्वे। किमर्थं पुनर्घञ् प्रत्युदाह्रियते ? न ण्यदित्याह ण्यत्त्वित्यादि। तत्रैव युक्तिमाह अनभिधानादिति। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति। नच हन्तेर्विहितेन ण्यता भावः शक्यतेऽभिधातुम्। तथाहि घात्य इत्युक्ते कर्मैव प्रतीयते। न भावः।

१०९। एतिस्तुशास्वृदृजुषः क्यप्।

शिष्य इति। शासु अनुशिष्टौ। शास इदङ् (६।४।३४) हलोरितीत्त्वम्। शासिवसीति (८।३।६०) षत्वम्। आदृत्य इति। दृङ् आदरे। आङ्पूर्वः। जुष्य इति। जुषी प्रीतिसेवनयोः। अथ किमर्थं क्यब्ग्रहणम् ? यावता वदः (३।१।१०६) सुपि क्यप् चेत्यतः क्यब्ग्रहण मनुवर्त्तत एवेत्यत आह क्यबिति वर्त्तमान इत्यादि। बाधकबाधनार्थमिति। एतद् विस्पष्टीकर्त्तुमाह ओरावश्यक (३।१।१२५) इति। स्तुग्रहणस्यावकाशो यत्रावश्यकं न विवक्ष्यते स्तुत्य इति। ओरावश्यक (३।१।१२५) इत्य-स्यावकाशोऽन्यो धातुः। अवश्यलाव्यमिति। इहोभयं प्राप्नोति। अवश्य-स्तुत्य इति। परत्वाद् बाधको ण्यत् स्यात्। पुनः क्यब्ग्रहणात् तमपि बाधित्वा क्यब् भवति। वृग्रहणेन वृञो ग्रहणमिष्यते। न वृङ इति। तत् कथम् ? कुषिरजो रित्यादेः (३।१।९०) सूत्रादिह परस्मैपदग्रहणमनुवर्त्तते। तेन वृशब्दो विशिष्यते। परस्मैपदस्य यो वृशब्द इति। कश्च परस्मैपदस्य वृशब्दः ? यस्य परस्मैपदं प्रति निमित्तभावो दृष्टः। वृञ एवोभयपदिनः स दृष्टः। न वृङः। तस्य नित्यात्मनेपदित्वात्। तेन वृञ एव ग्रहणं भवति। न वृङः। शंसिदुहीत्यादि। एभ्यः शंसिप्रभृतिभ्यो वा क्यब् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु तदेव बहुलग्रहणमाश्रित्य कर्त्तव्यम्। शस्यमिति। शन्सु स्तुतौ। अनिदितामिति (६।४।२४) न लोपः। गुह्यमिति। गुहू संवरणे। आङ्पूर्वादञ्जेरित्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तच्च पूर्ववत्। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। पूर्ववन्नलोपः। इयच्च सर्पिषः

संज्ञा । कथमुपेयमिति ? इण एतद्रूपमिति मन्यमानस्य प्रश्नः । ईङ एतद्रूपमिति । ईङ् गतावित्यस्याचो यदिति (३।१।९७) यति सत्येतद्रूपम् । नत्विणः । तस्य हि क्यपि सत्युपेत्यमिति भवितव्यम् ।

## ११० । ऋदुपधाच्चाक्लृपिचृतेः ।

क्लृपिचृती वर्जयित्वेति । कृपू सामर्थ्ये चृती हिंसाग्रन्थनयो रित्येतौ त्यक्त्वा । क्लृपे र्लत्वस्यासिद्धत्वादृदुपधत्वम् । कल्प्यमिति । लत्वस्यासिद्धत्वादृकारस्यैवाकारो गुणः । ण्यदेव भवति । कीर्त्यमिति । आर्धधातुकविवक्षायां चुरादिणिचो णेरनिटीति ( ६।४।५१ ) णिलोपे कृते हलन्ततोपजायत इति कृत्वा ऋहलोर्ण्यदिति ( ३।१।१२४ ) ण्यदेव भवति । हलि चेति ( ८।२।७७ ) दीर्घः । ननु चाचो (३।१।९७) यदित्यत्राज्ग्रहणस्य प्रयोजनमुक्तम् । अजन्तभूतपूर्वादपि यथा स्यात् । दित्स्यम् । धित्स्यमिति । एवञ्चेहापि णिचि लुप्ते यतैव भवितव्यम् । एवं तर्ह्यनित्यण्यन्ताश्चुरादय इताण्यन्तादेवात्र ण्यद् भवतीत्यदोषः । वक्तव्य इति । व्याख्येय इत्यर्थः । व्याख्यानन्तु पूर्ववत् । पाणिभ्यां स्रष्टव्या पाणिसर्ग्या रज्जुः । उपपदमतिङिति ( २।२।१९ ) समासः । समवपूर्वाच्चेति । सृजेर्ण्यद् भवतीति सम्बध्यते । चकारः समुच्चये । न केवलं पाणावुपपदे ण्यद्वक्तव्योऽपि तु समवपूर्वाच्च ।

## १११ । ई च खनः ।

खेयमिति । खनु अवदारणे । नकारस्य ईकारः । आद् (६।१।८७) गुणः । अथ किमर्थं दीर्घ आदिश्यते ? यावता ह्रस्वेऽपि कृते आद् गुणेन भवितव्यम् । न च ह्रस्वस्याद् गुणे कृते कश्चिद् विशेषः । स्यादेतत् । एकादेशस्तु तुग्विधावसिद्धो वक्तव्यः । तत्र यदि ह्रस्व आदिश्यते तदा ह्रस्वस्याद् गुणे कृते तुग्विधावसिद्धत्वाद् ह्रस्वाश्रयस्तुक् स्यात् । दीर्घादेशे तु न भवति । अतो दीर्घादेशो वक्तव्य इति । एतच्च नास्ति । यस्मात् पदान्तपदाद्यो र्य एकादेशः स तुग्विधावसिद्धो वक्तव्यः । न सर्वत्रेत्याह दीर्घनिर्देश इत्यादि । अकः (६।१।१०१) सवर्णदीर्घत्वेन द्वयो रिवर्णयोः प्रश्लेषो यथा स्यादित्येवमर्थो

दीर्घनिर्देशः। किमर्थं पुनर्द्वितीय इवर्णः ? यावतैकेनैव खेयमिति रूपं सिध्यतीत्यत आह तत्रेत्यादि। द्वयोरिकारयोः प्रश्लेषनिर्देशः। तत्र यो द्वितीय इवर्णः स ये (६।४।४३) चेत्यात्त्वबाधा यथा स्यादित्येवमर्थः। ये (६।४।४३) विभाषेत्यस्यावकाशः खायते खन्यत इति। अस्यादेशस्यावकाशो यस्मिन् पक्ष आत्त्वं नास्ति। आत्त्वपक्षे तूभयं प्राप्नोति। उभयप्राप्तावसतीकारे परत्वादन्तरङ्गत्वाच्चात्त्वं स्यात्। अस्मिंश्च सत्यात्त्वं बाधित्वेकार एव भवति। अन्तरङ्गत्वं पुनरात्त्वस्य यकारसामान्यमाश्रित्य विधानात्। इत्वस्य बहिरङ्गत्वम्। क्यप्विशेषमाश्रित्य विधानात्।

## ११२। भृञोऽसंज्ञायाम्।

भर्त्तव्या इत्यर्थ इति। एतेन क्रियाशब्दत्वं भृत्यशब्दस्य दर्शयन् संज्ञाशब्दत्वमपाकरोति। संपूर्वाद्विभाषेति। असंज्ञायामेवायं क्यपो नित्यं प्रसक्तस्य विकल्पः। एतद् वक्ष्यमाणस्य विभाषाग्रहणस्योभयोरपि योगयोः शेषभूतत्वाद् व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। संज्ञायां पुंसीत्यादि। असंज्ञायामित्यस्य प्रतिषेधस्येति शेषः। एतेन पुंसि प्रतिषेधस्य चरितार्थतामाह यत एवं पुंसि चरितार्थः प्रतिषेधस्ततो न ते भार्य्या प्रसिध्यति। भार्य्याशब्द स्तव सूत्रकारस्य मते न प्रसिध्यतीत्यर्थः। पुंसि प्रतिषेधे हि चरितार्थे स्त्रियां क्यपा भवितव्यम्। ननु चासंज्ञायामित्युच्यते। संज्ञाशब्दश्च भार्य्याशब्दः। तथाहि अबिभ्रत्यपि देवदत्ते तस्य पत्नी भार्य्येत्युच्यते। तत् कुतः क्यप्प्रसङ्गः ? न ब्रूमोऽनेन सूत्रेण क्यपा भवितव्यमिति। किं तर्हि ? संज्ञायां समजनिषदेत्यनेन (३।३।९९)। तत्र उत्तरमाह स्त्रियां भावाधिकारोऽस्तीति। भावाधिकारशब्देनात्र भावस्याभिधेयभावोपगमलक्षणो व्यापारो विवक्षितः। नतु शास्त्रीयोऽधिकारः। स्त्रियां स्त्रीप्रकरणे संज्ञायां समजनिषदेत्यादिना (३।३।९९) क्यपि विधीयमाने भावस्याधिकारः। शब्दशक्तिस्वाभाव्यात्। तत्र क्यब् विधीयमानो भाव एव भवति। न कर्म्मणि। तेन भार्य्या प्रसिध्यतीति। कर्मणीत्यभिप्रायः। यस्मात् स्त्रियां भावाधिकारोऽस्ति। भाव एव वाच्यत्वेन व्याप्रियते। न कर्म। तेन कर्मणि भार्य्याशब्दः

प्रसिध्यति । स्त्रियां भावाधिकारे हि भाव एव क्यपा भवितव्यम् । कर्मणि तु ण्यतैव ।

## ११३ । मृजेर्विभाषा ।

ऋदुपधत्वात् प्राप्तविभाषेयम्। ऋदुपधाच्चाक्लृपिचृतेरिति (३।१।११०) क्यपो विधानात् । परिमार्ग्य इति । पूर्ववत् कुत्वम् । मृजेर्वृद्धिः (७।२।११४) ।

## ११४ । राजसूयसूर्य्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।

राज्ञा सोतव्य इति । वाक्यविशेषेण राजनि तृतीयान्त उपपदे कर्मणि निपातनमिति दर्शयति । राजा वेह सूयत इत्यनेनापि राजनि प्रथमान्त उपपदेऽधिकरणे निपातनमिति । षुञ् अभिषव इत्यस्मात् क्यप् । तत्र चास्य तुगभावो दीर्घत्वञ्च निपात्यते । सूसर्त्तिभ्यामिति । षू प्रेरणे सृ गतौ । आभ्यां यथाक्रममचो (३।१ ९७) यदिति यति प्राप्त ऋहलोर्ण्यदिति ( ३।१।११४ ) च क्यप् निपात्यते । सुवतीति । कर्मणि । कार्य्ये लोकान् प्रेरयतीति । तस्मिन् ह्युदिते लोकस्य क्रियाप्रवृत्तिः । पक्षे यति प्राप्त इति । वदः सुपि (३।१।१०६) क्यप् चेत्यनेन । मृषावदनं मृषोद्यम् । क्यप् । संप्रसारणम् । आद् गुणः (६।१।८७) । उपपदसमासः । रोचतेऽसाविति कर्तृप्रत्ययान्तेनार्थमुपदर्शयन् कर्त्तरि निपातनं दर्शयति । ऋआदौ प्राप्ते क्यम् निपात्यते । गुपेरिति । गुप गोपने । गुपू रक्षण इत्यस्य वा । अव्यथ्य इति । व्यथ भयचलनयोः । अस्मात् कर्त्तरि ऋजपवादः क्यम् निपात्यते ।

## ११५ । भिद्योद्ध्यौ नदे ।

उज्झेश्चेति । उज्झ उत्सर्गे । कर्त्तरि क्यप् निपात्यत इति । ऋजादेरपवादः ।

## ११६ । पुष्यसिद्ध्यौ नक्षत्रे ।

पुषेः सिधेश्चेति । पुष पुष्टौ । सिधु संराद्धौ । अधिकरणे क्यप् निपात्यत इति । ल्युटोऽपवादः ।

११७। विपूयविनीयजित्या मुञ्जकल्कहलिषु।

विपूर्वात् पवतेरिति। पूङ् पवने। नयतेश्चेति। विपूर्वादितर-पेक्षते। यति प्राप्त इति। त्रयाणामप्यजन्तत्वात्। विपूयते विपूयः। विनीयते सिद्धत्वं प्राप्यते विनीयः। तैलेन घृतेन वा त्रिफलादिद्रव्य-समवेतेन साध्यः कश्चिदौषधविशेषः कल्क इत्युच्यते। जेतव्यो जित्यः। हलहलं हलिः।

११८। प्रत्यपिभ्यां ग्रहेश्छन्दसि।

प्रतिगृह्यमिति। ग्रहिज्येत्यादिना (६।१।१६) संप्रसारणम्। कुगतिप्रादय (२।२।१८) इति समासः।

११९। पदास्वैरिबाह्यापक्ष्येषु च।

अस्वैरीति। ईर गतौ। स्वेन स्वयमीरितुं गन्तुं शीलमस्येति ताच्छी-लिको णिनिः। निपातनाद्वृद्धिः। स्वैरी स्वतन्त्रः। अस्वैरी परतन्त्र उच्यते। बाह्यायामिति बहिर्भूतायामित्यर्थः। बहिषष्टिलोपश्चेत्युपसं-ख्यानाद् (४।१।८५, वा) यञ्। तत्र च टिलोपः। पक्षे चार्थ इति। पक्षशब्दो वर्गमाचष्टे। पक्षे भवः पक्ष्य इति दिगादित्वाद् (४।३।५४) यत्। प्रगृह्यत इति प्रगृह्यं पदम्। असन्निकर्षोऽत्र गृह्णातेरर्थः। स्वरा हि तत्र न सन्निकृष्यन्ते सन्निधीयन्त इत्यसन्निकर्षः। अवगृह्यत इत्यवगृह्यम्। यस्यावग्रहः क्रियत इति। तत्र समुदायपदे ऽवयवपदानि विविधान्यवगृह्य विच्छिद्य व्या-ख्यायन्ते। तेनावयवानामवगृह्यत्वादवगृह्य मित्युच्यते। गृह्यका इति। अनुकम्पायामिति (५।३।७६) कन्। गृहीतका इति। संयताः परतन्त्रीकृता इति यावत्। अन्यत्रेति पुंसि नपुंसके च। वासुदेवगृह्या इति। षष्ठीसमासः।

१२०। विभाषा कृवृषोः।

वृषेश्चेति। वृषु मृषु सृषु सेचने।

१२१। युग्यञ्च पत्रे।

पतन्त्यनेनेति पत्रमिति। दाम्नीशसेत्यादिना ष्ट्रन् (३।२।१८२)।

युग्यमिति। युजिर् योगे। योजनीये। युज्यते वाहनेन गमनमिति युग्यम्।

## १२२। अमावस्यदन्यतरस्याम्।

अमावस्यदिति। ण्यत्प्रत्ययान्तमेतन्निपातनम्। न क्यप्प्रत्ययान्तमिति ज्ञापनार्थं तकारानुबन्धोच्चारणम्। अन्यथा क्यपः प्रकृतत्वात् क्यप्प्रत्ययान्तमेतदिति सम्भाव्येत। स चापि तित्प्रत्ययो ण्यदिहाभिप्रेतः। न यत्। अन्यथा हि निपातनमनर्थकं स्यात्। यत्प्रकरणे ऽमावसेरन्यतरस्यामित्येव ब्रूयात्। दोषवत्त्वाच्च यत्प्रत्ययान्तनिपातनस्य। दोष स्तूत्तरत्राविष्करिष्यते। यश्च यत्प्रत्ययान्तनिपातने दोषः स क्यबन्तेऽपि। संप्रसारणाभावश्च निपातयितव्यतामापद्येत। तस्माण्ण्यत्प्रत्ययान्तमेतन्निपातनमिति मत्वाह कालेऽधिकरणे ण्यत्प्रत्ययो भवतीति। एकदेशविकृतत्वादिना ण्यत् प्रत्ययान्तनिपातनस्य गुणं दर्शयति। वृद्ध्यभावो हि ण्यति निपातितोऽमावस्या शब्द एव। अमावास्याशब्दे नात्रोपतिष्ठते वृद्ध्यभावपक्षे। ततश्चैकदेशविकृतमनन्यवद्भवती(प, ३८) त्यमावस्याशब्दे गृह्यमाणे ऽमावास्याशब्दस्यापि ग्रहणं भवति। तेन पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्नित्य (४।३।२८) नुवर्त्तमाने ऽमावास्याया वेत्य (४।३।३०) मावास्याशब्दे वुन्नणौ विधीयमानवमावस्याशब्दस्यापि सिध्यतः। अमावसेरित्यादि। एकस्या अपि प्रकृते र्वृद्धिभाक्त्वावृद्धिभाक्त्वधर्मभेदेन भेदस्य विवक्षितत्वाद् द्विवचने निर्देशः। अहमित्यात्मानं व्यपदेशयन्नपरेऽन्यथा कुर्वन्तीति सूचयति। ण्यतोरिति। ण्यत्प्रत्ययान्तयो रित्यर्थः। निपातयाम्यवृद्धितामिति। अन्यतरस्यामिति शेषः। तेन किं सिध्यतीत्याह तथैकवृत्तिता तयो रितीति। प्रसिध्यतीति वक्ष्यमाणेन सम्बन्धः। क्वचित् तथैकवृत्तिता मिति पाठः। तत्र निपातयामीति प्रकृतेन सम्बन्धः। निपातयामीत्यस्य च साधयामीत्येषोऽर्थः। तयोरिति। अमावास्याऽमावस्ययोः प्रत्यवमर्शः। वृत्तिः पुनर्वुन्नणोः प्रत्यययोरुत्पत्तिः। एका तुल्या ययोर्वृत्तिस्तावेकवृत्ती। तद्भाव एकवृत्तिता। सा ण्यत्प्रत्यय मुत्पाद्य तत्र वृद्ध्यभावनिपातनेन सिध्यतीति। एकदेशविकृतस्यानन्यत्वात्।

स्वरश्च मे प्रसिध्यतीति । तित् स्वरितमिति (६।१।१८५) । अन्तस्वरितत्वञ्चेष्टम् । सिध्यतीति । ये त्वमापूर्वस्य वसेर्यतं निपातयन्ति । अन्यतरस्यांग्रहणाच्च पत्ते एयतमिच्छन्ति तेषां यद्यप्यमावस्येति रूपं सिध्यति तथापि यत्प्रत्ययपक्षे स्वरो न सिध्यति । यतोऽनाव (६।१।२१३) इति स्वरितत्वापवाद आद्युदात्तत्वं वस्याशब्दस्य प्राप्नोति । अमाशब्देनापि समासे कृते गतिकारकोपपदात् (६।२।१०९) कृदिति कृदन्तस्योत्तरपदस्य प्रकृतिस्वरे कृते वस्याशब्द एवाद्युदात्तः स्यात् । अन्तस्वरितश्चेष्यते । एकवृत्तितापि पूर्वोक्ता न सिध्यति । शब्दान्तरत्वात् । एको हि यत्प्रत्ययान्तः । अपरश्च एयत्प्रतययान्त इति एयति वृद्ध्यभावो निपात्यते ।

१२३ । छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्य्यस्तर्य्याध्वर्य्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ।

क्यपि प्राप्त इति । ऋदुपधत्वात् । आद्यन्तविपर्य्यय इति । ककारस्यादेरन्तत्वं निपात्यते । तकारस्यान्तस्यादित्वम् । हूयते रित्यादि । यदा ह्वेञ् स्पर्द्धायामित्यस्मात् क्यप् तदा यजादित्वात् ( ६।१।१५ ) संप्रसारणम् । हल (६।४।२) इति दीर्घः । यदा तु हु दान इत्यस्मात् तदा तुगभावो निपात्यते । दीर्घत्वञ्च । देवा हूयन्तेऽस्मिन्निति देवहूयः । उच्छिष्य इति । शिष्लृ विशरणे । शश्छोऽटीति ( ८।४।६३ ) छकारः । स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वम् । आभ्यां यत्प्रत्यय इति । ऋकारान्तत्वाण्यति प्राप्ते । स्त्रियामेव निपातनमिति । अन्यथा स्तर्य्येति स्त्रीलिङ्गनिर्देशोऽपार्थकः स्यात् । आपृच्छ्य इति । ग्रह्यादिना ( ६।१।१६ ) संप्रसारणम् । प्रतिषीव्य इति । हलि (८।२।७७) चेति दीर्घः । वदेर्ण्यदिति । वदः सुपि क्यप् चेति (३।१।१०६) क्यपि यति च प्राप्ते । भाव्य स्ताव्य इति । भवतेः स्तौतेश्च यदपवादो एयत् । निष्टर्क्य इत्यादि । सुखोपग्रहणार्थौ संग्रहश्लोकौ । व्यत्ययमिति । आद्यन्तविपर्य्ययमित्यर्थः । एयदेकस्मादिति । कर्मणि ल्यब्लोप एषा पञ्चमी । एकं निष्टर्क्यशब्दमुद्दिश्य एयद् भवति ।

एकं शब्दं साधयितुं ण्यद् भवतीति यावत् । चतुर्भ्यः क्वबिति । तादर्थ्ये एषा चतुर्थी । ये देवज्यादयोऽनन्तराश्चत्वारस्तदर्थं तत्सिद्ध्यर्थं क्यब् भवतीति । चतुर्भ्यश्च यतो विधिरिति । एषापि तादर्थ्य एव चतुर्थी । तदनन्तरा ये चत्वारो मर्य्यादयः खान्यपर्य्यन्ता स्तदर्थं तत्सिद्ध्यर्थं यतो विधिर्भवति । ण्यदेकस्मादिति । एषापि ल्यब्लोपे कर्मणि पञ्चमी । खान्यमेवं शब्दमुद्दिश्य ण्यद् भवति । खान्यशब्दं साधयितुमित्यर्थः । यशब्दश्चेति । एकस्मादित्यनुकर्षणार्थः । देवयज्याशब्दमुद्दिश्य यशब्दो भवति । द्वौ क्यपाविति । आपृच्छ्यप्रतिषीव्यशब्दयोः सिद्धये द्वौ क्यपौ भवतः । ण्यद्विधिश्चतुरिति । चतुरो वारान् ण्यद् भवतीत्यर्थः । स पुनः परिशिष्टेषु ब्रह्मवाद्यादिषु । अथवा ण्यदेकस्मादित्येकस्माद् धातोरित्यर्थः । चतुर्भ्यः क्यबिति । चतुर्भ्यो धातुभ्यः क्यब् भवतीति । ननु च नयति रेक एव धातुः । तत् कथं चतुर्भ्यो धातुभ्य इत्युच्यते ? उपसर्गभेदादेकस्यापि भेदो विवक्षित इत्यदोषः । चतुर्भ्यश्च यतो विधिरिति । तदनन्तरेभ्यश्चतुर्भ्यो धातुभ्यो यतो विधिरित्यर्थः । ण्यदेकस्मादिति । खन एकस्माद्धातोर्ण्यद् विधिः । यशब्दश्चेति । देवयज्याशब्द एकस्माद्धातोर्यशब्दो भवति । द्वौ क्यपाविति । आपृच्छ्यप्रतिषीव्यशब्दयोः सिद्धय आप्रच्छिप्रतिसिवशब्दाभ्यां द्वौ क्यपौ भवतः ।

## १२४ । ऋहलोर्ण्यत् ।

पञ्चम्यर्थे षष्ठीति । व्यत्ययो (३।१।८५) बहुलमित्यनेन । कस्याः पुनः पञ्चम्या अर्थे षष्ठी ? दिग्योगलक्षणायाः । प्रत्ययविधौ हि परश्चेति (३।१।२) सम्बन्धात् पञ्चम्या भाव्यम् ।

## १२५ । ओरावश्यके ।

अवश्यम्भाव आवश्यकमिति । मनोज्ञादित्वाद् वुञ् । एतदेव ज्ञापकमव्ययानां भमात्रे टिलोपो भवतीति । अत्र इयं सम्भाव्यते । उपपदत्वम् । आवश्यक उपपद इति । उपाधिकत्वञ्च । आवश्यके द्योत्य इति । तत्र यद्येवं ज्ञायत आवश्यक उपपद इति तदोपपदरहितादावश्यके द्योत्ये न

स्यात् । लाव्यं पाव्यमिति । आवश्यके द्योत्य इत्येवं विज्ञायत इत्याह आवश्यके द्योत्य इति । एतच्च प्रत्यासत्त्या लभ्यते । उपाधि र्हि प्रत्ययान्तद्योत्यत्वादन्तरङ्गः । उपपदेन च सम्बन्धो वहिरङ्गः । तदर्थस्य पदान्तरवाच्यत्वात् । स्वरसमासानुपपत्तिरिति । उपपदे ह्यावश्यके विज्ञायमान उपपदमतिङिति (२।२।१९) समासो भवति । तस्मिंश्च सति गतिकारकोपपदात् (६।२।१३९) कृदित्युपपदाश्रय उत्तरपदप्रकृतिस्वरत्वम् । न तित्स्वरो भवति । द्योत्यपक्षे तु समासो न स्यात् । लक्षणाभावात् । अथापि कथञ्चिदुपपदसमासादन्यः समासः स्यात् ? एवमप्युपपदसमासाश्रयः स्वरो न स्यात् । ततश्च तित्स्वरो न लभ्येत । समासान्तोदात्तत्व हि स्यात् । अवश्यलाव्यमिति । लुम्पेदवश्यमः कृत्य इति मलोपः । मयूरव्यंसकादित्वादित्याह । मयूरव्यंसकादेराकृतिगणत्वादवश्यलाव्यप्रभृतयस्तत्र द्रष्टव्या इति दर्शयति । स्वरः कथमित्याह उत्तरपदप्रकृतिस्वरत्वे चेत्यादि । तत्रायं यत्नः । गतिकारकोपपदात्-कृदित्यत्र (६।२।१३९) षट् च काण्डादीनीत्यत (६।२।१३५) अकारोऽनुवर्त्तिष्यते । स चानुक्तसमुच्चयार्थः । तेनावश्यलाव्यमित्यादावपि प्रकृतिस्वरो भवतीति ।

## १२६ । आसुयुवपिरपिलपित्रपिचमश्च ।

यतोऽपवाद इति । षुञ् अभिषवे । यु मिश्रणे । अनयोरजन्तत्वात् । डुवप वीजतन्तुसन्ताने । रप लप व्यक्तायां वाचि । त्रपुष् लज्जायाम् । चमु अदने । एषामदुपधत्वात् पवर्गान्तत्वात् । दाभ्यमिति । दभिर्धातुष्वपठित एव प्रकृत्यन्तरमस्ति चुलुम्पवत् ।

## १२७ । आनाय्योऽनित्ये ।

ण्यन्निपात्यत इति । यति प्राप्ते । यद्यनित्ये निपात्यते घटादिष्वप्यतिप्रसङ्गस्तेषामनित्यत्वादित्याह रूढ़िरित्यादि । सत्यपि प्रवृत्तिनिमित्तत्वे रूढ़्या नियतविषयत्वाच् शब्दा विशिष्ट एवार्थे वर्त्तन्ते । नाविशिष्टे । मयूरादिशब्दवत् । नहि मह्यां रौतीति सर्वो मयूर इत्युच्यते । नापि गच्छतीति सर्वो गौरित्युच्यते । किं तर्हि ? विशिष्ट एव प्राणी । तस्माद्रूढ़िशब्दाद् दक्षिणाग्नावेव वर्त्तते । न घटादिषु । नित्यमजागरणादिति । सतत-

मज्वलनादित्यर्थः। ज्वलनमेव हि तस्य जागरणम्। दक्षिणाग्नावपि विशिष्ट एवावतिष्ठते न सर्व्वत्रेति दर्शयितुमाह यश्चेत्यादि। किं पुनस्तस्य योनिविकल्पोऽस्ति येनैवं विशिष्यत इत्याह तस्य हीत्यादि। योनिः कारणमित्यर्थः। वैश्यकुलादित्यादिना योनिविकल्पं दर्शयति। आनाय्योऽनित्य इति चेदिति। घटादिष्वपि प्राप्नोतीति शेषः। दक्षिणाग्नौ कृतं भवेदिति। आनाय्य इत्येतस्मिन्निपातनं दक्षिणाग्नावेव विशिष्टे कृतं भवेत्। नान्यत्र। लिङ् सम्भावनायाम्। एतत् सम्भाव्यते। नान्यथेत्यर्थः। एकयोनौ च तं विद्यादिति। तमानाय्यशब्दमाहवनीयेन य एकयोनिर्दक्षिणाग्निस्तत्र विद्याज्जानीयादित्यर्थः। चशब्दोऽवधारणे। एकयोनावेव। आनेयो ह्यन्यथा भवेदिति। घटादावनित्ये दक्षिणाग्नौ चाहवनीयेन भिन्नयोना वचो यदिति (३।१।९७) यति कृत आनेय इत्येवं भवति।

## १२८। प्रणाय्योऽसम्मतौ।

अविद्यमाना सम्मतिरित्यनेन वाक्यविशेषेण बहुव्रीहिं दर्शयं स्तत्पुरुषाशङ्कां निराकरोति। सम्मतिः सम्मततेति। सम्मत इति पूजित इत्युच्यते। सम्मतस्य भावः सम्मतता। एतेन सम्मतिशब्देनेह पूजिताभिधेयतेति दर्शयति। यद्येवमित्यादि। अविद्यमानपूजे चौरादौ प्रणाय्यशब्दस्यान्तेवासिनि प्रयोगो नोपपद्यते। नहि पूजा ऽन्तेवासिनि न विद्यत इत्यभिप्रायः। ब्रह्मप्रब्रूयादिति ब्रह्मशब्देनात्र वेद उच्यते। सम्मतिरभिलाषोऽप्युच्यत इति। न केवलं पूजेत्यपिशब्देन दर्शयति। तदभावेनेति। अभिलाषाभावेन। निष्कामतयेति। भवभोगाभिलाषरहिततयेत्यर्थः।

## १२९। पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु।

पाय्य इति। आतो (७।३।३३) युक्। हविर्विशेषेष्ववतिष्ठत इति। यत्रैवायं रूढस्तत्रैवावतिष्ठते। न हविर्मात्रे। धाय्येति। पूर्ववद् युक्। ऋग्विशेषस्य वाचक इति। सर्वा ऋचो न सामिधेनीशब्देनोच्यन्ते। किं तर्हि?

समिदाधानमन्त्र: । तथाहि समिदाधानमन्त्रे सामिधेनीशब्दो व्युत्पाद्यते । सामिधेन्यपि न सर्वा ऋगभिधीयते । किं तर्हि ? काचिदेवेति दर्शयन्नाह तत्रेत्यादि । कथं पुन: सामान्येन निपातनं क्रियमाणं विशेषविषयं लभत इत्याह रूढ़िशब्दो ह्ययमिति । धाय्याशब्दो रूढ़िशब्द ऋग्विशेषस्य वाचक: । सैवानेनोच्यते । नान्या । कथं पुनर्ज्ञायते रूढ़िशब्दोऽयमितयत आह तथा चेत्यादि । यदि रूढ़िशब्दोऽयं न स्यात् सामिधेन्यां निपातितत्वाद् धाय्या: शंसतीत्यत्र ऋग्विशेषे न दृश्येत । दृश्यते चासौ । तस्माद् रूढ़िशब्दोऽयमित्यवसीयते । यदि तर्हि सामिधेन्यामपि दृश्यते सामिधेनीग्रहण-मनर्थकं स्यात् । नानर्थकम् । रूढ़िविशेषोपलक्षणार्थत्वात् ।

## १३० । क्रतौ कुण्डपाय्यसञ्चाय्यौ ।

पिबतेरिति । पा पाने । अधिकरणे यत्प्रत्यय इति । लुटि प्राप्ते । किं पुन: कारणं ण्यतं त्यक्त्वा यत्प्रत्ययान्त: कुण्डपाय्यशब्दो निपात्यते ? अत आह यतोऽनाव इति (६।१।२१३) स्वर इति । यत्प्रत्ययान्तत्वे ह्युत्तर-पदाद्युदात्तत्वं भवति । ण्यत्प्रत्ययान्तत्वेऽन्तस्वरितत्वं स्यात् । कुण्डपान-मिति । क्रतोरन्यत्र लुडेव भवति ।

## १३१ । अग्नौ परिचाय्योपचाय्यसमूह्या: ।

संपूर्वाद्वहेरित्यादि । हलन्तत्वाण्यत् सिद्ध एव । तस्मिंस्तु सति संप्रसारणं न प्राप्नोति । अकित्त्वात् । ण्यत: कृतेऽपि संप्रसारणे हल इति (६।४।२) दीर्घत्वं न प्राप्नोति । यस्मादङ्गावयवाद्धल उत्तरं यत् संप्रसारणं तदन्तस्याङ्गस्य दीर्घत्वं विधीयते । न चायमेवंप्रकारोऽस्ति । अत उभयं निपात्यते । न संपूर्वादूहे: सामान्यविहितेन ण्यतैव सिध्यति । अग्नावेव वहे: संपूर्वाण्यद् यथा स्यात् । इह मा भूत् । संवोढ्यो ब्राह्मण इति ।

## १३२ । चित्याग्निचित्ये च ।

तेनान्तोदात्तत्वं भवतीति । यप्रत्ययान्तनिपातने हि प्रत्ययस्वरेणान्तो-

दात्तत्वं पदस्य भवति। सति तु सति तित्स्वरितत्वं भवति। तस्मात् प्रकृतं त्यक्त्वा यप्रतययो निपात्यत इति भावः ।

१३३। ण्वुल्तृचौ।

चकारः सामान्यग्रहणार्थ इत्यादि। तृच्तृणोः सामान्यग्रहणं यथा स्यादिति। असति तु तस्मिन् निरनुबन्धकग्रहणे न सानुबन्धकस्येति (प,८२) तृणो ग्रहणं न स्यात्। अथान्तोदात्तार्थः कस्मान्न भवति ? तस्य प्रत्ययस्वरेणैव सिद्धत्वात् ।

१३४। नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः।

प्रत्यासत्त्या पचिनैवादिशब्दस्य सम्बन्धो मा विज्ञायीत्यत आह प्रत्येकमित्यादि। नन्दिवाशीत्यादि। टुनदि समृद्धौ। वाशृ शब्दे। मदी हर्षे। दुष वैकृत्ये। राध साध संसिद्धौ। शुभ शुम्भ शोभायाम्। रुच दीप्तौ। एभ्यो धातुभ्यो ण्यन्तेभ्यः संज्ञायां ल्युर्भवति। नन्दयतीति नन्दनमित्येवमाद्युदाहरणम्। दूषणमिति। दोषो (६।४।९०) णावित्यूत्त्वम्। अण्यन्तानान्त्वेषामसंज्ञायां संज्ञायां च तृजादय एव भवन्ति। ग्रह्यादीनां नन्द्यादीनाञ्च गणे पाठस्येदमेव प्रयोजनम्। संज्ञाविशिष्टविषये तेषां साधुत्वं यथा स्यात्। अन्यथा हि प्रकृतीरेव गणे पठित्वेह चादिशब्देन ता उपलक्ष्य प्रत्ययं विदध्यात्। सहितपीत्यादि। षह मर्षणे। तप सन्तापे। दमु उपशमे। एभ्यः संज्ञायामण्यन्तेभ्यो ल्युः। जल्पन इत्यादि। जप जल्प व्यक्तायां वाचि। रमु क्रीडायाम्। दृप हर्षणमोचनयोः। क्रदि क्रदि आह्वाने रोदने च। कृष विलेखने। ह्वृषु अलीके। अर्द हिंसायाम्। जनमर्दयतीति जनार्दनः। कर्मण्यणि प्राप्ते ल्युः। यु मिश्रणे। षूद क्षरणे। मधुं सूदयतीति मधुसूदनः। अत्रापि कर्मण्यणि प्राप्ते ल्युः। ञिभी भये। विपूर्वाद्धेतुमति चेति (३।१।२६) णिच्। भियो हेतुभये (७।३।४०) षुक्। लवण इति। लूञ् छेदने। निपातनाण्णत्वमिति। कृतणत्वस्य गणे पाठो निपातनम्। णश अदर्शने विपूर्वः। दमु उपशमे। द्वावप्येतौ हेतुमण्णिजन्तौ। वित्तं विनाशयतीति वित्तविनाशनः। कुलं दमयतीति कुलदमनः। मितां ह्रस्व (६।४।९२) इति ह्रस्वः।

कर्मण्यणि प्राप्ते लुग: । ग्रह इत्यादि । ग्रह उपादाने । षह मर्षणे । उत्पूर्व: । तसु क्षेपणे । दसु च । दसिवत् पूर्व: । भस भर्त्सनदीप्त्यो: । उत्पूर्व: । ष्ठा गतिनिवृत्तौ । आतो (७।३।७७) युक् । स्थायी । मत्रि गुप्तभाषणे । चुरादिणिजन्त: । मृद क्षोदे संपूर्व: । संमृद्नातीति संपूर्वादेव यथा स्यात् । रक्षश्रुवसवपशां नाविति । रक्ष पालने । श्रु श्रवणे । डुवप वीजतन्तुसन्ताने । शो तनूकरणे । एषां निशब्द उपपदे णिनि: । निशायीति पूर्ववद् युक् । याचीत्यादि । टुयाचृ याच्ञायाम् । हृञ् हरणे व्याङ्पूर्व: । पुन: स एव संपूर्व: । वज व्रज गतौ । वद व्यक्तायां वाचि । वस निवासे । एषां प्रतिषिद्धानां णिनिर्भवति । प्रतिषिद्धानामिति । प्रतिषिद्धार्थानामित्यर्थ: । प्रतिषिद्धार्थता च नञ्पूर्वाणामेव भवतीति नञ्पूर्वेभ्यो णिनिर्विज्ञायते । कथं पुन: प्रतिषिद्धानां प्रयोग: ? उपचारसत्तायामप्रतिषेधाददोष: । नहि मुख्यैव पदार्थानां सत्ता । किन्तूपचरितापि यथोक्तमर्थद्वारेण पदार्थानामन्या सत्तौपचारिकीति । तत्र मुख्या या सत्ता तस्या एव प्रतिषेधो नतु बुद्धिस्थाया औपचारिक्या इति तन्निबन्धनप्रयोगो न विरुध्यते । अचामित्यादि । अजन्तानां धातूनामचित्तकर्तृकाणां प्रतिषिद्धानां णिनिर्भवति । अविद्यमानं चित्तमस्येति अचित्त: । स कर्त्ता येषां ते तथोक्ता: । अर्थद्वारकञ्चेदं विशेषणम् । अर्थस्य ह्यचित्तकर्तृकत्वात् तदभिधायिनो धातव उपचारेण तथोच्यन्ते । विशयी विषयी देश इति । विशयिविषयिशब्दौ देशेऽभिधेये णिनिप्रत्ययान्तौ साधु भवत: । शीङ् स्वप्ने । षिञ् बन्धने । एतयोर्विपूर्वयो र्णिनि: । वृद्ध्यभावश्च निपातनात् । अभिभावी भूत इति । अभिभाविशब्दो भूतकाले णिनिप्रत्ययान्त: साधुर्भवति । भवतेरभिपूर्वाण्णिनि: । अभिभूतवानित्यभिभावी । अपरोधी । उपरोधीति । राध साध संसिद्धौ । रुधिर् आवरणे । आभ्यामपोपपूर्वाभ्यां णिनि: । परिभवी परिभावी । भवते: परिपूर्वस्य । पक्षे वृद्ध्यभाव: । पचेत्यादि । डुपचष् पाके । वच परिभाषणे । डुवप वीजतन्तुसन्ताने । वद व्यक्तायां वाचि । चल कम्पने । शल गतौ । पत्लृ गतौ । नदडिति । नद अव्यक्ते शब्दे । टकारानुबन्धो ङीबर्थ: । भसडिति । भस भर्त्सनदीप्त्यो: । कष च

टकारो ङीबर्थः । मुड् गतौ । चर गतौ । टकारो ङीबर्थः । गॄ निगरणे । मिष स्पर्धायाम् । कुप क्रोधे । मिह सेचने । तॄ प्लवनतरणयोः । चुर स्तेये । गाहू विलोडने । जॄष् झॄष् वयोहानौ । मृङ् प्राणत्यागे । षसू सहने । तुद व्यथने । मृद क्षोदे । दिवु क्रीडादौ । नृती गात्रविक्षेपे । व्रण गात्र-विचूर्णने । चुरादिः । ष्टिघिर् प्रेक्षणे । डुभृञ् धारणपोषणयोः । अस्माज्जार शब्द उपपदेऽच् । जारं बिभर्तीति जारभरः । पचेः श्वन्युपपदे कर्मण्यणपवादोऽच् । श्वानं पचतीति श्वपचः । आकृतिगण इति । पचादि-सम्बन्धिन आदिशब्दस्य प्रकारार्थत्वात् । आकृतिगणत्वे चास्य चक्रधरादयः सिद्धा भवन्ति ।

## १३५ । इगुपधज्ञाप्रीकिरः कः ।

विक्षिप इति । कित्त्वाद् गुणाभावः । ज्ञ इति । आतो लोप इटि (६।४।६४) चेत्याकारलोपः । प्रिय इति । प्रीञ् तर्पणे । इयङ् । किर इति । कॄ विक्षेपे । ऋत इद्धातो (७।१।१००) रितीत्त्वम् । रपरत्वम् । अथ कथं देवा-दयः सिध्यन्ति ? यावता दिवादीनामिगुपधत्वात् के कृते दिवः सिव इत्येवमादिना रूपेण भवितव्यम् । अत आह देवसेवेत्यादि । आदि-शब्दः प्रकारे ।

## १३६ । आतश्चोपसर्गे ।

णप्रत्ययस्यापवाद इति । श्याद्व्यधेत्यादिना (३।१।१४१) प्राप्तस्य । सुग्ल इति । ग्लै म्लै हर्षक्षये ।

## १३७ । पाघ्राध्माधेट्दृशः शः ।

पा पाने । घ्रा गन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः । धेट् पाने । एषामाकारान्तलक्षणे के णे प्राप्ते शो विधीयते । यद्युपसर्ग इत्यनुवर्त्तते तदा के । अथ निवृत्तं सोपसर्गेभ्यः के प्राप्त इत्यनुपसर्गेभ्यो णे । दृशे स्त्विगुपध-लक्षणे के । उत्पिब इत्यादिषु प्रत्ययस्य शित्त्वात् सार्वधातुकसंज्ञायां कर्त्तरि (३।१।६८) शप् । पाघ्रादिना (७।३।७८) यथायोगं पिबादयः । संज्ञायां प्रतिषेध

इति । प्रकृतत्वाच्छप्रत्ययस्य । तस्य प्रतिषेधस्य व्याघ्रादिभिरिति (२।१।५६) वचनं लिङ्गम् ।

## १३८ । अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ।

अनुपसर्गादिति । सुब्व्यत्ययेन बहुवचनस्य स्थान एकवचनम् । लिम्पो विन्द इत्यादि । लिप उपदाहे । विदॢ लाभे । सनुम्कयोर्ग्रहणमुपदेशावस्थायामेव नुम् भवतीति ज्ञापनार्थम् । धृञ् धारणे । हेतुमण्णिजन्तः । पारय इति । पार तीर कर्मसमाप्तौ चुरादिः । अथवा पॄ पालनपूरणयोरिति हेतुमण्णिजन्तः । विद वेदनाख्याननिवासेषु । चुरादिण्यन्तः । अथवा ज्ञानाद्यर्थानां विदीनामन्यतमो हेतुमण्यन्तः । एजृ कम्पने । हेतुमण्णिजन्तः । चिती संज्ञाने । चुरादिण्यन्तः । षह मर्षणे । हेतुमण्यन्तः । चुरादिण्यन्तो वा । लिम्पो विन्द इति । तुदादिभ्यः (३।१।७७) शः । शे मुचादीना (७।१।५९) मिति नुम् । प्रलिपः प्रविद इति । इगुपधलक्षणः क एव । नौ लिम्पेरित्यादि । निशब्द उपपदे लिम्पेर्धातोः शप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानन्त्वतस्यस्य चकारस्यानुक्तसमुच्चयार्थत्वात् कर्त्तव्यम् । गवादिष्वित्यादि । गवादिषूपपदेषु संज्ञायां विषये विन्देः शो भवति । कर्म्मण्यणोऽपवादः । स च चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यते ।

## १३९ । ददातिदधात्योर्विभाषा ।

णस्यापवाद इति । श्याद्व्यधेत्यादिना (३।१।१४१) प्राप्तस्य । कस्य त्वपवादो न भवति । अनुपसर्गादित्यनुवृत्तेः । ददो दध इति । शे कृते शप् । तस्य जुहोत्यादित्वाच् श्लुः । श्लाविति (६।१।१०) द्विर्वचनम् । श्नाभ्यस्तयोरात (६।४।११२) इत्यकारलोपः । दाय इति । आतो (७।३।३३) युक् । प्रद इति । आतश्चोपसर्ग (३।१।१३६) इति कः । ननु च दद दाने दध धारणे इत्येताभ्यामचि कृते ददो दध इति । दाधा इत्येताभ्यामपि णे कृते दायो धाय

इति भविष्यति । तत् किमित्यनेन सूत्रेण ? नैतदस्ति । अचि हि सत्यच (६।२।१५७) कावश्यकाविल्यन्तोदात्तत्वं स्यात् । णे तु नञ्स्वर एव भवति अददो ऽदध इति ।

## १४० । ज्वलितिकसन्तेभ्यो णः ।

ज्वलिति । ज्वल इत्यादि येषामिति बहुव्रीहिः । विभक्तेस्त्वश्रवणं सुप सुलुगिति (७।१।३७) लुप्तत्वात् । कसन्तेभ्य इति । कसोऽन्ता इति तत्पुरुषः अन्तशब्दः समीपवाची । अथवा कसोऽन्त एषामिति बहुव्रीहिः । अन्त शब्दः समीपवाची मर्य्यादावाची वा । ज्वल दीप्ताविति ह्रियत्यते । घटा दिषु परस्ताच्च । तेभ्य इति । तत्रासत्यस्मिन् विशेषणे सन्देहः स्यात् केभ्यो ज्वलादिभ्य इति । अतस्तन्निरासार्थं ज्वलादयो विशिष्यन्ते । कसन्ता ये ज्वलादय इति । न घटाद्यन्तर्गणः पर्य्युदस्तो भवति । कसेः परत्वाद् ये पठ्यन्ते तन्निवृत्त्यर्थं कसग्रहणं न भवति । कसमधीत्य वृदिति पाठात् । न च घटादिषु ज्वलादीनां पाठो मित्संज्ञार्थः । तत्र विनापि कसन्तग्रहण कसन्ता एव ग्रहीष्यन्ते । तदनर्थकमिदं विशेषणम् । नैतदस्ति । असति हि तस्मिन् पूर्वेषां ज्वलादीनामुभयार्थः पाठः स्यात् । मित्त्वार्थः प्रत्ययार्थश्च इतरेषान्तु प्रत्ययार्थ एव । तस्मात् कसग्रहणं कर्त्तव्यम् । अचोऽपवाद इति । ज्वलादीनां पचाद्यन्तःपातित्वात् । तनोतेर्णस्योपसंख्यानं कर्त्तव्य मिति । णे विधातव्ये तनोतेरपि णस्य प्रतिपादनं कर्त्तव्यम् । प्रतिपादनन्तु उत्तरत्र चकारस्यानुक्तसमुच्चयार्थत्वात् कर्त्तव्यम् ।

## १४१ । श्याऽऽद्व्यधास्रुसंस्रुतीणवसावहृलिहश्लिषश्वसश्च ।

श्यैङ् गतौ । आदित्याकारान्तानां दाधाप्रभृतीनां ग्रहणम् । व्यध ताडने । स्रु गतौ । आङ्पूर्वः । पुनः स एव संपूर्वः । इण् गतौ अतिपूर्वः । षोऽन्तकर्मणि । अवपूर्वः । हृञ् हरणे । अवपूर्वः । लिह आस्वादने । श्लिष आलिङ्गने । श्वस प्राणने । अत्र ये सोपसर्गाः पठिता स्तेभ्यः सोपसर्गेभ्य एव भवति । शेषेभ्यस्तु सोपसर्गेभ्योऽनुपसर्गेभ्यश्च । अनुप

सर्गादिति निवृत्तमिति। पुनरुक्तत्वानुपसर्गग्रहणात्। विभाषेति चेति। निवृत्तमिति सम्बध्यते। विभाषाग्रहणं ह्यनुपसर्गेण सम्बद्धम्। अतस्तन्निवृत्तौ तस्यापि निवृत्तिर्भवति। बाधकबाधनार्थमिति। आतश्चोपसर्ग इति (३ ११।३६) विशेषविहितत्वात् कः सामान्यविहितस्य णस्य बाधकः। अतस्तद्बाधनार्थम्। अवस्यतेरप्युपादानस्यैतत् प्रयोजनं वेदितव्यम्। अथवोपसर्गनियमार्थं तस्य ग्रहणम्। अवपूर्वादेव यथा स्यात्। अवश्याय इति। आतो (७।३।३३) युक्।

## १४२। दुन्योरनुपसर्गे।

दुन्योरिति सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठी। अनुपसर्ग इत्यपि पञ्चम्यर्थे सप्तमी। अत एवाह दुनोतेर्नयतेश्चानुपसर्गादिति। दाव इति। टु दु उपतापे। नाय इति। णीञ् प्रापणे। प्रदवः प्रणय इति। पचाद्यच्। उपसर्गादसमासेऽपीति (८।४।१४) णत्वम्।

## १४३। विभाषा ग्रहः।

व्यवस्थितविभाषा चेयमिति। एतज्जलचर इत्यादिना स्पष्टीकरोति। भवतेश्चेति वक्तव्यमिति। भवतेश्च विभाषा णो भवतीत्येतदर्थरूपं व्याख्येयम्। व्याख्यानन्तु विभाषेति योगविभागात् कर्त्तव्यम्।

## १४४। गेहे कः।

गेहे कर्त्तरीति। एतेन गेह इति प्रत्ययार्थस्य कर्त्तुरुपाधिरयं न तूपपदमिति दर्शयति। एतच्चाश्वपत्यादौ गृहपतिशब्दपाठाद् विज्ञायते। तात्स्थ्याद्दाराश्चेति। गेहमिति प्रकृतेन सम्बन्धः। एतेन गौणेऽपि गेहे प्रत्ययो भवतीत्याचष्टे। एतच्च तन्त्रेण गेहशब्दस्य द्वितीयस्योच्चारणाल्लभ्यते। गृहमिति। ग्रह्यादिना (६।१।१६) संप्रसारणम्।

## १४५ । शिल्पिनि ष्वुन् ।

शिल्पिनि कर्त्तरीति । पूर्ववदुपाधित्वं दर्शयन्नुपपदत्वमपाकरोति । एतच्च रजकस्य वस्त्रं ददातीति भाष्यकारप्रयोगाल्लभ्यते । नृतिखनिरञ्जिभ्यः परिगणनमिति । एतच्च विभाषेत्यनुवृत्तेर्व्यवस्थितविभाषात्वाल्लभ्यते । रञ्जेरनुनासिकलोपश्चेति । एषोऽपि तत एव भाष्यकारप्रयोगाल्लभ्यते । किञ्च जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति (ग, सू,१८८) यद् रञ्जेर्मित्त्वं शास्ति तज् ज्ञापयत्यकृङित्यपि रञ्जेरनुनासिकलोपो भवतीति । मित्त्वस्य ह्येतदेव प्रयोजनम् मितां ह्रस्व इति (६।४।९२) ह्रस्वत्वं यथा स्यात् । नचासत्यस्मिन्ननुनासिकलोपेवृद्धिरस्ति । न चासत्यां वृद्धौ ह्रस्वभाविन्युपधा भवति । तेन णौ रञ्जेर्यथानुनासिकलोपो भवति तथा ष्वुनि च । परिगणनाद् ह्वाता ह्वायक इत्यत्र न भवति । ष्वुनो नित्करणमाद्युदात्तार्थम् । षकारो ङीषर्थः ।

## १४६ । गस्थकन् ।

ग इति । आतो (६।४।१४०)धातोरित्याकारलोपं कृत्वा गै शब्द इत्यस्यायं निर्देशः । अतएवाह गायतेरिति । ननु च गामादाग्रहणेष्वविशेष (प,११५) इति गाङ् गतावित्यस्यापि ग्रहणेन भवितव्यम् । नैतत् । यस्माद् गाथक इति थकन्प्रत्ययान्तेन गायत्यर्थविशेष एव शिल्पिनि कर्त्तृत्वं विज्ञायते । नतु गाङर्थविषये । थकनो नकार आद्युदात्तार्थः ।

## १४७ । ण्युट् च ।

गायन इति । आतो युक् चिण्कृतोरिति (७।३।३३) युक् । गायनी । टित्त्वान् ङीप् । योगविभाग उत्तरार्थ इति । उत्तरत्र चकारेण ण्युट एवानुवृत्तिर्यथा स्यात् । थकनो मा भूदिति । गो ण्युट्थकना वित्येकयोगे थकनमप्यनुकृष्येत ।

## १४८ । हश्च व्रीहिकालयोः ।

जहातेरिति । ओहाक् त्यागे । जिहातेश्चेति । ओहाङ् गतौ । अस्मात

ग्रहणमिष्यते। तयोः सामान्यग्रहणार्थं एव ककारो जहाते र्निर्दिश्यते। असति हि तस्मिन् यदीदमेकानुबन्धग्रहणं तदुपादाने द्व्यनुबन्धकस्य जिहाते र्न स्यात्। अथ द्व्यनुबन्धकस्य जहातेर्न स्यात्। ककारे तु सति द्वयोरपि सानुबन्धकत्वात् सामान्येन ग्रहण मुपपद्यते। व्रीह्यौ काले च कर्त्तरीति। एतेन व्रीहिकालयोः प्रत्ययार्थविशेषणं दर्शयति। उपपदत्वन्तु निरस्यति। एतच्च दामहायनान्ताच्चेति (४।१।२७) निर्देशाद् विज्ञायते। हायना इति। आतो युक् चिण्कृतो (७।३।३३) रिति युक्। जहत्युदकमिति कृत्वेति। व्रीहिषु हायनशब्दस्य प्रवृत्तिनिमित्तं दर्शयति। जिहीते भावानिति। एतेनापि संवत्सरे।

## १४९। प्रुसृल्वः समभिहारे वुन्।

प्रुसृल्व इति समाहारं कृत्वा निर्देशः। नुमागमस्तु सत्यपि नपुंसकत्वे न कृतः। अनित्यत्वादागमशासनस्य। समभिहारे वुन्निति। अन्यत्र समभिहार-शब्दस्य पौनःपुन्यादिकमर्थं इति। इहापि स एवार्थ इति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह समभिहारग्रहणेनेत्यादि। लक्ष्यते प्रदर्श्यत इत्यर्थः। एतच्चानेकार्थत्वाद्धातूनां लभ्यते। शिल्पिनीत्यनुवृत्तेरित्यपरे। शिल्पी साधुकारी। साधुकारिणि वुन्विधानमिति। साधुकारित्वोपलक्षणस्य फलं दर्शयति। सकृदपीत्यादि। अनन्तरस्यैव स्पष्टीकरणम्।

## १५०। आशिषि च।

आशिषि गम्यमानायामिति। न वाच्यायाम्। कर्त्तरि कृदिति (३।४।६७) कर्त्तुरेव प्रत्ययान्तवाच्यत्वात्। धातुमात्रादिति। धातुसामान्यविवक्षितत्वात्। प्रुसृल्वाञ्च निवर्त्तितत्वात्। अन्यस्य चेह धातुविशेषस्यानाश्रयणात्। धातु-मात्राश्रयो भवति नतु कुतश्चिदेव विशेषात्। जीवतात्। नन्दतादिति। आशिषि लोट्प्रयोगेण जीवकनन्दकयो स्तत्समानार्थतां दर्शयति। का पुनरियमाशीर्नामित्याह आशीः प्रार्थनाविशेष इति। अप्राप्तस्याभीष्टस्य वस्तुनः

प्रार्थनाशीः । सा चेह क्रियाविषयेति । क्रिया विषयोऽस्या इति बहुव्रीहिः । एष चार्थो धातुग्रहणात् । धातोश्च क्रियावाचित्वाद् विज्ञायते । अमुष्याः क्रियाया इति । जीवनक्रियाया नन्दनक्रियायाश्च कर्त्ता भवेदित्येवमाशास्यते । जीवनं नन्दनञ्च ते भूयादिति ।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां तृतीयाध्यायस्य
प्रथमः पादः समाप्तः ॥३।१॥

अथ

# काशिकाविवरणपञ्जिका ।

———:०:———

## तृतीयोऽध्यायः ।

## द्वितीयः पादः ।

१ । कर्मण्यण् ।

कर्मणीति । नेदं स्वरूपग्रहणम् । अशब्दसंज्ञेति (१।१।६८) प्रतिषेधात् । यदि च कर्मप्रदेशेषु स्वरूपमेव गृह्यते तदा संज्ञाविधानमनर्थकं स्यात् । नापि क्रियाग्रहणम् । तस्य हि ग्रहणे कर्त्रभिप्राय इति ( १।३।७२ ) निर्देशो नोपपद्यते । क्रियाकर्मणो हि ग्रहणे क्रियावाच्युपपदे प्रत्ययेन भवितव्यम् । नचेह क्रियावाच्युपपदमस्ति । तस्मात् कर्त्तुरीप्सिततमं कर्मेति ( १।४।४९ ) कर्म गृह्यते । तस्य प्रभेदं दर्शयितुमाह त्रिविधमित्यादि । तत्र निर्वर्त्त्यं यदसदेवोत्पद्यते यथा कुम्भं करोति नगरं करोतीति । कुम्भादिकं ह्यविद्यमानमेवोत्पद्यत इति निर्वर्त्त्यं कर्म । विकार्य्यं यस्य सत एव कश्चिद्विकारो विधीयते । तद् यथा काण्डं लुनाति नगरं लुनातीति । सत एव काण्डा-देर्लवनेन विकारो विधीयत इति विकार्य्यं कर्म । प्राप्यं नासत एवोत्पादनं क्रियते नापि सत एव विकाराधानम् । केवलं क्रियासम्बन्धमात्रं प्रतीयते । तद्यथा वेदमधीते चर्चां पारयतीति । अत्र ह्यध्ययनादिना वेदादेः सम्बन्धमात्रं प्रतीयते । नत्वसत एवोत्पादनम् । नापि सत एवान्यथालक्षणो विकार इति प्राप्यमेतत् कर्म । सर्वत्रेत्यादि । त्रिप्रकारे विशेषानुपादानात् । कर्म-ण्युपपद इति नाभिधाने कुतो मा भूत् । कर्त्तरि कृदित्यस्य (३।४।६७) बाधा इति । शीलिकामीत्यादि । शील समाधौ चुरादिर्ण्यन्तः । कमु कान्तौ ।

कमिर्णिङन्तः। भक्ष अदने। चुरादिर्ण्यन्तः। चर गत्यर्थः। आङ्पूर्वः। इकारोऽस्य धातुनिर्देशार्थः। एभ्योऽणि प्राप्ते णो वक्तव्यो व्याख्येयः। तत्रेदं व्याख्यानम्। ज्वलितिकसन्तेभ्यो णः (३।१।१४०) इत्यतो मण्डूकप्लुतिन्यायेन णोऽनुवर्त्तते विभाषा ग्रह (३।१।१४४) इत्यतश्च विभाषाग्रहणम्। द्वावपीह कर्मण्युपपदे णाणौ विधीयेते। अत्र विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच् शीली-त्यादिभ्यो णएव भविष्यतीति। परिशिष्टेभ्यस्त्वणेवेत्येतयोस्तु स्त्रियां विशेषः। अणि हि ङीब् भवति। णे तु टाप्। णकारोऽचो ञ्णिति (७।२।११५) इत्यर्थः। पूर्वपदप्रकृतिस्वरत्वञ्चेति। गतिकारकोपपदानां (६।२।१३९) कृदित्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते पूर्वपदप्रकृतिस्वरत्वञ्च वक्तव्यं व्याख्येयम्। तत्रेदं व्याख्यानम्। तत्पुरुषे तुल्यार्थ (६।२।२) सूत्रे तत्पुरुष इति योगविभागः कर्त्तव्यः। तेन मांसशीलादिभ्यः पूर्वपदप्रकृतिस्वरत्वञ्च भविष्यतीति। मांसशब्दोऽन्तोदात्तः। वृतॄवदिहनिकमिकषिभ्यः स (उण् ३।३४२) इत्यनुवर्त्तमाने मनेर्दीर्घश्चेति (उण्, ३।३४४) सप्रत्ययान्तत्वात्प्रत्ययस्वरेण। कल्याणशब्दो मध्योदात्तः। लघावन्ते द्वयोश्च बह्वषो गुरुरित्यनेन (फिट्,२।४२)। अस्यायमर्थः। अन्ते लघौ परतो द्वयोश्चान्तयोर्लघ्वोः परतो बह्वच् शब्दस्य यो गुरुः स उदात्तो भवति। बह्वषिति बह्वजित्यर्थः। ननु च शीलादिभ्यः कर्मणि घञं कृत्वा तदन्तेन बहुव्रीहौ कृते सिध्यत्येव मांसशीलादि। तत् किं णवि-धानेन? नैतदस्ति। बहुव्रीहौ सति बहुभक्षा इत्यत्र बह्वोर्नञ्वदुत्तरपदभूम्नी-त्युत्तरपदान्तोदात्तत्वं (६।२।१७५) स्यात्। अवश्यञ्चाणबाधनार्थो णो वक्तव्यः। अन्यथा हि यदा मांसं कामयत इतीदं वाक्यं भवति तदाऽणपि स्यात्। ईक्षिक्षमिभ्याञ्चेति। ईक्ष दर्शने। क्षमु सहने। आभ्यां णो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु पूर्ववदेव कर्त्तव्यम्।

## २। ह्वावामश्च।

ह्वेञ् स्पर्द्धायाम्। वेञ् तन्तुसन्तान इति। अथ वा गतिगन्धनयोरित्यस्य ग्रहणं कस्मान्न भवति? अकर्मकत्वात्। कर्मणि चेहानुवर्त्तते। माङ् मान इति। ङकारानुबन्धवतो मा इत्यस्योपलक्षणार्थमेतत्। मेङ् प्रणिदान इत्य-

स्यापि ग्रहणमिष्यते । गामादाग्रहणेष्वविशेष इति (प, ११५) वचनात् । ननु यदि गामादाग्रहणेष्वविशेषस्तदामीञ् हिंसायां डुमिञ् प्रक्षेपण इत्येतयोरपि ग्रहणं प्राप्नोति । यस्मात् मीनातिमिनोतिदीङां ल्यपि (६।१।५०) चेति तयोर प्येज्विषय आत्वे कृते मेत्येतद्रूपं सम्पद्यते । भवत्येवाभ्यामणेवेति पूर्वसूत्रेण प्राप्तस्य । स्वर्गह्वाय इति । आतो युक् (७।३।३३) चिण्कृतोरिति युक् ।

## ३ । आतोऽनुपसर्गे कः ।

अनुपसर्गे इति । व्यत्ययेन पञ्चमीप्रसङ्गेऽपि सप्तमी । धातुविशेषणञ्चैतत् । अतएवाह आकारान्तेभ्योऽनुपसर्गेभ्य इति च । गोद इति । पूर्ववदाकारलोपः । पार्ष्णित्रमिति । त्रैङ् पालने ।

## ४ । सुपि स्थः ।

सुपीति ग्रहणात् कर्मणीति न सम्बध्यते । तिष्ठतेरकर्मकत्वाच्च । समस्थ इत्यादौ सप्तम्यन्त उपपदे कः प्रत्ययः । अत्रेत्यादि । सुपीत्येको योगः । तत्र चात इत्यनुवर्त्तते । सुपीत्यादिनास्य योगस्यार्थमाचष्टे । ततःस्थ इति द्वितीयो योग इति । स्थश्च सुपोति विवरणम् । किमित्यादि । पूर्वेण सिद्धमिति मन्यमानस्य प्रश्नः । भावेऽपि यथा स्यादिति । आरम्भसामर्थ्यात् कर्त्तरि तावन्न भविष्यति । नचार्थान्तरं निर्द्दिश्यते । तत्रानिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति भाव एव स्यात् । स एव हि धातूनां स्वार्थः । आखूत्थमिति । उदः स्था स्तम्भोः पूर्वस्येति (८।४।६१) पूर्वसवर्णः ।

## ५ । तुन्दशोकयोः परिमृजापनुदोः ।

परिमृजापनुदोरिति सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठी । मृजू शुद्धौ । परिपूर्वः । नुद प्रेरणे । अपपूर्वः । आलस्येत्यादि । प्रत्ययार्थोपाधिरयम् । अलस एवालस्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । आहरतीत्याहरणः । कृत्यल्युटो बहुलमिति (३।३।११३) कर्त्तरि ल्युट् । सुखस्याहरणः सुखाहरणः । आलस्य-कर्त्तरि सुखस्याहरणेऽनेन को भवति । नान्यत्रेत्येतदर्थंरूपं व्याख्येयमित्यर्थः ।

तत्रेदं व्याख्यानम्। अत्रापि पूर्ववद् विभाषाग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा। तेनालस्यसुखाहरणयोरेव कर्म्मणि को भवति। नान्यत्रेति। तुन्दपरिमार्ज एवान्य इति। अनालस्ये त्वण् भवति। मृजेर्वृद्धिः (७।२।११४)। शोकापनोद इति। यः प्रतिपक्षोपदेशेन शोकं केवलमपनुदति। नतु सुखमुत्पादयति। अत्राणेव तु भवति। कप्रकरण इत्यादि। मूलविभुजादिभ्यस्तदर्थे चतुर्थी। आदिशब्दः प्रकारवचनः। मूलविभुजाद्यर्थं मूलविभुजादयः साधवो यथा स्युरित्येवमर्थं कप्रत्ययस्योपादानं प्रतिपादनं कर्त्तव्य मित्यर्थः। तत्रेदं प्रतिपादनम्। ह्वावामश्चेत्यत्र (३।२।२) आतोऽनुपसर्गे क (२।२।३) इत्यत्र चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन मूलविभुजादिभ्यः कप्रत्ययो भविष्यतीति। मूलं विभुजति। भुज कौटिल्ये। नखानि मुञ्चन्तीति नखमुचानि। मुचॢ मोक्षणे। काकगूहा स्तिला इति। गुहू संवरणे। काकेभ्यो गूहितव्याः। तव्यदाद्यपवादः। कर्मणि कः। कौ मोदते कुमुदमिति। त्वजाद्यपवादः।

## ६। प्रे दाज्ञः।

सोपसर्गार्थ आरम्भ इति। अनुपसर्गादातोऽनुपसर्गे क (३।२।३) इत्येवं सिद्धत्वात्। ददातेरिति। दारूपाणां धातूनामुपलक्षणमेतत्। अन्येषामपि दारूपाणां ग्रहण मिष्यते। गामादाग्रहणेष्वविशेष इति (प,११५) वचनात्। प्रेणोपसृष्टादिति। प्रेणोपसर्गेण सम्बद्धादित्यर्थः। सूत्रे प्र इति सुप् व्यत्ययेन तृतीयार्थे सप्तमी वेदितव्या। पथिप्रज्ञ इति। पन्थानं प्रजानातीत्यर्थः।

## ७। समि ख्यः।

गां सञ्चष्ट इति। वाक्यविशेषेण चक्षिङः ख्याञिति (२।४।५४) ख्याञादेशस्य ग्रहणम्। न ख्या प्रकथन इत्येतस्येति दर्शयति। एतच्च संपूर्वस्य ख्यातेः प्रयोगासम्भवाल्लभ्यते।

## ८। गापोष्टक्।

लुग्विकरणालुग्विकरणयोर्लुग्विकरणस्यैव (प,८१) ग्रहणमिति। पा इति पानार्थस्य ग्रहणम्। रक्षणार्थस्य न। यद्यपि गामादाग्रहणेष्वविशेष

उच्यते तथापि पिबतिना साहचर्य्याद् गा इत्यस्यालुग्विकरणस्य ग्रहणम्। न गत्यर्थस्येत्याह गायतेः पिबतेश्चेति। टकः कित्करणमातो लोपार्थम्। टित्करणं ङीबर्थम्। नत्वाद्यन्तौ टकिता (१।१।४६) वित्येवमर्थम्। कुतएतत्? आद्यन्तयोरवयवत्वात्। नच प्रत्ययोऽवयवी युज्यते। परश्चेति (३।१।२) वचनात्। ननु च गापोरिति षष्ठी टकोऽवयवत्वञ्च बोधयिष्यते। नैतदस्ति। पञ्चम्यर्थे ह्येषा षष्ठी। कर्त्तृविशेषणार्था वा गापोः कर्त्तरीति। युक्तञ्चैतत्। एवं हि प्रत्ययपरत्वं बाधितं न भवति। किञ्चादित्वे हि टकः कित्करणमनर्थकं स्यात्। पिबते रुपपदान्तरस्य निवृत्त्यर्थं माह सुराशीध्वोरित्यादि। तत्र पिबते रिह ग्रहणं न पाते रित्येतत् प्रागेव व्यवस्थापितम्। इह विभाषेत्यनुवर्त्तते। सा तु व्यवस्थितविभाषा। तेन सुराशीध्वोरुपपदयोर्भविष्यति। नान्यत्र। क्षीरपेति। स्त्रीलिङ्गोदाहरणं स्त्रियां विशेष इति प्रदर्शनार्थम्। बहुलमित्यादि। पिबतेश्छन्दसि बहुलं टग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु तस्यैव विभाषाग्रहणानुवृत्तस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम्। तस्य तु फलं सुरापेति पचे कप्रत्ययो भवति।

## ९। हरतेरनुद्यमनेऽच्।

अनुद्यमनमुत्क्षेपणमिति। अधःस्थितस्य वस्तुन ऊर्द्ध्वं नयन मित्यर्थः। अंशहर इति। अंशं स्वीकरोतीत्यर्थः। नतूत्क्षेपयति। अच्प्रकरण इत्यादि। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि (प,७२) ग्रहणमिति घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम्। तस्य तु प्रयोजनं दित्यदित्यादित्यपत्युत्तरपदाण्ण्य (४।१।८५) इत्यत्र वक्ष्यते। उपसंख्यानशब्दस्य प्रतिपादन मित्यर्थः। तत्रेदं प्रतिपादनम्। उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः। तेन शक्त्यादिषूपपदेषु ग्रहेरज् भविष्यति। सूत्रे चेत्यादि। धारेरर्थो धार्य्यर्थः। तत्र वर्त्तमानाद् ग्रहेः सूत्रे चोपपदेऽच उपसंख्यानं प्रतिपादनं कर्त्तव्यम्। प्रतिपादनं तावत्तदेव। सूत्रग्राह एवान्य इति। यः सूत्रं केवलमुपादत्ते न धारयति तत्राणेव भवति।

## १० । वयसि च ।

उद्यमनार्थोऽयमारम्भ इति । अनुद्यमने पूर्वेणैव सिद्धत्वात् । अस्थिहर इति । अस्थ्युत्क्षेपणसमर्थे वयसि वर्त्तत इत्यर्थः ।

## ११ । आङि ताच्छील्ये ।

अनुद्यमनमिति निवृत्तम् । तेनाविशेषाल्लभ्यत उद्यमने चायं विधिरिति । ननु चानुद्यमने पूर्वेणैव सिद्धम् । परत्वाद्धि टन् प्राप्नोति । वासरूपविधानादजपि भवति । नैतदस्ति । वक्ष्यति ह्येतत् ताच्छीलिकेषु वासरूपेण टजादयो न भवन्तीति । ताच्छील्यं तत्स्वभावतेति । तत् पुनर्मानसो धर्म्मः । फलनिरपेक्षया प्रवृत्तिरनुमीयते । पुष्पाहर इत्यादिना ताच्छील्यमुदाहरति ।

## १२ । अर्हः ।

स्त्रियां विशेष इति । अणि हि सति ङीप् भवति । अचि तु सति टाप् ।

## १३ । स्तम्बकर्णयो रमिजपोः ।

जपेः शब्दकर्मकत्वादिति । गायत्रीं जपति । अनुवाकं जपतीत्यत्र शब्दकर्मकस्यैव प्रयोगदर्शनात् । कर्म न सम्भवतीति । कर्णस्याशब्दात्मकत्वादित्यभिप्रायः । इतिकरणो हेतौ । यत एव कर्णशब्दः कर्म न सम्भवति तेन सुपीत्येतदिह सम्बध्यते । न कर्मणीति । हस्तिसूचकयोरित्यादि । हस्तिसूचकग्रहणं प्रत्ययार्थस्यैव कर्त्तुर्विशेषणम् । स्तम्बकर्णयो रमिजपोरिति योऽयमज्विधिः स हस्तिसूचकयोः कर्त्रोर्भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानन्तु तस्यैव विभाषाग्रहणानुवृत्तस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम् । स्तम्बेरमः । कर्णेजप इति । तत्पुरुषे कृति (६।३।१४) बहुलमिति सप्तम्या अलुक् । सूचक इति । पिशुनक इत्यर्थः ।

## १४ । शमि धातोः संज्ञायाम् ।

धातुमात्रादिति । धातुमात्रग्रहणेनापवादविषयेऽपि विधानं दर्शयति । एवं हि धातुमात्राद्भवति यद्यप्यपवादं बाधित्वा तद्विषयेऽपि भवति । एष

चार्थो धातुग्रहणाल्लभ्यते। शमि संज्ञायामित्यादिना धातुग्रहणस्य प्रयोजनं दर्शयन् धातुप्रतिपादितमर्थं स्पष्टीकरोति। शमि संज्ञायामिति। सूत्रोपलक्षणमेतत्। शमि धातोः संज्ञायामित्यस्मिन् सूत्र इत्यर्थः। हेत्वादिष्विति। आदिशब्देन ताच्छील्यानुलोम्ययोर्ग्रहणम्। शम्युपपदे करोतेः संज्ञायां हेत्वादिषु विवक्षितेषु कृञो हेतुताच्छील्यानुलोम्येष्विति (३।२।२०) टः प्राप्नोति। अतस्तद्बाधनार्थं धातुग्रहणम्। शमि धातोरित्यस्यावकाशः करोतेरन्यो धातुः शम्युपपदः सम्भवति। शंवद इति। कृञो हेतुताच्छील्यानुलोम्ये (३।२।२०) त्यस्यावकाशः करोतिः शब्दान्तरोपपदः श्राद्धं करोतीति श्राद्धकर इति। करोतेः शम्युपपदे संज्ञायामुभयमेव प्राप्नोति। शङ्करा नाम शकुनिकेति। सा हि तच्छीला। तत्संज्ञा च। तत्र परत्वाट्टः प्राप्नोति। पुनर्धातुग्रहणाद् धातुमात्राद् विधीयमानं टं बाधित्वाऽजेव भवति।

## १५। अधिकरणे शेतेः।

सुपीति सम्बध्यत इति। शेतेरकर्मकत्वात्। अधिकरणस्य चाकर्मकत्वे सम्भवति सुपीतीह सम्बध्यते। न कर्मणीति। पार्श्वादिषूपसंख्यानमिति। आरम्भोऽयमनधिकरणार्थः। पार्श्वाभ्यामिति तृतीयान्तमुपपदं दर्शयति। उरःशयः पृष्ठशय इत्यत्रापि तृतीयान्तमेवोपपदं वेदितव्यम्। दिग्धसहशय इति। दिग्धेन सह शेत इति तृतीयेति (२।१।३०) योगविभागेन समासः। दिग्धस्य सहेन प्राक् प्रत्ययोत्पत्तेः पश्चादुपपदसमासः। गिरावित्यादि। गिरावुपपदे शेतेश्छन्दसि विषये डो भवति। गिरिश इति। डित्त्वाट्टिलोपः। एतत् सर्वं व्यतयो बहुलमिति (३।१।८५) बहुलवचनात् सिद्धम्।

## १६। चरेष्टः।

प्रत्ययान्तरकरणं ङीबर्थमिति। टित्त्वान् ङीब् भवति।

## १७। भिक्षासेनादायेषु च।

अनधिकरणार्थ आरम्भ इति। अधिकरणे पूर्वेणैव सिद्धम्। भिक्षाञ्चरतीति भिक्षाचरः। सेनाञ्चरतीति सेनाचरः। आदायेति ल्यबन्तमेतत्।

आदाय चरतीत्यादायचरः । अत्रादातव्यकर्मणोऽविवक्षितत्वात् पूर्वकालमात्रे विवक्षिते प्रत्ययः । आदानं कृत्वा चरतीति यावत् । तेन सापेक्षत्वाद-सामर्थ्ये सति प्रत्ययो न सिध्यतीत्येतदचोद्यम् । अथापि कर्मापेक्षत एवमपि न दोषः । वचनसामर्थ्यादसामर्थ्येऽपि प्रत्ययो भवति ।

१८ । पुरोऽग्रतोऽग्रेषु सर्त्तेः ।

पुरःशब्दः पूर्वाधरावराणामसि (५।३।३९) पुरधवश्चैषामित्यसिप्रत्ययान्तो व्युत्पादितः । अग्रतःशब्दोऽपि तसिप्रकरण आद्यादिभ्य उपसंख्यानमिति (५।४।४४,वा) तसिप्रत्ययान्तः । अग्रे इति । अग्रशब्दस्यैकारान्तत्वं निपात्यते ऽग्रेसर इत्येतद्रूपं यथा स्यात् । ननु च सप्तम्या अलुकाप्येतत् सिध्यति । सत्यम् । यदा सिध्यति तदा सप्तम्यन्त उपपदे प्रत्ययः । यदाग्रः सरती त्यग्रेण वा सरतीत्यसप्तम्यन्तस्तदा न सिध्यति । तदर्थमेकारान्तत्वं निपात्यते ।

१९ । पूर्वे कर्त्तरि ।

पूर्वशब्दे कर्तृवाचिन्युपपदे प्रत्यय इति । एतेन कर्त्तरीत्यनेनोपपदं विशिष्यते । न कर्त्ता । प्रत्ययार्थो निर्दिश्यत इति दर्शयति । तस्य कर्त्तरि कृदित्यनेनैव (३।४।६७) निर्देशात् । अयुक्तत्वादिह निर्देशस्येत्यभिप्रायः । ननु च पूर्वः सरतीत्यत्रासामर्थ्यमस्ति । तथाहि पूर्वशब्दोऽयं व्यवस्थावचनः । अवयववाची वा । तत्र पूर्वस्मिन् कल्पेऽवधिरपेक्षणीयः । अस्मादयं पूर्व इति । इतरस्मिं स्त्ववयवी पदार्थः । यथा पूर्व्वं कायस्येति । उभयोरपि सापेक्षित-त्वात् । असामर्थ्ये सति प्रत्ययानुपपत्तिः । नैष दोषः । पूर्वशब्दः सम्बन्धि-शब्दः । सापेक्षेऽपि वृत्ति र्नैनु भवत्येव यथा देवदत्तस्य गुरुकुलमिति ।

२० । कृञो हेतुताच्छील्यानुलोम्येषु ।

हेत्वादय एते नोपपदानि । यदि ह्युपपदानि स्युः शमिधातोः (३।२।१४) संज्ञायामित्यत्र धातुग्रहणमनर्थकं स्यात् । तद्धि कृञो हेत्वादिषु टप्रतिषेधार्थं कृतम् । यद्येषामुपपदत्वं स्यात् टप्रत्ययस्य प्राप्तिरेव नास्तीति धातुग्रहण-मनर्थकं स्यात् । अतो नैषामुपपदत्वं नापि प्रत्ययार्थत्वम् । कर्त्तरि (३।४।६७) कृदिति कर्त्तुःप्रत्ययार्थत्वात् । न च ते बाधा युक्ता । विरोधाभावात् । तस्मात्

प्रत्ययार्थविशेषणत्वमेषां युक्तम्। तत्र कर्त्तरि प्रत्ययो भवति यस्मिन्नभिधीयमाने तद्विशेषो हेत्वादयो गम्यन्ते। अतएवाह हेतौ ताच्छील्य आनुलोम्ये च गम्यमान इति। हेतुरैकान्तिककारणमिति। एतेन लौकिकहेतोर्ग्रहणम्। न पारिभाषिकस्येति दर्शयति। पारिभाषिको हेतुः स्वतन्त्रस्य कर्त्तुः प्रयोजकः। यदि तस्येह ग्रहणं स्यात् क्वञ इति नोपपद्यते। नह्यण्यन्तात् प्रयोजककर्त्तरि प्रयोजक उत्पद्यते। अपि तु ण्यन्तादन्तर्भावितण्यर्थात् प्रत्यय उत्पद्यत इति चेत्? नैतदस्ति। टप्रत्ययान्तात् ण्यर्थस्याप्रतीतेः। ननु च लौकिकस्य हेतोर्ग्रहणे सति निमित्ततया कर्त्ता विशिष्यते। तच्चायुक्तम्। नहि कर्त्तुरनिमित्तत्वमस्ति यद्विशेषणेन व्यावर्त्त्येत। नैष दोषः। सिद्धे कर्त्तुर्हि निमित्तत्वे पुनर्हेतुशब्द उपादीयमान ऐकान्तिकत्वं बोधयति। यः कर्त्ता यस्याः क्रियाया ऐकान्तिको हेतुरिति। अतएवोक्तं हेतुरैकान्तिककारणमिति। आनुलोम्यमनुकूलयामीत्याराध्यचित्तानुप्रवर्त्तनम्। यशस्करीति। अतः कृकमिकंसेत्यादिना (८।३।४६) विसर्जनीयस्य सत्वम्।

२१। दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्त्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु।

यथायोगमिति। दिवाशब्दस्य सुपीति सम्बन्धः। तस्याधिकरणस्य प्रधानत्वात् कर्मत्वानुपपत्तेः। शेषाणान्तु सत्त्वप्रधानत्वात् करोतिसम्बन्धेन कर्म चोपपद्यत इति कर्मणीत्यनेन सम्बन्धः। अहेत्वाद्यर्थ आरम्भ इति। हेत्वादिषु पूर्वेणैव सिद्धत्वात्। भास्कर इति। कथं पुनरत्र सकारः? यावता सकारस्य रुत्वविसर्जनीययोः कुप्वोः ≍कपौ चेति (८।३।३७) विसर्जनीयजिह्वामूलीययोरन्यतरेण भवितव्यमित्याह सकारस्य निपातनादित्यादि। भास्करान्तेति यत् सकारस्योच्चारणं तदेव निपातनम्। बहुकर इति। बहुशब्दो वैपुल्यवाची। अहस्कर इति। अहन्नित्यस्य रोऽसुपीति (८।२।६९) नकारस्य रेफः। तस्य विसर्जनीयः। तस्मात् कृकमीत्यादिना (८।३।४६) सत्वम्। धनुष्करः। अरुष्कर इति। इणः षः (८।३।३९)? — इसुसोः सामर्थ्ये (८।३।४४)। नित्यं

समासेऽनुत्तरपदस्थस्येति (८।३।४५) षत्वम् । अथानन्तग्रहणं किमर्थम् ? अन्तग्रहणादेवानन्तशब्देऽपि तदन्तविधिना भविष्यति । नैतदस्ति । सर्वस्मिन्नुपपदविधौ नहि तदन्तविधिरिष्यते । तथाहि पदकारः (A) पठत्युपपदविधौ भयाढ्यादिग्रहणं तदन्तविधिं प्रयोजयतीति(१।१।७२,वा) । एवन्तर्हि नान्तकरोऽनन्तकर इत्यन्तशब्देनापि नञ्समासो भविष्यति । नैवं शक्यम् । स्वरे दोषः स्यात् । सति शिष्टे हि तत्पुरुषे तुल्यार्थेत्यादिना(६।२।२)प्रकृतिस्वरे हि नञ्स्वरः प्रसज्येत । तथाचानन्तकरशब्द आद्युदात्तः । निपाता आद्युदात्ता (फिट्,४।८०) इति नञ उदात्तत्वात् । इष्यते च गतिकारकोपपदानां (६।२।१३९) कृदित्युत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । तस्मादनन्तग्रहणं कर्त्तव्यम् । किंयत्तद्‌बहुष्वज्विधानमित्यादि । किमित्यादिषूपपदेष्वज्विधानं कर्त्तव्यम् । तत् कथमिह टोऽप्यनुवर्त्तते ? मण्डूकप्लुतिन्यायेनाजपि विभाषाग्रहणमपि । तद् व्यवस्थितविभाषाविज्ञानात् किंयत्तद्‌बहुषु कृञोऽजेव भवति । शेषेषु दिवादिषु ट एव । अहेत्वाद्यर्थत्वाचारम्भस्य यदा हेत्वादयो विशेषा न विवक्ष्यन्ते तदा किंयत्तद्‌बहुषु कृञोऽज्विधानम् । तेषु विवक्षितेषु पूर्वसूत्रेण ट एव भवति । तथायं प्रयोग उपपन्नो भवति जातिरियं किंकरोति । किंकरणशीला किंकरी । न किञ्चिदपि करोति । निष्प्रयोजनेति यावत् ।

## २२ । कर्मणि भृतौ ।

कर्मणीति स्वरूपग्रहण मिति । कुत एतत् ? कर्मग्रहणसामर्थ्यात् । यदि पारिभाषिकस्य कर्मणो ग्रहणमिह स्यात् कर्मग्रहणमनर्थकं स्यात् । कर्माधिकारात् । करोतेश्च सकर्मकत्वात् तेनैव सम्बन्धो भविष्यति । तथाच प्रागुक्तं कर्मणि सुपीति द्वयमप्यनुवर्त्तते । तत्र सकर्मकेषु कर्मणीत्येतदुपतिष्ठते । अन्यत्र सुपीति । तस्मात् स्वरूपग्रहणमेवैतत् । कर्मनिर्देश इति । कर्म व्यापारः । तस्य निर्देशो मूल्यम् ।

## २३ । न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।

हेत्वादिषु टप्राप्त इति । कृञो (३।२।२०) हेत्वादिना ।

---

(A) Hence the पदकार is the वार्त्तिककार ।

## २४ । स्तम्बशकृतोरिन् ।

व्रीहिवत्सयोरिति वक्तव्यमिति । कर्त्तृविशेषणं व्रीहिवत्सग्रहणम् । अनेन सूत्रेण य इन् विधीयते स व्रीहिवत्सयोः कर्त्रोर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । इहापि विभाषेत्यनुवर्त्तते । सा च व्यवस्थितविभाषा । तेन व्रीहिवत्सयोः कर्त्रोरेव भविष्यति । नान्यत्र । नित्त्वादुत्तरपदाद्युदात्तत्वम् ।

## २५ । हरतेर्दृतिनाथयोः पशौ ।

पशौ कर्त्तरीति । एतेन पशुग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषण मिति दर्शयति । प्रत्ययार्थत्वन्तु कर्त्तरि (३।४।६७) कृदिति वचनात् । कुतः पुनरेतदवसितम् प्रत्ययार्थस्य विशेषणमेवेति ? न पुनर्बाधकमेवेति ? तदुच्यते । धातोः प्रत्ययस्य विधानात् तदर्थस्य येन सम्बन्ध स्तत्र वाच्ये प्रत्ययेन भवितव्यम् । धात्वर्थः क्रिया । तस्याश्च साधनेन सम्बन्धो न वस्तुस्वरूपेण । साधनञ्च शक्तिः । न वस्तुस्वरूपम् । पशुशब्देन वस्तुस्वरूपेण स्वार्थमाचष्टे । न शक्तिस्वरूपेणेति । तेनाऽशक्तिस्वरूपे प्रत्याय्यमानः पशुर्नार्हति प्रत्ययार्थो भवितुम् । सोऽप्रत्ययार्थः सन्नशक्तित्वात् कथमिमं प्रत्ययार्थं बाधेत । तस्मात् प्रत्ययार्थस्तेन कर्त्तरि विशिष्यत इति युक्तमुक्तम् पशौ कर्त्तरीति । एष न्यायोऽन्यत्रापि प्रत्ययार्थविशेषणे द्रष्टव्यः ।

## २६ । फलेग्रहिरात्मम्भरिश्च ।

## २७ । छन्दसि वनसनरक्षिमथाम् ।

ब्रह्मवनिं त्वा क्षत्रवनिमिति । ब्रह्म वनति सत' वनतीत्यर्थविवक्षायामिन्प्रत्ययः । तदन्ताद्द्वितीया । तस्याः सुपां (७।१।३७) सुलुगिति लुक् । युष्मच्छब्दाद्द्वितीयाविभक्तौ त्वामौ द्वितीयाया इति (८।१।२३) त्वादेशः । गोसनिमिति । गां सनतीत्यर्थ इन्प्रत्ययः । तदन्तादमि परे पूर्वरूपत्वम् । पन्थानं रक्षत इति पथिरक्षी । द्विवचनमेतत् । पूर्वसवर्णदीर्घत्वम् । हविर्मथीनामिति । हविर्मथन्तीति विगृह्य प्रत्ययः । तदन्तात् षष्ठ्या बहुवचनम् ।

## २८। एजेः खश्।

खशन्तादिति। एतेन प्रकृत्यन्तरस्यायमिजेरिका निर्देश इत्याशङ्कां निरस्यति। कुतः पुनर्खशन्तमवसितम्? खशः शित्करणात्। प्रकृत्यन्तरस्य ग्रहणे शित्करणमनर्थकं स्यात्। तद्धि सार्वधातुके सति तदाश्रयस्य शपो विधिर्यथा स्यादित्येवमर्थं क्रियते। नचैजेः प्रकृत्यन्तरस्य सत्यसति वा शपि कश्चिद् विशेषोऽस्ति। खशग्रहणे तु सति शित्करणमर्थवद् भवति। असति तस्मिन्णिलोपः स्यात्। तस्मिंस्तु सति सार्वधातुकनिबन्धने शपि णिलोपो न भवति। आर्धधातुकत्वं णिलोप इत्येके। एतच्चायुक्तम्। उत्तरार्थं हि शित्करणं स्यात्। असति हि तस्मिन्नुत्तरसूत्रे धेट आत्त्वं स्यात्। ध्मश्च धमादेशो न स्यात्। तथाच स्तनन्धयो नासिकन्धम इति न सिध्येत्। तस्माद् व्याख्यानादेव खशन्तत्वमवसेयम्। खकारोऽयं मुमर्थ इति। खित्यनव्ययस्ये (६।३।६६) त्यधिकृत्यारुर्द्विषदजन्तस्येति (६।३।६७) मुमागमो यथा स्यात्। शकारः सार्वधातुकसंज्ञार्थ इति। तिङ्शित् सार्वधातुकमिति (३।४।११३) सार्वधातुकसंज्ञा यथा स्यात्। अङ्गमेजय इति शप्। गुणायादेशौ। खश्प्रकरण इत्यादि। वातादिषूपपदेष्वजगतिक्षेपणयो र्धेट् पाने तुद व्यथन ओहाक् त्याग इत्येभ्यो धातुभ्यः खश्प्रकरण उपसंख्यानं कर्त्तव्यम्। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्। नाडीमुष्ट्योश्चेत्यत्र (३।२।३०) चकारः। स चानुक्तसमुच्चयार्थः। तेन वातादिषूपपदेष्वजादिभ्यो धातुभ्यः खश् भविष्यति। शुनिन्धय इति। खित्यनव्ययस्येति (६।३।६६) ह्रस्वत्वम्। शर्द्धञ्जहा इति। जुहोत्यादिभ्यः शपः श्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। श्नाभ्यस्तयोरात (६।४।११२) इत्याकारलोपः।

## २९। नासिकास्तनयोर्ध्माधेटोः।

स्तने धेट इत्यादिना यथायोगमुपपदसम्बन्धं दर्शयन्नुदाहरणानि दर्शयति। नासिकन्धम इति। पाघ्रादिसूत्रेण (७।३।७८) धमादेशः। तत्रैतदित्यादि। यथासंख्याभावे हेतुमाह। स्तनशब्दो हि नासिकापेक्षयाल्पाच्तरः।

तस्य पूर्वनिपाते कर्त्तव्ये योऽयमपूर्वनिपातः कृतः स लक्षणव्यभिचारं सूचयति। यथेह पूर्वनिपातशास्त्रं व्यभिचरति स्वविषये न प्रवर्त्तते तथा यथासंख्यलक्षणमपीति। अतोऽस्माल्लक्षणव्यभिचारचिह्नाद् यथासंख्याभावो लभ्यते।

## ३०। नाड़ीमुष्ट्योश्च।

अत्रापीत्यादिना नाड़ीमुष्टिशब्दो हि व्यस्तः। तस्य हि द्वन्द्वे घी(२।२।३२)-ति पूर्वनिपाते प्राप्ते योऽयमपूर्वनिपातः कृतः स पूर्व्वनिपातलक्षणव्यभिचारचिह्नम्। अत इहापि संख्यातानुदेशो न भवतीत्यपि सूचयति। अथ प्रत्येकमुपपदाभ्यां धातोः प्रत्येकं सम्बन्धः। स चोदाहरणेनैव वृत्तावभिव्यक्तः। अनुक्तसमुच्चयार्थश्चकार इति। तेन घटीखारीवातशब्देष्वप्युपपदेषु ध्माधेटोः खश् भवति। यद्येवं वैषम्यादेव संख्यातानुदेशो न भविष्यतीति निरर्थकस्तदभावार्थः व्यस्तस्यापूर्वनिपात उच्यते। वाक्यभेदेन द्वे ह्यत्र। एकेन वाक्येन नाड़ीमुष्टी इत्येतयो र्ध्माधेटोः खश् भवतीति। अतो नाड़ीमुष्ट्योरित्येकं वाक्यम्। चकारस्यानुक्तसमुच्चयार्थत्वाद् घटीखारीवातशब्देष्वप्युपपदेषु ध्माधेटोः खश् भवतीति द्वितीयम्। तत्र पूर्वस्मिन् वाक्ये समानत्वमस्तीति स्यादेव संख्यातानुदेशः।

## ३१। उदि कूले रुजिवहोः।

उदीति। सत्सप्तमीयम्। उदि सति। तत्रोत्कूलशब्दयोर्विषयव्यवस्था द्रष्टव्या। ते प्राग्धातोरिति (१।४।८०) वचनाद् धातोरनन्तर मुत्शब्दः। तस्मात् पूर्वः कूलशब्द इति। अथवोदिति परसप्तमी। उदि परतः कूलशब्दस्योपपदत्व इति। अथोच्छब्दस्याप्युपपदसंज्ञा कस्मान् न भवति? प्रत्येकं सप्तम्युच्चारणात्? एषा ह्याचार्य्यस्य शैली यत्र प्रत्येकमुपपदत्व मस्ति तत्र समुदायात् सप्तमीमुच्चारयति यथा नाड़ीमुष्ट्योरिति (३।२।३०)। इह तु विपर्य्ययः कृत इति न भवत्युपपदत्वम्। अपिच रुजिवहोः सकर्मकत्वात् कर्मणीतीहोपतिष्ठते। न चोच्छब्दस्य कर्मत्वं सम्भवति। असत्त्ववाचित्वात्। कुतस्तस्योपपदत्वम्? कूलमुद्रुज इति। तुदादित्वाच्छः। कूलमुद्वह इति। शप्।

## ३२। वहाभ्रे लिहः।

वहंलिह इति। लिह आस्वादने। अदादित्वाच्छपो लुक्। सार्वधातुकमपिदिति (१।२।४) ङित्त्वाद् गुणाभावः।

## ३३। परिमाणे पचः।

प्रस्थम्पचा। द्रोणम्पचेति। प्रस्थद्रोणपरिमिते व्रीह्यादौ प्रस्थद्रोणशब्दावुपचारेण वर्त्तेते। न प्रस्थादावेव परिमाणविशेषे काष्ठादिमये। क्लेदवाची ह्यत्र पचिः। न च मुख्यस्य प्रस्थादेर्विक्लेदः सम्भवति। अतो न तस्य सम्बन्ध उपपद्यते। स्वरूपग्रहणमप्यत एव न भवति। नहि स्वरूपप्रधानेन परिमाणेन विक्लेदवचनस्य पचेः सम्बन्धः सम्भवति। यद्यपि हि प्रस्थादिशब्दः परिमेये वर्त्तते तथापि परिमाणव्यपदेशो न तस्य विरुध्यते। प्रथमं परिमाणवृत्तित्वात्।

## ३४। मितनखे च।

अपरिमाणार्थ आरम्भ इति। परिमाणे पूर्वेणैव सिद्धत्वात्। मितनखशब्दयोरपरिमाणवचनत्वात्। सर्वदैव हि मितशब्दः परिमेयद्रव्यवचनः। नखशब्दो हि प्राण्यङ्गवचनः।

## ३५। विध्वरुषो स्तुदः।

अरुन्तुद इति। अरुश्शब्दस्यारुर्द्विषदजन्तस्येत्यु (६।४।६७) कारात् परो मुमागमः। संयोगान्तलोपः (८।२।२३)। मोऽनुस्वारः। अनुस्वारस्य ययि परसवर्ण इति (८।४।५८) परसवर्णः।

## ३६। असूर्य्यललाटयोर्दृशितपोः।

असूर्य्यम्पश्या इति। पाघ्रादिसूत्रेण (७।४।७८) पश्यादेशः। दृशिना नञः सम्बन्धादिति। असामर्थ्यहेतुः। अत्र हि दर्शनं प्रतिषिध्यते। नतु सूर्य्य एव। तस्माद् दृशिनैव नञः सम्बन्धः। न सूर्य्येणेत्यसामर्थ्यम्। सूर्य्यं न पश्यन्तीति दृशिना नञः सम्बन्धं दर्शयति। यदा सूर्य्यः प्रतिषिध्यते तदा न भवितव्यमेव प्रत्ययेन। अनभिधानात्। समासश्चायमसामर्थ्येऽपि भवति।

गमकत्वात्। अस्मादेव वचनाद्वा। ननु च यथा राजदाराः सूर्य्यं न पश्यन्तीति तथान्यदपि परपुरुषादिकम्। तत्रायुक्तं सूर्य्येणैकेन विशेषणे-नेत्यत आह गुप्तिपरञ्चैतदिति। यदेतदसूर्य्यम्पश्या राजदारा इति वचन मेतद् गुप्तिप्रधानम्। गुप्तिप्रतिपादनाय प्रयुक्तत्वात्। एवं नामेत्यादिना गुप्ति-परत्वमस्य दर्शयति।

## ३७। उग्रम्पश्येरम्मदपाणिन्धमाश्च।

उग्रंपश्येति। कर्मण्यणि (३।२।१) प्राप्ते दृशेः खश् निपात्यते। पूर्ववत् पश्यादेशः। इरम्मद इति। इरया माद्यतीति। मदी हर्षे। पचादिषु प्राप्तेषु खश् निपात्यते। तत्र दिवादित्वाच्छनि प्राप्ते तदभावो निपात्यते। पाणिन्धमा इति। अधिकरणे ल्युटि प्राप्ते खश् निपात्यते। पूर्ववद्धमादेशः।

## ३८। प्रियवशे वदः खच्।

चकारः खचि ह्रस्व (६।४.९४) इति विशेषणार्थ इति। खे ह्रस्व इत्युच्यमाने खश्यपि स्यात्। ननु चैकानुबन्धग्रहणे न द्व्यनुबन्धकस्येति न भविष्यति। एवं तर्हि परिभाषाश्रयण'ञ्चकारकरणमेव लघ्विति च मन्यते। ननु च प्रियंवदो वशंवदइति खश्यपि सिध्यति। किमर्थम् प्रत्ययान्तरकरणमित्याह प्रत्ययान्तरकरणमुत्तरार्थ मिति। द्विषत्परयोस्तापेरित्यत्र (३।२।३९) खचि ह्रस्वस्तापे यथा स्यात्। णिलोपश्चेत्याद्यर्थं प्रत्ययान्तरं क्रियते। अथोत्तरत्रैव खच् कस्मान्न क्रियते? अत्रापि खज् भवतीति विज्ञानार्थम्। तेन गमेरपि सुप्युपपदे खच् सिद्धो भवति। यदि खच्प्रकरणे गमेः सुप्युपसंख्यानं तत्रोप-संख्यानशब्दस्य प्रतिपादनार्थं प्रत्ययान्तरं क्रियते। प्रतिपादनन्त्विदमेव वेदित-व्यम्। विहायसो विह चेति। गमे र्विहायःशब्द उपपदे खच्प्रत्ययः। तत्-सन्नियोगेन विहायःशब्दस्य विहादेशः। खच्च डिद्वा वक्तव्य इति। डित्त्वाट्टिलोपः स्यात्। विहायसो विह चेत्यतोऽस्य भेदेन पाठात्। डित्त्वस्यानित्यत्वज्ञापनार्थम्। अन्यथा विहङ्गम इति न सिध्येत्। डित्त्वेत्यादि। डप्रत्यये च गमे र्विहायसो विहादेशः। विहग इति। न पुनरत्र डप्रत्ययः? अस्मादेव वचनाद् भवति। अथवा वक्ष्यत्युत्तरतो डप्रकरणेऽन्येष्वपि (२।३।४८ वा) दृश्यत इति।

## ३९ । द्विषत्परयोस्तापेः ।

द्वयोरपि ग्रहणमिति । स्यन्तावस्थायां विशेषाभावात् । द्वितकारको निर्देश इति । द्विषत्परयोरिति निर्देशे द्वौ तकारौ । तत्रैको द्विषच्छब्दस्यावयवः । तेन द्विषच्छब्दो विशिष्यते द्विषच्छब्द उपपदे तकारान्त इति । तेन स्त्रियां न भवति । स्त्रीप्रत्ययान्तस्तकारान्तो न भवति । असति तु द्वितीये तकारे प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति (प,८२) स्त्रियामपि स्यात् । द्विषतीति । उगितश्चेति (४।१।६) ङीप् । उगित्त्वन्तु द्विषच्छब्दस्य द्विषोऽमित्र इति (३।२।१३१) शत्रन्तत्वात् ।

## ४० । वाचि यमो व्रते ।

शास्त्रित इति (B) । शास्त्रे कृत इति विगृह्य शास्त्रशब्दात् प्रातिपदिकाद्धात्वर्थे णिच् । तदन्तात् क्ते विहिते शास्त्रित इति । शास्त्रविहित इत्यर्थः । अथवा शास्त्रिण इति शास्त्रितः । शास्त्रविद इतो जातः प्रवृत्तः । अथवा शास्त्रशब्दस्तारकादिषु द्रष्टव्यः । शास्त्रमस्य सञ्जात मिति शास्त्रितः । वाचंयम इति वाचं यच्छतीति विगृह्य खचि वाचंयमपुरन्दरौ ( ६।३।६९ ) चेति पूर्वपदस्य मुमभावो निपात्यते । ननु च प्रत्ययोऽपि तेनैव निपातनेन भविष्यति । तत् किमनेन ? नैतदस्ति । यच्छतीति पचाद्यचि विहिते ततश्च वाचो यम इति षष्ठीसमासे कृते वाचंयम इति सिध्यति । सम्पद्यत एव । तत्र तु निपातनमनर्थकं स्यात् । एवञ्च सति नित्यमुपपदसमासो न स्यात् । अतः खच्प्रत्ययो विधेयः । निपातनमपि कर्त्तव्यम् ।

## ४१ । पूः सर्वयोर्दारिसहोः ।

दारीति । दॄ विदारण इत्यस्य णिचा निर्देशः । पुरन्दर इति । पूर्वपदे मुमभावो निपात्यते । भगे च दारेरिति वक्तव्यमिति । भगे चोपपदे दारेः खज् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् ।

---

(B) In the printed काशिका, the reading is शास्त्रतो नियमः । Our author reads शास्त्रितः and hence his troubles to derive it. हरदत्त too adopts this word.

उग्रम्पश्येरम्मदपाणिन्धमा (३।२।३७) श्चेत्यतश्चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन भगे चोपपदे दारेः खच् भवतीति ।

## ४२ । सर्वकूलाभ्रकरीषेषु कषः ।

सर्वङ्कष इति । कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः ।

## ४३ । मेघर्त्तिभयेषु कृञः ।

उपपदविधावित्यादि । ननु चाभयशब्दो नञ्समासे सिध्यत्येव । नैवं शक्यम् । सति शिष्टत्वाद्धि तत्पुरुषे तुल्यार्थे (६।२।२) पूर्वपदप्रकृतिस्वराद्युदात्तत्वं स्यात् । गतिकारकोपपदानामित्यादिना (६।२।१३९) न्तोदात्तत्वं चेष्यते । तस्मात् कर्त्तव्यम् । अपवादत्वात् खजयमणं बाधते । हेत्वादिविवक्षायाञ्च परत्वाट्टप्रत्ययमपि ।

## ४४ । क्षेमप्रियमद्रेऽण् च ।

अथ क्षेमप्रियमद्रे वेत्येवं कस्मान्नोक्तम् । किमण्ग्रहणेन ? खचि विकल्पिते । कर्मण्यणि (३।२।१) त्यनेनैवाण् भविष्यतीत्यत आह वेति वक्तव्य इत्यादि । क्षेमप्रियमद्रे वेत्युच्यमाने पक्षे वाग्रहणाद् यथाप्राप्तमपीष्यते । ततो हेत्वादिषु विवक्षितेषु कृञो हेतुताच्छील्येत्यादिना (३।२।२०) टः स्यात् । अतस्तद्बाधनार्थम् । तेन हेत्वादिविवक्षायां टप्रत्ययं बाधित्वाण् भवति ।

## ४५ । आशिते भुवः करणभावयोः ।

अत्र सुपीत्युपतिष्ठते । न कर्मणीति । भवतेरकर्मकत्वात् । आशितशब्दे सुबन्त इत्यादि । अथ विपर्य्ययः कस्मान्न भवति ? करणभावयोरुपपदयोराशिते प्रत्ययार्थे इति ? असम्भवात् । आशित इत्यश्नातेः कर्त्तोच्यते । तस्य भवतिना सम्बन्धो नोपपद्यते । नहि योऽश्नातेः कर्त्ता स भवतेः प्रत्ययार्थो भवितुमुत्सहते । तस्मादाशितशब्दस्योपपदत्वम् । इतरयोस्तु प्रत्ययार्थत्वम् । एवञ्च घञ्ल्युटोरपवादो भवति । वासरूपविधिना ल्युडपि भवत्येव । आशितभवन ओदन इति । घञस्तु स्वरूपत्वाद् बाधक एव ।

४६ । संज्ञायां भृतॄवृजिधारिसहितपिदमः ।

संज्ञावशादिति । संज्ञाशब्दा हि द्विविधा भवन्ति । केचिदवयवार्थानुगता यथा सप्तपर्ण इति । केचित्तु विपरीता यथा तैलपायिकेति । तदिह यत्रावयवार्थानुगमोऽस्ति विश्वम्भरः शत्रुन्तप इत्यादिषु तत्र कर्मणीति सम्बध्यते । विश्वं बिभर्तीति विश्वम्भरः । यत्र त्ववयवार्थानुगमो नास्ति यथा रथन्तरं सामेति तत्र व्युत्पत्त्यर्थं सुपीति सम्बध्यते । रथेन तरतीति रथे तरतीति वा । पतिंवरेति । वृञ् वरणे । वृङ् सम्भक्तौ । पतिं वृणीते । पतिं वृणुत इति विग्रहः । शत्रुं जयतीति शत्रुञ्जयः । धारीति । धृञो ण्यन्तस्य ग्रहणम् । युगं धारयतीति युगन्धरः । पूर्ववद्ध्रस्वत्वम् । शत्रुं सहत इति शत्रुंसहः । शत्रुं तपतीति शत्रुन्तपः । अरिं दाम्यतीति अरिन्दमः । यद्यपि दमिरकर्मकस्तथाप्यन्तर्भावितण्यर्थत्वात् सकर्मको भविष्यति । अरिं दमयतीत्यर्थः ।

४७ । गमश्च ।

यस्य सौतङ्गमिः पुत्र इति । पुत्रस्य सौतङ्गमित्वव्यपदेशेन पितुः सुतङ्गमसंज्ञानुमीयत इति दर्शयति । सत्यां हि पितुः सुतङ्गमसंज्ञायां तत् पुत्रस्य सौतङ्गमिशब्देनाभिधानं भवति । नासत्याम् । अथ योगविभागः किमर्थः । पूर्वसूत्र एव गमेर्ग्रहणं क्रियतामित्याह योगविभाग उत्तरार्थ इति । गमेरेवोत्तरत्रानुवृत्तिर्यथा स्यात् । भृञादीनां माभूत् । एकयोगे हि तेऽप्यनुवर्त्तेरन् ।

४८ । अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।

डकार ष्टिलोपार्थ इति । डिति टेरिति(६।४।१५५)टिलोपो यथा स्यात् । कथं पुनः सत्यपि डकारे टिलोपो लभ्यते ? यावता भसंज्ञकस्य हि टिलोप उच्यते । नचेह भसंज्ञास्तीत्याह डित्यभस्यापीत्यादि । यदि सत्यपि डिति टिलोपो मा भूत् तदा तस्य वैयर्थ्यं स्यादिति भावः । ननु च श्रवणार्थं भविष्यति । तत् कुतो वैयर्थ्यं स्यात् ? एवं मन्यते । प्रावृट्शरत्कालदिवाञ्ज (६।३।१५) इति कृतटिलोपस्य जने ड्प्रत्ययान्तस्यायं निर्देशं करोति ततोऽवसीयते डकारस्याश्रवणार्थतेति । सर्वत्रेत्यादि । उपसंख्यानशब्दस्य

प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । गमश्च (३।२।४८) इत्यतश्चकारोऽनुवर्त्तते । तस्यानुक्तसमुच्चयार्थत्वात् सर्वत्रेत्यादावुपपदे डो भविष्यतीति । सर्वत्रशब्दश्चात्र सुपीत्यनेन सम्बध्यते । न तु कर्मणीत्यनेन । तस्याधिकरणशक्तिप्रधानत्वात् कर्मत्वानुपपत्तेः । पन्नशब्दः क्रियाविशेषणत्वात् कर्मणीत्यनेन सम्बध्यते । प्रतिपादितं हि करणे च स्तोकाल्पेत्यादिसूत्रे (२।३।३) क्रियाविशेषणस्य कर्मत्वम् । उरसो लोपश्चेति । अलोऽन्त्यस्येति (१।१।५२) सकारस्य । सुदुरोरधिकरण इति । ल्युडपवादो डो विधीयते । वासरूपविधिना सोऽपि भवति सुगमनम् । दुर्गमनमिति । अधिकरण इति किम् ? कर्मणि मा भूत् । ईषद्दुःसुष्वित्यादिना (३।३।१२६) खलेव भवति सुगमो दुर्गम इति । निरो देश इति । निरशब्द उपपदे गमेर्डो भवति देशेऽधिकरणे । निर्गम्यते ऽस्मिन् देशे निर्गो देशः । देशादन्यत्र ल्युडेव भवति निर्गमनमिति ।

## ४९ । आशिषि हनः ।

आशिषीति । प्रत्ययार्थमेतत् । तस्मिन् कर्त्तरि प्रत्ययो भवति यस्मिन् विधीयमान आशीर्गम्यते । तिमिं वध्यादिति । आशीर्लिङ्प्रयोगवतो वाक्यस्योपन्यासस्तु समानार्थत्वात् तिमिहशब्दस्य प्रख्यानार्थः । दारावाहन इत्यादि । टकारादेश एवोपसंख्यायते । अण्प्रत्ययस्तु कर्मण्यणित्यनेनैव (३।२।१) सिद्धः । अथान्तग्रहणं किमर्थम् ? यावता ऽलोऽन्त्यस्येत्यन्त्यस्य (१।१।५२) भविष्यतीति । न । षष्ठीनिर्दिष्टस्यालोऽन्त्यविधयो भवन्ति । न चेह हन्तेः षष्ठ्या निर्देशः । किं तर्हि ? पञ्चम्या । नन्वर्थाद् विभक्तिविपरिणामो भविष्यति । हन इत्यस्याः पञ्चम्या षष्ठी सम्पद्यते । एवं तर्हि विस्पष्टार्थमन्तग्रहणम् । दार्वाहन्तीति । दारुशब्दोऽत्र द्वितीयान्तः । स्वमोर्नपुंसका (७।१।२३) दिति लुप्तत्वान्न द्वितीया श्रूयते । चारौ वेति । अत्राप्यादेशो विकल्पेन विधीयते । अण् तु कर्मण्यणिति (३।२।१) नित्यमेव सिद्धः । चार्वाघाट इति । हो हन्तेर्ञ्णिन्नेष्विति (७।३।५४) कुत्वम् । हनस्तोऽचिण्णलोरिति (७।३।३२) तत्वम् । कर्मणि समि चेत्येतद्वाक्यं कर्मण्युपपद इत्यस्यैव विशेषणम् ।

५० । अपे क्लेशतमसोः ।

उदि कूले रुजिवहोरित्य(३।२।३१)त्रोच्छब्दस्योपपदत्वे यो न्याय उक्तः स इहाप्यपशब्दस्य वेदितव्यः । अनाशीरर्थ आरम्भ इति । आशिषि पूर्वेणैव सिद्धत्वात् ।

५१ । कुमारशीर्षयोर्णिनिः ।

कुमारघातीति । पूर्ववत् तत्वकुत्वे । निपातनाच्छिरसः शीर्ष भाव इति । कुमारशीर्षयोरित्यत एव निपातनाच् शिरसः शीर्षभावो भवति । न पुनः शीर्षंश्छन्दसीत्यनेन (६।१।६०) । तत्र हि शीर्षन्निति शिरःशब्दसमानार्थं शब्दान्तरं निपात्यते । अन्यथा शीर्षघातीति च्छन्दस्येव स्यात् । न भाषायाम् । कुमारशीर्षयोरिति च निर्देशो नोपपद्यते । स हि नकारान्तः । अकारान्तेन चायं निर्देशो भवति न नकारान्तेनेति । णिनेर्द्वितीय इकारो नकारस्येत्-संज्ञापरित्राणार्थः । णकारो वृद्ध्यर्थः ।

५२ । लक्षणे जायापत्योष्टक् ।

लक्ष्यते चिह्न्यतेऽनेनेति लक्षणम् । तदस्यास्तीति तस्मिल्ँ लक्षणवति । एतेन मत्वर्थीयाकारप्रत्ययान्तो लक्षणशब्दः सूत्र उपात्त इति दर्शयति । स च कर्तुः प्रत्ययस्य विशेषणमिति दर्शयन्नाह लक्षणवति कर्तरीति । अथ लक्षणशब्द-स्योपपदत्वं कस्मान्न भवति ? केचिदाहुः । हन्तेः सकर्मकत्वात् कर्मणीती-होपतिष्ठते । तत्र यदीह लक्षणस्योपपदत्वं स्यात् तत् कर्मणा विशिष्येत । न च लक्षणं हन्तेः कर्मोपपद्यते । स हि हिंसायां वर्त्तते । हिंसा च प्राणि-विषया । जायापत्योः प्राणिधर्मत्वात् कर्मत्वमुपपद्यत इत्येतच्चानुपपन्नम् । मत्वर्थीयाकारप्रत्ययान्तस्य लक्षणशब्दस्य प्राणिन्यपि वृत्तेः । व्याख्यानादेव लक्षणस्यानुपपदत्वं विज्ञायते । अनभिधानाद्वा । लक्षणवत्युपपदे जाया-पतिभ्यां प्रत्ययार्थेन भवितव्यम् । न च लक्षणशब्दस्योपपदत्वेन हन्तिना टक्प्रतययान्तेन जायापत्योः कर्त्रोरभिधानं दृष्टम् । जायाघ्न इति । किच्चाद् गमहनेत्यादिनोपधालोपः (६।४।९८) । पूर्ववत् कुत्वम् । पतिघ्नीति । टित्वान् ङीप् ।

## ५३। अमनुष्यकर्त्तृके च।

अमनुष्यकर्त्तृक इति। अमनुष्यः कर्त्ता यस्य स तथोक्तः। एतच्च धात्वर्थविशेषणम्। धात्वर्थो हन्तेरित्यत आह अमनुष्यकर्त्तृके धात्वर्थ इत्यादि। अथामनुष्यकर्त्तृकग्रहणमुपपदविशेषणं कस्मान्न भवति? कर्मणीत्यनुवर्त्तते। कर्मणश्चामनुष्यकर्त्रा सह सम्बन्धानुपपत्तेः। साधनस्य हि क्रियायाः सम्बन्धो न कारकान्तरेण। प्रत्ययार्थस्य कर्त्तुरिदं विशेषणं कस्मान्न विज्ञायते? तस्यामनुष्यकर्त्तृकत्वाभावात्। नहि कर्त्तुः कर्त्ता सम्भवति। अपि तु क्रियायाः। ननु च कर्त्तृग्रहणं न कर्त्तव्यम्। विनापि हि तेनामनुष्यकर्त्तरि प्रत्ययो लभ्यत एव। नैवं शक्यम्। कर्त्तृग्रहणमन्तरेणामनुष्यग्रहणं केवलमुपादीयमानमुपपदविशेषणमपि विज्ञायते। तस्मात् कर्त्तृग्रहणं कर्त्तव्यम्। तस्मिन् सत्यमनुष्यकर्त्तृग्रहणं तस्य विशेषणं न सम्भवतीत्यतो धात्वर्थ एव तेन विशेषयितुं युक्तः। इह कस्मान्न भवतीति। हस्तिकर्त्तृकत्वादमनुष्यकर्त्तृको धात्वर्थः। एतस्माद् भवितव्यमेव टक्प्रत्ययेनेति मन्यते।

## ५४। शक्तौ हस्तिकपाटयोः।

शक्तौ गम्यमानायामिति। अनेनोपपदत्वं शक्तेर्निराकरोति। हस्तिकपाटयोः कर्मणोरुपपदयोरित्यनेनापि हस्तिकपाटयोः प्रत्ययार्थविशेषणत्वम्। अथैवं कस्मान्न विज्ञायते शक्तावुपपदे हस्तिकपाटयोः कर्त्रोरिति? आरम्भसामर्थ्यादेव हि विज्ञायमाने हस्तिकपाटयोर्मनुष्यकर्त्तृके धात्वर्थे हन्तिर्वर्त्तते। तथाच पूर्वेणैव सिद्धेऽस्यारम्भवैयर्थ्यं स्यात्। उपपदत्वे तु तयोः शक्तौ गम्यमानायां मनुष्ये कर्त्तरि प्रत्ययो विज्ञायत इति न भवत्येष दोषः। विषेण हस्तिनं हन्तीति। विषेणेत्यशक्तिकत्वं दर्शयति। यो हि स्वयं हन्तुं न समर्थः स विषादिनोपायान्तरेण हन्ति।

## ५५। पाणिघताड़घौ शिल्पिनि।

पाणिघताड़घाविति। टप्रत्ययो घत्वं टिलोपश्च निपात्यते।

५६ । आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।

अच्वाविति । बहुव्रीहिः । न विद्यते च्विर्यस्मिंस्तत्राच्वौ । तत्पुरुषो वा । च्वेरन्योऽच्विः । अच्व्यन्त इत्यर्थः । अच्वावित्याढ्यादीनां विशेषणम् । एकवचनन्तु प्रत्येकं तैरभिसम्बध्यते । आढ्यादिष्वित्यादिना कर्त्तृविशेषणत्वमाढ्यादीनामपाकरोति । करणे कारक इत्यनेनापि करणस्योपपदत्वं निरस्यति । अथैवं कस्मान्न विज्ञायते करण उपपद आढ्यादिषु कर्त्तृष्विति ? तत्र केचिदाहुः । आढ्यादयोऽत्र शब्दप्रधानाः । न च तथाभूतानां कर्त्तृत्वमुपपद्यते । शब्दप्रधानत्वं पुनस्तेषां च्व्यन्तेष्वच्वाविति प्रतिषेधाद्विज्ञायते । शब्द एव हि च्व्यन्तो भवति । नार्थः । च्व्यन्तता शब्दस्यैव विद्यते । नार्थस्य । तत्र यद्येतेऽर्थप्रधानाः स्यु श्व्यर्थेष्विति विशेषणमनुपपन्नं स्यात् । अच्वाविति च प्रतिषेधोऽनर्थकः स्यात् । पर्य्युदासोऽप्यनर्थकः स्यात् । पर्य्युदसनीयाभावात् । कथं पुनः शब्दप्रधानानां प्रत्ययार्थविशेषणत्वं नोपपद्यते ? शब्दस्याकर्त्तृकत्वादनुपपत्तेरिति । न । तस्याप्याढ्य इत्येवं शब्दः सुखयति सुभगशब्दः सुखयतीत्यादि प्रयोगेषु कर्त्तृत्वदर्शनात् । व्याख्यानादेवार्थनिश्चयोऽद्रेष्टव्यः । करणस्य प्रत्ययार्थत्वेन निर्देशात् कर्त्तरि कृदिति (३।४।६७) न व्याप्रियते । ननु च नेमे च्व्यर्थाः । ते नियोगत एव च्व्यन्ताः । इह त्वच्व्यन्ता आढ्यादयो न सम्भवन्त्येव । तत् किं पर्य्युदस्यन्त इत्याह च्वेर्विकल्पेन विधानादित्यादि । विकल्पेन विधानन्तु समर्थानां प्रथमाद्वे (४।१।८२) त्यतो वाग्रहणानुवृत्तेः । आढ्यं तैलेन कुर्वन्तीत्यादि । नह्यसौ प्रागनाढ्यस्तैलेनाढ्यः क्रियते । किं तर्हि ? आढ्य स्तैलेनाभ्यज्यते । अनेकार्थत्वाद्धातूनां करोतिरत्राभ्यञ्जने वर्त्तते । तेनाभूतप्रादुर्भावो नास्तीति भवति प्रत्युदाहरणम् । अथवा भवतु नामाभूतप्रादुर्भावः । तथापि युक्तमेवेदं प्रत्युदाहरणमिति दर्शयितुमाह प्रकृतेरविवक्षायामित्यादि । नह्यभूतप्रादुर्भाव इत्येवं सर्वोऽभूतप्रादुर्भावश्च्व्यर्थो भवति । किन्तु विशिष्ट एव । यस्मात् तत्र प्रकृतिग्रहणं दर्शयिष्यते । प्रकृतिः कार्य्यस्य पूर्वावस्था ।

तेन यत्राश्रितं कार्य्यं पूर्वारम्भश्च कार्य्यस्य भाव्यमानतया विवक्ष्यते तत्र सोऽभूतप्रादुर्भावः। स एव च्व्यर्थः। एतदुक्तं भवति। यदा कार्य्यस्य पूर्वावस्था विवक्ष्यते तदा च्व्यर्थो भवति। नाभूतप्रादुर्भावविवक्षायामिति। इह तु पूर्वावस्थामपरामृश्यानाश्रितपूर्वारम्भे कार्य्ये ऽभूततद्भावमात्रं विवक्षितम्। तेन सत्यप्यभूततद्भावे च्व्यर्थो न भवति। अतो भवत्येतत् प्रत्युदाहरणम्। आढ्यीकुर्वन्तीति। अभूततद्भावे कृभ्वस्तियोग (५।४।५०) इत्यादिना च्विः। अस्य (७।४।३२) च्वाविति ईत्वम्। ल्युटा भवितव्यमिति। करणाधिकरणयोश्चेत्यनेन (३।३।११७) ल्युड्विधानात्। यदि ल्युटा भवितव्यं ततः किमित्याह नचेत्यादि। उभयत्रापि तदेव रूपम्। स एव स्वरः। रूपं तावदभिन्नम्। उभयत्रापि समासस्य नित्यार्थत्वात्। तथाहि ख्युनुपपदसमासेन भवितव्यम्। ल्युट्यपि गतिसमासेन। अनव्ययस्येति (६।३।६६) च प्रतिषेधान् मुमा न भवितव्यमिति रूपभेदो नास्ति। स्वरोऽपि न भवति भेदकः। ख्युनि सति यत्रैव नित्स्वरो भविष्यति ल्युट्यपि लित्स्वरस्तत्रैव; प्रतिषेधसामर्थ्यादिति। आढ्यीकरणमित्यस्य रूपस्य निरासायाच्वाविति प्रतिषेधः क्रियते। एवं तस्य निरासः कृतो भवति यदि ख्युना मुक्ते ल्युडपि भवति। अन्यथा हि स्यादेव। तदेव रूपमिति प्रतिषेधः स्यादिति वैयर्थ्यमिति भावः। अर्थत इति न शब्दतः। अर्थस्तु प्रतिषेधसामर्थ्यमेव। उत्तरार्थश्चेति। उत्तरसूत्रस्योपयोगं दर्शयति। तत्र खिष्णुच्खुकञ्भ्यां मुक्ते ल्वजादिभि र्भवितव्यमित्यस्ति विशेषः। ख्युनः खकारो मुमर्थः। नकारः स्वरार्थः।

## ५७। कर्त्तरि भुवः खिष्णुच्खुकञौ।

कर्त्तरि कारक इति। कर्त्तृग्रहणं करणनिवृत्त्यर्थम्। ननु चास्वरितत्वादेवानुवृत्तिर्न स्यात्; सत्यमेतत्। इत्थमपि कश्चिद् विजानीयाद् यथैवाढ्यादयोऽनुवर्त्तन्ते तथा तत्सम्बन्धकरणमपीति। उत्तरार्थञ्च कर्त्तृग्रहणम्। उदात्तत्वादित्यादि। उदात्तादितरोऽनुदात्तः। तेन भवतेर्विहितस्यार्द्धधातुकस्यैकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधो (७।२।१०) न भवति। वलादिलक्षणेटा (७।२।३५) भवितव्यम्। ततश्च तेनैवेकारादित्वं सिद्धम्। ततो न कर्त्तव्यं खिष्णुच इकारा-

दित्वमिति भावः । इकारादित्वकरणस्य प्रयोजनमाह नञस्त्वित्यादि । यदि ख्णुच इकारादित्वं न क्रियते ततो यद्यपीटि कृते सतीकारादित्वं तस्य भवति तथापि तस्य लाक्षणिकत्वात् कृत्योकेष्णुच् (६।२।१६०) चार्वादयश्चेत्यत्रेष्णुज्ग्रहणेन न ग्रहणं स्यात् । ततश्चानाढ्यम्भविष्णुरिति नञ उत्तरस्योत्तरपदस्यान्तोदात्तत्वं न स्यात् । इष्यते च । अतो नञ उत्तरस्योत्तरपदान्तोदात्तत्वम् । तेनेकारादित्वमिष्णुचः क्रियते । ननुच सत्यपीकारादित्वेऽलंकृञादिसूत्रे(३।२।१३६) विहितस्यैवेष्णुचो ग्रहणेन भवितव्यम् । नेतरस्य । तस्यैकानुबन्धकत्वात् । अस्य द्व्यनुबन्धकत्वात् । इकारोच्चारणसामर्थ्यादस्यापि ग्रहणं भविष्यतीत्यदोषः । खकारो मुमर्थः । चकारः स्वरार्थः । ञकारो वृद्ध्यर्थः ।

## ५८ । स्पृशोऽनुदके क्विन् ।

सुपि स्थ(३।२।४)इत्यत्रोक्तं कर्मणि सुपीति द्वयमनुवर्त्तते । तत्र सकर्मकेषु कर्मणीत्युपतिष्ठते । अन्यत्र सुपीति । स्पृशिरयं सकर्मकः । अतः स्पृशेर्धातोरनुदके सुबन्त उपपद इत्युक्ते पूर्वापरव्याहतिं मन्यमान आह ननु चेत्यादि । नैष इत्यादिना परिहारः । कथं पुनः कर्तृग्रहणे कर्त्तुश्च प्रचयार्थे विज्ञायमाने सुबन्त उपपदे प्रत्ययो लभ्यत इत्याह सुबन्तमात्र इत्यादि । सुबन्तमात्र उपपदे सत्येकः प्रचयार्थः कर्त्ता कर्मण्युपपदे सति भवति । अपरः करणादावुपपदे । तत्र भेदे सति तत्सम्बन्धभेदेन भिद्यमानस्य कर्त्तुः प्रचयो लभ्यते । घृतस्पृगिति । क्विन्प्रत्ययस्य (८।२।६२) कुरिति कुत्वम् । गकारे वावसान (८।४।५६) इति चर्त्वं ककारः । नकारः क्विन्प्रत्ययस्य कुरित्यादि । क्विप्रत्ययस्य कुरित्युच्यमाने क्विपोऽपि ग्रहणं स्यात् । अतो नकारोऽनुबध्यते । प्रकृतेराद्युदात्तार्थो नकारो न भवति । स्पृशेरेकाच्त्वात् तत्स्वरेणैव सिद्धत्वात् । ककारो गुणप्रतिषेधार्थः । वकारो वेरपृक्तस्येति (६।१।६७) विशेषणार्थः ।

## ५९ । ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च ।

ऋतौ यजतीति । वसन्तादिक ऋतौ यजति यस्मिन् याग ऋतुर्देवता स याग ऋतुः । तं यजतीति । ऋतुप्रयुक्तो वा यजतीति । यस्मिन् याग ऋतुः प्रयोजक स्तमृतुप्रयुक्तो यजतीति । अस्मिन् पक्षे प्रयुक्तमात्रस्य लोपो निपात्यते ।

ऋत्विगिति। यजादित्वात् (६।१।१५) संप्रसारणम्। यथाकथञ्चिदनुगन्तव्येति। येन केनचित् प्रकारेण व्युत्पादयितव्यम्। नत्ववयवार्थस्तत्रास्तीति दर्शयति। अन्तोदात्तत्वं निपात्यत इति। नियतस्वरबाधनार्थम्। दधृगिति। अभ्यासस्योरदित्यत्त्वम् (७।४।६६)। हलादिःशेषः (७।४।६०)। जश्त्वम्। षत्वञ्च निपात्यत इति। सात्पदाद्योरिति (८।३।१११) प्रतिषेधान्न प्राप्नोतीति कृत्वा। ष्णिह प्रीतौ। उत्स्निह्यतीत्युष्णिक्। निपातनैः सहेति निर्देशादित्यादिना निपातनैः सहैषां यो निर्देशः स एषामपि किञ्चिदलाक्षणिकं कार्यं यथा स्यादित्येवमर्थः। तेनैषु किञ्चिदलाक्षणिकं कार्यं भवति। इदं त्वत्रालाक्षणिकम्। यः सकर्मकस्यापि सुबन्तमात्र उपपदे भवति प्राङिति। उगिदचां सर्वनामस्थानेऽधातोरिति (७।१।७०) नुम्। हल्ङ्यादिसंयोगादिलोपौ। नकारस्य पूर्ववत् कुत्वम्। केवलादिति। सत्यपि कर्मणि सुपीत्यधिकारे निरुपपदादेव भवति। निपातनैः सहेति निर्देशात्। क्विन्विधानसामर्थ्याद्वा। उपपदे हि सदादिसूत्रेण (३।२।६२) क्विपा भवितव्यम्। सोपपदादित्यादि। न च सोपपदाद् युजेः क्विपि क्विनि वा विशेषोऽस्ति। चोः कुरिति (८।२।३०) कुत्वस्य सिद्धत्वात्। अनुपपदत्वे युजेर (७।१।७१) समास इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं सार्थकं भवति।

## ६०। त्यदादिषु दृशोऽनालोचने कञ्च।

अनालोचनमिह चक्षुर्ज्ञानमात्रमभिप्रेतम्। यदि तत्र दृशिर्न वर्त्तेत एवं प्रत्ययो भवति। नान्यथा। त्यादृक् त्यादृश इति। दृक्दृशवतुष्वित्यनुवर्त्तमान (६।३।८९) आ सर्वनाम्न (६।३।९१) इत्यात्वम्। कञो ञकार टिड्ढाणञिति (४।१।१५) विशेषणार्थ इति। यदि कञो ञकारो न कर्त्तव्य स्तदोदात्तार्थो नकारः कर्त्तव्यः। एवञ्च कञ्क्वन्नित्येवं (४।१।१५) कर्त्तव्यम्। ततश्चैवमुच्यमाने यावादिभ्यः(५।४।२९) कन् यावकेत्यत्रापि ङीप् प्रसज्येत। अतस्तद्विशेषणार्थो ञकारः कर्त्तव्य इति। ननु च दृशेर्दर्शनक्रियत्वात् तादृक् तादृश इत्यादिषु दर्शनक्रिया ऽस्त्येव। तथाह्येषां व्युत्पत्तौ तं पश्यत्येवंप्रकारं वाक्यमुपदिश्याचार्य्याः प्रत्ययं कुर्वन्ति। वाक्यसमानार्था वृत्तिर्भवति। सा च दर्शनक्रिया

ज्ञानार्थिका । तत् कथमत्र दृशिरनालोचने वर्त्तत इत्याह तादृगादयो रूढिशब्दप्रकारा इत्यादि । रूढिशब्देषु नावयवार्थेन भवितव्यम् । किं तर्हि ? समुदायार्थेन । अतएवात्रावयवार्थो नोपादीयते । व्युत्पत्त्यर्थस्तु विद्यमानोऽप्यवयवार्थं नोपादत्ते यथा व्याजिघ्रतीति व्याघ्र इत्यादौ । तस्मादिह यद्यपि व्युत्पत्त्यर्थं वाक्यस्य दर्शनक्रियोपादीयते तथाप्यसौ वृत्तौ नास्त्येव । तथाहि तादृक् तादृश इत्यादिभ्यः शब्देभ्यः सदृशवस्तुविषये प्रत्यय उपजायते । न तु दर्शनक्रियाविषय इति युक्तैव दृशेरनालोचने वृत्तिः । समानान्ययोश्चेति वक्तव्यम् । समानान्ययोश्च शब्दयोरुपपदयोर्दृशेः क्विन्कञौ प्रत्ययौ भवत इतीयत्तदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । पूर्वसूत्रादिह चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन समानान्ययोरुपपदयोर्दृशेः क्विन् कञौ प्रत्ययौ भविष्यतः । सदृश इति । समानस्येत्यनुवर्त्तमाने (६।३।८४) दृग्दृशवतुष्विति (६।३।८८) सभावः ।

## ६१ । सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।

कर्मग्रहणं तु स्पृशोऽनुदके (३।२।५८) क्विन्नित्यतः प्रभृति न व्याप्रियत इति । ननु सकर्मका अपि धातवः सन्ति । तत् कथं न व्याप्रियत इति ? एवं मन्यते । स्पृशोऽनुदके क्विन्नित्यादिषु (३।२।५८) यत् कर्त्तरीत्यनुवर्त्तते तत् कर्त्तृप्रचयार्थं विज्ञायते । तेन सुपीति व्याप्रियते । न कर्मणीति । एवं हि कर्त्तृप्रचयो लभ्यते । नान्यथा । अत उपसर्गग्रहणं किमर्थम् ? यावतोपसर्गाः सुबन्ता एव । तत्र सुब्ग्रहणेनैवोपसर्गग्रहणं सिद्धमित्याह उपसर्गग्रहणं ज्ञापकमिति । अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति । क्वान्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीत्याह वदः सुपि क्यप् (३।१।१०६) चेति । ननु च वदः सुपि क्यप् चेत्यत्र (३।१।१०६) गदमदचरयमश्चानुपसर्गे(३।१।१००)इत्यतोऽनुपसर्गग्रहणमनुवर्त्तते । एवञ्चोपसर्गे प्रत्ययो न भविष्यति । तत् किं ज्ञापनार्थेनोपसर्गग्रहणेन ? विस्पष्टार्थमुपसर्गग्रहणमित्येके । तत्रानुपसर्गग्रहणं नानुवर्त्तयितव्यमिति वा ज्ञापनार्थमुपसर्गग्रहणम् । विकल्पप्रदर्शनार्थं

कर्त्तव्यमित्यन्ये। अपरे त्वाहुः। ज्ञापकप्रयोजनदिगियमिति वृत्तिकारो दर्शयति। इदन्तु स्पष्टं ज्ञापकस्य प्रयोजनम्। स्पृशोऽनुदके क्विन्नित्यत्र (३।२।५८) सुपीत्यधिकारादसति ज्ञापक उपसर्गग्रहणे सुबन्तेऽप्युपसर्गे स्यादुपस्पृशति संस्पृशतीति। अस्माज् ज्ञापकान्न भवति। साहचर्य्यादित्यादि। यदि सू इत्ययं धातुरादादिकत्वं व्यभिचरति द्विष अप्रीतावित्येष तु न व्यभिचरति। अतोऽनेन साहचर्य्यात् सू इत्यादादिकस्य षूङ् प्राणिगर्भविमोचन इत्यस्य ग्रहणम्। न षू प्रेरण इत्यस्य तौदादिकस्य। ननु च सदिना तौदादिकसाहचर्य्यादस्यापि ग्रहणं भवति। नैतदस्ति। यथैव हि सू इत्येष तौदादिकत्वं व्यभिचरति तथा सदिरपि। तस्य भ्वादिषु पाठात्। तत् कथं तेन साहचर्य्यात् तौदादिकस्येह ग्रहणं स्यात्? न सुवतेरिति। अनादादिकसूरूपस्य धातोरुपलक्षणमेतत्। षूञ् प्राणिप्रसव इत्येतस्यापि दैवादिकस्य ग्रहणं न युक्तम्। न्यायस्य च तुल्यत्वात्। द्वयोरपि ग्रहणमिति। विशेषानुपादानात्। न लाभार्थस्येति। विद्लृ लाभ इत्येतस्य। अकारस्य विवक्षितत्वादिति। इह लाभार्थस्यानुपादाने हेतु विदेति सूत्रे(३।२।६२) ऽकारान्तोच्चारणं विवक्षितमिति। तेन विदेरकारान्तस्य गणे पाठात् स एव गृह्यते। न लृकारान्तः। शुचिषदिति। सद्लृ विशरणार्थः। मित्रध्रुगिति। द्रुह जिघांसायाम्। वा द्रुह मुहेत्यादिना (८।२।३३) घत्वम्। झलाञ्जशोऽन्त इति (८।२।३९) गकारः। तस्य वावसान इति (८।४।५६) ककारः। एकाचो बशो भषित्यादिना (८।२।३७)भष्भावः। गोधुगिति। दुह प्रपूरणे। दादेर्धातो र्घ इति (८।२।३२) घत्वम्। अश्वयुगिति। चोः कुरिति (८।२।३०) कुत्वं गकारः। तस्य पूर्ववत् ककारः। शत्रुजिदिति। ह्रस्वस्य (६।१।७१) पिति कृति तुक्। कथमत्र णत्वमिति? पूर्वपदात् संज्ञायामग (८।४।३) इति संज्ञायां विधीयमानेन णत्वेनासंज्ञायामिह न भवितव्यमिति भावः। सम्राड़िति। राजृ दीप्तौ। व्रश्चभ्रस्जेत्यादिना(८।२।३६)षत्वम्। झलाञ्जशोऽन्त इति (८।२।३९) जश्त्वं षकारस्य डकारः। तस्य वावसान इति(८।४।५६)चर्त्वं टकारः। मो राजि समः(८।३।२५) क्वाविति मकारः। क्विपः ककारो गुणवृद्धिनिषेधार्थः। पकारस्तुगर्थः। वेरपृक्तस्येति(६।१।६७)वकारलोपः। इकारो वेरपृक्तस्येति(६।१।६७)सामान्यग्रहणार्थः।

## ६२ । भजो ण्विः ।

अर्द्धभागिति । वेरपृक्तस्येति (६।१।६७) वकारलोपः । प्रत्ययलोपलक्षणेनात उपधाया इति (७।२।११६) वृद्धिः । चोः कुरिति (८।२।३०) कुत्वम् । णकारो वृद्ध्यर्थः । इकारो वेरपृक्तस्येति (६।१।६७) सामान्यग्रहणार्थः ।

## ६३ । छन्दसि सहः ।

अलाषाड़िति । हो ढ इति (८।२।३१) ढत्वम् । तस्य जश्त्वम् । डकारः । तस्य वावसान इति (८।४।५६) टकारः ।

## ६४ । वहश्च ।

पृष्ठवाड़िति । पूर्ववद्वृद्धिः । ढत्वजश्त्वचर्त्वानि । योगविभाग उत्तरार्थः । उत्तरत्र वहेरनुवृत्तिर्यथा स्यात् । सहे र्मा भूत् । एकयोगे हि सति द्वयोरप्यनुवृत्तिः स्यात् ।

## ६५ । कव्यपुरीषपुरीष्येषु ञ्युट् ।

पूर्वेण ण्वौ प्राप्ते ञ्युड् विधीयते । टकारो ङीबर्थः । ञकारः स्वरार्थो वृद्ध्यर्थश्च । युमात्र प्रत्ययः । तस्य युवोरनाकावित्यनादेशः (७।१।१) ।

## ६६ । हव्येऽनन्तःपादम् ।

अनन्तःपादमिति । अन्तःशब्दो मध्यशब्देन समानार्थः । अन्तःपादमिति पादस्य मध्य इत्यर्थः । अव्ययं (२।१।६) विभक्तीत्यादिना विभक्त्यर्थेऽव्ययीभावः । न अन्तःपादमनन्तःपादमिति । एतच्च वहेः प्रकृतत्वात् तस्यैव विशेषणं विज्ञायत इत्यत आह अनन्तःपादश्चेद् वहिर्वर्त्तत इति । छन्दसीत्यनुवृत्तेः पादशब्द ऋकपादं बोधयति । ऋक्पादमध्ये वहि र्न वर्त्तत इत्यर्थः । प्रत्युदाहरणे पादमध्ये वहिर्वर्त्तत इति तेन वहश्चेति (३।२।६४) ण्विरेव भवति ।

## ६७ । जनसनखनक्रमगमो विट् ।

द्वयोरपि ग्रहणमिति । विशेषानुपादानात् । तथेत्यादि । यथानन्तरयोरुक्तयोर्धात्वोरुभयोर्ग्रहणमिति तथानयोरपि समानार्थयोरित्यर्थः । टकारः

सामान्यग्रहणाविघातार्थ इति। असति टकारे वेरपृक्तस्येत्यत्र (६।१।६७) सानुबन्धपरिभाषया ऽस्यैव ग्रहणं स्यात्। न विजादीनाम्। टकारे त्वस्यापि ह्यनुबन्धकत्वात् सर्वेषां ग्रहणमुपपद्यते। विशेषणार्थश्चेति। विड्वनोरनुनासिक-स्यादित्यत्र (६।४।४१) विशेषणार्थष्टकारः। विवनोरित्युच्यमाने हि क्विबादी-नामपि ग्रहणं स्यात्। वकारो वेरपृक्तस्येति (६।१।६७) विशेषणार्थः। अपृक्तस्येत्येतस्मिन्नुच्यमाने तकारादीनामपि ग्रहणं स्यात्। तथा चाकरोदित्येव-मादौ लोपः स्यात्। अब्जा इति। अप्सु जायत इति अब्जाः। एवं गोजाः। गां सनोतीति गोषाः। सनोतेरन (८।३।१०८) इति षत्वम्। नरं सनोतीति नृषाः। बिलं खनतीति बिलखाः। दधि क्रामतीति दधिक्राः। अग्रे गच्छतीत्यग्रेगाः। तत्पुरुषे कृति बहुलमिति (६।३।१४) सप्तम्या अलुक्। सर्वत्र वेरपृक्तस्येति (६।१।६६) लोपः। विड्वनोरित्यात्त्वं (६।४।४१)।

६८। अदोऽनन्ने।

६९। क्रव्ये च।

पूर्वेणैव सिद्ध इति। क्रव्यशब्दस्यानर्थकत्वात्। कथन्तर्हि क्रव्याद इति। यदि वचनं वासरूपविधिबाधनार्थमिति भावः। क्तविकृतेत्यादिना क्त-विकृतशब्द उपपदे ऽत्वाण्। न तु क्रव्यशब्द इति दर्शयति। यदि तर्हि क्त-विकृतशब्द उपपदे ऽण् कथं क्रव्यादशब्दः सिध्यति? क्तविकृताद इति भवि-तव्यमित्याह तस्य चेत्यादिना। ननुच क्तविकृतशब्द उपपदे ऽणि कृते तत्र चोपपदस्य क्रव्यभाव इति रूपं भवति। क्रव्यशब्द उपपदे ऽणि कृते तदेव। कात्र विशेषः? यतः क्रव्यशब्द उपपदे ऽण् प्रतिषिध्यत इत्यत आह क्त-विकृत इत्यादि। एतेनार्थभेदं दर्शयति। यो हि क्तविकृतशब्देन पक्वमां-सभक्षः स एव क्रव्याद उच्यते। यस्त्वपक्वमांसभक्षः स क्रव्यादुच्यते।

७०। दुहः कब् घश्च।

कामदुघा। धर्मदुघा। कामं दोग्धीति कामदुघा। धर्मं दोग्धीति धर्मदुघा।

७१ । मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।

एतेभ्य इति । श्वेतव इत्येवमादिभ्यः प्रकृत्युपपदसमुदायेभ्यः । धातूपपदसमुदाया निपात्यन्त इति । श्वेतव इतेग्रवमादयः । किं पुनः कारणं धातूपपदसमुदाया निपात्यन्ते ? न पुनः पृथगेवोपपदानि धातवश्च निर्दिश्यन्त इत्याह अलाक्षणिककार्य्यसिद्ध्यर्थमिति । श्वेतवा इतेग्रवमादिष्ववयाः श्वेतवाः पुरोडाश्चेति रुत्वं निपात्यते । उक्थशा इति । ससजुषो रुरिति (८।२।६६) रुत्वमस्त्येव । शंसतेरिति । शस्नस स्तुताविव्यस्य । ण्विनो निल्करणमाद्युदात्तार्थम् । णिल्करणं वृद्ध्यर्थम् । इकारो वेरपृक्तस्येति (६।१।६७) विशेषणार्थः । श्वेतवाहादीनामित्यादि । यदि तर्हीदमुच्यते नार्थोऽवयाः श्वेतवाः पुरोडाश्चेत्यनेन वचनेन । रुत्वार्थेन तस्य दीर्घत्वात् । ननु चात्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घत्वं सिद्धमेव । यत्र तर्हि तेन न सिध्यति तदर्थं यथा स्यात् । क्व पुन स्तेन न सिध्यति ? सम्बुद्धौ । यदि तर्हि तदुच्यते तदा डस्न वक्तव्यः । तेनैव निपातनेन श्वेतवहादीनामसन्तता निपातयिष्यते । नैतदस्ति । सम्बुद्धौ दीर्घत्वं न स्यादितुग्रक्तम् । अथासन्तता निपातयिष्यत इति वक्तव्यम् । तथाच सति श्वेतवोभ्यामित्यत्रोत्वं स्यात् । तस्मात् डस् वक्तव्यो निपातनमपि कर्त्तव्यम् ।

७२ । अवे यजः ।

योगविभाग उत्तरार्थ इति । उत्तरसूत्रे यजेरेवानुवृत्तिर्यथा स्यात् ।

७३ । विजुपे छन्दसि ।

उपयड्भीरिति । व्रश्चादिना ( ८।२।३६ ) षत्वम् । पूर्ववज् जश्त्वम् । डकारः । उपयट्त्वमिति । त्वप्रत्यये परतः खरि(८।४।५५) चेति चर्त्वं टकारः । ननु च मन्त्र इत्यनुवर्त्तिष्यते । मन्त्रश्च च्छन्द एव । तत् किमर्थं छन्दसिग्रहणं क्रियत इत्याह च्छन्दोग्रहणं ब्राह्मणार्थमिति । असति च्छन्दोग्रहणे मन्त्रग्रहणानुवृत्तेरपि ब्राह्मणे न स्यात् । नहि मन्त्रग्रहणेन ब्राह्मणं गृह्यते । तस्य ग्रन्थान्तरत्वात् । मन्त्रव्याख्याने ग्रन्थविशेषे ब्राह्मणशब्दो वर्त्तते । न तु मन्त्रे । तस्माद् ब्राह्मणेऽपि यथा स्यादित्येवमर्थं छन्दसोतुग्रक्तम् ।

विचश्चित्करणमित्यादि। असति चित्करण एष एकानुबन्धः स्यात्। ततश्च वेरपृक्तस्येत्य (६।१।६७) नेकानुबन्धकपरिभाषया ऽस्यैव ग्रहणं स्यात्। न क्विबादीनाम्। चित्करणे तु सत्येकानुबन्धो न कश्चिदस्तीति सर्वे गृह्यन्ते।

## ७४। आतो मनिन्क्वनिब्वनिपश्च।

मनिनो नकार आद्युदात्तार्थः। क्वनिब्वनिपोः पकारावनुदात्तार्थौ। इकार उच्चारणार्थः। क्वनिपः पकारः पित्कार्य्यार्थः। चकारो विचोऽनुकर्षणार्थः। शोभनं ददातीति सुदामा। सर्वनामस्थाने चेत्यादिना (६।४।८) दीर्घः। अश्व इव तिष्ठतीत्यश्वत्थामा। पृषोदरादित्वात् (६।३।१०९) सकारस्य तकारः। शोभनं दधातीति सुधीवा। शोभनं पीवतीति सुपीवा। घुमादिनेत्त्वम् (६।४।६४)। भूरि ददातीति भूरिदावा। घृतं पिवतीति घृतपावा। कीलालं पिवतीति कीलालपाः।

## ७५। अन्येभ्योऽपि दृश्यन्ते।

सुशर्मेति। शॄ हिंसायाम्। शोभनं शृणातीति विग्रहः। प्रातरित्वा इति। इणः प्रातःशब्द उपपदे क्वनिप्। ह्रस्वस्य पिति कृतीति (६।१।७१) तुक्। विजावा इति। जनी प्रादुर्भावे। विजायत इति वनिप्। विड्वनोरनुनासिकस्येत्वात्त्वम्(६।४।४१)। अग्रेगावा इति गमॢ सृप्ऌ गतौ। पूर्ववदात्त्वम्। रेड़सीति। रिष हिंसायाम्। पूर्ववज् जश्त्वं डकारः। दृशिग्रहणं प्रयोगानुसरणार्थमिति। तेन प्रयोगे गम्यमाने यत्र दृश्यन्ते मनिन्नादयस्तत्रैवेति साधवः। अतो नापूर्वतमः क्रियते। एतेन ते न सर्वतो विधेया इत्युक्तं भवति। यद्यन्येभ्योऽपि दृश्यन्ते पूर्वसूत्रमनर्थकम्। मनिन्नादयः सर्वधातुभ्यो दृश्यन्त इत्येवं वाच्यम्। नैतदस्ति। आकारान्तेभ्यो धातुभ्यो नियोगतस्ते भवन्ति। अनाकारान्तेभ्यः क्वचिदेव। अपि तु प्रयोगश्छन्दसि। अयन्तु भाषायामपि।

## ७६। क्विप् च।

निरुपपदेभ्यश्चेति। एतदपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्यानुवृत्तेर्लभ्यते।

उखास्रत् । पर्णध्वदिति । स्रन्सु ध्वन्सु अवस्रंसने । अनिदिता (६।४।२४) मित्यादिनानुनासिकलोपः । वसुस्रंसुध्वंस्वनडुहान्द (८।२।७२) इति दत्वम् । वावसान (८।४।५६) इति चर्त्वम् । वाहाभ्रड्डिति । भ्रन्शु अधःपतने । व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । पूर्ववज् जश्त्वम् । चर्त्वञ्च । अन्येषामपि दृश्यत इति (६।३।१३७) दीर्घः ।

## ७७ । स्थः क च ।

बाधकबाधनार्थमित्यादि । कक्विपोर्बाधकोऽच् । तस्यापि बाधनार्थम् । अचस्तु बाधकत्वं शमिधातोः संज्ञायामित्यत्र (३।२।१४) धातुग्रहणात् । तद्धि यतोऽपवादो विहितस्ततोऽपि शम्युपपदे संज्ञायामजेव यथा स्यादितेत्रवमर्थं कृतम् । एवञ्च स्थः क चेतेत्रतद् यदि नोच्येत ततो यथा कञो हेत्वादिषु ट-प्रतिषेधार्थं धातुग्रहणं तथा तिष्ठतेरपि कक्विपोर्बाधनार्थं विज्ञायते। तथाच सति शम्युपपदे संज्ञायां तिष्ठतेरजेव स्यात् । न कक्विपौ । अस्मिंस्तु योगे स-त्यचं बाधित्वोभावेव भवतः । शंस्थ इति । आतो लोप इटि चेत्याकार-लोपः (६।४।६४) ।

## ७८ । सुप्यजातौ णिनिस्ताच्छील्ये ।

ब्राह्मणानामन्त्रयितेति । मत्रि गुप्तभाषणे । इदितो नुम् धातोरिति (७।१।५८) नुम् । चुरादिणिच् । ततस्तृन्निति (३।२।१३५) ताच्छीलिक स्तृन् । सुपीत्यादि । ननु च सुपीत्यनुवर्त्तमाने पुनः सुब्ग्रहणमनर्थकम् । नानर्थकम् । पूर्वकं हि सुब्ग्रहणमुपसर्गेण सम्बद्धम् । अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । अत उपसर्गनिवृत्त्यर्थं पुनः सुब्ग्रहणं क्रियते। उत्प्रतिभ्यामित्यादि। सुब्-ग्रहणस्य चोपसर्गनिवृत्त्यर्थत्वादुपसर्गे न प्राप्नोतीति वचनम् । उत्प्रतिभ्यां परो य आङ् तस्मिन्नुपपदे सर्त्तेर्धातोरुपसंख्यानं प्रतिपादनं कर्त्तव्यम् । तत्रेदं प्रतिपादनम् । अन्येभ्योऽपि दृश्यन्त (३।२।७५) इत्यतोऽत्रापिशब्दः सर्वोपाधिव्य-भिचारार्थोऽनुवर्त्तते । तेनोदासारिण्य इत्यत्रोपसर्गे णिनि र्भवति । साधुका-रिणि चेति । अताच्छील्यार्थ आरम्भः । चकारेणोपसंख्यानमित्यनुकृष्यते । तस्य प्रतिपादनमेवार्थः । प्रतिपादनन्तु पूर्ववदपिशब्दं सर्वोपाधिव्यभि-

चारार्थमाश्रित्य कर्त्तव्यम्। अथवा यदयं तच्छीलतद्धर्मतत्साधुकारिष्विति (३।२।१३४) तच्छीलेत्यभिधाय तत्साधुकारिग्रहणं करोति तज् ज्ञापयति साधुकारिण्यताच्छील्येऽपि णिनिर्भवतीति। ब्रह्मणि वद इति। अयमप्यताच्छील्यार्थ आरम्भः। जात्यर्थो वा। ताच्छील्येऽजातौ पूर्वेणैव सिद्धत्वाद् वासरूपनिवृत्त्यर्थो नहि भवति। ब्रह्माणं वदति ब्रह्मवादीति। णिनि णकारो वृद्ध्यर्थः। द्वितीय इकारो नकारस्येत्संज्ञापरित्राणार्थः।

## ७९। कर्त्तर्य्युपमाने।

धातोः कर्त्तरि प्रत्ययविधानात् तस्यैवोपपदकर्त्रोपमानं विज्ञायत इत्याह उपपदकर्त्तेत्यादि। उपपदवाच्यः कर्त्ता उपपदकर्त्ता। शाकपार्थिवादित्वात् मध्यपदलोपी समासः। उष्ट्रक्रोशीति। क्रुश आह्वाने रोदने च। ध्वाङ्क्षरावीति। रु शब्दे। अताच्छील्यार्थ आरम्भो जात्यर्थो वेति। ताच्छील्ये ऽजातौ च पूर्वेणैव सिद्धत्वात्। भक्षयतीति। भक्ष अदने चौरादिकः।

## ८०। व्रते।

समुदायोपाधिश्चायमिति। प्रत्ययार्थविशेषणशङ्कां निराकरोति। प्रत्ययार्थे विशेषणे हि तस्मिन् व्रत एव कर्त्तरि प्रत्ययः प्रसज्येत। न तद्वति देवदत्ते। धातूपपदेत्यादिना समुदायोपाधित्वं व्रतस्य दर्शयति। कामचारप्राप्तौ नियम इति। कामचार इच्छाप्रवृत्तिः। तत्प्राप्तौ सत्यां नियमः। अनियमत्वाद् यथेष्टं सामान्येन शयने भोजने च प्रवृत्तौ प्राप्तायामयमर्थान्तराद्व्यावर्त्तय विशेषे स्थण्डिलादौ न प्राप्नोति। तस्माद् व्यवस्थाप्यते। नियमश्चात्र द्विविधः सम्भवति। स्थण्डिले शेत एवाश्राद्धं भुङ्क्त एवेत्येवंरूपो वा स्यात् स्थण्डिल एव शेते ऽश्राद्धमेव भुङ्क्ते इत्येवंरूपो वा ? तत्र पूर्वके नियमे यदैव स्थण्डिले न शेते ऽश्राद्धञ्च न भुङ्क्ते तदेव व्रतलोपः प्राप्नोति। तस्माद् द्वितीयो नियमो युक्त इति मन्यमान आह सति शयन इत्यादि।

## ८१। बहुलमाभीक्ष्ण्ये।

आभीक्ष्ण्यं पौनःपुन्यमिति। पुनः पुनर्भावः पौनःपुन्यमिति। अव्ययानां भमात्रे टिलोपः। तात्पर्य्यमासेवैवेति। तदेवाभीक्ष्ण्यम्। पर्य्यायान्तराभ्यां

स्पष्टीकरोति । ताच्छील्यादन्य इति । एतेन सुप्यजातावित्यादिना (३।२।७८) ऽभीक्ष्ण्ये न सिध्यतीत्यसामर्थ्यमुद्भावयन्नस्य योगस्य फलं दर्शयति । कषायपायिण इति । यत्र देशे कषायं पुनः पुनः पिबतामारोग्यं भवति । अतस्ते कषायं पिबन्तीति । नतु ताच्छील्यात् । क्षीरपायिण इति । तेऽपि तथोक्तादेव कारणात् पानान्तराभावाद्वा ताच्छील्याभावेऽप्यगत्या क्षीरं पिबन्ति । सौवीरपायिण इति । अत्राप्येतदेवानन्तरोक्तं पुनः पुनः सौवीरपाणस्य कारणम् । सर्वत्रातो युक् चिण्कृतो (७।३।३३) रिति युक् । प्रातिपदिकान्तनुमित्यादिना (८।४।११) णत्वम् । कुल्माषखाद इति । कर्मण्यण् (३।२।१) ।

## ८२ । मनः ।

मन्यतेर्ग्रहणमिति । मन ज्ञान इत्येतस्य दैवादिकस्य । न मनुतेरिति । मनु अवबोधन इत्येतस्य तानादिकस्य ग्रहणं न भवति । ननु च यदेव मन्यते णिनिप्रत्यये कृते दर्शनीयमानीतिरूपं भवति तदेव मनुतेरपि । तत् कोऽत्र विशेषो यतो मन्यतेर्ग्रहणमिष्यते ? न मनुतेरित्यत आह उत्तरसूत्रे हीत्यादि । यद्यपीह विशेषो नास्त्युत्तरसूत्रे तु विकरणकृतो विशेषोऽस्ति । तत्र हि मन्यतेः खशि कृते दिवादित्वाच्छ्यन् भवति । मनुतेस्तु तनादित्वादुप्रत्ययः ।

## ८३ । आत्ममाने खश् च ।

आत्ममान इति । मननं मानः । भावे घञ् । आत्मनो मानः आत्ममानः । कर्त्तृकर्म्मणोः कृतीति (२।३।६५) षष्ठी । कृद्योगा च षष्ठी समस्यत इति (२।२।८, वा) समासः । अथ कर्त्तरि षष्ठी कस्मान्न भवति । आत्मग्रहणसामर्थ्यात् । नह्यात्मनोऽन्यस्य पदार्थस्य मतिः सम्भवति । तस्या आत्मगुणत्वात् । अथात्मशब्दोऽयं न सुखादिगुणमाचष्टे । किं तर्हि पराभावम् । परो यो न भवति स आत्मेति । तथाप्यात्मग्रहणमनर्थकम् । एवं हि मन्तुर्या मतिस्तत्र वर्त्तमानादित्येषोऽर्थः स्यात् । स चायुक्तः । सर्वा हि मतिः परमपि मन्यमानस्य मन्तुरेव भवति । तस्मात् कर्मण्येव षष्ठी । यदा प्रत्ययार्थः कर्त्तेत्यादि । कथं पुनरेष एवार्थः । कर्म कर्त्ता च युज्यते । शक्तिभेदाद

यथा पीयमानं मधु मदयतीति। खश: खकारोऽरुर्द्विषदजन्तस्येति (६।३।६७) मुमर्थ:। शकार: सार्वधातुकसंज्ञार्थ:।

## ८४। भूते।

भूतशब्दोऽयमतिक्रान्तवचन:। अस्ति च स्वरूपवचन:। तत्र न ज्ञायते कस्मिन् भूते प्रत्यय इति। अतस्तत्परिज्ञानायाह धात्वधिकाराच्चेत्यादि। चशब्दो हेतौ। यस्माद् धातोरिति वर्त्तते तस्माद्धात्वर्थभूत इति विज्ञायते। ननु च धात्वधिकाराद्धातोरेव भूत इत्येतद् विशेषणं युक्तम्। न। असम्भवाद्। धातो र्ह्यस्मिन्नभिधेये गुणीभूतस्य भूत इत्येतद् विशेषणमनुपपन्नम्। अतस्तत्रा-सम्भवात् तदर्थस्यैव तद्विशेषणं विज्ञायते।

## ८५। करणे यज:।

णिनिरनुवर्त्तते न खशिति। णिनेरेव स्वरितत्वात्। क्व पुन-र्याग: करणमित्याह अग्निष्टोमफलभावनायामित्यादि। फलं स्वर्ग:। तस्य या भावनोत्पादना यजमानसम्बन्धी व्यापारस्तत्राग्निष्टोमयाग: करणं भवति। ननु चाग्निष्टोमव्यतिरेकेण यजमानस्य व्यापारो भावनाख्यो नास्त्येव यत्र याग: करणमिष्यते। तथाह्यग्निष्टोमाख्येनैव ह्यसौ यागेन स्वर्गाख्यं फलमुत्पादयति। नैतदेवम्। विशेषव्यापारे हि सामान्यव्यापारो-ऽस्ति। विशेषस्य सामान्याव्यभिचारात्। सामान्यव्यापार एव ह्यादौ फलार्थिनो बुद्धौ सन्निविशते। तथाहि प्रतिपत्ता फलं समीहमान: स्वयमेव फलकाम: सन् स्वर्गो मनसि कर्त्तव्य इति सामान्यव्यापारं बुद्धावारोपयति। ततोऽग्निष्टोमेन स्वर्गकामो यजेत इति शास्त्रस्याग्निष्टोमेन करणेन स्वर्गं भावयेदितीममर्थं प्रतिपद्य स्वर्गभावनां प्रति करणत्वेनाग्निष्टोममाश्रयति। तस्मात् सामान्यव्यापारे स्वर्गस्योत्पादो विशेषव्यापारोऽग्निष्टोमाख्यो याग: स्वर्गभावनायां करणं भवति। ननु चानुष्ठीयमानत्वाच्चास्य कर्मत्वमिति। तत् कथं करणत्वमुपपद्यते? नैतदस्ति। यद्यप्यसौ स्वर्गभावनां प्रति साध्यत्वेनेप्सिततमत्वादनुष्ठीयमान: कर्मत्वमनुभवति तथापि तस्य शक्ति-भेदात् करणत्वं न विरुध्यते यथा निपीयमानेन मधुना मत्त इत्यत्र

कर्मभावमनुभवतोऽपि मधुनः करणभावो भवति। तदेवमग्निष्टोमयाजीत्यस्यायमर्थः। अग्निष्टोमेन करणेन स्वर्गं भावितवानिति। स्वर्गशब्दस्तु हृत्तावन्तर्हितत्वान्न प्रयुज्यते।

## ८६। कर्मणि हनः।

पितृव्यघातीति। हनस्तोऽचिण्णलोरिति (७।३।३२) तत्वम्। हो हन्तेर्ञ्णिन्नेष्विति (७।३।५४) घत्वम्। सौ चेति (६।४।१३) दीर्घत्वम्। कुत्सितग्रहणं कर्त्तव्यमिति। कुत्सित इति प्रत्ययार्थस्य विशेषणम्। गृह्यतेऽनेनेति ग्रहणम्। तत् पुनर्व्याख्यानम्। एतदुक्तं भवति। येन कुत्सितः कर्त्ता प्रत्ययार्थो गृह्यते तद् व्याख्यानं कर्त्तव्यमिति। तत्रेदं व्याख्यानम्। वक्ष्यमाणबहुलग्रहणमपकृष्येह सम्बन्धः क्रियते। तेन पितृव्यवधादिकां प्रतिषिद्धां क्रियां कुर्वाणो यः कर्त्ता कुत्स्यते तत्रैव। नान्यत्र।

## ८७। ब्रह्मभ्रूणवृत्रेषु क्विप्।

ब्रह्महेति। पूर्ववद्दीर्घत्वम्। सर्वधातुभ्यः क्विब् विहित एवेति। क्विप् चेत्यनेन (३।२।७६)। चतुर्विधश्चात्र नियम इति। धातुनियम उपपदनियमः प्रत्ययनियमः कालनियमः। चकारोऽवधारणे। चतुर्विध एव। ब्रह्मादिष्वेव हन्तेर्नान्यस्मिन्नुपपद इति। धातुनियमं दर्शयति। अतएव यत एवकारकरणं ततोऽन्यत्रावधारणमिति। उपपदेभ्यः पर एवकारः प्रयुज्यमानो हन्तिं नियमयति। प्रायिकश्चायं नियमः। क्वचिदन्यस्मिन्नुपपदे दृश्यते मधुहेति। प्रायिकत्वञ्च तस्य वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते। ब्रह्मादिषु हन्तेरेव नान्यस्मादिति। उपपदनियमः। अत्र हि हन्तेः पर एवकारः श्रूयमाण उपपदं नियमयति। ब्रह्मादिषु हन्तेर्भूते क्विबेव। नान्यः प्रत्यय इति। कालनियमः। ब्रह्माद्युपपदे हन्तेः क्विपि विहिते भूतकालस्य नियमितत्वात्। यदि ब्रह्मादिषु क्विबेव नान्यः प्रत्यय इति तदा निष्ठापि न प्राप्नोति ब्रह्माणं हतवानिति। नैष दोषः। मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानित्य(प,६१)णादय एव बाध्यन्ते। न निष्ठा। एवमपीह वृत्रस्य हन्तुरिति तृज् न प्राप्नोति। प्रायिकत्वान्नियमस्य न दोषः।

तथा भूतकाल एव नान्यस्मिन्निति प्रत्ययनियमः। भूतकाले प्रत्ययो नियम्यत इति कृत्वा। कथं पुनरेकदा चत्वारो नियमा लभ्यन्त इत्याह तदेतदित्यादि। बहुलं छन्दसीति (३।२।८८) वक्ष्यमाणं बहुलग्रहणं पुरस्तादपकृष्यानेन योगेन सम्बध्यते ब्रह्मभ्रूणवृत्रेषु क्विव् बहुलमिति। तेनायं चतुर्विधो नियमो लभ्यते।

८८। बहुलं छन्दसि।

८९। सुकर्म्मपापमन्त्रपुण्येषु कृञः।

सुशब्दं वर्जयित्वेति। तस्यासत्त्ववचनात् कर्मत्वानुपपत्तेः। स्वादिषु कर्मस्विति। बाहुल्यमाश्रित्योक्तं यथा ब्राह्मणग्रामो भट्टग्राम इति। कुत एतत्? सुशब्दं वर्जयित्वेत्यनन्तराणामेवाभिधानात्। त्रिविधश्चात्र नियम इति। एतदपि बहुलग्रहणानुवृत्तेर्लभ्यते। कालोपपदप्रत्ययविषय इति। कालोपपदप्रत्यया विषया यस्य स तथोक्तः। स पुनः कालनियम उपपदनियमः प्रत्ययनियमश्चेति। तत्र कालनियमः स्वादिषु कृञो भूत एव क्विवेव भवति। नान्यः प्रत्यय इति न भवति कर्म कृतवान् कर्मकार इति। उपपदनियमः। स्वादिषु कृञ एव। नान्यस्माद्धातोरिति नहि भवति क्विप्। मन्त्रमधीतवानित्यणेव भवति मन्त्राध्याय इति। प्रत्ययनियमः। स्वादिषु कृञो भूत एव क्विप्। न वर्त्तमाने भविष्यति वा। तेन मन्त्रं करोति मन्त्रं करिष्यतीति वेत्यर्थविवक्षायां मन्त्रकृदिति न भवति। शास्त्रकृदिति। क्विप् चेति (३।२।७६) क्विप्।

९०। सोमे सुञः।

धातुकालोपपदप्रत्ययविषय इति। पूर्ववद् बहुव्रीहिः। कालादिनियमोऽन्यपदार्थः। तत्र कालनियमः। सोमे सुनोतेः क्विवेव भूते। नान्यः प्रत्ययः। नहि भवति सोमं सुतवान् सोमसाव इति। धातुनियमः। सोम एव सुनोतेः क्विप्। नान्यस्मिन्नुपपद इति। इह न भवति सुरां सुतवान् सुरासुदिति। उपपदनियमः। सोमे सुनोतेरेव। नान्यस्माद्धातोरिति। इह न भवति क्विप् सोमं क्रीतवानिति। सोमक्राय इत्यणेव तु भवति। प्रत्यय-

नियमः । सोमे सुनोतेर्भूत एव क्विप् । नान्यत्रेति । तेन सोमं सुनोति सोष्यति वेत्यर्थविवक्षायां सोमसुदिति न भवति ।

९१ । अग्नौ चेः ।

अत्रापि पूर्ववदित्यादि । तत्र कालनियमः । अग्नौ चिनोतेर्भूते क्विबेव । नान्य इति । तेनाग्निं चितवानित्यर्थविवक्षायामग्निचाय इति न भवति । धातुनियमः । अग्नावेव चिनोते र्नान्यस्मिन्नुपपद इति । तेनेष्टकाचिदिति न भवति । उपपदनियमः । अग्नौ चिनोतेरेव नान्यस्माद्धातोरिति । तेनाग्निक्रुदिति न भवति । प्रत्ययनियमः । अग्नौ चिनोते र्भूत एव क्विप् । नान्यस्मिन् काले । तेन वर्त्तमानभविष्यतोरग्निचिदिति न भवति ।

९२ । कर्मण्यग्न्याख्यायाम् ।

कर्मणि हन (३।२।८६) इत्यत उपपदविशेषणे कर्मग्रहणेऽनुवर्त्तमाने यत् पुनरिह कर्मग्रहणं तस्य प्रत्ययार्थत्वं विज्ञायत इत्याह कर्मण्येव कारक इति । धातूपपदेत्यादिना समुदायोपाधित्वमेतदग्न्याख्याग्रहणस्य दर्शयति । आख्याग्रहणं रूढिसंप्रत्ययार्थमित्यादि । अग्निशब्दोऽयमग्निसामान्यवाची । अत्रासत्याख्याग्रहणे विशेषो न विज्ञायते कस्येह ग्रहणमिति रूढिसंप्रत्ययार्थमाख्याग्रहणं क्रियते । किं पुनः कारणं तदर्थमाख्याग्रहणं क्रियत इत्याह अग्न्यर्थो हीत्यादि । अग्न्यर्थो य इष्टकानां रचनाविशेषः स श्येनचिदित्युच्यते । तत्रैवायं प्रत्यय इष्यते । स कथं तत्रैव लभ्यते ? यस्य ग्रहणं क्रियते तस्मिंश्च सति प्रसिद्धो गृह्यमानोऽग्न्यर्थो य इष्टकानां रचनाविशेषः स एव प्रत्ययार्थो वाच्यतया विज्ञायते । नान्यः ।

९३ । कर्मणीनि विक्रियः ।

कर्मणीति वर्त्तमान इत्यादि । कर्मणि हन (३।२।८६) इत्यतः । पुनः कर्मग्रहणमित्यादि । यत् कर्म क्रियासम्बन्धमनुभवत् कर्त्तुः कुत्सामावहति तत् कुत्सानिमित्तं कर्म यथा स्यादित्येवमर्थम् । कर्मग्रहणेऽनुवर्त्तमाने पुनः कर्मग्रहणमनन्तरसूत्रे यत् कर्मप्रत्ययार्थत्वेऽनिष्टं कर्मग्रहणं तन्निवृत्त्यर्थम् ।

कर्मग्रहणं कस्मान्न भवति? तस्य स्वरितत्वादेवानुवृत्तेः। सोमविक्रयीति। सोमविक्रयणं शास्त्रे प्रतिषिध्यत इति सोमाख्यं कर्म विक्रयणक्रियया सम्बध्यमानं विक्रेतुः कुत्सामावहति। धान्यविक्राय इति। (३।२।१) कर्मण्यण्।

९४। दृशेः क्वनिप्।

प्रत्ययान्तरनिवृत्त्यर्थमिति। प्रत्ययान्तरमणादि। तस्य निवृत्त्यर्थम्। निवृत्ते सत्यपि प्रत्ययः प्रत्ययान्तरत्वे भवत्येव परलोकं दृष्टवानिति। अत्र च कारणं ब्रह्मभ्रूणसूत्र (३।२।८७) एव उक्तम्।

९५। राजनि युधिकृञः।

ननु च युधिरयमकर्मकः। तत् कथं तस्य कर्मण्युत्पद्यत इत्यभिप्रायेणाह अन्तर्भावितण्यर्थ इत्यादि। अन्तर्भावितोऽनुप्रवेशितो ण्यर्थो यस्मिन्निति बहुव्रीहिः। राजा युध्यते। तं प्रयुङ्क्ते पुरुषो योद्धुं वेति। तत्रासौ पुरुषस्य व्यापारः प्रेषणादिको ऽर्थो ण्यर्थो यदा बुद्ध्या युध्यतेरन्तर्भाव्यते तदासौ प्रयोज्यकर्मणा सकर्मको भवति। योधितवानिति। ण्यन्तस्य प्रयोगः। निष्ठायां सेटीति (६।४।५२) णिलोपः।

९६। सहे च।

असत्त्ववाचित्वान्नोपपदं कर्मणा विशेष्यत इति। तदर्थस्य कर्मत्वानुपपत्तेः।

९७। सप्तम्यां जनेर्डः।

सप्तमीति प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं भवतीत्याह सप्तम्यन्त उपपद इति। स्वरूपग्रहणमत एव न भवति। उपसरज इति। डित्करणसामर्थ्यादभसंज्ञकस्यापि टिलोपः। मन्दुरज इति। ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति (६।३।६३) ह्रस्वः।

९८। पञ्चम्यामजातौ।

बुद्धिज इति। जनिकर्तुः प्रकृतिरिति (१।४।३०) बुद्धेरपादानत्वादपादाने पञ्चमी। तदस्योपपदत्वम्। बुद्ध्यादिशब्दा जातिशब्दा न भवन्ति। बुद्ध्यादीनामात्मगुणत्वात्।

## ९९ । उपसर्गे च संज्ञायाम् ।

समुदायोपाधिरिति । धातूपसर्गप्रत्ययसमुदायेन यदि संज्ञा गम्यत एवं प्रत्ययार्थो भवति । नान्यथेति दर्शयति प्रजेति । प्राणिसमुदायस्यैषा संज्ञेति । यद्यस्य सूत्रस्य प्रजेत्येतदेवोदाहरणं तदा प्रे जनः संज्ञायामिति वक्तव्ये प्रजेति सिध्यत्येव । किमुपसर्गग्रहणेन ? उपसर्गग्रहणमुत्तरार्थम् । अनौ कर्मणीत्युपसर्गे (३।२।१००) यथा स्यात् । कर्मप्रवचनीये मा भूत् । अथानन्तस्य प्रयोगविषयस्यान्यस्मिन्नुपपदे कदाचित् प्रत्ययो दृश्यते यदि तदेतदर्थमपि ।

## १०० । अनौ कर्मणि ।

अनुपूर्वाज्जनेरित्यादि । अथानुशब्दस्योपपदत्वं कस्मान्न भवति ? यतो न भवति स हेतुरदि कूले रुजिवहोरित्यत्र (३।२।३१) व्याख्यात इति पुनर्नाख्यायते । पुमनुज इति । लुप्तेऽपि सुपि प्रत्ययलक्षणेन पदत्वम् । तेन संयोगान्तलोपो भवति ।

## १०१ । अन्येष्वपि दृश्यते ।

अपिशब्द इत्यादि । सर्व उपाधय उपपदादयः । तेषां व्यभिचारो यथा स्यादित्येवमर्थोऽपिशब्दः । धात्वन्तरादपीति । खनु अवदारणे इतेग्रतस्मात् । कारकान्तरेऽपीति । कर्त्तुरन्यस्मिन् कारके कर्मणि ।

## १०२ । निष्ठा ।

क्तमिति । अत्र कित्त्वाद् गुणाभावः । क्तवानिति । उगिदचामिति (७।१।७०) नुम् । अत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घः । हल्ङ्यादिसंयोगान्तलोपौ । निष्ठायामित्यादि । निष्ठासंज्ञके प्रत्यये विधातव्ये ऽप्रसिद्धनिष्पत्तिकस्य निष्ठासंज्ञकस्य प्रत्ययस्य निष्ठेति चास्याः संज्ञाया अप्रसिद्धिः । कुतः ? इतरेतराश्रयत्वात् । कथमितरेतराश्रयत्वमित्याह संज्ञायामित्यादि । निष्ठेत्येवं संज्ञामुच्चार्य्य क्तक्तवत्वोरिह भूते विधानम् । विद्यमानयोश्च तयोः संज्ञया भवितव्यमितीतरेतराश्रयत्वम् । इतरेतराश्रयाणि कार्य्याणि शास्त्रे न प्रकल्पन्ते । यदि तौ क्तक्तवतू स्वरूपेण विज्ञातौ भवत एवञ्च क्तक्तवतू

निष्ठेत्यन्यस्य (१।१।२६) संज्ञा विधातुं शक्यते। नान्यथा। अतः संज्ञाया अप्रसिद्धिः। तस्याश्चाप्रसिद्धौ तयोरप्रसिद्धिः। भाविनीति। भविष्यन्तीत्यर्थः। यथास्य सूत्रस्य शाटकं वयेति। भाविनीशब्दोऽयं गमेरिनिः (उण्, ४।४४६)। आङि णित् (उण्, ४।४४७)। भुवश्च (उण्, ४।४४८) तोनिप्रत्ययान्तो व्युत्पादितः। स च भविष्यति गम्यादय इति (३।३।३) भविष्यत्काले विहितः। तेन भाविनीतस्य भविष्यन्तीत्येवार्थो लभ्यते। सामर्थ्यादितत्रादि। स भूते भवति यस्योत्पन्नस्य निष्ठेत्येषा संज्ञा भवति। न चान्यस्योत्पन्नस्य निष्ठेत्येषा संज्ञा भवति। अपि तु क्तक्तवत्वोरेवेति सामर्थ्यम्। आदिकर्मणीत्यादि। कर्मशब्दोऽत्र क्रियावाची। आदिभूते क्रियारम्भादिभूते प्रथमे क्रियालक्षण इत्यर्थः। यावत् क्रियालक्षणैः सकलः कटः परिसमाप्तिमुपैति क्रियालक्षणानां तावतामपवर्गे भूतकालो भवति। आद्ये क्रियालक्षणे समुदायस्यापरिनिष्पन्नत्वात्। वर्त्तमानकाल एवेति। तत्र वर्त्तमाने निष्ठा न प्राप्नोति। अतो वक्ष्यमाणो व्याख्येयः। तत्रेदं व्याख्यानम्। यदयमुदुपधाद् भावादिकर्मणोरन्यतरस्या (१।२।२१) मितत्रादिकर्मणि निष्ठायाः कित्त्वं विकल्पयति यद्वा ऽदिकर्मणि क्तः कर्त्तरि चेतत्रादि (३।४।७१) तज्ज्ञापयत्यादिकर्मणि निष्ठा भवतीति। प्रकृतः कटमिति। प्रशब्दोऽत्रादिकर्म द्योतयति। य एवार्थः प्रकरोति कटं देवदत्त इति स एवार्थः प्रकृतः कटं देवदत्त इति।

## १०३। सुयजो ङ्वनिप्।

सुत्वेति। ह्रस्वस्य पिति कृतीति (६।१।७१) तुक्। सर्वनामस्थाने (६।४।८) चेतत्रादिना दीर्घः। नलोपः प्रातिपदिकान्तस्येति (८।२।८) नकारलोपः।

## १०४। जीर्यतेरतृन्।

जरन्निति। अतृनो नित्त्वादाद्युदात्तत्वं भवति। उगिदचामिति (७।१।७०) नुम्।

## १०५। छन्दसि लिट्।

ददर्शेति। दृशेर्लिट्। णल्। द्विर्वचनम्। उरदित्यत्वम् (७।१।७०)।

रपरत्वम् । हलादिशेषः । लघूपधगुणः । आततानेति । तनु विस्तारे । आङ्पूर्वः । अत उपधाया इति (७।२।११६) वृद्धिः। धातुसम्बन्धे स विधिरिति । धातुसम्बन्धे प्रत्यया इत्यतो (३।४।१) धातुसम्बन्धग्रहणानुवृत्तेः । अयन्त्वविशेषेणेति । भूतमात्रे । लिट इकारटकारावुत्तरसूत्रे विशेषणार्थौ । लः कानज् वेत्युच्यमाने ऽन्येषामपि लकाराणां ग्रहणं स्यात् । टकारष्टेरेत्त्वार्थः ।

## १०६ । लिटः कानज् वा ।

कानचश्चित्करणमन्तोदात्तार्थम् । कित्करणं कित्कार्य्यार्थम् । तत् पुनर्बन्ध बन्धन इत्येवमादयः संयोगान्ताः प्रयोजयन्ति । नान्ये । असंयोगान्तेभ्योऽसंयोगाल्लिट् किदिति (१।२।५) सिद्धः । संयोगान्ता अपि कित्त्वं भाषायां प्रयोजयन्ति । न च्छन्दसि । तत्राह च्छन्दस्युभयथेति (३।४।११७) लिटः सार्वधातुकत्वात् सार्वधातुकमपिदिति (१।२।४) ङित्त्वमस्त्येव । न कित्त्वे ङित्त्वे वा च्छन्दसि कश्चिद् विशेषो ऽस्ति । भाषायान्तु यद्यसंयोगान्तेभ्यः कित्त्वं न स्याद् योऽयमृच्छत्यॄतामिति (७।४।११) गुणः प्रतिषेधविषय आरभ्यते स यथेह न भवति निपपरतुर्निपपरुरिति तथेहापि स्यान् निपपुराण इति । कित्त्वे च सति न भवति । भाषायान्तु कित्त्वमर्थवद् भवति । पॄ पालनपूरणयोः । निपूर्वात् कानच् । द्विर्वचनात् परत्वादुदोष्ठ्यपूर्वस्ये(७।१।१०२) त्युत्त्वम् । रपरत्वञ्चेति । द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावात् पॄशब्दो द्विरुच्यते । उरत्व-रपरत्व-हलादिशेषाः । अट्कुप्वादिना ( ८।४।१ ) णत्वम् । भाषायां कानज् भवतीत्यस्मादेव ज्ञापकादवसीयते । चिक्यान इति । अभ्यासादुत्तरस्य चिनोतेः ककारस्य विभाषा चेरिति ( ७।३।५८ ) कुत्वम् । एरनेकाच (८।४।८२) इत्यादिना यणादेशः । सुषुवाण इति । सुनोतेरिति । अचि श्नुधात्वादिनोवङादेशः (६।४।७७) । आदेशप्रत्यययोरिति (८।३।५९) षत्वम् । विभक्तिविपरिणामो भविष्यतीति । यद्यपि लिड्ति प्रथमान्तं प्रकृतं तथाप्यर्थाद् विभक्तिविपरिणामो भविष्यति । आदेशसम्बन्धादुत्तरस्य लिटः षष्ठ्यन्तता भविष्यति । तस्मादन्तरेणापि लिड्ग्रहणं प्रकृतत्वाल्लिट एव कानजादेशो भविष्यतीति लिड्ग्रहणं न कर्त्तव्यमिति भावः । योऽपीत्यादि ।

योऽपि परोक्षे लिडित्यनेन(३।२।११५)लिड् विहित स्तस्यापि लिड्ग्रहणे सति कानजादेशो भवति। असति तु तस्मिन्ननन्तरस्य विधिर्वा प्रतिषेधो वे (प,६२) त्यस्यैव स्यात्। न परोक्षे लिटः। अथासति लिड्ग्रहणे प्रत्ययान्तरं कानच् कस्मान्न विज्ञायते? अशक्यमेवं विज्ञातुम्। प्रत्ययान्तरे हि न लोकाव्ययनिष्ठा-खलर्थतृनामिति (२।३।६९) षष्ठीप्रतिषेधो न स्यात्। ततश्चाग्निं चिक्यान इत्यत्राग्निशब्दात् षष्ठी स्यात्।

## १०७। क्वसुश्च।

क्वसौ उगित्करणं नुमर्थम्। कित्करणं कानच इव द्रष्टव्यम्। असति हि तस्मिन्नृच्छत्यॄतामिति (७।४।११) यथेह गुणो न भवति तेरतु स्तेरुरिति तथेहापि तितीर्वानिति। तॄ प्लवनतरणयोः। ऋत इद्धातोरितीत्त्वम्(७।१।१००)। हलि चेति (८।२।७७) दीर्घः। द्विर्वचनमभ्यासकार्य्यम्। जक्षिवानिति। लिट्यन्यतरस्यामित्यदेर्घस्लादेशः (२।४।४०)। वस्वेकाजाद्घसामितीट् (७,२।६७)। घसिभसो र्हलि चेत्युपधालोपः (६।४।१००) (C)। खरि चेति (८।४।५५) घकारस्य ककारः। शासिवसिघसीनाञ्चेति (८।३।६०)षत्वम्। कुहो (७।४।६२) श्चुरित्यभ्यासस्य चुत्वं झकारः। अभ्यासे चर्चेति (८।४।५४) झकारस्य जकारः। पपिवानिति। पा पाने। पूर्ववदिट्। आतो लोप (८।४।४४) इटि चेत्याकारलोपः (६।४।६४)। योगविभाग उत्तरार्थं इति। उत्तरसूत्रे क्वसोरेवानुवृत्तिर्यथा स्यात्। कानचो मा भूत्।

## १०८। भाषायां सदवसश्रुवः।

ननु चेह प्रकरणे भूतसामान्ये लिड् विहितः। तेनासौ भाषायां नास्त्येव। तदसतस्तस्य कथं क्वसुरादेशः शक्यते विज्ञातुमित्याह आदेश-विधानादेवेत्यादि। यदेतद् भाषायां लिटः क्वसोरादेशविधानमत एव विज्ञानाद् भूतसामान्ये भाषायां लिड़ित्यनुमीयते। अन्यथा ह्यादेश-विधानमनर्थकं स्यात्। न ह्यविद्यमानस्य स्थानिन आदेश उपपद्यते। यदि

---

(C) According to भट्टोजिदीक्षित, the rule is गमहनजनखनघसां लोपः क्ङित्यनङि (6. 4. 98) by which elison of the उपधा takes place.

तर्ह्यादेशविधानाल् लिङ् भाषायामनुमीयते ततश्च सदादिभ्यो भाषायां नित्यं लिट् प्राप्नोति। तस्य विभाषा क्वसुरिति पक्षे तिङः श्रवणं प्रसज्येत। लुङादेशश्च स्वविषये पाक्षिको न स्यात्। नित्यत्वाल्लिटः। नैष दोषः। आदेशेन हि लिङ्गेन लिङनुमीयते। तेन यदादेशो नास्ति तदा तदनुमानमपि नास्त्येव। तदसत्त्वे लिटः कुत आदेशा येषां श्रवणं प्रसज्येत। यत्र पक्षे लिङ् नास्ति तत्र स्वविषये लङादयो भवन्तः केन निवार्य्यन्ते ? उपसेदिवानिति। षद्लृ विशरणे। अत एकहल्मध्य (६।४।१२०) इत्यादिनैत्वाभ्यासलोपौ। वस्वेकाजाद्घसामितीट् (७।२।६७)। नुम्। सान्तमहतः संयोगान्तस्येति (६।४।१०) दीर्घः। हल्ङ्यादिसंयोगान्तलोपौ। उपासददिति। वाग्रहणाद् यस्मिन् पक्षे लिङ् नास्ति तस्मिन् पक्षे भूतसामान्ये लुङ्। तिप्। इतश्चेतीकारलोपः (३।४।१००)। पुषादिना (३।१।५५) च्लेरङ्। उपासीददिति। अनद्यतने लङ् (३।२।१११)। पाघ्रादिसूत्रेण (७।३।७८) सीदादेशः। उपससादेति। परोक्षे लिट् (३।२।११५)। तिप्। णल्। अत उपधाया इति(७।२।११६) वृद्धिः। अनूषिवानिति। वस निवासे। लिटः क्वसुर्द्विर्वचनम्। वच्यादिसूत्रेण (६।१।१५) संप्रसारणम्। लिट्यभ्यासस्योभयेषामि (६।१।१७) त्यभ्यासस्य संप्रसारणम्। शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम्। अकः सवर्णे दीर्घः (६।१।१०१)। अनुशब्देन सह पुनर्दीर्घः। अन्ववात्सीदिति। लुङ्। अस्तिसिचोऽपृक्त इतीट् (७।३।९६)। एकाच (७।२।१०) इतीट्प्रतिषेधः। सः स्यार्द्धधातुक इति(७।४।४९)तत्वम्। वदव्रजेत्यादिना (७।२।३) वृद्धिः। अन्ववसदिति। लङ्। अनूवासेति। लिट्। पूर्ववत् संप्रसारणादिकार्य्यम्। उपशुश्रुवानिति। श्रु श्रवणे। लिटः क्वसुः। द्विर्वचनम्। उपाश्रौषीदिति। लुङ्। सिचि वृद्धिः परस्मैपदेष्विति (७।२।१) वृद्धिः। पूर्ववदिट्प्रतिषेधः। अस्तिसिचोऽपृक्त (७।३।९६) इतीट्। उपसर्गेणाकः सवर्णे दीर्घः (६।१।१०१)। उपाशृणोदिति। लङ्। श्रुवः शृ चेति (३।१।७४) श्नुप्रत्ययः शृभावश्च। सार्वधातुकार्द्धधातुकयोरिति (७।३।८४) गुणः। उपशुश्रावेति। लिट्। तिप्। णल्। अचो ञ्णितीति (७।२।११४) वृद्धिः। आवादेशः। इहानेन सूत्रेण यत् कार्य्यं विधीयते तद् भूतसामान्ये। लुङित्यनेन (३।२।११०) लुङ्। अनद्यतने लङित्यनेन

(३।२।१११) लङ्। परोक्षे लिड़ित्यनेन (३।२।११३ लिट्। भूतानद्यतनपरोक्षे परौ च लङ्लिटौ भवतः। विशेषविहितत्वाच्च लङ्लिटोरस्य सदादि-कार्य्यस्य बाधकौ प्राप्नुतः। तस्य कार्य्यस्य भूतसामान्यमवकाशः। लङ्-लिटोः सदादिभ्योऽन्येभ्यो धातुभ्यः। सदादिभ्यो भूतविशेषे भूतानद्यतन-परोक्षे। भूतानद्यतने चोभयप्राप्तौ यथोक्तकारणद्वयाल् लङ्लिटौ स्याताम्। न चैतत् सूत्रविहितं कार्य्यमपीति यश्चोदयेत् तं प्रत्याह लुङ्लङ्विषयेऽपीत्यादि। लिड्ग्रहणस्य वाग्रहणस्य चास्य सूत्रस्य पुरस्तादनद्यतने लङ् (३।२।१११) परोक्षे लिडित्यत्र(३।२।१५)चानुवृत्तिः क्रियते। तत्र चानुवृत्तिसामर्थ्याल् लङ्य्प्येतत् सदादिकार्य्यं भवति। अत्रैवं सम्बन्धः कर्त्तव्यः। अनद्यतने लङ् भवति। सदादिभ्यो वा लिट्। लिटश्च क्वसुरादेशो नित्यमिति। परोक्षे लिड् भवति। सदादिभ्यो वा। लिटः क्वसुरादेशो नित्यम्। परोक्षे लिड़ित्यस्य (३।२।११५) तु लिटः क्वसु र्न भवति। यस्मात् सदादिसूत्रे विहितस्य लिटः क्वसुरिष्यते। सूत्रान्तरविहितश्चायम्।

## १०९। उपेयिवाननाश्वाननूचानश्च।

उपपूर्वादिणः क्वसुरिति। लिड़ादेश इति वेदितव्यः। अभ्यासदीर्घत्व-मिति। दीर्घ इणः कितीत्यनेन (७।४।६९)। तत्सामर्थ्यादित्यादि। दीर्घत्व-विधानसामर्थ्यादकः सवर्णे दीर्घत्वमेकादेशः प्रतिषिध्यते। प्रवृत्तिविघातोऽस्य क्रियत इत्यर्थः। यदि ह्येकादेशः स्याद् दीर्घत्वविधानमनर्थकं स्यात्। एका-देशेनैव दीर्घत्वसिद्धेः। ननु चाभ्यासदीर्घस्येयतुरीयुरित्ययमवकाशः स्याद् यत्र धातुरूपस्येणो यस्मिति (६।४।८१) यणादेशः क्रियते। नैषोऽस्यावकाशः। अत्र ह्यचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावेन भवितव्यम्। कथम्? सवर्णदीर्घत्वे हि पूर्वापरविधित्वात् पूर्वविधिरिति शक्यते व्यपदेष्टुम्। यो ह्युभयस्थानी निष्पद्यते लभतेऽसावन्यतरव्यपदेशम्। न चात्र न पदान्तादि-सूत्रेण (१।१।५८) दीर्घत्वविधिं प्रति स्थानिवद्भावप्रतिषेधोऽस्ति। यस्मात् स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदेवेति (१।१।५८, वा) स्थानि-वद्भावादकः सवर्णे दीर्घत्वेनात्र भवितव्यम्। तदेतदभ्यासदीर्घत्वमनवकाश-

त्वात् सवर्णदीर्घत्वं बाधत इति स्थितमेतत् सामर्थ्यादेकादेशः प्रतिषिध्यत-इति। तत्रेत्यादि। एकादेशप्रतिबन्धके हि सत्येनैकाच्त्वं भवति। तेन वस्वेकाजाद्घसामित्य(७।२।६७)नेनेड़ागमो न प्राप्नोतीति स निपात्यते। धातुरूपस्य यणादेश इति। इणो यणित्यनेन (६।४।८१)। तर्ह्रीदं निपातनमेव। सत्यजादादपि परतो वसोः सम्प्रसारणमिति। सम्प्रसारणे कृते सतीट् प्राप्नोति। विशेषानुपादानादित्याह क्रादिनियमादित्यादि। यस्मात् कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्यादिना (७।२।१३) य इट् प्राप्नोति स वस्वेकाजाद्घसा-मिति (७।२।६७) प्रतिषिद्धः। स एवानेन निपातनेन प्रतिप्रसूयते। प्रतिषिद्धः स पुनः प्रवर्त्तते। नत्वपूर्वं विधीयते। तेनाजादौ न भवतीति। अपि पूर्वस्य हि विधानेन विशेषानुपादनादजादावपि प्रसङ्गः स्यात्। ननु लक्षणप्रतिषेधस्येटः प्रसवे। तस्य वलादित्वात्। उपेयुषेति। सम्प्रसारणे कृते धातोर्यणादेशः। आदेशप्रत्यययोरिति (८।३।५९) षत्वम्। न चात्रोपसर्ग-स्तन्त्रमिति। उपसर्गोऽत्र न प्रधानमित्यर्थः। तन्त्रत्वं तस्य बहुलं छन्दसीत्यतो (३।२।८८) बहुलग्रहणानुवृत्ते र्लभ्यते। उपागादिति। लुङ्। इणो गा लुङीति (२।४।४५) गादेशः। गातिस्थेत्यादिना (२।४।७७) सिचो लुक्। उपैदिति। लङ्। तिप्। अदादित्वाच्छपो लुक्। आड़जादीना-मित्याट् (६।४।७२)। आटश्चेति (६।१।९०) वृद्धिः। उपेयायेति। लिट्। तिप्। णल्। अचो ञ्णितीति (७।२।११५) वृद्धिः। आयादेशः। स्थानि-वद्भावाद्द्विर्वचनमिकारस्येति। अभ्यासस्यासवर्णे (६।४।७८) इतीयङ्। इकारेण सहाद् गुणः। अनाश्वानिति। अश भोजने। लिट्। क्वसुः। द्विर्वचनम्। अश इत्यस्यात आदेरित्यभ्यासस्य (७।४।७०) दीर्घत्वम्। इड़भावश्च। वस्वेकाजाद्घसामित्यनेन (६।२।६७) प्राप्तस्येटोऽभावो निपात्यते। न आश्वान् अनाश्वान्। नञ्समासः। नलोपो नञ इति (६।३।७३) नलोपः। तस्मान्नुड़-चीति (६।३।७४) नुड़ागमः। नाशीदिति। लुङ्। च्लेः सिच् (३।१।४४)। इट ईटीति (८।२।२८) सिचो लोपः। पूर्ववदाट्। वृद्धिः। नञा सह सवर्णदीर्घत्वम्। नाश्नादिति। लङ्। क्र्यादित्वाच् श्ना। आडागमः। नाशेति। लिट्। तिप्। णल्। द्विर्वचनम्। पूर्ववदभ्यास-

दीर्घत्वम् । धातुना नञा सहाकः सवर्णे दीर्घत्वम् (६।१।१०१) । वचेरित्यादि । वच परिभाषणे इत्यस्माद् ब्रुवो वचिरिति (२।४।५३) वच्यादेशाद्वा वचेरनुपूर्वात् कानच् कर्त्तर्य्यात्मनेपदसंज्ञको न प्राप्नोति । परस्मैपदित्वात् । इतरस्मात् कर्त्त्रभिप्रायक्रियाफलस्य विवक्षितत्वात् । अतः स निपात्यते । वच्यादिसूत्रेण ( ६।१।१५ ) धातोः संप्रसारणम् । लिट्यभ्यासस्योभयेषामित्यभ्यासस्य (६।१।१७) । पश्चादनुशब्देन सहाकः सवर्णे दीर्घत्वम् (६।१।१०१) । अन्ववोचदिति । लुङ् । अस्यतिवक्तिख्यातिभ्योऽङिति (३।१।५२) च्लेरङ् । वच उम् (७।४।२०) । आद् गुणः (६।१।८७) । अन्वब्रवीदिति । ब्रुवो लङ् । शपो लुक् । ब्रुव ईट् (७।३।९३) । अनूवाचेति । लिट् । णल् । अत उपधाया इति (७।२।११६) वृद्धिः । पूर्ववदभ्यासस्य संप्रसारणमिकादेशः ।

## ११० । लुङ् ।

ङकारो नित्यं ङित इति (३।४।९९) विशेषणार्थः । उकारो लुङ्लङ्लृङ्क्ष्वडुदात्त इति (६।४।७१) विशेषणार्थः । भूतसामान्ये चायं लुङ् वेदितव्यः । भूतविशेषेऽनद्यतन्यां लङ्लिटोर्विधानात् । अकार्षीदिति । सिचि वृद्धिः परस्मैपदेष्विति (७।२।१) वृद्धिः । पूर्ववदीट् । वसेरित्यादि । वस निवास इत्यस्मादनद्यतने लङि प्राप्ते लुङ् वक्तव्यः । दिवसः सकलोऽतिक्रान्ताया रात्रेश्चतुर्थो याम आगामिन्याश्च प्रथमो याम इत्येषोऽनद्यतनः कालः । तत्र रात्रिविशेषेऽतिक्रान्तायाश्च रात्रेश्चतुर्थे यामे प्रत्युत्थितः क्व भवानुषित इति केनचित् पृष्टः कश्चित् । स तस्मिन् रात्रिशेषे दिवा वा प्रतिवचनं प्रयच्छँल्लुङं प्रयुङ्क्ते । अहममत्रावात्समिति । स च न प्राप्नोति यस्मादसौ ततो रात्रिशेषात् पूर्व्वभागं प्रहरत्रयलक्षणमधिशयितः । सोऽस्यानद्यतनकालः । ततश्चानद्यतने लङ् स्यात् । तस्माल्लुङ् वक्तव्यो व्याख्येयः । व्याख्यानञ्चेहापि बहुलग्रहणमाश्रित्य कर्त्तव्यम् । जागरणसन्तताविति । यद्यसौ रात्रिशेषं सकलं सन्तत्याऽविच्छेदेन जागरितवानेवं लुङ् भवति । मुहूर्त्तमपि यद्यस्मिन् रात्रिविशेषे शयितवांस्ततो लङेव । अहममत्रावसमिति । अवात्समिति । लुङ् । मिप् । तस्थेत्यादिनाम्भावः (३।४।१०१) । वदव्रजेत्यादिना (७।२।३) वृद्धिः । सः स्यार्धधातुक इति (७।४।४९) सकारस्य तत्वम् ।

## १११ । अनद्यतने लङ् ।

अनद्यतन इति । यद्ययं तत्पुरुषः स्यात् तदा पर्य्युदासो वा स्यात् प्रसज्यप्रतिषेधो वा । तदा पूर्वस्मिन् पक्षेऽद्यतनाद् योऽन्यस्तस्मिन् भवितव्यम् । एवञ्चाद्य श्वो वाभुच्महीत्यत्राप्यद्यतनव्यामिश्रे प्राप्नोति । अस्ति ह्यद्यतनानद्यतनसमुदायोऽनद्यतनादन्यः । इतरस्त्वद्यतने न भवतीत्येषोऽर्थो जायते । ततश्च भूतसामान्ये स्यात् । अनद्यतन इति । अद्यतनभूतविशेषे प्रतिषेधो न भूतसामान्ये । नहि भूतसामान्यं भूतविशेषः । तस्मात् तत्पुरुषपक्षो दोषवानिति मत्वाह अनद्यतन इति बहुव्रीहिनिर्दिष्ट इति । अविद्यमानोऽद्यतनो यस्मिन्निति । सोऽनद्यतनभूतधात्वर्थः । अत्र वर्त्तमानाल्लङ् भवति । स त्वद्यतनानद्यतनसमुदाये । तत्राद्यतनैकदेशस्य सद्भावाद् । भूतसामान्येऽपि न भवत्येव । विद्यते हि सामान्ये विशेषः । तस्मात्तद्भूतविशेषत्वाद् । यत्राद्यतनगन्धोऽप्यस्ति तत्र लङा न भवितव्यमित्येषोऽर्थो बहुव्रीहौ सति लभ्यते । यदि तर्हि बहुव्रीहिरयमेवं सत्यद्यतनेऽपि प्राप्नोति । न ह्यद्यतने द्वितीयोऽद्यतनोऽस्ति । नैतदेवम् । अद्यतनसामान्ये मुहूर्त्तादेरद्यतनविशेषस्य विद्यमानत्वात् । तस्माद्यतनोऽविद्यमानाद्यतन इति न शक्यते वक्तुम् । अद्य श्वो वाभुच्महीति । लुङ् । भुजोऽनवन (१।३।६६) इत्यात्मनेपदम् । महिङ् । लिङ्सिचोरात्मनेपदेष्विति (७।२।४२) सिचः कित्त्वाद् गुणाभावः । चोः कुरिति कुत्वं जकारस्य गकारः (८।२।३०) । तस्य खरि चेति (८।४।५५) चर्त्वं ककारः । पूर्ववत् षत्वम् । परोक्षे चेत्यादि । परोक्षशब्दो रूढ़िशब्द इन्द्रियातिक्रान्तेऽर्थे वर्त्तते । तत्र परोक्षे लोकविज्ञाते लोकप्रसिद्धे प्रयोक्तुर्दर्शनविषये लङन्तस्य शब्दरूपस्य यः प्रयोक्ता तस्य दर्शनविषये लङ् वक्तव्यो व्याख्येयः । व्याख्यानन्तु तस्यैव बहुलग्रहणमाश्रित्य कर्त्तव्यम् । ननु च विप्रतिषिद्धमिदमुच्यते परोक्षेऽर्थे दर्शनविषय इति । परोक्षो ह्यर्थोऽतीन्द्रिय उच्यते । इन्द्रियविषयभावापन्नस्तु दर्शनविषयः । ततो यदि परोक्षः कथं दर्शनविषयः ? यदि दर्शनविषयः कथं परोक्षः ? नैतदस्ति । शक्यदर्शनविषय इत्युक्तम् । अननुभूतत्वात् परोक्ष इत्यविरोधः । अरुणदिति । रुधिर् आवरणे । रुधादित्वात् श्नम् । तिप् ।

हल्ङ्यादिना (६।१।६८) तिलोपः। साकेतावरोधस्तदानीन्तनप्रयोक्तुर्दर्शनविषयत्वात्। लोकप्रसिद्धश्च। कार्य्यव्यासङ्गादननुभूतत्वात् परोक्षश्च। परोक्ष इति किम्। उदगादादित्यः। गातिस्थेत्यादिना (२।४।७७) सिचो लुक्। पूर्ववदादेशादि कार्य्यम्। लोकविज्ञात इति किम्? चकार कटं देवदत्तः। प्रयोक्तुर्दर्शनविषय इति किम्? जघान कंसं किल वासुदेवः। हन्तेः परोक्षे लिट्। द्विर्वचनम्। अभ्यासाच्चेति (७।३।५५) कुत्वं हकारस्य घकारः। कंसवधश्चिरकालवृत्तत्वादिदानीन्तनप्रयोक्तुर्दर्शनविषयो न भवति। यस्तु कंसवधेन तुल्यकालः प्रयोक्ता स लङमेव प्रयुक्तवान् अहन् कंसं वासुदेव इति। मूलोदाहरणेऽपि प्रयोक्ता साकेतावरोधतुल्यकालो वेदितव्यः। तस्यैव द्रष्टृ दर्शनविषयः। नान्यस्य।

## ११२। अभिज्ञावचने लृट्।

वत्स्याम इति। लृट्। मस्। स्यतासी लृलुटोरिति (३।१।३३) स्यः। पूर्ववत् सकारस्य तत्वम्। अतो दीर्घो यञीति (७।३।१०१) दीर्घः। वचनग्रहणमित्यादि। असति हि वचनग्रहणे ऽभिज्ञाशब्द एवोपपदे स्यात्। तस्मिंस्तु यावन्तोऽभिज्ञावचनास्तेषु सर्वेषु भवति।

## ११३। न यदि।

यदीति। सती सप्तमीयम्। अभिज्ञावचनश्चानुवर्त्तते। तेन यत्र यच्छब्दोऽस्ति तत्र नियोगतोऽभिज्ञावचनं तत्सहितं न भवतीत्याह यच्छब्दसहित इत्यादि। अवसामेति। वसेर्लङ्। नित्यं ङित इति (३।४।९९)सलोपः। पूर्ववद्दीर्घः। वासमात्रमित्यादिनोत्तरसूत्रस्य नायं विषय इति दर्शयति। यदि हि तत्रापरं लक्षणमपेक्ष्यते तदोत्तरसूत्रे पाक्षिको विधिः स्यात्। स नेष्यते। तस्मान्नापेक्ष्यते।

## ११४। विभाषा साकाङ्क्षे।

उभयत्र विभाषेयमिति। प्राप्ते चाप्राप्ते च। असति हि यच्छब्दे ऽभिज्ञावचने लृडिति (३।२।११२) प्राप्ते। सति यच्छब्दे न यदीति (३।२।११३) प्रतिषेधादप्राप्ते। आकाङ्क्षणमाकाङ्क्षा। आकाङ्क्षया सह वर्त्तते साकाङ्क्षः।

आकाङ्क्षा च सम्बन्धज्ञानमुच्यते । तच्चेतनावतो धर्म्मः । तस्मात् साकाङ्क्ष इति प्रयोक्तुर्विशेषणं विज्ञायत इत्याह साकाङ्क्षश्चेत् प्रयोक्तेति । अस्यैवार्थं स्पष्टीकर्त्तुमाह लक्ष्यलक्षणयोरित्यादि । तत्र यदि ह्येतदपेक्ष्यत एतदुक्तं भवति लक्ष्यलक्षणयोर्यः सम्बन्धस्तद्विषयज्ञानं यदि प्रयोक्तुरुपपन्नं भवति । यदि प्रयोक्ता लक्ष्यलक्षणयोः सम्बन्धमपेक्षत इति यावत् । भोक्ष्यामह इति । भुजः पूर्ववदात्मनेपदम् । स्यप्रत्ययश्च । टेरेत्त्वम् । चोः कुरिति (८।२।३०) कुत्वं जकारस्य गकारः । खरि चेति (८।४।५५) चर्त्वं ककारः । सकारस्य षत्वम् । किं पुनर्लक्ष्यं लक्षणञ्च ययोः सम्बन्धे प्रयोक्तुराकाङ्क्षेत्याह । वासो लक्षणमिति । परिज्ञातत्वाल् लक्षणम् । तेन हि जनो लक्ष्यते । भोजनन्तु लक्ष्यम् । अपरिज्ञातत्वात् । ननु लक्षणं परिज्ञातं ह्यपरिज्ञातस्य लक्षणमिति भवति यथाग्नेर्धूम इति ।

## ११५ । परोक्षे लिट् ।

ननु चेत्यादि । धात्वर्थो हि पूर्वापरीभूतावयवा साध्यमाना क्रिया । यच्च साध्यमानं तदसत् । तच्चासदिन्द्रियाणामविषयः । तेषां सद्विषयत्वात् । यच्चेन्द्रियाणामविषयं तत् परोक्षमिति । स एव हि धात्वर्थः परोक्षः । ततः परोक्षग्रहणमनर्थकम् । व्यवच्छेद्याभावादिति भावः । सत्यमेतदिति । यदनन्तरमुक्तम् । यदि सत्यमेतत् तदा कस्य व्यवच्छेदार्थं परोक्षग्रहणं कृतमित्याह अस्ति त्वित्यादि । यत्र साध्यानि प्रत्यक्षाणि तत्रानिष्पन्ने क्रियात्मनि धात्वर्थे प्रत्यक्षाभिमानो लोकस्य भवति । ननु च साधनान्यपि नैव प्रत्यक्षाणि । शक्तिस्वभावत्वात् । शक्तेश्च कार्य्यानुमेयत्वात् । न ह्यशक्तो कार्य्यं करोतीति कार्य्यकरणे शक्तिरनुमीयते । तत् किमुच्यते साधनानि प्रत्यक्षाणि ? नैष दोषः । द्रव्याश्रिता हि शक्तय इति द्रव्यस्य प्रत्यक्षत्वादाश्रयधर्म्ममाश्रितेषु शक्त्यात्मकेषूपचार्य्याण्येतान्यपि प्रत्यक्षाणीत्युच्यन्ते । अथवा तदपि साधनाश्रयं द्रव्यशक्तिमतोर्भेदस्याविवक्षितत्वात् साधनशब्देनोच्यते । तदनेन परोक्षग्रहणेन प्रत्यक्षाभिमानोऽस्ति । स एव परोक्ष इत्युच्यते । तदाह स यत्र नास्तीति । आत्मविषय उत्तमस्य च धात्वर्थस्य परोक्षत्वं नोपपद्यते । तत्साधनानां प्रत्यक्षत्वात् । तत्र लोकस्य प्रत्यक्षत्वात्

ततश्चोत्तमेन सिध्यतीति चोद्यमाशङ्क्याह उत्तमविषयेत्यादि। आत्मसाध्या हि क्रिया यत्र चित्तविक्षेपान्नोपपद्यते तदासौ परोक्षा भवति। तेनोत्तमविषयेऽपि परोक्षभावः। तद् भवत्येव विललापेति। लपे विंपूर्वस्योत्तमे णलि रूपम्। अत्यन्तापह्नव इत्यादि। प्रत्यक्षमेतत्। अपह्नवो ऽपलापः। स क्वचिदत्यन्तो भवति यः सर्वापह्नवः। क्वचिदनत्यन्तो य एकदेशापह्नवः। तत्र योऽत्यन्तः स सर्वापह्नवः। तत्र लिड् वक्तव्यः। व्याख्येय इत्यर्थः। व्याख्यानन्त्विहापि बहुलग्रहणमाश्रित्य कर्त्तव्यम्। कश्चित् केनचित् पृष्टः कलिङ्गेषु प्रस्थितोऽसीत्यादि। स एवाह नाहं कलिङ्गाञ्जगामेति। अत्र केवलं न कलिङ्गविषयस्यापह्नवोऽपितु गमनस्यापीति विद्यते ऽत्यन्तापह्नवः। यस्तु स्थानमात्रस्यापह्नवो न गमनस्यापि तदानत्यन्तापह्नवे लङेव भवति नहि कलिङ्गेषु प्रत्यतिष्ठ इति। तथा कश्चित् केनचित् पृष्टो दक्षिणापथं प्रविश्य त्वयेदं कार्य्यं कृतमिति। स एवाह नाहं दक्षिणापथं प्रविवेशेति। अत्रापि विद्यते ऽत्यन्तापह्नवः। तथाहि न केवलं दक्षिणापथविषयं कार्य्यं प्रतिषिध्यते ऽपितु प्रवेशनमपि।

११६। हशश्वतोर्लङ् च।

११७। प्रश्ने चासन्नकाले।

प्रष्टव्यः प्रश्न इत्यनेन प्रश्नशब्दं कर्मसाधनं दर्शयति। करणसाधने हि पृच्छ्यतेऽनेनेति शब्दः प्रश्नशब्देनोच्यते। तथाच सति तस्योच्चार्य्यमाणत्वादात्मलाभस्य सर्वदैवासन्नकाल इत्यासन्नकालग्रहणमनर्थकं स्यात्। भावसाधनेऽप्यर्थान्तरवाचिभ्यो धातुभ्यो न स्यात्। अगच्छदिति। गम्लृ सृप्लृ गतौ। इषुगमियमाञ्छ इति (७।३।७७) छत्वम्। इयाजेति। लिट्यभ्यासस्योभयेषामिति (६।१।१७) संप्रसारणम्। जघानेति। कंसवधोऽत्र पृच्छ्यमानः। स चेदानीन्तनप्रयोक्तुरपेक्षया विप्रकृष्टकालः। पञ्चवर्षाभ्यन्तरमासन्नकाल इति नैयायिका वर्णयन्ति। पञ्चवर्षातीतस्तु विप्रकृष्ट इति भवति। कंसवधोऽत्र विप्रकृष्टकालः।

## ११८ । लट् स्मे ।

नड़ेन स्म पुराधीयत इति । इङोऽधिपूर्वाल्लट् । भावकर्मणोरित्या(१।३।१३)त्मनेपदम् । टेरेत्वम् । सार्व्वधातुके यक् । अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः । उपसर्गेण सहाकः सवर्णे दीर्घत्वम् (६।१।१०१) । अथवा कर्त्तर्य्यात्मनेपदम् । अदादित्वाच्छपो लुक् । आत्मनेपदेष्वनत (७।१।५) इत्यदादेशः । धातोरियङ् यथायोगं पूर्ववत् ।

## ११९ । अपरोक्षे च ।

ब्रवीतीति । ब्रूव ईट् (७।३।९३) । कथयतीति । कथ वाक्यप्रबन्धे । चुरादावदन्तः । तस्माण्णिच् । अतो लोपः (६।४।४८) । अचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावादत उपधाया इति (७।२।११६) वृद्धिर्न भवति । अथ किमर्थं पुनरिदमारब्धम् ? पूर्वेण परोक्षे विधानादपरोक्षे न प्राप्नोति । अतस्तत्रापि यथा स्यादित्येवमर्थम् । ननु च पूर्वयोगे परोक्षग्रहणं निवर्त्तिष्यते । तस्मिन् निवृत्ते पूर्वेणैव परोक्षे चापरोक्षे च भविष्यति । सत्यमेतत् । चोद्यमपि कश्चिद् विजानीयाद् यदि परोक्षग्रहणं निवृत्तं तत्सम्बद्धमनद्यतनग्रहणमपि निवृत्तमिति । तदन्यथा मा विज्ञायीति पूर्वसूत्रे परोक्षग्रहणमनुवर्त्तते । तस्मिंश्चानुवर्त्तमाने कर्त्तव्यमेतत् । अन्यथा ह्यपरोक्षे न स्यात् ।

## १२० । ननौ पृष्टप्रतिवचने ।

पृष्टप्रतिवचन इति । प्रश्नः पृष्टम् । भावे निष्ठा । पृष्टपूर्वकप्रतिवचनं पृष्टप्रतिवचनम् । शाकपार्थिवादित्वान्मध्यपदलोपी समासः । अनद्यतनपरोक्ष इति निवृत्तमिति । अस्वरितत्वात् । अकार्षीः कटं देवदत्त इत्येष प्रश्नः । ननु करोमि भो इत्येतत् प्रश्नपूर्वकं प्रतिवचनम् । अवोच स्तत्र किञ्चिद्देवदत्तेत्येष प्रश्नः । ननु ब्रवीमि भो इतेरतत् प्रश्नपूर्वकं प्रतिवचनम् । नन्वकार्षीदिति । प्रश्नपूर्वकं प्रतिवचनं न भवतीति लुङेव भवति । ननुच प्रतिवचनं सर्व्वं प्रश्नपूर्वकमेव । तदनर्थकं पृष्टग्रहणम् । व्यवच्छेद्याभावात् । नैतदिष्टम् ।

प्रतिवचनशब्दोऽयमस्त्येव पृष्टान्वाख्याने यः प्रश्नमन्तरेण न भवति । अस्त्यव्ययीभावे वचनं वचनं प्रति प्रतिवचनम् । यथार्थेऽव्ययमिति ( २।१।६ ) वीप्सायामव्ययीभावः । अस्ति समाधिवचनः । प्रतिपूर्वस्य वचेः समाधाविति दर्शनात् । तथाहि वक्तारो वदन्ति यदनेनाभिहितं तन्मया प्रत्युक्तमिति । परिष्कृतमित्यर्थः । तदेवमनेकार्थे प्रतिवचनशब्दः । यदि पृष्टग्रहणं न क्रियते सर्वेष्वर्थेषु स्यात् । अस्मिंस्तु क्रियमाणे प्रश्नपूर्वो यः प्रतिवचनशब्दः स एव गृह्यते । नान्य इति न भवत्यानर्थक्यम् ।

## १२१ । नन्वोर्विभाषा ।

नाकार्षमिति । पूर्ववदम्भावः ।

## १२२ । पुरि लुङ् चास्मे ।

पुराशब्द इति । एतेन पुराशब्द इहोपपदत्वेनोपात्तो न पूरिति दर्शयति । यद्येतदेवास्याकारान्तत्वात् पुरीति सप्तम्यन्तो निर्देशो नोपपद्यते । आतो धातोरिति ( ६।४।१४० ) योगविभागादाकारलोपाददोषः । अथ पृ पालनपूरणयोरित्यस्माद् भ्राजादिसूत्रेण (३।२।१७७) क्विपि विहित उदोष्ठ्यपूर्वस्ये त्युत्त्वे ( ७।१।१०२ ) रपरत्वे च कृते यः पूःशब्दः सम्पद्यते तस्येहाप्युपपदत्वेनोपादानमिति कस्मान्न विज्ञायते ? तस्यानद्यतनवृत्त्यसम्भवात् । पुराशब्दस्तु तत्रैव वर्त्तत इति तस्यैव ग्रहणं युक्तम् । लुङ् चेति चकारेण लड्नुकृष्यत इति दर्शयति । यथाविषयमिति । यथाऽसादृश्ये इति (२।१।७) वीप्सायामव्ययीभावः । अन्येऽपीति । लडादयः । वसन्तीति । लट् । अवात्सुरिति । लुङ् । सिजभ्यस्तविदिभ्यश्चेति ( ३।४।१०९ ) झेर्जुसादेशः । वदव्रजेत्यादिना ( ७।२।२ ) वृद्धिः । पूर्ववत् सकारस्य तत्वम् । अवसन्निति । लङ् । ऊषुरिति । लिट् । परस्मैपदानामित्यादिना (३।४।८२) झेर्जुस् । द्विर्वचनम् । वच्यादिसूत्रेण (६।१।१५) संप्रसारणम् । लिट्यभ्यासस्योभयेषा ( ६।१।१७ ) मित्यभ्यासस्य च । शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम् ।

१२३ । वर्त्तमाने लट् ।

प्रारब्धोऽपरिसमाप्तश्चेति । प्रारब्धो यः साधयितुं प्रस्तुतो न च समाप्तिमुपगतः स वर्त्तमान इत्युच्यते । वर्त्तमानग्रहणं धात्वधिकारात् तदर्थस्यैव विशेषणं विज्ञायत इत्याह वर्त्तमान इत्यादि । नह्यधात्वर्थे धातोर्वृत्तिः सम्भवति । लटष्टकारष्टित आत्मनेपदानां टेरेति (३।४।७९) विशेषणार्थः । अकारो विदो लटो वेति (३।४।८३) विशेषणार्थः । इकारे ह्युच्चारिते लिडादीनां ग्रहणं स्यात् ।

१२४ । लटः शतृशानचावप्रथमासमानाधिकरणे ।

शतृशानचोः शकारौ सार्वधातुकार्थौ । ऋकार उगित्कार्य्यार्थः । अप्रथमासमानाधिकरण इति । पर्य्युदासोऽयम् ! प्रथमाशब्दोऽयं विभक्तिविशेषे सौरौजसप्पर्य्यन्ते शास्त्रे रूढः । प्रथमाया अन्या द्वितीयादिका विभक्तिरप्रथमा । समानशब्दोऽयं साधारणवचनो यथा देवदत्तयज्ञदत्तौ समानधनाविति । अधिकरणशब्दोऽयमभिधेयवचनः । समानञ्च तदधिकरणञ्चेति कर्म्मधारयः । अप्रथमया समानाधिकरणमप्रथमासमानाधिकरणम् । तृतीयेति (२।१।३०) योगविभागात् समासः । ततो यस्य च भावेन भावलक्षणमिति (२।३।३७) सप्तमी । अप्रथमासमानाधिकरणभावेन शतृशानचोर्भावो लक्ष्यते । अप्रथमेति पर्य्युदासवृत्त्या द्वितीयादेर्विभक्तेर्ग्रहणम् । तेन प्रत्ययग्रहणपरिभाषया तदन्तविधिर्भविष्यतीत्याह अप्रथमान्तेन चेत्यादि । तस्येति । लटः । सामानाधिकरण्यमिति । समानाभिधेयमिति । यदि द्वितीयान्तेन शब्देन सामानाधिकरण्यं समानाभिधेयत्वं सम्भवत्येवं शतृशानचौ भवतः । नान्यथेति वाक्यार्थः । एवं विवृण्वताऽप्रथमासमानाधिकरणेऽत्र पर्य्युदास आश्रितः । न प्रसज्यप्रतिषेध इति दर्शयते । अन्यथा हि यदि प्रसज्यप्रतिषेध आश्रितः स्यात् प्रथमान्तेन चेत् सामानाधिकरण्यं न भवतीत्येवं ब्रूयात् । किं पुनः स्याद् यदि प्रसज्यप्रतिषेध आश्रितः ? प्रथमासामानाधिकरण उत्तरपदे शतृशानचौ न स्याताम् । भज्यत इति भक्तिः । कुर्वन् भक्तिरस्य कुर्व्वद्भक्तिः । कुर्वाणो भक्तिरस्य कुर्वाणभक्तिः । ये च प्रथमासमानाधिकरण-

त्ययस्तद्धिता स्तेषु न स्याताम्। प्रशंसायां रूपप् (५।३।६६)। कुर्वद्रूपम्। कुर्वाणरूपमिति। ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७)। कुर्वत्कल्पः। ननु पर्य्युदासेऽपि भवत्येष दोषः। नह्यत्राप्रथमान्तेन सामानाधिकरण्यमस्ति। नैष दोषः। वक्ष्यति ह्येतल् लडित्यनुवर्त्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम्। तेन क्वचित् प्रथमासमानाधिकरणेऽपि भवत इति। प्रसज्यप्रतिषेधे तु प्रतिषेधं विधाय प्रतिषिद्धस्य च पुनर्विधानमयुक्तम्। पचन्तं देवदत्तं पश्येति। द्वितीयान्तेन सामानाधिकरण्यं दर्शयति। पचतेति। तृतीयान्तेन। विभक्तेर्विपरिणामं कृत्वा देवदत्तेनेति सम्बन्धात्। ननु च लडादेशस्यात्राप्रथमान्तेन सामानाधिकरण्यम्। न लटः। तस्य प्रयोगाभावात्। आदेशधर्मस्य स्थानिन्युपचाराल् लटोऽप्युपचारितं सामानाधिकरण्यं भवतीत्यदोषः। अथ लड्ग्रहणं किमर्थम्? यावतानन्तरसूत्रेण लडित्यनुवर्त्तत एव। स्यादेतत्। प्रथमान्तञ्चैतत्। षष्ठीनिर्देशेन चेहार्थः। तस्मात् षष्ठीनिर्देशार्थं पुनर्लड्ग्रहणं कर्त्तव्यमिति। एतच्चायुक्तम्। प्रथमान्तस्यापि लड्ग्रहणस्यार्थाद् विभक्तिविपरिणामो भविष्यतीति षष्ठ्यन्तं विज्ञास्यत इत्यत आह लडिति वर्त्तमान इत्यादि। अप्रथमासमानाधिकरणे शतृशानचो र्विधानम्। ततोऽधिके ह्यधिकार्थे प्रथमासमानाधिकरणेऽपि क्वचित् तयोर्विधानं यथा स्यादित्येवमर्थं पुनर्लड्ग्रहणम्। तेन क्वचित् प्रथमासमानाधिकरणे भवतः कुर्वन् ब्राह्मणः सन् ब्राह्मण इति। अस भुवि। अदादित्वाच्छपो लुक्। श्नसोरल्लोप ( ६।४।१११ ) इत्यकारलोपः। विद्यमान इत्यादौ सर्वत्र ब्राह्मण इत्यपेक्ष्यते। विद सत्तायाम्। दिवादिरात्मनेपदी। श्यन्। जुह्वदिति। हु दाने। हुश्नुवोः सार्वधातुक इति (६।४।८७) यणादेशः। नाभ्यस्ताच्छतुरिति (७।१।७८) नुमागमाभावः। अधीयान इति। इङ् अध्ययने। अधिपूर्वः। पूर्ववदचिश्नुत्यादिने (६।४।७७) यङ्। माङ्याक्रोश इति। माङ्युपपद आक्रोशे गम्यमाने लटः शतृशानचौ भवतः। मा पचन्। मा पचमान इति। ननु चात्रैव माङि लुङा भवितव्यम्। एतस्मादेवाधिकविधानात्। पुनर्लड्ग्रहणादाक्रोशे न भवतीत्यदोषः। माङि लुङित्यस्य (३।३।११७) यत्राक्रोशो नास्ति सोऽवकाशः।

केचिद् विभाषाग्रहणमनुवर्त्तयन्तीति। सन् ब्राह्मणोऽस्ति ब्राह्मण इत्यादौ विकल्पेन शतृशानचौ यथा स्यातामित्येवमर्थम्। केचिदिति वचनात् केचिन्नानुवर्त्तयन्तीत्युक्तं भवति। तेषामयमभिप्रायः। यदि प्रथमासमानाधिकरणे नित्यं तौ भवतस्तदाऽप्रथमासमानाधिकरणग्रहणं न कुर्य्यात्। शतृशानचावित्येवं ब्रूयात्। तत्राप्ययमर्थः। सामान्येन प्रथमासमानाधिकरणेऽन्यत्र शतृशानचोर्विधानात् पुनर्ग्रहणं न कर्त्तव्यं भवति। तस्मादप्रथमासमानाधिकरणग्रहणसामर्थ्यादप्रथमासमानाधिकरण एव नित्यौ तौ भवतः। प्रथमासमानाधिकरणेष्वन्यथेति। यदि तर्हि विभाषाग्रहणमनुवर्त्तयन्ति यथा सन् ब्राह्मणोऽस्ति ब्राह्मणो विद्यमानो ब्राह्मण विद्यते ब्राह्मण इत्यादौ विकल्पो भवतस्तथा कुर्वद्भक्तिः कुर्वाणभक्तिरित्येवमादावपि स्यातामित्यत आह सा चेत्यादि। तत्रेति। व्यवस्थितविभाषायां सत्यां। यथादर्शनमिति। यथा लक्ष्यस्य दर्शनं तदनुरूपाः प्रयोगा उन्नेयाः। एतदुक्तं भवति लक्ष्यदर्शनवत् स्यात्। क्वचिन्नित्यं तौ शतृशानचौ वेदितव्यौ। क्वचित् पाक्षिकौ। क्वचिदविद्यमानाविति। तत्र कुर्वद्भक्तिः कुर्वाणभक्तिः कुर्वत्तरः कुर्वत्तम इत्यादौ नित्यम्। सन् ब्राह्मणोऽस्ति ब्राह्मण इत्यादौ पाक्षिकौ। तरप्तमबादिप्रत्यये परे तावविद्यमानावेव। पचतितरामिति। पचतिशब्दात् तिङश्चेति (५।३।५६) तरप्। किमेत्यादिनामि (५।४।११) क्ते न भवतः।

## १२५। संबोधने च।

प्रथमासमानाधिकरणार्थ आरम्भ इति। अवधारणमिह द्रष्टव्यम्। पूर्वयोगो ह्यप्रथमासमानाधिकरणार्थः क्वचित् प्रथमासमानाधिकरणार्थश्च। अयन्तु प्रथमासमानाधिकरणार्थ एव। यदि तर्हि पूर्वसूत्रं प्रथमासमानाधिकरणार्थमपि तर्ह्येवं सति तौ यथाऽन्यत्र प्रथमासमानाधिकरणेऽपि भवतस्तथा सम्बोधनेऽपि भविष्यत इत्यपार्थकम्। नापार्थकम्। तस्यैव प्रपञ्चार्थत्वात्। हे पचन्निति। न ङिसम्बुद्ध्योरिति (८।२।८) नलोपप्रतिषेधान्नलोपाभावः (D)। हे पचमान इति। एङ्ह्रस्वात् सम्बुद्धेरिति (६।१।६९) सुलोपः।

(D) संयोगान्तस्य लोप इति (८।२।२३) सलोपस्यासिद्धत्वान्नलोपाभाव इत्यन्ये।

## १२६। लक्षणहेत्वोः क्रियायाः।

धात्वर्थविशेषणञ्चैतदिति। धात्वधिकारात्। अथोपपदे कस्मान्न भवतः? क्रियाया इति वचनात्। यद्युपपदे स्यातां तदा क्रियाग्रहणमनर्थकं स्यात्। उपपदं हि धातोर्भवति। स च क्रियावचन इत्यन्तरेणापि क्रिया ग्रहणं लक्षणहेतू क्रियाविषयौ विज्ञास्येते। तत् क्रियाग्रहणेन धात्वर्थविशेषणत्वे हि तयोः क्वचिद् धात्वर्थो द्रव्यस्य हेतुर्भवति लक्षणं वा क्वचिद् गुणस्य क्वचिद् क्रियायाः। अतो द्रव्यादिनिवृत्त्यर्थं क्रियाग्रहणं युक्तम्। अतः क्रियाया इति वचनम्। क्रियाविषयाविति क्रियाया इत्येतद् विवरणम्। क्रिया विषयो ययो स्तौ तथोक्तौ। एतेन क्रियाया इति येयं षष्ठी सा सुब्व्यत्ययेन सप्तम्याः स्थाने विहितेति सूचयति। शयाना भुञ्जत इति। शीङोऽदादित्वाच्छपो लुक्। शीङः सार्वधातुक इति (७।४।२१) गुणः। अत्र शयनं लक्षणं भुजिः क्रियाविषयः। तेन हि भुजिक्रिया लक्ष्यते। तत्र शीङ् वर्त्तते। तिष्ठन्तोऽनुशासतीति। तिष्ठतेः पाघ्रादिसूत्रेण (७।३।७८) तिष्ठादेशः। अत्रावस्थानं लक्षणम्। तेनानुशासनक्रिया लक्ष्यते। अर्जयन् वसतीति। अर्ज प्रतियत्ने। चौरादिकः। अत्रार्जनं वासस्य हेतुः। अधीयानो वसतीति। अत्राध्ययनम्। पचति पठतीति। नात्र क्रियाया लक्ष्यलक्षणभावो विवक्षितः। यः कम्पते सोऽश्वत्थ इति। अत्र हि कम्पनं लक्षणं भवतीति। तेनाश्वत्थो लक्ष्यते। नतु क्रियाविषयम्। किं तर्हि? द्रव्यविषयम्। अश्वत्थस्य द्रव्यविषयत्वात्। यदुत्प्लवते तल्लघ्विति। अत्रोत्प्लवनेन लघुसंज्ञको गुणो लक्ष्यत इति गुणविषयं तत्। नतु क्रियाविषयम्। वर्षतीति धावति हन्तीति पलायत इत्यत्र यद्यपि वर्षणहननाभ्यां धावनपलायनक्रिये लक्ष्येते तथापि शतृशानचौ न भवतः। नन्वो विभाषेत्यतो (३।२।१२१) व्यवस्थित-विभाषेत्यनुवर्त्तते। इतिकरणेन हेतुभावस्य द्योतितत्वात्। पूर्वनिपात-लक्षणव्यभिचारलिङ्गमिति। द्वन्द्वे घीत्यनेन (२।२।३२) घ्यन्तस्य यः पूर्वनिपातः क्रियते तस्य व्यभिचारः। स्वविषये सत्यपि तस्य क्वचिदभावः। तस्य व्यभि-चारस्य लिङ्गमयं निर्देशः। यदि ह्यव्यभिचारी घ्यन्तस्य निपातः स्याद् हेतु-

लक्षणयोरिति निर्देशं कुर्य्यात् । व्यभिचारे तु सति धूमाग्नी इतेवमादय उपपन्ना भवन्ति ।

## १२७ । तौ सत् ।

ननु च प्रकृतत्वादेव शतृशानचोरियं संज्ञा स्यात् । तत् किं तौग्रहण-मित्याह तौग्रहणमित्यादि । उपाधिना विशेषणेनासंसर्गार्थं तौग्रहण-मित्यर्थः । उपाधिस्तु वर्त्तमानकालः । तत्र शतृशानचोर्विहितत्वात् । उपाध्यसंग्रहार्थं तौग्रहणे सति किं भवतीत्याह शतृशानज्मात्रस्येत्यादि । मात्रग्रहणमुपाधिसंग्रहव्यवच्छेदार्थम् । असति हि तौग्रहणे यादृशौ प्रकृतौ तादृशयोरेव संज्ञा स्यात् । कीदृशौ च तौ ? वर्त्तमानकालविहितौ । ततश्च लृडादेशयोर्भविष्यत्कालविहितयोः सदिति संज्ञा न स्यात् । ननु च लृटः सद्वेति (३।३।१४) सच्छब्देन तौ विधीयेते । ततो वचनसामर्थ्यात् तु भवि-ष्यतः । न ब्रूमो विधानं तयो र्न सिध्यतीति । किं तर्हि ? विहितयोरुत्तर-कालसंज्ञा न सिध्यति । ततश्च ब्राह्मणस्य करिष्यन् ब्राह्मणस्य करिष्यमाण इत्यत्र पूरणगुणेत्यादिना (२।२।११) षष्ठीसमासप्रतिषेधो न स्यात् । सद्ग्रहणन्तु सच्छब्देनैव वर्त्तमानशतृशानजन्ते षष्ठीसमासप्रतिषेधार्थं स्यात् । तौग्रहणे शतृशानचोर्विशेषणमनपेक्ष्य रूपमात्रे संज्ञाऽख्यायत इति वर्त्तमानकाले विधानासंसक्तयोरपि संज्ञा सिध्यतीति ।

## १२८ । पूङ्यजोः शानन् ।

वर्त्तमानविहिताः शतृशानच्प्रभृतयः । एते लादेशा वा स्युः प्रत्यया वा ? तत्र यदि इमं लट इत्यनुवर्त्तते तदा लादेशाः । अथ नानुवर्त्तते ततः प्रत्ययाः । तस्यादेशाः क्रियेरं स्तदा नन्वोर्विभाषेत्यतो (३।२।१२१) विभाषाग्रहणमनु-वर्त्तयितव्यं जायेत । अन्यथा पवते देवदत्तो यजते देवदत्त इति तिङ्श्रवणं कुर्य्यात् । प्रत्ययपक्षे तु वासरूपविधिना यदा लड् भवति तदा प्रत्ययश्रवणं तिङ्श्रवणमुपपद्यते । किञ्चादेशपक्षे लः कर्मणि च भावे चाकर्म्मकेभ्य इति (३।४।६८) भावकर्मणोरपि शानन्नादयः स्युः । कर्त्तर्य्येव चेष्यन्ते । प्रत्ययपक्षे तु कर्त्तरि कृदिति (३।४।६७) कर्त्तर्य्येव भवन्ति । न भावकर्मणोः । इह कतीह-

मण्डयमाना इत्युत्तरसूत्रे चानशि कृते तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुक-मनुदात्तमह्न्विङोरिति (६।१।१८६) निघातः स्यात्। प्रत्ययपक्षे तु न भवति। अलसार्वधातुकत्वात्। चानशो लः परस्मैपदम् (१।४।९९)। तङानावात्मनेपदमित्यात्मनेपदसंज्ञा (१।४।१००) प्रसज्येत। ततश्चात्मनेपदिभ्य एव स्यात्। कर्तीह निघ्नाना इति। प्रत्ययपक्षे त्वलादेशान्न भवत्यात्मनेपद-संज्ञाप्रसङ्गः। तदेवमादेशपक्षे बहवो दोषाः प्रतिविधेयाः। प्रति-विधानेऽपि तेषां प्रतिपत्तिगौरवं भवतीति मत्वा प्रत्ययपक्षमाश्रित्याह शानन्प्रत्ययो भवतीति। शकारः सार्वधातुकसंज्ञार्थः। पवमान इति। पूङ् पवने। शप्। आने मुक् (७।२।८२)। यदौत्यादि। न लोकाव्ययेत्यादौ (२।३।६९) तृन्निति तृणएव प्रत्ययस्य निर्देश इति मन्यमानस्य प्रश्नः। तृन्निति प्रत्याहारनिर्देशादिति। सोमं पवमानो नड़माघ्नान इति। षष्ठीप्रतिषेध इत्यनेन सम्बन्धनीयम्। यदि तृन्निति प्रत्ययग्रहणं स्यात् तदा शानन्प्रभृतीनां प्रत्ययार्थे सति सोमं पवमान इत्यादौ षष्ठीप्रतिषेधो न स्यात्। नच तृन्निति प्रत्ययस्य ग्रहणम्। किं तर्हि? प्रत्याहारस्य। तत्र च शानन्नादयोऽन्तर्भूता इति भवत्येव षष्ठीप्रतिषेधः। द्विषः शतुर्वा वचनमिति। द्विषोऽमित्र इत्यनेन (३।२।१३१) यः शता विधीयते तस्य प्रत्याहारेऽस्मिन्नन्तर्भावात् तद्योगे षष्ठीप्रतिषेधः स्यात्। ततश्चौरस्य द्विषन्निति पक्षे षष्ठी न स्यात्। तस्माद् द्विष अप्रीतावित्यस्य शत्रन्तस्य प्रयोगे द्वितीयायां प्राप्तायां वा षष्ठी वक्तव्या।

## १२९। ताच्छील्यवयोवचनशक्तिषु चानश्।

मण्डयमाना इति। मडि भूषायाम्। इदित्वान्नुम्। हेतुमण्णिच्। भूषयमाना इति। भूष अलङ्कारे। चुरादिणिच्। कवचं पर्य्यस्यमाना इति। दिवादित्वाच्छ्यन्। तदेव वयो गम्यते यत्र स्थिताः कवचं पर्य्यस्यन्ते। कवचं सन्नाहम्। शिखण्डं वहमाना इति। अत्रापि तथाविधं वयो गम्यते यत्र वर्त्तमानाः शिखण्डं वहन्ति। शिखण्ड चूड़ा। वचनग्रहणं वैचित्र्यार्थम्। विनापि हि तेन वयसि गम्यमाने प्रत्ययो लभ्यत एव यथाच वयसि चेत्यत्र (३।२।१०)। निघ्नाना इति। हननशक्तिरिति गम्यते।

१३० । इङ्धार्य्योः शत्रकृच्छ्रिणि ।

अकृच्छ्रिणि कर्त्तरीति । एतेनाकृच्छ्रिणीति प्रत्ययार्थस्य कर्त्तुरेतद् विशेषणमिति दर्शयति । अकृच्छ्रः सुखसाध्यो यस्य धात्वर्थः सोऽकृच्छ्रीति । अत इनिठनाविती नि: (५।२।११५) । अधीयन्निति । पूर्ववदियङ् । धारयन्निति । धृङ् अवस्थाने । चुरादिणिच् ।

१३१ । द्विषोऽमित्रे ।

अमित्रः शत्रुरिति । शत्रावेवामित्रशब्दस्य रूढ़त्वात् । द्वेष्टीति । अदादित्वाच्छपो लुक् ।

१३२ । सुञो यज्ञसंयोगे ।

यज्ञसंयोग इति । कर्मसाधनः संयोगशब्दः । अतएव वृत्तावाह यज्ञ-संयुक्तोऽभिषव इति । संयुक्तः सम्बद्धः । यज्ञेन संयुक्तो यज्ञसंयुक्तः । कदा चाभिषवो यज्ञसंयुक्तो भवति ? यदा यज्ञाङ्गं भवति । सुन्वन्त इत्यादि । स्वादिभ्यः श्नुः (३।१।७३) । सर्वे यजमाना इति । सुन्वन्त इत्यनेन यजमानाः सत्रिणो यज्ञस्य ये स्वामिनस्तेऽभिधीयन्ते नतु याज्ञिका इति दर्शयति । कथं पुनरेषोऽर्थो लभ्यते ? यावता यथाभिषवस्य यजमानाः कर्त्तारस्तथा याजका अपीत्याह संयोगग्रहणमित्यादि । इह सुञो यज्ञ इत्येतद् वेदितव्यम् । एवमपि ह्युच्यमाने यज्ञसंयुक्तताभिषवस्य लभ्यत एव । यज्ञविषयश्चैष सुनोत्यर्थो भवतीत्यर्थस्य प्रतिपत्तेः । तस्मात् संयोगग्रहणमिति न कर्त्तव्यमेतत् । क्रियते प्रधानकर्त्तृप्रतिपत्त्यर्थम् । यागस्य ये कर्त्तारो भूत्वा फलं प्राप्नुवन्तः सुन्वन्तस्ते प्रधानकर्त्तारः । ते पुनर्यजमानाः । न याजकाः ।

१३३ । अर्हः प्रशंसायाम् ।

१३४ । आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ।

तच्छीलादिषु कर्त्तृष्विति । अनेन तच्छीलादीनां प्रत्ययार्थविशेषणतां दर्शयति । अभिविधौ चायमाङिति । अभिविधिरभिव्याप्तिः । अत्राङ्

न मर्य्यादायाम्। तेन वक्ष्यमाणस्य क्विपोऽप्ययमर्थनिर्देश इति। सोऽपि तच्छीलादिष्वेव भवति। तदित्यादि। धातोरिति वर्त्तते। न च धातोः शीलादिविशेषणमुपपद्यते। तस्मात् तस्य योऽर्थः स शीलादीनां त्रयाणां विशेषणभावेन तच्छीलादिशब्देन निर्दिश्यते। स धात्वर्थः शीलं यस्य स तच्छीलः। स एव धर्मो यस्य स तद्धर्मा। साधु करोतीति साधुकारी। तस्य धात्वर्थस्य साधुकारीति यावत्। स्वभावत इति। भवत्यस्मात् फलनिरपेक्षा प्रवृत्तिरिति भावः। स्वभावश्चैतनिको धर्म्मः। स पुनः शीलमेव। फलनिरपेक्ष इति फलाकाङ्क्षारहितः। तत्रेति। धात्वर्थे। तदाचार इति। धर्म्मशब्दोऽत्राचारे वर्त्तत इति दर्शयति। स धात्वर्थ आचारो यस्य स तथोक्तः। विनापि शीलेनेति। तच्छीलात् तदाचारस्यान्यथात्वं दर्शयति। यो धात्वर्थं साधु करोतीति। अत्रापि विना शीलेनेति सम्बध्यते। साध्विति। प्रशस्तमित्यर्थः। क्रियाविशेषणत्वान्नपुंसकत्वम्।

## १३५। तृन्।

मुण्डयितार इति। मुण्डं कुर्वन्तीति मुण्डमिश्रेत्यादिना (३।१।२१) णिच्। इष्ठवद्भावेन टिलोपः। वधूमूढां आविष्ठायना मुण्डयन्तीत्येतेषां कुलधर्म्मः। आद्धरकाः श्राद्धे सिद्धेऽन्नमपहरन्तीत्येतेषामाचारः। यः कटं साधु करोतीति स कर्त्ता कटमिति। खेटं यो लीलया गच्छति स साधु गच्छति। तृन्विधावित्यादि। अताच्छील्यार्थ आरम्भः। अस्मिंस्तृन्विधावनुपसर्गस्य धातोस्तृन् वक्तव्य ऋत्विक्ष्वभिधेयेषु। होतेति। हु दाने। पोतेति। पूङ् पवने। उद्गातेति। कै गै शब्दे। स्वरे विशेष इति। तृचि सति गतिकारकोपपदात् कृदिति (६।२।१३९) प्रकृतिस्वरेणान्तोदात्तत्वं भवति। तृणि तु सति गतिरनन्तर (६।२।४९) इत्यनुवर्त्तमाने तादौ च निति कृत्यताविति (६।२।५०) पूर्वपदस्य प्रकृतिस्वरः प्रसज्येत। नयतेः षुक् चेति। कृते गुणे षुगागमो वेदितव्यः। अन्यथा ह्यलघूपधत्वाद् गुणो न स्यात्। गुणोऽपि वा वक्तव्यः। अत्र ऋत्विगिति वर्त्तते। अयमप्यताच्छील्यार्थ

आरम्भः। त्विषेरित्यादि। त्विष दीप्तावितस्मात् देवतायामभिधेयायां तृन् वक्तव्यः। अकारश्चोपधाया आदेशो भवति। अनिट्त्वञ्चेति। एतस्य सर्वशेषत्वे (E) चास्य पोतेत्यत्रानिट्त्वम् सिद्धं भवति। चदेरित्यादि। चद इति सौत्रो धातुः। गुध्रवीपचिवचियमिसदिक्षदिभ्यः त्र (उण्, ४।६०६) इत्याद्युणादिसूत्रपाठात्। अस्मान्नियुक्तोऽधिकृते वाच्ये तृन् वक्तव्यः। अनिट्त्वञ्च। क्वचिदिति। द्वारि रथे वा। छन्दसि तृचेति। चकारात् तृंश्च। स्वरे विशेष इति। तृच्यन्तोदात्तत्वम् भवति। तृणि तु सत्याद्युदात्तत्वम्। उणादिषु निपातितत्वाद् होत्रादय इति सिद्धम्। तत्र हि नप्तृनेष्टृत्वष्टृक्षत्तृपोतृहोतृभ्रातृजामातृमातृपितृदुहितृइत्येते (उण्, २।२५२) निपातिताः।

१३६। अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्।

अलम्पूर्वः करोतिः। पुनः स एव निराङ्पूर्वः। जनी प्रादुर्भावे। प्रपूर्वः। पच व्यक्तीकरणे। पद गतौ। पतिमन्ये पठन्ति। शल हुल पत्लृ गतौ। मदी तृप्तिसाधने। एते पदादय उत्पूर्वाः। रुच दीप्तौ। त्रपूष् लज्जायामपपूर्वः। वृतु वर्त्तने। वृधु वृद्धौ। षह मर्षणे। चर-गत्यर्थः। एभ्य इष्णुज् भवति। तृणोऽपवादः। यदात्वलम्पूर्वः करोतिर्मण्डने वर्त्तते तदा क्रुधमण्डार्थेभ्यश्चेति (३।२।१५१) युच् प्राप्नोति। पूर्वविप्रतिषेधश्च वक्तव्यः। अन्यथा मण्डनादन्यत्र सावकाशमिष्णुचं परत्वाद् बाधते। येऽत्र सोपसर्गाः पठ्यन्ते तेभ्य एतदुपसर्गपूर्वेभ्य एव भवति। अन्येभ्यस्त्वनियमेन।

१३७। णेश्छन्दसि।

धारयिष्णवः पारयिष्णव इति। धृङ् अवस्थाने। पॄ पालनपूरणयोः। हेतुमण्णिच्। अयामन्तेत्यादिनायादेशः (६।४।५५)।

(E) एतस्यानिट्त्वञ्चेत्यंशस्य सर्वशेषत्वे सर्वेषामुपसंख्यानानामस्मिन् सूत्रे निबद्धानां शेषत्वेऽस्य त्विषिः स्वत एवानिट्त्वात् पोतेत्यत्रानिट्त्वमित्यर्थः।

## १३८ । भुवश्च ।

योगविभाग उत्तरार्थ इति । उत्तरसूत्रे भवतेरेवानुवर्त्तनं यथा स्यात् । अन्यथा यदि णिभूभ्याश्चेत्येको योगः क्रियेत तदा णिग्रहणमप्यनुवर्त्त्येत । भ्राजिष्णुरित्यादि । लौकिकप्रयोगः । तस्योपन्यासो भाषायामपि भ्राजृ दीप्तावित्येतस्मादिष्णुच्प्रदर्शनार्थः ।

## १३९ । ग्लाजिस्थश्च क्स्नुः ।

अथ स्थास्नुरित्यत्र घुमास्थागापेत्यादिसूत्रेण (६।४।६४) कस्मादीत्त्वं न भवतीत्याह गित्वायमित्यादि । ईत्वं क्ङिति । तत्र दीङो युड्चि क्ङितीत्यनुवृत्तेः (६।४।६३) । न चायं कित् । न चायं ङित् । किं तर्हि ? गित् । गकारस्य त्वश्रवणम् । चर्त्वभूतस्य निर्देशात् । यदि तर्हि गिदयं जिष्णुरित्यत्र गुणः प्राप्नोति । यस्मात् क्ङिति चेति (१।१।५) क्ङितिप्रत्यये गुणः प्रतिषिध्यते । न गितीत्यत आह क्ङिति चेत्यादि । नहि क्ङिति चेत्यत्र ( १।१।५ ) ककारङकारावेव निर्दिश्येते । किं तर्हि ? गकारोऽपि कृतचर्त्वः । तेन गित्यपि गुणो न भवति । भूष्णुरित्यत्र तर्हि श्र्युकः किती‌ट्प्रतिषेध (७।२।११) उच्यमानो गिति न स्यादित्यत आह श्र्युकः क्कितीत्यादिना गकारश्चर्त्वभूतो निर्दिश्यत इति प्रकृतेन सम्बन्धः । तेनेति । गकारस्य चर्त्वभूतस्य निर्देशेनेति । क्स्नोरित्त्वादित्यादि । गकार इत्संज्ञको यस्य स गित् । तद्भावो गित्त्वम् । तस्माद् गित्त्वात्र स्थास्नुरित्यत्रेकारः । तिष्ठतेरीकारो न भवति । कस्मात् पुनर्गित्त्वादीकारो न भवतीत्याह कङितोरीत्वशासनादित्यादि । ककारेऽकार उच्चारणार्थः(F) । यस्मात् क्ङितीत्वमुच्यते । अयन्तु गित् । तस्मात् क्ङिति विधीयमानमीत्वं गित्त्वादिह न प्राप्नोति । यद्येवं जिष्णुरित्यत्र गुणः प्राप्नोतीत्यत आह गुणाभाव इत्यादि । त्रिषु ककारगकारङकारेष्वित्संज्ञकेषु यो गुणप्रतिषेधः स स्मर्त्तव्यो ज्ञातव्यः । क्ङिति चेत्यत्र (१।१।५) गकारश्चर्त्वभूतो निर्दिष्टः । यदि तर्हि गिदयं भूष्णुरित्यत्र श्र्युकः किती‌ट्प्रतिषेधो (७।२।११) न स्यादित्यत आह श्र्युकोऽनिट्त्वमित्यादि । गकारोऽपि तत्रश्चर्त्वभूतो निर्दिश्यते ।

(F) किन्ङितोरीत्वशासनादिति पाठान्तरम् । स एव च मुद्रितकाशिकापुस्तके लभ्यते ।

तेन ककारगकारयोर्द्वयोरपीत्संज्ञकयोः श्र्युकोऽनिट्त्वमिट्प्रतिषेधो भवतीति वेदितव्यम् । यदि गकारश्चर्त्वभूतः श्र्युकः कितीत्यत्र (७।२।११) निर्दिश्यते हृशि चेत्युत्वं (६।१।११४)प्राप्नोति । तस्यासिद्धत्वात् । सौत्रत्वान्निर्देशस्यासंहितया पाठान्न भविष्यतीत्यदोषः । वामनस्य त्वेतत् सर्वमनभिमतम् । यथा नाभिमतं तथा क्ङिति चेत्यत्र (१।१।५) प्रतिपादितम् । दंशेरित्यादि ! उपसंख्यानशब्दः प्रतिपादने वर्त्तते । दन्श दंशन इत्येतस्मादपि क्नुप्रत्ययस्योपसंख्यानं प्रतिपादनं कर्त्तव्यम् । तत्रेदं प्रतिपादनम् । पूर्वसूत्राच्चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन दंशेरपि भविष्यतीति । दंच्णव इति । व्रश्चादिना (८।२।३६) षत्वम् । षढोः कः सीति (८।२।४१) कत्वम् । अनिदितामित्यनुनासिकलोपो (६।४।२४) न भवति । क्नोर्गित्त्वात् । ये तु कित्त्वमिच्छन्ति तैरिह नकारलोपप्रतिषेधो नाञ्चेः पूजायामित्यत्र (६।४।३०) नेति योगविभागेन कर्त्तव्यः । यत्नान्तरं वा तैरास्थेयम् । नकारस्यानुस्वारः । तस्य परसवर्णः ।

## १४० । त्रसिगृधिधृषिक्षिपेः क्नुः ।

त्रसी उद्वेगे । गृधु अभिकाङ्क्षायाम् । ञिधृषा प्रागल्भ्ये । क्षिप प्रेरणे । त्रस्नुरिति । नेड्वशिकृतीतीट्प्रतिषेधः ( ७।२।८ ) । गृध्नुरिति । क्ङिति चेति (१।१।५) गुणाभावः ।

## १४१ । शमित्यष्टाभ्यो घिनुण् ।

शमु उपशमे । तमु काङ्क्षायाम् । दमु उपरमे । श्रमु तपसि खेदे च । भ्रमु अनवस्थाने । क्षमु सहने । क्लमु ग्लानौ । मदी हर्षे । उक्तरत्र कुत्वार्थ इति । संपर्कीत्यादौ चजोः कुघिण्ण्यतोरिति (७।३।५२) यथा स्यात् । उकार उच्चारणार्थ इति । अनुबन्धत्वमस्य निरस्यति । अनुबन्धत्वे सति शमिनौ शमिन इत्युगिदचामिति ( ७।१।७० ) नुम् प्रसज्येत । इह शमिनितरां शमिनितमामिति नद्याः शेषस्यान्यतरस्यामिति (६।३।४४) वर्त्तमान उगितश्चेत्यन्यतरस्यां (६।३।४५) ह्रस्वत्वं स्यात् । अन्यथा ह्यस्यानुबन्धकरणमनर्थकं स्यात् । तस्मादुच्चारणार्थ एवोकारो भवति । ह्रस्वत्वञ्च घरूपकल्पचेलड्ब्रुव-

गोत्वमतश्चतेष्वितयनेन (६।७।४३) नित्यं भवति। गमोति। अत उपधाया इति (७।२।११६) वृद्धिर्न भवति। नोदात्तोपदेशेत्यादिना (७।३ ३४)। प्रतिषिद्धत्वात्। सौ चेति (६।४।१३) दीर्घः। असु क्षेपणे। असितेति। लुणि भवति।

## १४२। संपृचानुरोधाङ्यमाङ्यसपरिसृसंसृजपरिदेवि-संज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजा-क्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च।

पृची संपर्के। संपूर्वः। रुधिर् आवरणे। अनुपूर्वः। यम उपरमे। यसु प्रयत्ने। आङ्पूर्वः। सृज विसर्गे। ज्वर रोगे। संपूर्वः। क्षिप प्रेरणे। रट परिभाषणे। वद व्यक्तायां वाचि। दह भस्मीकरणे। मुह-वैचित्त्ये। परिपूर्वः। दुष वैकृत्ये। द्विष अप्रीतौ। द्रुह जिघांसायाम्। दुह प्रपूरणे। क्रीडृ विहारे। आङ्पूर्वः। विजिर् पृथग्भावे। विपूर्वः। त्यज वयोहानौ। रञ्ज रागे। भज सेवायाम्। चर गत्यर्थः। अतिपूर्वः। स एवानुपूर्वः। मुष स्तेये। आङ्पूर्वः। हन हिंसागत्योः। अभ्याङ्पूर्वः। शेषा वृत्तावेव निर्दिष्टाः। नत्वदादिरिति। गृह्यत इति सम्बध्यते। आदादिकः कस्मान्न गृह्यत इत्याह लुग्विकरणत्वादिति। लुग्विकरणालुगविकरणयोरलुग्विकरणस्यैव ग्रहणं (प, ८१) युक्तम्। आदादिकस्तु लुग्विकरणः। तस्मात् स न गृह्यते। परिदेविर्भ्वादिरिति। गृह्यत इति सम्बन्धः। अथ परिदिवेः क्रीडाद्यर्थस्य ण्यन्तस्य ग्रहणं कस्मान्न भवति। अण्यन्तैरितरैः साहचर्य्यात्। सामान्येन गृह्यत इति। विशेषाभावात्। द्वयोरपि ग्रहणमिति। तत एव हेतोः। निपातनादनुनासिकलोप इति। त्यजरजेति सूत्रे निरनुनासिकस्योच्चारणमेव निपातनम्। सम्पर्कीति। लघूपधगुणः। आयामीति। अत उपधाया इति (७।२।११६) वृद्धिः। परिसारीति। अचोञ्णितीति (७।२।११५) वृद्धिः। अभ्याघातीति। पूर्ववद् घत्वतत्वे।

१४३। वौ कषलसकत्थस्रम्भः ।

१४४। अपे च लषः ।

१४५। प्रे लपसृद्रुमथवदवसः ।

प्रलापी प्रसारीति । लप व्यक्तायां वाचि । सृ गतौ । प्रद्रावी प्रमाथीति । दु द्रु गतौ । मथ विलोडने । नाच्छादनार्थस्येति । न वस आच्छादन इत्येतस्य ।

१४६। निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ।

निदि कुत्सायाम् । अर्द हिसि हिंसायाम् । खादृ भक्षणे । णश अदर्शने । विपूर्वः । हेतुमण्णयन्तः । क्षिपिः पूर्वोक्त एव । एवं रटिर्वदिः परिपूर्वौ हेतुमण्ण्यन्तः । भाष व्यक्तायां वाचि व्याङ्पूर्वः । असूय इति कण्ड्वादियगन्तस्य ग्रहणम् । अत्र क्लिशिरुपतापार्थस्य भाषतेश्चानुदात्तेतश्च हलादेरिति (३।२।१४९) युचि प्राप्ते वुञ्विधानम् । शेषेभ्यस्तु तृणि । ननु परश्चेति (३।१।२) दिग्योगलक्षणया पञ्चम्या भवितव्यं यथा वृत्तौ निन्दादिभ्यो धातुभ्य इति । तत् कथं सूत्रे प्रथमेत्यत आह पञ्चम्यर्थे प्रथमेति । व्यत्ययो बहुलमिति(३।१।८५)सुब्व्यत्ययेनेति भावः । समाहारद्वन्द्वाच्च प्रथमैकवचनम् । पुंलिङ्गं तु व्यत्ययेन । असूयक इति । अतो लोप (६।४।४८) इत्यकारलोपः । अथ किमर्थं निन्दादिभ्यो धातुभ्यो वुञ् विधीयते । यावता वासरूपविधिनैव निन्दकादयः सिद्धाः । तदेव हि रूपम् । स एव स्वरः । इहैवैकत्र स्वरविशेषोऽस्त्यसूयक इति । अत्र वुञि सति ञित्वादादेरुदात्तत्वं भवति । ण्वुलि तु सति लित्प्रत्ययात् पूर्वस्य स्यात् । तस्मादसूयतेरेवैकस्माद् वुञ् विधातव्यः । नेतरेभ्यो निन्दादिभ्य इत्यत आह ण्वुलैव सिद्ध इत्यादि । यदि तच्छीलादिषु वासरूपविधिना तृजादयोऽपि स्युर्निन्दादिभ्यो वुञ् न विदध्यात् । विहितश्चासौ । अतएव वुञ्विधानं ज्ञापयति तच्छीलादिषु वासरूपविधिर्नास्तीति । तेनालंकारको निराकर्त्तेत्यादीनां तच्छीलादिषु साधुत्वं न भवति ।

## १४७। देविक्रुशोश्चोपसर्गे।

आदेवक इति। दिवेः क्रीडाद्यर्थाद् ण्यन्ताद्वुञ्। आक्रोशक इति। क्रुश आह्वाने। क्रोष्टेति। व्रश्चादिना (८।२।३६) षत्वम्।

## १४८। चलनशब्दार्थादकर्मकाद् युच्।

चलनं देशान्तरप्राप्तिहेतुः क्रियाविशेषः। शब्दः श्रोत्रविषयोऽर्थः। चलनश्चोपन इति। चल कम्पने। चुप मन्दायां गतौ। शब्दन इति। शब्द शब्दने। उपसर्गाविष्कारे चेति चौरादिकः। अथवा प्रातिपदिकाद्धात्वर्थे बहुलमित्यादिना (ग,२०३) णिच्। शब्दवैरकलहेत्यादिना(३।१।१७)णिजन्ताद् युच्। रवण इति। रु शब्दे।

## १४९। अनुदात्तेतश्च हलादेः।

एधितेति। एध वृद्धौ। जुगुप्सनो मीमांसन इति। गुप्तिज्किद्भ्यः सन् (३।१।५)। मानबधेत्यादिना (३।१।६) सनि दीर्घे च कृते भवतः। अत्र तदन्तौ समुदायावनुदात्तेतौ। अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति। तथाच यद्यादिग्रहणं न क्रियते तदा ताभ्यां न स्यात्। यस्मादसत्यादिग्रहणे हला तु तदन्तविधिर्विज्ञायतेऽनुदात्तेतो हलन्तादिति। न च जुगुप्समीमांसशब्दौ हलन्तौ। किं तर्हि? अजन्तौ। आदिग्रहणे सत्यहलन्तेभ्योऽपि भवतीत्यादिग्रहणं कर्त्तव्यम्। तच्च तदा कर्त्तव्यं यदातो लोप आर्धधातुके परतो भवतीत्ययं पक्षः। ननु यदार्धधातुके विषयभूत इत्येष पक्षः। तदा ह्यार्धधातुकविवक्षायां प्रागेव प्रत्ययोत्पत्तेरलोपे कृते जुगुप्समीमांसशब्दावपि हलन्तौ भवतः। तत्रानुदात्तेतोऽजन्तस्याभावात् तदन्तविधौ विज्ञायमाने हलन्तग्रहणमनर्थकं स्यात्। व्यावर्त्याभावात्। तस्माद् हल्ग्रहणसामर्थ्यादादेर्विशेषणं विज्ञास्यत इत्यादिग्रहणं न कर्त्तव्यमेव। अत्रादिग्रहणं विस्पष्टार्थमेव व्याख्येयम्। वसितेति। वस आच्छादने।

## १५०। जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः।

जवन इति। जु सौत्रो धातुर्गतौ वर्त्तत इत्येके। विशेषहेतौ वेग इत्यपरे।

चंक्रमणो दन्द्रमण इति । क्रमु पादविक्षेपे । द्रम हम्म गतौ । नित्यं कौटिल्ये गताविति (३।१।२३) यङ् । द्विर्वचनम् । नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुक् । अतो लोप (६।४।४८) इत्यकारलोपः । यस्य हल इति (६।४।४९) यकारलोपः । ज्वलनः शोचन इति । ज्वल ह्वल सञ्चलने । शुच शोके । ननु चात्र जुचंक्रम्यदन्द्रम्यप्रभृतय श्चलनार्थाः । पदिस्त्वनुदात्तेत् । हलादिश्च । तस्मादेतेभ्यो यथायोगं पूर्वयोगाभ्यां युच् सिद्धः । ततः किमर्थमिह ग्रहण-मित्याह चलनार्थानामित्यादि । असति तेषां ग्रहण इह चंक्रमणो ग्रामस्ये-त्येवमादौ न स्यात् । ग्रामादेः कर्मणो विवक्षितत्वात् । तस्मात् सकर्म-केभ्यो यथा स्यादित्येवमर्थमेषां ग्रहणम् । ज्ञापकार्थमित्यादिना मतान्तरं दर्शयति । अलंकृञस्तृन्न भवतीति । अनेनापि ज्ञापकस्य प्रयोजनम् । अलंकर्त्तेति साधुर्न भवतीत्यध्याहार्य्यम् । कथं पुनः पदिग्रहणं ज्ञापक-मित्याह तथाह्येत्यादि । विशेषविहितेनोकञा बाधा मा भूत् समावेश एव यथा स्यादित्येवमर्थमिह पदिग्रहणं क्रियते । यदि ताच्छीलिके वासरूप-विधिः स्यात् ततोऽसरूपत्वादेवोकञा समावेशः स्यादिति पदे युज्विधान-मनर्थकं स्यात् । तस्माज् ज्ञापनार्थमेवैतद् विशेषविहितत्वम् । अनुदात्तेतश्च हलादेरिति (३।२।१४९) सामान्यलक्षणेन विहितत्वात् । यदि तर्हि वासरूप-विधेरभावो ज्ञाप्यते गन्तेति न सिध्येत् । गमेर्लषपतपदेत्यादिना (३।२।१५४) बाधकस्योकञो विधानात् । विकत्थन इति चानुदात्तेतश्च हलादेरिति (३।२।१४९) युज् न सिध्यति । वौ कषेत्यादिना (३।२।१४३) घिनुणो विधाना-दित्यत आह प्रायिकश्चेत्यादि । प्रायिकत्वञ्चोत्तरसूत्रे प्रतिपादयिष्यते ।

## १५१ । क्रुधमण्डार्थेभ्यश्च ।

तृन्निति (३।२।१३५) तृणि प्राप्ते युज् विधीयते । इहोत्तरेऽपि प्रत्ययो यत्र विशेषो न विवक्ष्यते तत्र तृण एवापवादो वेदितव्यः । रोषण इति । रुष रोषे ।

## १५२ । न यः ।

पूर्वेणेति । अनुदात्तेतश्च हलादेरित्यादिना (३।२।१४९) सिद्धत्वात् । अथाय वय रय णय गतावित्यस्माद्धातोर्युचो विधानार्थञ्चैतत् कस्मान्न विज्ञायते ?

अशक्यमेवं विज्ञातुम्। यस्मान्नयतेरनुदात्तेतश्चेत्यादिनैव (३।२।१४९) सिद्धत्वात्। तस्मात् प्रतिषेधार्थमिदम्। क्नूयिता क्ष्मायितेति। क्नूयी शब्दे उन्दे च। क्ष्मायी विधूनने।

## १५३। सूददीपदीक्षश्च।

षूद क्षरणे। दीपी दीप्तौ। दीक्ष मौण्ड्ये। ननु चेत्यादि देश्यम्। वासरूपेणेत्यादि परिहारः। स्यादेतत्। वासरूपविधिर्नास्तीति ज्ञापितमेतत्। ततो नास्ति युच्प्राप्तिरित्यत आह ताच्छीलकेत्यादि। प्रायिकत्वस्य चायमेव लिङ्गम्। यदि हि सर्वत्र वासरूपविधेरभावः स्यात् ततो विशेषविहितेनैव प्रत्ययेन बाधितत्वादेव युज् न भविष्यतीति प्रतिषेधोऽनर्थकः स्यात्। तथा चेत्यादिना ताच्छीलिकप्रत्ययेन समावेशं दर्शयन् प्रायिकत्वमेव ज्ञापकस्य द्रढ़यति। कम्रेति। नमिकम्पीत्यादिना (३।२।१६७) रप्रत्ययः। कमनेति। अनुदात्तेतश्च हलादेरिति (३।२।१४९) युच्प्रत्ययः। कम्प्रेति। कपि चलने। सूदेरित्यादि चोद्यम्। अनित्यमित्यादि परिहारः। योगविभागाद् विज्ञायत इति। अनित्यत्वे साधनं नयसूददीपदीक्षइत्येकयोगे कर्त्तव्ये यद् योगविभागं करोति तज् ज्ञापयति पूर्वस्मात् प्रतिषेधादस्य कश्चिद् विशेषोऽस्तीति। स पुनर्विशेषोऽनित्यत्वमेव। यद्यपि दीपदीक्षतिभ्यामपि युच् प्राप्नोत्यनभिधानान्न भवति।

## १५४। लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्।

उपस्थायुक इति। आतो युगित्यादिना (७।३।३३) युक्। प्रवर्षुक इति। वृषु मृषु सेचन इति। कामुक इति। कमु कान्तौ। नोदात्तोपदेशेत्यादिना (७।३।१४९) वृद्धिप्रतिषेधे प्राप्तेऽनाचमेरित्यत्र चमिकमिवमीनामिति वक्तव्यमिति (७।३।४४,वा) वृद्धिरेव भवति। शारुक इति। शॄ हिंसायाम्। अपपूर्वाल्लषेरपि च लष (३।२।१४४) इति घिनुण् भवति। उक्तं हि प्राक् ताच्छीलिकेषु समावेशः क्वचिद् भवतीति। पतिपदिभ्यां जुचंक्रम्येत्यादिना ( ३।२।१५० ) युजपि भवत्येव। तिष्ठतेरिति ग्लाजिस्थश्च क्स्नुरिति ( ३।२।१३९ ) वचनसामर्थ्यात्। गमेश्छन्दस्याङ्गमेत्यादिना (३।२।१७१) किकिनावपि भवतः।

भाषायामपि । भाषायां धाञ्कृशृस्तृजनिगमिनमिभ्य ( ३।२।१७१, वा ) इत्युपसंख्यानात् । कमेर्नमिकम्पीत्यादिना (३।२।१६७) रप्रत्ययः ।

## १५५ । जल्पभिक्षकुट्टलुण्टवृङः षाकन् ।

जप जल्प व्यक्तायां वाचि । भिक्ष याच्ञायाम् । कुट्ट च्छेदने । लुण्ट स्तेये । चौरादिकावेतौ । वृङ् संभक्तौ । जल्पेरकर्मकत्वविवक्षया चलनशब्दार्थाद-कर्मकाद् युजिति (३।२।१४८) युचि प्राप्ते । भिक्षेरप्यनुदात्तेतश्च हलादेरिति (३।२।१४९) युच्येव । कुट्टिलुण्टिभ्यां णिश्छन्दसीतीष्णुचि (३।२।१३७) । वृङोऽप्याट्टगमहनेत्यादिना (३।२।१७१) किकिनोः प्राप्तयोस्तदपवादः षाकन् विधीयते । वराकीति । षित्वान् ङीष् ।

## १५६ । प्रजोरिनिः ।

जुचंक्रम्येत्यादिना (३।३।१५०) युचि प्राप्त इनि विधीयते । इकारो नकारस्येत्संज्ञापरित्राणार्थः ।

## १५७ । जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ।

जि जये । दृङ् आदरे । श्रिञ् सेवायाम् । विपूर्वः । इण् गतौ । टुवम उद्गिरणे । व्यथ भयचलनयोः । नञ्पूर्वः । अम रोगे । अभिपूर्वः । षू प्रेरणे । प्रपूर्व इत्यस्य ग्रहणम् । न षूङ् प्राणिगर्भविमोचने षूङ् प्राणि-प्रसव इत्येतयोः । निरनुबन्धकपरिभाषयेति (प,८२) भावः । इण्जिभ्या-मित्यनेणनशजिसर्त्तिभ्यः क्वरबिति (३।२।१६३) वचनात् क्वरब् भवति ।

## १५८ । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ।

चुरादावदन्ताः पठ्यन्त इति । तेनातो लोपे कृतेऽचः परस्मिन् पूर्वविधौ स्थानिवद्भावाद् वृद्धिगुणौ न भवत इत्यभिप्रायः । एतेभ्य श्छन्दसि पूर्ववदिष्णु-चि प्राप्ते द्रातेर्धातेश्च किकिनोः प्राप्तयोरालुज् विधीयते । स्पृहयालुरिति । अयामन्तेत्यादिना (६।४।५५) ऽयादेशः । आलुचीत्यादि । शीङ् गृह्यते । येन तत्र शीङ्ग्रहणं तत् पुनर्व्याख्यानमित्येतदुक्तं भवति । तद् व्याख्यानं कर्त्तव्यं येनालुचि विधातव्ये शीङोऽपि ग्रहणं भवति । तत्रेदं व्याख्यानम् ।

पूर्वसूत्रादिह चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन शीङपि प्रकृतित्वेन गृह्यत इति।

१५९। दाधेट्सिशदसदो रुः।

डुदाञ् दाने। दो अवखण्डने। देङ् रक्षणे। त्रयाणामिह ग्रहणम्। गामादाग्रहणेष्वविशेष इति (प,११५) वचनात्। धेट् पाने। षिञ् बन्धने। शद्लृ शातने। षद्लृ विशरणगत्यवसादनेषु। अथ धारुर्वत्सो मातरमिति कथमत्र द्वितीया? यावता कर्त्तृकर्मणोः कृतीति (२।३।६५) षष्ठ्या भवितव्यमित्यत आह न लोकाव्ययनिष्ठेति (२।३।६९)। उकी य उकारस्तेन सहाकः सवर्णदीर्घत्वेन प्रश्लिष्टः। तेन तदन्तविधौ विज्ञायमान उकारान्तस्य प्रत्ययस्य प्रयोगे षष्ठी न भवति। तेन द्वितीयैव भवतीति न षष्ठी। नन्विह तर्हि कटं चिकीर्षुरिति प्रतिषेधो न स्यात्। उप्रत्ययस्यानुकारान्तत्वात्। घिनुणपि भवति। छन्दस्यृकारान्तत्वादादृगमहनेत्यादिना ( ३।२।१७१ ) किकिनावपि भवतः।

१६०। सृघस्यदः क्मरच्।

१६१। भञ्जभासमिदो घुरच्।

भञ्ज आमर्दने। भास दीप्तौ। ञिमिदा स्नेहनमोचनयोः। भङ्गुरमिति। चजोः कुघिण्ण्यतोरिति (७।३।५२) कुत्वम्। कर्मकर्त्तरि प्रत्यय इति। भज्यते स्वयमेवेत्यर्थः। कुतः पुनः कर्मकर्त्तरि प्रत्ययो लभ्यत इत्यत आह स्वभावादिति। प्रकृत्यैव प्रत्ययः कर्मकर्त्तारमभिधत्ते। न कर्त्तृमात्रम्। अतः कर्मकर्त्तर्य्येव।

१६२। विदिभिदिच्छिदेः कुरच्।

ज्ञानार्थस्य विदेर्ग्रहणमिति। विद ज्ञान इत्येतस्य। न लाभार्थस्येति। विद्लृ लाभ इत्येतस्य। अज्ञानार्थस्य विदेरुपलक्षणमेतत्। तेन सत्ताविचारणार्थौ यौ विदी तयोरपि ग्रहणं न भवत्येव। क्वचित्त्वनयोरादिशब्देनोपसंग्रहाय लाभार्थस्येति पाठः। कस्मात् पुनर्ज्ञानार्थस्य ग्रहणमित्याह स्वभावादिति। विदेरुत्पन्नेन प्रत्ययेन स्वभाव एव ज्ञानक्रियाया यः कर्त्ता

स एव प्रतीयते । नान्यः । तस्मात् स्नानार्थस्य ग्रहणम् । नान्यस्य । कर्मकर्त्तरि प्रत्यय इति । स्वयमेव च्छिद्यत इत्यर्थे । तत्र स्वभावादिति । पूर्वोक्त एव हेतुः ।

१६३ । इण्नशजिसर्त्तिभ्यः क्वरप् ।

इत्वर इति । ह्रस्वस्य पिति कृति तुक् ( ६।१।७१ ) । इत्वरीति । टिड्ढाणञित्यादिना (४।१।१५) ङीप् ।

१६४ । गत्वरश्च ।

१६५ । जागुरूकः ।

जागरूक इति । जागृ निद्राक्षये । वासरूपविधिना तृन्नपि । जागरितेति भवति ।

१६६ । यजजपदशां यङः ।

दंशेर्यद्यनिदितामित्यादिनानुनासिकलोपो ( ६।४।२४ ) लुप्तेऽपि यङि प्रत्ययलक्षणेन सिध्यति तथापि लाघवार्थं कृतानुनासिकलोपो द्रष्टव्यो निर्दिष्टः । यायजूक इति । यजेर्यङ् । दीर्घोऽकित (७।४।८३) इति दीर्घः । अतो लोप (६।४ ४८) इत्यकारलोपः । जञ्जपूको दन्दशूक इति । लुपसदेत्यादिना (३।१।२४) यङ् । जपजभेत्यादिना (७।४।८६) ऽभ्यासस्य नुक् ।

१६७ । नमिकम्पिस्म्यजसकमहिंसदीपो रः ।

नम प्रह्वत्वे शब्दे । कपि चलने । ष्मिङ् ईषद्धसने । कमु कान्तौ । हिसि हिंसि हिंसायाम् । दीपी दीप्तौ । कम्पेश्चलनार्थत्वात् कमिदीपि-भ्याञ्चानुदात्तेत्त्वाद् युचि प्राप्ते रो विधीयते । क्रियासातत्यमिति । क्रिय-माणानामविच्छेदेन प्रवृत्तिः क्रियासातत्यम् । तत्र स्वभाव एव प्रत्ययान्तो वर्त्तते ।

१६८ । सनाशंसभिक्ष उः ।

सन्प्रत्ययो गृह्यत इति । गुप्तिज्किद्भ्य ( ३।१।५ ) इत्यादिना यो विहितः । न सनिर्धातुरिति । षणु दाने । वन षण सम्भक्तौ इति न गृह्यते ।

एतच्च गर्गादिषु जिगीषुशब्दपाठाद् विज्ञायते । स हि प्रत्ययग्रहणे चोपपद्यते । नतु धातुग्रहणे । आङ् शासु इच्छायामित्यादि । एतदप्याङा सह निर्देशाद् विज्ञायते । इच्छार्थो ह्याङ्सहितः पठ्यते । न स्तुत्यर्थः । आशंसुः । भिक्षुरिति । अत्रानुदात्तेतश्च हलादेरिति (३।२।१४९) युचि प्राप्त उप्रत्ययस्य विधानम् ।

## १६९ । विन्दुरिच्छुः ।

विदेरिति । विद ज्ञाने । इतरेषां त्वनभिधानाद् निपातनसामर्थ्याद्वा ग्रहणं न भवति । इषेरिति । इषु इच्छायामित्येतस्य । इष गतावित्यादीनामिषीणां पूर्ववद् ग्रहणं न भवति । इच्छुरिति । छकारादेशो निपात्यते । छे चेति (६।१।७३) तुक् । स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वम् ।

## १७० । क्याच्छन्दसि ।

मित्रयुरिति । मित्रमिच्छतीति सुप आत्मनः क्यजिति (३।१।८) क्यच् । अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घत्वम् प्राप्नोति । क्यचि चेतीत्त्वञ्च (७।४।३३) । एतदुभयमपि न च्छन्दस्यपुत्रस्येति (७।४।३५) प्रतिषेधान्न भवति । संस्वेदयुरिति । लोहितादित्वात् क्यष् । सुम्नयुरिति । देवसुम्नयोरिति (७।४।३८) प्रतिषेधः । सुम्न इवाचरतीति कर्त्तुः क्यङ् सलोपश्चेति (३।१।११) क्यङ् ।

## १७१ । आदृगमहनजनः किकिनौ लिट् च ।

परपदार्थेषु प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति यथा गौर्वाहीकः सिंहो माणवक इति । गौर्वाहीकइत्युक्ते गोशब्दोऽर्थान्तरे प्रयुक्तो विनापि वतिना गौरिवायमिति तुल्यशब्दरूपे वाहीके प्रतीयते । इह लिङिति स्वार्थादन्यत्र किकिनोः प्रयुक्तः । तस्मादसत्यपि वतिना योगे ऽतिदेशो गम्यत इत्याह लिड्वच्च तौ भवत इति । लिटा तुल्यौ तुल्यधर्माणौ भवत इत्यर्थः । द्विर्वचनादिकं यल्लिटः कार्य्यं तत् किकिनोर्भवतीति भावः । कार्य्यातिदेशोऽयम् । न शास्त्रातिदेशः । कार्य्यातिदेशापेक्षया शास्त्रातिदेशस्याप्राधान्यात् । अप्राधान्यन्तु शास्त्रातिदेशस्य कार्य्यार्थत्वात् । यदि तर्हि कार्य्यातिदेशोऽयं लः परस्मैपदमिति(१।४।९९)परस्मैपदसंज्ञापि किकिनोः

प्राप्नोति । ततश्चात्मनेपदिभ्यस्तौ न स्याताम् । नैष दोषः । लादेशस्य हि परस्मैपदसंज्ञा । न लकारस्य । ल इति ह्यादेशापेक्षया तत्र षष्ठी । लादेशः परस्मैपदसंज्ञको भवतीति यावत् । नच किकिनौ लादेशौ । तत् कुतः परस्मैपदसंज्ञायाः प्रसङ्गः । तिबादयस्तर्हि कस्मान्न भवन्ति ? तयोर्विधानसामर्थ्यात् । यदि तर्हि तिबादयः स्युः किकिनोर्विधानमनर्थकं स्यात् । लिटमेव विदध्यादिति । न च तिबादिभि स्तच्छीलादयो विधीयन्ते । अनभिधानान्न भविष्यन्ति । क्वसुकानचौ कस्मान्न भवतः ? नच तयो र्भाव आनर्थक्यं किकिनोरुपपद्यते । लिटः कानज् वा (३।२।१०६) क्वसुश्चेति (३।२।१०७) विकल्पेन क्वसुकानचोर्विधानात् । अनभिधानादेव तावपि न भविष्यतः । नहि ताभ्यां तच्छीलादयो विधीयन्ते । अतएवानभिधानान्नः कर्मणि च भावे चाकर्मकेभ्य (३।४।६९) इति भावकर्मणोरपि किकिनौ न भवतः । यथैव हि भञ्जभासमिदो घुरजिति ( ३।२।१६ ) भञ्जेरुत्पन्नेन च घुरचा स्वभावात् कर्मकर्त्तैवाभिधीयते न कर्तृमात्रं तथा किकिन्भ्यामपि धातोरुत्पन्नाभ्यां स्वभावादेव कर्त्तैवाभिधीयते । न भावकर्मणो । आदिति दकारो मुखसुखार्थ इति । तपरत्वनिरासार्थमेतत् । अतएवाह नत्वयं तपर इति । किं पुनः कारणं तपरो नेष्यत इत्याह मा भूदित्यादि । तपरस्तत्कालस्येति (१।१।७०) तादपि पर इति पञ्चमीसमासोऽप्याश्रितः । वृद्धिरादैजित्यत्र (१।१।१) त्रिमात्रचतुर्मात्रयोरैचा वृद्धिसंज्ञा मा भूदित्येवमर्थम् । ततश्च यद्येवं तपरः स्यात् तदा ऋकारोऽपि तपर एव स्यात् । ततश्च ऋकारेण तत्कालानां मात्रिकाणामेतद् ग्रहणं स्यात् । न पुनर्दीर्घाणाम् । तत्र को दोषः ? दधिश्चक्रिरित्येवमादावेव स्यातां ततुरि र्जगुरिरित्येवमादौ च न स्याताम् । तस्माद् मा भूदित्येष दोष इति तपरत्वमत्र नेष्यते । पपिः सोममिति । आतो लोप इटि चेत्याकारलोपः(६।४।६४) । द्विर्वचनमभ्यासस्य ह्रस्वः । न लोकाव्ययनिष्ठेत्यादिना (२।३।६९) षष्ठीप्रतिषेधः कार्य्ये इति सोमशब्दात् कर्मणि द्वितीयैकवचनं भवति । ददिरिति । डुदाञ् दाने । ततुरिरिति । बहुलं छन्दसीत्युत्त्वम् (१।१।१०३) । रपरत्वञ्च । द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावात् तृशब्दो द्विरुच्यते । उरदि (७।४।६६)

त्वत्त्वम्। रपरत्वम्। हलादिशेषः। जगुरिरिति। गॄ निगरणे। जग्मिर्जघ्निरिति। गमहनेत्यादिनो(६।४।९८)पधालोपः। जनेर्नकारस्य स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वं ञकारः। अथेत्यादि चोद्यम्। ऋच्छत्यॄतामित्यादिना (७।४।११) परोक्षारः। उत्सर्गश्छन्दसीत्यादि। सामान्येन विधानमुत्सर्गः। एतदुक्तम्भवति। प्रकृतिविशेषमनुपादाय धातुमात्रात् किकिनोरुत्पादौ द्रष्टव्याविति। धातुमात्राद् विधातव्याविति यावत्। कुतो हेतोरित्याह सदादिभ्योऽपि दर्शनादिति। सदादिभ्योऽपि सूत्रानुपात्तेभ्यः किकिनौ यस्माद्दृश्येते तस्मादुत्सर्गः कर्त्तव्यः। सेदिर्नेमिरिति। पूर्ववदेत्त्वाभ्यासलोपौ। षद्लृ विशरणगत्यवसादनेषु। णम प्रह्वत्वे शब्दे। अत एकहल्मध्येऽनादेशादेर्लिटी (६।४।१२०) त्येत्वाभ्यासलोपौ। दधिश्चक्रिरिति। धाञः पूर्ववदाकारलोपः। चक्रिः सस्निरिति। करोतेः सर्त्तेश्च यणादेशः। जज्ञिरिति। जनेः पूर्ववच्चुत्वोपधालोपौ। नेमिरिति। पूर्ववदेत्त्वाभ्यासलोपौ। सश्चिवद्वीतयादि। भाषायामपि वर्त्तते। सासह्वीत्यादि। सहादिभ्यो यङ्। द्विर्वचनम्। पूर्ववदकारयलोपौ।

## १७२। स्वपितृषोर्नजिङ्।

स्वप्नक् तृष्णगिति। ञिष्वप् शये। ञितृषा पिपासायाम्। चोः कुरिति (८।२।३०) कुत्वं गकारः। तस्य वावसान इति (८।४।५६) चर्त्वं ककारः। नजिङो ङकार स्तृषेश्च गुणप्रतिषेधार्थः। इकार उच्चारणार्थः।

## १७३। शॄवन्द्योरारुः।

शृणोतेर्लषपतेत्यादिनोकञपि (३।२।१०२) भवति। वन्देरनुदात्तेतश्चेत्यादिना (३।२।१४९) युचि प्राप्ते वचनमिदम्।

## १७४। भियः क्रुक्लुकनौ।

क्रुकन्नपि वक्तव्यमिति। क्रुकन्नित्यपरः प्रत्ययो वाच्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। आदृगमहनेत्यादेः (३।२।१७१) सूत्राच्चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन क्रुकन्नपि भविष्यतीति।

## १७५ । स्थेशभासपिसकसो वरच् ।

स्थावर इति । एकाचेत्यादिनेट्प्रतिषेधः (७।२।१०) । ईश्वर इत्यादावपि नेड् वशि कृतीति (७।२।८) । तिष्ठतेः पूर्वसूत्रविहितौ क्स्नुकञावपि वचनाद् भवतः । ईशभासोः पूर्ववद् युचि प्राप्त इदं वचनम् ।

## १७६ । यश्च यङः ।

यायावर इति । पूर्ववदकारयलोपौ ।

## १७७ । भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ।

भ्राज दीप्तौ । भासृ दीप्तौ । उर्वी तुर्वी थुर्वी धुर्वी हिंसार्थाः । द्युत दीप्तौ । उर्ज बलप्राणनयोः । पृ पालनपूरणयोः । जु इति सौत्रो धातुः । ष्टुञ् स्तुतौ । ग्रावपूर्वः । विभ्राडिति । व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । पूर्ववज् जश्त्वं चर्त्वञ्च । धूरिति । राल्लोप (६।४।२१) इति वकार लोपः । वोंरुपधाया दीर्घ इक इति (८।२।७६) दीर्घः । पूरिति । उदोष्ठ्यपूर्वस्येत्युत्त्वम् (७।१।१०१) । रपरत्वञ्च । पूर्ववद्दीर्घत्वम् । जवतेर्दीर्घश्चेति । कथम् ? केचिदाहुः । सूत्रे जू इति दीर्घः पठितव्य इति । अपरे त्वाहुः । उत्तरसूत्रे दृश्यत इत्युभयोरपि योगयोः शेषः । तच्च विध्यन्तरोपसंग्रहार्थम् । अतो जवतेर्दीर्घो विधीयत इति। ग्रावाणं स्तौतीति ग्रावस्तुत् । ह्रस्वस्य पिति कृति तुक् (६ १।७१) । किमर्थ मिदमित्यादि चोद्यम् । ताच्छीलिकैर्बाध्यत इति परीहारः । स्यादेतत् । वासरूपविधिना क्वचिदपि भविष्यतीत्याह वासरूपविधिश्चेति । एतत् तु निन्दहिंसेत्यादौ(३।२।१४६)सूत्र उक्तम् । ननु च सूददीपदीक्षश्चेति(३।२।१५३) सूत्रे प्रायिकत्वं ज्ञापकस्य प्रतिपादितम् । वासरूपविधिश्चात्र नास्तीत्याह तस्यैवेति । अनेभ्योऽपि दृश्यन्ते (३।२।७५) । क्विप् च (३।२।७६) त्यस्यैव । भ्राजिद्युतोः पूर्ववद् युचि प्राप्तेऽयं प्रत्ययः । भासेर्वरजपि स्थेशभासेत्यादिना (३।२।१७५) भवति ।

## १७८ । अन्येभ्योऽपि दृश्यते ।

ननु चानेभ्योऽपीत्येतावतैव सिद्धम् । तत् किमर्थं दृशिग्रहणमित्यादि। क्वचिदित्यादिना येषामुपसंग्रहार्थं दृशिग्रहणं तानि विध्यन्तराणि दर्शयति ।

यस्मात् विध्यन्तराणामुपसंग्रहार्थं दृशिग्रहणमेवञ्च कृत्वा वृत्तिकारः क्विब्वचिप्रच्छीत्यादिकं वाक्यं पठति। दृशिग्रहणोपात्तानि तान्येव विध्यन्तराणि दर्शयितुमितत्रभिप्रायः। कथं पुनर्दृशिग्रहणेन विध्यन्तरोपसंग्रहः? दृशिग्रहणे हि सति यथा दृश्यन्ते क्विबन्ता धातवस्तथैव तेऽनुगन्तव्या इत्येषोऽर्थो लभ्यते। तस्मिंश्चार्थे लभ्यमाने द्विर्वचनादिविधयः संगृहीता भवन्ति। एवं हि ते यथा दृश्यन्ते तथानुगता भवन्ति। यदि यथायोगं द्विर्वचनादयो विधीयन्ते तदा क्विबन्तेषु क्वचिद्द्विर्वचनं दृश्यते। क्वचिदपि संप्रसारणमिति युक्तमुक्तं दृशिग्रहणं विध्यन्तरोपसंग्रहार्थमिति। वागिति। वचेर्वच्यादिसूत्रेण (६।१।१५) प्राप्तस्य संप्रसारणस्याभावः क्रियते। शब्दप्राड़िति। प्रच्छेरपि ग्रह्यादिसूत्रेण (६।१।१६) संप्रसारणस्य। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्। पूर्ववज्जश्त्वं चर्त्वञ्च। आयतं स्तौतीत्यायतस्तूः। ष्टुञ् स्तुतौ। कटं प्रवत इति कटप्रूः। प्रुङ् गतौ। श्रीरिति। श्रिञ् सेवायाम्। दिद्युदिति। द्युत दीप्तौ। द्युतिस्वाप्योः संप्रसारणमि (७।४।६७) त्यभ्यासस्य संप्रसारणम्। जगदिति। गमः क्वावित्यनुनासिकलोपः (६।४।४०)। दद्दिति। उरदित्यत्त्वम् (७।४।६६)। रपरत्वम्। हलादिशेषः। धीरिति। ध्यै चिन्तायाम्। हल इति दीर्घः (६।४।२)।

## १७९। भुवः संज्ञान्तरयोः।

धनिकाधमर्णयोरित्यादि। धनिको यस्मा ऋणं धार्यते। अधमर्णो यो धारयति। तदन्तरे मध्ये यस्तिष्ठत्यात्मपक्षपतितः संप्रत्ययहेतुः स प्रतिभूशब्देनोच्यते। न सर्वः। तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र प्रत्ययो न भवति। एतच्च शब्दशक्तिस्वाभाव्याल् लभ्यते। दृश्यत इत्यस्यानुवृत्ते र्वा। अस्य ह्यनुवृत्तौ सत्यां यत्र लोके दृश्यते तत्रैव प्रत्ययेन भवितव्यम्। न च ग्रामयोरन्तरे यस्तिष्ठति तत्र प्रत्ययो दृश्यते। ननु प्रतिभूरिति संज्ञेयम्। तत् किमन्तरग्रहणेन? संज्ञायामित्येव वक्तव्यम्। नैतदस्ति। द्रव्यमात्रविघाता हि संज्ञाशब्दा भवन्ति। न चैवं प्रतिभूशब्दः। तथापि सत्यपि देवदत्ते कदाचिदसौ न प्रवर्त्तत एव।

## १८० । विप्रसम्भ्यो ड्वसंज्ञायाम् ।

विभुरिति । पूर्वेण क्विन्नेव भवति । मितद्ग्वादिभ्य उपसंख्यानमिति । अविशेषेण । संज्ञायामसंज्ञायाञ्च । मितद्ग्वादिभ्य इति तादर्थ्ये चतुर्थी । मितद्ग्वादयो डुप्रत्ययान्ताः साधवो यथा स्युरित्येवमर्थः । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तच्च प्रतिपादनं प्रकृतत्वाड्डुशब्दस्य । तत्रेदं प्रतिपादनम् । अन्येभ्योऽपि दृश्यत (३।२।१७८) इत्यतोऽपिशब्दोऽत्रानुवर्त्तते । तेन मितद्ग्वादिभ्यो डुप्रत्ययो धात्वन्तरादपि भवति । पदान्तरे चेति ।

## १८१ । धः कर्मणि ष्ट्रन् ।

धयतेरिति । धेट् पाने । दधातेरिति । डुधाञ् धारणपोषणयोः । कर्मणि कारक इति । एतेन कर्मणः प्रत्ययार्थतां दर्शयन्नुपपदत्वमपाकरोति । यदि हि कर्मण उपपदत्वं स्यात् कर्मण्यणित्यस्मिन्नेव (३।२।१) प्रकरणे विदध्यात् । एवं हि द्विष्कर्मग्रहणं न कर्त्तव्यम् भवति । ननु च यद्यपि द्विः कर्मग्रहणं न कर्त्तव्यं भवति तदाप्युत्तरसूत्रेण ष्ट्रन्ग्रहणं कर्त्तव्यं जायते । जायतां नाम । लघीयो हि कर्मग्रहणात् ष्ट्रन्ग्रहणम् । नन्विह वर्त्तमान इत्यनुवृत्तेर्वर्त्तमानप्रत्ययो भवति । तत्र तु क्रियमाणे नैतल्लभ्यते । नैतदस्ति । इहापि क्रियमाणे नैव वर्त्तमाने प्रत्ययो भवति । नहि धात्रीत्युक्ते काप्यविशेषा प्रतीयते । किं तर्हि ? क्रियाकारकसम्बन्धमात्रविशिष्टा स्त्री प्रतीयते । आमलकी च दधति तां भैषज्यार्थमिति कृत्वा । तस्मात् कर्मणीति प्रत्ययार्थ एव । नोपपदम् ।

## १८२ । दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।

दाप् लवन इति । यथा दाधा घ्वदाविति सूत्रे (१।१।२०) । दैप् शोधन इत्यस्यापि ग्रहणम् । तर्हीहापि कस्मान्न भवति ? अनभिधानात् । प्रकृत्यैव हि दात्रमिति ष्ट्रन्प्रत्ययान्तेन लवनस्य करणमुच्यते । न शोधनस्य । करणकारक इति । एतेन करणप्रत्ययार्थतां दर्शयन्नुपपदत्वं निराकरोति । यद्युप-

पदत्वमस्य स्यात् तदाजादिषु दंष्ट्राशब्दस्य पाठो नोपपद्यते। योक्त्रमिति। चोः कुरिति (८।२।३०) कुत्वम्। मेढ्रमिति। हो ढ इति (८।२।३१) ढत्वम्। झषस्तथोर्धोऽध इति (८।२।४०) धत्वम्। ष्टुना ष्टुरिति (८।४।४१) ष्टुत्वम्। ढो ढे लोपः (८।३।१३)। दंष्ट्रेति। अजादित्वाट्टाप्। दंशेरित्यादि। ननु च यथा त्यजरजेति (३।२।१४२) रञ्जेरननुनासिकनिर्देशे घिनुण्प्रत्यये रागीत्यनुनासिकलोपो भवति तथा दंशेः ष्ट्रन्प्रत्यये नलोपो भविष्यति। तत् कथमस्य ज्ञापकतोपपद्यते? नैष दोषः। यद्ययं निर्देशो दंशेः ष्ट्रन्प्रत्ययेऽनुनासिकलोपार्थः स्यात् तदा दंष्ट्राशब्दस्याजादिपाठो विरुध्यते। तस्माज्ज्ञापकार्थत्वम्। नद्धीति। नहो ध इति (८।२।३४) धत्वम्। झषस्तथोर्धोऽध इति (८।२।४०) तकारस्य धत्वम्। धकारस्य झलाञ्जश् झशीति (८।४।५३) जश्त्वम्। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्। येऽत्र सेटो धातवः शसप्रभृतयस्तेषां हि तितुत्रतथेत्यादिनेट्प्रतिषेधः (७।२।९)।

## १८३। हलसूकरयोः पुवः।

तच्चेत् करणं हलसूकरयोरवयवो भवतीति। एतेन हलसूकरयोरित्येषाऽवयवषष्ठी। नत्वभिधेयसप्तमीति दर्शयति। मुखमेवोच्यत इति। नान्यः कर्णाद्यवयवः। एतच्चाभिधानशक्तिस्वाभाव्यात्।

## १८४। अर्त्तिलूधूसूखनसहचर इत्रः।

धू विधुनने। षू प्रेरणे इत्यनयोर्ग्रहणम्। धूञ् कम्पने षूञ् प्राणिगर्भविमोचने षूङ् प्राणिप्रसव इत्येतेषां निरनुबन्धकग्रहणे न सानुबन्धकस्येति (प,८२) परिभाषया ग्रहणं न भवति।

## १८५। पुवः संज्ञायाम्।

बर्हिष्पवित्रमिति। पवतेः पुनाते र्वा। अनेन पवित्रं बर्हिषा कृतम्। बर्हिष्पवित्रं कुशविकारः। प्रदेशिन्या (E) अङ्गुलेर्वेष्टनमुच्यते।

(E) अन्येषां मते त्वनामिकाया वेष्टनम्।

१८६ । कर्त्तरि चर्षिदेवतयोः ।

१८७ । श्रीतः क्तः ।

मित्र इति । आदितश्चेतीट्प्रतिषेधः (७।२।१६) । रदाभ्यामिति (८।२।४२) नत्वम् । एवं क्ष्विस इत्यत्रापि । अट्कुप्वाङ्गित्यादिना (८।४।२) णत्वम् । धृष्ट इति । धृषिशसी वैयात्य इतीट्प्रतिषेधः (७।२।१९) । ष्टुना ष्टुरिति (८।४।४१) ष्टुत्वम् ।

१८८ । मतिबुद्धिपूजार्थेभ्यश्च ।

मत इति । मन ज्ञाने । इट्प्रतिषेध एकाजित्यादिना ७।२।१०) । अनुदात्तोपदेश (६।४।३७) इत्यादिनानुनासिकलोपः । इष्टमिति । इषु इच्छायाम् । उदितो वेति (७।२।५६) विभाषितत्वान्निष्ठायां यस्य विभाषेतीट्प्रतिषेधः (७।२।१५) । बुद्ध इति । बुध अवगमने । पूर्ववद्धत्वम् । तकारस्य जश्त्वम् । धकारस्य दकारः । पूजितः । अर्चित इति । पूज पूजायाम् । अर्च पूजायाम् । भ्वादी । एतौ चुरादौ च । तत्र यदा चुरादिभ्यां प्रत्ययस्तदा निष्ठायां सेटीति (६।४।५२) णिलोपः । शीलित इत्यादौ शील समाधौ रक्ष पालने क्षमूष् सहने क्रुश आह्वाने जुषी प्रीतिसेवनयो रुष रोषे हृञ् हरणे हृष तुष्टौ हृषु अलीके तुष तुष्टौ कमु कान्तौ यम उपरमे कष हिंसायाम् मृङ् प्राणत्याग इत्येतेषां धातूनां यथाक्रमेणैतानि रूपाणि । तत्राद्यौ सेटौ । यश्चात्र कश्चिदुदिदूदिच्च तस्य निष्ठायां यस्य विभाषेतीट्प्रतिषेधः (७।२।१५) । यस्त्वीदित् तस्यापि श्वीदितो निष्ठायामितीट्प्रतिषेधः (७।२।१४) । हृषेरेव हृषेर्लोमस्वित्यनेन (७।२।२९) । कषेरपि कृच्छ्रगहनयोः कष इत्यनेन (७।२।२२) । शेषेभ्य एकाजित्यादिना (७।२।१०) । रुष्यमत्वरसंघुषास्वनामिति (७।२ २८) विभाषितेट् । कान्तः क्षान्त इति । अनुनासिकस्य क्विझलोः क्ङितीति (६।४।१५) दीर्घः । आक्रुष्टेति । व्रश्चादिना (८।२।३६) षत्वम् । संयत इति । पूर्ववदनुनासिकलोपः । अमृत इति । गत्यर्थादीनां कर्त्तरि क्तः । पूर्ववद् यथा शीलादिषु वर्त्तमाने निष्ठा तथामृतशब्दस्यापीत्यर्थः । सुप्त इति । स्वपेः

संप्रसारणम्। शयित इति। निष्ठा शीङित्यादिना (१।२।१९) कित्त्वप्रतिषेधाद् गुणः। आशित इति। अश भोजने। आङ्पूर्वः। लिप उपदेहे। तृप प्रीणने। अत्र अशिशीङौ सेटौ। शेषास्त्वनिटः। एकाजित्यादिनेट्-प्रतिषेधः (७।२।१०)। यद्यपि शीलादयो वर्त्तमानकाले व्युत्पाद्यन्ते तथापि शीलितो देवदत्तेन रक्षितो देवदत्तेनाक्रुष्टो देवदत्तेनेत्यत्र क्तस्य च वर्त्तमान (२।३।६७) इति षष्ठी न भवति। यथा न भवति तथा तत्रैव प्रतिपादितम्।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ॥३।२॥

---

अथ

# काशिकाविवरणपञ्जिका।

---:o:---

## तृतीयोऽध्यायः।

## तृतीयः पादः।

१। उणादयो बहुलम्।

वर्त्तमान इत्येवेति। वर्त्तमाने लडित्यतो (३।२।१२३) वर्त्तमानग्रहणमनुवर्त्तत इति दर्शयति। संज्ञायामिति। वर्त्तत इति पुवः संज्ञाया (३।२।१८५) इत्यतः। बाहुलकमित्यादि। ला आदाने। बह्वनर्थांल्लातीति बहुलम्। आतोऽनुपसर्गे कः (३।२।३)। बहवः पुनरर्थाः क्वचित् प्रवृत्त्यादयः। तथाचोक्तं—

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥ १॥ इति।

बहुलस्य भावो बाहुलकम्। द्वन्द्वमनोज्ञादिभ्यश्चेति (५।१।१३३) मनोज्ञादित्वाद्वुञ्। बह्वर्थादानं बहुलशब्दस्य प्रवृत्तिनिमित्तमिति तत्रैवायं भावप्रत्ययः। तद् बाहुलकं प्रकृते स्तनुदृष्टेरुक्तम्। प्रत्ययमनादिं कृत्वा यः पूर्वमुपादीयते शब्दः सा प्रकृतिरित्युच्यते। प्रत्ययात् पूर्वं क्रियत इति प्रकृतिः। प्रकर्षेण नियमेन प्रत्ययः क्रियते तस्या इति वा प्रकृतिः। प्रकृतेरिति। जातौ षष्ठ्येकवचनम्। तनुदृष्टेरिति। कर्मणि ल्यब्लोपे पञ्चमी। तनुदृष्टिं वीक्ष्य बाहुलकमुक्तमिति। विभाषा गुणेऽस्त्रिया (२।३।२५) मित्यनेन त्विह पञ्चमी न भवति। अस्त्रियामिति प्रतिषेधात्।

अथवा विभाषा गुण इति योगविभागादिह पञ्चमी वेदितव्या। तनुशब्दः शरीरवचनोऽप्यस्ति। गुणवचनोऽपि। इह तु गुणवचनः। प्रकृतेरल्पत्वं नाम यो गुणस्तस्य वाचकः। दर्शनं दृष्टिरुपलब्धिः। तनोर्गुणस्य दृष्टिस्तनु-दृष्टिः। ततो गुणो नित्यं गुणिनमपेक्षत इति गमकत्वात् तनुशब्दस्य प्रकृतिमपेक्षमाणस्यापि दृष्टिशब्देन समासो भवति। अयं त्वर्थः प्रकृते-र्गुणस्य। तयोर्दर्शनादिति। अथवा तनुर्दृष्टिर्यस्याः प्रकृतेः सा तनुदृष्टिः। अत्र पक्षे यद्यपि तनुगुणो दृष्टेर्विशेषणं तथाप्यसौ दृष्टेः प्रकृतेरपि विशेषण-त्वेन प्रतीयत एव। प्रकृतेस्तनुत्वादेव हि तद्दृष्टितनुत्वम् भवति। उणादिषु पञ्चपाद्यां स्वल्पाः प्रकृतयो दृश्यन्ते। ततोऽन्याभ्योऽपि च प्रकृतिभ्यः प्रत्यया दृश्यन्ते। तस्माद् बहुलग्रहणाद् भवन्ति। यथाहि हृषेरुलजिति हृषु अलीक इत्यस्मादुलजुक्तस्तथा शकि शङ्कायामित्यतोऽपि भवति शङ्कुलेति। किञ्च प्रायसमुच्चयनादपि तेषां तदुक्तमिति सम्बन्धः। तदिति बाहुलकं परामृश्यते। तेषामुणादीनां प्रायेण बाहुल्येन समुच्चयनं ग्रहणं विधानं वा प्रायसमुच्चयनम्। तृतीयेति योगविभागात् (२।१।३०) समासः। अपिशब्दः समुच्चये। न केवलं प्रकृतेस्तनुदृष्टेस्तद् बाहुलकमुक्तमपि तु प्रायसमुच्चयना-दपि तेषामेतदुक्तम् भवति। न केवलं प्रकृतयस्तन्वयः पठिता अपि तु प्रत्यया अपि प्रायेण समुच्चिताः। न सर्वे। तदर्थं बाहुलकमिति। बाहुलकादत्र-विहिता अपि ते चेत् प्रत्यया उन्नीय विधीयन्ते। तथाह्यर्त्तेः क्युरुच्चे-त्यर्त्तिधातुः ( उण्, ५।६८५ ) पठितः। फिडफिड्डौ तु प्रत्ययौ न विहितौ। तथापि ऋफिडऋफिड्डशब्दयोर्दर्शनात् तावपि च विधीयेते। कार्य्यस-शेषविधेश्च तदुक्तमिति। चशब्दः समुच्चये। पूर्वोक्तकारणद्वयादेतस्मात् तद्बाहुलकमुक्तम्। विधानं विधिः करणम्। सह शेषेण वर्त्तते यो विधिः स सशेषः। सशेषश्चासौ विधिश्च सशेषविधिः। कार्य्याणां सशेषविधिः कार्य्यसशेषविधिः। तस्माच्च बाहुलकमुक्तम्। एतदुक्तं भवति। प्रकृतेः प्रत्ययाश्रितानि कार्य्याणि न निःशेषाणि पञ्चपाद्यां दर्शितानि। इष्यन्ते चादर्शितान्यपि तानि। अतस्तत्सिद्ध्यर्थं तद् बाहुलकमुक्तम्। तेन ऋफिडऋफिड्ड इत्यत्र गुणप्रतिषेधः सिद्धो भवति। एवमादि तावत्

प्रत्ययाश्रितं कार्य्यं सिद्धम् भवति। षणु दाने। अमन्ताड्ड (उण्, १।१११) इति षण्डः। अत्र धात्वादेः षः स इति (६।१।६४) सत्वं न भवति। सत्यपि वा सत्वे पुनः षत्वमेव क्रियत इत्येवमादि प्रकृत्याश्रितमपि कार्य्यं बाहुलकाद्भवति। नैगमरूढ़िभवं हि सुसाध्विति। निगमश्छन्दः। तत्र भवा नैगमाः। ऋगयनादिपाठादण्। निगमस्य वेमे नैगमाः। रूढिः प्रसिद्धिः। भवन्तीति भवाः। रूढौ भवाः। सप्तमीति (२।१।४०) योगविभागात् समासः। लोकप्रसिद्धा इत्यर्थः। नैगमाश्च रूढ़िभवाश्च नैगमरूढ़िभवम्। सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः (प, ३६)। स नपुंसकमिति (२।४।१७) नपुंसकलिङ्गता। हिशब्दो यस्मादर्थे। यस्मादेतदेव बाहुलकमनेकार्थस्य साधकं तस्मान्नैगमं रूढ़िभवं सुष्ठु साधु भवति। व्याकरणे बहुलग्रहणेन संस्कृतत्वात्। अन्यथाऽसंस्कृतत्वाद् गाव्यादिशब्दानामिव तस्यासाधुत्वं स्यात्। अन्यैरपि प्रमाणपुरुषैर्नैगमरूढ़िभवानां व्युत्पाद्यत्वमभ्युपेतमिति दर्शयितुमाह नाम च धातुजमित्यादि। निरुक्त इति। निरुक्ते शास्त्रे। नामेति। प्रातिपदिकम्। तस्य ह्येयमन्याचार्य्यसंज्ञा। धातोर्जातत्वाद्धातुजम्। धातुग्रहणमुपलक्षणम्। प्रत्ययागमादयोऽपि गृह्यन्ते। निरुक्तकारः स्वशास्त्रे निरुक्ते प्रातिपदिकं धातुजमाह। धातुप्रत्ययादिविभागेन व्युत्पादितत्वात्। चशब्दोऽवधारणे भिन्नक्रमश्च। धातुजमेवेत्येवं द्रष्टव्यम्। न केवलं निरुक्तकार एवेहापितु व्याकरणे शकटस्य तोकम्। तोकशब्दोऽपत्यपर्य्यायः। व्याकरणेऽपि यः शकटस्य पुत्त्रः शाकटायनः सोऽपि नाम धातुजमेवाह। तदेवं निरुक्तकारशाकटायनदर्शनेन त्रयी शब्दानां प्रवृत्तिः। जातिशब्दा गुणशब्दाः क्रियाशब्दा इति। न सन्ति यदृच्छाशब्दा इति। अथवा जातिगुणशब्दानामपि क्रियाशब्दत्वमेव। धातुजत्वात्। ततश्चैकैव शब्दानां प्रवृत्तिः क्रियाशब्दा इति। अथ यदि प्रकृतिविशेषं प्रत्ययविशेषञ्चोपादाय न व्युत्पादितं शब्दरूपं तस्य कथं धातुजत्वं वेदितव्यम्? नहि प्रकृतिप्रत्ययानवधारणे धातुजत्वं शक्यं निश्चेतुमित्यत आह यन्नेत्यादि। अर्थशब्दः प्रयोजनवाची। पदमर्थः प्रयोजनं यस्य प्रकृत्यादेः स पदार्थः। कथं पुनः पदमर्थः प्रकृत्यादे-

भवति ? तदुद्दिश्य तदुपादानात्। पदं हि व्युत्पादयिष्यामीत्येवमर्थं प्रकृत्यादेरुपादानम्। कस्मात् ? प्रकृतिप्रत्ययश्च पदार्थः। तस्य विशेषः पदार्थविशेषः। समुत्थानं समुत्थः प्रादुर्भावः। सुपि स्थ ( ३।३।४ ) इत्यत्र योगविभागेन भाव एव कप्रत्ययः। पदार्थविशेषात् समुत्थः प्रादुर्भावो यस्य तत् पदार्थविशेषसमुत्थम्। यदेवंविधं न भवति शब्दरूपं प्रत्ययतः प्रकृतितश्च तदूह्यम्। धातुजत्वेनापि तदुक्तं भवति। यस्य प्रतिपदोक्ता प्रकृतिप्रत्ययविशेषानासादितात्मा निर्वृत्तिस्तस्य प्रकृतिविशेषात् प्रत्ययविशेषाच्च धातुजत्वं निश्चेतव्यमिति। ननु च तथाविधस्य प्रकृतिप्रत्ययविशेषस्यापरिज्ञानादेवाशक्यं धातुजत्वं निश्चेतुमिति मत्वा परेण चोदितम्। तत् कथं प्रत्ययतः प्रकृतेश्च तदूह्यमित्युक्तं युज्यते ? नैष दोषः। एवं हि ब्रुवतानेन प्रकृतिप्रत्ययावेवं तावदूहितव्यौ। ततस्ताभ्यां तच्छब्दरूपमितेतरतदप्यर्थादुक्तं भवति। नह्यनवधारिताभ्यां प्रकृतिप्रत्ययाभ्यां शक्यं धातुजत्वं कस्यचिन्निश्चेतुमिति किमत्रायुक्तम् ? यत्र प्रसिद्धप्रत्ययावयवेन शब्दान्तरेण कस्यचिद् भागस्य सारूप्याधिगमोऽस्ति तत्र प्रत्ययं दृष्ट्वा परिशिष्टो भागः प्रकृतित्वेनोत्प्रेक्षितव्यः। यथोषिकुषिगार्त्तिभ्यस्थन्निति ( उण्, २।१६१ ) थन्प्रत्ययान्तमोष्ठादिकं प्रसिद्धप्रत्ययावयवम्। तेन च डित्थडवित्थशब्दयोः किञ्चित् सारूप्यमस्ति। तथैषामिव हि तेषां थशब्दोऽवयवो विशिष्टदेशवर्त्ती विद्यते। तत्र थन्प्रत्ययान्ते शब्दरूपे यो दृष्टस्थशब्दः प्रत्ययसंज्ञकस्तत्सादृश्याड् डित्थडवित्थशब्दस्थं थशब्दं प्रत्ययमवधार्य्य ततः परिशिष्टस्तयोर्भागो डिड्डविदिति च धातुत्वेनोह्यः। ततश्चैवं सूत्रं कर्त्तव्यं डीङस्थण् डिड्डविच्चेति। डीङ विहायसा गतावित्यस्मात् थन्प्रत्यय। डीङश्च डिड्डविदित्येतावादेशौ भवतः। यत्र तु शब्दरूपे निर्ज्ञातधात्ववयवेन शब्दान्तरेण किञ्चिद् भागगतं सारूप्यमस्ति तत्र प्रकृतिं दृष्ट्वा परिशिष्टो भागः प्रत्ययत्वेनोहितव्यः। यथा ऋतमिति दृष्टं शब्दरूपं प्रसिद्धप्रकृत्यवयवम्। तेन ऋफिडशब्दस्य ऋफिड्डशब्दस्य च किञ्चिद् भागगतं सारूप्यमस्ति। उभयेषां (A) तेषामृकारादि-

(A) अत्र तेषामिति बहुवचनमृतऋफिडऋफिड्डशब्दत्रयपरामर्शात्। उभयेषामिति च तेषां पक्षद्वयावस्थितत्वात्।

त्वात् । तत्र निष्ठाप्रत्ययान्त ऋतशब्दे य ऋकारावयवो धातुसंज्ञकस्तत्-सादृश्यादृफिडऋफिड्डशब्दस्थश्च ऋवर्णं धातुमवधार्य ततः परिशिष्टस्तयो-र्भागः फिड इति फिड्ड इति च प्रत्ययत्वेनोह्यः । ततश्चैवं सूत्रं कर्त्तव्यम् । ऋतेः फिडफिड्डाविति । ऋ गतावित्यस्मात् फिडफिड्डौ प्रत्ययौ भवतः । ऋफिड ऋफिड्डः । गुणः पूर्वोक्तात् कारणान्न भवति । अथवा कितावेवैतौ प्रत्ययौ विधातव्यौ । एवं प्रकृतिप्रत्ययावूहित्वा तस्य शब्दरूपस्य धातुजत्व-मूहितव्यम् । यत् प्रकृतिप्रत्ययविशेषावयवानुगतं न तद्धातुजत्वं व्यभिचरति यथा कर्त्तव्यं करणीयमित्येवमादयः शब्दाः । ऊह्यमित्यनुज्ञातव्यम् । न यत्र क्वचिदूह्यः कर्त्तव्योऽपितु विशिष्ट एव विषय इति दर्शयन्नाह संज्ञा-स्वित्यादि । य एते निरूढाः साधुत्वेन शब्दास्तेष्वेव संज्ञातः सूहः कर्त्तव्यो नान्यत्र । धातुरूपाणीति । कल्पयितव्यानीति शेषः । प्रत्ययाश्च ततः पर इति । कल्पयितव्या इति शेषः । कार्य्याद् गुणाभावादिकाद् विद्यादनीयाद-नूबन्धं ककारादिकम् । एतदनन्तरोक्तं शास्त्रमुणादिषु । शास्त्रोपनिबन्धन-त्वाच्छास्त्रविषयत्वाद्वा शास्त्रमित्युक्तम् । यदि तर्ह्यत्र सूत्रे संज्ञायामित्यनु-वर्त्तते वर्त्तमान इति च बहुलग्रहणं च क्रियते तत् किमर्थमुणादिषु वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेति (उण्, २।२४१) वर्त्तमानग्रहणम्? धृषेर्धिष् च संज्ञाया (उण्, २।२४०) मिति संज्ञाग्रहणम्? बहुलमन्यत्रा-पीति (उण्, २।१८५) बहुलग्रहणञ्च क्रियते? भूतेऽपि दृश्यन्त इति (३।३।२) वचनाद् भूतेऽपि पृषदादयो भवन्तीत्याशङ्कानिवृत्त्यर्थम् । वर्त्तमानग्रहणं प्रकृताया एव संज्ञाया अनुवृत्तेर्दृढीकरणार्थम् । पुनः संज्ञा-कारणं बहुलवचनादसंज्ञायामपि भवन्तीत्याशङ्कानिवृत्त्यर्थं वा । अस्यैव बहुलस्य स्मरणार्थं पुनर्बहुलग्रहणम् । एवं हि विस्मरणशीलानामनुग्रहः कृतो भवति ।

## २ । भूतेऽपि दृश्यन्ते ।

पूर्वत्र वर्त्तमानादिति । अथ पूर्वत्र वर्त्तमानग्रहणं कस्मान्न निवर्त्तितम्? युक्तं हि तत् तत्र निवर्त्तयितुम् । तथाहि तस्मिंस्तत्र निवृत्ते सतीदं न

कर्त्तव्यम्। नैतदस्ति। अवश्यमेतत् कर्त्तव्यम्। यस्मात् केचिद् भूत एवेष्यन्ते। यदि च पूर्वत्र वर्त्तमानग्रहणानुवृत्तिर्न स्याद् भविष्यत्यप्युणादयो न स्यात्। भविष्यति गम्यादय (३।३।३) इत्येतत्तु नियमार्थं विज्ञायेत भविष्यत्येव गम्यादय इति। तस्मात् पूर्वत्रानुवर्त्तयितव्यं वर्त्तमानग्रहणम्। वर्त्मेति। आतो मनिनित्यनुवर्त्तमाने (३।२।७४) ऽन्येभ्योऽपि दृश्यन्त इति (३।२।७५) मनिन्प्रत्ययः। नेड् वशिकृती- (७।२।८) तीट्प्रतिषेधः। भस्मेति। भस भर्त्सनदीप्त्योः। दृशिग्रहणमित्यादि। विशिष्टप्रयोगमनुसृत्य यत्र शिष्टाः प्रयुञ्जते तत्र भूते प्रत्ययः कर्त्तव्यः। ननु सर्वत्रेति दृशिग्रहणेनायमर्थः प्रतिपादित इति दर्शयति।

## ३। भविष्यति गम्यादयः।

प्रत्ययस्यैवेत्यादि। एवं हि भविष्यति गम्यादयः साधवो भवन्ति यदि प्रत्ययस्यैव भविष्यत्कालता विधीयते। अथ तु प्रत्ययस्यान्यकालता स्यान्न ते भविष्यति साधवः स्युः। तस्मात् प्रत्ययस्यैवानेन प्रकारेण भविष्यत्कालता विधीयते। ग्रामं गमीति। गमेरिनिरितीनिप्रत्ययः (उण्, ४।४४६)। सावितिं (६।४।१३) दीर्घः। अकेनोर्भविष्यदाधमर्ण्ययो (२।३।७०) रिति षष्ठ्यां प्रतिषिद्धायां ग्रामशब्दात् कर्मणि द्वितीया (२।३।२)। आगामीति। गमेरिनिरिति (उण्, ४।४४६) वर्त्तमान आङि णिदितीनिः (उण्, ४।४४७)। णित्त्वादुपधावृद्धिः। प्रस्थायीत्यादि। ष्ठा गतिनिवृत्तौ। बुध बोधने। युज समाधौ। या प्रापणे। एभ्यः सुप्यजातौ णिनिस्ताच्छील्य इति (३।२।७८) णिनिः। यातितिष्ठत्योरातो युक् चिण्कृतो (७।३।३३) रिति युक्। युजभजोः कु विण्यतो (७।३।५२) रिति कुत्वम्। भावीति। आङि णिदिति (उण्, ४।४४७) वर्त्तमाने भुवश्चेतीनिः (उण्, ४।४४८)। णित्त्वाद् वृद्धिः। अनद्यतन उपसंख्यानमिति। किं पुनः कारणं न सिध्यति? भविष्यतीति ऌटायं निर्देशः क्रियते। तेन च ऌट एव विषये भविष्यत्सामान्ये स्यात्। न भविष्यदनद्यतने। ततो लुटो न विषयः। ऌटा बाधितत्वात्। तस्माद-

नद्यतन उपसंख्यानं कर्त्तव्यम् । उपसंख्यानशब्दस्य चेह प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । बहुलग्रहणमिहानुवर्त्तते । तेनानद्यतनेऽपि भविष्यतीति । एते च गम्यादयो लुङ्लृटोरुभयोरपि बाधकाः । अपवादत्वात् । अपवादत्वं तु येन नाप्राप्तिन्यायेन ( प, ५८ ) । ननु च वासरूपविधिना लुङ्लृटावपि प्राप्नुतः । तद्विधौ भविष्यति गम्यादय इत्यनुवृत्तेः । सत्यम् । अस्यामप्यनुवृत्तौ पक्षे प्राप्नुत एवेति चेत् ? नैतदस्ति । एवं ह्यनुवृत्तिरपार्थिका स्यात् ।

## ४ । यावत्पुरानिपातयोर्लट् ।

यावद् भुङ्क्ते इति । भुजोऽनवन ( १।३।६६ ) इत्यात्मनेपदम् । श्नसोरल्लोप ( ६।४।१११ ) इत्यकारलोपः । यावद् दास्यति तावद् भोक्ष्यत इति । यत् परिमाणमस्य तत् परिमाणमस्येति यत्तदेतेभ्यः परिमाणे वतुप् ( ५।२।३९ ) । दृग्दृशवतुष्विल्यनुवर्त्तमान ( ६।३।८९ ) आ सर्वनाम्न ( ६।३।९१ ) इत्यात्वम् । पुरा व्रजिष्यतीति । पॄ पालनपूरणयोः । भ्राजभासेत्यादिना क्विप् (३।२।१७७) । उदोष्ठपूर्वस्येत्युत्त्वम् (७।१।१०२) । करणे तृतीयैकवचनम् । ननु चाव्युत्पन्नावेव यावत्पुराशब्दौ निपातौ । तौ च व्युत्पादितौ । तत्र लक्षणप्रतिपदोक्तपरिभाषयैव (प,११४) तयोर्निपातयोर्ग्रहणं भविष्यति । तत् किमर्थं निपातग्रहणम् ? मन्दबुद्धीनां प्रतिपत्तिगौरवपरिहारार्थमित्येके । अस्याः परिभाषाया अनित्यत्वज्ञापनार्थमित्यपरे । अनित्यत्वज्ञापनस्य तु प्रयोजनमुत्तरत्र वक्ष्यते ।

## ५ । विभाषा कदाकर्ह्योः ।

कदा भोक्तेति । लुट् । ननु च भविष्यतीत्यनुवृत्तेर्लृट एव विषये भवितव्यम् । न लुटः । ततो लृडेव पक्षे युक्त उदाहर्त्तुम् । तत् कथं लुडप्युदाहृतः ? एवं मन्यते । अनद्यतने लुडित्यत्र ( ३।४।१५ ) विभाषा कदाकर्ह्योरित्यस्यानुवृत्तेर्लुटो विषये विभाषा लुटा भवितव्यमिति । कर्हि भोक्ष्यत इति । लृट् । ननु च कर्हिशब्दोऽनद्यतने र्हिलन्यतरस्याम् ( ५।३।२१ ) मित्यनद्यतने व्युत्पादितः । तदसौ यत्र प्रयुज्यते तत्रानद्यतन

एव कालः सम्भवति। तत् कुतो लृटः प्राप्तिः? अनद्यतने लुङिति (३।३।१५) लुटैव पक्षे भवितव्यम्। नैतदस्ति। यस्माद् भोक्ष्यत इत्येतत् पदं भविष्यत्काल एव वर्त्तते। अनद्यतनकालावगतिस्तु कश्चिच्छब्दसन्निधाने सति वाक्याद् भवति। न च वाक्यगम्येऽर्थे लृड् भवति। तथाहि पदमिह संस्क्रियते। न च पदसंस्कारे वाक्यगम्योऽर्थ उपयुज्यते। तस्माद् भविष्यत्सामान्ये विवक्षिते लृड् भवति। भविष्यति विशेषेऽप्यनद्यतने विवक्षिते लुङिति।

## ६। किंवृत्ते लिप्सायाम्।

किमो वृत्तमित्यादि। किं पुनः किमो वृत्तमित्याह वृत्तग्रहणेनेत्यादि। तदित्यनेन किंशब्दः सम्बध्यते। किमेतच्छब्दरूपं विभक्त्यन्तं वृत्तग्रहणेन प्रतीयात्। डतरडतमौ च। किंयत्तदोर्निर्धारणे द्वयोरेकस्य निर्धारणे डतरच् (५।३।९२) वा बहूनां जातिपरिप्रश्ने डतम (५।३।९३) जित्येतौ प्रत्ययौ किंशब्दसम्बन्धिनावेव वृत्तग्रहणे प्रतीयात्। प्रत्ययग्रहणपरिभाषया चेह डतरडतमान्तं प्रतीयादित्येषोऽर्थो वेदितव्यः। परिसंख्यानमिति। नियम इत्यर्थः। तेन किंतरां किंगोः किंपुरुष इत्येवमादिषु पदेषु न भवति। तेषां किंवृत्तत्वस्य परिगणनेन निरस्तत्वात्। भोजयन्तीति। हेतुमण्णन्ताल्लट्। भोजयितार इति। लुट्। लुटः प्रथमस्य डारौरस (२।४।८५) इति झे रसादेशः। रि चेति (७।४।५१) सकारलोपः। लब्धुकामः पृच्छतीति। उदाहरणेषु लिप्साया गम्यमानत्वात्।

## ७। लिप्स्यमानसिद्धौ च।

लिप्सायामेव सत्यां सम्भवति। नासत्याम्। अतो यत्र लिप्स्यमानसिद्धिर्गम्यते तत्रावश्यं लिप्सया भवितव्यम्। तथाच पूर्वेणैव सिद्धम्। तत् किमर्थोऽयमारम्भ इत्यत आह अकिंवृत्तार्थोऽयमारम्भ इति। यद्येवं पूर्वसूत्र एव किंवृत्तग्रहणमकृत्वा प्रत्ययो विधेयः। एवं ह्रीदं नारब्धव्यम् भवति। नैतदस्ति। एवं हि यथा लिप्स्यमानसिद्धौ गम्यमानायां किंवृत्ते चाकिंवृत्ते च भवति तथा यत्रापि लिप्स्यमानसिद्धिरक्षितं लिप्स्यमानं गम्यं तत्रापि

स्यात् । किंवृत्त एव तत् तत्रेष्यते । तस्मात् पूर्वयोगे किंवृत्तग्रहणं कर्त्तव्यम् । तस्मिंश्च सतीदमप्यकिंवृत्तार्थमारब्धव्यम् । दातारं प्रोत्साहयतीति । भक्तादानविषयेऽस्य प्रोत्साहं जनयतीत्यर्थः ।

## ८ । लोड्र्थलक्षणे च ।

प्रैषादिरिति । आदिशब्देन विधिनिमन्त्रणामन्त्रणाधीष्टादयो गम्यन्ते । आगच्छतीति । इषु गमियमाञ्छ इति ( ७।३।७७ ) च्छत्वम् । अध्ययनप्रैषस्येति । अध्ययनविषयः प्रैषोऽध्ययनप्रैषः । शाकपार्थिवादित्वादुत्तरपदलोपी समासः । अथ त्वं छन्दोऽधीष्वेति । अत्र प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति ( ३।३।१६३ ) लोट् । स च प्रैषोऽध्ययनविषयः । तस्योपाध्यायागमनं ह्यपेच्याध्ययने प्रैषतेत्यस्योपाध्यायागमनस्य प्रैषं प्रति निमित्तभावः ।

## ९ । लिङ् चोर्द्ध्वमौहूर्त्तिके ।

निपातनात् समास इत्यादि । ऊर्द्ध्वमौहूर्त्तिकशब्दस्योच्चारणमेव निपातनम् । ऊर्द्ध्वं मुहूर्त्तादिति विग्रह्यास्मादेव निपातनात् समासः । ततो बह्वचोऽन्तोदात्तादिति ( ४।३।६७ ) ठञ् । तत उत्तरपदवृद्धिः । (B) सा ह्यत एव निपातनात् । भविष्यतः प्रकृतत्वात् तस्यैवोर्द्ध्वमौहूर्त्तिकग्रहणं विशेषणं विज्ञायत इत्याह भविष्यतश्चैतदित्यादि । ऊर्द्ध्वमौहूर्त्तिकशब्दश्चायं वर्त्तमानस्य प्रत्यासन्ने वर्त्तते । ऊर्द्ध्वमौहूर्त्तिके वर्त्तमानसमीप इत्यर्थः । आगच्छेदिति । यासुट् । अतो येय ( ७।२।८० ) इतीयादेशः । आद् गुणः ( ६।१।८७ ) । लोपो व्योर्वलीति ( ६।१।६६ ) यकारस्य लोपः । लिङः सलोपोऽनन्त्यस्येति (७।२।७९) सकारस्य ।

## १० । तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।

भित्त्विथ इतरस्य जटा इति । लृट् । अनुदात्तेत्त्वादात्मनेपदम् । उत्तमपुरुषैकवचनम् । इट् । टेरेत्वम् । अतो गुणे ( ६।१।७९ ) । पररूप-

(B) मिश्रस्त्वत्राध्यात्मादित्वाट्ठञमाह । बह्वचोऽन्तोदात्तादित्यत्र (४।३।६७) तु व्याख्यातव्यनाम इति वदते ।

त्वम्। अत्रास्ति भिक्षिक्रियार्थमुपपदं जटाशब्दः। ननु जटाशब्दः क्रियावचनः। जटानां द्रव्यत्वात्। धावतस्ते पतिष्यति दण्ड इति। धावु गतिशुद्ध्योः। लट्। तस्य शत्रादेशः। षष्ठ्येकवचनम्। अथवा सृ गतावित्यस्य पाघ्रादि (७।३।७८) सूत्रेण धावादेशः। अस्त्यत्र धावतिक्रियोपपदम्। ननु क्रियार्थः। अर्थशब्दो ह्ययं प्रयोजनवचनः। यच्च यदुद्दिश्य प्रवर्त्तते तत् तस्य प्रयोजनं भवति। नचासौ दण्डपतनमुद्दिश्य धावति। किं तर्हि? कार्य्यान्तरार्थम्। अथेत्यादि चोद्यम्। सामान्येन विहित एवेति। भविष्यत्यन्यत्र च काले क्रियायां क्रियार्थायामुपपदेऽन्यत्र चाविशेषेण विधानात्। ल्टेत्यादि परिहारः। ल्टट् शेषे चेति (३।३।१३) ल्टटं वक्ष्यति। तेन विशेषविहितेन ल्टटा बाध्यते। तन्मा भूत् तस्य बाधेति पुनरिह विधीयते। अथ तुमुन् क्रियार्थोपपदेन बाध्यत इत्येतत् कस्मान्नोक्तम्। भिन्नार्थत्वात्। नहि भिन्नार्थयोर्बाध्यबाधकभावो भवति। भिन्नार्थौ च ण्वुल्तुमुनौ। तथाहि कर्त्तरि ण्वुल्। तुमुन् पुनर्भावे। कथं ज्ञायते? तुमर्थे सेसेनित्यत्र (३।४।९) तुमर्थग्रहणात्। यदि तुमन् कर्त्तरि कृदित्यतो (३।४।६७) वचनात् कर्त्तरि स्यात् ततः सेसेन्प्रभृतयोऽपि तत्रैव भविष्यन्तीति तुमर्थग्रहणं न कुर्य्यात्। कृतवांश्च। ततस्तुमर्थग्रहणादवसीयते तुमुन् कर्त्तरि न भवति। नचान्यार्थो निर्द्दिश्यते। तत्रानिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति भाव एव तुमुन् भवतीति विज्ञायते। यदुक्तं ल्टटा क्रियार्थोपपदेन बाध्यत इति तद् विघटयितुमाह वासरूपविधिनेत्यादि। एवं तर्हीत्यादि। एतेन ज्ञापकार्थतां ण्वुल्विधानस्याचष्टे। यदि हि क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयः स्युर्ण्वुलपि तृजार्थाभिधायित्वाद् वासरूपविधिना भविष्यतीति पुनरिह तन्न विदध्यात्। विहितवांश्च। ततस्तेन ण्वुल्विधानेनास्मिन् विषये वासरूपेण तृजादयो न भवन्तीत्येषोऽर्थो विज्ञाप्यते। तेनेत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति। कर्त्तेति। तृच्। विक्षिप इति। इगुपधज्ञाप्रीकिरः कः (३।१।१३५)। तुमुनो नकार आद्युदात्तार्थः। उकार उच्चारणार्थः। ण्वुलो लकारो लिति प्रत्ययात् पूर्वस्योदात्तार्थः। णकारो वृद्ध्यर्थः।

## ११ । भाववचनाश्च ।

भाववचना इति । ब्रुवन्तीति वचनाः । बहुलवचनात् कर्त्तरि ल्युट् । भावस्य वचना भाववचनाः । भाववचनत्वं पुनस्तेषां भावाधिकारे विधानादिति दर्शयितुमाह भाव इति प्रकृत्येत्यादि । प्रकृत्याधिकृत्येत्यर्थः । घञादय इति । आदिशब्देनाजबादीनां ग्रहणम् । किमर्थमिदमित्यादि चोद्यम् । क्रियार्थोपपदे विहितेनेत्यादि परिहारः । स्यादेतत् । वासरूपविधिना ते भविष्यन्ति । अत आह वासरूपविधिश्च नास्तीत्युक्तमिति । एतच्च पूर्वसूत्र उक्तम् । अथेत्यादि । भाव इत्येतावद्वक्तव्यम् । एवं ह्युच्यमाने सतीदमेव घञादीनां विधायकं स्यात् । ततश्च ते धातुमात्रादविशेषेण प्रसज्येरन् । विशेषानुपादानात् । वचनग्रहणादयमर्थो लभ्यते भावे ये विहिताः प्रत्ययास्ते तथा भवन्ति यथा भावस्य वाचका भवन्तीति । यथा च ते भावस्य वाचका भवन्ति तथा प्रश्नपूर्वकं दर्शयितुमाह कथञ्चेत्यादिना । नासामञ्जस्येनेति । न व्यतिकरेण । नानियमेनेत्यर्थः । तत्र केचिदाहुर्वचनग्रहणाद् यैरेव विधिवाक्यैर्भाव एषां विधानं तैरेव क्रियायामुपपदे क्रियार्थायां भवन्ति । एवञ्च ते वाचका भवन्ति । नान्यथेति । अन्ये त्वाहुरेतदेव सूत्रं विधायकम् । वचनग्रहणसामर्थ्यात् । अनेनापि तथैषां विधानं भवति यथा स्वै र्विधिवाक्यैः । यदि भावे हि तद्विधिर्नान्यस्मिन्नपि विषये भविष्यति । तत् तस्मात् पुनर्विधीयत इति ।

## १२ । अण् कर्मणि च ।

कर्मण्यस्मित्यादि । तुमुण्ण्वुलावित्यादि सूत्रे (३।३।१०) ज्ञापितमेतद् वासरूपविधिरिह नास्तीति । तेन यद्यपि विशेषेणाण् विहितस्तथापि वासरूपविधेरभावात् क्रियार्थोपपदे न ण्वुला बाधितः । तस्मात् पुनर्विधीयते । सोऽपवादत्वाण्ण्वुलं बाधत इति । नाप्राप्ते ण्वुलीतरस्यारब्धत्वात् । विशेषविहितत्वाच्च । कादीनिति । बाधत इति सम्बन्धः । आदिशब्देन टगादीनां ग्रहणम् । तेनापवादविषयेऽपि भवतीति । अपवादाः सामान्यविहितस्याणः कादयः । तद्विषयेऽपि भवति । अण् कर्मणि चेत्यस्याऽना-

कारान्तक्रियोपपदोऽवकाशः काण्डलावो व्रजतीति। आतोऽनुपसर्गे कः (३।२।३) इत्यस्याकारान्तः क्रियोपपदोऽवकाशो गोद इति। इह तूभयं प्राप्नोति गोदायो व्रजतीति। परत्वादण् भवति। तथा गापोष्टगि- (३।२।८) त्यस्यावकाशः सुरापः शीधुपः। अणः स एव। इहोभयं प्राप्नोति सुरापायो व्रजति शीधुपायो व्रजतीति।

## १३। लृट् शेषे च।

चकारादित्यादि। एतेन क्रियायां क्रियार्थायामित्यस्यानुकर्षणार्थश्चकार इति दर्शयति। करिष्यामीति। ऋद्धनोः स्य इतीट् (७।२।७०)।

## १४। लृटः सद्वा।

सत्संज्ञाविति। तौ सदिति (३।२।१२७) संज्ञाविहितत्वाच्छतृशानचौ सत्संज्ञकौ। कथं पुनर्लृटः शतृशानचौ भवत इत्याह अप्रथमासमानाधिकरणेत्यादि। प्रथमासमानाधिकरणे विकल्पेन यथा लटः शतृशानचौ तथा लृटोऽपि व्यवस्थितविभाषया सत्संज्ञकौ भवतः। अप्रथमासमानाधिकरणादिषु नित्यं भवतः। करिष्यन्तं पश्य। करिष्यमाणं पश्य। हे करिष्यन् हे करिष्यमाण। अर्जयिष्यन् वसति। करिष्यद्भक्तिः करिष्यमाणभक्तिः। करिष्यद्रूपः करिष्यमाणरूप इत्यप्रथमासमानाधिकरणे। प्रथमासमानाधिकरणे तु विकल्पः। करिष्यति देवदत्तः करिष्यन् देवदत्तः। करिष्यते देवदत्तः करिष्यमाणो देवदत्त इति। लृड़िति वर्त्तमाने पुनर्लृड्ग्रहणं स्थानिनिर्देशार्थम्। इतरथा हि प्रत्ययान्तरत्वं सत्संज्ञकयोर्विज्ञायेत। लृण्मात्रस्य यथा स्यादित्येवमर्थं वा। तेन योऽनद्यतने लृट् तस्यापि भवतः श्वोऽग्नीनाधास्यमानेनेति। अभिज्ञावचने लृड़ित्यस्य (३।३।११२) न भवतः। भविष्यतीत्यधिकारात्। अस्य च भविष्यत्कालविहितत्वात्। अनद्यतने पुनर्लृडुत्तरसूत्रेऽनद्यतन इति योगविभागाद् भवतीति वेदितव्यम्। लृटष्टकारष्टेरेत्वार्थः। ऋकारः स्यतासी लृलुटो (३।१।३३) रित्यत्र विशेषणार्थः।

## १५। अनद्यतने लुट्।

अनद्यतन इति बहुव्रीहिनिर्देश इति। अद्य भावो नास्मिन्नित्यनद्य-

तनः । तेनेत्यादिना बहुव्रीहिसमासाश्रयणस्य फलं दर्शयति । एतच्चानद्यतने लङित्यत्र (३।२।१११) व्याख्यातप्रायमिति तत एवावगन्तव्यम् । अद्य श्वो वा गमिष्यतीति । अद्य श्वश्च गमिष्यतीत्यर्थः । परिदेवन इत्यादि । भविष्यदनद्यतने लुङ्क्तो भविष्यत्सामान्ये न प्राप्नोति । इष्यते च । एतदर्थमिदमुच्यते । परिदेवनमनुशोचनम् । श्वस्तनीति । लुट इयमन्याचार्यसंज्ञा । वक्तव्येति । व्याख्येया । तत्रेदं व्याख्यानम् । ऌट् शेषे चेत्यत ( ३।३।१३ ) चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । ततः परिदेवने श्वस्तनी भविष्यत्यर्थे भविष्यतीति । अन्यस्त्वयं नु कदा गन्तेत्यादावनद्यतन एव काले लुडिति दर्शयन्नाह पदमन्वाख्यायते व्याकरणे च । तच्च पदं गन्तेत्यादिकमनद्यतन एव वर्त्तते । तस्य यदाऽनद्यतने भविष्यत्सामान्ये वा वृत्तिः सार्थात् प्रकरणाद्वा भवतीति वाक्यार्थेऽवतिष्ठते । न च वाक्यार्थः पदसंस्कारस्य निमित्तम् । किं तर्हि ? पदार्थः । तस्मादनद्यतने लुडित्येव सिद्धमिति । अनेन तु न्यायेन परिदेवने श्वस्तनीत्यादि सम्यगेतत् । लुटोऽपि टकारष्टेरेत्त्वार्थः । उकारो लुटः प्रथमस्य डारौरस इति ( २।४।८५ ) विशेषणार्थः ।

## १६ । पदरुजविशस्पृशो घञ् ।

पदेर्ण्वुल्तृचोरपवादो घञ् विधीयते । रुजिविशिभ्यामिगुपधलक्षणस्य कस्य । स्पृशेश्च पचाद्यचः । पाद इति । अत उपधाया (३।२।११६) इति वृद्धिः । यद्येवं पदमिति न सिध्यति । ननु खलु न सिध्यति । अनुदात्तं पदमेकवर्ज (६।१।१५८) मिति निपातनात् । स्पृश उपताप इति वक्तव्यमिति । उपतापो रोगः । तत्र स्पृशेर्घञ् भवतीत्येतदर्थरूपं व्याखेयमित्यर्थः । तत्रेदं व्याख्यानम् । ऌटः सद्वेत्यतो ( ३।३।१४ ) वाग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा । तेन स्पृशेरुपताप एव कर्त्तरि भवति । नान्यत्रेति । स्वरे विशेष इति । अचि हि सत्यन्तोदात्तत्वम् भवति । घञि तु पदस्याद्युदात्तत्वं स्यात् । घञो ञकारो वृद्ध्यर्थः । आद्युदात्तार्थश्च । घकारो चजोः कुघिण्ण्यतो (७।३।५२) रिति कुत्वार्थः ।

१७। सृ स्थिरे ।

सर्त्तेर्धातोरिति। सृ गतावित्यस्माद् धातोः। स्थिरे कर्त्तरीति। एतेन स्थिरग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषणं न तूपपदमिति दर्शयति। घञ् प्रत्ययो भवतीति। ऌजाद्यपवादः। कः पुनरयं स्थिरो नामेत्याह स्थिर इति कालान्तरस्थायीत्यादि। तत्रैवोपपत्तिमाह स चिरमित्यादि। सर्त्तेर्धातोर्गतिरर्थः। स च कालान्तरस्थायिन एव कर्त्तुः सम्भवति। नात्मलाभसमनन्तरनाशिनः। तस्मात् कालान्तरस्थाय्येव गतेर्धात्वर्थस्य कर्त्ता युज्यत इत्येवेह स्थिरशब्देनोच्यते। यदि कालान्तरस्थायिन एव गतिः सम्भवति स्थिरग्रहणमनर्थकम्। नह्यस्थिरः सर्त्त्यर्थस्य कर्त्तोपपद्यते। नानर्थकम्। प्रकर्षेण यः सरति तत्र कर्त्तरि प्रत्ययो यथा स्यादित्येवमर्थत्वात्। अतएव स चिरं तिष्ठन् कालान्तरं सरतीति वृत्तौ चिरग्रहणं कृतम्। चन्दनसार इति। षष्ठीसमासः। व्याधिमत्स्यबलेष्विति वक्तव्यमिति। अस्थिरार्थोऽयमारम्भः। एषु व्याध्यादिषु त्रिष्वपि घञ् भवतीत्येतदर्थरूपं व्याखेययमित्यर्थः। व्याख्यानं त्विहापि चकारानुवृत्तिमाश्रित्य कर्त्तव्यम्। अतीसार इति। उपसर्गस्य घञ्यमनुष्ये बहुलमिति (६।३।१२२) दीर्घत्वम्।

१८। भावे।

राग इति। रञ्जेश्च (६।४।२६) घञि च भावकरणयो (६।४।२७) रित्यनुनासिकलोपः। ननु च भाव इति भवतिनायं घञन्तेन निर्द्देशः क्रियत इति भवतिविषय एव प्रत्ययार्थनिर्द्देशः कृतो भवति। ततश्च भवते र्यो भावस्तस्मिन्नेव वाच्ये प्रत्ययः स्यात्। स च भवतेरेवोत्पद्यमानेन प्रत्ययेन शक्योऽभिधातुम्। अतस्तत एव प्रत्ययेन भवितव्यम्। तत् कथं पाकस्यागो राग इति पचादिभ्यो भवति? अत आह क्रियासामान्यवाचीत्यादि। क्रियासामान्यं हि सर्व्वं धात्वर्थानुगतं भवतेरर्थः। तेन क्रियासामान्यवाचिनार्थनिर्द्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति। अतः पचादिभ्योऽपि प्रत्ययो भवतीत्यभिप्रायः। ननु धात्वर्थः पूर्वापरीभूतोऽपरिनिष्पन्नः। ततो यदि तत्र वाच्ये प्रत्ययो भवति

तस्यासत्त्वभूतत्वाल्लिङ्गसंख्याभ्याम् प्रत्ययार्थस्य सम्बन्धो न सिध्यति। तत आह धात्वर्थश्चेत्यादि। एवकारः प्रत्ययव्यवच्छेदार्थः। धातुनैवोच्यते धात्वर्थो न तु प्रत्ययेन। कथं तर्हि घञादयो विधीयन्त इत्यत आह यस्तस्येत्यादि। तस्य धात्वर्थस्य सिद्धता निष्पन्नता नाम यो धर्मस्तत्र घञादयः प्रत्यया विधीयन्ते। ततो युक्तः प्रत्ययार्थस्य लिङ्गसंख्यायोगः। तस्य यो धर्मस्तस्य सत्त्वभूतत्वादित्यर्थः। भाव इति। इह पुंलिङ्गेनायं निर्देश एकवचनेन च। तेन पुंलिङ्ग एव भाव एकवचन एव प्रत्ययाः स्युः। न लिङ्गान्तरयुक्ते नापि वचनान्तरे। एवञ्च सति स्त्रियां क्तिन्नित्यत्र (३।३।९४) भावे स्त्रियामिति चैतयोः सामानाधिकरण्यं नोपपद्यते। वैयधिकरण्यं हि स्यात्। ततः स्त्रियां भावे क्तिन्प्रत्ययो न स्यात्। अर्थान्तर एव कर्मादौ स्यात्। भावे च पुंलिङ्गे पाकौ पाका इत्यत्रैकवचनं स्यात्। यथाजातीयकं ह्यर्थमुपादातुं समर्थो भावशब्दस्तथाजातीयकेऽर्थे प्रत्ययेन युक्तं भवितुं नान्यत्रेत्यत आह पुंलिङ्गमेकवचनञ्चात्र न तन्त्रमिति। सर्वलिङ्गसंख्या सम्बन्धयोग्यम् प्रातिपदिकार्थसामान्यनिमित्तं प्रत्ययनिमित्तत्वेनोपादीयते। तदेव प्रधानम्। न लिङ्गं नापि वचनम्। तत्र प्रातिपदिकार्थसामान्यं विना लिङ्गवचनाभ्यां न शक्यं निर्देष्टुमिति नान्तरीयकत्वात् (C) तयोरुपादानम्। प्रतीते तु तस्मिन् प्रातिपदिकार्थसामान्यचरितार्थत्वाल्लिङ्गवचने परित्यज्येते। यथा पलालादयो धान्यार्थमुपात्ताश्चरितार्थाः कार्यपरिसमाप्तौ। अन्यत्र तु त्यज्यन्ते। तद्वत्। तस्माल्लिङ्गान्तरे च प्रत्यया भवन्त्येव। पक्तिरिति। भावे स्त्रियां क्तिन् (३।३।९४)। पक्तमिति। नपुंसके भावे क्तः (३।३।११४)। पचनमिति। ल्युट् चेति (३।३।११५) ल्युट्। अत्रापि यदि भावे पुंलिङ्गस्तन्त्रं स्यात् ततो भावनपुंसकशब्दयोः सामानाधिकरण्यानुपपत्तेर्वैयधिकरण्यं स्यात्। ततश्च भावे नपुंसके ल्युट् न स्यात्। अर्थान्तर एव तु स्यात्। भावे च पुंलिङ्गे पचनमित्यस्य तुल्यत्वाच्चोद्यपरिहारस्योपन्यासः। अन्यथा ह्यन्यदेव भावग्रहण-

---

(C) "अन्तरशब्दो गहादिषु पठ्यते। स च विनार्थे वर्त्तते। अन्तरे भवमन्तरीयम्। तत्र नञ्समासे कृते पृषोदरादित्वाद् भाष्यकारवचनप्रामाण्याद्वा नलोपाभावः। ततः स्वार्थे कन्प्रत्ययः।"—इति (१।१।१८ भाष्यप्रदीपे) कैयटः।

मधिकृत्य लुग्टो विधानादिदमिहानुपन्यसनीयमेव स्यात् । पाकावित्यादिकं वचनान्तरे भावप्रत्ययस्योदाहरणम्

## १९ । अकर्त्तरि च कारके संज्ञायाम् ।

प्रास इति । असु क्षेपणे । प्रसेव इति । षिवु तन्तुसन्ताने । उभयत्राप्यत्र कर्म्मणि घञ् । आहार इति । हृञ् हरणे । मधुराहार इति । कर्म्मधारयः । षष्ठीतत्पुरुषो वा । मेष इति । मिष स्पर्द्धायाम् । पचाद्यच् । कर्त्तव्य इति । कर्म्मणि तव्यः । चकारः संज्ञाव्यभिचारार्थं इति । चकारोऽयं भिन्नक्रमः संज्ञायामित्यस्यानन्तरं द्रष्टव्यः । तदनेन चार्थो द्योत्यते । संज्ञायाञ्चेति चार्थं द्योतयन्नसौ संज्ञाव्यभिचाराय भवति । तेनासंज्ञायामपि च भवति । यद्येवं संज्ञाग्रहणमकृत्वा सामान्येनैव प्रत्ययो विधेयः । तत्रायमप्यर्थः । संज्ञाव्यभिचारार्थश्चकारो न कर्त्तव्यो भवति । सत्यमेतत् । तथापि बाहुल्येन संज्ञायां भवति । असंज्ञायां तु क्वचिदेवेत्यमुमर्थं सूचयितुं संज्ञाग्रहणं कृतम् । दीयत इति दायः । कर्मणि घञ् । पूर्ववद् युक् । लाभ इति । कर्मण्येव घञ् । कारकग्रहणमित्यादि । पर्य्युदासे ह्यकर्त्तरीत्युक्ते कारकग्रहणमन्तरेणापि नञिव युक्तन्यायेन (प, ७५) कर्त्तुरन्यत्र तादृशे कारक एव कर्मादौ प्रतीतिर्भवति यथाऽब्राह्मण इति ब्राह्मणसदृशे क्षत्रियादौ । तस्मात् पर्य्युदासे विनापि कारकग्रहणेन कारक एव प्रत्ययो लभ्यत इति कारकग्रहणं न कर्त्तव्यम् । प्रसज्यप्रतिषेधे तु कर्त्तव्यम् । तत्र हि क्रियाप्रतिषेधमात्रं प्रतीयते । न सदृशं वस्त्वन्तरम् । तत्र यद्यकर्त्तरि संज्ञायामित्येतावदुच्येत कर्त्तरि न भवतीत्येषोऽर्थः प्रतीयेत । एवञ्च विधायकस्य वाक्यान्तरस्याभावात् कर्मादिषु प्रत्ययो न स्यात् । क्व तर्हि स्यात् ? अनिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थे । ननु च विहितः स्वार्थे पूर्व्वेणैव । नैतदस्ति । धात्वर्थस्य हि सिद्धता नाम यो धर्मस्तत्र घञादयो विधीयन्त इत्युक्तम् । तस्मात् प्रसज्यप्रतिषेधे कारकग्रहणं कर्त्तव्यम् । यदि हि पर्य्युदासे कारकग्रहणमन्तरेणापि सिध्यति स एवाश्रयिष्यते । तत् किमर्थं कारकग्रहणं क्रियत इत्यत आह तत् क्रियत

ृतप्रादि । यदि तर्हि पर्य्युदास एवैष नञ्समासः स्यात् कारकग्रहण-
मनर्थकं स्यात् । विनापि हि तेन कारक एव प्रत्ययो लभ्यते । प्रसज्य-
प्रतिषेधे तु सति कारकग्रहणमर्थवद् भवति । नहि तत्र विनापि तेन कारके
प्रत्ययो लभ्यते । इदञ्चानन्तरमेव प्रतिपादितम् । तस्मात् कारकग्रहणेन
प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञाप्यते । तेनादेच उपदेशेऽशितीत्यत्र
(६।१।४५) प्रसज्यप्रतिषेधे समासो लभ्यते । ततश्च यदुक्तमनैमित्तिकमात्त्वं
शिति प्रतिषेध इति तदुपपन्नं भवति । किं पुनः कारणं तत्र प्रसज्यप्रतिषेध
आश्रीयते ? प्रागेव प्रत्ययोत्पत्तेरनिमित्तक आत्त्वे कृते सुग्लः सुम्ल इत्यात-
श्चोपसर्गे इति (३।१।१३६) को यथा स्यात् । पर्य्युदासे तु तत्राश्रीयमाणे
शितोऽन्यत्र त्वजादौ प्रत्यये परभूत आत्त्वेन भवितव्यम् । ततश्च ग्लायति-
प्रभृतिभ्य आकारान्तलक्षणः प्रत्ययो न स्यात् । ननु चाचार्य्यप्रवृत्ति-
र्ज्ञापयति भवन्त्येजन्तेभ्य आकारान्तलक्षणः प्रत्यय इति । यदयं कबाधनार्थं
दावामश्चेत्यणं (३।२।२) शास्ति तस्मादशितीति पर्य्युदासेऽप्याश्रीयमाणे
ज्ञापकादेजन्तस्याकारान्तलक्षणः प्रत्ययः सिध्यत्येव । नैतदस्ति । कर्मोप-
पदविषयमेवैतज् ज्ञापकं विज्ञायते । तस्मादशितीत्यत्र प्रसज्यप्रतिषेध
एवाश्रयितुं युक्तः । तस्य चास्तित्वमिह कारकग्रहणेन ज्ञाप्यते । किं पुनः
कारणं प्रसज्यप्रतिषेधो न सिध्यति यत स्तदस्तित्वज्ञापनं प्रतिपन्नं क्रियते ?
असामर्थ्यं कारणम् । सामर्थ्ये हि सति समासेन भवितव्यम् । नच तत्
प्रसज्यप्रतिषेधे । तथाहि तत्र नञ् क्रियया सम्बद्धः । नोत्तरपदेन ।

## २० । परिमाणाख्यायां सर्व्वेभ्यः ।

एकस्तण्डुलनिश्चाय इति । ग्रहवृदृनिश्चिगमश्चेत्यपि ( ३।३।५८ ) प्राप्ते
अप् । द्वौ शूर्पनिष्पावाविति । अत्रापि ऋदोरबित्यऽपि (३।३।५७) प्राप्ते ।
इदुदुपधस्य चाप्रत्ययस्येति (८।३।४१) विसर्जनीयस्य षत्वम् । द्वौ काराविति ।
कृ विक्षेपे । ननु च द्वौ शूर्पनिष्पाववित्यत्र निरभ्योः पूल्वो ( ३।३।२८ )
इत्यनेन घञ् सिद्धः । तत् किमर्थमिदमिहोक्तम् । एवं मन्यते । अन्यार्थे
सर्वग्रहणे क्रियमाणे परिमाणाख्यायां वाऽन्यत्रैव सिद्धम् । निष्पूर्वा-

दपि ह्यप्प्रत्ययो युक्तः। निरभ्योः पूल्वोरित्यस्य (३।३।२८) तु यत्र परिमाणाख्या न गम्यते सोऽवकाश इति। कः पुनस्तेन वानेन वा घञि सति विशेषः? को न्यायो वाख्यायते? न कश्चित्। ननु च धातोरिति सामान्यमधिकृतम्। न धातुविशेष इति। अन्तरेणापि सर्वग्रहणं धातुमात्राद् घञ् भविष्यति। तत् किमर्थं सर्वग्रहणमित्याह सर्वग्रहणमित्यादि। किं पुनः कारणमसति सर्व्वग्रहणेऽपो बाधा न सिध्यतीत्याह पुरस्तादित्यादि। पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति। सति सर्वग्रहणे घञयमनन्तरमचमेव बाधेत नापम्। सर्वग्रहणे तु सत्यपमपि बाधते। तस्मादपोऽपि बाधा यथा स्यादिति सर्वग्रहणम्। ननु च परिमाणशब्दोऽयं प्रस्थादिषु रूढ़ो न संख्यायाम्। तत् कथं परिमाणाख्यायां प्रत्ययो विधीयमान एकस्तण्डुलनिश्चाय इत्यादौ संख्यायां गम्यमानायां भवतीत्यत आह आख्याग्रहणमित्यादि। आख्याग्रहणमिह रूढ़ेर्निरासस्त्यागो यथा स्यादित्येवमर्थं कृतम्। तेन रूढ़ौ त्यक्तायां संख्यापि गृह्यते। आख्याग्रहणसामर्थ्याद्धि परिमाणशब्दः क्रियाशब्दो जायते। परिमीयते परिच्छिद्यते येन तत् परिमाणम्। संख्ययापि च परिमीयत इति परिमाणम्। अतो युक्तं तस्यापि ग्रहणम्। यदि सर्वग्रहणात् परमप्यपं घञ् बाधते स्त्रीप्रत्ययानपि बाधेतेत्यत आह घञनुक्रमणमित्यादि। अजपोर्विषये यद् घञन्तं तस्यानुक्रमणं विधानम्। तस्मादजपावेव घञा बाध्येते इत्यभिप्रायः। अतएवाह स्त्रीप्रत्ययास्तु न बाध्यन्त इति। कुतः पुनरयमर्थो लभ्यते? सर्वेभ्य इति पञ्चम्यन्तेन निर्देशात्। पञ्चम्यन्तनिर्देशे हि सर्वशब्दो धातुसमानाधिकरणो विज्ञायते। तेन प्रकृत्याश्रयस्यापवादस्य सर्वग्रहणाद् बाधा भवति। नार्थाश्रयस्य। यदि त्वर्थाश्रयोऽप्यपवादो बाधितुमिष्टः स्यात् तदा सर्वस्मिन्निति सर्वशब्दं सप्तम्यन्तमुच्चारयेत्। एका तिलोच्छ्रितिरिति। श्रिञ उत्पूर्वात् स्त्रियां क्तिन्। स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वम्। शश्छोऽटीति (८।४।६३) छत्वम्। दारजारावित्यादि। दारजारशब्दौ निपात्येते। किमत्र निपात्यते? दृ विदारणे जॄष् वयोहानौ। आभ्यां हेतुमण्णयन्ताभ्यां कर्त्तरि व्रजादिषु प्राप्तेषु घञि णिलुक्। ननु च णेरनिटीति (६।४।५१) णिलोपे हि सति

जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति (ग, सू, १८८) मितृसंज्ञायां सत्यां णिलोपे कृतेऽपि प्रत्ययलक्षणेन जीर्य्यतेर्मितां ह्रस्वत्वं प्रसज्यते। अस्तु तर्हि मितां ह्रस्वत्वम्। पुनर्घञाश्रया वृद्धिर्भविष्यतीति चेदयुक्तमेतत्। नहि घञाश्रया वृद्धिः प्राप्नोति। अचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावे सति णिचा व्यवहितत्वात्। लुकि तु सति तस्यापरनिमित्तत्वादसति स्थानिवद्भावे घञमाश्रित्य वृद्धिर्भवति। न च प्रत्ययलक्षणेन ह्रस्वत्वं प्रसज्यते। न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणप्रतिषेधात्। तस्माल्लुग् वक्तव्यः।

## २१। इङश्च।

अचोऽपवाद इति। एरजिति (३।३।५६) प्राप्तस्योत्तरस्यापीवर्णान्ताद् घञ् विधीयमानो ऽच एवापवादो वेदितव्यः। अध्याय इति। कर्मणि घञ्। तदन्ताच्च वा ङीषिति। योऽयमपादाने घञ् तदन्तान् ङीष् प्रतिपाद्यः। तत्रेदं प्रतिपादनम्। वोतो गुणवचनादित्यत्र (४।१।४४) वेति योगविभागः कर्त्तव्यः। तेनापादाने स्त्रियामिङो यो घञ् विहितस्तदन्तान् ङीष् भविष्यतीति। यदा च पुंयोगो न विवक्ष्यते तदा ङीष् प्रतिपाद्यः। यदा तूपाध्यायस्य स्त्रीति पुंयोगो विवक्ष्यते तदा पुंयोगादाख्याया (४।१।४८) मित्येव ङीष् सिद्धः। उपेत्याधीयतेऽस्या उपाध्यायी। शॄ वायुवर्णनिवृतेष्विति। शॄ हिंसायाम्। अस्माद्वाय्वादिषु वाच्येषु घञ् प्रतिपाद्यः। प्रतिपादनं तु तमेव चकारमनुक्तसमुच्चयार्थं कृत्यल्युटो बहुल (३।३।११३) मिति बहुलग्रहणं वाश्रित्य कर्त्तव्यम्। निवृतं निवारणम्। शीतादिदुःखोपशम हेतुर्निवारणमुच्यते। अकृतनीशार इति। अकृतशीतनिवारण इत्यर्थः। पूर्ववदुपसर्गस्य दीर्घत्वम्।

## २२। उपसर्गे रुवः।

अपोऽपवाद इति। ऋदोरबिति (३।३।५७) प्राप्तस्य। उत्तरसूत्रेणाप्युवर्णान्ताद् घञ् विधीयमानोऽप एवापवादो वेदितव्यः।

२३। समि युद्रुदुवः।

२४। श्रिणीभुवोऽनुपसर्गे।

अनुपसर्गेभ्य इति। अविद्यमान उपसर्ग एषामिति बहुव्रीहिः। अनुपसर्गेभ्य इति। पञ्चम्यन्तेन विवरणं कुर्वन् सूत्रेऽनुपसर्ग इति सुब्व्यत्ययेन पञ्चम्यर्थ एषा सप्तमीति दर्शयति। कथं प्रभावो राज्ञ इति। अनुपसर्गवचनादिह प्रशब्द उपसर्ग उपपदे न भवितव्यमिति भावः। कथं नयो राज्ञ इति। अनुपसर्गाद् घञात्र भवितव्यमिति मन्यते।

२५। वौ क्षुश्रुवः।

विक्षाव इति। टुक्षु शब्दे।

२६। अवोदोर्नियः।

उन्नाय इति। यरोऽनुनासिकेऽनुनासिको वेति (८।४।४५) वानुनासिकः। कथमुन्नयः पदार्थानामिति। उच्छब्दोपपदत्वाद् घञात्र भवितव्यमित्यभिप्रायः।

२७। प्रे द्रुस्तुस्रुवः।

२८। निरभ्योः पूल्वोः।

सामान्येन ग्रहणमिति। विशेषानुपादानात्। यथासंख्यमुपसर्गसम्बन्ध इति। निसोपसर्गेण पुवः सम्बन्धः। अभिना लूञः। ननु च पूञ्पुङ् लूञस्त्रयो धातवः। उपसर्गौ द्वौ। अतो वैषम्याद् यथासंख्येन न भवितव्यम्। पूरूपमुत्सृष्टानुबन्धसामान्यमेकमेव। ततो नास्ति वैषम्यमित्यदोषः।

२९। उन्न्योर्ग्रः।

ऋदोरबिति (३।३।५७) प्राप्तस्यायमपवादः। उत्तरत्रापि ऋकारान्ताद् घञ् विधीयमानोऽप एवापवादो वेदितव्यः। द्वयोरपि ग्रहणमिति। विशेषानुपादानात्।

३० । कॄ धान्ये ।

धान्यमिह प्रकृत्यर्थो वा स्यात् प्रत्ययार्थो वा स्यात् ? प्रकृत्यर्थस्तावन्नोपपद्यते । धान्यस्य द्रव्यत्वात् । धातोश्च क्रियावाचित्वात् । प्रत्ययार्थस्तूपपद्यते धान्यम् । किन्तु प्रत्ययेनाभिहितत्वादुत्कारो धान्यस्येति धान्यशब्दस्य प्रयोगो न प्राप्नोति । अथापि प्रयोगः स्यादेवमपि प्रत्ययार्थेऽन्तर्भूतत्वाद् षष्ठी नोपपद्यत उत्कारो धान्यस्येति । सामानाधिकरण्यमेव प्रत्ययान्तेन स्यात् । एवं हि प्रत्ययार्थो भवति यदि प्रत्ययान्तेन सामानाधिकरण्यं भवति यथा दृतिर्हरिः पशुरिति । तस्मान्नेदम् प्रत्ययार्थो नापि प्रकृत्यर्थः । अपि तु प्रकृत्यर्थविशेषणमिति मत्वाह धान्यविषयश्चेत्यादि । विक्षेपार्थस्येति । कॄ विक्षेप इत्यस्य । न हिंसार्थस्येति । कॄ हिंसायामित्यस्य ग्रहणं न भवति । किं कारणमित्याह अनभिधानादिति । शब्दशक्तिस्वाभाव्यादुत्कारनिकारशब्दाभ्यां धान्यविषयो विक्षेप एवाभिधीयते । न हिंसा । यस्य चार्थः प्रत्ययान्तेनाभिधीयते तस्यैव ग्रहणं युक्तम् । नेतरस्य । उत्कारो धान्यस्येति । विक्षेपो धान्यस्येत्यर्थः ।

३१ । यज्ञे समि स्तुवः ।

समेत्य स्तुवन्ति यस्मिन् देश इत्यादिना संस्तावशब्दस्याधिकरणसाधनत्वं दर्शयति ।

३२ । प्रे स्त्रोऽयज्ञे ।

बर्हिष्प्रस्तर इति (D) । इदुदुपधस्य चाप्रत्ययस्येति (८।३।४१) विसर्जनीयस्य षत्वम् ।

३३ । प्रथने वावशब्दे ।

तृणविस्तार इति । तृणाच्छादनमित्यर्थः ।

---

(D) In the printed काशिका, there is some omission in this Rule, viz:—the प्रत्युदाहरण is not given. The wanting portion is अयज्ञ इति किम् ? बर्हिष्प्रस्तरः । Both the न्यास and the पदमञ्जरी quote and comment on बर्हिष्प्रस्तरः ।

## ३४। छन्दोनाम्नि च।

छन्दःशब्दोऽयमस्त्येव मन्त्रब्राह्मणे। अस्त्यन्यदक्षराणामियत्ताविशिष्टवृत्ते यस्य गायत्र्यादयो विशेषाः। तदिह कतरस्तदर्थो गृह्यत इत्याह वृत्त-मित्यादि। अत्रैवोपपत्तिमाह नामग्रहणादिति। यद्यत्र मन्त्रब्राह्मणमिष्टं स्यान्नामग्रहणं न कुर्य्यात्। छन्दसीत्येव ब्रूयात्। एवमपि ह्युच्यमाने मन्त्रब्राह्मणग्रहणं लभ्यत एव यथा बहुलं छन्दसीत्यादौ (२।४।३८) वाक्ये। तस्मान्नामग्रहणाद् वृत्तमिह च्छन्दो गृह्यते। विष्टारपङ्क्तिरिति। छन्दोनाम्नि चेति (८।३।९४) षत्वम्। विष्टारशब्द एवात्र घञन्तश्छन्दो-नामेति कस्यचिद् भ्रान्तिः स्यात्। तन्निराकरणायाह विष्टारपङ्क्तिशब्दो-ऽयमित्यादि। तत्र विष्टारपङ्क्तिशब्देऽवयवत्वेन वर्त्तत इति। घञन्तं शब्द-रूपमिति सम्बन्धनीयम्। यदि घञन्तं शब्दरूपं न च्छन्दोनाम किन्तु विष्टार-पङ्क्तिशब्दस्तत्र घञन्तरूपमवयवत्वेन वर्त्तत एवं तर्हि च्छन्दोनाम्नीत्येतत् कथमुन्नीयते? अस्य हि च्छन्दोनाम्नि गम्यमान इत्येषोऽर्थः। प्रत्ययान्तं छन्दो नाम भवतीति यावत्। एवञ्चार्थ एवं सति नोपपद्यत इत्याह च्छन्दो-नाम्नीत्यधिकरणसप्तम्येषेति। एतेन च्छन्दोनाम्नि प्रत्ययान्तस्याधिकरणभूते प्रत्ययो भवतीत्ययमत्रार्थो वेदितव्यः। न च्छन्दोनाम्नि गम्यमान इत्येष इति दर्शयति।

## ३५। उदि ग्रहः।

अपोऽपवाद इति। ग्रहवृदृनिश्चिगमश्चेति (३।३।५८) प्राप्तस्य। छन्दसि त्वित्यादि। यज्ञपात्रविशेषो येनाहुतिर्दीयते तत् स्रुगुच्यते। तस्योद्यमन-मूर्द्धनयनम्। निपातनमधस्तान्नयनम्। एतयोरर्थयोर्ग्रहेश्छन्दसि विषये घञिष्यते। स च कृत्यल्युटो बहुलमिति (३।३।११३) लभ्यत इति वेदितव्यम्। निग्राभमिति। हृग्रहोर्भश्छन्दस्युपसंख्यानाद् (८।२।३५, वा) धकारस्य भकारः।

## ३६। समि मुष्टौ।

ग्रहेः क्रियावाचित्वान् मुष्टेश्चाक्रियात्मकत्वात् तत्र ग्रहेर्न सम्भवति।

तस्मान्मुष्टिग्रहे योऽर्थस्तस्य विषयो विज्ञायत इत्याह मुष्टिविषयश्चेद् धात्वर्थो भवतीति । अस्त्येवायं मुष्टिशब्दः परिमाणे शाकस्य मुष्टिरिति । अस्त्यङ्गुलीनां रचनाविशेषे यथा हन्ति मुष्टिनेति । तत्र यदीह परिमाणवृत्तेर्ग्रहणं स्यादस्य सूत्रस्य वैयर्थ्यं स्यात् । परिमाणाख्यायां सर्वेभ्य (३।३।२०) इत्येव सिद्धत्वात् । तस्मादङ्गुलीनां रचनाविशेषवृत्तेर्ग्रहणं विज्ञायत इत्याह मुष्टिरङ्गुलिसन्निवेश इति । सन्निवेशो रचनाविशेषः । अहो मल्लस्य संग्राह इति । मुष्टेर्दार्ढ्यमित्यर्थः । अतएवाह दृढमुष्टितयाख्यायत इति ।

## ३७ । परिन्योर्नीणोर्द्यूताभ्रेषयोः ।

पदार्थानामित्यादि । पदार्थशब्दो वस्तुवाची । कुत्सितश्चारोऽपचारः । यथाप्राप्तस्याकरणमित्यर्थः । यथाप्राप्तस्याकरणमसाध्वेतदिति लोके कुत्स्यते । तस्मादन्यः शास्त्रश्चारोऽनपचारः । एतमेवार्थं पर्य्यायान्तरेण व्यक्तीकर्तुमाह यथाप्राप्तस्य करणमिति । यद् यत् प्राप्तमिति यथाऽसादृश्य इति (२।१।७) वीप्सायामव्ययीभावः । करणं सम्पादनम् । एतदुक्तम्भवति । युक्तेरागमाल्लोकप्रसिद्धेर्वा यः पदार्थानां प्राप्नोति तस्य सम्पादनमभ्रेष इति । भ्रेष चलने । भ्रेषणं भ्रेषः । स्वरूपात् तच्चलनं प्रच्यवनम् । अभ्रेषो भ्रेषस्वरूपादचलनम् । एवं हि पदार्थस्वरूपादप्रचलिता भवन्ति यदि प्राप्तं नातिवर्त्तन्ते । परिणायेनेति । उपसर्गादसमासेऽपि णोपदेशस्येति (८।४।१४) णत्वम् । हन्तीति । बाधते । समन्तान्नयनेनेति । परिणायेनेत्यस्येदमर्थकथनम् ।

## ३८ । परावनुपात्यय इणः ।

अनतिपात इति । अनतिक्रम इत्यर्थः । अतिपात इत्यर्थ इति । अतिक्रम इत्यर्थः ।

## ३९ । व्युपयोः शेतेः पर्य्याये ।

पर्य्यायोऽनुपात्यय एव । तत्रानुपात्ययग्रहणानुवृत्त्यैव सिद्धे पर्य्यायग्रहणं बाधकबाधनार्थम् । अभिविधिविवक्षायां परिमाणमपि बाधित्वा घञेव

यथा स्यात्। एवञ्चार्थे शब्दाधिक्यादर्थाधिक्यं भवतीति लभ्यते। नतु पर्य्यायशब्दोऽस्यार्थस्य वाचकः।

४० । हस्तादाने चेरस्तेये ।

हस्तादानग्रहणेनेत्यादि। हस्तेनोपायान्तरनिरपेक्षेणोपादानम्। प्रत्यासत्तिस्तत एव वस्तुनो भवति। तस्माद्धस्तादानग्रहणेन ग्राह्यस्य वस्तुनः प्रत्यासन्नतोपलक्ष्यते। हस्तादानशब्दाभिधेयस्यार्थस्य प्रत्यासत्तेः साहचर्य्यात्। वृक्षशिखर इत्यादि। वृक्षशिखरग्रहणेनादेयस्याप्रत्यासन्नत्वं सूचयति।

४१ । निवासचितिशरीरोपसमाधानेष्वादेश्च कः।

राशीकरणमिति। प्रकीर्णकस्यैकत्र करणमित्यर्थः। चिखल्लिनिकाय इति। चिखल्लिर्जनपदः। तस्य निकायो निवासः। अथादिग्रहणं किम्? अर्थस्य मा भूत्। यद्येवं चः क इति वक्तव्यम्। एवं तर्हि यदा यङ्लुगन्तादुत्पद्यते तदान्त्यविकारेऽन्त्यसदेशस्येति (प, १०४) द्वितीयस्य चकारस्य मा भूदित्येवमर्थमादिग्रहणम् (E)।

४२ । सङ्घे चानौत्तराधर्य्ये ।

एकधर्मनिवेशेनेति। एकधर्मानुगमनेनेत्यर्थः।

४३ । कर्मव्यतिहारे णच् स्त्रियाम् ।

धातोरित्यधिकारा ( ३।१।९१ ) द्धातुवाच्यं यत् कर्म तदेव गृह्यते। न साधनकर्म। नहि धातोस्तत्र वृत्तिरस्तीति मत्वाह कर्म क्रियेति। चकारो विशेषणार्थ इति। अन्तोदात्तार्थश्चकारः कस्मान्न भवति? नार्हत्यन्तोदात्तार्थो भवितुम्। णजन्तादञो विधानात्। सतिशिष्टस्वरेणाद्युदात्तेन भवितव्यम्। तत्र कुतोऽन्तोदात्तस्य सम्भवः? तस्माद् विशेषणार्थ एव चकारः। स्त्रियामित्युच्यमाने प्रज्ञाश्रद्धार्चाभ्यो णः ( ५।२।१०१ ) इति प्राप्नोत्यत्रापि स्यात्। व्यावक्रोशीत्यादि। क्रुश आह्वाने। लिख अक्षरविन्यासे। हसे हसने। एभ्यो णच्। णचः स्त्रिया ( ५।४।१४ ) मिति

(E) यङ्लुगन्ताद् यथा शोमयनिकेचाय इति। गोमयानां पुनः पुना राशीकरणमित्यर्थः।

स्वार्थेऽञ् । टिड्ढाणञिति ( ४।१।१५ ) ङीप् । न कर्मव्यतिहार (७।३।६) इत्यैजागमप्रतिषेधः । आदिवृद्धिरेव भवति । व्यतिपाक इति । तत्र पुंलिङ्गत्वाद् भावस्य घञ् भवति । अथ स्त्रियां क्तिन्नित्यस्मिन्नेव ( ३।३।९४ ) प्रकरणे णच् कस्मान्नोक्तः ? कः पुनरेवं सति गुणो भवति ? हिः स्त्रियां ग्रहणं न कर्त्तव्यं भवति । अस्ति गुणः । वासरूपविधिस्तु न स्यात् । अस्त्रियामिति ( ३।१।९४ ) प्रतिषेधात् । ततश्च क्तिनो णचा समावेशाभावाद् व्यावक्रुष्टिरिति न सिध्येत् । इह तु क्रियमाणे णच् सिध्यति यस्माद् वासरूपोऽस्त्रिया ( ३।१।९४ ) मित्यत्र स्त्रीग्रहणस्य च स्वरितत्वात् स्त्र्यधिकारविहितप्रत्ययविषय एवास्त्रियामिति ( ३।१।९४ ) प्रतिषेधो विज्ञायते । न स्त्रीप्रत्ययमात्रविषये । तस्माद् यथान्यासमेव न्याय्यम् । व्यावचोरी व्यावचर्चीति । चुर स्तेये चर्च अध्ययने । आभ्यां चुरादिणिजन्ताभ्यां ण्यासश्रन्थो युजिति ( ३।३।१०७ ) युच् प्राप्नोति । स च विशेषविहितत्वात् परत्वाच्च बाधकः । तथापि तद्विषये तु णजेवेष्यते । व्यतीक्षा व्यतीहेति । ईक्ष दर्शने । ईह चेष्टायाम् । आभ्यां गुरोश्च हल ( ३।३।१०३ ) इत्यकार एव प्रत्ययो भवति । न णच् शक्यः कर्त्तुम् । यस्मात् क्वचिद् बाधकविषये स दृश्यत । न सर्वत्र । बाधकत्वं त्वकारप्रत्ययस्य पूर्ववद्वेदितव्यम् । व्यातुक्षीति । उक्ष सेचने । अत्र बाधकस्याप्यकारस्य विषये णजेव भवति । तदेतद् वैचित्र्यं कथं लभ्यत इति ? न कथञ्चित् । तल्लाभहेतोरभावादिति भावः । कृत्यल्युटो बहुल (३।३।११३) मित्यनेन । अतो हेतोर्वैचित्र्यमेतल्लभ्यत इति दर्शयति ।

## ४४ । अभिविधौ भाव इनुण् ।

सांकूटिनमिति । कूट दाहे । अणिनुण ( ५।४।१५ ) इतीनुणन्तात् स्वार्थिकोऽण् । इनण्यनपत्य ( ६।४।१६४ ) इति प्रकृतिभावान्नस्तद्धित (६।४।१४४) इति टिलोपो न भवति । संराव इति । उपसर्गे रुव (३।३।२२) इति घञ् । संद्राव इति । अत्रापि समि युद्रुदुव (३।३।२३) इति । ननु च भाव इति वर्त्तत एव ; तत् किमर्थं पुनस्तद्ग्रहणमित्याह भाव इति

वर्त्तमान इत्यादि। भावग्रहणमिहातिरिच्यते। तदतिरिच्यमानं वासरूपनिरासार्थं विज्ञायते। तेन क्तेन सहेनुणः समावेशो न भवति। ननु च कारक इत्यपि (३।३।१९) वर्त्तते। ततस्तन्निवृत्त्यर्थं भावग्रहणं कस्मान्न भवति ? एवं मन्यते। भावे कारक इति द्वये प्रकृतेऽपि प्रयोगदर्शनवशाद्व्यवस्था भवति यथा णचः। स हि द्वयेऽपि प्रकृते लक्ष्यदर्शनानुरोधात् पुनर्ग्रहणमन्तरेणापि यथा भाव एव विज्ञायते न कारके तथात्रेनुणपि भाव एव विज्ञास्यते। तस्माद्वासरूपविधिनिरासार्थमेव पुनर्भावग्रहणं युक्तमिति। यद्येवं तर्हि यथा घञेनुणः समावेशो न भवति तथा ल्युटापि न स्यादित्यत आह लुटा त्वित्यादि। गतार्थम्। इनुणो णकारो वृद्ध्यर्थः। उकार उच्चारणार्थः।

४५। आक्रोशेऽवन्योर्ग्रहः।

ग्रहवृदृनिश्चिगमश्चेत्यादिना (३।३।५८) प्राप्ते वचनम्। दृष्टानुवृत्तिसामर्थ्यादिति। प्रयोगोपस्थानेन घञोऽनुवृत्तिसामर्थ्यं दृष्टम्। इनुणस्तु कल्पयितव्यम्। दृष्टसामर्थ्ययोश्च सन्निधौ दृष्टसामर्थ्यग्रहणं न्याय्यम्। अतो घञेवानुवर्त्तत इत्येके। एवं तु ग्रहवृदृनिश्चिगमश्चेत्यादावपि सूत्रे (३।३।५८) घञेवानुवर्त्तते। नाप्। तस्मादन्यथा व्याख्यायते। दृष्टमनुवृत्तिसामर्थ्यमधिकृतस्य यत्र तद् दृष्टानुवृत्तिसामर्थ्यम्। तत् पुनः स्वरितत्वम्। ततो हि शास्त्रेऽधिकृतस्य शब्दस्यानुवृत्तौ सामर्थ्यं दृश्यते। तदेतदुक्तं भवति। घञ एव स्वरितत्वं प्रतिज्ञायते। नेनुणः। तस्मात् स्वरितत्वाद् घञेवानुवर्त्तते। नेनुणिति।

४६। प्रे लिप्सायाम्।

४७। परौ यज्ञे।

४८। नौ वृ धान्ये।

अपोऽपवाद इति। ग्रहवृदृनिश्चिगमश्चेत्यादिना ( ३।२।५८ ) प्राप्तस्य। नीवारा नाम व्रीहयो भवन्तीति। एतेन यद्यपि धान्यशब्देन सामान्यवाचिनायं व्युत्पाद्यते तथापि प्रत्ययान्तं शब्दशक्तिस्वाभाव्याद् धान्यविशेष एव वर्त्तत इति दर्शयति। उपसर्गस्य घञ्यमनुष्ये बहुलमिति ( ६।३।१२२ ) दीर्घत्वम्। निवरीत।

निविर्यत इति निवरा। स्वभावेनावन्तमपि स्त्रियां वर्त्तते। एवञ्च यद् घञबन्तो घाजन्तश्चेति लिङ्गाधिकारेऽबन्तस्य पुंलिङ्गताप्रतिपादनं तत् प्रायिकं वेदितव्यम् ।

४९ । उदि श्रयतियौतिपूद्रुवः ।

अजपोरपवाद इति। श्रयतेरिवर्णान्तत्वादचोऽपवादः। यौतिप्रभृतीनां तूवर्णान्तत्वादपः। कथं पतनान्ताः समुच्छ्रया इतीति। उच्छब्दोपपदत्वाद् घञात्र भवितव्यमिति भावः। वक्ष्यमाणमित्यादि परिहारः। यदि तर्हि विभाषाग्रहणमिह सम्बध्यते यौतिप्रभृतीनामपि विकल्पेन प्रत्ययः प्रसज्यते। व्यवस्थितविभाषया न प्रसज्यत इत्यदोषः ।

५० । विभाषाऽऽङि रुप्लुवोः ।

रौतेरुपसर्गे रुव (३।३।२२) इति नित्यं घञि प्राप्ते प्लवतेरप्युवर्णान्तत्वादपि सूत्रारम्भः।

५१ । अवे ग्रहो वर्षप्रतिबन्धे ।

ग्रहवृदृनिश्चिगमश्च (३।३।५८) इत्यादिनापि प्राप्ते तदपवादः। पक्षे घञभिधीयते। कुतश्चिन्निमित्तादिति। सत्त्वकर्मापराधाधिकारात्। (F)

५२ । प्रे वणिजाम् ।

वणिक्सम्बन्धेन चेत्यादि। तुलासूत्रं हि प्रायेण वणिजा सम्बद्धं सह-चरम्। ततः साहचर्य्याद् वणिक्सम्बन्धेन तदुपलक्ष्यते। नात्र वणिजां प्राधान्यम्। तस्मात् तदेव तु तुलादिसूत्रं तदन्यशब्दस्याभिधेयम् ।

५३ । रश्मौ च ।

रथादियुक्तानामित्यादि। कुतः पुनरेतल्लभ्यते ? यावता रश्मिशब्दः सामान्यवचनः ? यथैवासावश्वादिसंयमनार्थायां रज्ज्वां वर्त्तते तथा चन्द्रा-र्कादिसम्बन्धिष्वपि रश्मिषु ? एवं मन्यते। यथा नौ वृ धान्य (३।३।४८)

(F) सत्त्वः प्राणी। तस्य कर्मापराधः कर्मविषयो दोषः। विहितानाचरणप्रतिषिद्धाचरणनिमित्तं पा' सत्त्वकर्मापराधः।

इति धान्यशब्दस्य सामान्यशब्दस्यापि धान्यविशेष एव गृह्यते प्रत्ययान्तेन शब्दशक्तिस्वाभाव्याद् धान्यविशेषस्य वाभिधानात् तथा यद्यपि रश्मिशब्दः सामान्यवाची तथापि प्रत्ययान्तः स्वभावाद्रज्जुविशेष एव वर्त्तते। तस्मात् तथैव युक्तं ग्रहणमिति।

५४। वृणोतेराच्छादने।

वृणोतेरिति। श्नुविकरणेन निर्देशो वृङो निवृत्त्यर्थः। अत्रापि सामान्यवाचित्वे प्राग्वदाच्छादनशब्दादन्यत्र न। पक्षे ग्रहवृद्रित्यादिनाप् (३।३।५८) भवति।

५५। परौ भुवोऽवज्ञाने।

५६। एरच्।

चकारो विशेषणार्थ इति। विनापि तेन थाथादिसूत्रे (६।२।१४४) ऽप्रत्ययादित्यप्रत्ययस्यापि (३।३।१०२) ग्रहणं स्यात्। अजविधाइत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु कृत्यल्युटो बहुलमित्येत- (३।३।११३) दाश्रित्य कर्त्तव्यम्। अन्यस्तु पञ्चमी भयेन (२।१।३७) वर्षप्रमाण ऊलोपश्चास्यान्यतरस्यामिति (२।४।३२) निपातनाद् भयादीनां सिद्धिमिच्छति। न चासौ युक्ता। किमिदं भयवर्षशब्दयोर्नपुंसकलिङ्गयोरुच्चारणमुत पुंलिङ्गयोरिति सन्देहात्। वक्तव्याविति। व्याख्येयावित्यर्थः। व्याख्यानं तु तदेव बहुलग्रहणमाश्रित्य कर्त्तव्यम्। जवः सव इति। जु इत्येतस्मात् सौत्राद्धातोः षुञ् अभिषव इत्येतस्माच्चोत्तरसूत्रेणापि प्राप्ते ऽज् भवति। स्वरे विशेषः। अपि ह्नि सत्यामाद्युदात्तं पदं स्यात्। अजन्ते सत्यन्तोदात्तत्वं भवति।

५७। ऋदोरप्।

पित्करणं स्वरार्थमिति। अनुदात्तौ सुप्पितावित्यनुदात्तत्वं (३।१।४) यथा स्यात्। ऋदोरबित्यत्र ऋकारस्तपरः स्यात्। एवं सति तादपि परस्तपर इत्युकारोऽपि तस्य परः स्यात्। ततश्च तपरस्तत्कालस्येति (१।१।७०) परिभाषोपस्थानादिहैव स्याद् यवः स्तव इति। लवः पव इत्यत्र तु न

स्यात्। दकारे त्वण् सवर्णान् गृह्णातीति दीर्घादपि भवति। तस्मादुकारोऽयं सवर्णं गृह्णाति। अत्र च लिङ्गं भुवः प्रभव इति (१।४।३१) निर्देशः। तपरे तु भवतेरम् न स्यात्। ततश्च प्रभव इति निर्देशो नोपपद्यते। तस्य तु दकारस्य मुखसुखार्थत्वादन्यत् प्रयोजनं न सम्भवतीत्येतत् सर्वमालोच्याह दकारो मुखसुखार्थ इति।

## ५८। ग्रहवृदृनिश्चिगमश्च।

वृ इति वृङ्वृञोः सामान्येन ग्रहणम्। दृ इति। दृङ् आदरे। निश्चिनोतेस्त्वचोऽपवाद इति। एरजिति (३।३।५६) प्राप्तस्य। अथ निश्चि-ग्रहणं किमर्थम्? यावता नास्मादच्यपि वा विहिते कश्चिद् विशेषोऽस्ति। तदेव हि रूपमुभयत्रापि समापद्यत इत्याह निश्चिग्रहणं स्वरार्थमिति। अनुदात्तार्थमित्यर्थः। ननु च हस्तादाने चेरस्तेय इति (३।३।४०) चिनोते-र्घञ् विधीयमानो न स्यात्। निष्पूर्वादपि प्राप्नोति। अतस्तद्बाधनार्थमपि निश्चिग्रहणं युक्तम्। नैतदस्ति। निष्पूर्वादपि हि चिनोतेश्चैष घञ् पूर्वविप्रतिषेधेनेष्यते। ननु च स्वरार्थमपि निश्चिग्रहणं नोपपद्यत एव। तथापि गतिकारकोपपदात् कृदि (६।२।१०९) त्युत्तरपदप्रकृतिस्वरे प्राप्ते ऽन्त-(६।२।१४३) स्थाथघञ्क्ताजवित्रकाणामि (६।२।१४४) त्यन्तोदात्तत्वेनैव भाव्यते। तथा चापि प्रत्ययेऽपि सत्यनुदात्तत्वेनैव भवितव्यम्। नैष दोषः। निश्चिग्रहणसामर्थ्यात् थाथादिस्वरस्तस्मिन् विषये न भवति। तस्मिन्न-सत्युत्तरपदे प्रकृतिभावेनावस्थितेऽपोऽनुदात्तत्वाद्धातोश्चान्तोदात्तत्वान्निश्चय इति पदं कृत्स्वरेण मध्योदात्तं भवति। अचि सत्यन्तोदात्तं स्यात्। वशि-रण्योरित्यादि। वश कान्तौ। रण इति शब्दार्थः। अणरणेत्यादयः शब्दार्था धातवः। तयोर्वशिरण्योरप उपसंख्यानं प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्। चकारोऽत्रानुक्तसमुच्चयार्थः क्रियते। तेन वशिरण्योरप्यप् भविष्यति। घञर्थे क इत्यादि। घञर्थो भावः कर्तृवर्जितञ्च कारकम्। तत्र कप्रत्ययस्य विधानं कर्त्तव्यं स्थाद्यर्थम्। एतत्तु कृत्यल्युटो बहुल-(३।३।११३) मित्येव सिद्धम्। पा इति। लुग्विकरणपरिभाषया पानार्थस्य

ग्रहणम्। न रक्षणार्थस्य। प्रस्थ इति। आतो लोप इटि (६।४।६४) चेत्याकारलोपः। प्रस्न इति। ष्णा शौचे। आविध इति। व्यध ताड़ने। ग्रहिज्येत्यादिसूत्रेण (६।१।१६) संप्रसारणम्। विघ्न इति। गमहनेत्यादिनोपधालोपः (६।४।९८)। हो हन्तेरित्यादिना (७।३।५४) कुत्वम्। आयुधमिति। युध संप्रहारे।

५९। उपसर्गेऽदः।

अदेर्धातोरप्प्रत्ययो भवतीति। घञपवादः। इत उत्तरत्रापि हलन्तादब् विधीयमानो घञोऽपवादो वेदितव्यः। विघसः प्रघस इति। घञपोश्चेति (२।४।३८) घस्लादेशः। अथ किमर्थमदेरब् विधीयते? न घसेः प्रकृत्यन्तरादेव विधीयते? कः पुनरेवं सति गुणो भवति? अदेरपि घस्लृभावो न कर्त्तव्यो भवति। सत्यमेतत्। तथाप्युत्तरार्थमदेर्विहितम्। नौ ण चेत्यदेर्यथा (३।३।६०) स्याद् घसेर्मा भूदिति।

६०। नौ ण च।

६१। व्यधजपोरनुपसर्गे।

६२। स्वनहसोर्वा।

६३। यमः समुपनिविषु च।

६४। नो गदनदपठस्वनः।

६५। क्वणो वीणायाञ्च।

सोपसर्गार्थं वीणाया ग्रहणमिति। यदि वीणाविषयेऽप्यनुपसर्गादेव स्याद् वीणाग्रहणमनर्थकं स्यात्। अनुपसर्गात् सामान्येन विधानाद् वीणायामपि प्रत्ययः सिद्धः।

६६। नित्यं पणः परिमाणे।

परिमित इति। परिमितो मितः परिच्छिन्नः। द्वयोस्त्रयाणां चतुर्णां वा मूलकादिद्रव्याणां यो मुष्टिः परिमाणविशेषो बध्यते संव्यवहारार्थः स मूलकपण इत्यादिना शब्देनाभिधीयते।

६७। मदोऽनुपसर्गे।

विद्यामद इति। विद्यया मदः। कर्त्तृकरणे इत्यादिना (२।१।३२) समासः। उन्माद इति। अत्रापि कुगतिप्रादय इति (२।२।१८)। व्यधजपो-रनुपसर्गे (३ ३।६१) इत्यत्रैव मदिग्रहणे कर्त्तव्ये मदोऽनुपसर्गे इति सूत्रप्रणयन-मस्य विधेरनित्यत्वज्ञापनार्थम्। तेन माद इति सिद्धं भवति। (G)

६८। प्रमदसम्मदौ हर्षे।

ननु च मद इत्यनुवर्त्तते। तत्र प्रसंभ्यामिति वक्तव्यम्। एवमप्यभीष्टं सिध्यत्येव। तत् किं निपात्यत इत्यत आह प्रसंभ्यामित्यादि। रूढ़िशब्देनेह प्रमदसम्मदाभ्यामन्यस्याभूतत्वादनयोश्च रूढ़िशब्दत्वादेतावेव विवक्षिताविति गम्यते। अवधारणं चेह द्रष्टव्यं सावधारणत्वात् सर्व्ववाक्यानाम्। तेन रूढ्यर्थं निपातनम्। प्रमदसम्मदशब्दार्थमिवैषोऽर्थः संपद्यते। अनेन सूत्रेण प्रमद सम्मदाइत्यनयोरेव रूढ़िशब्दयोर्व्युत्पत्तिर्यथा स्यान्न शब्दान्तराणामित्येवमर्थं निपातनमिति यावत्। यदि हि मदिग्रहणमनुवर्त्त्य प्रसंभ्यामित्येतावदुच्येत तर्हि यदापि प्रसंभ्यां समस्ताभ्यामुत्तरो मदिर्भविष्यति तदापि प्रत्ययः स्यात्। तथा यदा प्रसमावन्यस्मादुपसर्गात् परौ भवतः प्रसभ्याश्च परो मदिर्भवति तदापि स्यात्। ततश्च प्रसम्मदोऽभिप्रसम्मदः प्रनिसम्मद इत्येवमाद्यमरूढ़ि-शब्दार्थमपि सूत्रं स्यात्। न प्रमदसम्मदार्थमेव। निपातने तु सति नियमो विज्ञायते। प्रत्येकमेवैतौ। न समस्तौ। नाप्यन्योपसर्गसहिताविति। तेन रूढ्यर्थं सूत्रं सम्पद्यते।

६९। समुदोरजः पशुषु।

७०। अक्षेषु ग्लहः।

ग्रहेरप् सिद्ध एवेति। ग्रहवृद्रित्यादिना (३।३।५८)। यद्येवं किमर्थं निपातनमित्याह लत्वार्थमित्यादि।

---

(G) हरदत्त refers to the न्यासकार by naming him directly in his पदमञ्जरी on the Rule 4. 1. 22. In this rule (3. 3. 67) too, he refers to him by the statement-अपर आह मदोऽनुपसर्गे इति सूत्रप्रणयनमस्य विधेरनित्यत्वज्ञापनार्थम्। तेन माद इति सिद्धं भवतीति and then says नातावप्रमाणितमस्ति।

७१ । प्रजने सर्त्तेः ।

७२ । ह्वः संप्रसारणञ्च न्यभ्युपविषु ।

निहव इति । ह्वेञ् स्पर्द्धायाम् । संप्रसारणे कृते गुणावादेशौ । जुहोतेरेव निप्रभृत्युपसर्गपूर्वस्य निहव इत्यादिके रूपचतुष्टये सिद्धे सति ह्वयतेर्निप्रभृति-पूर्वस्य घञ्निवृत्त्यर्थमेवेतद् वचनम् ।

७३ । आङि युद्धे ।

आह्वाय इति । आतो युक् चिण्कृतोरिति (७।३।३३) युक् ।

७४ । निपानमाहावः ।

निपिबन्ति तस्मिन्निति निपानमित्यधिकरणे ल्युट् । कस्मादाहावशब्द उदकाधारे वर्त्तत इत्याह तत्र हीत्यादि । एतेनाहावशब्दस्योदकाधारे प्रवृत्ति-निमित्तं दर्शयति ।

७५ । भावेऽनुपसर्गस्य ।

भावग्रहणमित्यादि । ननुच यथा कर्मव्यतिहारे णच् स्त्रियां (३।३।४३) मित्यत्र द्वये प्रकृते च लक्ष्यदर्शनवशाद् भाव एव प्रत्ययो विज्ञास्यते तथेहापि । तत् किं भावग्रहणेनाकर्त्तरि च कारक इत्येतन्निरासार्थेन ? सत्यमेतत् । लक्ष्यदर्शनसामर्थ्यादेव प्राप्त एष एवार्थो भावग्रहणेनाख्यायते मन्दबुद्धीनामनु-ग्रहाय । अथ यथाभिविधौ भाव इनुणित्यत्र (३।३।४४) भाव इति वर्त्तमाने पुनर्भावग्रहणं वासरूपनिरासार्थं विज्ञायते तथेहापि कस्मान्न विज्ञायते ? लक्ष्यदर्शनवशात् । दृश्यन्ते हि क्तादयः । हूतं ह्वानं हूतिरिति । घञादौ वास-रूपेण भावः ।

७६ । हनश्च वधः ।

स चान्तोदात्त इति । सूत्रे वधशब्दस्यान्तोदात्तस्योच्चारणात् । तत्रेत्या-दिनाऽन्तोदात्ते वधादेशे यदिष्टं सिध्यति तद्दर्शयति । अपि कृतेऽतो लोप (६।४।४८) इत्यकारलोपे चानुदात्तस्य च यत्रोदात्तलोप (६।१।१६१) इत्यप उदात्तत्वं भवति । घात इति । कर्मादौ कारके घञ् । हनस्तोऽचिण्णलो

(७।३।३२) रिति तत्वम् । हो हन्तेरित्यादिना (७।३।५४) कुत्वम् । चकारो भिन्नक्रमत्वादित्यादि । चकारो नादेशेन सम्बध्यत इति सम्बन्धः । कस्मान्न सम्बध्यते ? भिन्नक्रमत्वात् । यदि हनो वधश्चेत्येष चकारस्य क्रमः स्यादेव मयमादेशेन सम्बध्येत । तदनन्तरं श्रूयमाणत्वात् । अस्य तु तत्क्रमाद् भिन्नोऽन्य एव क्रमः । आदेशानन्तरमनुच्चारणात् । तस्माद् भिन्नक्रमत्वात् क्रमभेदान्नादेशेन सम्बध्यते । अपितु प्रकृतेन प्रत्ययेन । एवञ्च प्रकृतेन सम्बन्धं दर्शयितुमाह अप् चेत्यादि । अप् प्रत्ययो भवति । चकाराद्यस्तेर्यः प्राप्नोति स च । तेन घञपि भवति ।

## ७७ । मूर्त्तौ घनः ।

अभ्रघन इति । षष्ठीसमासोऽयम् । अभ्रस्य काठिन्यमित्यर्थः । यदि मूर्त्तावभिधेयायां घनशब्दो व्युत्पाद्यते घनं दधीति मूर्त्तिमतो दध्नो नाभिधानं प्राप्नोति । कथं हि नाम मूर्त्तौ व्युत्पादितस्ततोऽन्यत्र वर्त्तत इत्यत आह धर्मशब्देन धर्मी भण्यत इति । मतुब्लोपादभेदोपचारो यथा शुक्लः पटः । शुक्लशब्देन शुक्लगुणः पट इति भावः ।

## ७८ । अन्तर्घनो देशे ।

अन्तर्घन इति । अन्तर्हण्यन्ते प्राणिनोऽत्रेत्यधिकरणेऽप् । तदपि ग्राह्यमेवेति । उभयथा चाचार्य्येण शिष्याणां प्रतिपादितत्वात् ।

## ७९ । अगारैकदेशे प्रघणः प्रघाणश्च ।

## ८० । उद्घनोऽत्याधानम् ।

अत्याधानमिति । अतिशब्द उपरिभावे वर्त्तते । आदधातिः स्थापने । य उपरि निधीयते स्थाप्यते तस्मिन् सः । तदत्याधानम् । अधिकरणे ल्युट् । उद्घन इति । उद्धन्यतेऽस्मिन्नित्यधिकरणेऽप् ।

## ८१ । अपघनोऽङ्गम् ।

अपघन इति । अपहन्यतेऽनेनेति करणेऽप् ।

८२। कारणोऽयोविद्रुषु।

८३। स्तम्बे क च।

तत्र चेति। अनन्तरोक्तोऽपि घनादेश इति। मूर्त्तौ घन (३।३।७७) इत्यतो घन इत्यस्यानुवृत्तेः। स्तम्बघ्न इति। पूर्ववत् कुत्वोपधालोपौ।

८४। परौ घः।

पलिघ इति। परेश्च घाङ्कयो ( ८।२।२२ ) रिति विभाषा लत्वम्।

८५। उपघ्न आश्रये।

आश्रयशब्द इत्यादि। आश्रयणमाश्रयः सेवा। सा च यत्र प्रत्यासत्ति-स्तत्र भवतीत्याश्रयः प्रत्यासत्तिसहचरः। तस्मादाश्रयशब्दः सामीप्यं प्रत्यासत्तिमुपलचयति। तदर्थस्य प्रत्यासत्तिसाहचर्य्यात्। पर्वतोपघ्न इति। पर्वतसमीपभूतोऽर्थ उच्यते।

८६। संघोद्घौ गणप्रशंसयोः।

सङ्घोद्घाविति। संहननं सङ्घः। उत्कटं हन्यते ज्ञायत इत्युद्घः। कर्मण्यप्। कथं पुनर्हन्तिर्ज्ञाने वर्त्तते ? गत्यर्थत्वात्। सर्वेषां गत्यर्थानां धातूनां ज्ञानार्थत्वात्।

८७। निघो निमितम्।

समन्तात् मितमिति निमितशब्दः। सर्वत आरोहतः परिणाहतश्च तुल्यमित्यर्थः। एकमेवार्थं प्रसिद्धतरेण दर्शयितुमाह समारोहपरिणाह-मिति। समावारोहपरिणाहौ यस्य तत् तथोक्तम्। आरोह उच्छायः। परिणाहो विस्तारः। निघा वृक्षा इति। निर्विशेषं हन्यन्ते ज्ञायन्त इति निघाः। कर्मण्यपि समन्तात् तुल्या इत्यर्थः। एवं ते निर्विशेषं ज्ञायन्ते यदि समन्तादारोहतः परिणाहतश्च तुल्या भवन्ति।

८८। ड्वितः क्त्रिः।

उप्त्रिममिति। (H) वचिस्वपीत्यादिना (६।१।१५) संप्रसारणम्। क्त्रेः ककारो गुणप्रतिषेधार्थः।

---

(H) क्त्रेर्मम् नित्यमिति ( ४।४।२० ) क्त्रेर्मित्यं मप्।

८९ । ट्वितोऽथुच् ।

वेपथुरिति । वेपनं वेपथुः । स्वभावत एवैतदुभयं भावे भवतीति घञोऽपवादो विज्ञायते । घञ् तु वासरूपविधिनापि न भवति । अनभिधानात् । अथुचश्चकारः स्वरार्थः ।

९० । यजयाचयतविच्छप्रच्छरक्षो नङ् ।

यज देवपूजादौ । टुयाचृ याच्ञायाम् । यत प्रयत्ने । विच्छ गतौ । प्रच्छ ज्ञीप्सायाम् । रक्ष रक्षणे । अत्र स्वाभाविकत्वाद् याचेरन्येषां नङ्प्रत्ययान्तानां पुंसि वृत्तिरिति तेभ्यो नङ् न घञापवादो भवति । यथादर्शनञ्च वासरूपविधिना घञपि भवति याग इति । याचेस्तु नङन्तस्य स्वभावात् स्त्रियां वृत्तिरिति ततो नङ् गुरोश्च हल (३।३।१०३) इति प्राप्तस्याकारप्रत्ययस्यापवादः । कृत्यल्युटो बहुल (३।३।११३) मिति वचनाद्वासरूपविधिर्न भवति । ङकारो गुणप्रतिषेधार्थ इति । विच्छेर्लघूपधगुणो मा भूदित्येवमर्थः । ननु चान्तरङ्गत्वाच्छे चेति (६।१।७३) तुकैव विच्छेस्तावद् भवितव्यम् । तत्रालघूपधत्वादेव गुणो न भविष्यति । तत् किं तत्प्रतिषेधार्थेन ङकारेण ? सत्यम् । यदा तुङ् न भवति तदानर्थः । तेन यदा त्वनित्यत्वादागमशासनस्य तुङ् न भवति (I) तदावश्यं गुणप्रतिषेधार्थो ङकारः कर्त्तव्यः । अनित्यमागमशासनमितत्रस्य चैतदेव नङो ङित्करणं ज्ञापकम् । यदा तर्ह्यनितत्रत्वात् तुङ् न तदा च्छ्वोः शूडनुनासिके चेति (६।४।१९) सतुकस्य च्छकारस्य शादेशो विधीयमानः केवलस्य न प्राप्नोति । नैष दोषः । यस्माच् च्छ्वोरिति द्विच्छकारो निर्देशः । तत्रैकः सतुको द्वितीयः केवल एव । तेन केवलस्यापि शादेशो भविष्यति । यदि तु द्विच्छकारो निर्देशश्च्छ्वोरिति द्विवचनं न प्राप्नोति । बहुत्वात् स्थानिनाम् । सौत्रत्वान्निर्देशस्य बहुवचनस्य व्यत्ययेन द्विवचनं भविष्यतीत्यदोषः । अवश्यं द्विच्छकारो निर्देशः कर्त्तव्यः । अन्यथा राल्लोप ( ६।४।२१ ) इत्यत्र केवलस्य लोपो न स्यात् । केवलस्य च्छकारस्या-

---

(I) Compare the श्लोकवार्त्तिक—"दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ"विति ( १।४।५१, वा ), in which stands प्रच्छि without तुक् ; for the metre does not allow it.

प्रकृतत्वात्। वचनं तु वकारलोपार्थमेव स्यात्। यज्ञो याच्ञेति। स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वेन नकारस्य ञकारः। यत्न इति। नेड् वशिकृतीतीट्प्रतिषेधः (७।२।८)। विश्नः प्रश्न इति। च्छ्वोरित्यादिना (६।४।१९) च्छकारस्य शकारादेशः। रक्ष्ण इति। ष्टुना ष्टुरिति (८।४।४१) नकारस्य णकारः। अथ प्रच्छेर्ग्रहिज्यादि (६।१।१६) सूत्रेण संप्रसारणं प्रश्न इत्यत्र कस्मान्न भवतीत्यत आह प्रच्छेरित्यादि। किं ज्ञापकमित्याह प्रश्ने चेत्यादि (३।२।११७)।

## ९१। स्वपो नन्।

## ९२। उपसर्गे घोः किः।

किप्रत्ययो भवतीति। घञोऽपवादः। कित्करणमित्यातो लोपार्थमिति। आतो लोप इटि चेत्याकार (६।४।६४) लोपो यथा स्यादिति।

## ९३। कर्मण्यधिकरणे च।

कर्माधिकरणयोः सप्तम्या भेदेन निर्देशान्नोभयोरुपपदत्वम्। नापि प्रत्ययार्थत्वम्। तस्मात् किञ्चित् तत्रोपपदं किञ्चित् प्रत्ययार्थः। कर्मोपपदम्। अधिकरणं प्रत्ययार्थः। एष तु विभागो व्याख्यानाल्लक्ष्यदर्शनाच्च विज्ञात इत्याह कर्म्मण्युपपद इत्यादि। अथाधिकरणग्रहणं किमर्थम्? यावताऽकर्त्तरि च कारक (३।३।१९) इत्यस्यानुवृत्तेरेवाधिकरणे प्रत्ययो लभ्यत इत्याह अधिकरणग्रहणमित्यादि। असति ह्यधिकरणग्रहणेऽर्थान्तरेऽपि भावे करणादौ च कारके प्रकृतप्रत्ययः स्यात्। तस्मात् तन्निवृत्त्यर्थमधिकरणग्रहणम्।

## ९४। स्त्रियां क्तिन्।

भावादाविति। आदिशब्देनाकर्त्तुः कारकस्योपादानम्। घञजपामपवाद इति। य इकारान्तास्तेभ्योऽचोऽपवादः। य ऋकारान्ता उवर्णान्ताश्च तेभ्योऽपः। शेषेभ्यो घञः। वक्तव्य इति। व्याख्येय इत्यर्थः। व्याख्यानं तु कृत्यल्युटो बहुल (३।३।११३) मित्येतदाश्रित्य कर्त्तव्यम्। आप्तिरित्यादि।

आपृच्छ व्याप्तौ। राध साध संसिद्धौ। दीपी दीप्तौ। (J) स्रन्सु ध्वन्सु अवस्रंसने। डुलभष् प्राप्तौ। लभेति षित्त्वाद् भिदादिभ्योऽङित्यङि (३।३।१०४) प्राप्ते शेषेभ्यस्तु गुरुत्वाद् गुरोश्च हल (३।३।१०३) इत्यकारे क्तिन् विधीयते। इष्टिरिति। वच्यादिसूत्रेण (६।१।१५) संप्रसारणम्। कीर्णि र्गीर्णिः शीर्णिरिति। ऋत इद्धातोरितीत्त्वम् (७।१।१००)। रषादिसूत्रेण (८।४।११) णत्वम्। यथा रदाभ्यामित्यादिना (८।२।४२) कीर्ण इति निष्ठाया स्तकारस्य नत्वं भवति तथेहापि क्तिनः। यथा ल्वादिभ्य इति (८।२।४४) लून इत्यत्र निष्ठातकारस्य नत्वं तथा लूनिर्यूनिरित्यत्रापि क्तिनः।

## ९५। स्थागापापचो भावे।

अङोऽपवादस्य बाधक इति। स्थादिभ्य आतश्चोपसर्गे (३।३।१०६) इति प्राप्तस्याङोऽपवादस्य बाधक इत्यर्थः। पक्तिरिति। षिद्भिदादिभ्यो-ऽङित्यस्य (३।३।१०४)। प्रस्थितिरिति। द्यतिस्यतीत्यादिनेत्त्वम् (७।४।४०)। संगीतिरिति। घुमास्थादि (६।४।६६) सूत्रेणेत्त्वम्। अत्र च गामादा-ग्रहणेष्वविशेष (प, ११५) इति गै शब्दे गाङ् गताविति द्वयोरपि ग्रहणम्। पा इति। पूर्ववत् पानार्थस्य ग्रहणम्। न रक्षणार्थस्य। भावग्रहण-मित्यादि। अर्थान्तरं कर्तृवर्जितं कारकम्। तन्निवृत्त्यर्थम् भावग्रहणम्। कथमित्यादि। यद्यङोऽपवादस्यापवादोऽयं क्तिन्प्रत्ययस्तत् कथमवस्था संस्थेति सिध्यति? न कथञ्चिदित्यभिप्रायः। व्यवस्थायामित्यादि। यदिदं व्यवस्थाशब्दस्याङन्तस्य सूत्र उच्चारणमेतदेव ज्ञापकम्। अतः क्तिनात्यन्तबाधा न भवतीति। तेनावस्थेत्याद्यपि सिध्यति। अत्यन्तायेति। चतुर्थ्यन्तप्रति-रूपको निपातोऽयं यथा चिरायेति।

## ९६। मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः॥

वृषु मृषु सेचने। इषु इच्छायाम्। डुपचष् पाके। मन ज्ञाने। विद ज्ञाने। भू सत्तायाम्। वी गतिव्याप्तिप्रजनादिषु। रा आदाने।

(J) In the printed काशिका, स्रस्तिः is given. In the न्यास, it is स्रंस्तिः।

प्रकृतिप्रत्ययोरिति। प्रकृतिसामान्यविवक्षायां द्विवचनम्। अन्यथा हि बहुत्वात् प्रकृतीनां बहुवचनं स्यात्। विभक्तिविपरिणामेन सम्बन्ध इति। वृषादिभ्यो या प्रथमा तस्या अर्थात् पञ्चमीपरिणामः। तेन प्रकृति प्रत्ययोः सम्बन्धः। अन्यथा सम्बन्धानुपपत्तेः। मतिरिति। अनुदात्तोपदेशेत्यादिना(६।४।३७)ऽनुनासिकलोपः। सर्वत्रेत्यादि। मन्त्रे चामन्त्रे च सर्वत्र वृषादिभ्यः क्तिन् विहितः। पचेरपि स्थागादिसूत्रेण (३।३।९५)। यद्येवं किमर्थमिदमित्याह उदात्तार्थमिति। इषेस्त्वित्यादि। इषेरिच्छेति निपातनं वक्ष्यति। तस्मात् क्तिन् विधीयते। अन्यथा निपातनेनैवास्य बाधा स्यात्। वृषादिभ्यः क्तिप्रत्यय एव विधातव्यः। उदात्तवचनमुत्तरार्थम्। व्रजयजोर्भावे क्यबिति (३।३।९८) क्यबुदात्तो यथा स्यात्।

## ९७। ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च।

स्वरार्थं वचनमिति। नतु प्रत्ययार्थम्। स्त्रियां क्तिन्नित्येव (३।३।९४) सिद्धत्वात्। नाप्यूठर्थम्। ज्वरत्वरेत्यादिनैव (६।४।२०) सिद्धत्वात्। यौतेरिति। यु मिश्रण इत्यस्य। जवतेश्चेति। जु इत्यस्य सौत्रस्य धातोः। दीर्घत्वञ्चेति। चकारादुदात्तत्वञ्च। क्तिन् सामान्यलक्षणेनैव सिद्धः। स्यतेरिति। षोऽन्तकर्मणीत्यस्य। इत्त्वाभावोऽपि निपात्यत इति। द्यतिस्यतीत्यादिनेत्त्वं ( ७।४।४० ) प्राप्नोति। ततस्तस्याभावो निपात्यते। सनोतेर्वेति। षणु दान इत्यस्य। जनसनखना(६।४।४२)मित्यात्त्वे कृते सातिरिति सिध्यतीति शेषः। यद्येवं किमर्थं निपातनमित्याह स्वरार्थमित्यादि। असति हि निपातने सातिशब्द आद्युदात्तः स्यात्। अन्तोदात्तो यथा स्यादित्येवमर्थं निपातनम्। हन्तेर्हिनोतेर्वेति। हेतिरिति यदा हन्तेस्तदा हकारस्यैत्त्वं निपात्यते। अनुनासिकलोपस्त्वनुदात्तोपदेशेत्यादिनैव (५।४।३७) सिद्धः। यदा तु हि गतावित्यस्य तदा गुणो निपात्यते। कीर्त्तिरिति कृत संशब्दन इत्यस्माच्चुरादिणिजन्तात् ण्यासश्रन्थो युजिति ( ३।३।१०७ ) युचि प्राप्ते क्तिन्निपात्यते। उपधायाश्चेतीत्त्वम् (७।१।१०१) भवति। हलि चेति (८।२।७७) दीर्घत्वम्।

## ९८ । व्रजयजोर्भावे क्यप् ।

इज्येति । वच्यादिसूत्रेण (६।१।१५) संप्रसारणम् । यद्युदात्तं विधीयते पित्करणं किमर्थमित्याह पित्करणमुत्तरत्रेत्यादि ।

## ९९ । संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ।

भाव इति न स्वर्य्यत इत्यादि । स्थागादिसूत्रे (३।३।९५) यद्भावग्रहणं कृतं तस्यैव स्वरितत्वं न क्रियते । भावेऽकर्त्तरि च कारके संज्ञाया(३।३।१९)-मित्येष एवाधिकारः । समज्येति । अजेर्व्यघञपो(२।४।५६)रिति (K) वीभावो न भवति । संज्ञायामिति वचनात् । नहि वीभावे कृते संज्ञा गम्यते । नियतवर्णानुपूर्वीका हि संज्ञा भवति । निषद्येति । षदॢ विशरणगत्यवसादनेषु । निषीदन्ति तस्यामिति । निपत्येति । निपतन्ति तस्यामिति । मत्येति । मन्यन्ते तयेति मत्या (L) । पूर्ववदनुनासिकलोपः । ह्रस्वस्य तुक् । विदन्ति तया विद्या । सुन्वन्ति तस्यां सुत्या । शेरते तस्यां शय्या । अयङ् यि क्ङिति ( ७।४।२२ ) त्ययङादेशः । भरणं भृत्या । एति तयेतयाऽयनमिति । भृञोऽसंज्ञायामित्यत्र (३।१।११२)

संज्ञायां पुंसि दृष्टत्वान्न ते भार्य्या प्रसिध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्य्या प्रसिध्यति ॥ १ ॥

इत्युक्तम् । इह भाव इति न स्वर्य्यत इत्यभिहितम् । अतः पूर्वोत्तरवचनं व्याहतमिति मन्यमान आह कथमित्यादि । यदीह भाव इति न स्वर्य्यते तत्

---

(K) The न्यासकार ignores the वार्त्तिक घञपोः प्रतिषेधे क्यप उपसंख्यानम् (2. 4. 56, वा) ।

(L) मन्येति मुद्रितकाशिकायां पाठः । स एव हरदत्तमाधवभट्टोजिभिर्गृहीतः । तथाच हरदत्तः —"मन्या गलपार्श्वशिरा । मन्यन्तेऽनयेति कृत्वा । तया हि क्रुद्धो ज्ञायते । क्यपोऽझलादित्वादनुदात्तोपदेशेत्य (६।४।३७) नुनासिकलोपो न भवति । तदभावात् तुगपि न भवति । अन्ये तु संज्ञायामिति वचनाद् यथा समज्येत्यत्र वीभावो न भवत्येवं मनेरनुनासिकलोपः । तत्र कृते तुगपीत्याहुः । नाचाप्तवचनमस्ति ॥" इति । Evidently हरदत्त refers here, by the term अन्ये, to the न्यासकार and others who give मत्या for मन्या ।

कथं स्त्रियां भावाधिकारोऽस्तीत्युक्तम्। नहि भाव इत्यस्यर्थ्यमाणे भावाधिकारस्येहास्तित्वमुपपद्यते। भावाधिकारो भावव्यापार इत्यादि परिहारः। भावाधिकारशब्देन तत्र व्यापारो वाच्यत्वेन विवक्षितः। स पुनर्भृत्याशब्दाभिधेयभावोपगमनलक्षणः। अतएवैतदुक्तम्भवति संज्ञायां समजनिषदेत्यादिना व्युत्पादितस्य भृत्याशब्दस्य भाव एवाभिधेयत्वमुपयाति। ननु कर्त्तृवर्जितं कारकम्। तेन कर्मणि कारके भार्य्येति सिध्यतीति। ननु शास्त्रीयोऽधिकारोऽयं स्वरितत्वासङ्गात् प्रतियोगमुपतिष्ठते। स तत्र भावशब्देन विवक्षितो मा भूत्। समजन्ति तस्यां समज्या। निषीदन्ति तस्यां निषद्या। विदन्त्यनया विद्येत्येवमादीनां कारके करणादिके करणादसाधुत्वमिति न। कथं पुनर्भावेऽकर्त्तरि च कारके सर्व्वस्मिन्ननुवर्त्तमाने क्वचिद् भावः क्यबन्तस्याभिधेयभावमुपयाति क्वचिदकर्त्तृकारकमेवेत्येष नियमो लभ्यते? संज्ञावशात्। यतोत्पद्यमानेन प्रत्ययेन संज्ञा गम्यते तत्र भाव एवाभिधेयत्वं प्रतिपद्यते। इतरदुदास्ते। यत्र त्वकर्त्तरि कारके प्रत्ययेनोत्पन्नेन संज्ञा गम्यते तत्र तदभिधेयतामुपयाति। भावस्त्वौदासीन्यमवलम्बते। अकर्त्तरि च कारके संज्ञाया ( ३।३।१९ ) मिति संज्ञाग्रहणेऽनुवर्त्तमाने पुनः संज्ञाग्रहणं भावार्थम्। पूर्वकं हि संज्ञाग्रहणमकर्त्तृकारकेण सम्बद्धमिति। ततः कर्त्तृवर्जित एव कारके संज्ञायां स्यात्। न भावे। तस्माद् भावेऽपि संज्ञायामेव यथा स्यादित्येवमर्थं पुनः संज्ञाग्रहणम्। अथ कथं भृतिर्मतिरास्तुतिरिति? निपातनात्। किं पुनर्निपातनम्? कर्मणि भृतौ (३।२।२२)। मतिबुद्धिपूजार्थेभ्यश्च (३।२।१८८)। रजःक्षथास्तुतिपरिषदो बलजिति (५।२।११५)।

## १००। कृञः श च।

योगविभागोऽत्र कर्त्तव्य इति। कृञः क्यबिति भवति ततः शश्च। यथाप्राप्तश्चेति। तेन त्रीणि रूपाणि सिध्यन्ति। तत्र कृञ इति योगेन कृत्येत्येतद्रूपं सिध्यति। श चेत्यनेन क्रिया कृतिरिति चेत्येतद्रूपद्वयं क्रियत इति। यदा भावे शब्दस्तदा सार्वधातुके यक् ( ३।१।६७ )। रिङ् शयक्

लिङ्क्ष्विति (७।४।२८) रिङादेशः। यदा त्वकर्त्तरि कारके तदा यगभावाच्छ एव प्रत्यये परतो धातोरिङादेशे कृतेऽचि श्नुधात्वित्यादिना (६।४।७७) तस्येयङ् । शकारः सार्वधातुकार्थः ।

## १०१ । इच्छा ।

इषेर्भावे शप्रत्ययो भवति । अभिधानशक्तिस्वाभाव्यात् । न कारके । यगभावश्चेति । सार्वधातुके (३।१।६७) यगिति यक् स्यात् । अतस्तद-भावो निपात्यते । इच्छेति । इषुगमीत्यादिना (७।३।७७) छत्वम् । परिचर्य्येत्यादि । चर गत्यर्थः । सृ गतौ । मृग अन्वेषणे चुरादावदन्तः । अट पट गतौ । एभ्यो भावे शः । पूर्ववद् यक् । सर्त्तेर्गुणः । मृगयते रकारलोपाभावः । णेरनिटीति (६।४।५१) णिलोपः । अटाटेरति । अटते-र्द्विर्वचनमात्त्वञ्चाभ्यासस्य । जागर्त्तेरकारो वेति । यदा श स्तदा सार्वधातुके यक् (६।१।६७) । जाग्रोऽविचिण्णल्ङित्स्विति (७।३।८५) गुणः । जागरेति यदा त्वकारः ।

## १०२ । अ प्रत्ययात् ।

धातोरित्यधिकारात् (३।१।९१) प्रत्ययग्रहणं धातोर्विशेषणं विज्ञायत इत्याह प्रत्ययान्तेभ्यो धातुभ्य इति । चिकीर्षेति । चिकीर्षशब्दात् सन्नन्ताद-प्रत्ययः । पुत्रीयेति । सुप आत्मनः क्यच् (३।१।८) । क्यचि चेतीत्वम् (७।४।३३) पुत्रकाम्येति । काम्यश्चेति (३।१।९) काम्यच् । लोलूयेति । धातोरेकाचो हलादे (३।१।२२) रिति यङ् ।

## १०३ । गुरोश्च हलः ।

धातो (३।१।९१) रित्यधिकाराद् गुरुग्रहणं हल्ग्रहणञ्च तस्यैव विशेषणं विज्ञायत इत्याह गुरुमान् हलन्तो यो धातुरित्यादि । कथं पुनर्गुरोरित्युच्य-माने गुरुमान् धातुर्लभ्यते ? सामर्थ्यात् । नहि हलन्तस्य धातोः कस्यचिद् गुरुसंज्ञा विहिता । उच्यते चेदं गुरोरिति । तत्र सामर्थ्याद् गुरुमान् धातुर्गुरुसंज्ञकेनाभेदोपचारं कृत्वा गुरुशब्देनोक्त इति गम्यते । दृश्यते ह्यभेदोप-

चाराद् विनापि मतुपा तद्वतोरभिधानं यथा शुक्लः पट इति। अथ ऋच्छ्या-दिभ्य एव यथा स्यात् कुडिप्रभृतिभ्यो मा भूदित्येवमर्थो विपर्ययः कस्मान्न विज्ञायते? गुर्वन्तो यो धातुर्हल्वानिति? ज्ञापकात्। यदयं गत्यर्थ-कर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनीत्यप्रत्ययान्तस्य (२।३।१२) चेष्टा-शब्दस्य शकि शङ्कायामिति च शङ्काशब्दस्य निर्देशं करोति ततो ज्ञायते नात्र विपर्यय इति। विपर्यये हि नहि चेष्टेति गुर्वन्तो नापि शङ्केति। कुण्डे-त्यादि। कुड़ि दाहे। हुडि संघाते। ईह चेष्टायाम्। ऊह वितर्क इत्येषां रूपाणि।

## १०४। षिद्भिदादिभ्योऽङ्।

गणपरिपठितेष्वित्यादि। भिदादयोऽङन्ता एव गणे पठ्यन्ते। तेभ्यो यदि पुनरिहाङ् विहितः प्रातिपदिकेभ्यो विहितः स्यात्। तच्चायुक्तं स्यात्। धात्वधिकारात्। तस्मात् तेषु याः प्रकृतयोऽवयवभूतास्ता निष्कृष्य पृथक् कृत्वा षिद्भिदादिभ्योऽङिति भिदादिग्रहणेन निर्दिश्यन्ते। ताः पुनर्भिदिर् विदारणे। छिदिर् द्वैधीकरणे। विद ज्ञाने। चिप प्रेरणे। गुहू संवरणे। डुधाञ् धारणपोषणयोः। मिधृ मेधृ हिंसासंक्लेशनयोः। ऋ गतौ। हृञ् हरणे। डुकृञ् करणे। चि चये। अथवा चि निवासगत्योः। तॄ प्लवन-तरणयोः। धृञ् धारणे। लिख अक्षरविन्यासे। चुद समुच्छ्रये। पीड अवगाहने। डुवप बीजतन्तुसन्ताने। वस निवासे। मृजू शुद्धौ। कृप कृपायामित्येते वेदितव्याः। यदि तर्हि प्रकृतयो निर्दिश्यन्ते भिदादीनां गणे पाठोऽनर्थकः। अथ पाठः क्रियते प्रत्ययविधानमनर्थकम्। गणे पाठस्तावन्नानर्थकः। प्रसिद्ध्युपसंग्रहार्थत्वात्। प्रसिद्ध्युपसंग्रहस्तु यत्र भिदादयः समुदायाः प्रसिद्धास्तत्रैवैषां साधुत्वं यथा स्यादन्यत्र मा भूदि-त्येवमर्थः। तेन यदुक्तं भाष्ये भिदा विदारण इत्येवमादि तदुपपन्नं भवति। न च प्रत्ययविधानमनर्थकम्। असन्देहार्थत्वात्। असति हि तस्मिन् सन्देहः स्यात् किमेष्विगुपधज्ञाप्रीकिरः क (३।१।१३५) इत्येवमादिना लक्षणान्तरेण कप्रभृतयः प्रत्यया विहिता उताङ् प्रत्यय एवेति। तत्र पूर्वस्मिन् पक्षे स्त्रीत्व

विवक्षायां क्तिन् प्रसज्यते। कस्मात् ? असन्देहार्थत्वात्। अतः प्रत्यय-विधानं नानर्थकम्। आरेति। ऋदृशोऽङि (७।४।१६) गुणः। गुहा गिर्य्योषध्योरिति। गुहाशब्दो गिर्य्योषध्योरेव साधुर्भवति। नान्यत्र। गिरि शब्दश्चात्र समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इत्येकदेशे वर्त्तते। गुहेति गिरेः कश्चिदेवैकदेश उच्यते। गुहा नामौषधिः। अन्यत्र गुहेः क्तिन् भवति गूढ़िरिति। हो ढः (८।२।३१)। झषस्तथोर्धोऽधः (८।२।४०)। ष्टुना ष्टुः (८।४।४१)। ढो ढे लोपः (८।३।१४)। ढ्रलोपे पूर्वस्य दीर्घोऽणः (६।३।१११)। हारा कारा धारेति। गुणे कृते दीर्घत्वं निपात्यते। लेखा रेखेति। लिखेर्गुणो निपात्यते। पक्षे लकारस्य रेफ-आदेशः। चूड़ेति। चोदयते ऊत्वादेशो निपात्यते। उपधाया दीर्घश्च। आरा शस्त्रामिति। आराशब्दः शस्त्र्यां साधुर्भवति। अत्रापि गुणे कृते दीर्घत्वं निपात्यते। आर्त्तिरन्येति। अर्त्तेराङ्पूर्वस्य क्तिन्। उपसर्गादृति धाता(६।१।९१)वित्येकादेशः। रपरत्वम्। धारा प्रपात इति। यत्र प्रपातनं तत्र धारेति यथा जलधारा क्षीरधारेति।

## १०५। चिन्तिपूजिकथिकुम्बिचर्चश्च।

चुरादिरिति। एतच्चिति स्मृत्यामित्यादिभिः प्रत्येकमभिसम्बध्यते। युचि प्राप्त इति। ण्यासश्रन्थो युजित्यनेन (३।३।१०७)। यस्तु भ्वादौ कुम्बिः पठ्यते ततो गुरोश्च हल (३।३।१०३) इत्यकारेण भवितव्यम्। न च कुम्बेरकारेऽङि वा सति कश्चिद्विशेषोऽस्तीति नासाविह ग्रहणं प्रयोजयति।

## १०६। आतश्चोपसर्गे।

अदन्तरोरित्यादि। उपसर्गे इवोपसर्गवत्। यादृश्युपसर्गे वृत्तिः प्रत्ययोत्-पत्तिलक्षणा तादृश्येव तयोरपि भवति। तेन यथा प्रधोपधेतुपसर्गे भवति तथा अदन्तरोरपि अद्धान्तर्द्धेति। न चेयं वृत्तिरुपसंख्यानसाध्या यतः श्रद्धा-

शब्दस्तारकादिषु च(M) पाठात् साधुत्वमनुभवति । अन्तर्धाशब्दोऽपि ज्ञापकात् । यदयमन्तर्धौ ( १।४।२८ ) येनादर्शनमिच्छतीत्यन्तर्धिशब्दस्य किप्रत्ययान्तस्य निर्देशं करोति ततो ज्ञायते भवत्यन्तःशब्द उपसर्गकार्य्यस्य निमित्तमिति । अन्यथा हि तस्मिन्नुपपद उपसर्गे घोः किरिति ( ३।३।९२ ) किप्रत्ययो न स्यात् । ततश्चान्तर्धाविति (१।४।२८) निर्देशो नोपपद्यते ॥

## १०७। ण्यासश्रन्थो युच् ।

अकारस्यापवाद इति । अप्रत्ययाद् (३।३।१०२) गुरोश्च हल (३।३।१०३) इति द्वाभ्यां यथायोगं प्राप्तस्य । कथमास्येति ? न कथञ्चित् । अः स्यादासेः । अनेन सूत्रेण युज् वा भविष्यति । नान्य इति भावः । ऋहलोर्ण्यदित्यादि (३।१।१२४) परिहारः । ननु च वासरूपविधिना ण्यत्प्रत्ययः स्यात् । स च वासरूपविधिः स्त्रियां न भवति । अस्त्रियामिति (३।१।९४) प्रतिषेधात् । तत् किमुच्यत ऋहलोर्ण्यदिति (३।१।१२४) ण्यद् भविष्यतीत्यत आह वासरूपेत्यादि । एष चार्थस्तत्रैव प्रतिपादितः । उपसंख्यानमिति । प्रतिपादनमित्यर्थः । तत्रेदं प्रतिपादनम् । वक्ष्यमाणं बहुलग्रहणमुभयोरपि योगयोः शेषः । तेन घट्टिप्रभृतिभ्यो भविष्यतीति । वक्तव्य इति । व्याख्येय इत्यर्थः । व्याख्यानं तदेव बहुलग्रहणमाश्रित्य कर्त्तव्यम् । अन्वेषणेति । इष गतौ । इष आभीक्ष्ण्ये इति वा ।

## १०८। रोगाख्यायां ण्वुल् बहुलम् ।

क्तिन्नादीनामपवाद इति । आदिशब्देनाङादीनाम् । आख्याग्रहणमित्यादि । यदि प्रत्ययान्तं रोगस्य नाम भवत्येवं प्रत्ययो भवति । नान्यथेत्यस्यार्थस्य संवादनायायाख्याग्रहणम् । तेन पदान्तरवाच्ये रोगे न भवति बुभुक्षा भस्मकेनेति । बहुलग्रहणमित्यादि । रोगाख्याया अन्यत्रापि ण्वुलो विधानं व्यभिचारः । तदर्थं बहुलग्रहणम् । तेन धात्वर्थनिर्देशेऽपि सिद्धो भवति । अपरोऽर्थः । रोगाख्याया विषयाण् ण्वुलो विधेर्योऽन्यत्राप्यस्य लक्षणस्य विषये प्रवृत्तिर्व्यभिचारः सः । तदर्थं बहुलग्रहणम् । तेनैकश्रुतिपौ

(M) अत्र चकारः प्रज्ञाश्रद्धार्चाभ्यो ण इति (५।२।१०१) सूत्रेऽपि श्रद्धाशब्दस्य पाठोऽस्तीति सूचयति ।

धातुनिर्देश इत्येवमादि सर्वं संगृहीतं भवति। प्रच्छर्दिकेति। छर्द वमने चुरादिः। प्रवाहिकेति। वह प्रापणे। प्रचर्चिकेति। चर्च अध्ययने चुरादिः। अत्र वहेः ज्ञिनि प्राप्ते ण्वुल्। इतरयोस्तु युचि। शिरोऽर्त्तिरिति। अर्द हिंसायाम्। अर्द गताविति वा। खरि चेति (८।४।५५) चर्त्वम्। शिरसा सह षष्ठीसमासः। ससजुषो रुः (८।२।६६)। अतो रोरप्लुतादप्लुत इत्युत्वम् (६।१।११३)। आद् गुणः (६।१।८७)। एङः पदान्तादतीत्येते (६।१।१०९) विधयः कर्त्तव्याः। इकश्तिपाविति। ककारः कित्कार्य्यार्थः। तेन पचतिरिति सार्वधातुकनिबन्धनः शब् भवति। ननुच कर्त्तृवाचिनि सार्वधातुके शब् विधीयते। न चात्र कर्त्ता प्रत्ययार्थः। तत् कुतः शपः सम्भवः? सार्वधातुकसंज्ञार्थशित्करणसामर्थ्यादकर्त्तृवाचिन्यपि सार्वधातुके शब् भविष्यति। अन्यथा हि शित्करणमनर्थकं स्यात्। यद्येवं यगपि स्यात्। अनभिधानान्न भविष्यति। वर्णात् कार इति। वर्णादित्युच्यते। तत्रैवकार इति न सिध्यति। बहुलग्रहणसन्निधौ वचनात् क्वचिदवर्णादपि भविष्यतीत्यदोषः। अथवा करणं कारः। एवस्य कार इति षष्ठी समासोऽयम्। रादिफ इति। कारस्यायमपवादः। मत्वर्थाच्छ इति। अत्राकारलोपश्च वक्तव्यः। अभसंज्ञत्वाद्धि न प्राप्नोति। बहुलग्रहणाद्वाकारलोपो भविष्यति। इणजादिभ्यः। इक् कृष्यादिभ्य इति। अधातुनिर्देशार्थमेतत्। आज्यादयः शब्दाः संज्ञाशब्दा द्रष्टव्याः।

## १०९। संज्ञायाम्।

उद्दालकपुष्पभञ्जिकेति। नित्यं क्रीडाजीविकयोरिति (२।२।१७) षष्ठी समासः। षष्ठी पुनरत्र कर्त्तृकर्मणोः (२।३।६५) कृतीति कृद्योगलक्षणा।

## ११०। विभाषाख्यानपरिप्रश्नयोरिञ् च।

इह सूत्रे पूर्व्वमाख्यानस्य निर्देशः। पश्चात् परिप्रश्नस्य। वृत्तौ तु परिप्रश्ने चाख्याने च गम्यमान इति पूर्वं परिप्रश्नस्योपन्यासः। पश्चादाख्यानस्य। तत्र यश्चोदयेत् किं कारणमेवं वृत्तौ विपर्य्ययः कृत इति तं प्रत्याह पूर्वं परिप्रश्न इत्यादि। परिप्रश्नपूर्वकं व्याख्यानं भवति। अतो वृत्तौ पूर्वं

परिप्रश्नस्य तदुदाहरणस्य चोपन्यासः कृतः। पश्चादाख्यानस्य। क्रमव्यतिक्रमे प्रयोजनाभावादित्यभिप्रायः। सूत्रे तर्हि कस्मात् पूर्व्वं परिप्रश्नो न निर्द्दिष्टः। पश्चादाख्यानमित्याह सूत्र इत्यादि। अल्पाच्तर ( २।२।३४ ) मिति सूत्रेण द्वन्द्वे पदानां क्रमस्य नियतत्वादल्पाच्तरस्याख्यानशब्दस्य सूत्रे पूर्वनिपातः कृत इति दर्शयति। कां कारिमिति। इञ्। कां कारिकामिति। ण्वुल्। कां क्रियामिति। कृञः श चेति (३।३।१००) शः। कां कृत्यामिति। तत्र चकारात् क्यप्। कां कृतिमिति। योगविभागात् क्तिन् कृतः। कां गणि-मिति। इञ्। गण संख्याने चुरादावदन्तः पठ्यते। कां गणिकामिति ण्वुल्। गणनामिति। युच्। एवं कां पाचिमित्यादि। कां पाचिमकार्षीः। कां पाचिकाम्। कां पचाम्। कां याजिम्। कां याजिकामित्यादि। का मिष्टिम्। कां पाठिम्। कां पाठिकाम्। कां पठितिमिति॥

## १११। पर्य्यायार्हर्णोत्पत्तिषु ण्वुच्।

क्तिन्नादीनामपवाद इति। आदिशब्देनाकारादीनाम्। अग्रगामिकेति। अग्रस्य गामिका। कृद्योगलक्षणायाः कर्मणि षष्ठ्याः समासः। स्वरार्थमिति। अन्तोदात्तत्वं यथा स्यादित्येवमर्थम्। ण्वुलि हि सति प्रत्ययात् पूर्वमुदात्तः स्यात्।

## ११२। आक्रोशे नञ्यनिः।

## ११३। कृत्यल्युटो बहुलम्।

यत्र विहितास्ततोऽन्यत्रापि भवन्तीति। यद्येवं तयोरेव कृत्यक्तखलर्था ( ३।४।७० ) इत्येवमादेरर्थनिर्द्देशस्यानर्थकत्वं जायते। नैतदस्ति। योगतो हि कृतगादयो भावादिष्वर्थेष्विष्यन्ते। कारकान्तरे त्वल्पः। सा च तथा तेषां वृत्तिरनर्थनिर्द्देशे सति सिध्यतीति कुतस्तस्यानर्थक्यम्? स्नानीयमिति। करणे कृत्यः। दानीय इति। दीयते तस्मा इति संप्रदाने। अप(व)सेचन मिति। अप(व)सिच्यते तदिति कर्मणि ल्युट्। अवस्रावणमिति। अवस्राव्यते तदिति स्रु गतावितस्माण्ण्यन्तात् कर्मणि ल्युट्। भुज्यन्त इति भोजनाः। आच्छा-

यन्त इत्याच्छादनानि। कर्मण्येव ल्युट्। राज्ञो भोजना राज्ञ आच्छादनानीति षष्ठीसमासः। प्रस्कन्दनम्। प्रपतनमिति। प्रस्कन्दति प्रपतत्यस्मादित्यपादाने ल्युट्। अथ बहुलग्रहणं किमर्थम्? यावता सूत्रारम्भसामर्थ्यादेव क्तल्युटो यत्र विहितास्ततोऽन्यत्रापि प्रायेण भवन्तीत्येषोऽर्थो विज्ञायत एवेत्यत आह बहुलग्रहणादित्यादि। एतेनान्येऽपि क्तो यत्र विहितास्ततोऽन्यत्राप्यभिधेय इष्यन्ते। तच्च बहुलग्रहणात् सिध्यति। अतो बहुलग्रहणं कृतमिति सूचयति। पादहारक इति। कर्त्तरि ण्वुल् विहितो बहुलग्रहणादिह कर्मणि भवति।

## ११४। नपुंसके भावे क्तः।

तयोरेव कृत्यक्तखलर्थाः (३।४।७०) इति भावे क्तः सिद्धः। नपुंसके भावेऽपि क्तोऽयं विशेषविहितेन ल्युटा बाध्यत इति योगारम्भः।

## ११५। ल्युट् च।

योगविभाग उत्तरार्थ इति। उत्तरत्र ल्युट एवानुवृत्तिर्यथा स्यात्। क्तस्य मा भूत्।

## ११६। कर्मणि च येन संस्पर्शात् कर्त्तुः शरीरसुखम्।

नित्यसमासार्थं वचनमिति। नित्यः समासोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। कथं पुनरेतद्वचनं नित्यसमासार्थं भवतीत्याह उपपदसमासोऽहि नित्यसमास इति। अनेन हि सूत्रेण कर्मण्युपपदे प्रत्ययो विधीयत इत्युपपदमतिङिन्त्युपपदसमासो ( २।२।१९ ) भविष्यति। स च नित्यः। तद्विधौ नित्यं क्रीडाजीविकयो ( २।२।१७ ) रित्यतो नित्यग्रहणस्यानुवृत्तेः। पूर्वसूत्रेण चेदिह ल्युड् विधीयते तदन्तेन षष्ठीसमासो भवति। स च पाक्षिकः। विभाषेत्यनुवृत्तेः। पयःपानं सुखमिति। कथं पुनरेतदस्योदाहरणं भवति? यावता नात्र संस्पर्शात् सुखमुत्पद्यते। किं तर्हि? अभ्यवहारात्। नैष दोषः। सर्वे हि तेऽभ्यवहारादयो न विना स्पर्शेन भवन्तीति नान्तरीयकत्वात् स्पर्शो नापेक्ष्यते। तूलिकाया उत्थानं सुखमिति। उदः

स्थास्तम्भो: पूर्वस्येति ( ८।४।६१ ) पूर्वसवर्ण:। अस्तीह कर्त्तु: शरीरसुखम्। नतु कर्मणा संस्पृश्यमानस्य। किं तर्हि? अपादानेन तूलिकाख्येन। अग्निकुण्डस्योपासनमिति। आस उपवेशने। उपपूर्व:। अतास्पर्शात् सुखं भवति। अग्निकुण्डेनोपास्यमानेनोपस्पृश्यमानस्यैव तदुत्पत्ते:। गुरो: स्नापनमिति। ष्णा शौचे। हेतुमण्णिच्। अर्त्तिह्रीत्यादिना ( ७।३।३६ ) पुक्। ननु चात्रापि गुरु: सुखस्य कर्त्ता भवतीत्यस्तीह कर्त्तु: सुखम्। नतु कथमिदं प्रत्युदाहरणं भवतीत्याह स्नापयते नं गुरुरिति। अनेनैतद्दर्शयति नात्र सुखापेक्षं कर्त्तृत्वं विवक्षितम्। किं तर्हि? क्रियापेक्षम्। नचात्र स्नापनक्रियाया गुरु: कर्त्ता। किं तर्हि? शिष्य:। तस्य च गुरु: कर्मैव भवति। कर्मसंज्ञा पुनर्गुरोर्गतिबुद्धीत्यादि (१।४।५१) सूत्रेण। तस्याकर्मके स्नातावण्यन्ते कर्त्तृत्वात्। परिष्वञ्जनमिति। ष्वन्ज परिष्वङ्गे। उपसर्गात् सुनोतीत्यादिना ( ८।३।६५ ) मूर्धन्य:। (N) मानसी प्रीतिरिति। तेन पुत्रपरिष्वञ्जनजन्मन: प्रीतिविशेषस्य शरीरसुखत्वं दर्शयति। मर्द्दनमिति। मृद क्षोदे। सर्वत्रासमास: प्रत्युदाह्रियत इति। नतु लुग्रड्भाव:। लुग्रट: पूर्वसूत्रेण सर्वत्र भावात्।

## ११७। करणाधिकरणयोश्च।

करणेऽधिकरणे च कारक इत्यनेन करणाधिकरणयो: प्रत्ययार्थत्वं दर्शयति। अत्रोपपदे करणाधिकरणे कस्मान्न भवत:? करणाधिकरणयोरित्यत एव निर्द्देशात्। करणाधिकरणशब्दौ हि लुग्रडन्तौ करणाधिकरणसाधनौ च। तत्र यद्युपपदत्वमेतयो: स्यादेष निर्देशो नोपपद्यते। यद्येवं सति निर्देशे प्रत्ययविधानं च सति च तस्मिन् निर्देश इतीतरेतराश्रयत्वं प्रसज्येत। न। नित्यत्वाच्छब्दानाम्। नह्यपूर्वं किञ्चिदुत्पद्यते। शब्दानां नित्यत्वात्। सतामेव तु तेषामन्वाख्यानं क्रियत इति कुत इतरेतराश्रयताया: प्रसङ्ग:? इध्मप्रव्रश्चन इति। ओव्रश्चू छेदने। इध्मानां प्रव्रश्चन

---

(N) अन्ये त्वत्र परिनिविभ्य: सेवसितसयसिवुसहसुट्स्तुस्वञ्जामित्यनेन ( ८।३।७० ) मूर्धन्यादेश माहु:। परत्वात्।

इति षष्ठीसमासः । पलाशशातन इति । शद्लृ शातने । हेतुमणिच् । शदेरगतौ त इति (७।३।४२) तत्वम् । गोदोहनीति । टिड्ढाणञिति (४।१।१५) ङीप् ।

११८ । पुंसि संज्ञायां घः प्रायेण ।

समुदायेन चेदित्यादि । प्रकृतिप्रत्ययसमुदायेन यदि संज्ञा गम्यत एवं प्रत्ययो भवति । नान्यथा । अकारन्तस्त्रार्थमिति । अकारात् स्त्रमसाकल्यम् प्रयोजनमर्थो यस्य तत् तथोक्तम् । एतेनाकृत्स्नविषयतां प्रत्ययस्य दर्शयति । दन्तच्छद इति । छद अपवारणे । चुरादिणिच् । छादेर्घेऽद्व्युपसर्गस्येति (६।४।९६) ह्रस्वः । पूर्ववत् समासः । प्रसाधनमिति । राध साध संसिद्धौ । अस्माद्धेतुमण्ण्यन्तात् पूर्वसूत्रेण करणे ल्युट् । कुगतिप्रादय (२।२।१८) इति समासः ।

११९ । गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च ।

पूर्वस्मिन्नेवार्थ इति । करणेऽधिकरणे च । ननु पूर्वसूत्रेणैव गोचरादिषु घः सिद्धः । तत् किमित्ययं योग आरभ्यत इत्याह हलश्चेत्यादि । ननु च प्रत्ययग्रहणं तत्रानुवर्त्तिष्यते । तेन गोचरादिषु घञ् भविष्यति । प्रतिपत्तिगौरवं तु स्यात् । प्रायग्रहणानुवृत्तेरज्ञापकत्वात् ।

१२० । अवे तृस्त्रोर्घञ् ।

स्तृणातेरिति । स्तृञ् आच्छादन इत्यस्मात् । प्रायानुवृत्तेरित्यादि । प्रायशब्दस्यानुवृत्तौ सत्यामव उपपदे तृस्त्रोर्घञ्प्रत्ययो भवति संज्ञायां प्रायेणोपाधिभूतायामितयषोऽर्थो लभ्यते । न संज्ञायामिति । अस्योपाधेः प्रायिकत्वात् क्वचिदसंज्ञायामपि भवति ।

१२१ । हलश्च ।

वेष्ट इति । वेष्ट वेष्टने । मार्गोऽपामार्ग इति । मृजू शुद्धौ । चजोरित्यादिना (७।३।५२) कुत्वम् । मृजेर्वृद्धिः (७।२।११४) । उपसर्गस्य घञीति (६।३।१२२) दीर्घः ।

१२२। अध्यायन्यायोद्यावसंहाराधारावायाश्च।

अहलन्तार्थ आरम्भ इति। हलन्तेभ्यः पूर्वसूत्रेणैव सिद्धत्वात्॥

१२३। उदङ्कोऽनुदके।

ननुचेत्यादि चोद्यम्। उदकप्रतिषेधार्थं वचनमिति परिहारः। यद्येतन्नारभ्येत तदोदकेऽपि पूर्वेण स्यादित्यर्थः। तैलोदङ्क इति। षष्ठी समासः। षष्ठी पुनः कर्मणि कृद्योगलक्षणा। उदकोदञ्चन इति। करणे ल्युट्। घः कस्मादित्यादि। एवं मन्यते। पुंसि संज्ञायाम् (३।३।११८) मित्यादिना घे प्राप्ते घञ् विहितः। ततश्च तेन मुक्ते विषये घेनैव युक्तं भवितुमिति। विशेषाभावादिति। नन्वस्त्यन्ते घञि घे वा सति विशेषोऽस्ति। तत्र यद्युदकेऽपि घः स्यादनुदकप्रतिषेधेनार्थो न स्यादित्यभिप्रायः। ननु च घे सति प्रत्ययस्वरेणान्तोदात्त उदङ्कशब्दो भवति। घञि सति ञित्स्वरेणाद्युदात्तः स्यात्। तत् किमुच्यते विशेषाभावादित्यत आह घञपीत्यादि। थाथादि-स्वरेणेति। थाथघञ्क्ताजबित्रकाणामित्येतद् (६।२।१४४) विहितेन।

१२४। जालमानायः।

१२५। खनो घ च।

डो वक्तव्य इत्यादि। सर्वत्र वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थः। तत्रेदं व्याख्यानम्। चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन डादयोऽपि प्रत्यया भविष्यन्तीति। ननुच घञनुकर्षणार्थश्चकारः। नैतदस्ति। स्वरितत्वादेव हि घञुपतिष्ठते। अथ किमर्थं खनेर्घः प्रत्ययो विधीयते? यावता कुत्वार्थं तस्य विधानम्। नच खनेः कश्चिदवयवः कुत्व-भागस्ति। एवं तर्ह्येतज् ज्ञापयति। अन्येभ्योऽप्ययं भवतीति। तेन खलो भगं पदमित्येवमादयः सिद्धा भवन्ति।

१२६। ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्।

तदितरयोरिति। सुशब्देषच्छब्दयोः। कथं पुनः सामान्योक्तेनापि विशेषो लभ्यत इत्याह सम्भवादिति। यत्र यस्य सम्भवस्तत्र तस्य विशेषणं

भवति। कृच्छ्रमेव दुःशब्दस्यार्थे वर्त्तते। नाकृच्छ्रम्। इतरयोस्त्वर्थेऽकृच्छ्रमेव वर्त्तते। न कृच्छ्रम्। तस्मात् कृच्छ्रं दुर एव विशेषणम्। अकृच्छ्रं त्वितरयोरेव। ईषत्करः कटो भवतीति। अकृच्छ्रेणायत्नेन क्रियते भवता कट इत्यर्थः। ईषत्कार्य्य इति। ऋहलोर्ण्यदिति (३।१।१२४) ण्यत्। ईषच्छब्दोऽत्र मनागित्यस्यार्थे वर्त्तते। लकारः स्वरार्थ इति। लिति प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्। ननु च कृत्स्वादिकं खित् कार्य्यं खित्यनव्ययस्येत्येव (६।३।६६) मादिशास्त्रेणानव्ययस्य विधीयते। ईषदादयश्चाव्ययसंज्ञाः। तत् किमर्थं खलः खित्करणमित्याह खित्करणमुत्तरत्र मुमर्थमिति। उत्तरत्रानव्ययेऽप्युपपदे खल् विधास्यते। तत्रार्त्तीषदजन्तस्य मुमिति (६।३।६७) मुम् यथा स्यादित्येवमर्थं खित्करणम्।

## १२७। कर्त्तृकर्मणोश्च भूकृञोः।

कर्त्तृकर्मणोरुपपदत्वं भवति। नतु प्रत्ययार्थत्वम्। यदि च तयोः प्रत्ययार्थत्वं स्यादीषदादिष्वेवोपपदेषु प्रत्ययः स्यात्। ततश्च खित्करणमनर्थकं स्यात्। अनव्ययस्य खित्कार्य्यविधानात्। ईषदादीनाञ्चाव्ययत्वात्। तस्मादतोऽपि खित्करणम्। उपपदे कर्त्तृकर्मणी नतु प्रत्ययार्थावितावित्यवसीयते। अत्र च कर्त्तृकर्मणी ईषदादयश्च न प्रत्येकं प्रत्ययस्य निमित्तम्। किं तर्हि? तत्समुदायः। चकारेण ह्यत्र सन्नियोगः क्रियते। तेन कर्त्तृकर्मणोरीषदादीनाञ्च युगपदुपपदत्वं भवति। नान्यथा। यद्येवं कथं द्वयोरुपपदयोर्युगपत् समासः। कः पुनराह युगपत् समास इति? पूर्वं हि परस्योपपदस्य समासं कृत्वा पश्चात् पूर्वस्य क्रियते। अथवोपपदमतिङित्यत्र (२।२।१९) सुप् सुपेति निवृत्तम्। तेनानेकस्यापि युगपदेव समासो भवति। किं पुनरत्र परमुपपदम्? कर्त्तृकर्मणी। कुत एतत्? खित्करणसामर्थ्यात्। खित्करणं हि मुमर्थम्। मुमागमश्चानव्ययस्य विधीयते। तत्रेषदादीनां धातोश्चानन्तर्य्ये खित्करणमनर्थकं स्यात्। ईषदाढ्यम्भवं भवतीति। अकृच्छ्रमाढ्येन भूयते भवतेत्यर्थः। ईषदाढ्यङ्करो

देवदत्तो भवतेति। अनाढ्याढ्यः क्रियते देवदत्तो भवतेत्यर्थः। कर्त्तृकर्मणोरित्यादि। च्व्यर्थोऽभूततद्भावः। तदर्थयोः कर्त्तृकर्मणोरुपपदयोः खल् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। प्रायग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते। तेन यदा कर्त्तृकर्मणी च्व्यर्थे भवतस्तदैव प्रत्ययो भवति। नान्यदेति। स्वाढ्येन भूयत इति। अत्र च्व्यर्थस्याविवक्षितत्वात् प्रत्ययो न भवति।

## १२८। आतो युच्।

## १२९। छन्दसि गत्यर्थेभ्यः।

सूपसदनमिति। षद्लृ विशरणगत्यवसादनेषु। उपपूर्वः।

## १३०। अन्येभ्योऽपि दृश्यते।

सुदोहनमिति। दुह प्रपूरणे। वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। अपिशब्दोऽत्र क्रियते। स च सर्वव्यभिचारार्थः। तेन शासु अनुशिष्टौ युध संप्रहारे दृशिर् प्रेक्षणे ञिधृषा प्रागल्भ्ये मृष तितिक्षायामित्येतेभ्योऽपि भाषायां युज् भवतीति। कथं पुनरेतदवसितं सर्वव्यभिचारार्थोऽपिशब्द इति? सूत्रारम्भात्। यदि हि गत्यर्थव्यभिचार एवात्राभिसंहितः स्यात् सूत्रमिदं नारभेत। पूर्वसूत्र एव च गत्यर्थग्रहणं न कुर्यात्।

## १३१। वर्त्तमानसामीप्ये वर्त्तमानवद्वा।

यदि समीपस्य भावोऽभिधीयेत तद्धि स्यात्। एवं सति वर्त्तमानस्य सामीप्येन च समासो न स्यात्। सम्बन्धाभावात्। नहि सामीप्यस्य वर्त्तमानेन सम्बन्धः। अपितु तत्समीपेन। तस्य तद्गुणत्वात्। तस्मात् स्वार्थ एवायमिह भविष्यतीति मत्वाह समीपमेव सामीप्यम्। किमर्थं पुनः स्वार्थिकं ष्यञं विधायैवं निर्देशः क्रियते? न वर्त्तमानसमीप एवोच्येत यतो लाघवं भवतीत्यत आह ष्यञः स्वार्थिकत्वं ज्ञाप्यत इति। स्वार्थे ष्यञपि स्यादनेनेति। स्वार्थे ष्यञ् भवतीत्यमुमर्थं ज्ञापयितुं स्वार्थिकः ष्यञ्

क्षत इति । चातुर्वर्ण्यादिसिद्ध्यर्थमिति । अनेनापि ज्ञापनस्य प्रयोजन-मुच्यते । आदिशब्देन चातुराश्रम्यादीनां ग्रहणम् । अयमागच्छामीति । अयमागममित्यस्यार्थे एतद्वर्त्तते । आगममिति । लुङ् । उत्तमैकवचनम् । तस्थस्थमिपा (३।४।१०१) मित्यादिना मिपोऽमावः । पुषादिसूत्रेण (३।१।५५) च्लेरङ् । एष गच्छामीति । एष गमिष्यामीत्यस्यार्थे इदं वर्त्तते । गमेरिट् परस्मैपदेष्वितीट् (७।२।५८) । गन्तास्मीति । लुट् । तासिः । मिप् । अथ वत्करणं किमर्थम् ? यावता वर्त्तमानसामीप्ये वर्त्तमान इत्युच्यमाने वर्त्तमानकालविहिताः प्रत्यया वर्त्तमानसामीप्ये भवन्तीत्येषोऽर्थो लभ्यत एवेत्यत आह वत्करणमित्यादि । असति वत्करणे वर्त्तमानकालेन रूपमात्रमेषां प्रत्ययानामुपलक्ष्यते । नतु प्रकृत्यादय उपा-दीयेरन् । ततश्च धातुमात्रात् स्युः । वत्करणे तु सति सर्वसादृश्यं गम्यते । तत्रैव वतेर्विधानात् । तेन सङ्करो न भवति । तमेव संकराभावं दर्शयितुमाह येनेत्यादि । एवं हि सर्वसादृश्यं भवति यदि येन विशेषणेन वर्त्तमाने विहितास्तेनैव वर्त्तमानसामीप्ये भवन्ति । नान्यथा । प्रकृत्योपपदोपाधिनेति । आदिशब्देनोपाधेरभिधेयस्य च ग्रहणम् । पवमानो यजमान इति । पूङ्यजोः शानन् (३।२।१२८) विहितः । स वर्त्तमानसामीप्येऽपि ताभ्यामेव भवति । न धात्वन्तरात् । अलंकरिष्णुरिति । ताच्छील्यादिविशिष्टे कर्त्तर्यलंपूर्वात् कृञ इष्णुज् विहितः । वर्त्तमानसामीप्येऽपि तत्पूर्वादेव भवति । तस्मिन्नेव चार्थे परुदगच्छदित्यत्र विप्रकर्षविवक्षायां लङेव भवति । वर्षेण गमिष्यतीति । अत्रापि लृडेव भवति । यो मन्यत इत्यादिनापि प्रतिपत्तृविशेषं प्रति सूत्रं प्रत्याचष्टे । कालान्तरगतिस्त्वित्यादि । कालान्तरं वर्त्तमानसमीपो भूतो भविष्यंश्च कालः । तस्य या गतिः प्रतीतिः । आगच्छामीत्यस्य पदस्य वर्त्तमानकालविशेषेऽप्ययं गच्छामीत्यतो वाक्यात् कदा देवदत्तो गमिष्य-सीत्येतद्वाक्यसमनन्तरं प्रयुज्यमानाद् भवति । वाक्यगम्योऽपि कालो यदि पदसंस्कारवेलायामुपयुज्यते युज्येत सूत्रारम्भः । न चासौ तत्रोपयुज्यते । यस्माच्छास्त्रेण पदस्य संस्कारः क्रियते । न वाक्यस्य । पदे संस्क्रियमाणे तद्गम्य एव काल उपयुज्यते । तेन वाक्यगम्य इत्यभिप्रायः । इतिकरणः

प्रकृतप्रत्ययमर्शक इति। एवं यो मन्यतेऽवगच्छति तं प्रतीदं नारब्धव्यमेव। यदर्थमारभ्यते तेषां प्रत्ययानां वर्त्तमाने (३।२।१२३) लडित्यादिनैव शास्त्रेणासिद्धत्वात् प्रकरणग्रहणेन केवलमिदं सूत्रं नारब्धव्यमपि त्वाशंसायां भूतवच्चेत्येवमादीन्यपि (३।३।१३२) नारभ्यव्यानीति दर्शयति। तादृश-मित्यादि। एवञ्च यस्तु तादृशः प्रतिपत्ता न भवति मन्दबुद्धिस्तं प्रत्यारब्धव्यमेवेत्युक्तं भवति। नह्यसावेवं न्यायेन प्रतिपत्तुं समर्थः। तथा-चेत्यादि। यस्मात् तत्रैवं वाक्यगम्यः कालः पदसंस्कारवेलायां नोपयुज्यत एवञ्च सति श्वः करिष्यतीत्येवमाद्युपपद्यते। तत्रापि हि करिष्यतीत्येतत् पदं भविष्यत्येव काले वर्त्तत इति लृट् शेषे चेत्येव (३।३।१३) लृट् सिद्धः। भविष्यदनद्यतनस्तु कालोऽयम्। यद्युत्तरकालः प्रतीयते तथाप्यसौ वाक्यार्थ इति पदसंस्कारे नाश्रीयते। यदि तु वाक्यगम्योऽपि कालः पदसंस्कारे समाश्रीयेत तदा तु करिष्यतीत्येवमादि नोपपद्येत भविष्यदनद्यतने लुटैव भवितव्यमिति कृत्वा।

## १३२। आशंसायां भूतवच्च।

आगमदिति। लुङ्। आगत इति निष्ठा। अनुदात्तोपदेशेत्यादिना-नुनासिकलोपः (६।४।३७)। अधीमह इति। इङो लट्। महिङ्। अदादित्वाच्छपो लुक् (२।४।७२)। अध्यगीष्महीति। लुङ्। विभाषा लुङ्लृङोरितीङो (२।४।५०) गाङादेशः। गाङ्कुटादिना (१।२।१) सिचो ङित्त्वाद् घुमास्थागेत्यादिनेत्त्वम् (६।४।६६)। भूतवच्चेत्यतिदेशे लङ्लिटावपि प्राप्नुतः। तौ कस्मान्न भवत इत्याह सामान्यातिदेश इत्यादि। भूतसामान्यातिदेशोऽयम्। भूतविशेषप्रत्ययौ च लङ्लिटौ। सामान्याति-देशे विशेषस्यानतिदेशः। तेन ताविह न भवतः।

## १३३। क्षिप्रवचने लृट्।

भूतवच्चेत्यस्यायमपवाद इति। न प्राप्ते भूतवच्चेत्यस्मिन्नस्यारम्भात्। अथ वचनग्रहणं किमर्थम्? यावता क्षिप्रे लृडित्यनेनैव सर्वं सिद्धमित्यत आह

वचनग्रहणं पर्य्यायार्थमिति । असति हि वचनग्रहणे क्षिप्रशब्द एवोपपदे लृट् स्यात् । तस्मिंस्तु सति यावन्तः क्षिप्रवचनास्तेषु सर्वेषु भवति । अथ लृङ्ग्रहणं किमर्थम् ? न क्षिप्रवचन इत्येवोच्येत । भूतवच्चेत्यस्यातिदेशस्य भविष्यत्कालविषयत्वात् तस्मिन् प्रतिषिद्धे लृट् शेषे चेत्यनेनैव ( ३।३।१३ ) सिद्ध इत्याह नेति वक्तव्य इत्यादि । नेति वक्तव्ये यल्लृङ्ग्रहणं क्रियते तस्यैतत् प्रयोजनम् । लुटोऽपि विषये भविष्यदनद्यतने काले लृङ् यथा स्यात् । अन्यथा हि लृङपवादो लुङेव स्यात् ।

## १३४ । आशंसावचने लिङ् ।

आशंसे युक्तोऽधीयीयेति । इङो लिङः सीयुट् (३।४।१०२) । उत्तमपुरुषस्यैकवचनम् । इट् । इटोऽदित्यद्भावः (३।४।१०६) । सार्वधातुकमपिदिति (१।२ ४) ङित्त्वाद् गुणाभावः । लिङः सलोपोऽनन्त्यस्येति (७।२।७९) सकारलोपः । धातोरियङ् । उपसर्गेण सहाकः सवर्णे दीर्घः (६।१।१०१) । आशंसे क्षिप्रमधीयीयेति । अत्र यद्यपि क्षिप्रवचनमुपपदमाशंसावचनमपि तथापि परत्वाल्लिङेव भवति । न लृट् । तस्य तु यत्राशंसावचनमुपपदं नास्ति सोऽवकाशः क्षिप्रमध्येष्यामह इति ।

## १३५ । नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ।

कालानां सामीप्यमित्यनेन कालसम्बन्धि सामीप्यमिहाश्रीयत इति दर्शयति । कुतः पुनः सामान्योक्तेन कालसम्बन्धिन एव सामीप्यस्य ग्रहणं लभ्यते ? वर्त्तमानसामीप्य इत्यत आरभ्य प्रायिकत्वादस्य प्रकरणस्य । एतदपि कुतः ? वर्त्तमानादिशब्दानां कालशब्दत्वात् । अपि च लङ्लुटोः प्रतिषेधः । तौ च कालविहितौ । अतो यत्र हि तौ तत्र तत्सम्बन्धेनैव कालसामीप्यमिहाश्रीयत इति विज्ञायते । तत् पुनः कीदृशमित्याह तुल्यजातीयेनेत्यादि । तुल्यजातीयग्रहणं भिन्नजातीयनिवृत्त्यर्थम् । कालमात्रेण व्यवधानेन गृह्यमाणे येयं पौर्णमास्यतिक्रान्ता तस्यामुपाध्यायोऽग्नीनाधित्येवमादावुदाहरणे सामीप्यं न स्यात् । अमावस्यया अन्याभिश्च तिथिभिर्व्यवधानात् । तस्मात् समानजातीयेनाव्यवधानमाश्रीयते । अदादिति । गाति-

स्येत्यादिना सिचो लुक् (२।४।७७)। अध्यापिपदिति। हेतुमति (३।१।२६) चेति णिच्। क्रीङ्जीनां णावित्यात्त्वम् (६।१।४८)। अर्त्तिह्रीत्यादिना (७।३।३६) पुक्। लुङ्। चङि णिश्रीत्यादिना (३।१।४८) चङ्। अजादेर्द्वितीयस्येति (६।१।२) पीत्येतस्य द्विर्वचनम्। आड़जादीना (६।४।७२) मित्याट्। आटश्चेति (६।१।९०) वृद्धिः। णिचो लोपः (६।४।५१)। येयं पौर्णमास्यतिक्रान्तेति। पौर्णमास्यन्तरेणाव्यवहितायां पौर्णमासी। तामधिकृत्येदमाह। सा हि यद्यप्यमावास्यया अन्याभिश्च तिथिभिर्व्यवहिता तथापि तुल्यजातीयेन पौर्णमास्याख्येन कालेन व्यवहितत्वात् सामीप्यं नातिवर्त्तते। अग्नीनाधितेति। दधातेराङ्पूर्वस्य स्थाघ्वोरिच्चेतीत्त्वं (१।२।१७) सिचश्च कित्त्वम्। ह्रस्वादङ्गादिति (८।२।२७) सिचो लुक्। अयष्टेति। व्रश्चादि (८।२।३६) सूत्रेण षत्वम्। झलो झलीति (८।२।२६) सिचो लोपः। अदितेति। ददाते रूपम्। पूर्ववदित्यादि। यक्ष्यत इति। यजेर्लृट्। स्यः। तस्मिन् परतस्तथा षत्वे कृते षढोः कः सीति (८।२।४१) कत्वम्। आधितेत्यादौ सर्वत्र स्वरितञितेत्यादिनात्मनेपदम् (१।३।७२)। किमर्थं प्रतिषेधद्वयमुच्यते? नाद्यतनवत् क्रियाप्रबन्धसामीप्ययोरित्येवोच्येत? क्रियाप्रबन्धसामीप्ययो र्ह्यद्यतनप्रत्ययौ लुङ्लृटाविष्येते। नानद्यतनप्रत्ययौ लङ्लुटौ। तौ च लङ्लुटावेवमुच्यमाने सिध्यत एवेत्यत आह द्वौ प्रतिषेधावित्यादि। एवं मन्यते। यदि नाद्यतनवत् क्रियाप्रबन्धसामीप्ययोरित्येवोच्येत तदेतदेवं सूत्रं विधायकं स्यात्। ततश्च सङ्करः प्रसज्येत। लुङोऽपि विषये लृट्। लृटश्च विषये लुङ्। नह्यत्रायं विशेष उपादीयते (0)। भूते लुङ् भविष्यति लृङिति प्रतिषेधविषय उच्यमाने नायं दोषः। ततो नानेन किञ्चिद् विधीयते। केवलमनद्यतनप्रत्ययानां प्रतिषेधः क्रियते। तेषु प्रतिषिद्धेषु स्वैरेव वाक्यैर्विधायकै र्लुङादय उत्सर्गाः स्वे स्वे कालेऽपवादविनिर्मुक्ता भवन्ति। अतो यथाप्राप्ताभ्यनुज्ञापनाय प्रतिषेधद्वयमुच्यते।

---

(0) नह्यत्रायं विषय उपपद्यत इति वङ्गीयपुस्तकांशे पाठान्तरम्। महीशूरपुस्तके तु विशेष उपादीयत इति पाठः।

## १३६ । भविष्यति मर्य्यादावचनेऽवरस्मिन् ।

मर्य्यादावचने सतीति । वचनग्रहणमभिविधावपि यथा स्यात् । मर्य्यादाविशेष एवाभिविधिश्च । सैव मर्य्यादा यदा कार्य्येणाभिसम्बध्यते तदाभिविधिरित्युच्यते । यदा तु न सम्बध्यते तदा मर्य्यादेति । तत्रेह वचनग्रहणाद्विशेषो नाश्रीयते । तेन मर्य्यादाया उक्तिमात्रे भवति । विनापि वचनग्रहणेनाभिविधौ प्रतिषेधो न भवेत् । यस्माद् यत्राभिविधौ कार्य्य मिच्छति तत्राभिविधिग्रहणं वा करोति यथाङ् मर्य्यादाभिविध्योरिति (२।१।१३) वचनग्रहणं वा यथाङ् मर्य्यादवचन इति (१।४।८९)। तदभिविधावपि यथा स्यादित्येवमर्थं वचनग्रहणं क्रियते । अवरस्मिन्निति । अर्वागित्यर्थः । गन्तव्य इति । भविष्यत्कालतामध्वनो दर्शयति । तस्य यदवरमिति । अनेनाध्वनो विभागं द्विरिति । एतेनापि क्रियाप्रतिबन्धाभावम् । भोच्यामह इति । (१।३।६६) भुजोऽनवन (१।३।६६) इत्यात्मनेपदम् । चोः कुरिति (८।२।३०) गकारः । खरि (८।४।५५) चेति गकारस्य ककारः । अध्यैमहीति । मह्लिङ् । आड़जादीनामित्याट् (६।४।७२)। आटश्चेति (६।२।९०) वृद्धिः । उपसर्गस्य यणादेशः (६।१।७७)। अपिबामेति । पाघ्रादि (७।३।७८) सूत्रेण पिबादेशः । नित्यं ङित (३।४।९९) इति सकारलोपः । भोक्तास्मह इति । लुट् । तत्र च विशेषं वच्यतीति । अनहोरात्राणामित्यनेन ।

## १३७ । कालविभागे चानहोरात्राणाम् ।

कालमर्य्यादाविभागे सतीति । मर्य्यादाविभागशब्दयोः समाहारे द्वन्द्वः । तेन कालशब्दस्य षष्ठीसमासः । तेषाञ्चेति । तैस्तेषाञ्चेति युक्तं यत् तेषां विभागे प्रतिषेधो भवति । तत्सम्बन्धित्वाद् विभागस्य । यदा तैरन्यस्य विभागस्तदा न युक्तम् । नहि तदा तत्सम्बन्धी विभागः । किं तर्हि ? विभज्यमानसम्बन्धी । तथाप्यहोरात्रकृतत्वाद् विभागस्य सम्बन्धित्वमस्त्येव । निमित्तस्य नैमित्तिकसम्बन्धादितरदोषः । यदि वचनमहोरात्रप्रतिषेधार्थमेवं सति योगविभागोऽनर्थकः । पूर्वसूत्र एव हि प्रतिषेधो वक्तव्यः । भविष्यति

मर्य्यादावचनेऽवरस्मिन्ननहोरात्राणामिति। स च सामर्थ्यात् कालविभागस्यैव प्रतिषेधो विज्ञास्यते। न देशविभागस्य। नहि देशविभागस्याहोरात्रैः सह सम्बन्धोऽस्तीत्यत आह योगविभाग उत्तरार्थ इति। उत्तरसूत्रे कालविभाग एव यथा स्यादित्येवमर्थं देशविभागे मा भूदिति। अभुञ्ज्महीति असोरल्लोप (६।४।१२) इत्यकारलोपः। त्रिविधमुदाहरणमिति। तत्र प्रथमे शब्दान्तरवाच्यस्य कालस्याहोरात्रैर्विभागः। द्वितीयेऽहोरात्रवाच्यस्य शब्दान्तरवाच्येन कालेन विभागः। तृतीयेऽहोरात्रवाच्यस्य कालस्याहोरात्रवाच्येन कालेन। सर्व्वथेति। सर्वेण प्रकारेण। यद्यहोरात्रैरन्यस्य विभागोऽथाप्यन्येन तेषां यद्यहोरात्रैरेव (P) तेषामेवमपि प्रतिषेध इति सर्वथाशब्दस्यार्थः। अहोरात्रसंस्पर्श इति। अहोरात्राणां विभागेन सम्बन्धोऽहोरात्रसंस्पर्श इति।

## १३८। परस्मिन् विभाषा।

सर्व्वत्रानद्यतनवत्प्रत्यया उदाहर्त्तव्या इति। भूतानद्यतने तत्र युक्ता अध्येमहि तत्रौदनमभुञ्ज्महीति सर्व्वत्र लङुदाहर्त्तव्यः। भविष्यदनद्यतने तु तत्र युक्ता अध्येतास्महे तत्रौदनं भोक्तास्मह इति सर्वत्र लुडुदाहर्त्तव्यः।

## १३९। लिङ्निमित्ते लृङ् क्रियातिपत्तौ।

इत्येवमादिकमिति। आदिशब्देन कथमि लिङ् (३।३।१४३) चेत्येवमादयो गृह्यन्ते। कुतश्चिद् वैगुण्यादिति। विधुरप्रत्ययोपनिपातात् कारणान्तरवैकल्याद्वा। आयास्यदिति। स्यतासी लृलुटोरिति (३।१।३३) स्यप्रत्ययः। इतश्चेतीकारलोपः (३।४।१००)। आह्वास्यदिति। ह्वेञ् स्पर्द्धायाम्। पर्य्यासिष्यतेति। आस उपवेशने। अनुदात्तेत्। तद्धेतुभूतमिति। शकटपर्य्याभवनस्य (Q) हेतुभूतम्। एतेन लिङ्निमित्तं हेतुहेतुमद्भावं दर्शयति। लिङ्गिलिङ्गे बुद्धेति। असकृत् प्राक् कमलकाह्वाने सति शकटस्यापर्य्याभवनं दृष्ट्वा भाविनोऽपि कमलकाह्वानस्य शकटस्यापर्य्याभवनस्य हेतुभूतत्वं लिङ्गेन बुद्धा। लिङ्गं पुनः कमलकाह्वानसामान्यं धर्म्मम्। तदतिपत्तिश्चेति। कमलकाह्वानस्य

---

(P) यद्यहोरात्रैरन्यस्य विभागोऽथास्याहोरात्रवाच्यस्य शब्दान्तरवाच्येन कालेनाथवाहोरात्रवाच्यस्याहोरात्रवाच्येनैवैवमपि प्रतिषेध इति महीशूरपुस्तके पाठः।

(Q) पर्य्याभवनं भङ्ग इत्यर्थः।

शकटापर्य्याभवनस्य चातिपत्तिम् । तत्र कमलकाह्वानस्य चातिपत्तिं कमलकस्य देशान्तरगमनादिना लिङ्गेनावगम्यते । शकटपर्य्याभवनस्यातिपत्तिमः शकटस्य गुरुभारारोपणादिना । इतो वाक्यादिति । यदि कमलकमाह्वास दित्यादेर्वाक्यात् । अथ किमर्थं क्रियाग्रहणम् ? नन्वेतावद्वक्तव्यं लिङ्निमि· लृङतिपत्ताविति । धात्वधिकाराद् विनापि क्रियाग्रहणेन धात्वर्थस्यातिपत्ता विति विशेषोऽर्थो लभ्यते । ततोऽनर्थकं क्रियाग्रहणमिति मन्यते। नैतत् । लिङ निमित्तइति श्रूयते । प्रकृतस्य सम्बन्धाच्छ्रुतस्य सम्बन्धो बलवानिति लिङ्निमि त्तस्यैवातिपत्ति र्विज्ञायते । ततश्चोताप्योः समर्थयोरिति (३।३।१५२) सामर्थ्य तिपत्तावुताप्योश्चातिपत्तौ लिङ् प्रसज्जेत । तस्मात् क्रियाग्रहणं कर्त्तव्यम् ।

## १४० । भूते च ।

उताप्योरित्यारभ्येत्यादि । उताप्योः समर्थयोरित्येतत् (३।३।१५२) प्रभृति लिङ्निमित्तेषु ह्येतल्लृङ्विधानम् । कुत एतदित्याह प्रागित्यादि । यस्मात् प्रा· वोताप्योरिति (३।३।१४१) वक्ष्यते ततश्च पारिशेष्याद् भूते चेति लिङो विधा· वोताप्योरित्यादिष्वेवावतिष्ठते । न तु भुक्तवानित्यादि । क्रियातिपत्तिं दर्शयति

## १४१ । वोताप्योः ।

वा आ उताप्योरिति । एतेनाङः प्रश्लेषं दर्शयति । यद्याङोऽत्र प्रश्लेष वोताप्योरिति न प्राप्नोति । परत्वाद् गुणे कृते पूर्वेण सह वृद्ध्या भवितव्यम् सौत्रत्वान्निर्देशस्येत्यदोषः । निपातनत्वात् पूर्वेण सहैकादेशं कृत्वा परे· सहादगुणः (६।१।८७) करिष्यते । ननु चाङो योगे पञ्चम्यपाङ्परिभिरिति (२।३।१०) पञ्चम्या भवितव्यम् । तदयुक्तोऽत्रोताप्योरिति सप्तम्या निर्देशः नैतत् । यतः पदमेवात्र सप्तम्यन्तमवधित्वेनोपादीयते । न च पदादाङ योगे पञ्चमी भवति । अप्रातिपदिकत्वात् । मर्यादायामित्यादि । यद्यभिविधि स्यादुताप्योः समर्थयोरिति लिङ्(३।३।१५२) विकल्पेन प्रसज्येत । नित्यश्चेष्यते तस्मान्मर्य्यादायामयमाङ्। नाभिविधौ। यथाप्राप्तश्चेति । लिङादिः। वाग्रहणात्

## १४२ । गर्हायां लडपिजात्वोः ।

कालसामान्येन प्राप्नोतीति । एतेन भविष्यतीत्यादेः कालविशेषवाचिन

ऽनुवृत्तिं सूचयन्नयं कालसामान्ये विधिरिति दर्शयति कालविशेषविहितानिति। भूते कालविशेषे लङ्लिटौ विहितौ। भविष्यति लुङ्लृटौ च। तान् सर्वान् कालसामान्ये विधीयमानो लट् परत्वाद् बाधते। याजयतीति। यजेर्हेतुमण्णयन्ताल्लट्। लिङ्निमित्ताभावादिति। हेतुहेतुमदादेर्लिङ्निमित्ताभावादिह यद्यपि क्रियातिपत्तिर्विवक्ष्यते तथापि लृङ् न भवति।

## १४३। विभाषा कथमि लिङ् च।

विभाषाग्रहणमित्यादि। यस्मिन् काले लृङादयो विहिता स्तेषां बाधनं मा भूदित्येवमर्थं विभाषाग्रहणम्। यद्येवमनर्थकश्चकारः। विभाषाग्रहणादेव हि लटोऽप्यबाधितत्वात् सिद्धत्येव। सत्यं सिद्ध्यति वर्त्तमाने। कालान्तरे तु न सिध्यति। नहि तत्र कथमित्युपपदे लटः प्राप्तिरिति। तत् कथं विभाषाग्रहणेन सिध्यति? तस्माल्लडर्थश्चकारः कर्त्तव्यः। याजयेदिति। लिङ्। याजयिष्यतीति। लृट्। अयीयजदिति। लुङ्। च्लेश्चङ्। णौ चङि ह्रस्वः। णिलोपः। चङीति (६।१।११) द्विर्वचनम्। सन्यत इतीत्त्वम् (७।४।७९)। अयाजयदिति। लङ्। याजयाञ्चकारेति। लिट्। कास्प्रत्ययादित्याम् (३।१।३५)। आम इति (२।४।८१) लेर्लुक्। तस्याव्ययत्वात् सुब्लुक्। कृञ्चेत्यादिना (३।१।४०) लिट आम्परस्य कृञोऽनुप्रयोगः। णल्। द्विर्वचनम्। अभ्यासकार्य्यम्। अयामन्त-(६।४।५५) त्यादिनायादेशः। अत्र लिङ्निमित्तमस्तीति कथमित्येतत्? गर्हा च? तदेतद् गर्हायां लिङो विधानाद् भूतविवक्षायां क्रियातिपत्तौ लृङिति भूते चेति (३।३।१४०) वर्त्तमाने वोताप्योरिति ( ३।३।१४१ ) वचनाद् भविष्यद्विवक्षायां सर्वत्र नितरांनैव लृङा भवितव्यमिति। भविष्यतीति (३।३।१३६) वर्त्तमाने लिङ्निमित्ते लृङ्क्रियातिपत्ताविति (३।३।१३९) वचनात्।

## १४४। किंवृत्ते लिङ्लृटौ।

किंवृत्त इति। वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयते। डतरडतमौ चेति। किंवृत्ते च लृङित्येवं कस्मान्नोक्तम्? प्रकृतो हि लिङ्। ततश्चकारेण तस्यैव समुच्चयो विज्ञास्यते। किं लिङ्ग्रहणेनेत्याह लिङ्ग्रहणमित्यादि। असति

ह्नि लिङ्ग्रहणे यथा प्रकृतत्वाच्चकारेण लिङ् समुच्चीयते तथा लडपि समुच्चीयेत । सोऽपि ह्नि प्रकृतएव । तस्माल्लटो निवृत्त्यर्थं लिङ्ग्रहणं कृतम् ।

## १४५ । अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।

अत्र द्वावर्थौ प्रत्ययावपि द्वावेव । ततश्च यथासंख्येन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तान्निराकर्त्तुमाह बह्वच इत्यादि । अमर्षशब्दो ह्यनवक्लृप्तिशब्दापेक्षयाल्पाच्तरः । तत्राल्पाच्तरमिति (२।२।३४) तस्य पूर्वनिपाते कर्त्तव्ये योऽयमिह बह्वचोऽनवक्लृप्तिशब्दस्य पूर्वनिपातः कृतः स लक्षणव्यभिचारार्थतां दर्शयति । यथेह पूर्वनिपातलक्षणं व्यभिचारात् स्वविषये न प्रवर्त्तते तथा यथासंख्यलक्षणमपीति । तेन यथासंख्यं न भवति । अपिग्रहणं किंवृत्तेपि यथा स्यात् । अन्यथा ह्यकिंवृत्तग्रहणे किंवृत्ते न स्यात् । यदि यथोपकादिभ्योऽन्यतर (२।४।६८) स्यामित्यत्रा-द्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थं तथेहाप्यकिंवृत्तग्रहणं किंवृत्ताधिकारनिवृत्त्यर्थं स्यात् तस्मिन्निवृत्ते किंवृत्तेऽकिंवृत्ते च प्रत्ययद्वयं भविष्यतीति व्याख्यायते तदा शक्यतेऽपिग्रहणमकर्त्तुम् । तर्हि तत् क्रियते विस्पष्टार्थम् ।

## १४६ । किंकिलास्त्यर्थेषु लृट् ।

किंकिलशब्दः समुदाय एवोपपदमिति । एतेन किंकिलशब्दयोः प्रत्येक-मुपपदत्वं निरस्यति । कस्मात् पुनस्तयोश्च प्रत्येकमुपपदत्वं न भवति ? केवलस्य किंशब्दस्यानवक्लृप्त्यमर्षयोर्वृत्त्यसम्भवात् । समुदायस्य च सम्भवात् । लिङो-ऽपवाद इति । पूर्वेण प्राप्तस्य । लिङ्निमित्तमिह नास्तीति । लृट एव विधानात् ।

## १४७ । जातुयदोर्लिङ् ।

लृटोऽपवाद इति । अनवक्लृप्त्यादि सूत्रेण (३।३।१४५) प्राप्तस्य । यदायद्योरुपसंख्यानमिति । लिङेव यथा स्यात् । लृङ् मा भूत् । उप-संख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । अनव—(३।३।१४५) क्लृप्त्यादिसूत्रादिहापिशब्दोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन यदा-यद्योरपि भविष्यति ।

१४८। यच्चयत्रयोः।

लृटोऽपवाद इति। अनवक्लृप्त्यादिसूत्रेण(३।३।१४५) प्राप्तस्य। अथ पूर्वसूत्र एव यच्चयत्रयोर्ग्रहणं कस्मान्न कृतम्? किं योगविभागेनेत्यत आह योगविभाग उत्तरार्थ इति। उत्तरत्र यच्चयत्रयोरेवानुवृत्तिर्यथा स्यात्। जातुयदो-र्मा भूत्। यथासंख्यमिह नेष्यत इति। पूर्वोक्तादेव लक्षणव्यभिचारचिह्नात्। स च बह्वचः पूर्वनिपातः सर्वत्रैव चात्र प्रकरणे लक्षणव्यभिचारचिह्नम्। न तु तत्रैव सूत्रे। अथवा यथासंख्यार्थस्य स्वरितत्वस्याभावादिह न भवति यथा-संख्यम्। उक्तं हि प्राक् स्वरितेन चिह्नेन यथासंख्यं भवतीति।

१४९। गर्हायाञ्च।

१५०। चित्रीकरणे च।

१५१। शेषे लृड़यदौ।

यच्चयत्राभ्यामित्यादिना यच्चयत्रापेक्षं शेषं दर्शयति। चित्रीकरणा-पेक्षया शेषो न शक्यते विज्ञातुम्। चित्रीकरणस्येह स्वर्य्यमाणत्वात्। आरोक्ष्यतीति। रुह बीजजन्मनि प्रादुर्भावे च। हो ढः (८।२।३१)। षढोः कः सि (८।२।४१)। आश्चर्य्यं यदि भुञ्जीतेति। अनवक्लृप्तेरत्राश्चर्य्यं गम्यते। तत्राश्चर्य्यनिमित्ते लृटि प्रतिषिद्धे जातुयदोर्लिङ्विधाने यदा यद्योरुपसंख्यानमित्यनवक्लृप्तौ लिङ्।

१५२। उताप्योः समर्थयोर्लिङ्।

समर्थयोरिति। धातुना सामर्थ्यमिह नाश्रीयते। तयोरुपपदत्वेनैव तस्य लब्धत्वात्। तस्मात् परस्परसामर्थ्यं समर्थशब्दादिह गृह्यते। तदपि व्यपेक्षालक्षणमेकार्थीभावलक्षणमुभयमुताप्योर्न सम्भवति। पर्य्यायेण तयो-रुपपदत्वात्। तस्मात् समानार्थतालक्षणमिह सामर्थ्यं समर्थशब्देन प्रतिपाद्यत इत्यत आह समानार्थयोरिति। कुर्य्यादिति। उप्रत्यये कृते गुणो रपरत्वञ्च। अत उत् सार्वधातुके (६।४।११०) इत्युत्त्वम्। ये चेत्युकारलोपः (६।४।१०९)।

१५३। कामप्रवेदनेऽकच्चिति।

कामो मे भुञ्जीत भवानिति। स्वाभिप्रायं परस्यानेनाविष्करोति।

## १५४ । सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे ।

योग्यताध्यवसानमिति । योग्यता सामर्थ्यम् । तस्याध्यवसानम् । सा येनाध्यवसीयते निश्चीयते तद् योग्यताध्यवसानम् । ज्ञानं सम्भावनमुच्यते । तमेवार्थं पर्य्यायान्तरेण विस्पष्टीकर्त्तुमाह शक्तिश्रद्धानमिति । शक्तिः सामर्थ्यम् । सा श्रद्धीयते येन ज्ञानेन तच्छक्तिश्रद्धानम् । तदिति । सम्भावनम् । पर्य्याप्तेरिति । सामर्थ्येन । एतेन पर्य्याप्ताविह वर्त्तमानोऽलंशब्दो गृह्यते । न तु भूषणादाविति दर्शयति । पर्य्याप्तमिति । शक्तं स्वकार्य्यनिर्वर्त्तनक्षममित्यर्थः । स्वकार्य्यं पुनस्तस्य विपरीतविषयपरिच्छेदः । अवितथमिति । विद्यमानविषयत्वात् । एतेन पर्य्याप्त्यर्थ एवास्य स्वीकृतः । एवं हि तद्विपरीतविषयं भवति यदि विद्यमानविषयत्वादवितथं भवति । नान्यथा । अलम इति । अलंशब्दस्य । कुत एतत् ? इतिकरणेनार्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकतयाऽलंशब्दस्य व्यवस्थापनात् । एवमेवमलमर्थः सम्भावनस्य विशेषणं नोपपद्यते । ततश्च यदुक्तं तदिदानीमलमर्थेन विशेष्यत इति तद्विघटते । नैष दोषः । आवृत्तिरलंशब्दस्य करिष्यते । तत्रैकस्य सूत्रोपात्तस्यार्थपदार्थकता भविष्यति । आवृत्तस्येति करणेनाभिसम्बन्धादर्थपदार्थकतायाः प्रच्युतस्य शब्दपदार्थकता चात्र गम्यते । चार्थ इति । अर्थात् प्रकरणाद्वा । न तु प्रयुज्यत इति । अवगतार्थत्वात् । क्रियासम्भावनोपाधिक इति । क्रियासम्भावनमुपाधिर्विशेषणं यस्यार्थस्य स तथोक्तः । अपि पर्वतं शिरसा भिन्द्यादिति । पूर्ववत् आसो ( ६।४।१११ ) रल्लोपः । अत्र यत् पर्व्वतभेदनविषयं सामर्थ्यं पुंसः सम्भाव्यते तत् तस्य विद्यत एवेत्यवितथत्वात् पर्य्याप्तं सम्भावनम् । प्रायेण स गमिष्यतीति । अस्यत्र सम्भावनम् प्रायशब्दात् प्रतीयमानम् । अलमर्थस्तु नास्ति । तेन भविष्यत्कालविवक्षायां लृडेव भवति । न लिङ् ।

## १५५ । विभाषा धातौ सम्भावनवचनेऽयदि ।

## १५६ । हेतुहेतुमतोर्लिङ् ।

भविष्यति काल इति । इष्यत इत्यपेक्षते । कथं पुनर्विभाषा भविष्यत्

कालश्च लभ्यते ? यावता नेह सूत्रे विभाषाग्रहणं विनापि भविष्यत्कालोऽस्ति। अत आह यस्माद् विभाषाग्रहणमनुवर्त्तत इति तेन विभाषा लिङ्प्रत्ययो लभ्यते। यद्वुताप्योरित्यादिः ( ३।३।१५२ ) सूत्राल्लिङिति वर्त्तमाने पुनर्लिङ्ग्रहणं क्रियतेऽतो भविष्यत्कालो लभ्यते। पुनर्लिङ्ग्रहणस्यैतत् प्रयोजनं कालविशेषे भविष्यति यथा स्यादिति। तेन हन्तीति पलायत इत्येवमादौ वर्त्तमानविवक्षायां लडेव भवति। अत्र हननं हेतुः। पलायनं हेतुमत्। पलायत इति। उपसर्गस्यायताविति (८।२।१९) लत्वम्।

## १५७। इच्छार्थेषु लिङ्लोटौ।

भुङ्क्तामिति। टेरेत्वे ( ३।४।९६ ) कृत आम् ( ३।४।९० )। कामप्रवेदन इति वक्तव्यमिति। कामस्येच्छायाः प्रवेदने प्रकाशन इमौ लिङ्लोटौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। कामप्रवेदनेऽकच्चितीत्यतः ( ३।३।१५३ ) कामप्रवेदनग्रहणमनुवर्त्तते। तेन कामप्रवेदन एव भवतः। अत्र लिङ्ग्रहणं किमर्थम् ? नेच्छार्थेषु लोट् चेत्येवोच्येत। चकारेण समुच्चीयमानोऽपि प्रकृतो लिङ् भविष्यति। नैतदस्ति। विभाषया हि भविष्यत्काल इत्युक्तम्। ततो यद्यसावनुवर्त्तते विकल्पः स्यात्। तद्बाधनार्थमेव पुनर्लिङ्ग्रहणं क्रियते।

## १५८। समानकर्त्तृकेषु तुमुन्।

पूर्वेण लिङ्लोटोः प्राप्तयोस्तुमुन् विधीयते। तुमुन्प्रकृत्यपेक्षमेवेति। यस्माद् धातो स्तुमुन् विधीयते स तुमुन्प्रकृतिः। तां यदपेक्षते तत् तुमुन्प्रकृत्यपेक्षम्। इच्छार्थानां धातूनामेव तुमुन्प्रकृत्यपेक्षमुपपदत्वम्। अतः प्रत्यासत्तेस्तदपेक्षमेव समानकर्त्तृकत्वं ज्ञायते। तुमुन्प्रकृते र्यः कर्त्ता स चेदिच्छार्थानामपि भवतीति। इच्छति भोक्तुमिति। योऽत्रेषेः कर्त्ता स एव भुजेरपीत्यस्तीह समानकर्त्तृकत्वम्। तुमुण्ण्वुलौ क्रियायां क्रियार्थायामित्यादिनैवात्र ( ३।३।१० ) तुमुनि सिद्धे पुनस्तस्य विधानं समानकर्त्तृकेषु लिङ्लोटौ च परत्वात् प्राप्नुतस्तौ मा भूतामितेत्र्यवमर्थो ण्वुल् मा भूदितेत्र्यवमर्थश्च। देवदत्तं भुञ्जानमिच्छतीति। अत्र भुजेर्देवदत्तः कर्त्ता। इच्छते-

स्ततोऽन्य इति नास्ति समानकर्तृकत्वम् । तेन वर्त्तमानविवक्षायां लड़ेव भवति । अनभिधानादिति । नह्यत्र तुमुनोत्पद्यमानेन विवक्षितोऽर्थः शक्यतेऽभिधातुमिति । अभिधानलक्षणाश्च कृत्तद्धितसमासाः । अथवानभिधानादिति । इच्छन् कर्त्तुमित्यभिधानस्याभावादित्यर्थः । लोकप्रसिद्धानां हि शास्त्रेऽन्वाख्यानं क्रियते । नत्विच्छन् कर्त्तुमित्यादयो लोकप्रसिद्धाः ।

## १५९ । लिङ् च ।

भुञ्जीयाधीयेति । इटोऽत् (३।४।१०६) । किमर्थं पुनरिदमुच्यते ? यावता वासरूपविधिनैवात्र लिङ् भविष्यति । नैतदस्ति । लिङ्लोटोरपवादत्वाद् बाधकयोः प्राप्तयोस्तद्बाधनार्थस्तुमुन् विधीयते । तेन बाधितत्वाद् यथा लोड् न भवति तथा लिङपि न स्यात् । तस्माल्लिङ्विधानार्थमिदमुच्यते । योगविभाग उत्तरार्थ इति । उत्तरसूत्रे लिङ एवानुवृत्तिर्यथा स्यात् । तुमुनो मा भूत् ।

## १६० । इच्छार्थेभ्यो विभाषा वर्त्तमाने ।

वष्टीति । वश कान्तौ । अदादित्वाच्छपो लुक् (२।४।७२) व्रश्चादिना (८।२।३६) षत्वम् । उश्यादिति । ग्रह्यादि (६।१।१६) सूत्रेण संप्रसारणम् । कामयत इति । कमेर्णिङ् (३।१।३०) ।

## १६१ । विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।

प्रेरणमिति । नियोगः । निमन्त्रणं नियोगकरणमिति । असत्यामपीच्छायामकरणे सत्यधर्मोत्पत्तेर्नियमेनावश्यम्भावेन यत् करणं तन्निमन्त्रणम् । कामचारकरणमिति । कामचार इच्छाप्रचारः । तेन यत्करणं तदामन्त्रणम् । एतदुक्तम्भवति । यदिच्छयैव करणं नानिच्छयाऽकरणेऽपि दोषाभावात्तदामन्त्रणम् । इहायं विध्यादिरर्थः प्रकृत्यर्थविशेषणं वा स्यात् प्रत्ययार्थो वा प्रत्ययार्थविशेषणं वा ? तत्र यद्याद्यः पक्ष आश्रीयेत तदा यत्र प्रकृतिरेव विध्यादीनर्थानाचष्टे तत्र न सिध्येद् । विदध्यान् निमन्त्रयेतामन्त्रयेताधीच्छेदिति । नह्यत्र प्रकृत्यर्थादन्ये विशेषणभूता विध्यादयः सन्तीत्येष दोषः प्रतिविधेयः स्यात् । प्रतिविधीयमानेऽपि तस्मिन् प्रतिपत्ति-

गौरवं स्यात्। अथ द्वितीयो भावकर्मकर्तृप्रत्ययार्थानां विध्यादयो वाचकाः स्युरित्येवमनयोर्दोषं दृष्ट्वा तृतीयं पक्षमाश्रित्याह विध्यादयश्चेत्यादि। प्रत्ययार्थास्तथैव भावकर्मकर्तारः। तेषु लः कर्मणि चेत्यादिना (३।४।६९) प्रत्ययस्य विधानात् तेषामयं विध्यादिरर्थो विशेषणमिति मत्वाह विध्यादिविशिष्टेष्वित्यादि। एतेनादिशब्देन निमन्त्रणादीनां ग्रहणम्। द्वितीयेन भावकर्मणोः। आसीतेति। अदादित्वाच्छपो लुक्। अध्यापयेदिति। पूर्ववदात्त्वपुकौ।

## १६२। लोट् च।

यदि विध्यादिष्वेव लोड् भवत्येवं योगविभागः किमर्थः क्रियत इत्याह योगविभाग उत्तरार्थ इति। उत्तरसूत्रे लोट एवानुवृत्तिर्यथा स्यात्। लिङो मा भूदिति। करोत्विति। एरुरित्युत्वम् (३।४।८६)। अध्ययाइति। आङुत्तमस्य पिच्चेत्याट् (३।४।९२)। टेरेत्त्वे कृत एत ऐ (३।४।९३)। आटश्चेति (६।१।९०) वृद्धिः। प्रकृतेर्गुणायादेशौ।

## १६३। प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च।

कार्य्य इति। ऋहलोर्ण्यदिति (३।१।१२४) ण्यत्। कृत्य इति। विभाषा कृवृषोरिति (३।१।१२०) क्यप्। किमर्थमिदमित्यादि चोद्यम्। विशेषविहितेत्यादि परीहारः। कृत्या हि सामान्येन विहिताः। लोट् तु प्रैषादिनार्थविशेषेण। अतस्तेन विशेषविहितेन कृत्याः प्रैषादिविषये बाध्येरन्निति पुनर्विधीयते। वासरूपेत्यादिना परिहारं विघटयति। एवं तर्हीत्यादिना प्रैषादिषु कृत्यविधानस्य ज्ञापकत्वं दर्शयति। ननु चाऽसति प्रयोजने ज्ञापकं भवति। इह चास्ति प्रयोजनम्। किं तत्? प्रैषादि येन नियमेन कृत्या भवन्ति। नान्यत्रेति। नैतत्। अनिष्टत्वात्। अन्यत्रापि हि कृत्या दृश्यन्ते तृणेन शोध्यं बुधेन बोध्यमिति। तच्च नियमे सति न सिध्येत्। नह्यत्र प्रैषादयो गम्यन्ते। तस्मान्नेह नियमोऽभीष्टः। न चानिष्टार्था प्रक्लृप्तिः शास्त्रे युक्ता। ततो युक्तं ज्ञापकमेव कृत्यविधानस्यावश्यभावात्। अवश्यंग्रहणेन क्वचिदपि भवतीति दर्शयति। एतच्च स्त्र्यधिकारात् परेणापि वासरूपविधिः क्वचित् स्वरितत्वप्रतिज्ञानाल्लभ्यते। तेन कालादिषूपपदेषु

वासरूपविधिना लुङपि भवति कालो भोजनस्येति । यदि तु सर्वथा वासरूपविधिर्न स्यात् तदा कालसमयवेलासु तुमुन्निति (३।३।१६७) तुमुन्नेव नित्यं स्यात् । केचिदाहुरिति वचनादपरे त्वेतयोर्विशेषं नेच्छन्तीत्युक्तं भवति ।

## १६४ । लिङ् चोर्ध्वमौहूर्त्तिके ।

यथाप्राप्तञ्चेति । लोट् । कृत्याश्च ।

## १६५ । स्मे लोट् ।

लिङ् कृत्यानामपवाद इति । अनन्तरसूत्रविहितानाम् ।

## १६६ । अधीष्टे च ।

लिङोऽपवाद इति । विध्यादिसूत्रेण प्राप्तस्य । अध्यापयेति । सेर्ह्यादेशः (३।४।८७) । तस्मातो हेरिति (६।४।१०५) लुक् । जुहुधीति । हुझल्भ्यो हेर्धिरिति(६।४।१०१)धिरादेशः ।

## १६७ । कालसमयवेलासु तुमुन् ।

प्रैषादिग्रहणमिह सम्बध्यत इति । न चेदिह प्रैषादयो गम्यन्ते । तेन तत्र न भवतीत्यभिप्रायः । कालो भोजनस्येत्युक्ते तस्माद् भुङ्क्तां भवानिति प्रैषो गम्यते । ततश्च प्रैषादिग्रहणेऽनुवर्त्तमानेऽपीह प्राप्नोतीत्यभिप्रायेणाह इह कस्मान्न भवतीत्यादि । स्यादेतत् । प्रैषादिषु कृत्यविधानाज् ज्ञापकात् स्त्र्यधिकारात् परेणापि वासरूपविधिर्नास्तीति तत् कथं लुङपि भवतीत्यत आह उक्तमित्यादि । नहि स्त्र्यधिकारात् परेणापि सर्वत्र वासरूपविधिर्नास्तीति । किं तर्हि ? अनित्यः । ततः क्वचिद् भवति । एतच्चैवं तर्ह्येतज् ज्ञापयतीत्यादिना (R) प्रागेवाभिहितम् ।

## १६८ । लिङ् यदि ।

तुमुनोऽपवाद इति । पूर्वसूत्रेण प्राप्तस्य ।

## १६९ । अर्हे कृत्यतृचश्च ।

वोढव्येति । हो ढः (८।२।३१) । झषस्तथोर्धोऽधः (८।२।४०) । ष्टुना ष्टुः (८।४।४१) । ढो ढे लोपः (८।३।१३) । सहिवहोरोदवर्णस्येत्येते (६।३।११२)

(R) वृत्तिकारेण प्रैषादि सूत्रस्य (३।३।१६३) वृत्तौ ।

विधय: कर्त्तव्या:। अथेत्यादि इत्थम्। योऽयमित्यादि परीहार:। वासरूपविधि: स्त्र्यधिकारात् परेण नावश्यम्भवतीत्युक्तमेव।

१७०। आवश्यकाधमर्ण्ययोर्णिनि:।

आवश्यकमिति। मनोज्ञादित्वाद्वुञ्। उपाधिरयमिति। प्रत्ययार्थविशेषणमित्यर्थ:। नोपपदमिति। उपपदत्वे तु कारी हारीति रूपं न स्यादित्यभिप्राय:। ओरावश्यक (३।१।१२५) इत्यत्र प्रतिपादितमेवावश्यमुपाधि र्नोपपदमिति। तदिहापि तद्वदेवोपाधिकत्वमावश्यकस्य वेदितव्यम्। तेन सह निर्द्देशादाधमर्ण्यमप्युपाधिरेव। नोपपदमिति। यद्यावश्यकमुपाधि र्नोपपदमुपपदमतिङिति (२।२।१८) समासो न स्यात्। न चान्यल्लक्षणमस्ति येनेह समास: स्यादिति यो मन्येत तं प्रत्याह मयूरव्यंसकादित्वात् (२।१।७२) समास इति। सहस्रं दायीति। अकेनोर्भविष्यदाधमर्ण्ययोरिति (२।३।७०) षष्ठ्यां प्रतिषिद्धायां द्वितीयैव भवति।

१७१। कृत्याश्च।

किमर्थमित्यादि चोद्यम्। विशेषविहितैनेति परीहार:। कर्त्तरीत्यादिना परिहारविघटनञ्च। केचिदित्यादिना परकीयमतेन परीहारसमर्थनम्। भव्यगेयमिति। समुदायेषु हि वृत्ता: शब्दा अवयवेष्वपि वर्त्तन्त इति भव्यगेयादय: शब्दा अवयवभूतेषु कृत्येष्विह वर्त्तन्ते। कर्त्तृवाचिन इति। भव्यगेयादिसूत्रेणैषां (३।४।६८) पक्षे कर्त्तरि निपातनात्। योगविभाग उत्तरार्थ:।

१७२। शकि लिङ् च।

शकीति। प्रकृत्यर्थविशेषणमेतदिति। एतेनोपपदत्वं शकोऽपाकरोति। उपपदत्वे ह्यप्रयुज्यमाने शको न स्यादित्यभिप्राय:। ननु च सामान्येन कृत्यानामभिधानाच्छकेरपि भविष्यति। तत् किमर्थमित्याह सामान्येन विहितानामित्यादि।

१७३। आशिषि लिङ्लोटौ।

प्रकृत्यर्थविशेषणञ्चैतदिति। पूर्वेणाभिप्रायेणोपपदनिरासार्थमिदमुच्यते। जीव्यादिति। लोपो व्योरिति (८।२।२९) सलोप:। अथ किमर्थं लिङ्ग्रहणम्?

लोट् चेत्येव (३।३।१६२) सिद्धम्। चकारेण ह्यनुकृष्यमाणो लिङपि भविष्यति । नैवं शक्यम् । यथैव हि चकारेण लिङनुकृष्यते तथा कृत्या अप्यनुकृष्येरन् । ननु निवर्त्तिष्यन्ते कृत्याः । तेषु निवर्त्तितेषु लिङ एवानुकर्षणार्थं चकारो भविष्यति । सत्यमेतत् । एवं यदि तेषां निवृत्तिर्विज्ञास्यते लिङोऽपि निवृत्तिः स्यात् । व्याख्यानादनुवर्त्तिष्यत इति चेदेवमपि प्रतिपत्तिगौरवं स्यात् । तस्मात् प्रतिपत्तिगौरवपरीहारार्थं यथान्यासमेव न्याय्यम् । अथ विध्यादिसूत्र (३।३।१६१) एवाशीर्ग्रहणं कस्मान्न कृतम् ? एवं हि लिङ्लोटोर्ग्रहणं न कृतं भवति । नैवं शक्यम् । विध्यादिसूत्रे (३।३।१६१) पाठे सति स्मे लोड़ित्येव-मादिभिः (३।३।२६५) परत्वाद् बाधा स्यात् । इह तु क्रियमाणे परत्वादेष योगस्तेषां बाधको भविष्यतीति न भवत्येष दोषप्रसङ्गः । अवश्यञ्चोत्तरार्थमाशी-ग्रहणं कर्त्तव्यम् । क्तिच्-(३।३।१७४) क्तौ च संज्ञायामित्याशिषि यथा स्याताम् ।

## १७४ । क्तिच्क्तौ च संज्ञायाम् ।

समुदायेनेति । प्रकृतिप्रत्ययसमुदायेन । एतेन समुदायोपाधितां संज्ञाया दर्शयति । तन्तिरिति । तनु विस्तारे । अत्रानुनासिकस्य क्विझलोः क्ङितीति (६।४।१५)दीर्घः प्राप्नोति । अनुदात्तोपदेशे(६।४।३७)त्यादिनानुनासिकलोपश्च । तदुभयं न क्तिचि दीर्घश्चेति (६।४।३९) निषिध्यते । सातिरिति । षणु दाने । जनसनखनां सञ्झलोरित्यात्वम् (६।४।४२) । देवदत्त इति । डुदाञो निष्ठायां दो दद् घो रिति(७।४।४६) ददादेशः । खरि चेति (८।४।५५) चर्त्वम् ।

## १७५ । माङि लुङ् ।

मा कार्षीदिति । न माङ्योग इत्यडागमाभावः (६।४।७४) ।

## १७६ । स्मोत्तरे लङ् च ।

स्मशब्द उत्तरमधिकं यस्य माङः स तथोक्तः ।

इति श्रीबोधिसत्त्वदेशीयाचार्य्यजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां तृतीयाध्यायस्य
तृतीयः पादः समाप्तः ॥३।३॥

अथ

# काशिकाविवरणपञ्जिका।

## तृतीयाध्यायस्य

## चतुर्थः पादः।

———:०:———

### १। धातुसम्बन्धे प्रत्ययाः।

धात्वर्थे धातुशब्द इति। अभिधेयेऽभिधानोपचारं कृत्वा धात्वर्थोऽत्र धातुशब्देन निर्दिष्ट इति दर्शयति। भ्वादिष्वेवायं धातुशब्दो वर्त्तते। स्वार्थे गुणीभूतस्य धातुशब्दस्य शब्दान्तरेण सम्बन्धो न स्यात्। तस्माद् धात्वर्थ एवायं धातुशब्दो वर्त्तते। न भ्वादिषु। ततश्च धातुसम्बन्ध इत्यस्य धात्वर्थ सम्बन्ध इत्येषोऽर्थो विज्ञायत इत्याह धात्वर्थानां सम्बन्धो धातुसम्बन्ध इति। कः पुनः सम्बन्ध इत्याह विशेषणविशेष्यभाव इति। अयथाकालोक्ता अपीत्यादि। यो यस्यात्मीयः कालो यथाकालम्। यथाऽसादृश्य (२।१।७) इति वीप्सायामव्ययीभावः। यथाकाले उक्ता यथाकालोक्ताः। सप्तमीति (२।१।४०) योगविभागात् समासः। न यथाकालोक्ता अयथाकालोक्ताः। एतदुक्तं भवति। स्वैःस्वैर्विधायकैर्वाक्यैर्यत्र यस्मिन् यस्मिन् काले ये ये विहितास्ततोऽन्यत्र-कालेऽपि प्रयुक्ताः प्रत्ययाः साधवो भवन्तीति। अग्निष्टोमयाजीत्यादीन्युदा-हरणानि दर्शयति। सर्वत्र तिङन्तवाच्योऽर्थो विशेष्यः। सुबन्तवाच्यस्तु विशेषणम्। अग्निष्टोमयाजीति भूतकाल इति। भूतःकालोऽस्येति बहुव्रीहिः। भूतकालत्वन्तु भूताधिकारे करणे यज (३।२।८५) इति णिनेर्विधानात्। जनि-तेति भविष्यत्काल इति। भविष्यन् कालोऽस्येति बहुव्रीहिरेव। भविष्यत्-कालत्वन्तु भविष्यदनद्यतने लुटो विधानात्। तत्रेति। निर्धारणे सप्तमी।

तयोर्भूतकालभविष्यत्कालयोर्मध्ये यो भूतकालः स भविष्यत्कालेन सम्बध्यमानः साधुर्भवति। अग्निष्टोमयाजीति भूतकालो जनितेति भविष्यत्कालेनापि सम्बध्यमानो भविष्यत्काल एव सम्पद्यते। द्वितीयेऽप्युदाहरणे कृत इति भूतकालः। भूते निष्ठाविधानात्। भवितेति भविष्यत्कालः। पूर्ववदेव। तत्र भूतकाल इतरेणापि सम्बध्यमानः साधुर्भवति। तृतीयेऽपि भावीति भविष्यत्कालः। भविष्यति गम्यादय इति (३।३।३) वचनात्। आसीदिति भूतकालः। भूतानद्यतने लङो विधानात्। तत्र भविष्यत्कालो भूतकालेनापि सम्बध्यमानः साधुर्भवति। इहाग्निष्टोमयाज्यस्य पुत्रो जनितेति भूतकालो भविष्यत्कालेनापि सम्बध्यमानो भविष्यत्कालः सम्पद्यते। तथाह्ययमत्रार्थः प्रतीयते। सोऽस्य पुत्रो जनिता योऽग्निष्टोमेन यष्टेति। नच भविष्यत्कालो भूतकालेनाभिसम्बध्यमानो भूतकालतां प्रतिपद्यते। नह्यत्रायमर्थः प्रतीयते सोऽस्य पुत्रो जातो योऽग्निष्टोमेनेष्टवानिति। इतरयोरप्युदाहरणयो र्विशेषणं विशेष्यकालतामापद्यते यतस्तत्रायमर्थोऽवगम्यते। स श्वो भविता कटो यः करिष्यते। तत् कृत्यमासीद् यद् भूतमिति। तदेतत् कथं भवति? विपर्य्ययः कस्मान्न भवतीत्याह विशेषणमित्यादि। विशेषणं हि परार्थत्वाद् गुणोऽप्रधानमित्यर्थः। तेन च प्रधानकालस्य विशेष्यस्योपकारः कर्त्तव्यः। न च तत् प्रधानमपरित्यज्य स्वकालं प्रधानकालमप्रतिपद्यमानं प्रधानोपकारक्रियां कर्त्तुं समर्थम्भवतीति प्रधानस्य यःकालस्तमनुरुध्यते। विशेष्यन्तूपकार्य्यत्वात् प्रधानम्। न च प्रधानस्य गुणकालापत्ति र्युक्ता। अन्यथा यदि गुणकालं प्रधानकालः प्रतिपद्येत तदा तस्य प्रधानत्वं हीयेत। तेन न भवति विपर्य्ययः। अथ प्रत्ययग्रहणं किमर्थम्? यावता प्रत्यय इत्यनुवर्त्तत इत्यत आह प्रत्ययाधिकार इत्यादि। पूर्वकं प्रत्ययग्रहणं धातुसम्बद्धम्। अतस्तदिहाश्रीयमाणं धात्वधिकारविहितानां प्रत्ययानां साधुत्वे सम्पद्यते। अत्र पुनः प्रत्ययग्रहणे प्रत्ययमात्रं गृह्यते। तेन तद्धितानामधात्वधिकारविहितानामपि प्रत्ययानां सम्बन्धे कालान्तरप्रयुक्तानां साधुत्वमुपपद्यते। तदर्थं पुनः प्रत्ययग्रहणम्। कालभेद इति। कालविशेषे ऽस्मात् कालादन्यस्मिन् काल इत्यर्थः। गोमानासीदिति। गोमानिति वर्त्तमानकालः।

तदस्येत्यादिना (५।२।९४) वर्त्तमानकालमस्तीत्युपादाय मतुपो विधानात्। स भूतभविष्यत्कालाभ्यां सम्बध्यमानः साधुर्भवति।

## २। क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः।

प्रकृत्यर्थविशेषणञ्चैतदिति। एतेनोपपदत्वं निरस्यति। उपपदत्वे हि केवलाद् हेतोर्न स्यादित्यभिप्रायः। अत्र तिङादेशौ वा हिस्वौ स्यातां लोडादेशौ वेति द्वौ पक्षौ। ननु च प्रथमपक्षाशङ्कायाः प्रसङ्ग एव नास्ति। लोट इति वचनात्। तत् कथमसावाशङ्कितः ? लोट्स्थानिकत्वादादेशोऽपि लोड्व्यपदेशमासादयतीति युक्तमाशङ्कितुम्। तत्र हि यदि पूर्वकः पक्ष आश्रीयते तदा भुङ्क्ष्व भुङ्क्ष्वेत्येवाहं भुनजायित्याडुत्तमस्य पिच्चेति (३।४।९२) पित्त्वाद् ङित्त्वं नास्ति। ततश्च श्नसोरल्लोप (६।४।१११) इत्याकारलोपो न स्यात्। उभावपि च परस्मैपदानामात्मनेपदानामनियमेन स्याताम्। नियमहेतोरभावात्। सामान्येन तिङां स्थाने विधीयमानयोः कुत एतल्लभ्यते ? यतः परस्मैपदानां ह्यादेशेन भवितव्यम्। इतरेषां स्वादेशेनेति। तस्माद् दुष्टोऽयं पक्ष इति मत्वा द्वितीयपक्षमाश्रित्याह तस्य च लोट इत्यादि। यस्मिन् पक्षे दोषः प्रसजति तं प्रतिविधास्यति। तध्वंभाविनस्तु वा भवत इति। लोट इत्यपेक्ष्यते। तश्च ध्वञ्च तध्वमौ। तौ भाविनौ यस्य लोटः स तध्वम्भावी। एतेन तादेशार्थो लोड्‌ेव स्थानी। तादर्थ्यात्। सूत्रे तशब्देन व्यपदिष्टो ध्वमादेशार्थश्च ध्वंशब्देनेति दर्शयति। अथ तध्वमावेव स्थानिनौ कस्मान्न विज्ञायेते ? अशक्यं हि तौ स्थानित्वेन विज्ञातुम्। तयोरपि स्थानित्वेऽलोडादेशयोरपि हिस्वौ स्याताम्। अथ तध्वमौ विशेषयिष्यामो लोटो यौ तध्वमाविति। ततोऽयमदोष इति चेदेवमपि प्रतिपत्तिगौरवं स्यात्। तध्वम्भाविनो लोट एव स्थानित्वं युक्तम्। न तध्वमोः। यदि तर्हि लोटो हिस्वावादेशौ न तदादेशानां तिङामिवैवञ्च लः परस्मैपदमिति(१।४।९९)तयोः परस्मैपदसंज्ञा स्यात्। ततश्च शेषात् कर्त्तरि परस्मैपदमित्युभावपि(१।३।७८)परस्मैपदिभ्य एव स्याताम्। तिङ्त्वसन्निवेशाच्च तदन्तस्य तिङन्तता न स्यात्। ततश्च तिङ्ङतिङ इति (८।१।२८) निघातो न स्यादित्यत आह योगविभागश्चेत्यादि। लोड्इत्येवेति।

एतेन द्वितीये योगे लोड़ित्यस्यानुवृत्तिं दर्शयति । लोड्धर्म्माणावित्यादि । लोट इव धर्म्मस्तिङ्त्वादिर्ययोस्तौ लोड्धर्म्माणौ । ननुच लोड़ादेशानां तिङ्त्वादि धर्म्मः । न लोटः । आदेशद्वारेण स्थानिनोऽपि लोट स्तिङ्त्वादिधर्मो भवतीत्यदोषः । कथं पुनर्योगविभागे सति लोड्धर्माणौ तौ भवतः ? योग विभागे सति द्वितीये योगे लोट्शब्दो योऽनुवर्त्तते तेनार्थाद् विभक्तेर्विपरिणामो भवतीति षष्ठ्यन्ततामापन्नेन हिस्वौ विशेष्येते लोटो यौ हिस्वाविति । ततश्च लोड़ादेशयोः सिप्थासोः स्थाने यौ हिस्वौ से ह्यपिच्चेत्यादिना(३।४।८७) शास्त्रेण विधास्येते तावेव यथास्वमुपात्तविशेषाविह लोटःस्थाने विधीयेते । ना पूर्वाविति । तेन लोड्धर्माणौ तौ भवत इत्येषोऽर्थो लभ्यत एव । तेनेत्यादि । अत एवं यथोक्तेन प्रकारेण लोड्धर्माणौ तौ हिस्वौ लोटः स्थाने भवतः । तेन परस्मैपदत्वमात्मनेपदत्वञ्च भेदेन विषयविभागेन व्यवतिष्ठते । तत्र हिशब्दे परस्मैपदत्वं व्यवतिष्ठते । लोट्सम्बन्धिनो हेः परस्मैपदसंज्ञकत्वात् । स्वशब्दे चात्मनेपदत्वं व्यवतिष्ठते । स्वशब्दस्य लोट्सम्बन्धिन आत्मनेपदसंज्ञकत्वात् । तिङ्त्वञ्च द्वयोरपि भवतीति । लोट्सम्बन्धिनोस्तयोर्द्वयोरपि तिङन्तत्वात् । ननुच सिप्थासोर्लोड़ादेशयो स्तौ सम्बन्धिनौ । तदादेशत्वात् । न लोटः । तत् कथं लोट्सम्बन्धित्वेन व्यपदिश्येते ? आदेशद्वारेण लोट्सम्बन्धित्वं तयोरप्यस्तीत्यदोषः । यदि तर्हि लोड्धर्माणौ भवत एवमेकवचनसंज्ञा स्यात् । मध्यमपुरुषसंज्ञा च । तयोरपि लोड्धर्म्मत्वात् । ततश्च वचनान्तरभाविनः पुरुषान्तरभाविनश्च लोटो न स्याताम् । नैष दोषः । यदि ह्येकवचनमध्यमपुरुषसंज्ञे अपि स्यातां वचनमिदमनर्थकं स्यात् । विनाप्यनेन वचनेन मध्यमपुरुषैकवचनयोर्हिस्वयोः सिद्धत्वात् । लुनीहि लुनीहीति क्रियासमभिहारे द्वे भवत इति (८।१।१२, वा) द्विर्वचनम् । ई हल्यघोरितीत्वम्(६।४।११३) । लुनन्तीति । श्नाभ्यस्तयोरात(६।४।११२)इत्याकारलोपः । अथवेत्यादिना वा च तध्वमोरिति वाग्रहणस्य फलं दर्शयति । अलावीदिति । सिचि वृद्धिः परस्मैपदेष्विति (७।२।१) वृद्धिः । आर्धधातुकस्येड् वलादेरितीट् (७।२।३५) । अस्तिसिचोऽपृक्त इतीट् (७।३।९६) । इट ईटीति (८।२।२८) सिचो लोपः । अलाविष्टामिति । तस्थस्थेत्यादिना (३।४।१०१) तसस्ताम् ।

मलाविषुरिति। सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९) झेर्जुसादेशः। एवं मध्यमोत्तमयोरप्युदाहार्य्यमिति। लुनीहि लुनीहित्येव त्वमलावीर्युवामलाविष्टं यूयमलाविष्ट। अथवा लुनीत लुनीतेत्येव यूयमलाविष्ट। लुनीहि लुनीही-त्येवाहमलाविषम्। आवामलाविष्व। वयमलाविष्म। एवं मध्यमोत्तमयो-रप्युदाहार्य्यमिति। लुनीहि लुनीहित्येव त्वं लविष्यसि युवां लविष्यथो यूयं लविष्यथ। अथवा लुनीत लुनीतेत्येव यूयं लविष्यथ। लुनीहि लुनीहीत्येवाहं लविष्यामि। आवां लविष्यावः। वयं लविष्यामः। अधी-याते इति। इयङ्। अधीयत इति। आत्मनेपदेष्वनत (७।१।५) इत्यदादेशः। एवं सर्वलकारेषूदाहार्य्यमिति। लङ्—लुनीहि लुनीहीत्येवायमलुनात्। इमावलुनीताम्। इमेऽलुनन्। लुनीहि लुनीहीत्येव त्वमलुना युवामलुनीतं यूयमलुनीत। अथवा लुनीत लुनीतेत्येव यूयमलुनीत। लुनीहि लुनीहीत्ये-वाहमलुनाम्। आवामलुनीव। वयमलुनीम। अधीष्वाधीष्वेत्येवायमध्यैत। इमावध्येयाताम्। इमेऽध्येयत। अधीष्वाधीष्वेत्येव त्वमध्यैथाः। युवामध्येयाथां यूयमध्यैध्वम्। अथवा अधीध्वमधीध्वमित्येव यूयमध्यैध्वम्। अधीष्वाधीष्वेत्ये-वाहमध्येयि। आवामध्यैवहि। वयमध्यैमहि। अन्येषु लकारेष्वतिग्रन्थ-विस्तरभयान्नोदाह्रियते। अनया दिशा स्वयमेवाभ्युपगम्योदाहार्य्यम्। अथ लुनीहि लुनीहीति कथमत्र द्विर्वचनम्? यावता धातुनैव क्रियासमभिहारो-ऽवगमितः। तद्विशिष्टक्रियावचनाद्धातोर्लोड्विधानात्। अथवावगमिते सति तस्मिन् द्विर्वचनं भवतीति चेदेवं यङन्तस्यापि द्विर्वचनं स्यादित्यत आह क्रियासमभिहाराभिव्यक्तावित्यादि। यद्यपि क्रियासमभिहारविशिष्टक्रिया-भिधायिनो धातोर्लोड् भवति तथापि या तस्य क्रियासमभिहाराभि-व्यक्तिः सा धातुना न क्रियते। किन्तर्हि? लोडेव। स च तां कर्त्तुं द्विर्वचनसहित एव समर्थो भवति। न केवलः। तत्र तस्याविधानात्। स हि लोड् लः कर्मणि च भावे चाकर्मकेभ्य इति (३।४।६९) कर्मादिषु विधीयते। न क्रियासमभिहारे। तस्मात् तदभिव्यक्तौ कर्त्तव्यायां लोट् स्वयमसमर्थ इति द्विर्वचनमपेक्षते तेन तदन्तस्य द्विर्वचनं भवतीति भावः। केन पुन-र्विधीयमानं द्विर्वचनमपेक्षत इत्याह क्रियासमभिहार इत्यर्थः। यङन्तस्य:

पुनरित्यादि। यङ्प्रत्ययो हि क्रियासमभिहार एव विधीयते। तेनासौ तत्र विधीयमान स्तदभिव्यक्तौ स्वयमेव समर्थ इति नापेक्षते द्विर्वचनम्। तेन तदन्तस्य द्विर्वचनं न भवतीति भावः।

## ३। समुच्चयेऽन्यतरस्याम्।

अनेकक्रियाध्याहारः समुच्चय इति। अनेकासां क्रियाणां चीयमानतेत्यर्थः। एतेन समभिहारात् समुच्चयस्य भेदं दर्शयति। समभिहारोऽपि पौनःपुन्यम् भृशार्थो वा। स चैकस्या एव क्रियायाः सम्भवः। समुच्चयःपुनरनेकासां क्रियाणाम्। भ्राष्ट्रमटेति। अतो हेरिति (६।४।१०५) लुक्। अत्र साधनभेदाद् भेदमुपागतानामनेकासामटनक्रियाणां समुच्चयः। अथवेत्यादि। प्रथमेनाथवेति ग्रहणेन वा च तध्वमोरिति (३।४।२) वाग्रहणप्रतिपादितं विकल्पं दर्शयति। द्वितीयेनान्यतरस्यांग्रहणप्रतिपादितम्।

## ४। यथाविध्यनुप्रयोगः पूर्वस्मिन्।

पूर्वस्मिँल् लोड्विधान इत्यादेर्वाक्यस्य यस्माद् धातोरित्यादिनार्थं स्पष्टीकरोति। धातुसम्बन्ध इत्यादि। धातुसम्बन्ध इत्यनुवृत्तेर्धातुसम्बन्ध एव लोड्विधानम्। अतोऽनुप्रयोगः सिद्ध एव। नहि तेन विना धातुसम्बन्धो भवति। तस्य द्विष्ठत्वात्। यद्येवं किमर्थमिदं वचनमित्याह यथाविध्यर्थन्त्विति। अथ व्यवहितप्रयोगस्य वा पूर्वस्य प्रयोगस्य वा निवृत्त्यर्थं कस्मान्न भवति यथा कृञ्चानुप्रयुज्यते लिटीति (३।१।४०)? न। तयोरपीष्टत्वात्। इष्यते हि व्यवहितप्रयोगो लुनीहि लुनीहीतीत्यवायं देवदत्तो लुनाति। पूर्वप्रयोगोऽपीष्यते लुनाति देवदत्तो लुनीहि लुनीहीति। तस्माद् यथाविध्यर्थमेवेदं युक्तम्। ननु च समुच्चये सामान्यवचनस्येति (३।४।५) धात्वन्तरस्य समानार्थस्य प्रयोगाभ्यनुज्ञानात् क्रियासमभिहारे यथाविध्यनुप्रयोगो भविष्यतीति। तत् किमनेन वचनेन? नैतदस्ति। समुच्चय एव हि नियमः स्यात्। क्रियासमभिहारे तु यथाविध्यनुप्रयोगः स्यात्। धात्वन्तरस्य च समानार्थस्य। तस्मादारब्धव्यमिदम्।

## ५। समुच्चये सामान्यवचनस्य।

सर्वविशेषानुप्रयोगनिवृत्त्यर्थमिति। यदीदं नारभ्येत तदा यावद्भ्यो धातुभ्यो लोड् विहितस्तावतामेवानुप्रयोगः प्रसज्येत। ततस्तन्निवृत्त्यर्थमेतत्। ननु चान्तरेणापीदं वचनं लाघवात् सामान्यवचनस्यैवानुप्रयोगो भविष्यति। सर्वविशेषानुप्रयोगे ह्योदनं भुङ्क्ष्व सक्तून पिब धानाः खाद इत्येवायं भुङ्क्ते पिबति खादतीति सर्वेषु विशेषेष्वनुप्रयुज्यमानेषु गौरवं स्यादित्यत आह लाघवस्येत्यादि। यदि लौकिके शब्दव्यवहारे लाघवमाद्रियेत तदा तत्शब्दस्यैव प्रयोगः स्यात्। वनस्पतिशब्दप्रभृतयस्तूच्छिद्येरन्। नचैवं तस्मान्नास्ति लौकिकशब्दप्रयोगे गुरुलाघवं प्रत्यादरः। ननु च भ्राष्ट्रमटेत्यादावुदाहरणे कारकस्यैव समुच्चयो भ्राष्ट्रादेः। न क्रियायाः। तस्या एकत्वात्। अनेकाधारत्वञ्च सामान्यम्। एकत्वे क्रियाया स्तन्न सम्भवति। तत् कथं सामान्यवचनस्यानुप्रयोग उपपद्यत इत्याह भ्राष्टमटेत्यादि। गतार्थम्।

## ६। छन्दसि लुङ्लङ्लिटः।

यथायथमिति। यथास्वम्। यो यस्यात्मीयो विषयः स तत्रेत्यर्थः। अकरदिति। कृमृदृरुहिभ्यश्छन्दसीति (३।१।५९) च्लेरङ्। ऋदृशोऽङि गुणः (७।४।१६)। अकरमिति। मिपोऽम्। अवृणीतेति। वृञो लङ्। क्र्यादित्वाच्श्ना। पूर्ववदीत्वम्। ममारेति लिट्। म्रियते र्लुङ्लिङोश्चेति (१।३।६१) नियमात् परस्मैपदम्। णल्। वृद्धिः। रपरत्वम्। द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावात् मृ इतीयतद् द्विरुच्यते। उरदित्यत्वम् (७।४।६६)। रपरत्वम्। हलादिशेषः।

## ७। लिङर्थे लेट्।

नेषत्। तक्षिषदिति। नयते स्तक्षतेश्च लेट्। तिप्। इतश्च लोपः परस्मैपदेष्वितीकारलोपः (३।४।९७)। सिब् बहुलं लेटीति (३।१।३४) सिप्। लेटोऽडाटावित्याट् (३।४।९४)। तक्षिषदित्यत्रार्द्धधातुकस्येत्यादिनेट् (७।२।३५)। जोषिषदित्यादीन्युदाहरणानि सिब् बहुलं लेटीत्यत्र (३।१।३४) व्युत्पादितानि।

## ८। उपसंवादाशङ्कयोश्च ।

उपसंवादः परिभाषणम् । कर्त्तव्ये पणबन्ध इति । उपसंवादशब्दस्येमौ पर्य्यायौ । यदि मे भवानित्यादिनोपसंवादस्य स्वरूपं दर्शयति । कारणत इत्यादिनाप्याशङ्कायाः । अनुसरणमिति । अनुगमनमनुमान इत्यर्थः । तर्क उत्प्रेक्षेति । आशङ्काया इमौ पर्य्यायौ । अहमेवेत्यादि । देवैः पशुपतिरुक्तः त्रिपुरं जहीति । तेनोक्तम् । अहमेव पशूनामीशायिति । ब्रह्महत्याभागं गृह्णानेतुमुक्त आदित्य इदमुक्तवान् मदग्रा एव वो ग्रहा गृह्यान्तै । मद्देवताश्चैव वः पात्राण्युच्यान्तै । ईशायिति । ईश ऐश्वर्य्ये । उत्तमपुरुषैकवचनम् । इट् । टेरेत्वम् । एत ऐ(३।४।९३) । गृह्यान्तायिति । ग्रह उपादाने । झोऽन्तः (७।१।३) । कर्मणि सार्वधातुके यक् । ग्रह्यादिसूत्रेण (६।१।१६) संप्रसारणम् । शेषं पूर्ववत् साधनम् । उच्यान्तायिति । वच परिभाषणे । वच्यादिसूत्रेण ( ६।१।१५ ) संप्रसारणम् । शेषं पूर्ववत् । पतामेति । पत्लृ गतौ । मस् । लेटोऽडाटावित्याट् (३।४ ९४) । जिह्माचरणेनेत्यादिना पूर्वोक्तमाशङ्कालक्षणमुदाहरणे दर्शयति । लिङर्थ एवायमिति । हेतुहेतुमद्भावः । कथम् ? उपसंवादे तावद् यदि मे भवानिदं कुर्य्यादहमपि त इदं दास्यामीत्येवंविधं परिभाषणलक्षणम् । तत्र च करणं हेतुर्दानं हेतुमदिति युक्त उपसंवादो लिङर्थः । आशङ्कापि कारणतः कार्य्यानुसरणम् । तत्रापि कारणं हेतुः । कार्य्यानुसरणं हेतुमदित्याशङ्कापि लिङर्थ एव । यद्येवंपूर्वेणैव सिद्धम् । तत् किमर्थमिदमुच्यत इत्याह नित्यार्थं वचनमिति । स्यादेतत् । पूर्वेणैव नित्यं भविष्यतीत्याह पूर्वसूत्र इत्यादि ।

## ९। तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ।

कथं ज्ञायत इति । कर्त्तरि कृदिति वचनात्(३।४।६७) कर्त्तैव तुमर्थो युक्त इति मन्यते । वचनसामर्थ्यादित्यादि । यदि कर्त्तैव तुमर्थः स्यात् तुमर्थवचनमनर्थकं स्यात् । कृत्वादेव हि सेयादयः कर्त्तरि भविष्यन्ति । तस्मात् तुमर्थग्रहणाल्लिङ्गात् कर्त्तरि तुमुन्न भवति । अपक्रष्यति । अपनीयते । कर्त्तरि न

भवतीति यावत्। स्यादेतत्। कर्म्मादिरस्वार्थो भविष्यतीत्याह नचेत्यादि। अन्यस्मिन्निति। कर्मादौ। यथा तर्हि कर्मादावनिर्देशान्न भवति तथा भावेऽपि न स्यात्। भावेऽपि नैव तुमुन्निर्दिश्यत इत्याह अनिर्दिष्टार्था इत्यादि। अर्थान्तरस्य निर्देशाद् या प्रकृतिः प्रत्ययानां निमित्तत्वेनोपादीयते तदर्थस्य प्रत्यासत्ते स्तत्रैवानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति। स पुनरिह स्वार्थो भावः। कुत एतत्? धात्वधिकारात्। धातोश्च भाववचनत्वात्। यद्येवं भावग्रहणमेव कुर्य्यात्। लघुत्वात्। नैवं शक्यम्। भावग्रहणे सति कर्त्तरि कृदिति (३।४।६७) वचनात् तुमुन् कर्त्तर्य्येव स्यात्। तुमर्थग्रहणे हि तुमुनोऽपि हि भाव एवार्थ इत्येतज् ज्ञापितं भवतीति न कश्चिद्दोष इति। वक्ष इति। वच परिभाषणे। सेप्रत्ययः। चोः कुरिति (८।२।३०) कुत्वम्। एष इति। इणः सेन्प्रत्ययः। जीवस इति। जीव प्राणधारणे। प्रत्ययद्वयस्याप्येतदेवोदाहरणम्। स्वरस्तु भिद्यते। प्रेष इति। इणः प्रपूर्वात् कसे। आद् गुणः (६।१।८७)। श्रियस इति। श्रिञ् सेवायाम्। अस्मात् कसेन्। इयङ्। उपाचरध्या इति। चर गत्यर्थः। उपाङ्पूर्वः। प्रत्ययद्वयस्यापीदमुदाहरणम्। स्वरभेदात्तु भेदः। आहुवध्या इति। जुहोतेराङ्पूर्वात् कध्यैप्रत्ययः। उवङादेशः। श्रियध्या इति। श्रयतेः कध्यैन्। इयङ्। पिबध्यायिति। पा पाने। शध्यै। पाघ्राादिसूत्रेण (७।३।७८) पिबादेशः। मादयध्या इति। मदी हर्षे। हेतुमण्णिच्। शध्यैन्। गुणायादेशौ। पातवा इति। पिबतेस्तवै। सूतव इति। षूङ् प्राणिगर्भविमोचने। तवेङ्। ङित्त्वाद् गुणाभावः। गन्तव इत्यादीन्युदाहरणानि गमिकरोतिहरतीनां यथाक्रमेण।

१०। प्रयैरोहिष्यैअव्यथिष्यै।

प्रया इति। आतो लोप इटि चेत्याकारलोपः (६।४।६४)।

११। दृशे विख्ये च।

दृश इति। दृशेः केप्रत्ययः। विख्य इति। विपूर्व्वाच्चक्षिङः ख्यातेर्वा केप्रत्ययो निपात्यते।

## १२ । शकि णमुल्कमुलौ ।

विभाजमिति । विपूर्वाद् भजेर्णमुल् । अपलुपमिति । लुपॢ च्छेदने । कमुल् ।

## १३ । ईश्वरे तोसुन्कसुनौ ।

अभिचरितोरिति । चरतेरभिपूर्वात् तोसुन्प्रत्ययः । विलिखः । विलिख इति । लिखते स्तृदिर् हिंसादानयोरित्येतस्माच्च कसुन् ।

## १४ । कृत्यार्थे तवैकेन्केन्यत्वनः ।

कृत्यानामर्थौ भावकर्मणी इति । तयोरेव कृत्यक्तखलर्था इति (३।४।७०) भावकर्मणोः कृत्यानां विधानात् । अन्वेतवा इति । अनुपूर्वादिणस्तवै । परिधातवा इति । परिपूर्वाद्धधातेः । परिस्तरितवा इति । परिपूर्वादेव स्तृञ् आच्छादन इत्यस्मात् । अवगाह इति । गाहू विलोड़ने ऽवपूर्वः । दिदृक्षेण्य इति । दृशः सन् । द्विर्वचनम् । उरत्त्वम् (७।४।६६) । रपरत्वम् । सन्यत (७।४।७९) इतीत्त्वम् । हलन्ताच्चेति (१।२।१०) गुणाभावः । व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । षढोः कः (८।२।४१) सीति कत्वम् । दिदृक्ष इति स्थिते केन्यप्रत्ययः । अतो लोपः (६।४।४८) । शुश्रूषेण्य इति । शृणोतेः सन् । अज्झनगमां सनीति (६।४।१६) दीर्घः । द्विर्वचनमभ्यासकार्य्यम् । शुश्रूष इति स्थिते केन्यप्रत्ययः । कर्त्त्वमिति । करोतेस्त्वन् । सयादिसूत्रेऽपि (३।४।९) तवे विहित इति । सयादीनां सूत्रं सयादिसूत्रम् (३।४।९) । येन सयादयो विहितास्तत्रापि तवैप्रत्ययो विहितः । तस्य तुमर्थादित्यादि । यदि तु तस्य तुमर्थ एव भावे विधिः स्यात् तस्यानर्थक्यं स्यात् । अनेनैव सिद्धत्वात् । तस्माद् यद्यपि तत्र तुमर्थ इत्युच्यते तथापि ततोऽन्यत्र कर्मकारके कर्त्रादौ तवैप्रत्ययविधानं वेदितव्यम् ।

## १५ । अवचक्षे च ।

एश्प्रत्ययो निपात्यत इति । शित्करणं सार्वधातुकसंज्ञार्थम् । तेनार्धधातुके विधीयमानः सार्वधातुके चक्षिङः ख्याञिति (२।४।५४)ख्याञादेशो न भवति ।

## १६। भावलक्षणे स्थेण्कृञवदिचरिहुतमिजनिभ्यस्तोसुन्।

आसंस्थातोरित्यादि। आसंस्थातोःशब्देन समाप्तिरुच्यते। तया वेद्याः सदनं लक्ष्यते। पुरा सूर्य्यस्योदेतोराधेय इति। अत्राप्याधानक्रिया सूर्य्यस्योदयेन। पुरा वत्सानामित्यादौ वत्सानामपाकरणेनासनम्। पुरा प्रवदितोरित्यादौ प्रवदनेन हवनम्। पुरा प्रचरितोरित्यादौ प्रचरणेन हवनमेव। उत्तरयोरुदाहरणयोराहवनेनावस्थानम्। आतमितोरिति। तमु काङ्क्षायाम्। आविजनितोरित्यादावाविजननेन सम्भवनम्।

## १७। सृपितृदोः कसुन्।

## १८। अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा।

प्रतिषेधवाचिनोरिति। प्रतिषेधयोरित्यस्येदं विवरणम्। एतेन प्रतिषेधवाचित्वादलंखलुशब्दौ सूत्रे प्रतिषेधशब्देनोक्ताविति दर्शयति। भवति हि तद्वाचित्वात्तच्छब्दः यथा क्षुद्रजन्तव इति। तत्र क्षुद्रजन्तुवाचित्वाद् यूकालिक्षादयः शब्दाः क्षुद्रजन्तुशब्देनोक्ताः। अलङ्कार इति भावे घञ्। भूषणवचनोऽत्रालंशब्दः। अलं बाले रोदनेनेति। भावे ल्युट्। वासरूपविधिरिति चेदिति। विनापि प्राग्ग्रहणेन विकल्पो लभ्यत एव। यस्मादसरूपोऽपवादो बाधको भवतीत्येवं चेन्मन्यस एवं तर्हि पूजार्थं प्राग्ग्रहणम्। पूर्वं स्त्र्यधिकारात्। परेण वासरूपविधिर्नास्तीति चेतसि कृत्वा विकल्पार्थं प्राग्ग्रहणमुक्तम्।

## १९। उदीचां माङो व्यतीहारे।

अपमित्येति। आदेच उपदेशेऽशितीत्यात्त्वम् (६।१।४५)। कुगतिप्रादय इति (२।२।१८) समासः। समासेऽनञ्पूर्वे क्त्वो ल्यबिति (७।१।३७) ल्यप्। मयतेरिदन्यतरस्यामितीत्त्वम्(६।४।७०)। ह्रस्वस्य पिति कृति तुक्(६।१।७१)। ननु च समानकर्त्तृकयोः पूर्वकाल (३।४।२१) इत्यनेनैवात्र क्त्वाप्रत्ययो भवति। अस्ति ह्यत्रापि समानकर्त्तृकत्वम्। तथाहि य एवापमयतेः कर्त्ता स एव याचतेः। तत् किमर्थं विधीयत इत्याह अपूर्वकालत्वादित्यादि। पूर्वं

ह्यसौ याचते पश्चादपमयत इति नास्ति पूर्वकालत्वम् । तस्मादप्राप्त एव क्त्वा विधीयते । विधीयतान्नाम । अयन्तु दोषः । यदैवास्माद्वचनान् मयतेः क्त्वा भवति तदैव समानकर्त्तृकयोरित्यस्माद्वचनाद् याचतेरपि स्यात् । नैष दोषः । यस्मात् समानकर्त्तृकयोरित्यत्रोदीचामिति वर्त्तते । सा च व्यवस्थितविभाषा । तेन यदा मयतेः क्त्वा भवति तदा याचतेः क्त्वा न भविष्यति । उदीचांग्रहणादित्यादि । उदीचां ग्रहणमिह विकल्पार्थम् । तेन यथाप्राप्तमपि पक्षे भवति । याचतेः क्त्वा । मयतेर्लङादिः । माङिति माङ् मान इत्यस्यायं निर्देश इति कस्यचिदाशङ्का स्यात् । अतस्तां निराकर्त्तुमाह मेङः कृतात्वस्यायं निर्देश इति । कुतः पुनरेतदवगतम् ? व्यतीहारग्रहणात् । मेङेव व्यतीहारे वर्त्तते । न माङ् । तस्मान् मेङ एवायं निर्देश इति विज्ञायते । किमर्थं पुनरेवं निर्देशः कृतः कृते यत्र सति सन्देहः स्यात् ? न मेङ इत्येवासन्दिग्धः कर्त्तव्यः स्यादित्यत आह ज्ञापनार्थं इति । मेङ इत्येवं निर्देशे कर्त्तव्ये यः सानुबन्धकस्य कृतात्वस्य निर्देशः कृतः स ज्ञापनार्थः । तेनैतज् ज्ञाप्यते । नानुबन्धकृतमनेजन्तत्वमिति । तेनेत्यादिना ज्ञापनप्रयोजनं दर्शयति । यद्ययमर्थो न ज्ञाप्येत ततो हलन्तत्वाद् दैप एजन्तत्वं न स्यात् । तत्र को दोषः ? दाब्ग्रहणेन दैब्ग्रहणं न स्यात् । भिन्नरूपत्वात् । ततश्च दाधा घ्वदाबित्यत्र ( १।१।२० ) दैपः प्रतिषेधो न स्यात् । अस्मिंस्त्वर्थे ज्ञापिते सति भवति ।

## २० । परावरयोगे च ।

इहेमौ परावरशब्दौ सम्बन्धिशब्दौ । पूर्वस्यापेक्ष्य परो भवति । परस्यापेक्ष्यावरः । सम्बन्धिशब्दाश्च नियतमेव प्रतियोगिनमुपस्थापयन्ति । तस्मात् सूत्रे यद्यपि विशिष्टप्रतियोगी न निर्दिश्यते तथापि पूर्वपरयोरेव परावराभ्यां योगो गम्यत इत्याह परेण पूर्वस्येत्यादि । परनदीयोगेन पर्वतो विशिष्यत इति । तथाह्यप्राप्य नदीं पर्व्वत इत्युक्ते परया नद्या पर्वतस्य यो योगस्तद्विशिष्टः पर्वतः प्रतीयते । अवरपर्वतयोगेन नदी विशिष्यत इति । यस्मादतिक्रम्य पर्वतं नदीत्युक्ते ऽवरेण पर्वतेन नद्या च यो योगस्तद्विशिष्टा नदी विज्ञायते ।

## २१ । समानकर्त्तृकयोः पूर्वकाले ।

धात्वधिकाराद् धात्वर्थस्यैव समानकर्त्तृकत्वं विज्ञायत इत्याह समानः कर्त्ता ययोर्धात्वर्थयोरित्यादि । निर्धारणे चायं षष्ठी । समानशब्दश्चाय-मेकवाची । ननु शक्तिः कारकम् । अन्या च पूर्व्वकालक्रियायाः शक्तिः । अन्या चोत्तरकालक्रियायाः । तत् कुतः समानकर्त्तृकत्वं विज्ञायत इत्याह शक्तिशक्तिमतोरित्यादि । शक्तिः शक्तिमांश्च शक्तिशक्तिमन्तौ । यश्च शक्त्या-धारो या च शक्तिस्तयोरिह भेदो न विवक्षितः । तेन शक्त्याधार एकएव देवदत्तः कर्त्ता । स चोभयोरपि क्रिययोरेक एवेति युक्तं समानकर्त्तृकत्वम् । पीत्वेति । पूर्ववदीत्वम् । इह समानकर्त्तृकयोरिति द्विवचनेन निर्देशः कृतः । तेन द्वे एव क्रिये प्रत्ययस्थाप्येते । न बह्वयः । ततश्च द्वयोरेव क्रिययोः प्रत्ययस्थापितयोः स्यात् । न बह्वीष्वित्याह द्विवचनमित्यादि । क्रिया-प्रधानत्वादस्य निर्देशस्य । नात्र द्विवचनं प्रधानम् । नान्तरीयकत्वात् । तेन द्विवचनेन निर्देशः कृतः । अवश्यं येन केनचिद् वचनेन निर्देशः कर्त्तव्यः । तस्मादतन्त्रत्वाद् द्विवचनस्य बह्वीष्वपि क्रियासु भवत्येव । भुक्तवति ब्राह्मणे व्रजतीति । अत्र भुजिक्रियाया ब्राह्मणः कर्त्ता । व्रजतिक्रियायास्तु देवदत्त इति समानकर्त्तृकत्वाभावः । व्रजति जल्पति चेति । यौगपद्या-दिह क्रियायाः पूर्वकालता नास्ति । व्यादायेति । ददातेर्व्याङ्पूर्वस्य रूपम् । संमील्येति । मील श्मील क्ष्मील निमेषण इत्यस्य संपूर्वस्य हेतु-मण्णन्तस्य । किं पुनः कारणं न सिध्यतीत्याह अपूर्वकालत्वादित्यादि । यदैव ह्यसौ स्वपिति तदैव व्याददाति । यदैव हसति तदैव संमीलयतीति । इह नास्ति पूर्वकालत्वम् । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । पूर्वयोगाच्चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन मुखं व्यादाय स्वपितीत्यादौ पूर्वकालत्वाभावेऽपि भविष्यतीति ।

## २२ । आभीक्ष्ण्ये णमुल् च ।

द्विर्वचनसहितावित्यादि । आभीक्ष्ण्यं हि द्योतयितुं द्विर्वचनसहितयोरेव क्त्वाणमुलोः सामर्थ्यम् । न केवलयोः । शब्दशक्तिस्वाभाव्यात् । तस्माद्

द्विर्वचनं विधेयमिति भावः। केन पुनरत्र द्विर्वचनमित्याह आभीक्ष्ण्य इत्यादि। पायं पायमिति। आतो युक्।

## २३। न यद्यनाकाङ्क्षे।

अनाकाङ्क्ष इति। न विद्यत आकाङ्क्षाऽपेक्षा यस्य स तथोक्तः। क्त्वा तु पूर्वसूत्रविहितोऽपीति। अपिशब्दादनन्तरविहितोऽपि युक्तं यदनन्तरसूत्रविहितः प्रतिषिध्यते। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प,६२) क्त्वा। पूर्व्वसूत्रेण विहितस्य तु कथं प्रतिषेधः? प्रकरणापेक्षया प्रतिषेधविधानात्। पूर्वकालप्रकरणे यत् प्राप्नोति तन्न भवतीत्येवमयं पूर्वकालप्रकरणापेक्षया प्रतिषेधः क्रियते। तस्माद् युक्तः पूर्वसूत्रविहितस्यापि प्रतिषेधः।

## २४। विभाषाग्रेप्रथमपूर्वेषु।

आभीक्ष्ण्य इति नानुवर्त्तत इति। अप्राप्तविभाषेयमित्यत्रेयं युक्तिः। ननु च प्राप्तविभाषेयं युक्ता। णमुल्यप्राप्ते क्त्वाप्रत्यये समानकर्त्तृकयोरित्यादिना ( ३।४।२१ ) प्राप्ते सत्यारम्भात्। नैतदस्ति। अनन्तरसूत्रविहितौ हि क्त्वाणमुलावित्यधिकृतत्वाऽप्राप्तविभाषेयमित्युच्यते। यस्तु समानकर्त्तृकयोरित्यादिना केवलः क्त्वा विहितस्तं प्रति विभाषाग्रहणं न कर्त्तव्यमेव। वासरूपविधिना तत्प्रतिपादितस्यार्थस्य सिद्धत्वात्। ननु चेत्यादिनाऽनन्तरोक्तविभाषाग्रहणस्य प्रयोजनं विघटयति। क्त्वाणमुलौ यत्रेत्यादि। वासरूपविधिनैव पक्षे लडादिषु सिद्धेषु यत् तदर्थं विभाषाग्रहणं क्रियते तेन यत्र क्त्वाणमुलौ युगपद् विधीयेते तत्र वासरूपविधिर्नास्तीत्येषोऽर्थो ज्ञाप्यते। किमेतस्य प्रयोजनं ज्ञापनस्येत्याह तेनेत्यादि। उपपदसमास इत्यादि। अमैवाव्ययेनेत्युपपदसमासः (२।२।२०) प्राप्नोति। स कस्मान्न भवतीत्याह उक्तमित्यादि। अमैव यत् तुल्यविधानमुपपदं तत् समस्यत इत्युक्तम् प्राक्। अग्रेप्रभृतीन्युपपदान्यमा चान्येन क्त्वाप्रत्ययेन तुल्यविधानम्। अतो न समस्यन्ते।

## २५। कर्मण्याक्रोशे कृञः खमुञ्।

चौरङ्कारमिति। अरुर्द्विषदजन्तस्य मुमिति (६।३।६७) मुम्। चौरकरणमित्यादि। करोतिरत्रोच्चारणक्रियः। चौरोऽसीत्याक्रोशवाक्ये चौरशब्दस्य यत् करणमुच्चारणं तदाक्रोशस्यैव सम्पादनार्थम्। नहि तेन विनाऽऽक्रोशः शक्यते प्रतिपादयितुम्। नत्वसौ चौरः क्रियत इति। अशक्यत्वात्। न च चौरोऽसीति शतकृत्वोऽपि ब्रुवता पुरुषस्य शक्यते चौरत्वमुत्पादयितुम्।

## २६। स्वादुमि णमुल्।

स्वादुमीत्यर्थग्रहणमिति। ननु च स्वं रूपं शब्दस्याशब्दसंज्ञेति (१।१।६८) वचनात् स्वरूपस्यैव ग्रहणेन भवितव्यम्। नैतदस्ति। शब्दानुशासनप्रस्तावादेव हि शब्दस्येति सिद्धे शब्दग्रहणं यत्र शब्दपरो निर्देशस्तत्र स्वं रूपं गृह्यते नार्थपरनिर्देश इति ज्ञापनार्थं कृतम्। इह चार्थपरो निर्देशः। तस्मादर्थग्रहणमेव युक्तम्। अर्थपरत्वन्तु निर्देशस्याविच्छिन्नाचार्य्यपारम्पर्य्योपदेशाद् विज्ञायते। अर्थग्रहणे च सति तत्पर्य्यायेष्वपि प्रत्ययो लभ्यत इत्याह स्वाद्वर्थेष्वित्यादि। अथ स्वादुमीति किमर्थम् मकारान्तत्वं निपात्यते? मान्तस्योपपदस्य श्रवणं यथा स्यादिति चेत्? न। यद्येतत् प्रयोजनं न निपातयितव्यम्। अनन्तरसूत्रे खमुञः प्रकृतत्वात् स एव विधास्यते। अस्मिंश्च विहिते मुमैव मान्तत्वमुपपदस्य भविष्यतीत्येतच्चोद्यमपाकर्त्तुमाह स्वादुमीत्यादि। एतेनैतद् दर्शयति। यद्यपि खमुञि सति सिध्यति मकारान्तत्वमीकारप्रतिषेधस्तु न सिध्यति। ततश्च स्वादुशब्दादुपपदाद् वोतो गुणवचनादिति (४।१।४४) ङीष् प्रसज्येत। तथा चानिष्टं रूपं स्यात्। मकारान्तत्वनिपातने हि निमित्तस्य विहतत्वान् ङीष्प्रसङ्गो नास्ति। तस्माद् योऽपि खमुञं विदधाति तेनाप्यवश्यमीकारप्रतिषेधार्थं मकारान्तत्वं निपातयितव्यमिति। यदपि परस्याभिमतं खमुञि विहिते मुमैव मकारान्तत्वं भविष्यतीति तदपि न सर्वत्रेति सूचयितुमाह च्व्यन्तस्येत्यादि। अनेनैतद् दर्शयति। यदि मकारान्तत्वं न निपात्यते तदा सत्यपि खमुञि

मकारान्तत्वं च्व्यन्तस्योपपदस्य न स्यात्। तस्याव्ययत्वात्। मुम्विधौ च खित्यनव्ययस्ये (६।३।६६) त्यधिकारात्। तस्माद् योऽपि खमुञं विदधाति तेनापि मकारान्तत्वनिपातनं कर्त्तव्यम्। एवं हि मकारान्तत्वनिपातनमेव क्रियताम्। प्रत्ययस्तु प्रकृतः खमुञेव विधातव्यः। अशक्यः खमुञ् विधातुम्। खमुञ्प्रत्यये हि मकारान्तत्वनिपातनमव्ययार्थं विज्ञायते। ततश्च च्वौ चेति (७।४।२६) दीर्घत्वं स्यादेव। णमुलि सति सर्वविध्यपवादस्तु विज्ञायेत। तेन दीर्घत्वमपि न भवति। अवश्यञ्चोत्तरार्थं णमुल् विधेयः। न च तस्मिन्नुत्तरत्र विधीयमाने लाघवं भवति। नापीह गौरवम्। क्व पुनरर्थे एते प्रत्यया भवन्तीत्याह तुमर्थाधिकाराच्चेत्यादि। एत इति। ये तुमर्थाधिकारे विहिताः। यद्येवमिति। यदि तुमर्थे भवन्तीत्यर्थः। भुजि प्रत्ययेनेत्यादि। यद्यपि णमुलाऽनभिहितः कर्त्ता तथापि भुजिप्रत्ययेन लटाभिहित इति न भवितव्यं तृतीयया। ननु च शक्तिलक्षणः कर्त्ता। अन्या च स्वादुकरणविषया शक्तिः। अन्या च भुजिक्रियाविषया। तत्र लटाभिहितायामपि भुजिक्रियाविषयायां शक्तावितरस्याः शक्तेः कर्त्तृसंज्ञाया अनभिधानात् प्राप्नोतीत्येव तृतीयेत्याह न चास्मिन्नित्यादि। अत्र हि समानकर्त्तृकप्रकरणे शक्तिमतः शक्तीनाञ्च भेदो न विवक्ष्यते। तेन शक्तिमान् देवदत्तः कर्त्ता। स चैक एवाभिहितश्चेति कुतस्तृतीयाप्रसङ्गः? किं कारणं भेदेनोपादानं न विवक्षितमित्याह समानकर्त्तृकत्वं हीत्यादि। अभ्युपगम्यापि भेदविवक्षां परिहारान्तरमाह प्रधानशक्त्यभिधान इत्यादि। किं कृतः पुनरत्र कर्त्तृशक्त्योः प्रधानगुणभावः? क्रियाकृतः। स्वादुङ्कारं हि गुणभूतं भुजिक्रियार्थत्वात्। भुजिक्रिया तु प्रधानम्। तेनोपकार्य्यत्वात्। क्रियायाश्च गुणप्रधानभावात् तद्विषययोरपि कर्त्तृशक्त्योः प्रधानगुणभावो भवति। तत्र प्रधानशक्तावभिहितायामप्रधानशक्तिरभिहितत्वात् प्रकाशते प्रतिभासते। प्रधानानुयायित्वाद् गुणानाम्। तेन तृतीया न भवतीति भावः।

## २७। अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्।

सिद्धाप्रयोग इति। सिद्धोऽप्रयोगो यस्य स तथोक्तः। निरर्थकत्वादि-

त्यादि । अभिधेयाभावात् प्रयोजनाभावाद्वा निरर्थकत्वम् । एवमेवेति । निरर्थकत्वमेवेत्यर्थः । अन्यथा भुङ्क्ते इत्यादिना तदेवानर्थकत्वं चेतसि कृत्वा सिद्धाप्रयोगतां दर्शयति । अन्यथा भुङ्क्ते इति यावानेवार्थः करोतावप्रयुज्यमाने गम्यते तावानेवार्थोऽन्यथाकारं भुङ्क्ते इति करोतौ प्रयुज्यमानेऽपि । तस्मादनर्थकः करोतिः । कथं पुनः प्रयुज्यमान एवानर्थको भवति ? अन्यथादय एते प्रकारवचनाः । ते यदानुप्रयोगधातोरर्थस्य प्रकारमाचक्षते तदा कृञपि तै र्विशेष्यमाणस्तदीयप्रकारमाचष्टे । स चान्यत एवागत इत्यनर्थको भवति । यद्येवमवगतार्थत्वात् तस्य प्रयोगो न प्राप्नोति । नैवम् । अवगतार्थस्यापि प्रयोगो दृश्यते यथाऽपूपौ द्वावानय पचाम्यहमिति । अन्यथा कृत्वा शिरो भुङ्क्ते इत्यत्रान्यथाशब्देन पदान्तरस्य शिरसः प्रकारमाख्यायते । स विना करोतिना नावगम्यते । यदि हि करोतिर्न प्रयुज्येत भुजिक्रियागत एव प्रकारोऽन्यथालक्षणः प्रतीयेत । न शिरोगतः । शिरसस्तु भुज्यमानतैवावगम्येत । तस्मान्नात्र करोतिः सिद्धाप्रयोगः ।

## २८ । यथातथयोरसूयाप्रतिवचने ।

असूयाप्रतिवचन इति । असूयाप्रभवं प्रतिवचनमसूयाप्रतिवचनम् । यदसूयन्नित्यादि । असूयन्निति शत्रन्तमेतत् । कण्ड्वादियगन्तः । अस्य प्रतिवक्तीत्यनेन सम्बन्धः । प्रतिवक्ति प्रतिभणति प्रतिवचनं ददातीत्यर्थः । पृच्छतीति । सप्तम्यन्तमेतत् । पृच्छति सति यद्यसूयन्नसूयां कुर्वन् प्रतिवक्ति तदा तत्र पृच्छति यत् प्रतिवचनं तदसूयाप्रतिवचनम् । यथाकारमित्यादि । कथं भवान् भोक्ष्यत इत्येवं वचनं पृच्छति सत्यसूयाप्रतिवचनमेतत् । यथा कृत्वाहं भोक्ष्ये तथा द्रक्ष्यसीति । नैतदसूयाप्रतिवचनम् । किं तर्हि ? तद्व्याख्यानम् ।

## २९ । कर्मणि दृशिविदोः साकल्ये ।

कर्मण्युपपदे साकल्यविशिष्ट इति । एतेन साकल्यग्रहणं कर्मविशेषणमिति दर्शयति । यं यं जानाति लभते विचारयति वेति । एतेन ज्ञान

लाभविचारणार्थानां विदीनां ग्रहणमिति दर्शयति। कुतः पुनः सत्तार्थस्य ग्रहणन्नभवति ? तस्याकर्मकत्वात् । कर्मणीति चोपादानात् ।

## ३० । यावति विन्दजीवोः ।

विन्दतेरिति । विदॢ लाभ इत्यस्य ।

## ३१ । चर्मोदरयोः पूरेः ।

पूरयतेरिति । एतेन निर्देशे ण्यन्तस्येदं ग्रहणमित्याचष्टे । इह कर्मणीति वर्त्तते । न चाण्यन्तस्य पूरेः कर्म सम्भवति । अकर्मकत्वात् । ण्यन्तस्य सम्भवति । अकर्मका हि धातवो ण्यन्ताः सकर्मका भवन्ति । तस्माण्ण्यन्तस्येदं ग्रहणं विज्ञायते ।

## ३२ । वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ।

समुदायेनेति । प्रकृतिप्रत्ययोपपदसमुदायेन । एतेन वर्षप्रमाणस्य समुदायोपाधित्वं दर्शयति। अस्यग्रहणं किमर्थमिति । प्रकृतत्वात् पूरयतेरस्येति वचनमन्तरेणापि तस्यैव लोपो विज्ञास्यत इत्यभिप्रायः । उपपदस्य मा भूदिति । यद्यस्येति नोच्येत ततो यथा वर्षप्रमाणं समुदायोपाधिर्विज्ञायत ऊलोपोऽपि तथा समुदायोपाधिर्विज्ञायेत । प्रकृतिप्रत्ययोपपदस्य समुदायस्य य ऊकारस्तस्य लोपो भवतीति । ततश्चोपपदस्यापि स्यात् । तस्मान् मा भूदेष दोष इत्यस्येत्युच्यते ।

## ३३ । चेले क्नोपेः ।

ण्यन्तादिति । सपुक्कस्यायं निर्देशः । पुक् चार्त्तिह्रीत्यादिना (७।३।३६) णाविव परतो भवतीति। तस्मादत एव निर्देशाण्ण्यन्ततावगम्यते। चेलार्थेष्विति । चेलमर्थो येषामिति बहुव्रीहिः । एतेन चेल इत्यस्यार्थग्रहणतां दर्शयति । अर्थग्रहणे च या युक्तिः सा स्वादुमि (३।४।२६) णमुलित्यत्रोक्ता । सैवेहार्थग्रहणे द्रष्टव्या । चेलक्नोपमिति वलि यलोपः । पुगन्तलघूपधस्येति (७।३।८६) गुणः । णिलोपः ।

३४। निमूलसमूलयोः कषः।

कष इति। कष शिषेति हिंसार्थधातुवर्गे पठ्यते।

३५। शुष्कचूर्णरूक्षेषु पिषः।

पिष इति। पिष्लृ सञ्चूर्णने।

३६। समूलाकृतजीवेषु हन्कृञ्ग्रहः।

समूलघातमिति। हो हन्तेर्ञ्णिन्नेष्विति (७।३।५४) कुत्वम्। हनस्तोऽचिण्णलोरिति (७।३।३२) तत्वम्।

३७। करणे हनः।

अहिंसार्थोऽयमारम्भ इति। हिंसायां हिंसार्थानामिति (३।४।४८) वक्ष्यमाणेन सिद्धत्वात्। नित्यसमासार्थ इति। हिंसार्थस्यापीति शेषः। उपपदमतिङिति (२।२।१९) नित्यसमासो यथा स्यादित्येवमर्थोऽयमारम्भः। तेन तु प्रत्यये सति तृतीयाप्रभृतीन्यन्यतरस्यामिति (२।२।२१) विकल्पेन स्यात्। यथाविध्यनुप्रयोगार्थश्चेति। कषादिषु यथाविध्यनुप्रयोग इति ( ३।४।४६ )। यस्माद् धातोर्णमुल् विहित स्तस्यैवानुप्रयोगो यथा स्यात्। तेन तु प्रत्यये सति धात्वन्तरस्यानुप्रयोगः स्यात्। ननु च यदा हन्ति हिंसार्थो भवति तदा परत्वात् तेनैव भवितव्यम्। तत् कथं नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्च हिंसार्थस्य हन्तेरयमारम्भो युज्यत इत्यत आह पूर्वविप्रतिषेधेनेत्यादि।

३८। स्नेहने पिषः।

स्नेहनवाचिनीत्यनेन स्नेहन इत्यस्यार्थमाचष्टे।

३९। हस्ते वर्त्तिग्रहोः।

वर्त्तिर्ण्यन्त इति। निर्देशादेव वर्त्तेर्ण्यन्तत्वं प्रतीयते।

४०। स्वे पुषः।

स्वपोषमित्यात्मवाचिनि स्वशब्द उपपदे प्रत्ययः। गोपोषमित्यात्मीयवाचिनि। धनपोषमिति धनवाचिनि। पितृपोषमिति ज्ञातिवाचिनि।

## ४१ । अधिकरणे बन्धः ।

## ४२ । संज्ञायाम् ।

## ४३ । कर्त्रोर्जीवपुरुषयोर्नशिवहोः ।

नष्ट इति । नशेर्व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । मस्जिनशोर्झलीत्यागमस्य (७।१।६०) नुमोऽनिदितामित्यादिना (६।४।२४) लोपः । पुरुषेणोढ़ इति । वहेर्वच्यादिसूत्रेण (६।१।१५) संप्रसारणम् । संप्रसारणाच्चेति (६।१।१०८) परपूर्वत्वम् । हो ढ़ः (८।२।३१) । झषस्तथोर्धोऽधः (८।२।४०) । ष्टुना ष्टुः (८।४।४१) । ढो ढे लोपः (८।३।१३) । ढ्रलोपे पूर्वस्य दीर्घोऽण इति (६।३।१११) दीर्घः ।

## ४४ । ऊर्ध्वे शुषिपूरोः ।

ऊर्द्धं पूर्य्यत इति । ऊर्द्धं पूरितो भवतीत्यर्थः । अनुदात्तेत्त्वादात्मनेपदम् । दिवादित्वाच्छ्यन् ।

## ४५ । उपमाने कर्मणि च ।

घृतनिधायमिति । पूर्ववद् युक् ।

## ४६ । कषादिषु यथाविध्यनुप्रयोगः ।

## ४७ । उपदंशस्तृतीयायाम् ।

इह मूलकेनोपदंशं भुङ्क्त इत्यादौ करणे तृतीया । तदन्तं मूलकाद्युपपदम् । तच्च करणमुपदंशे वा स्यात् । भुजेर्वा । तत्रोपदंशेस्तावन्नोपपद्यते । अन्यस्मिन् ह्युपदिश्यमानेऽन्यत् करणं भवति । इह च तदेव मूलकाद्युपदश्यते । नापरं किञ्चित् । भुजिन्तु प्रत्युपपद्यत एव करणभावः किन्तूपपदसंज्ञा न स्यात् । तदभावादुपपदसमासश्च । यस्मादुपपदमिति महत्याः संज्ञायाः करणं समर्थपरिभाषाया व्यापारार्थं तेनेह तस्यामुपस्थितायां यमेव प्रति यस्य सामर्थ्यं तमेव प्रति तस्योपपदसंज्ञया भवितव्यम् । भुजिन्तु प्रति मूलकादेः सामर्थ्यम् । नोपदंशिं प्रतीति चोद्यमाशङ्क्याह मूलकादि चोपदंशेरित्यादि । यद्यपि भुजिं प्रति मूलकादेः करणभाव

स्तथाप्युपदंशिना सह सामर्थ्यमुपपद्यत एव । यतस्तस्य कर्म । न च भुजिना सह सम्बन्धे सत्युपदंशिना सह सम्बन्धो निवर्त्तते । विरोधाभावात् । तस्मादुपपद्यत एवोपपदत्वम् । तस्मिंश्च सत्युपपदसमासः । क्रियाभेदे सतीति । क्रियाभेदग्रहणेन क्त्वाप्रत्ययविषयमुपलक्षयति । यत्र क्रियाणां पौर्वापर्य्यं समानकर्त्तृकत्वञ्च स क्त्वाप्रत्ययस्य विषयः । एतच्चोभयं क्रियाभेदे सति भवतीति क्त्वाप्रत्ययस्य विषय उपलक्ष्यते । मूलकेनोपदंश्य भुङ्क्ते इति । अनिदितामित्यनुनासिकलोपः (६।४।२४) ।

## ४८ । हिंसार्थानाञ्च समानकर्मकाणाम् ।

धातुसम्बन्धाधिकारादनुप्रयोगेण भवितव्यम् । द्विष्ठत्वात् सम्बन्धस्य । तत्र प्रत्यासत्तेरनुप्रयोगधात्वपेक्षयैव समानकर्म्मत्वं विज्ञायत इत्याह अनुप्रयोगधातुनेत्यादि । कालयतीति । कल विक्षेपे । दन्तताड़मिति । तड़ आघाते । चुरादिरेव । दण्डेनाहत्येत्यादि । अत्र हन्तेश्चौरः कर्म । अनुप्रयोगधातोश्च गौरिति समानकर्मकत्वाभावः । तेन क्त्वाप्रत्यय एव भवति । आहत्येति । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः (६।४।३७) । ह्रस्वस्य पिति कृति तुक् (६।१।७१) ।

## ४९ । सप्तम्यां चोपपीड़रुधकर्षः ।

उपशब्दः प्रत्येकमभिसम्बध्यत इति । रुधिकर्षिभ्यामुपपूर्वाभ्यामेव यथा स्यात् । पार्श्वोपपीड़मिति । पीड़ अवगाहने । चुरादिः । कर्षतेरित्यादि । कृष विलेखने । भ्वादौ तुदादौ च पठ्यते । तत्रेह भौवादिकस्य ग्रहणम् । न तौदादिकस्य । शपा निर्देशात् । शपा निर्देशस्तस्य कृतगुणस्योच्चारणाल्लभ्यते ।

## ५० । समासत्तौ ।

युद्धसंरम्भादिति । संरम्भो मनःसंक्षोभपूर्वको वाक्कायविकारविशेषः । युद्धाय संरम्भो युद्धसंरम्भः । तस्मादत्यन्तं सन्निकृष्यन्ते प्रत्यासीदन्तीति यावत् ।

## ५१ । प्रमाणे च ।

प्रमाणमायाम इति । आयामस्तु प्रमाणं स्यादिति वचनात् (५।१।१९वा) । दैर्घ्यमिति प्रसिद्धतरार्थेन शब्दान्तरेण प्रमाणशब्दस्यैवार्थं स्पष्टीकरोति । द्व्यङ्गुलोत्कर्षमिति । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम् । तत्पुरुषस्याङ्गुलेरित्यादिना (५।४।८६) टच् । तेन द्व्यङ्गुलेन खण्डिकाया दैर्घ्यं परिच्छिद्यते ।

## ५२ । अपादाने परीप्सायाम् ।

शय्योत्थायमिति । उदः स्थास्तम्भोः (८।४।६१) पूर्वस्येति पूर्वसवर्णः । आतो युक् । एवमित्यादिना परीप्सां दर्शयति । रन्ध्रापकर्षमिति । एवं नाम त्वरते यत् पात्रमपि नापेक्षते । स्तनरन्ध्रादेवापकृष्य मुखेन पयः पिबतीत्यर्थः । भ्राष्ट्रापकर्षमिति । एवं नाम त्वरते यद् भाजनमपि दीयमानं नापेक्षते । भ्राष्ट्रादेवापकृष्य हस्तेन भक्षयति ।

## ५३ । द्वितीयायाञ्च ।

## ५४ । स्वाङ्गेऽध्रुवे ।

स्वाङ्गलक्षणमद्रवादि चतुर्थे (४।१।५४) वक्ष्यति । अक्षिनिकाणमिति । कण निमीलने । चुरादि र्निपूर्वः । यस्मिन्नङ्गे च्छिन्ने प्राणी न म्रियते तदध्रुवमिति । पाणिपादादिकम् । अध्रुवत्वं पुनस्तस्य जीवत्यपि प्राणिनि कदाचिदभावाद् । यस्मिंस्त्वङ्गे च्छिन्ने प्राणी म्रियते तद् ध्रुवं शिरःप्रभृति । ध्रुवत्वं पुनस्तस्य सदा प्राणिनि सन्निवेशात् ।

## ५५ । परिक्लिश्यमाने च ।

परिक्लेशः सर्वतो विबाधनमिति । सर्वतः शब्देन परिशब्दस्यार्थमाचष्टे । विबाधनशब्देनापि क्लिशेर्धातोः ।

## ५६ । विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।

विश्यादिभिः क्रियाभिरिति । आदिशब्देन पत्यादित्रयाणां ग्रहणम् । अनवयवेनेति । साकल्येन । पदार्थानामिति । गेहादीनाम् । तात्पर्य्यमिति । क्रियाणां पौनःपुन्यमाभीक्ष्ण्यमित्यर्थः । द्रव्ये व्याप्तिरित्यादिना

व्याप्यमानासेव्यमानयो विंषयविभागं दर्शयति। यदि व्याप्यमान आसेव्यमाने चार्थे प्रत्ययो भवत्येवञ्च सति तयोरर्थयोर्नित्यता वीप्सा च विद्यत इति नित्यवीप्सयोरिति (८।१।४) द्विर्वचनेन भवितव्यम्। तत् कस्मान्न भवतीत्याह समासेनेत्यादि। यद्यपि समासस्तयोरर्थयो र्न विधीयते तथापि स्वभाव एव तेन तयोरभिधानम्। नहि शब्दैरर्थाभिधानं वाचनिकम्। अपि तु स्वाभाविकमिति पुरस्तादेव प्रतिपादितम्। तथाच वक्ष्यतीति। भाष्यकारः। सुप्सु वीप्सेति वचनाद् व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनं भवतीत्युक्तं भवति। तिङ्क्षु नित्यतेति वचनादासेव्यमानतायां क्रियावचनस्य द्विर्वचनम् भवतीत्युक्तं भवति। गेहं गेहमिति। द्रव्यवचनस्य द्विर्वचनम्। गेह मनुप्रवेशमनुप्रवेशमिति क्रियावचनस्य। ननु चेत्यादि देश्यं क्त्वानिवृत्त्यर्थमित्यादिना परमतमाशङ्क्य निराकरोति। स्यादेतत्। आभीक्ष्ण्ये णमुल् चेत्यनेन (३।४।२२) क्त्वाणमुलौ द्वावपि विहितौ। तत्र यदि विशादिभ्यः पुनरासेवायां णमुल् विधीयेत तदा क्त्वाप्रत्ययोऽपि स्यात्। अतस्तन्निवृत्त्यर्थं पुनर्णमुलुच्यत इत्येतच्च नास्ति। दृष्टत्वात्। दृश्यते ह्यासेवायां विशिप्रभृतिभ्यः क्त्वा। गेहमनुप्रविश्यानुप्रविश्यास्त इति। तस्मादयुक्तं तन्निवृत्त्यर्थं पुनर्णमुल्ग्रहणम्। द्वितीयान्तोपपदार्थमित्यादि। यदि क्त्वानिवृत्त्यर्थं न प्रयुज्यते तदा द्वितीयान्तस्योपपदसंज्ञार्थं पुनर्वचनम्। अनेन द्वितीयायाञ्चेत्यधिकाराद् (३।४।४३) द्वितीयान्त उपपदे प्रत्ययविधानम्। अतो द्वितीयान्तस्योपपदसंज्ञा लभ्यते। किमर्थं पुनर्द्वितीयान्तस्योपपदत्वमिष्यत इत्याह उपपदसमास इत्यादि। पक्षग्रहणं तृतीयाप्रभृतीन्यन्यतरस्यामिति (२।२।२१) विकल्पेन समासविधानात्। स्यादेतत्। तेनापि णमुल्विधान उपपदसंज्ञा भविष्यतीत्यत आह तेन हीतत्यादि। नहि तेनोपपदसम्बन्धे णमुल् विधीयते। सप्तमीस्थस्य कस्यचिच्छब्दस्याभावात्। तस्मात् तेन णमुल्विधाने सत्युपपदत्वाभाव एव स्यात्।

## ५७। अस्यतितृषोः क्रियान्तरे कालेषु।

अस्यतितृषोरिति। असु क्षेपणे। ञितृषा पिपासायाम्। क्रियामन्तरयतीत्यादि। अन्तरं करोतीति तत्करोतीत्यादिना (ग, सू २०४) णिच्।

क्रियामन्तरयति क्रियान्तरः । कर्मण्यण् । णिलोपः । अन्तरशब्दश्चाय-मिह व्यवधाने वर्त्तत इति दर्शयन्नाह क्रियाव्यवधायक इति । पाययतीति । पा पाने । णिच् । शाच्छेत्यादिना (७।३।३७) युक् । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयत इति । यच्चाद्य पानं यच्च द्व्यहेऽतीते पानं भविता तन्मध्यवर्त्तित्वादत्यसनतर्षणयो रद्य पाययित्वेत्यादिना द्व्यहात्यासं गाः पाययतीत्यस्यार्थमाचष्टे । एतदनुसारेणान्यस्याप्यर्थो गम्यत इति न व्याख्यातः । द्व्यहमुपोष्येति । वस निवासे । वच्यादिना (६।१।१५) संप्रसारणम् । क्त्वो ल्यबादेशः । शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम् । अत्रोपवसने भुजिक्रियाव्यवधायके वसिर्वर्त्तते । तत्रास्यतितृषोरिति यदि नोच्येत तदेहापि स्यात् । न गतिर्व्यवधीयत इति । यथा मूलोदाहरणेऽत्यसनेन तर्षणेन च मध्यवर्त्तिना पानक्रिया व्यवधीयते न तथेह गतिः । तत्र चाहश्शब्दात् कालाध्वनोरत्यन्तसंयोग (२।३।५) इति द्वितीया । सकलस्याह्न इष्वत्यसनेन(A) व्याप्तत्वादिषुशब्दात् कर्मण्येव । योजनमत्यस्य गाः पाययतीति । अत्राध्ववाच्युपपदम् । क्वचित् सुगघ्नादौ पाययित्वा योजनमतिक्रम्य पाययतीत्यर्थः । अध्वकर्मकं न कालकर्मकमिति द्वावपि बहुव्रीही ।

## ५८ । नाम्न्यादिशिग्रहोः ।

आदिशेरिति । दिश अतिसर्जने । आङ्पूर्वः ।

## ५९ । अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ।

अयथाभिप्रेताख्यान इति । यद् यदभिप्रेतमिष्टं यथाभिप्रेतम् । यथाऽसादृश्य इति (२।१।७) वीप्सायामव्ययीभावसमासः । न यथाभिप्रेतमयथा-भिप्रेतम् । अप्रियमित्यर्थः । आचक्ष इति । आङ्पूर्वाच्चक्षिङो लट् । थासः से (३।४।८०) । स्कोः संयोगाद्योरन्ते चेति (८।२।२९) ककारलोपः । षढोः कः सीति (८।२।४१) कत्वम् । इण्कोरिति (८।३।५७) षत्वम् । उच्चमिति । क्वोक्तम् ? उपदंशस्तृतीयायामित्यत्र (३।४।४७) । उपपदसमासार्थं वचनमिति च । क्त्वा चेत्यनेन (३।२।२२) उपपदसमासः पक्षे यथा स्यात् । कस्मात्

(A) इष्वत्यसनेन बाणक्षेपणेनेत्यर्थः ।

पुनरनेन यः क्त्वा विहितस्तेन समासो भवति ? यस्तु समानकर्त्तृकयो-रित्यादिना (३।४।२१) विहितस्तेन न भवतीत्याह तथाहीत्यादि। क्त्वा चेत्यत्र (३।२।२२) तृतीयाप्रभृतीनीत्यनुवर्त्तते। तस्मादनेन यः क्त्वा विहितस्तेनैव पक्षे समासो भवति। न तु तेन। तृतीयाप्रभृतिषूपपदेषु क्त्वा विधीयते। अथ णमुल्ग्रहणं किमर्थम्। यावता णमुलनुवर्त्तत एव। ततः क्त्वा चेति वक्तव्यमित्याह णमुलधिकार इत्यादि। तुल्यकर्त्तृत्वं तद्वत् तुल्यवत्त्वम्। तेनेत्यादि। ज्ञापकस्य प्रयोजनं दर्शयति। यदि क्त्वा चेत्युच्येत चकारेण यत्नादनुकृष्टो णमुलुत्तरत्र नानुवर्त्तेत। यत्नाभावात्। यथा तेन क्त्वाप्रत्यय-स्यान्वाचीयमानता विज्ञायेत ततश्चोत्तरत्र तस्याप्राधान्यादनुवृत्ति र्न स्यात्। पुनर्णमुल्ग्रहणे सति सहनिर्देशात् क्त्वाणमुलोर्गुणप्रधानभावो न भवतीति द्वयोरप्यनुवृत्तिर्भवति।

## ६०। तिर्य्यच्यपवर्गे।

तिर्य्यक्कृत्वेति। तिरोऽञ्चतीति ऋत्विगादिना (३।२।५९) क्विन्। झलाञ्जशोऽन्त (८।२।३९) इति चकारस्य जकारे कृते क्विन्प्रत्ययस्य कुरिति (८।२।६२) कुत्वं गकारः। तस्यापि चर्त्वं ककारः। तिरसस्तिर्य्यलोप इति (६।३।९४) तिर्य्यादेशः। तिर्य्यक् कृत्वा काण्डं गत इति। अनृजु कृत्वा। पार्श्वतः कृत्वेत्यर्थः। अथ तिर्य्यचीति कोऽयन्निर्देशः। यावता भसंज्ञायां सत्यामच इत्यकारलोपे (६।४।१३८) कृते तिरश्चीति भवितव्य-मित्यत आह तिर्य्यचीत्यादि। सर्वत्र ह्यनुकरणभूतशब्दः शब्दस्वरूपस्यैवानु करणम्। एतावांस्तु विशेषः। क्वचिच्छब्दपदार्थकस्यानुकरणम्। क्वचिदर्थ-पदार्थस्येति। तत्रानुकरणमित्येतावति वक्तव्ये शब्दरूपग्रहणं शब्दरूपमात्र-स्यार्थरहितस्यैतदनुकरणमिति ज्ञापनार्थम्। तदेतदुक्तं भवति। शब्द-पदार्थको य स्तिर्य्यक्छब्दस्तस्येदमनुकरणम्। न तु स एव। तेन शब्दान्तर-त्वादकारलोपो न भवतीति भावः। नन्वेवमपि प्रकृतिवदनुकरणं भवतीति (प, ३७) भवितव्यमेवात्र प्रकृतिकार्य्येणाकारलोपेन इत्यत आह न चेत्यादि। अत्रैवोपपत्तिमाह अनुक्रियमाणरूपविनाशप्रसङ्गादिति। यद्यत्र प्रकृति-

कार्य्यं स्यात् ततो यादृशमनुकरणं तिर्य्यगिति शब्दरूपं तस्य विनाशोऽनुपलब्धिः स्यात् । यादृशमनुकर्त्तुमिष्टमकृताकारलोपं तादृशं न प्रतीयेतेत्यर्थः । यत एवं प्रकृतिवदनुकरणभावे सत्येष दोष आपतति ततो नेह प्रकृतिवदनुकरणेन भवितव्यम् । प्रकृतिवदनुकरणं भवतीत्यस्य (प,३७) तु यत्रार्थपदार्थस्यानुकरणं सोऽवकाशो वेदितव्यः । क्व ? यथा प्रकृतिवदनुकरणं भवतीत्याह एतदोऽशित्यादि (५।३।५) । एतदोऽदस इत्युभयमप्येतच्छब्दरूपपदार्थकस्यानुकरणम् । यदि च शब्दपदार्थकस्य यदनुकरणं तस्यापि प्रकृतिभावः स्यात् तदा त्यदाद्यत्वादिके प्रकृतिकार्य्ये कृत एतस्यामुष्येति रूपं स्यात् । तस्माद् यथेह प्रकृतिभावो न भवति तथा तिर्य्यचीत्यत्रापि ।

## ६१ । स्वाङ्गे तस्प्रत्यये कृभ्वोः ।

यथासंख्यमत्र नेष्यत इति । कथं पुनरिष्यमाणमपि न भवति ? यावता द्वे प्रकृती । प्रत्ययावपि द्वावेवेत्यस्ति यथासंख्यप्राप्तिनिमित्तम् । कृभ्वोरिति निर्देशाल्लक्षणव्यभिचारचिह्नात् । इह प्रत्यये विधीयमाने परश्चेति (३।१।२) सम्बन्धाद् दिग्योगलक्षणया पञ्चम्या भवितव्यम् । तत्र कृभूभ्यामिति पञ्चमी निर्देशे कर्त्तव्ये योऽयं कृभ्वोरिति षष्ठीनिर्देशः स लक्षणव्यभिचारचिह्नम् । तेन यथासंख्याभाव इति वेदितव्यम् । मुखत इति । अपादाने चाहीयरुहोरिति (५।४।४५) तसिः । मुखीकृत्येति । अत्र मुखशब्दस्त्वन्तः । अभूततद्भाव इत्यादिना (५।४।५०) च्विः । अस्य च्वावितीत्त्वम् (७।४।३२) । मुखे तस्यतीति । तसु उपक्षये । अन्येभ्योऽपि दृश्यत इति (३।२।१७८) क्विप् । हल्ङ्यादिना (६।१।६७) सुलोपः । रुत्वविसर्जनीयौ । धातुरत्र तस्शब्दः । नतु प्रत्ययः । तेन तदन्त उपदेशे क्त्वाणमुलौ न भवतः । समानकर्तृकयोरिति (३।४।२१) क्त्वैव भवति ।

## ६२ । नाधार्थप्रत्यये च्व्यर्थे ।

नार्थो धार्थश्चेति । नाप्रत्ययसहचरितोऽर्थो ना इत्युच्यते । धाप्रत्यय सहचरितश्च धाइति । नाऽर्थो यस्य प्रत्ययस्य स नार्थः । धाऽर्थो यस्य प्रत्ययस्य स धार्थ इति । द्विधाकृत्येति । संख्याया विधार्थे धा (५।३।४२) । द्वैधं कृत्वेति ।

द्वित्र्योश्च धमुञिति (५।३।४५) धमुञ्। द्वैधाकृत्वेति। एधाच्चेत्येधाच् (५।३।४६)। हिरुक् कृत्वा। पृथक् कृत्वेति। असति प्रत्ययग्रहणे हिरुक्पृथक्शब्दयोरसहार्थत्वान् नार्थत्वमस्तीति तयोरप्युपपदयोः क्त्वाणमुलौ स्याताम्। पूर्वसूत्रादेव प्रत्ययग्रहणानुवृत्त्या सिद्धे पुनरिह प्रत्ययग्रहणं सुखप्रतिपत्त्यर्थम्। पूर्वकं हि प्रत्ययग्रहणं समासैकदेशत्वाद् यत्नानुवृत्तं स्यात्। नाना कृत्वा काष्ठानि गत इति। चूर्थोऽत्र नास्ति। प्रकृत्यन्यावस्थाया अविवक्षितत्वात्। धार्थग्रहणमिति। धाप्रत्ययोऽर्थः प्रयोजनं यस्य तत् तथोक्तः। धार्था हि प्रत्यया बहवः। तत्रासत्यर्थग्रहणे धाप्रत्ययस्यैव ग्रहणं स्यात्। नान्येषां तदर्थानाम्। अर्थग्रहणे तु सति तेषामपि ग्रहणं भवति। अथ नार्थमप्यर्थग्रहणं कस्मान्न भवतीत्याह ना पुनरेक एवेति। अर्थग्रहणं हि तत्र क्रियते यत्र बहवो ग्राह्याः सम्भवन्ति। नाप्रत्ययस्त्वेक एव। तस्य चार्थग्रहणमन्तरेण सिध्यतीति न तदर्थमर्थग्रहणम्। ननु च धमुञादीनामपि स्थानिवद्भावादेव धाग्रहणेन ग्रहणं भविष्यति। अतो धार्थमप्यर्थग्रहणमयुक्तम्। नैष दोषः। अधादेशोऽपि धार्थप्रत्ययोऽस्ति। धमुञन्तात् स्वार्थे डदर्शनमिति (५।३।४५-वा) वचनात्। तस्माद्धार्थमर्थग्रहणं कर्त्तव्यम्। वयन्तु ब्रूमो—नार्थमप्यर्थग्रहणं कर्त्तव्यमेव। तथाहि द्वौ नाप्रत्ययौ। एको निरनुबन्धकः। द्वितीयः सानुबन्धकः। तत्रासत्यर्थग्रहणे निरनुबन्धकग्रहणे न सानुबन्धकस्येति (प, ८२) नाप्रत्ययस्यैव ग्रहणं स्यात्। न सानुबन्धकस्य नाञः। अर्थग्रहणे तु सति तस्यापि ग्रहणं भवति।

## ६३। तूष्णीमि भुवः।

ननु च स्वाङ्गे तस्प्रत्यये कृभ्वोरित्यतो (३।४।६१) भूग्रहणमनुवर्त्तत एव। तत् किमर्थं भुव इतीहोच्यत इत्याह भूग्रहणमित्यादि। पूर्वं हि भूग्रहणं कृञा सम्बद्धम्। अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। अत स्तन्निवृत्त्यर्थं पुनरिह भूग्रहणम्।

## ६४। अन्वच्यानुलोम्ये।

अन्वचीति निर्देशस्तिर्य्यचीत्यनेन (३।४।६०) व्याख्यातः। अन्वग्भूयेति।

पूर्ववत् क्तिनि कृते तदन्तस्य जश्त्वे कुत्वे च रूपम् । अन्वग् भूत्वेति । अनुचरो भूत्वा तिष्ठतीत्यर्थः ।

## ६५ । शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।

ननु च तुमुण्ण्वुलौ क्रियायां क्रियार्थायामित्येवं (३।३।१०) शकादिषूपपदेषु तुमुन् सिद्धः । तत् किमर्थोऽयमारम्भ इत्याह अक्रियार्थोऽयमारम्भ इति । अक्रियार्थेष्वपि शकादिषु तुमुन् यथा स्यादित्येवमर्थोऽयमारम्भः । नहि शक्नोति भोक्तुमित्यादौ क्रियार्थोपपदं गम्यते । किन्तर्हि ? अर्थान्तरम् । अन्यदेव । इह तावच्छक्नोति भोक्तुमुत्सहते भोक्तुं जानाति भोक्तुमिति प्रावीण्यं गम्यते । ग्लायति भोक्तुमिति तदशक्तता गम्यते । घटयति भोक्तु मर्हति भोक्तुमिति तद्योग्यतामात्रम् । आरभते भोक्तुं प्रक्रमते भोक्तुमिति । भुजेरेवाद्यावस्थानक्रियान्तरम् । लभते भोक्तुमिति । अप्रत्याख्यानम् । अस्ति भोक्तुमित्यादौ सम्भवमात्रम् ।

## ६६ । पर्य्याप्तिवचनेष्वलमर्थेषु ।

पर्य्याप्तिरन्यूनतेति । परिपूर्णतेत्यर्थः । अलमर्थविशिष्टेष्विति । यद्यपि भूषणादयोऽलमर्थास्तथापि पर्य्याप्तिवचने सामर्थ्यमेव सम्भवतीति तदेव गृह्यते । प्रयोगदर्शनार्थबोधेन व्याख्यानतो वा । तेनालमर्थविशिष्टेष्वित्ययमर्थो भवति । यद्येवं सामर्थ्येष्वित्येवं कस्मान् नोक्तम् ? नैवं शक्यम् । एवं ह्युच्यमाने सामर्थ्येन भुङ्क्ते बलेन भुङ्क्त इत्यादावपि स्यात् । यथान्यासे तु न दोषः । नह्यत्र पर्य्याप्ति र्दृश्यते । किं तर्हि ? सामर्थ्यमात्रम् । अलं कृत्वेति प्रतिषेध वचनोऽत्रालंशब्दः । अलंखल्वोरित्यादिना (३।४।१८) क्त्वा । पर्य्याप्तं भुङ्क्त इति । नात्र सामर्थ्यं विवक्षितम् । किं तर्हि ? पर्य्याप्तिमात्रम् । अन्यूनं भुङ्क्त इति । प्रभूतं भुङ्क्त इत्यर्थः । यदि पर्य्याप्तिवचनेष्वलमर्थेषु तुमुन् विधीयते ऽनेनैव सिद्धत्वात् पूर्वसूत्रे शकिग्रहणं किमर्थमित्यत आह पूर्वसूत्र इत्यादि । शक्यमेव कर्त्तुमिति । नात्रालमर्थो विवक्षितः । किं तर्हि ? सौकर्य्यम् । सुकरमेतदित्यर्थः । यथाविध्यस्य सम्भवमात्रं विवक्षितम् । सम्भवत्येवं विधस्य करणमित्यर्थः ।

## ६७। कर्त्तरि कृत्।

किमर्थमिदम्? कर्त्तरि तृजादयो यथा स्युः। क्व तर्हि स्युः? अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थे। ननु च स्वार्थे यत्र प्रत्ययमिच्छति तत्र भावग्रहणं करोति यथा घञादिविधौ भाव इति। नचैते घञादयः स्वार्थे भवन्ति। किं तर्हि? तस्य धर्म्मे सिद्धताख्ये। तथा लकारादिविधौ लः कर्म्मणि च भावे चाकर्म्मकेभ्य इत्यत्र (३।४।६९) सूत्रे लकारा अपि नैव स्वार्थे विधीयन्ते। किं तर्हि? तस्य धर्मे साध्यताख्ये। यद्यपि घञादीनां लकाराणाञ्च भावे विधानं तथापि शब्दशक्तिस्वाभाव्यादेष विषयविभागो लभ्यते। घञादीनां हि धात्वर्थस्य सिद्धतामेवाभिधातुं सामर्थ्यम्। लकाराणां साध्यतामेव। तदेवं यदनिर्दिष्टार्थाः प्रत्ययाः स्वार्थ भवन्ति तस्मात् तृजादयोऽपि तत्रैव भवेयुः। अतः कर्त्तर्य्येव ते यथा स्युरित्येवमर्थमिदमारभ्यते। अत्र च द्वैधम्। कृदुत्पत्तिवाक्यानामयं शेषो वा स्याद् ण्वुल्तृचौ कर्त्तरि नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः कर्त्तरीति। अर्थादेशो वा। निरपेक्षैः स्वैः स्वै र्विधायकैर्वाक्यै र्विहितानां कृतां पश्चादनेनार्थ आदिश्येत ये न लक्षणान्तरैः कृतो विहितास्ते कर्त्तरि वाच्ये भवन्तीति। तत्र यदि द्वितीयः पक्ष आश्रीयेत ततो यथा तृजादीनामनेनार्थ आख्यायते तथा ल्युडादीनामपि। विशेषानुपादानात्। ततस्तेऽपि कर्त्तरि स्युः। तेषु विधिवाक्येषु करणादीनामुपादानात् करणादिष्वपि। यद्यप्येकस्य प्रत्ययस्य कर्त्तरि करणे च युगपद्वृत्ति र्न सम्भवति तथापि वचनसामर्थ्यात् पर्य्यायेण कर्त्तरि करणे च स्युरिति। तस्माद्दुष्टोऽयं पक्ष इति प्रथमं पक्षमाश्रित्याह कृदुत्पत्तिवाक्यानामित्यादि। अनेन तेषामस्य चैकवाक्यतामाह। यद्येवं ल्युडादिवाक्येष्वप्यनेनोपस्थातव्यम्। तेषामप्ययं शेष इति कृत्वा। ततश्चास्मिन्नपि पक्षे द्वितीये पक्षे भावी दोषः स्यादित्यत आह तत्र येष्वित्यादि। तत्रैव हेतुमाह अर्थाकाङ्क्षत्वादिति। शेषो हि तेषां भवति यान्यपरिसमाप्तत्वादर्थमाकाङ्क्षन्ति। नान्येषाम्। अतो येषु वाक्येष्वर्थो नादिश्यते तेषामेव साकाङ्क्षत्वात् शेषोऽयं युक्तः। तृजादीनामेव विधायकानि वाक्यान्यर्थानादेशादर्थाकाङ्क्षाणि। तथाहि ण्वुल्तृचौ भवत इत्युक्तेऽर्थविशेषाकाङ्क्षा भवति क्व मौ भवत इति। तस्मात्

तेषामेवायं शेष इति तेष्वेवोपतिष्ठते । न खुरन्नादिवाक्येष्विति । उपतिष्ठत इति प्रकृतेनैव सम्बन्धः । साक्षादित्यादि । अनुपस्थाने कारणम् । खुरन्नादिवाक्यान्यर्थाकाङ्क्षाणि न भवन्ति । तेषु करणादीनामर्थानां साक्षान्निर्देशात् । तस्मान्न तेषामयं शेष इति न तेषूपतिष्ठते । अतो न भवत्येष दोषप्रसङ्गः ।

## ६८ । भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।

भव्यादिषु गेयप्रवचनीयोपस्थानीयाः सकर्मकाः । तेन तेषां कर्मणि प्राप्ते कर्त्तरि च निपातनम् । शेषाणामकर्मकाणाम्भावे कर्त्तरि च । भव्य इति । अचो यत् (३।१।९७) । गुणः । धातोस्तन्निमित्तस्यैवेत्यवादेशः (६।१।८०) । गेय इति । ईद् यतीतीत्त्वम् ( ६।४।६५ ) । गुणः । साम्नामिति । कर्मणि कृद्योगलक्षणा षष्ठी । उपस्थानीय इति । अनीयर् । जन्य इति । अचो यदित्यत्र ( ३।१।९७ ) तकिशसियतिचतिजनीनामुपसंख्यानमिति यत् । आप्लाव्य इति । प्लवतेरोरावश्यके ण्यत् ( ३।१।१२५ ) । वृद्धिः । पूर्व्ववदावादेशः । आपात्य इति । ऋहलोर्ण्यत् (३।१।१२४) ।

## ६९ । लः कर्मणि च भावे चाकर्म्मकेभ्यः ।

पूर्वसूत्रेण कृत्संज्ञकत्वाल्लकारः कर्त्तर्य्येव प्राप्नोति । न भावकर्मणोः । अतस्तयोरपि यथा स्यादित्येवमर्थमिदमारब्धम् । ल इत्युत्सृष्टानुबन्धकमित्यादि । लडादीनां दशानां लकाराणां विशेषकराननुबन्धानुत्सृज्य ल इति सामान्यं गृह्यते । प्रथमाबहुवचनान्तञ्चैतदिति । पञ्चमीषष्ठेयकवचनाशङ्कान्निराकरोति । पञ्चम्यां ह्यस्यां लकारात् परो य स्तस्यैवार्थो निर्दिष्टः स्यात् । ततश्च कर्त्तर्य्येव लकारः स्यात् । षष्ठ्यामेवास्यामानन्तर्य्यलक्षणा विज्ञायेत । तथाच लकारस्य योऽनन्तरस्तस्यैवार्थनिर्देशः स्यात् । ततश्च स एव दोषो यः पञ्चम्याम् । अत्राप्यादेशापेक्षया षष्ठी विज्ञायते । एवमपि लकारादेशानामनेनार्थो निर्दिश्यत इत्ययमेव विषयार्थो न निर्दिष्टः स्यात् । ननु च लकारस्य प्रयोग एव नास्ति । तत् कथं तस्यैव कर्त्त्रादयोऽर्थाः ? सामर्थ्यात् तदादेशानामितेऽर्थो विज्ञास्यन्त इत्यदोषः । सकर्म्म-

केभ्यो भावे न भवन्तीति। अकर्मकेभ्य इति वचनात्। अन्यथा हि तदनर्थकं स्यात्।

## ७० । तयोरेव कृत्यक्तखलर्थाः ।

तयोरेव भावकर्म्मणोरिति। एतेन तयोरित्यनेन भावकर्मणोरित्यस्य प्रत्यवमर्श इति दर्शयति। ननु चानन्तरसूत्रे द्वे वाक्ये। लः कर्मणि भवन्ति कर्त्तरि चेत्येकं वाक्यम्। भावे चाकर्मकेभ्योऽपि भवन्ति कर्त्तरि चेति द्वितीयम्। तत्रानन्तरवाक्यश्रुतयोः कर्त्तृभावयोरेव तयोरित्यनेन प्रत्यवमर्शो युक्तः। नैष दोषः। यदयमुत्तरसूत्रे कर्त्तरि चेति करोति ततोऽवसीयते भावकर्मणोरेव प्रत्यवमर्श इति। यदि भावकर्त्रोरेव प्रत्यवमर्शः स्यात् कर्त्तृ-ग्रहणमनर्थकं स्यात्। कर्त्तर्य्यनेनैव सिद्धत्वात्। एवं हि तत्र वक्तुं युक्तं स्यात् कर्मणि चेति। कर्मणि केनचिदप्राप्तः स्यात्। यदा पुनरिह भावकर्मणोः प्रत्यवमर्शस्तदा युक्तं कर्त्तरिग्रहणम्। कर्त्तर्य्यप्राप्ते यथा स्यात्। यथा प्राप्तं भावकर्मणोः। तस्माद् भावकर्मणोरेव प्रत्यवमर्शो युक्तः। एवकार इत्यादिनैवकारस्य व्यवच्छेद्यं दर्शयति। अपकर्षणार्थो निवृत्त्यर्थः। शयित-मिति। निष्ठा शीङित्यादिना (१।२।१९) कित्त्वप्रतिषेधाद् गुणः। ईषतकरः सुकर इति। ईषद्दुःसुष्वित्यादिना (३।३।१२६) खल्। ईषदाढ्यमाढ्यंभव-मिति। अत्रापि कर्त्तृकर्मणोश्च भूकृञोः (३।३।१२७)।

## ७१ । आदिकर्मणि क्तः कर्त्तरि च ।

आदिकर्मणीति। आदिश्चासौ कर्म चेति विशेषणसमासः। क्रिया क्षण इति। एतेन कर्मशब्दोऽत्र क्रियां कर्म्माचष्टे। न साधनं कर्मेति दर्शयति। कुतः पुनरेतदवसितं क्रियां कर्माचष्ट इति? आदिशब्देन विशेषणात्। बहूनां क्रियाक्षणानामादिमध्यान्तभावे सत्यनादिभूत-क्रियाक्षणव्यवच्छेदादादिभूतो यः क्रियाक्षणस्तदादिकर्मेति युक्तं प्रति-पादयितुम्। आदिग्रहणेन साधनं कर्म त्वेकमेवेत्यादिशब्देन विशेषयितुं न शक्यते। आदेरनादिभूतत्वापेक्षत्वादादिशब्दस्य तत्राप्रवृत्तिः। व्यवच्छेद्या-भावात्। आदिकर्मणि च भूत (३।२।८४) इत्यनुवर्त्तमाने निष्ठेत्यनेनैव

(३।२।१०२) विहित इति दर्शयन्नाह तस्मिन्नित्यादि । आद्यो यः क्रियाक्षणः स परिनिष्पन्नत्वाद् भूतो भवतीति युक्ता तस्य भूतत्वेन विवक्षितता । प्रकृतः कटं देवदत्त इति । कर्त्तरि क्तः । तेनैव कर्त्ताभिहित इति देवदत्तशब्दात् तृतीया न भवति । कर्मणस्त्वनभिहितत्वात् कटशब्दाद्द्वितीया भवत्येव । प्रकृतः कटो देवदत्तेनेति । अत्र कर्मणि क्तः । तेनैव कर्मणोऽभिहितत्वाद् द्वितीया न भवति । कर्त्तुरनभिहितत्वाद् देवदत्तशब्दात् तृतीया भवत्येव । प्रकृतं देवदत्तेनेति । भावे क्तप्रत्ययः । सर्वत्र प्रशब्द आदिकर्म्म द्योतयति । ननु चादिभूतक्रियाक्षणकाले कटोऽनभिनिर्वृत्त एव भवति । कटकारणभूता एव वीरणादयस्तदानीं सन्ति । न च तदवस्थः कटः । तत् कथं प्रकृतः कट इति भूतकालेन प्रकृतशब्देन कटस्य सामानाधिकरण्यम् ? आद्येन क्रियाक्षणेन यो वीरणादीनां विशेष आहित स्तत्तादर्थ्यात् कटशब्दो वर्त्तते । स च भूत एवेत्यदोषः ।

७२ । गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च ।

उपस्थित इति । द्यतिस्यतिमास्थामित्ति कितीतीत्त्वम् (७।४ ४०) । अनूषित इति । वच्यादिना (६।१।१५) संप्रसारणम् । वसतिक्षुधोरितीट् (७।२।५२) शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम् । अनुजात इति । जनसनखनां सञ्झलोरित्यात्त्वम् (६ ४।४२) आरूढ़ इति । हो ढ़ः (८।२।३१) । झषस्तथोर्द्धोऽध इति (८।२।४०) धत्वम् । ष्टुना ष्टुः (८।४।४१) । ढो ढे लोपः (८।३।१३) । ढ्रलोपे पूर्वस्येति दीर्घः । अनुजीर्ण इति (६।३।१११) जॄ वयोहानौ । ऋत इद्धातोरितीत्त्वम् (७।१।१००) । हलि चेति ( ८।२।७७ ) दीर्घत्वम् । रदाभ्यामित्यादिना (८।२।४२) नत्वञ्च । ननु च श्लिषादीनामकर्म्मकत्वादेव सिध्यतीति तत् किमर्थमेषां ग्रहणमित्याह श्लिषादय इत्यादि । तदर्थमिति । सकर्मकार्थमित्यर्थः ।

७३ । दाशगोघ्नौ सम्प्रदाने ।

गोघ्न इति । स एव हन्तेः पचाद्यच् । सम्प्रदानेऽच् निपात्यते । उपधालोपश्च । अथवा टक् प्रत्ययो निपात्यते । उपधालोपश्च (६।४।९८) गमहनेत्य-

नेनैव (६।४।९८) सिद्धः। हो हन्तेरित्यादिना (७।३।५४) कुत्वम्। यदि संप्रदाने गोघ्न इति निपात्यते ततश्चाण्डालादेरपि तेनाभिधानं प्राप्नोति। यस्मात् तस्मा अपि ये ह्यागताय गां दातुं घ्नन्ति तेऽपि सुकृत इत्यत आह सामर्थ्यादित्यादि। यथैव ह्यत्र निपातनसामर्थ्यात् किञ्चिदलाक्षणिकं कार्य्यं लभ्यते तथार्थविशेषोऽपि। तस्माद् यद्यपि गोघ्न इत्यविशेषेण निपात्यते तथापि विशिष्टस्यैव। तेन ऋत्विगादेरभिधानम्। नान्यस्य चाण्डालादेः। यदा तर्हि तस्मै दातुं गौर्न हन्यते तदा तस्य गोघ्न इत्यभिधानन्न प्राप्नोतीत्यत-आह असत्यपीत्यादि। यथा ह्यपचन्नपि योग्यतया पाचक इत्युच्यते तथा-ऽसत्यपि गोहनने गोघ्न इति।

## ७४। भीमादयोऽपादाने।

उणादिप्रत्यया एत इति। उणादयः प्रत्यया येषां ते तथोक्ताः। के पुनस्त उणादयः प्रत्यया इत्यत आह श्याधूसूभ्यो मगित्यादि (उण्,१।१४२)। आदिशब्देन मन्क्तन्नादीनां ग्रहणम्। यदि तर्ह्युणादिप्रत्यया एत एवं सत्युणादिप्रत्ययानां रूढ़िशब्दात् क्रियाकारकसम्बन्धाभावादपादाने वृत्तिर्न सम्भवत्येव। नैष दोषः। रूढ़िशब्देष्वपि केषाञ्चित् क्रियाकारकसम्बन्धोऽस्त्येव यथा तैलपायिकादिषु। अतोऽदेश्यमेतत्। ताभ्यामितरादि। ननु चासत्यस्मिन् सूत्रे ताभ्यामित्येष निर्देशो नोपपद्यते। अपादानस्याप्रकृतत्वात्। तत् कुतः पर्य्युदासस्य प्रसङ्गः। नैष दोषः। अर्थकथनमेतत्। अस्मिन् ह्यसति तत्रैवं सूत्रं कर्त्तव्यं ततोऽपादानाच्चान्यत्रोणादय इति। तथा च यदीदं नोच्येत तदा स्यादेव पर्य्युदासः।

## ७५। ताभ्यामन्यत्रोणादयः।

अथ किमर्थं ताभ्यामित्यनेन संप्रदानापादानप्रत्यवमर्शः क्रियते? एताव-देव वक्तव्य मन्यत्रोणादय इति। प्रकृतत्वादेव हि तयोस्ताभ्यामन्यत्रोणादयो विज्ञास्यन्ते। अत आह संप्रदानप्रत्यवमर्शार्थमितरादि। अन्यथा हीतरादि। यदि ताभ्यामितरनेन तयोः प्रत्यवमर्शो न क्रियत इत्यर्थः। अनन्तरत्वादि-त्यादि। अनन्तरस्य विधिर्वा भवति प्रतिषेधो (प,६२) वेति न्यायादपादान-

स्यैव पर्युदासः स्याद् यदि ताभ्यामिति निर्देशो न क्रियेत । कृषिरिति । इक् कृष्यादिभ्य इतीक् ( ३।३।१०८, वा )। तन्तुरिति। सितनिगमि मसिसच्याविधाञ्क्रुशिभ्यस्तुन्निति तुन् (उण्,१।६९) । चर्मेति । मनिन् ।

७६ । क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।

ननु च नेयं लोके प्रसिद्धि ध्रौव्यार्था अकर्मकाः प्रत्यवसानार्था अभ्यवहारार्था इति । तत् कथमयमर्थो लभ्यत इत्यत आह स्वनिकायप्रसिद्धिरिति । स्वनिकायो वैयाकरणसंघः । तदेयं प्रसिद्धिः । कर्तृभावाधिकरणेष्विति । कर्त्तरि गत्यर्थाकर्मकेत्यादिना (३।४।७२) । भावे तयोरेवेत्यादिना (३।४।७०) । कर्तृकर्मभावाधिकरणेष्विति । कर्त्तरि पूर्ववत् । भावकर्मणोस्तु तयोरेवेत्यादिना (३।४।७०) । कर्मभावाधिकरणेष्विति । भावकर्मणो स्तयोरेवेत्यादिना (३।४।७०) । इदमेषामिति । अधिकरणवाचिनश्चेति (२।३।६८) षष्ठी । कथमित्यादि । भुक्ता ब्राह्मणाः पीता गाव इति कर्त्तरि निष्ठा । अन्यथानभिहितत्वात् कर्त्तुर्ब्राह्मणशब्दाद् गोशब्दाच्च कर्त्तरि तृतीया स्यात् । न प्रत्यवसानार्थेभ्यः केनचित् कर्त्तरि क्तो विहितः । तत् कथमेतौ प्रयोगावुपपद्येते इत्याह मत्वर्थीयाकार इति । अर्श आदित्वात् (५।२।१२७) । अथ गत्यर्थाकर्मकादि ( ३।४।७२ ) सूत्रादनन्तरमिदं कस्मान्न पठ्यते । एक एवं सति गुणो भवति । द्विः क्तग्रहणं न कर्त्तव्यं भवति । तदेवं वक्तव्यम् । आदिकर्मणि क्तः कर्त्तरि च । ततः श्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च । ततोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य इति । एवञ्च द्विः क्तग्रहणं गत्यर्थाकर्मकग्रहणञ्च न कर्त्तव्यं भवति । अशक्यमेवं वक्तुम् । एवं ह्युच्यमाने यथा ध्रौव्यार्थेभ्यः कर्त्तरि क्तो भवति तथा प्रत्यवसानार्थेभ्योऽपि स्यात् । स च नेष्यते । तस्माद् यथान्यासमेवास्तु ।

७७ । लस्य ।

अकार उच्चारणार्थ इति । एतेनानुबन्धशङ्कां निराकरोति । अनुबन्धे ह्यस्मिन्नकारानुबन्धविशिष्टयोरेव लङ्लटोर्ग्रहणं स्यात् । नान्येषां लिङा-

टीनाम्। अर्थविशेष इति। कर्तृकर्मादौ। कालविशेष इति। वर्त्त-मानादौ। अक्षरसमाम्नायवदिति। यथाक्षरसमाम्नाये प्रत्याहारेऽकारा-दयो वर्णा आनुपूर्व्या कथ्यन्ते तद्वदित्यर्थः। अथ लकारमात्रस्य ग्रहणं कस्मान्न भवतीति। विशेषानुपादानादिति भावः। चूडाल इति। प्राणिस्थादातो लजन्यतरस्यामिति (५।२।९६) लच्। धात्वधिकार इति। धातोरिति पञ्च-म्यन्तमनुवर्त्तते। तेन च लकारो विशिष्यते धातोर्विहितस्य लस्येति। लः कर्मणि च भावे चाकर्मकेभ्य (३।४।६९) इत्यादौ प्रकरणे येऽर्थाः कर्तृकर्म-भावा निर्दिष्टास्त इहानुवर्त्तन्ते। तैश्च लकारो विशिष्यते कर्त्रादिषु विहितस्य लस्येति। तेन विशिष्टस्यैव लकारस्य ग्रहणं भवति। न सर्व-स्येति भावः।

७८। तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्।

पकारः स्वरार्थ इति। अनुदात्तौ सुप्पिताविस्यनुदात्तो (३।१।४) यथा स्यात्। इटष्टकार इत्यादि। ननु चासत्यप्येतस्मिन् विशेषणार्थे नैव किञ्चिदनिष्टं प्राप्नोति। इटोऽदित्यत्र (३।४।१०६) सूत्रे लिङादेशस्येटो-ऽद्विधानात्। ततोऽन्यस्य लिङादेशस्येकारस्यासम्भवात्। तिबाद्यवयवोऽ स्तीति चेत्? न। तस्यालादेशत्वात्। तिबादयो हि समुदाया लादेशाः। न च तदवयवा इकारादयः। अर्थवद्ग्रहणपरिभाषयार्थवदिकारस्य ग्रहणे सति कुतस्तिबाद्यवयवस्य प्रसङ्गः? नहि तेऽर्थवन्तः। तिबादीनामिव समुदायानामर्थवत्त्वात्। तस्मान्न कर्त्तव्य एव टकारः। सत्यं न कर्त्तव्य' य एवं प्रतिपत्तुं समर्थस्तम्प्रति। यस्त्वसमर्थस्तं प्रति कर्त्तव्य एव। अथाद्यन्तौ टकिताविति (१।१।४६) विशिष्टदेश आगमभूतस्यास्य विधानं यथा स्यादित्येवमर्थष्टकारः कस्मान्न विज्ञायत इत्याह तिबादिभिरित्यादि। तुल्यत्वं सदृशत्वम्। तत् पुनरेकयोगनिर्दिष्टत्वेन। तस्मिन् सति लस्येत्यनया (३।४।७७) षष्ठ्या सर्वेषां तिबादीनां सम्बन्धो भवति। सा स्थानषष्ठी समाश्रीयेत। अवयवषष्ठी वा। तत्राद्ये पक्षे सर्वेषां तिबादीनामनुग्रहो

भवति । द्वितीये लिट एव । तत्र यस्मिन् पक्ष आश्रीयमाणे सर्वेषामनुग्रहो भवति स एवाश्रयितुं युक्त इति स्थानषष्ठीयमङ्गीकर्त्तव्या । इटोऽप्यादेशत्वं तेन भवतीति न भवति देशविध्यर्थष्टकारः । अथवा तिबादिभिरेकयोगनिर्दिष्टत्वेन यत् तिबादिभिस्तुल्यत्वं तत् साहचर्य्योपलक्षणम् । तिबादिभिस्तुल्यत्वात् तत्साहचर्य्यादित्यर्थः । साहचर्य्येण सन्दिग्धार्थनिश्चयो भवति यथा सवत्सा धेनुरिति । तथेहापि सन्देहो जायते किमयमादेश उतागम इति । तथापि तिबादिभिरसन्दिग्धादेशभावैः साहचर्य्यादादेशोऽयमिति निश्चीयते । तेन देशविध्यर्थता टकारस्य न भवति । यद्येवं फलिपाटिनमिमनिजनां गुक् ( उण्, १।१८ ) । पटिनाकिधतश्चेत्यत्रापि ( उण्, १।१८ ) पत्यादिभिरादेशै स्तुल्यत्वाद् गुगागमोऽप्यादेशः स्यात् । नैष दोषः । संज्ञायामिति (३।२।१८५ ) तत्रानुवर्त्तते । नचादेशेन संज्ञा गम्यते । किन्त्वागमेन । तस्माद् गुक आगमत्वं वेदितव्यम् । तत्रैकापि षष्ठी यदादेशेन सम्बध्यते तदा स्थानषष्ठी भवति । यदा त्वागमेन तदावयवषष्ठी । मह्हिङो ङकार इत्यादि । अथ ङित्वार्थो ङकारः कस्मान्न भवति ? तस्य सार्वधातुकमपिदित्यनेनैव (१।२।४) सिद्धत्वात् ।

## ७९ । टित आत्मनेपदानां टेरे ।

इह कस्मान्न भवतीत्यादि । शानजपि टितो लकारस्य सम्बन्धात्मनेपदसंज्ञकश्च । तस्मात् तस्यापि टेरेत्वेन भवितव्यमित्यभिप्रायः । प्रकृतेरित्यादि । प्रकृतानां तिबादीनां मध्ये यान्यात्मनेपदानीत्येवमिहात्मनेपदानि विशिष्यन्ते । तेन न भवत्येष दोषः । नहि शानच् तिबादिषु सन्निविष्टः । लाघवार्थं टितस्तङामिति वाच्य आत्मनेपदानामिति वचनं वैचित्र्यार्थम् । ननु च तङामितुच्यमाने तसस्तकारेण प्रत्याहारग्रहणं स्यात् । अर्थवद्ग्रहणपरिभाषया(प,१५)न भविष्यति । य स्तर्हि थस्य स्थान आदिश्यते तेन स्यात् । न । तिबादिषु सन्निविष्टा ये तेषां तिङां ग्रहणं विज्ञास्यते । प्रत्यासत्तेर्वा ऽत्मनेपदीयेन तशब्देन प्रत्याहारग्रहणं विज्ञास्यते । व्याप्तेस्तु-न्याय्यः । लक्ष्यस्थित्यनुरोधात् ।

## ८० । थासः से ।

पेचिष इति । लिट् । अत एकहल्मध्येऽनादेशादेर्लिटी-(६।४।१२०) त्येत्वाभ्यासलोपौ । पक्तास इति । लुट् तासिः । तासस्त्योर्लोप इति (७।४।५०) सकारलोपः । पक्ष्यस इति । लृट् । चोः कुरिति ( ८।२।३० ) कुत्वं ककारः । अथ थकारमात्रस्यैव सकारादेशः कस्मान्न भवति थः स इति ? थकारस्य सकारे कृते परस्य भागस्य टेरेत्त्वे सत्यभीष्टं सिध्यत्येव । नैतच् शक्यम् । एवं ह्यर्थांशब्दस्य यस्थकारस्तस्यापि स्यात् । धात्वधिकाराद्धातो र्यो विहित इति विशेषणान्न भवतीति चेत् ? न । असम्भवात् । नहि तथा-विधस्थकारो धातोर्विहितः सम्भवति । अथ धातोरनन्तरस्येति विशिष्येतै-वमप्यनादित्व एव परस्य स्यात् । नेतरेभ्यो विकरणेभ्यः । व्यवधानादिति यथान्यासमेवास्तु । टेरेत्त्वेनैव सिद्ध एकारान्तत्वे यदेकारान्तत्वमादेशस्य क्रियते तत् तिङामादेशानां टेरेत्त्वं न भवतीति ज्ञापनार्थम् । तेन डारौरस्प्रभृतिषु टेरेत्त्वं न भवतीति पक्ता पक्तारौ पक्तार इति ।

## ८१ । लिटस्तझयोरेशिरेच् ।

शकारः सर्वादेशार्थ इति । असति तस्मिन् धात्वधिकारात् तस्मादि-त्युत्तरस्येत्यादेः (१।१।६७) परस्य तकारस्य प्रसज्येत । शकारे तु सत्यने-काल्शित् सर्वस्येति (१।१।५५) वचनात् सर्वस्य भवति । अथ शे इत्येवं कस्मान्नोक्तम् ? नैवं शक्यम् । शे इति हि प्रगृह्यसंज्ञा स्यात् । इह च व्यतिपप इति पिबादेशः स्यात् । एशि तु सति न भवति । वक्ष्यति ह्येतत् वर्णे यत् स्यात् तच्च विद्यात् तदादाविति (७।१।१८,वा) ।

## ८२ । परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।

पपक्थेति । उपदेशेऽत्वत (७।२।६२) इतीड्भावः । पेचिथेति क्वचित् पाठः । तत्र हि ऋतो भारद्वाजस्येति (७।२।६३) नियमादिट् । थलि च सेटी-(६।४।१२१) त्येत्वाभ्यासलोपौ । पेचेति । धातोरित्यधिकारात् (३।१।९१) तस्मादित्युत्तरस्या-(१।१।६७) देः परस्येति (१।१।५४) थकारस्याकारादेशः । द्वयोरकारयोरतो गुणे (६।१।९७) पररूपत्वम् । अथवान्तरतम्याद् बह्वर्थ-

स्याकारस्य बह्वर्थ एव स्थानी युक्त इति समुदायस्यैव भवति। पेचिव पेचिमेति। क्रादिनियमादिट्।

## ८३। विदो लटो वा।

विद ज्ञान इति। एतेन ज्ञानार्थस्य विदेर्ग्रहणं नान्येषामिति दर्शयति। एवं मन्यते। विद इति पञ्चमी। तेन तस्मादित्युत्तरस्येत्यनन्तराणां (१।१।६७) तिबादीनामादेशेन भवितव्यम्। न चान्यस्माद् विदेः परस्मैपदान्यनन्तराणि सम्भवन्ति। विकरणैर्व्यवधानात्। विचारणसत्तार्थयोश्चात्मनेपदित्वात् परस्मैपदानुपपत्तिः। तस्माज् ज्ञानार्थस्यैव ग्रहणमिति।

## ८४। ब्रुवः पञ्चानामादित आहो ब्रुवः।

पञ्चैवेत्यादि। ननु च नेह द्वितीयं पञ्चग्रहणम्। नाप्यादिग्रहणमादेशविशेषणम्। तत्र पञ्चानामाद्यानां स्थाने सर्वैरेव णलादिभिः पर्य्यायेण भवितव्यम्। तत् कथं पञ्चैव णलादय आदेशा भवन्तीत्येषोऽर्थो लभ्यत इत्यत आह स्थानिसम्बन्धादित्यादि। इह हि स्थानिनः पञ्चैवाऽद्या निर्दिष्टाः। तेषाञ्च स्थानेऽन्तरतम इति (१।१।५०) परिभाषया पञ्चभिरेवाद्यैः सम्बन्धः सम्भवति। नेतरैश्च। तथाहि पञ्चानामेवाद्यानामान्तरतम्यमस्ति। तुल्यार्थत्वात्। नान्येषाम्। विपर्य्ययात्। तस्मात् स्थानिसम्बन्धादादेशेष्वपि पञ्चत्वमादित्वञ्च विज्ञायत इति युक्तम् पञ्चैव णलादय आदेशा भवन्तीति। आत्थेति। आहस्थ इति (८।२।३५) हकारस्य थकारः। तस्य खरि चेति (८।४।५५) चर्त्वं तकारः। ब्रवीतीति। ब्रुव ईट् (७।३।९३)। परेषामिति। थादीनाम्। अथ ब्रुव इति किमर्थं पुनरिदमुच्यते ? यावता ब्रुव इति यदेतत् पञ्चम्यन्तं तदेवार्थाद्विभक्तेर्विपरिणामो भविष्यतीति षष्ठ्यन्तं विज्ञास्यत इत्याह ब्रुव इति पुनर्वचनमित्यादि। असति हि श्रुते सम्बन्धिनि विभक्तिविपरिणामो युक्तः। इह परस्मैपदानामिति प्रकृता एव तिबादयः। षष्ठ्यन्तः सम्बन्धिन इति। न युक्तो विभक्तिविपरिणामः। ब्रुव इति यदि पुनर्नोच्येत ततो यथा णलादयः परस्मैपदानां भवन्त्येव माहादेशोऽपि स्यात्। तस्मात् तं प्रति ब्रुवः स्थानित्वं यथा स्यादित्येवमर्थं

ब्रुव इति पुनरुच्यते। परस्मैपदानामेव हि स्यादिति। यदि ब्रुव इति पुनर्नोच्येतेति शेषः। अयञ्च ब्रुव इति पुनर्वचनस्य हेतुः। हिशब्दो यस्मादर्थे। यस्मादसति पुनर्वचने परस्मैपदानामेवाहादेशः स्यात् तस्माद् ब्रुव इति पुनर्वचनं स्थान्यर्थं कर्त्तव्यम्।

## ८५। लोटो लङ्वत्।

तमादय इति। येषां तस्थेत्यादिना (३।४।१०१) विधानम्। सलोपश्चेति। यस्य नित्यं ङित इति (३।४।९९) विधानम्। अड़ाटावित्यादि। लुङ्लङ्-लृङ्क्ष्वित्यादिनाट् (६।४।७१)। आड़जादीनामित्याड् (६।४।७२) लङः कार्य्यं विधास्यते। लङः शाकटायनस्यैवेति (३।४।१११) झेर्जुसादेशश्च। नचेह कश्चिद्विशेष उपादीयते। ततश्च यस्मादतिदेशात् तामादिकार्य्यं भवति तथा ऽड़जादीनां लङ्कार्य्येणापि भवितव्यमित्यभिप्रायः। इतश्चेति (३।४।१००) लोपः। मिपोऽम्भावश्च। न देश्यमेतत्। तयोरेकरित्युक्तस्य (३।४।८६) मेर्निरिति (३।४।८९) निरादेशस्य चापवादस्य विधास्यमानत्वात्। सा च व्यवस्थितविभाषेति। तेन तामादिरेवादेशो भवति। न लड़ादिरिति मन्यते।

## ८६। एरुः।

ह्निन्योरित्यादि। हिश्च निश्च ह्निनी। तयोरुत्त्वप्रतिषेधो वक्तव्यः। अन्यथा हि लुनीहि पचानीति न सिध्येत्। न वोच्चारणसामर्थ्यादिति। यदि ह्योकारे कृते सतुप्रकारेण भवितव्यं तदोकारमेवोच्चारयेत्। अयं हि लघीयाञ् शब्दव्युत्पत्तावुपायः। नचेकारोच्चारणे सूत्रस्य लाघवं भवति। तदुकार एवोच्चारयितव्ये यदिकारोच्चारणं करोति तस्यैतत् प्रयोजनमुत्त्वं मा भूदिति।

## ८७। सेर्ह्यपिच्च।

लुनीहीति। पित्त्वे प्रतिषिद्धे सार्वधातुकमपिदिति (१।२।४) ङित्त्वम्। ततस्तन्निबन्धनमो हल्यघोरितीत्वं (६।४।११३) भवति। राध्नुहीति। राध साध संसिद्धौ। स्वादित्वाच् श्नुः। तक्ष्णुहीति। तक्षू त्वक्षू तनूकरणे। तनूकरणे तक्ष इति (३।१।७६) श्नुः। अत्रापि पूर्ववन् ङित्त्वे सति गुणो न

भवति । अथ किमर्थं गुरु सूत्रं क्रियते ? न मेर्हि ङिच्चेत्येवोच्येत ? नैवं शक्यम् । ङित्त्वस्य विधाने स्थानिवद्भावात् पित्त्वं स्यादेव । ततश्च ङित्त्वात् ङित्कार्यं गुणनिषेधादिकं स्यात् । पित्त्वाच्चानुदात्तत्वम् । तस्माद् यथान्यासमेवास्तु ।

## ८८ । वा छन्दसि ।

अपित्त्वं विकल्प्यते । लादेश इति । तस्यानन्तरत्वात् । आदेशस्तु तेन व्यवहितत्वादनन्तरो न भवतीति विकल्प्यते । युयोधीति । यु मिश्रणे । बहुलं छन्दसीति (२।४।७६) शपः श्लुः । श्लाविति (६।१।१०) द्विर्वचनम् । अत्रापि पित्त्वेन ङित्त्वं नास्ति । तेन गुणो न भवति । अङितश्चेति धिभावः । प्रीणीहीति । प्रीञ् तर्पणे । क्र्यादित्वाच् श्ना । अत्राप्यपित्त्वे सति पूर्ववदीत्त्वम् ।

## ८९ । मेर्निः ।

उत्त्वलोपयोरपवाद इति । यथाक्रममेरु (३।४।८६) लोटो (३।४।८५) लङ्वदित्यतिदेशेन प्राप्तयोः । इकारलोपस्य च लङीतश्चेति (३।४।१००) विधानादतिदेशेन तस्य प्राप्तिः । पचानीत्यत्राडुत्तमस्य पिच्चेत्याट् (३।४।९२) ।

## ९० । आमेतः ।

यत्रैकारेण लोड् विशिष्यते लोटा वैकार इति द्वौ पक्षौ । तत्र यद्याद्यः पक्ष आश्रीयेत तदैकारस्य विशेषणत्वाद्विशेषणेन च तदन्तविधिर्भवतीत्येकारान्तस्य लोट आम् विधीयमानोऽनेकाल्त्वात् सर्वादेशः स्यादित्येष दोषः प्रतिविधेयः । द्वितीये तु पक्ष एकार एव विशेष्यत्वात् प्रधानम् । नच प्रधाने तदन्तविधिरित्येकारस्यैव भविष्यतीति न किञ्चित् प्रतिविधेयम् । तेन द्वितीयपक्षमाश्रित्याह लोट्सम्बन्धिन एकारस्येत्यादि । पचतामिति । टेरेत्त्वे कृत आम् । इह पचावेदं यजावेदमिति यद्यप्यन्तादिवद्भावाद् गुणो लोड्ग्रहणेन गृह्यते तथाप्यसिद्धं वहिरङ्गमन्तरङ्ग (प,५१) इत्यन्तरङ्ग

आमादेशे कर्त्तव्ये वहिरङ्गत्वाद् गुणस्यासिद्धत्वादामादेशो न भवति। वहिरङ्गत्वन्तु गुणस्य द्विपदाश्रयत्वात्। आमस्त्वन्तरङ्गत्वमेकपदाश्रयत्वात्।

## ९१। सवाभ्यां वामौ।

पचस्वेति। थासः स इति (३।४।८०) कृते वकारः। पचध्वमिति। टेरेत्वे कृतेऽमादेशः।

## ९२। आडुत्तमस्य पिच्च।

स चोत्तमपुरुषः पिद्भवतीति। अथाट एव पित्त्वं कस्मान्न क्रियते? निरर्थकत्वात्। पित्त्वं ह्यनुदात्तार्थं वा स्याद् गुणवृद्ध्यर्थं वा। तत्राटोऽनुदात्तत्वमागमत्वादेव सिद्धम्। गुणवृद्ध्योस्तु नैवासौ निमित्तम्। अप्रत्ययत्वात्। तस्मादाटं प्रति पित्त्वमनर्थकमित्युत्तमस्यैव विधीयते। करवाणीति। पित्त्वादुत्तमस्य ङित्त्वं नास्ति। तेन गुणो भवति। करवाविति। एत ऐ (३।४।९३)। आटश्चेति (६।१।९०) वृद्धिः।

## ९३। एत ऐ।

आमोऽपवाद इति। आमेत इति (३।४।९०) प्राप्तस्य। पचावेदं यजावेदमिति। लोटो लङ्वदिति (३।४।८५) सलोपे सत्याद्गुणः (६।१।८७)।

## ९४। लेटोऽडाटौ।

पर्य्यायेणेति। अथ युगपदेव कस्मान्न भवतः? एवम्मन्यते। टितावेतौ विधीयेते। टित्त्वञ्चादिविधानार्थम्। न च युगपद् द्वयोरादित्वं भवति। एकेनैवादिदेशस्यावष्टब्धत्वान्न युक्तं यौगपद्यमिति। जोषिषदित्यादीन्युदाहरणानि सिब् बहुलं लेटीत्यत्र (३।१।३४) व्युत्पादितानि। अत्रापि व्युत्पाद्यन्ते। जोषिषदिति। जुषी प्रीतिसेवनयोः। सिप इकार उच्चारणार्थः। अनेनाट्। इतश्च लोपः परस्मैपदेष्वितीकारलोपः (३।४।९७)। आर्धधातुकस्येड् वलादेरितीट् (७।२।४)। लघूपधगुणः। आदेशप्रत्यययोरिति षत्वम् (८।३।५९)। तारिषदिति। तॄ प्लवनतरणयोः। सार्वधातुकार्धधातुकयोरिति (७।३।८४) गुणः। व्यत्ययो बहुलमिति (३।१।८५) व्यत्ययेन धात्वकारस्य दीर्घः। शेषं पूर्ववत्। मन्दिषदिति। मदि स्तुतिमोदमदस्वप्न-

कान्तिगतिषु । इदितो नुम् । पदातीति । पद गतौ । दिवादावनुदात्तेत् । व्यत्ययेन परस्मैपदम् । शप्प्रत्ययश्च । अटा सहाकः सवर्णे दीर्घत्वम् (६।१।१०१) । तिप् । इकारलोपोऽत्र न भवति । तद्विधौ वैतोऽन्यत्रेत्यतो (३।४।९६) वाग्रहणानुवृत्तेः । च्यावयातीति । च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ । हेतुमणिच् ।

## ९५ । आत ऐ ।

मन्त्रयैते इति । मत्रि गुप्तभाषणे । चुरादि णिच् । शप् । गुणायादेशः । आटः कस्मान्न भवतीति । पदाति विद्युदित्यादौ । विधानसामर्थ्यादिति । यद्याट ऐत्त्वं स्यात् तद्विधानमनर्थकं स्यात् । ऐड़ागममेव विदध्यात् । एवं प्रक्रियालाघवं भवतीति मन्यते ।

## ९६ । वैतोऽन्यत्र ।

शासायिति । उत्तमपुरुषैकवचनमिट् । टेरेत्त्वम् । ईशायित्यादीन्युदाहरणानुग्रपसंवादाशङ्कयोरित्यत्र (३।४।८) व्युत्पादितानि । दधस इति । डुधाञ् धारणपोषणयोः । थासः से (३।४।८०) । शपः श्लुः । श्लाविति (६।१।१०) द्विर्वचनम् । अट् । घोर्लोपो लेटि वेत्यकारलोपः (७।२।७०) ।

## ९७ । इतश्च लोपः परस्मैपदेषु ।

परस्मैपदग्रहणमित्यादि । ननु च टेरेत्त्वमिड़ादिषु बाधकं भविष्यति । तत् किं परस्मैपदग्रहणेन ? नैतदस्ति । टेरेत्त्वस्यावकाशो ऽन्येषु लकारादिषु । इतो लोपस्य च परस्मैपदेषु । उभयप्रसङ्गे परत्वादितो लोपः स्यात् ।

## ९८ । स उत्तमस्य ।

करवावेति । लेटोऽडाटावित्याट् (३।४।९४) । उत्तमग्रहणमित्यादि । यदि तर्हि पुरुषान्तरे मा भूदित्येवमर्थमुत्तमग्रहणं क्रियते ? न । वस्मसग्रहणमेव कर्त्तव्यम् । अतःाप्ययमर्थः । सकारग्रहणं कर्त्तव्यं न भवति । अलोऽन्त्यपरिभाषयैव सकारलोपो भवति । अशक्यं वस्मसग्रहणं कर्त्तुम् ।

तस्मिन् सति यदा व्यत्ययेन पुरुषान्तरस्य स्थाने तौ भवतस्तदापि लोपः स्यात्। यदा चोत्तमपुरुषस्य स्थाने थस् क्रियते तदा लोपो न स्यात्। उत्तमग्रहणे सत्येष दोषो न भवति। स्थानिवद्भावेन मध्यमोत्तमसंज्ञयो-र्भवन्त्योरेकसंज्ञाधिकारादसति समावेश उत्तमसंज्ञया मध्यमसंज्ञाया निवृत्तिः। सकारग्रहणञ्च यदि न क्रियेत तदोत्तमस्य व्यत्ययेन वचनान्तरेषु कृतेषु वर्णान्तरस्यापि लोपः स्यात्। तस्माद् यथान्यासमेवास्तु।

## ९९। नित्यं ङितः।

अपचावापचामेति। लङ्। अतो दीर्घो यञीति (७।३।१०१) दीर्घः।

## १००। इतश्च।

अपचदिति। लङ्। अपाक्षीदिति। लुङ्। वदव्रजेत्यादिना (७।२।३) वृद्धिः। अस्तिसिचोऽपृक्त इतीट् (७।३।९६)।

## १०१। तस्थस्थमिपां तान्तन्तामः।

अपक्तामिति। पूर्ववद्वृद्धि। झलो झलीति (८।२।२६) सिचो लोपः।

## १०२। लिङः सीयुट्।

पचेतेत्यादौ विधिनिमन्त्रणेत्यादिना (३।३।१६१) लिङ्। लिङः सलोपो ऽनन्त्यस्येति सकारलोपः (७।२।७९)। शपा सहाद् गुणः। वलि लोपः। पक्षीष्टेत्यादावाशिषि लिङ्। चकारस्य चोः कुरिति (८।२।३०) कुत्वम्। इण्कोरिति (८।३।५७) षत्वम्।

## १०३। यासुट् परस्मैपदेषूदात्तो ङिच्च।

परस्मैपदविषयस्येति। एतेन परस्मैपदेष्वित्यस्याः सप्तम्या विषयसप्तमीत्वं दर्शयति। न परसप्तमीत्वम्। परसप्तमीत्वन्तु न सम्भवति। लिङः परस्मैपदानामसम्भवात्। आगमानुदात्तत्वे प्राप्त इति। कुतः पुनरागमानु-दात्तत्वं भवतीति निश्चितम्? अतएव यासुट उदात्तवचनात्। यदि ह्यागमा अनुदात्ता न स्युस्तदोदात्तवचनमनर्थकं स्यात्। प्रत्ययभक्तत्वे-नैव यासुटः प्रत्ययस्वरेणैवाद्युदात्तस्य सिद्धत्वात्। ननु यानि पिद्वचनानि

तदर्थमुदात्तवचनं स्यात् । तेषां ह्यनुदात्तत्वात् तद्भक्तो यासुडनुदात्त एव स्याद् यद्युदात्त इति नोच्येत । नैतदस्ति । यद्येतत् प्रयोजनमभिमतं स्यादपिदित्येवं ब्रूयात् । तदेतदुदात्तवचनमागमानुदात्तस्य ज्ञापकमेव । तत्र ङित्कार्य्याणामसम्भवादिति । न सर्व्वेषामित्यभिप्रायः । कुत एतत् ? यावतीष्यादित्यत्र ग्रहिज्यादिसूत्रेण (६।१।१६) यत् संप्रसारणं तत् यासुट्यपि ङिति सम्भवति । ङिन्मात्रनिबन्धनं हि संप्रसारणम् । विशेषानुपादानात् । तत्र यदि यासुटो ङित्त्वं विधीयेत तदा ग्रहेः संप्रसारणस्यैवैकस्यानुग्रहः स्यात् । लिङस्तु ङित्त्वे विधाने सर्व्वस्य ङित्कार्य्यस्य गुणवृद्धिप्रतिषेधादेवानुग्रहो भवतीति लिङ एव ङित्त्वं विधीयते । ङित्कार्य्याणामिति । ङिति कार्य्याणामित्यर्थः । कुर्य्यादिति । विकरणाश्रयो धातोर्गुणः । अतउत् सार्व-धातुके (६।४।११०) इत्युत्त्वम् । ये चेत्यकारलोपः (६।४।१०९) । कुर्य्युरिति । उस्यपदान्तादिति (६।१।९६) पररूपत्वम् । अचिनवमिति । मिपोऽम् । अत्र ङित्त्वाभावाद् गुणः । एतच्च ज्ञापकस्य प्रयोजनम् ।

## १०४ । किदाशिषि ।

प्रत्ययस्यैवेदं कित्त्वमिति । यद्येवमाशिषि लिङ् विहितस्तस्य यासुट् किद् भवतीत्येतद् विरुध्यते । नास्ति विरोधः । यासुड्वचनं लिङ एवो-पलक्षणम् । तेन लिङवयवद्वारेण लिङ एव कित्त्वमनेन विधीयते । यासुड्-वयवत्वाल्लिङः । नागमस्येति । अत्रापि नागममात्रस्येत्येषोऽर्थो वेदि-तव्यः । प्रयोजनाभावादिति । न सर्वस्य कित्त्वप्रयोजनस्याभावादिति भावः । कुतः ? वच्यादिसूत्रेण (६।१।१५) यद् वचिस्वप्योः संप्रसारणं तस्य यासुट्यपि किति सम्भवात् । किन्मात्रे हि संप्रसारणमुच्यते । विशेषापरिग्रहात् । यदि गुणवृद्धिप्रतिषेध तुल्य एवेति कस्तर्हि ङित्त्वात् कित्त्वस्य विशेषो येन तस्मिन् प्राप्ते कित्त्वं विधीयत इत्याह संप्रसारणमित्यादि । ङित्त्वे हि वच्यादि सूत्रेण (६।१।१५) किति विधीयमानं संप्रसारणं न स्यात् । जाग्रोऽविचिण्-णल्ङित्स्विति (७।३।८५) विधीयमानो गुणः । इष्यादिति । स्कोः संयोगाद्योरन्ते चेति (८।२।२९) सकारलोपः । वच्यादिति । कित्त्वा-

भावादचेः संप्रसारणं न भवति। जागृयादिति। पूर्वसूत्रेण ङित्त्वम्। तेन गुणो न भवति। उभयत्रादादिकत्वाच्छपो लुक्।

१०५। झस्य रन्।

कृषीरन्निति। आशिषि लिङ्।

१०६। इटोऽत्।

कृषीयेति। आशिषि लिङ्। नैवायमादेशावयव इति। अकारमात्रस्यादेशत्वात्। यद्येवमकारोऽयमादेशो विधीयत इत्यणुदित् सवर्णस्य चाप्रत्यय इति (१।१।६९) सवर्णानां ग्राहकः स्यात्। भाव्यमानोऽण् सवर्णान् न गृह्णातीति (प, २०) न भविष्यति। सत्यपि वा सवर्णग्रहणे मात्रिकस्यान्तरतम्यान् मात्रिक एव भविष्यति। अथ लविषीष्टेत्यत्रागमस्येटः कस्मादकारो न भवतीत्याह आगमस्येटो ग्रहणं न भवतीति। अत्र कारणमाह अर्थवद्ग्रहणेनेत्यादि। ननु चागमानामप्यर्थवत्त्वमस्त्येव। तथाहि यासुट्सहितेनैव लिङोऽर्थोऽभिधीयते। न केवलेन। नैतदेवम्। अन्येषु लकारेषु विनापि तेनार्थवत्ता दृष्टा। आगमानान्तु न क्वचित्। तेन तेऽर्थवन्तो न भवन्तीति।

१०७। सुट् तिथोः।

अथ तकारथकाराभ्यां लिङ् विशिष्यते तकारथकारयोर्यो लिङ् स्थानीति? तेन वा तौ लिङ्सम्बन्धिनोस्तकारथकारयोरिति? तत्र यद्याद्यः पक्ष आश्रीयेत तदा विशेष्यत्वाल्लिङः प्राधान्यम्। ततश्च प्रधाने कार्य्यसंप्रत्ययाल्लिङ एव सुडागमः स्यात्। एवञ्च परत्वाद् विशेषविहितत्वाच्च सुटा सीयुड् बाध्येत। तस्माद् दुष्टोऽयं पक्ष इति द्वितीयं पक्षमाश्रित्याह लिङ्सम्बन्धिनोरित्याह। यदुक्तं तकारथकारयोः सुडागमो भवतीति तस्यार्थं स्पष्टीकर्त्तुमाह तकारथकारावागमिनाविति। विशेष्यत्वेन प्राधान्यादिति भावः। यदुक्तञ्च लिङ्सम्बन्धिनोरिति तस्यार्थं स्पष्टीकर्त्तुमाह लिङ् तद्विशेषणमिति। सीयुटस्तु लिङेवागमीति। तकारथकारावेवकारेण व्यवच्छिद्येते। तेनेत्यादि। यत एवं तकारथकारावागमिनौ सुटः सीयुटस्तु

लिङेव तेन भिन्नदेशत्वात् सुटा सीयुड् न बाध्यते। नच भिन्नदेशयोर्बाध्यबाधकभावो युक्तः। विरोधाभावात्। कृषीष्ट कृषीष्ठा इति। तथासोरेकवचनयो रूपे। कृषीयास्तां कृषीयास्थामिति। आतामाथामोः। सर्वत्राशिषि लिङ्। उश्चेति (१।२।१२) कित्त्वाद् गुणाभावः।

## १०८। झेर्जुस्।

पचेयुरिति। अतो येय इतीयादेशः (७।२।८०)। आद् गुणः (६।१।८७) पररूपत्वम्।

## १०९। सिजभ्यस्तविदिभ्यश्च।

वेत्तेश्चेति निर्देशेन लुग्विकरणस्यैवेह ग्रहणमिति दर्शयति। तस्यैव हि झिरनन्तरः सम्भवति। नान्येषां विदीनाम्। विकरणैर्व्यवधानात्। सत्ताविचारणार्थयोरात्मनेपदित्वात् झेरसम्भव एव। तस्माल् लुग्विकरणस्यैव ग्रहणं युक्तम्। अभ्यस्तविदिग्रहणमसिजर्थमिति। यद्यभ्यस्तविदिग्रहण मसिजर्थमेवं सति लङादिसम्बन्धिनोऽपि झेः प्राप्नोत्यत आह ङित इति चानुवर्त्तत इति। तेन ङिल्लकारसम्बन्धिन एव झेर्जुस् भविष्यति। नान्येषा मित्यभिप्रायः। अबिभयुः। अजिह्रयुरिति। ञिभी भये। ह्री लज्जायाम्। जुसि चेति (७।३।८७) गुणः। जुहोत्यादिभ्यः शपः श्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। अजागरुरिति। अदादित्वाच्छपो लुक्। जागर्त्तेर्जक्षित्यादयः षडित्यभ्यस्तसंज्ञा (६।१।६)।

## ११०। आतः।

सिचः परस्याकारान्तादुत्तरस्य झेरिति ब्रुवता द्वाभ्यामप्यनन्तरस्य झेरित्युक्तं भवति। उभाभ्याञ्चानन्तर्य्यं न सम्भवति। आतः सिचा व्यवधानादिति मन्यमानः पृच्छति कथमित्यादि। सिचो लुकीति। गातिस्थेत्यादिना (२।४।७७)यदा सिचो लुक् क्रियते तदा प्रत्ययलक्षणेन सिचोऽनन्तरः सम्भवति। श्रुत्या चाकारान्तादिति। तदनन्तरश्रूयमाणत्वात्। श्रुत्येति। श्रोत्रेन्द्रिय साध्योपलब्धेरित्यर्थः। तदेवं द्वाभ्यामप्यानन्तर्य्यस्याश्रयणात् सामर्थ्यादातः सिज्लुगन्ताज् झेर्जुस भवतीत्युक्तम्भवति। नहि श्रूयमाणे सिचि द्वाभ्या-

मानन्तर्य्यं सम्भवति। तकारो मुखसुखार्थ इति। व्यावर्त्त्याभावात्। नहि ह्रस्वात् प्लुताद्वा वर्णात् परः सिच् सम्भवति। पूर्वेणैव सिद्ध इति। लुमेऽपि सिचि प्रत्ययलक्षणेन झेः सिजनन्तरत्वादभूवन्निति नियमस्य व्यावर्त्त्यं दर्शयति। भुवो वुग् लुङ्लिटोरिति (६।४।८८) वुक्। ननु च नैवेह पूर्वसूत्रेण प्राप्नोति। नहीह सिजपेक्षयानन्तर्य्यं झेर्विद्यते। तत् किं प्रतिषिध्यत इत्याह प्रत्ययलक्षणेनेत्यादि। लुमे हि प्रत्ययलक्षणेनानन्तर्य्यमस्ति। अतः पूर्वेण प्राप्नोति। जुस् नियमेन प्रतिषिध्यते। यदि तर्हि नियमार्थमिदमकार्षुरित्यत्रापि न स्यात्। न ह्यत्रातः सिज्लुगन्तात् परो झिर्भवतीत्यत आह तुल्यजातीयेत्यादि। अतः सिज्लुगन्तान्नियमार्थमयं जुस् विधीयते। स च नियमस्तुल्यजातीयापेक्षः। तेन समानजातीयमेव व्यवच्छिनत्ति। कश्च समान जातीयोऽन्यः सिजलुगन्तः? न चाकार्षुरित्यत्र झेः पूर्वःसिज्लुगन्त इति नायं नियमस्य विषयः। तेन भवत्येव जुस्।

## १११। लङः शाकटायनस्यैव।

अयुरवुरिति। पूर्ववच्छपो लुक्। पूर्ववच्च पररूपत्वम्। लङेवेत्यादि। यत्सम्बन्धिनो झेर्जुस्भावो विधेयः। तिङ्त्वमधिकृत्येदमुक्तम्। कुत एतत्? लुङ्लिङोरप्याकारान्तादनन्तरयोः सम्भवात्। तत्सम्बन्धिनोस्तु झेर्जुसित्येवमादिनैव (३।४।१०८) शास्त्रेण जुस्भावो विहित इति न तावदधिकृत्येदमुच्यते। एवकारस्तु लङ्व्यवच्छेदार्थः। स्यप्रत्ययेन झेर्व्यवधानात्। लङेव यो लङिति। येन केनचित् प्रकारेण यो लङ् न भवति स लङेव लङ्। स पुनर्मुख्यो लङ् यथा स्यात्। स चातिदेशद्वारेण यस्य लङ्वद्भावो न भवति स वेदितव्यः। यस्य ह्यतिदेशद्वारेण लङ्वद्भावो विहितः स उपचारेण लङित्युच्यते। परमार्थतस्तु लोडेवासौ। न लङेव। लङ्वद्भावेन यद्वति। लङिति सम्बध्यते। लङा तुल्यं वर्त्तत इति लङ्वत्। लङ्सदृश इत्यर्थः। तस्य भावो लङ्वद्भावः। येन लङ्वद्भावेन लङ् व्यपदिश्यते तस्य मा भूदिति मुख्यस्यैव लङो ग्रहणं यथा स्यादित्येवमर्थं लङ्ग्रहणं क्रियते। केन पुन लङ्वद्भावो भवतीत्याह लोटो लङ्वदिति। अनेन हि सूत्रेण (३।४।८५) लोटो लङ्वत्

कार्य्येष्वतिदिष्टेषु लङ्कार्य्ययोगात् तस्य लङ्वद्भावो भवति । तेन लङ्सदृशभूत उपचारेण लङिति व्यपदिश्यते । अत्रायमर्थः । यदि मुख्यस्य लङः परिग्रहार्थं लङ्ग्रहणं न क्रियते ततो लोटो (३।४।८५) लङ्वदित्यतिदेशाद् यथा तामादि कार्य्यं लोटो भवति तथेदमपि स्यात् । अतोऽस्य दोषस्य निवृत्त्यर्थं लङ्ग्रहणं क्रियत इति मा भून्नामायं जुस् । लोटो लङ्ग्रहणाद् यत्नात् । यस्तु सिजभ्यस्तविदिभ्यश्चेत्यनेन (३।४।१४९) विधीयते स विभ्यतु जाग्रतु विदन्त्वित्यादौ कस्मान्न भवति ? नहि किञ्चित् तत्र यत्नान्तरमस्तीत्याह सिजभ्यस्तेत्यादि । कथं पुनर्विना यत्नेन पूर्वको जुस् लोटो न भवतीत्याह जुस्भावमात्रं हीत्यादि । न ह्ययमेव जुस् मुख्येन लङा विशिष्यते । किं तर्हि ? जुस्भावमात्रम् । योऽस्मिन् प्रकरणे जुस् विहितः स मुख्यस्यैव लङो भवति । नेतरस्येति । तेन पूर्वकोऽपि जुस् न भवति । एवकार उत्तरार्थ इति । अथ तदर्थ एवकारः कस्मान्न भवति ? विध्यर्थत्वात् तस्य । नहि विध्यर्थवाक्य एवकारस्यार्थवत्त्वमुपपद्यते । स हि नियमार्थेषूपयुज्यते । नहि विध्यर्थेषु । नचेदं नियमार्थम् । सिद्धे हि विधिरारभ्यमाणो नियमार्थो भवति । नच सिद्धेऽयमारभ्यते । तस्मादुत्तरार्थ एवकारः । ननु च शाकटायनस्यैव मतेन यथा स्यादन्येषां मते मा भूदित्येवमर्थमिहैवकारः स्यात् । न । तेन विनाप्यस्य नियमस्य सिद्धत्वात् । यद्यन्येषां मते न स्याच् शाकटायन ग्रहणमनर्थकं स्यात् ।

## ११२ । द्विषश्च ।

अद्विषुरिति । अदादित्वाच्छपो लुक् ।

## ११३ । तिङ्शित् सार्वधातुकम् ।

भवति नयतीति । तिङः सार्वधातुकसंज्ञायां तन्निबन्धनः कर्त्तरि शप् । तस्यापि शितः सार्वधातुकत्वात् सार्व्वधातुकार्धधातुकयोरिति(७।३।८४) गुणः । रोदितीति । पूर्ववच्छपो लोपः । रुदादिभ्यः सार्वधातुक (३।२।७६) इतीट् । पवमानो यजमान इति । पूङ्यजोः शानन् (३।२।१२८) । तस्य सार्व्वधातुकत्वाच् शप् । तस्यापि सार्वधातुकत्वाद्धातोर्गुणः ।

## ११४ । आर्द्धधातुकं शेषः ।

लवितेति । तृच् । आर्धधातुकस्येड् वलादेरितीट् (७।२।३५) । हृस्वत्वमिति । तस्य भावस्त्वतलौ (५।१।११९) । लूभ्यामिति । लुनातेः क्विबन्ताद्भ्याम् । जुगुप्सत इति । गुपादिसूत्रेण(३।१।५)सन् । त्वतलादीनामार्धधातुकत्वाभावादिड्भावः । युक्तं हृस्वत्वं प्रत्युदाहरणम् । त्वप्रत्ययस्य धातोरविधानात् । लूभ्यामित्याद्य-युक्तम् । क्विबन्ता धातुत्वं न जहतीति न्यायाद् भ्यांप्रत्ययो धातोरेव विहितः । सन्प्रत्ययोऽपि धातोः । गुपादेर्धातुत्वात् । नैतदस्ति । अस्यैव हि दोषस्य परीहाराय धातुशब्देन यो विहित इत्युक्तम् । तस्य चायमर्थः । धातोरित्येवं यो विहितो धातुशब्दमुच्चार्य्य यो विहित इति यावत् । यस्य विधायकलक्षणे धातुग्रहणमस्ति । नचैवं भ्यांसनौ विहितौ । तद्विधौ धात्वधिकारस्य धातु-ग्रहणस्य चासम्भवात् । कथं पुन र्धातुसंशब्दनेन यो विहित इत्येषो ऽर्थो लभ्यते ? यावता धातोरित्येकमेव धातुग्रहणमनुवर्त्तते । तच्चाधातुप्रत्यय-निवृत्तौ चरितार्थत्वान्नापरं किञ्चिद् विशिष्टमभिधातुमुत्सहते । एवं मन्यते । यङ्विधानसूत्रा (३।१।२२) च्छमिधातोः (३।२।१४) संज्ञायामित्यतो वा द्वितीयधातुग्रहणमनुवर्त्तते । तत्रैकेन धातुना ऽधातुप्रत्ययो निवर्त्तते । अपरेण धातुप्रत्ययो विशिष्यते धातोरित्येवं यो विहित इति । शेषग्रहणं किम् ? तिङ्शितो र्मा भूत् । अन्यथा ह्येकसंज्ञाधिकाराभावात् प्रत्ययादिसंज्ञानामिव समावेशः स्यात् ।

## ११५ । लिट् च ।

शेकिथेति । आर्धधातुकत्वाल्लिट ऋतो भारद्वाजस्येतीट् ( ७।२।६३ ) । तत्र ऋत एव भारद्वाजस्य नान्येषां धातूनामित्ययोऽर्थोऽभिमतः । थलि च सेटीतीत्त्वाभ्यासलोपौ (६।४।१२१) । जग्ले मम्ले इति । आर्धधातुकत्वादातो लोप इटि चेत्याकारलोपः (६।४।६४) । ननु चेत्यादिना यदुक्तं सार्वधातुक-संज्ञाया अपवाद इति तद् विघटयति । एकसंज्ञाधिकारादन्यत्र समावेशो भवति यथा प्रत्ययादिसंज्ञानाम् । नचात्रैकसंज्ञाधिकारोऽस्ति । तदयुक्त-

न्यास: सार्वधातुकसंज्ञाया अपवादत्वमित्यभिप्रायः। सत्यमेतदित्यादिना ;पवादत्वमेव समर्थयति।

११६। लिङाशिषि।

लविषीष्टा इति। यासु। सुट्तिथोरिति (३।४।१०७) सुट्। षत्वम्। ष्टुत्वञ्च।

११७। छन्दस्युभयथा। (B)

अस्तय इति। अस भुवि। स्त्रियां क्तिन्। सार्वधातुकत्वादस्ते र्भूभावो न भवति। विसृण्विर इति। अत्र लिटः सार्वधातुकत्वाच् श्रुवः शृ चेति

---

(B) The third Adhyaya of the न्यास has been edited with the help of the following MSS :—

(च)—This MS. belongs, as has already been said, to the Rajshahi Government College Library and its contents are the न्यास 1/4, 2/1, 2/3, 3/1 (incomplete), 7/2 nnd 8/4 (also incomplete). Its 3/1 breaks up suddenly at the middle of the Rule वाऽसरूपोऽस्त्रियाम्. (3. 1. 94.) It is a very good aud correct copy.

(ज) This MS. contains न्यास 1/2, 3/1, 3/2, 6/1 and 6/4. It belongs to the Varendra Research Society, Rajshahi and is in Bengali characters.

(झ) It has न्यास 3/1 complete. It is a very good copy in Bengali letters. The MS. was obtained from the village Joari, District Rajshahi. At its end its first owner names the year in which it was written and introduces himself as the person in whose handwritings it was prepared, viz :—श्रीरामजीवनशर्मणः पुस्तकाक्षरे। शकाब्दाः १६९८. From this, it is found that it was written in 1776 A.D.

(ञ) It has न्यास 3/2 in Bengali characters. It was very kindly lent to the editor by Babu Akshaykumar Maitra B. L. of Rajshahi. Himself a profound Sanskrit scholar and a great devotee to historical and other researches, he was gracious enough to ungrudgingly place some MSS. of the न्यास, at the disposal of the editor and this contributed much to the facility of his task.

(३।१।७३) श्नुप्रत्ययः श्नभावश्च। सुन्विर इति। स्वादिभ्यः श्नुः (३।१।७३)।
उपस्थेयामेति। तिष्ठते लिङ्। यासुट्। मस्। एतेलिंङीत्येत्त्वम् (७।४।२४)।

---

The editor is therefore grateful to him and thanks him very cordially for the aforesaid loan and kind help.

(ट) This MS. contains only न्यास 3/4, in Bengali letters. It is a very good and correct copy obtained also from the village Joari.

(ठ) This is a fragment, in Bengali characters, of the न्यास 3/3, containing only the last portion of it from the Sutra 132 to the end of the Section. It belongs to the V. R. Society, Rajshahi. For a complete MS. of the third Páda of the third Adhyaya of the Nyasa, a systematic search was made in Bengal, but in vain. It was quite accidentally that this portion of the MS. was found lying within the leaves of another MS. of a work on न्याय. From its paging it clearly appears that the entire Pada was written down, but certain untoward circumstances caused its leaves to be thus separated.

(ड) The MS. is in the Deva-nagara characters and has न्यास 3/3 and 4/2 only. It is a copy got from a MS. in Canarese characters which is in the Jaina Matha at Srawana Belgola in Mysore. The editor is eternally obliged to and very heartily thanks, the authorities of the Matha, especially Pundits Daurbali Sastri and Charukirti Sastri amongst them. This MS. is probably now the only complete one of the entire Nyasa to be had in one place in India. It is written on palm leaves in the Canarese characters. We had our copy prepared from it in the Deva-nagara in 1915. While our copy was being prepared, the post of the Head officer of this Matha, fell suddenly vacant and a few days after this event, the Library of the Matha was put under lock and key and we could not procure further information regarding it. The editor expects to get copies of some other portions of the न्यास from,—and to gather more accounts of,—this importaht MS. as soon as the above mentioned vacancy is filled and the Library re-opened. There is another difficulty which is extremely mortifying. Copyists able to read Canarese and to transcribe the passages of the text written in the same, into either the Deva-nagara or the Roman characters, are exceedingly rare

ननु व्यत्ययो (३।१।८५) बहुलमित्यनेनैव सिद्धं सर्वमेवेदम् । तत् किमर्थोऽयमारम्भ इत्याह व्यत्ययो (३।१।८५) बहुलमित्यस्यैवेति । गतार्थम् ।

इति श्रीबोधिसत्त्वदेशीयाचार्य्यजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां तृतीयाध्यायस्य
चतुर्थः पादः समाप्तः ॥ ३।४ ॥ ।
समाप्तश्च तृतीयोऽध्यायः ॥ ३ ॥

---

in the locality. The original manuscript appeared to be very old and almost in its last stage of existence.

गौड़ग्रन्थमाला ।

श्रीमत्कुमारशरत्कुमाररायेण प्रवर्त्तिता

श्रीमदक्षयकुमारमैत्रेयेण पर्य्यवेक्षिता च ।

---

अथ

# काशिकाविवरणपञ्जिका ।

बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचिता

शास्त्रिश्रीश्रीशचन्द्रचक्रवर्त्तिभट्टाचार्य्येण संस्कृता ।

---

THE

# KASIKA VIVARANA PANJIKA

(THE NYASA)

A COMMENTARY ON VAMANA-JAYADITYA'S KASIKA

BY

JINENDRA BUDDHI.

---

EDITED

WITH OCCASIONAL NOTES

BY

SRISH CHANDRA CHAKRAVARTI, B. A.

SENIOR PROFESSOR OF SANSKRIT, RAJSHAHI COLLEGE,

RAJSHAHI, BENGAL.

Vol. I. Part V.

---

PUBLISHED BY THE VARENDRA RESEARCH SOCIETY OF RAJSHAHI.

1916.

अथ

# काशिकाविवरणपञ्जिका।

## चतुर्थोऽध्यायः।

## प्रथमः पादः।

---:o:---

### १। ङ्याप्प्रातिपदिकात्।

अधिकारोऽयमिति। स्वरितेनासञ्जितत्वात्। आ पञ्चमाध्यायपरिसमाप्तेरिति। अनेनाधिकारस्यावधिं दर्शयति। ततः परं नायमनुवर्त्तते। अस्वरितत्वात्। स्वादिषु कप्पर्य्यन्तेष्विति। अधिकारस्य विषयमाचष्टे। ङी इति। ङीप्ङीष्ङीनां सामान्येन ग्रहणमित्यादि। ङी इति विशेषकरानुबन्धानुत्सृज्य यत् सामान्यं ङीमात्रं तदिह गृह्यते। टाब्डाप्चापामाबिति। सामान्येन ग्रहणमिति प्रकृतेन सम्बन्धः। ननु च ङ्यादीनां बहुत्वाद् बहुवचनेन भवितव्यम्। तत् कथं ङ्याप्प्रातिपदिकादित्येकवचनेन निर्देश इत्याह तेषामित्यादि। समाहारद्वन्द्वेनेह ङ्यादीनामयं निर्देशः कृत इत्यर्थः। इतरेतरयोगे हि (A) द्वन्द्वे स्याद् बहुवचनम्। नचायमितरेतरयोगे द्वन्द्वः। किं तर्हि? समाहारे। तस्य चैकार्थत्वादेकवचनमेव युक्तम्। समाहारनिर्देश इति वचनमितरेतरयोगनिवृत्त्यर्थं समासान्तरनिवृत्त्यर्थञ्च। अन्यथा हि ङ्यापोः प्रातिपादिकं ङ्याप्प्रातिपदिकमित्यपि षष्ठीसमास आशङ्क्येत। ततो ङ्यन्तमाबन्तञ्च समासप्रातिपदिकं यत् ततः स्याद् राजकुमार्य्यादिभ्यः। न तु केवलेभ्यः कुमार्य्यादिभ्यः। ङ्यापोस्तु विधानेनैव प्रातिपादिकं प्रकृतिः स्यात्। तस्मात् समाहारद्वन्द्वेनायं निर्देशः। तत्र तु त्रयं प्रकृतित्वेनाधिक्रियते।

---

(A) द्वन्द्वपदार्थस्य बहुत्वाद बहुवचनं स्यादिति बङ्गीयपुस्तके पाठान्तरम्।

तेन सर्व्वंतो भवति । अथ कथं पुनरत्र विग्रहः ? केचिदाहुः । ङीश्च आप् च प्रातिपदिकश्चेति । ननु चाप्रत्यय इति (१।२।४५) प्रातिपदिकसंज्ञाप्रतिषेधाद् ङीश्चेति विभक्त्युत्पत्ति र्न स्यात् । उच्यते । नायं प्रत्ययः । अपि तु प्रत्ययानुकरणमिदम् । एवमपि प्रकृतिवदनुकरणं भवतीति (प,३७) स्यादेव प्रतिषेधः । नैष दोषः । अनुकरणं द्वैधम् । अर्थस्य शब्दमात्रस्य चेति । ज्ञापितमाचार्य्येणैतद् द्वेधा निर्देशात् । परिव्यवेभ्यः क्रियो (१।३ १८) विपराभ्याञ्जेरितो-यङादेशस्य (१।३।१८) करणाकरणाभ्याम् । अतोऽत्र शब्दमात्रमनुकृतम् । न त्वर्थसहितम् । तेनात्राप्रत्यय इति(१।२।४५)नास्त्येव प्रतिषेधः । प्रकृतिवदतिदेशस्त्वर्थवत्यनुकरणे । ननु चैवमपि हल्ङ्यादिलोपेन (६।१।६८) भाव्यम् । उच्यते । ङ्यन्तात् सुलोपः । न ङीमात्रात् । व्यपदेशिवद्भावात् स्यादिति चेत् ? न । व्यपदेशिवद्भावोऽप्राति-(प,३३) पदिकेनेत्युच्यते । प्रादिपादिकश्चेदम् । तस्मान् ङीश्चेति । अथ प्रत्ययविधिविषयैषा परिभाषा । पूर्वादिनिः (५।२।८६) सपूर्वाच्चेत्यत्र (५।२।८७) ज्ञापितत्वात् ? न चायं प्रत्ययविधिः । कस्तर्हि ? लोपविधिरित्यतः परिभाषा न प्रवर्त्तत इत्यस्त्येव व्यपदेशिवद्भाव इति । ततः प्रवर्त्तते लोपशास्त्रम् । अतः सुलोपेन भवितव्यं ङी चेति । सामान्येन परिभाषाप्रवृत्तिमाश्रित्य ङीश्चेति विग्रहः । अन्यस्त्वाह । प्रयोगस्थ एव कुमारीगौरीत्यादिषु य ईकारः सोऽत्रानुकृत एव लुप्तविभक्तिकः । तेन ङी इत्येव भवति । यद्येवं कुतो ङकारः सामान्यग्रहणार्थं आसज्यते ? ननु चानुक्रियमाणेनार्थेनार्थवत्त्वात् पुनरपि विभक्त्युत्पत्तिः प्राप्नोति । ततश्च ङीश्चेति भवितव्यम् । नैतदस्ति । प्राक्कालभाविनी या विभक्तिस्तां प्रत्ययलक्षणेनाश्रित्याप्रत्यय इति (१।२।४५) प्रतिषेधात् । अत्रापि स्यात् ? न ङिसम्बुद्ध्योरिति (८।२।८) ज्ञापकात् (१।२।४५) प्रत्ययलक्षणेनाप्रत्यय इति प्रातिपदिकसंज्ञा न प्रतिषिध्यत इति । असदेतत् । नलोपविधिविषयमेवैतज् ज्ञापकम् । अतोऽत्र नास्त्येव प्रत्ययलक्षणेन प्रातिपदिकसंज्ञाप्रतिषेध इति स्थितमेतत् । ननु च प्रत्ययत्वे सति परश्चेति (३।१।२) वचनात् परे भवन्तः स्वादयः पूर्वां प्रकृतिमाक्षिप्य भवन्ति । न ह्यन्यथा परत्वमुपपद्यते । तस्य परत्वस्य पूर्वापेक्षत्वात् । न च ङ्यादिभ्योऽन्या प्रकृतिरुपपद्यते । तत्र

ङ्याप्प्रातिपदिकग्रहणमन्तरेणापि पारिशेष्यादियमेव प्रकृतिर्लभ्यते । तथाहि प्रकृत्यन्तरं धातुरस्ति । तिङन्तञ्च वाक्यञ्च । प्रत्यया अपि स्वादय ष्टाबादयो ऽणादयश्च । तत्र धातो स्तावत् स्वादिभिर्न भवितव्यम् । ते ह्येकत्वादिष्वर्थेषु विधीयमानास्तद्वन्तं शब्दमाक्षिपन्ति । न च धातुरेकत्वादिमान् । अथाप्यविशेषेणोत्पद्यन्ते ? उत्पन्नानां तु नियमः क्रियते । तथापि नैव तेषां धातोरुत्पत्तिर्युक्ता । सामान्यविहितानां स्वादीनां विशेषविहितैस्त्यदादिभिर्बाधितत्वात् । टाबादयस्तर्हि धातोर्भवेयुरिति चेत् ? स्यादेतत् । असति ङ्याप्प्रातिपदिकग्रहणे ऽकारान्तेभ्यो धातुभ्यो जुगुप्सादिभ्योऽत इति (४।१।४) टाप् स्यात् । उगिद्भ्यो वस्तुप्रभृतिभ्य उगितश्चेति(४।१ ६)ङीप् स्यात् । नकारान्तेभ्यो मन्प्रभृतिभ्य ऋन्नेभ्यो ङीबिति ङीप्प्रत्यय इति (४।१।५) । एतच्च नास्ति । यतस्त्रियां टाबादयो विधीयन्ते । क्रियावचनश्च धातुः । क्रियायाश्चासत्त्वभूतत्वान् लिङ्गेन योगो नास्ति । तस्य द्रव्यधर्मत्वात् । एतेन तिङन्ताद् वाक्याच्च टाबादीनामुत्पत्तिः प्रतिक्षिप्ता । तयोरपि क्रियाप्रधानत्वात् । अणादीनामपि नैव धातोरुत्पत्तिरुपपद्यते । ते ह्यपत्यादिनार्थेन सम्बन्धे सति विधीयन्ते । धातुवाच्यस्यार्थस्यासत्त्वभूतत्वाद् यथा स्त्रीत्वेन योगो न सम्भवति तथाप्यपत्यादिना ह्यर्थेन । एतेन तिङन्ताद् वाक्याच्चाणादीनामुत्पत्तिर्निरस्ता । तदर्थस्यापि क्रियाप्रधानस्यापत्यादिना सम्बन्धाभावात् । देवदत्तस्य पचति यस्तस्यापत्यमिति सत्यपि सम्बन्धे तिङश्चेति (५।२।५६) ज्ञापकान्न भवति । येऽपत्यादिनार्थेन सम्बन्धे तद्धिता विधीयन्ते तेऽनन्तरोक्तया नीत्या मा भूवन् । ये तु स्वार्थे विधीयन्ते तैर्युक्तमेव भवितुमिति चेत् ? वार्त्तमेतत् । यथैव हि स्वादीनां सामान्यविहितानां विशेषविहितैस्त्यदादिभिर्बाधितत्वात् तदुत्पत्तिर्नोपपद्यते तथा स्वार्थिकानामपि सामान्यविहितानां स्वार्थिकैस्सुमुक्तादिभिर्विशेषविहितैर्बाधितत्वान्नोपपद्यत एव । तिङन्तात् तर्हि के स्युरिति चेत् ? ज्ञापकान्न भविष्यन्ति । यदयं क्वचित् तद्धितविधौ तिङ्ग्रहणं करोत्यतिशायने तमबिष्ठनौ (५।२।५५) तिङश्चेति (५।२।५६)—तज् ज्ञापयति तिङन्तात् तद्धिता न भवन्तीति । वाक्यात् तर्हि भवेयुरिति चेत् ? अनभिधानान्न भविष्यन्ति । नहि देवदत्तस्याम्बक इत्युक्ते वाक्यार्थगता

मज्ञातादयोऽर्थाः कप्रत्ययेन द्योत्यन्ते। किं तर्हि ? अव्ययशब्दगता एव। स्वादिभिरपि नैव तिङन्ताद् भवितव्यम्। तेषां ह्येकत्वादयोऽर्थाः। ते च तिङ्भिरेवोक्ताः। न चोक्तार्थानां प्रयोगो युक्तः। उक्तार्थानामप्रयोग इति वचनात्। ननु चोक्तार्थानामपि प्रयोगो दृश्यते यथैको द्वौ बहव इति चेत् ? युक्तोऽत्र प्रयोगो वचनग्रहणात्। प्रातिपदिकेत्यादौ हि सूत्रे (२।३।४६) वचनग्रहणस्यैतत् प्रयोजनं व्यवस्थापितं युक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यादिति। इह तु यत्नाभावात् तिङन्तादुक्तार्थानां स्वादीनामुत्पत्तिर्न युक्ता। वाक्यादपि हि स्वादयो नैव भवितुमुत्सहन्ते। कर्मणि द्वितीयेत्यादिना (२।३।२) शास्त्रान्तरेणैकवाक्यात् तेषां निवर्त्तितत्वात्। नहि वाक्यार्थस्य क्रियात्मनः कर्मादौ क्वचिदन्तर्भावोऽस्ति। नापि प्रातिपदिकार्थलिङ्गादिषु। न च ड्याब्भ्योऽन्या प्रकृतिरस्ति यत एते वक्ष्यमाणाः प्रत्यया उत्पद्येरन्। अतः पारिशेष्यादियमेव प्रकृति र्लभ्यते। तत् किं ङ्याप्प्रातिपादिकग्रहणेनेत्यत आह यद्यपीत्यादि। प्रत्ययपरत्वेनेति। हेतौ तृतीया। अङ्गभपदसंज्ञार्थं यच्छयोश्च लुगर्थमित्याद्युपक्षिप्य भाष्यानुसारेण तदन्यप्रयोजननिरासेन प्रत्याख्यातस्य सूत्रस्य वृत्तिकारः प्रयोजनमाह वृद्धाद्वृद्धेत्यादिना। वृद्धादीनां द्व्यच्पर्य्यन्तानां द्वन्द्वं कृत्वा लक्षणशब्देन बहुव्रीहिनिर्देशः कृतः। वृद्धादयो लक्षणं चिह्नं कारणं वा यस्य प्रत्ययविधेः स तथोक्तः। प्रत्ययविधिशब्दः प्रत्येकमभिसम्बध्यते। तत्संप्रत्ययार्थमिति। ङ्याप्प्रातिपदिकसंप्रत्ययार्थः। एतदुक्तं भवति। वृद्धादीनि ङ्याप्प्रातिपदिकविशेषणानीत्येष संप्रत्ययो यथा स्यादित्येवमर्थं ङ्याप्प्रातिपदिकग्रहणं कर्त्तव्यम्। इतरथा ह्येतदादि। यदि ङ्याप्प्रातिपदिकग्रहणं न क्रियेतेत्यर्थः। समर्थविशेषणमेतत् स्यादिति। समर्थानां प्रथमाद्वेत्यनेन (४।१।८२) समर्थानां प्रत्ययविधानाद् यतः प्रत्ययो विधीयते तस्यैव समर्थस्य सुबन्तस्यैतद् वृद्धादिकं विशेषणं स्यात्। ङ्याप्प्रातिपदिकविशेषणं न स्यात्। यदि ङ्याप्प्रातिपदिकग्रहणं न क्रियेत कः पुनर्वृद्धादीनां समर्थविशेषणत्वे दोषो यतस्तन्नेष्यते ? तिकादिभ्यः फिञिति (४।१।१५४) वर्त्तमान उदीचां वृद्धादगोत्रादितीह (४।१।१५७) फिञ् प्रसज्येत। ग्लानां ब्राह्मणानामपत्यमिति ग्लशब्दोऽयमिगुपधत्वात्कोकिरः क

इति (३।१।१३५) कप्रत्ययान्तः। यद्यपि प्रातिपदिकावस्थायामवृद्धः समर्था-वस्थायान्तु नामीति (६।४।३) दीर्घत्वे कृते वृद्ध एव भवति। इह तु न स्यादेव। त्रयोर्ब्राह्मणयोरपत्यमिति। अत्र हि त्रिशब्दष्टाबन्तो यद्यपि प्राग् वृद्धः षष्ठीद्विवचनान्तस्त्वोसि कृतेऽयादेशे च पश्चाद् वृद्धो न भवति। ननु च प्रत्यये कृते लुप्तायां विभक्तौ वाक्यगम्यः संख्याविशेषो वृत्तौ न प्रतीयते। तत् कथं द्विवचनबहुवचनान्तात् प्रत्ययप्राप्त्यप्राप्ती चोद्येते? वृत्तावपि कदाचिदर्थात् प्रकरणाद्वा विशेषप्रतीतिर्भवतीति युक्तं चोदयितुम्। प्राचामवृद्धात् फिन् ( ४।१।१६० ) बहुलमितीहैव स्यात् त्रयोर्ब्राह्मणयो-रपत्यमिति। एतद्धि समर्थमवृद्धं भवति। इह च न स्यात्। त्रीणां ब्राह्मणानामपत्यमिति। त्रिशब्दो हि प्रागवृद्धोऽपि पश्चात् सामर्थ्या-वस्थायामिह वृद्धो भवति। अवर्णो—ऽत इञ् (४।१।९५)। इहैव स्यात्। दक्षस्यापत्यमिति। एतद्धि समर्थमकारान्तं भवति। इह च न स्यात्। दक्षयोर्दक्षाणामपत्यमिति। एतद्धि समर्थमकारान्तं न भवति। स्वर—ञोरञ् (४।१।७१)। अनुदात्तादेश्चेति (४।३।१४०)। इहैव स्यात् त्वचो विकार इति। एतद्धि समर्थमनुदात्तादि भवति। सावेकाचस्तृतीयादि-र्विभक्तिरिति (६।१।१६८) विभक्तेरुदात्तत्वे प्राप्ते शेषस्यानुदात्तत्वात्। प्राति-पदिकावस्थायां त्वेतदाद्युदात्तमेव। क्विबन्ताद् धातुस्वरेण। इह तु न स्यात् सर्वेषां विकार इति। एतद्धि सुबन्तमाद्युदात्तम्। सर्वस्य (६।१।१९१) सुपीत्याद्युदात्तत्वविधानात्। प्रातिपदिकावस्थायां त्वेतदनुदात्तादि। इण्शीभ्यां वन्निति (उण्, १।१५०) वर्त्तमाने सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे (उण्, १।१५१) इतरन्तोदात्तस्य सर्वशब्दस्य निपातनात्। द्वयच्—नौद्व्यचष्ठन् (४।४।७)। इहैव स्यात् त्वचा तरतीति। एतद्धि समर्थं द्व्यच्। इह तु न स्याद् घटेन तरतीति। एतद्धि समर्थं द्व्यज् न भवतीति। ङ्याप्-प्रातिपदिकग्रहणे तु सति यद्यपि समर्थात् प्रत्ययो विधीयते तथापि ङ्याप्-प्रातिपदिकस्यैव वृद्धादिकं विशेषणं विज्ञायते। तदुपादानसामर्थ्यात्। तत्रैवमभिसम्बन्धः कर्त्तव्यः। समर्थं हि यद्वृद्धादि ङ्याप्प्रातिपदिकं तस्मात् प्रत्ययो भवतीति। ननु चाक्रियमाणे ङ्याप्प्रातिपदिकग्रहणे वृद्धादीनि

समर्थविशेषणानीति न भविष्यन्ति । ज्ञापकात् । यदयं नौ द्व्यचष्ठन्निति (४।४ ७) नौग्रहणं करोति तज् ज्ञापयति नैतानि समर्थविशेषणानीति । यदि ह्येतानि समर्थविशेषणानि स्यु नौग्रहणं न कुर्य्यात् । द्व्यच एव सिद्धत्वात् । एतदपि सुबन्तं द्व्यज् भवति नावा तरतीति । नैतदस्ति । नियमार्थमपि नौग्रहणं विज्ञायेत । औकारान्ताद् द्व्यचो नौशब्दादेव नान्यस्मादिति । तेन ग्लौशब्दात् प्रत्ययो निवर्त्तितो भवति । तस्मात् कर्त्तव्यं ङ्याप्प्रातिपदिकग्रहणम् । स्वरूपविधिविषय इति । स्वरूपाश्रयो विधिः स्वरूपविधिः । स एव विषय स्तस्य वा विषयः स्वरूपविधिविषयः । तत्रेयं परिभाषा । स्वरूपविधिस्तु यत्र प्रातिपदिकं स्वरूपेणोपादाय कार्य्यं विधीयते तत्र भवति । अतएवाह प्रातिपदिकस्वरूपग्रहणे सतीत्यादि । कथं पुनर्ज्ञायते स्वरूपविधिविषयैव परिभाषेत्यत आह तथा चेत्यादि । तथाहीत्यर्थः । पूर्वकालैकसर्वेत्यादेः सूत्रात्(२ १।४९)समानाधिकरणेनेत्यनुवर्त्तमाने युवशब्दस्य जरतीशब्देन समानाधिकरणेन युवाखलतिपलितेत्यादिशास्त्रेण (१।१ ६७) समासो विधीयते । स च समासो नोपपद्यते । भिन्नलिङ्गेन सामानाधिकरण्याभावात् । न च शक्यते वक्तुं युवतिशब्दस्य समासो जरतीशब्देन सामानाधिकरण्येन भवतीति। युवशब्दस्य समास उच्यमानो यथा शब्दान्तरस्य गोशब्दस्य न सिध्यति तथा युवतिशब्दस्यापि । तस्मात् तत्रैवायं ज्ञापयत्यस्तीयं परिभाषा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् भवतीति । तस्यां हि सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्यापि ग्रहणं भविष्यतीति युज्यते तस्य जरतीशब्देन समानाधिकरणेन समासः । तदेवं युवशब्दस्यापि प्रादिपदिकस्य स्वरूपग्रहणे यस्मादियं परिभाषा ज्ञापिता तस्मात् स्वरूपविधिविषय एवावतिष्ठते यत्र प्रातिपदिकस्य स्वरूपेण ग्रहणम् । नचेह प्रातिपदिकस्य स्वरूपेण ग्रहणम् । अतो नोपतिष्ठते । तादृशमेवेत्यादि । यादृशोऽस्या विषयः प्रदर्शितः स्वरूपग्रहणविशिष्टस्तादृशं स्वरूपग्रहणविशिष्टमेव । यदि तर्हि स्वरूपविधिविषये परिभाषेयमुपतिष्ठते तर्हि सर्वनाम्नस्तृतीया चेत्यत्र (२।३।२७) नोपतिष्ठते । अत्र स्वरूपग्रहणाभावात् । ततश्चेहैव तृतीयाषष्ठ्यौ स्याताम् भवता हेतुना भवतो हेतोरिति । इह तु न स्याताम् भवत्या हेतुना भवत्या हेतो-

रिति । भवच्छब्दस्यैव हि सर्वनामसंज्ञा । तस्य सर्वादिषु पाठात् । नैष दोषः । सर्वादीनीत्यत्र (१।१।२७) सूत्रे यद्यपि प्रत्येकं सर्वादीनि सूत्रे न पठ्यन्ते—सर्वादिगणे तु पठ्यन्ते । तत्र गणपठितानि सर्वादीनि स्वरूपेणोपदिश्य संज्ञा विधीयमाना लिङ्गविशिष्टानामपि तेषां भवति । तत्रास्याः परिभाषाया उपस्थानात् । तेन लिङ्गविशिष्टानामपि सर्वादीनां सर्वनामकार्य्यमुपपद्यते । यद्येवमिममेव न्यायमाश्रित्य शक्यं ङ्याब्ग्रहणमकर्त्तुम् । नैतदस्ति । नहि प्रातिपदिकसंज्ञा लिङ्गविशिष्टस्यार्थवतः शब्दरूपस्य भवितुमर्हति । अप्रत्यय इति (१।२।४५) प्रतिषेधात् । न च प्रातिपदिकसंज्ञाविधौ सर्वेऽर्थवन्तः संज्ञिनः स्वरूपेण शक्या दर्शयितुम् । तेषामानन्त्यात् । यद्येवं णाविष्टवत् प्रातिपदिकस्येत्यत्रापि (ग,सू,१८६) तर्हीयं परिभाषा नोपतिष्ठते । स्वरूपाग्रहणात् । ततश्च लिङ्गविशिष्टेष्विष्ठवद्भावो न स्यात् । तत्र को दोषः ? कुमारीमाचष्टे कुमारीयतीत्यत्र टिलोपो न स्यात् । नैष दोषः । बहुलमिष्ठवद्भाव इष्यते । तथाच चुरादौ पठ्यते प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्चेति । तस्माद् बहुलवचनाल्लिङ्गविशिष्टस्यापीष्ठवद्भावो भविष्यति । किञ्चेत्यादिना प्रयोजनान्तरं समुच्चिनोति । तदिति ङ्यापोः प्रत्यवमर्शः । ङ्यन्तादाबन्ताच्च तद्धितविधानं यथा स्यादित्येवमर्थञ्च ङ्याब्ग्रहणम् । कालितरेति । कालशब्दाज्जनपदादिसूत्रेण (४।१।४२) ङीष् । तदन्ताद्द्विवचनविभज्येत्यादिना (५।३।५७) तरप् । घरूपकल्पेत्यादिना (४।३।४३) ह्रस्वः । हरिणितरेति । हरितशब्दाद् वर्णादनुदात्तात् तोपधात्तो न इति (४।१।३९) ङीप् । तकारस्य नकारः । अट्कुप्वाङिति (८।४।२) णत्वम् । किं पुनः कारणं न सिध्यतीत्यत आह विप्रतिषेधाद्धीत्यादि । स्त्रीप्रत्ययस्यावकाशो यत्र स्त्रीत्वमेव विवक्ष्यते नतु प्रकर्षः कालीति । प्रकर्षप्रत्ययस्यावकाशो यत्र प्रकर्षो विवक्ष्यते नतु स्त्रीत्वं कालतर इति । उभयविवक्षायामुभयं प्राप्नोति । तत्र विप्रतिषेधे परं (१.४।२) कार्य्यमित्यसति ङ्याब्ग्रहणे परत्वादातिशयिकः स्यात् । अस्मिंस्तु सति ङ्यापोस्तद्धितविधाने प्रकृतित्वेनाश्रयणात् पूर्वं ङ्याब्भ्यां भवितव्यमिति तदन्तात् तद्धितविधिः सिध्यति । ननु चान्तरङ्गः स्त्रीप्रत्ययः । बहिरङ्गास्तद्धिताः । तथाहि समर्थानां प्रथमाद्वेत्यधिकाराद् (४।१।८२) विभक्त्यन्तात्

उत्पद्यन्ते। विभक्तयश्च कर्माद्यपेक्षाः। कर्मादयश्च बाह्यक्रियानिमित्तत्वाद् बहिरङ्गाः। ततश्च निमित्तस्य बहिरङ्गत्वात् तद्धिता अपि बहिरङ्गाश्रया एव भवन्ति। लिङ्गस्य तु सम्बन्धान्तरानपेक्षत्वादन्तरङ्गत्वञ्च। अतस्तन्निमित्ता अपि टाबादयो ऽन्तरङ्गा भवन्ति। ततश्चाऽन्तरङ्गत्वादेव टाबादिभि स्तावद् भवितव्यम्। पश्चात् तदन्तात् तद्धितैरित्यपार्थकं ङ्याब्ग्रहणम्। नैतदस्ति। तदन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणमित्यत्र हि वाक्ये तद्धितग्रहणेन स्वार्थिका ये तद्धितास्त एव विवक्षिताः। इम मेवार्थं सूचयितुं कालितरा हरिणितरेति स्त्रीप्रत्ययान्तात् स्वार्थिक एव तरप्प्रत्यय उदाहृतः। स्वार्थिकेषु च समर्थाना (४।१।८२) मित्येतन्नानुवर्त्तते। तथाहि वक्ष्यति वृत्तिकारः स्वार्थिकप्रत्ययावधिश्चायमधिकारः प्राग्दिशो (५।३।१) विभक्तिरिति यावत्। स्वार्थिकेषु ह्यस्योपयोगो नास्तीति। एवञ्च सति विभक्त्युत्पत्तिमनपेक्ष्य प्रातिपदिकादेव स्वार्थिकैर्भवितव्यमिति कुतस्तेषां बहिरङ्गत्वम्? नन्वेवमपि कालितरेत्याद्यनुदाहरणम्। तरप्प्रत्ययस्य बहिरङ्गत्वात्। स हि यद्यपि विभक्त्युत्पत्तिं नापेक्षते प्रतियोगिनन्तु बाह्यार्थमपेक्षत एव। स्त्रीप्रत्ययस्य तु न क्वचित् प्रतियोग्यपेक्षेति तस्यान्तरङ्गत्वम्। नैष दोषः। उदाहरणदिगियं वृत्तिकारेण दर्शिता। एतानि त्वत्रोदाहरणानि दर्शयितव्यानि। एनिका। श्येनिका। रोहिणिकेति। अत्र हि यदि पूर्वं तद्धितः स्यात् तदैतश्येतरोहितशब्देभ्यो ऽज्ञाताद्यर्थविवक्षायां कप्रत्यये कृते वर्णादनुदात्तात् तोपधात् तो न इत्यनेन (४।१।३९) ङीम्नकारौ न स्याताम्। यदि तर्हि ङ्याबन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणं समासान्ता अपि तदन्तादेव स्युः। ततश्च बहवो गोमन्तो ऽस्यां नगर्यामिति स्याद् बहुव्रीहौ कृत उगितश्चेति (४।१।६) ङीप्। ततश्च नद्यृतश्चेति (५।४।१५३) कपि बहुगोमतीकेति रूपं स्यात्। बहुगोमत्केति चेष्यते। नैष दोषः। नहि समासान्ताः समासादुत्पद्यन्ते। किं तर्हि? अकृत एव समासे तदर्थादुत्तरपदात्। तथाहि न कपीत्यत्र (७।४।१४) वक्ष्यति वृत्तिकारो गोस्त्रियोरुपसर्जनस्येत्ययमपि (१।२।४८) ह्रस्वः कपि न भवति। समासार्थे ह्युत्तरपदे कपि कृते पश्चात् समासेन भवितव्यमिति ङ्याप्प्रत्ययान्तं समासात् प्रातिपदिकं न भवतीति। नच बहवो गोमन्तोऽस्यां नगर्यामित्यत्र

वाक्ये समासार्थमुत्तरपदं स्त्रियां वर्त्तत इति प्राक् कपैव भवितव्यम् । पश्चात् समासेन । ततः स्त्रीविवक्षायां स्त्रीप्रत्ययेन प्रत्ययानुपूर्व्या बहुगोमत्केति सिद्धं भवति । यदि तर्ह्युक्त एव समासे तदर्थादुत्तरपदात् समासान्ता भवन्ति तदा नञस्तत्पुरुषादित्यत्र(५।४।७१)नञः परे वक्ष्यमाणा य ऋगादय स्तदन्तात् तत्पुरुषात् समासान्ता न भवन्तीत्येष वृत्तिग्रन्थो विरुध्यते । तेभ्य स्तत्-पुरुषसमासार्थेभ्यः समासान्ता न भवन्तीति वक्तव्यं स्यात् । नास्ति विरोधः । तत्र ह्यन्तशब्दः समीपवाची । त ऋगादयोऽन्तभूताः समीपभूता यस्य स तथोक्तः । कः पुनरसौ ? नञःप्रकृतत्वात् स एव विज्ञायते । तत्पुरुषा-दित्यत्रापि तत्पुरुषशब्दस्तादर्थ्यात् तत्पुरुषार्थ उत्तरपदे वर्त्तते । तत्र पुनर् ऋगादेः श्रुतत्वादृगादिरेव विज्ञायते । तदन्तात् तत्पुरुषादिति च व्यधिकरणे पञ्चम्यौ । ततोऽयमर्थः । नञः परे य ऋगादयस्ते समीपभूता यस्य नञ स्तस्मात् परं यत् तत्पुरुषार्थमृगादिपदं ततः समासान्तो न भवतीति । अथवाऽवयववचनोऽन्तशब्दः । समानाधिकरणे एव पञ्चम्यौ । तादर्थ्यात् । ऋगाद्यन्तं तत्पुरुषार्थं यदुत्तरपदं तदेव । तदन्तात् तत्पुरुषार्थादित्युक्तम् । ततश्चायमर्थो नञः परे य ऋगादय स्तदन्तात् तत्पुरुषार्थादुत्तरपदात् समासान्ता न भवन्तीति । तत् पुनस्तदन्ततत्पुरुषार्थम् । उत्तरपदं सामर्थ्यादृगाद्येव विज्ञायते । बहुव्रीहौ संख्येये डजबहुगणादित्यत्र (५।४।७३) तर्हि योऽयं वृत्तिग्रन्थः संख्येये योऽयं बहुव्रीहिर्वर्त्तते तस्माद् बहुगणान्ताड् डच्प्रत्ययो भवतीति तस्य विरोधः । नास्ति विरोधः । अत्र हि बहुव्रीह्यर्थ मुत्तरपदमेव तादर्थ्याद्बहुव्रीहिरित्युक्तं भवति । तदयमर्थः । संख्येये यद्बहुव्री-ह्यर्थमुत्तरपदं वर्त्तते तस्माड् डच्प्रत्ययो भवतीति । अनया दिशाप्यन्य एवंजातीया विरोधाः परिहर्त्तव्याः । तदेवं स्थितमेवैतत् तदन्तात् तद्धित-विधानार्थं ङ्याप्ग्रहणमिति । विप्रतिषेधात् तद्धितविधानार्थं ङ्याप्ग्रहणमिति । विप्रतिषेधात् तद्धितबलीयस्त्वमिति । यद्येवं यूनस्तिः (४।१।७७) ङरुत (४।१।६६) इत्येतयोरपि तूङोर्ग्रहणं कस्मान्न विज्ञायते ? तदन्तात् तद्धितोत्प-त्तिर्यथा स्याद् युवतितरा ब्रह्मबन्धूतरेति ? नद्याः शेषस्यान्यतरस्यामितूङो (६।३।४४) विकल्पेन ह्रस्वत्वं न कर्त्तव्यम् । ङ्याब्ग्रहणस्योपलक्षणार्थत्वात् ।

स्त्रियामिति (४।१।३) प्रकृत्य येषां विधानं तदुपलक्षणार्थमिह ङ्याब्ग्रहणम् । अत ऊङ्ङोरपि ग्रहणमिह कृतमेव वेदितव्यम् । ङ्याब्ग्रहणं यद्युपलक्षणार्थमन्यतरस्यैव ग्रहणं कर्त्तव्यम् । एकेनापि हि स्त्रीप्रत्यया उपलक्ष्यन्त एव । सत्यमेतत् । वैचित्र्यार्थन्तु द्वयोर्ग्रहणम् । यावादिभ्यः कन् (५।४।२९) । लोहितान्मणौ (५।४।३०) । वर्णे चानित्य ( ५।४।३१ ) इत्यनेन तु विकल्पेन स्वार्थिकेन स्त्रीप्रत्ययस्य बाधनमिष्यते । तत्र यदा बाधा तदा लोहितशब्दात् कनि टापि कृते चेत्त्वे लोहितिकेति भवितव्यम् । यदा तु न बाधा तदा वर्णादनुदात्तात् तोपधात् तो न इति (४।१।३९) ङीम्नकारयोः कनि च केऽण इति (७।४।१३) ह्रस्वत्वे कृते लोहिनिकेति भवितव्यम् । तस्माद् वक्तव्यमेवैतल् लोहितालिङ्गबाधनं वेति (५।४।३०,वा) ।

## २ । स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ।

उकारादयोऽनुबन्धा इत्यादि । तत्र प्रथमैकवचनस्योकार उच्चारणार्थः । अनङ् साविति (७।१।९३) विशेषणार्थः कस्मान्न विज्ञायते ? व्यावर्त्त्याभावात् । जसो जकारोऽसंदिग्धोच्चारणार्थः । असति हि तस्मिन्नौकारस्यावादेशे कृते संदेहः स्यात् कीदृशस्य प्रत्ययस्योच्चारणमिति । तत्र व्याख्यानं कर्त्तव्यमापद्यते । अथ जसःशीत्यत्र (७।१।१७) विशेषणार्थः कस्मान्न विज्ञायते ? असःशीत्युच्यमानेऽप्यतिप्रसङ्गाभावात् । औटष्टकारः सुडिति प्रत्याहारग्रहणार्थः । वृत्तौ त्वेष ग्रन्थो नास्ति । भवितव्यं त्वनेन । लेखकप्रमाददोषादिदानीमन्तर्हितः । शसः शकार औटष्टकारस्य खरि चेति (८।४।५५) चर्त्वेनासंदिग्धोच्चारणार्थः । शकारः सन्देहनिरासार्थः । इतरथा औड्सित्युच्यमाने सन्देहः स्यात् किं टकारस्येदमुच्चारणमुत डकारस्येति । तत्र डकारोच्चारणाट्टिलोपः स्यात् । ननु च सत्यपि शकारे भवितव्यमेव सन्देहेन । किमिदं कृतचर्त्वस्य डकारस्योच्चारणं टकारस्य वेति । नैतदस्ति । यदि हि डकारस्य स्याच्छकारोच्चारणमनर्थकं स्यात् । अथ तस्माच्छसो नः पुंसीति (६।१।१०३) तत्र विशेषणार्थः शकारः कस्मान्न

भवति ? असद्ग्रहणेऽपि सत्यतिप्रसङ्गाभावात्। टा इत्यत्र टकारो विशेषणार्थः। टाङसिङसामिनात्स्याः इत्यत्र (७।१।१२)। सुपां सुलुगित्यादौ (७।१।३९) सुपां सुलुक् पूर्वसवर्णा आ आत् शे इत्यत्राकारप्रश्लेषः। तत्रासति टकारे तस्यापि ग्रहणं स्यात्। चतुर्थ्येकवचनादिषु ङकारो घेर्ङितीति (७।३।१११) विशेषणार्थः। पञ्चम्या एकवचन ङकारः षष्ठ्येकवचनाद् विशेषणार्थः। इतरथा हि युष्मदस्मद्भ्यां ङसोऽशितत्र (७।१।२७) पञ्चम्येकवचनस्यापि ग्रहणं स्यात्। संख्याकर्मादयश्चेत्यादि। संख्या स्वादीनामर्थे विहिता बहुषु बहुवचनमित्यादिना (१।४।२१) शास्त्रान्तरेण। कर्मादयश्च कर्मणि द्वितीयेत्येवमादिना (२।३।२)। तेन सहास्यैकवाक्यतेति। कर्मणि बहुत्वे बहुवचनं शस्। कर्मणि द्वित्वैकत्वयोर्द्विवचनैकवचने औडमौ। एवमन्यत्राप्येकवाक्यता वेदितव्या। यदि तर्हि तेन सहास्यैकवाक्यता तदा यदुक्तं बहुषु बहुवचनमित्यत्र (१।४।२१) यत्र च संख्या सम्भवति तत्रायमुपदेशः। अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति तद् विरुध्यते। एकवाक्यतायां हि विशिष्ट एवार्थे कर्मादिसम्बन्धिन्येकत्वादौ स्वादीनां विधानात् सामान्यविहितत्वं नोपपद्यते। यदपीदं तत्रोक्तम् ङ्याप्प्रातिपदिकात् स्वादयो लस्य तिबादय इति बहुवचनं विहितं तस्यानेन बहुत्वसंख्यावाच्यत्वेन विधीयत इति तदपि विरुध्यत एव। नह्येकवाक्यतायां विहितस्य बहुवचनस्य पश्चाद् बहुत्वसंख्याया वाच्यत्वेन विधानं युक्तम्। तेन शास्त्रान्तरेणानेन च संहत्य बहुत्वसंख्यायामेव बहुवचनविधानात् पूर्वकस्तावन्नास्ति विरोधः। एकवाक्यतायामपि हि यथा स्वादीनां सामान्येन विधानमुपपद्यते तथा बहुषु बहुवचनमित्यत्रैव (१।४।२१) प्रतिपादितम्। योऽपि द्वितीयो विरोध उद्भावितः सोऽपि न भवत्येव। ङ्याप्प्रतिपदिकात् स्वादयो लस्य तिबादय इति बहुवचनं विहितमिति बहुषु बहुवचनमित्यनेन (१।४।२१) सहैकवाक्यतामापन्नेनेत्ययं तत्राभिप्रायो वेदितव्यः। तस्यानेन सूत्रेण बहुत्वसंख्या वाच्यत्वेन विधीयत इत्यत्रापि स्वादिसूत्रेण (४।१।२) लस्येत्यादिना (३।४।७७) च शास्त्रेण सहैकवाक्यतां प्रतिपन्नेनेत्येषोऽभिप्रायो द्रष्टव्यः। एवञ्च संहत्यैव बहुवचनं विहितम्।

संख्यत्येव च तस्य बहुत्वसंख्या वाच्यत्वेन विधीयत इति कुतो विरोधः ? ननु च बहुषु बहुवचनमित्येकमिदं (१।४।२१) शास्त्रम् । तस्य यदि स्वादि-(४।१।२, सूत्रेणैकवाक्यता ततो लस्येत्यादिना (३।४।७७) शास्त्रान्तरेण सा नोपपद्यते । अथ तेनैकवाक्यता ? स्वादिसूत्रेण (४।१।२) सा नोपपद्यते । नैष दोषः । द्वे ह्येते वचने तन्त्रेणोच्चारिते । तत्रैकस्य स्वादि (४।१।२) सूत्रेणैक-वाक्यता । अपरस्य लस्येत्यादिना (३।४।७७) शास्त्रान्तरेण । अथवाऽन्यथा विरोधाभावः प्रतिपाद्यते । इह हि स्वादयोऽनेन सूत्रेण कर्मणि द्वितीयेत्येव-मादिकं (२।३।२) शास्त्रमनपेक्ष्य वा विधीयेरन् ? तदपेक्ष्य ? तेन सहैक-वाक्यतामापन्ना ते इति द्वौ पक्षौ । तत्राद्ये पक्षेऽविशिष्टेनैव स्वादयो विधीयन्त इति । तथा विहितानान्तु तेषां नियमः क्रियते । यत्र संख्या सम्भवति तत्रासौ बहुषु बहुवचनमित्यादिना (१।४।२१) शास्त्रान्तरेण कर्मादिसम्बन्ध्येकत्वादि-संख्यावाच्यत्वेन विधीयते । यानि तु निःसंख्यान्यव्ययानि तेभ्यः सामान्य-विहिताः स्वादयः सन्तीत्येव । द्वितीये तु पक्षे विशिष्ट एवार्थे कर्मादि-सम्बन्धिनि बहुत्वादौ स्वादयो विधीयन्ते । तत्र बहुषु (१।४।२१) बहुवचन-मित्याद्यः पक्ष आश्रितः । इह तु द्वितीय इति नास्ति विरोधः । पक्षान्तरमाश्रित्य तथाभिधानात् । अथ द्वितीये पक्षे कथमव्ययेभ्यः सुबुत्पत्तिः ? नह्येकवाक्यतायां संख्याकर्माद्यर्थरहितेभ्यः स्वाद्युत्पत्तिरुप-पद्यते । नैष दोषः । ज्ञापकाद् भविष्यति । यदयमव्ययादाप्सुप (२।४।८२) इत्यव्ययादुत्पन्नस्य सुपो लुकं शास्ति तज्ज्ञापयति भवत्यव्ययाद् विभक्त्युत्पत्ति-रिति । कुमारीति । वयसि प्रथम इति (४।१।२०) ङीप् । गौरीति । षिद् गौरादिभ्यश्चेति (४।१।४१) ङीष् । शार्ङ्गरवीति । शार्ङ्गरवाद् यञो ङीन् (४।१।७३) । खट्वेति । अजाद्यतष्टाबिति (४।१।४) टाप् । बहुराजेति । डाबु-भाभ्यामन्यतरस्यामिति (४।१।१३) डाप् । कारीषगन्ध्येति । करीषस्य गन्ध इव गन्धो यस्येति । गन्धस्येदुत्पूतिसुसुरभिभ्यः (५।४।१३५) । उपमाना-च्चेतीत्त्वम् (५।४।१३७) । कारीषगन्धेरपत्यमिति । यस्येति चेत्यकारलोपः (६।४।१४८) । तद्धितेष्वचामादेरित्यादिवृद्धिः (७।२।११७) । अणिञोरनार्षयो र्गुरूपोत्तमयोरित्यादिना (४।१।७८) ष्यङादेशः । यङश्चाबिति (४।१।७४) चाप् ।

## ३। स्त्रियाम्।

ङ्यापोरनेनैव विधानादिति। एतेन स्त्रियामित्यधिकृत्य प्रत्ययविधौ ङ्याबन्तायाः प्रकृतेरभावमाह। एष च प्रातिपदिकमात्रमत्र प्रकरणे सम्बध्यत इत्यत्र हेतुः। यदि हि ङ्याबन्ता प्रकृतिरिह प्रकरणे सम्भवेत् ततो ङ्यापावपि संबध्येयाताम्। सा ङ्याब्रूपा न सम्भवति। अतो न ताविह सम्बध्येते। इह च स्त्रीत्वं प्रत्याचार्य्याणां दर्शनभेदः। क्वचिच्च दर्शने दोषो दृश्यते। तत्र केषाञ्चिद् दर्शनम्—

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम्॥ १॥ इति।

स्तनकेशवतीति। भूम्न्यतिशायने वा मतुप्। लोमश इत्यत्रापि लोमादिपामादिसूत्रेण (५।२।१००) शप्रत्ययः। उभयोरन्तरमिति। उभयोः स्त्रीपुंसयोः सदृशमित्यर्थः। तत् पुनः साहश्यं लिङ्गवत्त्वेन। एवं तर्हि तदुभयं समुदितं यत्र तन्नपुंसकं प्राप्नोति। भवति हि समुदायरूपं समुदायिरूपेण लिङ्गित्वेन सदृशमित्यत आह तदभाव इति। एतदुभयं यत्र नास्ति तन्नपुंसकमिति। तेन न संभवत्येष दोषः। यदि तदभावे नपुंसकमित्येतदुच्यते ततोऽव्ययानां तिङन्तानाञ्चैव नपुंसकत्वं स्यात्। तथाप्युभयोरन्तरं यदित्येतावदुच्यत एवमपि कुक्कुटमयूर्य्यौ इत्येवमादीनां लिङ्गसमुदायवतां समुदायानां नपुंसकत्वं प्रसज्येत। तस्मादुभयोरन्तरं यत् तदभाव इति च द्वयमप्युक्तम्। तदेवं यत्र स्त्री न पुमान् लिङ्गवच्च वस्तु तन्नपुंसकमित्युच्यते ततोऽव्ययानां तिङन्तानाञ्च नपुंसकत्वं न भवतीत्युक्तं भवति। अत्र दर्शने भ्रुकुंसे च टाप् प्रसज्यते। तस्य हि स्तनकेशसम्बन्ध उपलभ्यते। भ्रुकुंसः स्त्रीवेशधारी नर्त्तकः पुरुष उच्यते। खट्वादीनाञ्च स्तनकेशाभावात् स्त्रीत्वं न स्यात्। वृक्षादीनाञ्च लोमशत्वाभावात् पुंस्त्वाभावः प्राप्नोति। खरकुट्यादीनाञ्च लोमशत्वात् पुंस्त्वम्। ततश्च खरकुटीः पश्येति तस्माच्छसो नः पुंसीति (६।१।१०३) नत्वमापद्येत। अन्येषां तु दर्शनं

संस्त्यानं प्रसवः स्थितिश्चेति । संस्त्यानमपचयस्वभावं (B) स्त्रीत्वम् । तद् यत्रास्ति सोऽर्थः स्त्री । प्रसव उपचयात्मकः पुंस्त्वम् । तद् यत्रास्ति स पुमान् । उपचयापचयरहिता यावस्था तदात्मिका स्थितिर्नपुंसकत्वम् । तद् यत्रास्ति तन्नपुंसकमिति । अत्रापि दर्शने संस्त्यानादेस्त्रयस्य सर्वत्र भावादेकैकं वस्तु स्त्री पुमान् नपुंसकञ्च प्रसज्येत । संस्त्यानविवक्षायामेव स्त्रीत्वं भवति । प्रसवविवक्षायामेव पुंस्त्वम् । स्थितिविवक्षायामेव नपुंसकत्वम् । अतोऽयमदोष इति चेत् ? अयुक्तमेतत् । तथाह्युपचीयते कुमारीत्यपि कुमारी स्त्री भवति । न पुमान् । अपचीयते वृक्ष इति संस्त्यानविवक्षायामपि वृक्षः पुमानेव भवति । न स्त्री । उपचीयते कुण्डमपचीयते वेत्युपचयापचययोरन्यतरविवक्षायामपि कुण्डं नपुंसकमेव भवति। न पुमान् नापि स्त्री । तदेव माचार्य्याणां स्त्रीत्वं प्रति दर्शनभेदाद् दोषदर्शनाच्च पृच्छति स्त्रियामित्युच्यते । केयं स्त्रीत्यादि । वृत्तिकारस्तु विदिताभिप्रायो दर्शनान्तरमाश्रित्याह सामान्यविशेषा इत्यादि । सामान्यानि विशेषाश्चेति । तथा सामान्यानि च तानि तुल्यजातीयपदार्थसाधारणत्वाद् विशेषाश्च परस्परतो विजातीयेभ्यश्च विशिष्यन्ते व्यावर्त्यन्त इति सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इवेति । यथैव हि गोत्वादयः सामान्यविशेषा भिन्नेष्वपि स्वाश्रयेष्वभिन्नाकारबुद्ध्यभिधानहेतवस्तथा स्त्रीत्वादयोऽपि । यथैव हि गोत्वादय स्तुल्यजातीयेषु सर्वेषु वर्त्तन्ते विजातीयेभ्यस्तु व्यावर्त्तन्ते तथा स्त्रीत्वादयोऽपि । तस्मात् तद्वदेव तेऽपि सामान्यविशेषाः । ननु च सामान्यविशेषाणां सव्यक्त्यनुगतत्वादस्मिन्नपि दर्शने स एव सर्वत्र सर्वलिङ्गताप्रसङ्गः । तत् किमिति दर्शनान्तरमुत्सृज्येदं दर्शनमाश्रितमित्याह बहुप्रकार व्यक्तय इति । व्यज्यन्त आभिरिति व्यक्तयः सामान्यविशेषाणा-

---

(B) तिरोभावोऽपचयः शुक्रक्षयः । पुरुषापेक्षया स्त्रीणां न्यूनत्वं नामापचयः । आविर्भाव उपचयः शुक्रवृद्धिः । उपचयापचयरहिता यावस्था शुक्रशोणितयोः साम्यावस्थेति । तथाच मनुः—

पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः ॥ (३।४९) इति।

अत्र मेधातिथिः—शुक्रं वीर्य्यम् । पुरुषस्य रेतः स्त्रियाः शोणितमिति ।

माश्रयाः। बहुप्रकारा व्यक्तयो येषां सामान्यविशेषाणां ते तथोक्ताः। अनेनैतत् सूचयति। विचित्रत्वात् सामान्यविशेषाश्रयाणां व्यञ्जकानां कश्चिदेव सामान्यविशेषः केनचिदेवाश्रयेण व्यज्यते। न सर्वः सर्वेण। प्रतिनियतविषयत्वात् पदार्थशक्तीनाम्। तत्र येनार्थेन स्त्रीत्वमेव व्यज्यते न पुंस्त्वं नापि नपुंसकत्वं सा स्त्र्येव भवति। न पुमान् नापि नपुंसकम्। येन पुंस्त्वमेव व्यज्यते स पुमानेव। येन नपुंसकत्वं तन्नपुंसकमेव। यस्तु द्वयोस्त्रयाणां वा व्यञ्जकः स द्विलिङ्गस्त्रिलिङ्गो वेष्यते। अर्द्धर्च मर्धर्चः। पद्मः पद्मम्। तट स्तटी तटमिति। तेन नास्मिन् दर्शने पूर्वदोषावसरः। यस्तर्हि सामान्यविशेषस्याश्रयो व्यञ्जको न भवति स कथं तद्योगात् स्त्री भवति ? पुमान् नपुंसकञ्चेति ? अत आह क्वचिदित्यादि। आशात्माकाशादिषु हि सामान्यविशेषा स्त्रीत्वादयः क्वचिदुपदेशमात्रव्यङ्ग्या एव न त्वाश्रयव्यङ्ग्याः। तदाश्रयाणामतीन्द्रियत्वात्। तत्र यस्मिन्नुपदेशेन स्त्रीत्वं व्यज्यते सा स्त्री भवति यथेयमाशेति। यत्र पुंस्त्वं स पुमान् यथायमात्मेति। यत्र नपुंसकत्वं तन्नपुंसकमेव यथेदमाकाशमिति। कथं स्त्रीत्वादयः क्वचिदुपदेशमात्रव्यङ्ग्या भवन्तीत्याह यथेत्यादि। ब्राह्मणत्व-क्षत्रियत्वादीनां हि तथाविध आश्रयो नास्ति यस्तान्यभिव्यञ्जयेत्। सामान्य-विशेषाश्रयाणामाशात्माकाशादीनामतीन्द्रियत्वात्। तदाश्रयाणामन्यत्र सादृ-श्यादुपदेशमात्रादेव तु ब्राह्मणत्वादीनामभिव्यक्तिर्भवति। यथा च तेषां तथा च क्वचित् स्त्रीत्वादीनाम्। किं पुनरिदं स्त्रीत्वम् ? प्रत्ययार्थ उत प्राति-पदिकविशेषणमित्याह स्त्रीत्वं चेत्यादि। यदा स्त्रीशब्दो विनापि भावप्रत्ययेन स्त्रीत्वे वर्त्तते तदा स्त्रियामभिधेयायां टाबादयो भवन्तीति स्त्रीत्वं प्रत्ययार्थो भवति। यथैव हि गोशब्दो जातिपदार्थपक्षे भावप्रत्ययरहितोऽपि गोत्वे वर्त्तते तथा स्त्रीशब्दोऽपि स्त्रीत्वे। यदा तु स्त्रीत्वं विशेषणमुपादाय तद्वति द्रव्ये स्त्रीशब्दोऽपि वर्त्तते तदायं पक्षोऽपि भवति स्त्रियां यत् प्राति-पदिकं वर्त्तते तस्मात् टाबादय इति। स्त्रीत्वं प्रकृतेर्विशेषणं भवति। उभय-थापि युज्यत इति। कथं पुनरुभयथा युज्यते ? यावता स्त्रीत्वस्य प्रत्ययार्थत्वे स्त्रीत्वं प्रधानमापद्यत इति तत्र व्यतिरेकलक्षणा षष्ठी प्राप्नोति यथा स्त्रीत्वं

देवदत्ताया इति। ततश्च कुमारी देवदत्तेति सामानाधिकरण्यं न स्यात्। द्विवचने बहुवचने च कुमार्य्यौ कुमार्य्य इति न स्याताम्। एकत्वात्। स्त्रीत्वस्यानेकश्च प्रत्ययो नोपपद्यते। गार्गायणी कारीषगन्ध्या कालितरेति। एकत्वात् स्त्रीत्वस्य। तस्य च प्रथमोत्पन्नेनैव ष्फष्यङादिनाभिहितत्वात्। स्त्रीति च ईकारो न प्राप्नोति। संस्त्याने स्त्यायतेर्ड्रडिति ड्रट्प्रत्ययान्तेन स्त्रीत्यनेनैव प्रातिपदिकेनोक्तत्वात्। नैष दोषः। नहि सामान्यविशेषाणामाश्रयाद् भेदः स्त्रीप्रत्ययान्तेनाभिधीयते यतो व्यतिरेक-लक्षणा षष्ठी स्यात्। कस्मात् पुनर्नाभिधीयते। शब्दशक्तिस्वाभाव्यात्। द्विवचनबहुवचने अपि चोपपद्येते। यस्मात् सामान्यविशेषाणामेकत्वेऽप्याश्रयसंख्यास्तद्वाचिन उपाददते। शब्दशक्तिस्वाभाव्यादेव। तेनाश्रयस्यानेकत्वाद् द्विवचनबहुवचने भविष्यतः। गार्गायणीत्येवमादौ द्वाभ्यामेव स्त्रीप्रत्ययाभ्यां स्त्रीत्वं व्यज्यते। नैकेन ष्यङादिनेत्यनेकोऽपि प्रत्ययो युक्त एव। अथवा गार्गायणीत्यत्र प्राचां ष्फस्तद्धित इति (४।१।१२) विहितस्य ष्फस्य षित्करणसामर्थ्याद् ङीष् प्रत्ययो भविष्यति। कारीषगन्ध्येति। ष्यङन्ताद् यङश्चाबिति ( ४।१।७४ ) वचनसामर्थ्याच् चाब् भविष्यति। कालितरेति। जानपदादिसूत्रविहितेन ( १।१।४२ ) ङीषा स्त्रीत्वमप्रकर्षविशिष्टमुक्तम्। नतु प्रकर्षविशिष्टम्। अतस्तस्यानभिहितत्वात् तरबन्तात् टाब् भविष्यति। स्त्रीति। स्त्रियामिति ( ४।१।३ ) निर्देशाल्लिङ्गात् टित्करणसामर्थ्याद्वा ङीब् भविष्यति। प्रकृत्यर्थविशेषणपक्षे तु प्रातिपदिकेन स्त्रीत्वविशिष्टं द्रव्यमेवोच्यते। टाबादयस्तु द्योतका इति। तत्र व्यतिरेकाभावात् षष्ठ्या अप्रसङ्गादेव द्विवचनबहुवचने अपि। अनेकत्वाद् द्रव्यस्य युक्तोऽनेकोऽपि प्रत्ययो युक्त एव। यथैव हि प्रातिपदिकेनोक्तेऽपि स्त्रीत्वे खट्वेत्यादौ टाबादयो भवन्ति तथा गार्गायणीत्यादावनेकोऽपि ष्फादयो भवन्ति। अनेनैव स्त्रीत्वस्य द्योतितत्वादिति युक्तमुक्तमुभयथापि युज्यत इति।

## ४। अजाद्यतष्टाप्।

अजाद्यदन्ताच्चेति। अकारान्तादित्यर्थः। अथ स्वरूपग्रहणं कस्मान्न विज्ञायते ? अच्छब्दान्ताच् शरद्दरदित्येवमादेरिति ? लिङ्गात्। किं लिङ्गम् ?

तदाद्याचिख्यासायां (२।४।२१) यकपूर्वाया (७।३।४१) इत्येवमादिनिर्देशात्। स्वरूपग्रहणे हि ते नोपपद्येरन्। पकारः सामान्यग्रहणार्थ इति। ङ्याप्प्रातिपदिकादित्यत्रासति (४।१।१) हि पकारेऽस्य ग्रहणं न स्यात्। टकारः सामान्यग्रहणाविघातार्थः। असति हि टकार एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति टापैकस्यैव ग्रहणं स्यात्। न डाप्चापोः। द्व्यनुबन्धकत्वात्। शुभंया: कीलालपा इति। अन्येभ्योऽपि दृश्यन्त इति (३।२।७५) विच्। किं पुनः स्याद् यद्यत्रापि टाप् स्यादित्याह हल्ङ्याब्भ्य इत्यादि। जातिलक्षण इति। जातेरस्त्रीविषयादयोपधादिति (४।१।३६)। पुंयोगलक्षण इति। पुंयोगादाख्यायामिति (४।१।४८)। पुष्पफलोत्तरपदलक्षण इति। पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्चेति (४।१।६४)। वयोलक्षण इति। वयसि प्रथम (४।१।२०) इति। टिल्लक्षण इति। टिड्ढाणञिति (४।१।६४)। शूद्राचामहत्पूर्वेत्यादि। ननु चान्महत इत्यादिनात्त्वेनात्र (६।३।४६)। भवितव्यम्। अत एवं वक्तव्यममहापूर्वेति। नैतदस्ति। अर्थप्रधानस्य हि तदात्त्वमुच्यते। शब्दप्रधानश्चायम्। महच्छब्दः पूर्वो यस्याः सा महत्पूर्वेति। महत्पूर्वस्य प्रतिषेध इति। अमहत्पूर्वेत्यस्यार्थमाचष्टे। अत्रापि जातिरिति सम्बध्यते। जातिवचनस्य प्रतिषेधो यथा स्यात्। इह मा भूत्। महती शूद्रा महाशूद्रेति। अत्र ह्युत्तरपदं शूद्रशब्दो जातौ वर्त्तते। न समुदायो महतीशूद्रारूपः। कथं पुनर्जातिरित्युच्यमाने महत्पूर्वस्य प्राप्तिः ? यतः प्रतिषेध उच्यत इत्याह। महाशूद्रशब्दो ह्याभीरजातिवचन इति। महाशूद्रशब्दएव हि समुदायो जातौ वर्त्तते। अतएव महाशूद्रीति जातेरस्त्रीत्यादिना (४।१।६३) ङीष् भवति। नन्वेवमपि नास्त्येव टापः प्राप्तिः। शूद्रशब्दाद्धि प्रत्यय उत्पद्यमानः कथं महाशूद्रात् प्राप्नोतीत्यत आह तच्च तदन्तविधिनेत्यादि। कथं तदन्तविधिरिति ? न कथञ्चित्। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादिति मन्यते। अतिधीवरी। अतिपीवरीति। दधातेः पिबतेश्चातो मनिन्क्वनिब्वनिपश्चेति (३।२।७४) क्वनिप्। ईत्वं घुमास्थादिसूत्रेण (६।४।६४)। धीवानमतिक्रान्ता पीवानमतिक्रान्तेति कुगतिप्रादय इति (२।२।१८) समासः। अत्र तदन्तविधौ

ज्ञापिते सति वनो र चेति (४।१।७) ङीब्रौ न भवतः। यदि पुनस्त-दन्तविधिर्न ज्ञाप्येत तदा वन इति प्रत्ययग्रहणमेतत्। ततश्च प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवतीति वचनादिहैव स्यातां धीवरी पीवरीति। अतिधीवरीतिपीवरीत्यत्र तु न स्याताम्। अति-भवती। अतिमहतीति। भवतुशब्दः केवल उगित् सर्वादिषु पठ्यते। महदिति गौरादौ (C)। तत्रासत्यस्मिन् ज्ञापके केवलाभ्यामेव भवन्महच्छब्दाभ्यामुगिद् गौरादिलक्षणौ ङीब्ङीषौ स्याताम्। अतिभवती। अतिमहतीत्यत्र तु न स्याताम्। ज्ञापके तु सति भवतः। यद्येवं पञ्चानामजां समाहारः पञ्चा-जीति द्विगोरपि तदन्तविधिना टाप् प्राप्नोति। नैष दोषः। अजादिभिः स्त्रियामिति विशेषयिष्यामः। अजाद्यत इति हि षष्ठी। तत्रैवमभिसम्बन्धः कर्त्तव्यः। अजादीनां या स्त्री। अजादिशब्दानां वाच्येऽर्थे यत् स्त्रीत्वं समवायसम्बन्धेन वर्त्तमानं तत्र टाबिति। न च पञ्चाजीत्यत्राजाशब्दस्यार्थे वाच्ये स्त्रीत्वं समवेतम्। किं तर्हि? समाहारे वाच्ये। पूर्वापहाणा। (D) अपरापहाणा। टिदिति। ल्युडन्तत्वात्। प्राक्पुष्पेति। प्राञ्चन्तीति प्राञ्चि। ऋत्विगृदधृगित्यादिना (३।२।५९) क्विन्। प्राञ्चि पुष्पाणि यस्याः सा प्राक्पुष्पा।

## ५। ऋन्नेभ्यो ङीप्।

ङकारः सामान्यग्रहणार्थ इति। असति हि तस्मिन् ङ्याप्प्रातिपदिका-दित्यत्र (४ २।१) ङीति ङीन्ङीषोरेव ग्रहणं स्यात्। न ङीपः।

## ६। उगितश्च।

यथा कथञ्चिदिति। येन केनचित् प्रकारेण यदि वर्ण उगित् सम्भवति यदि प्रत्ययो ऽथापि प्रातिपदिकं सर्वथा यत्रैषामन्यतमः सम्भवति तदुगि-च्छब्दरूपमिति। अनेनोगिच्छब्दरूपस्य विशेषणं न प्रातिपदिकस्येति

---

(C) मिश्रस्त्विदं प्रत्याचष्टे—"केचिद् गौरादिपाठान् ङीषं वर्णयन्ति। तदयुक्तम्। अनुपसर्जनाधिकारात्। किञ्च गौरादिपाठस्य प्रयोजनमपि न पश्यामः।"—इति पदमञ्जरी।

(D) मुद्रितकाशिकायान्तु पूर्वापहारणा। अपरापहारणेति मुद्राकरकृतिः।

दर्शयति। यदि प्रातिपदिकस्यैव विशेषणं स्यादिहैव स्यात् भवती महतीति। अर्वतीत्यत्र तु न स्यात्। अर्वणस्त्रसावनञ इति (६।४।१२७) नकारस्य तादेशः कृत इति वर्ण एव तकार उगित्। न प्रातिपदिकम्। गोमतीत्यत्र च न स्यात्। अत्रापि हि मतुप् प्रत्यय एवोगित्। न प्रातिपदिकम्। तस्मादुगिच्छब्दरूपस्यैव विशेषणं युक्तमित्यभिप्रायः। तच्चोगिच्छब्दरूपं प्रातिपदिकस्य विशेषणम्। विशेषणेन च तदन्तविधिर्भवतीत्याह तदन्तादित्यादि। यदि तर्ह्युगिच्छब्दरूपान्तात् प्रातिपदिकाद् ङीब् भवत्येवं सति भवतीति न सिध्यति। न ह्यत्रोगिच्छब्दरूपान्तं प्रातिपदिकम् भवति। भवच्छब्दान्तादुगितः प्रातिपदिकादन्यस्य तदन्तस्याभावात्। नैष दोषः। व्यपदेशिवद्भावात् तदन्ताद् भविष्यति। ननु च व्यपदेशिवद्भावोऽप्रातिपदिकेनेति (प, ३३) व्यपदेशिवद्भावेन नात्र भवितव्यम्। नैतदस्ति। न ह्युगिदिति प्रातिपदिकग्रहणम्। किं तर्हि? प्रातिपदिकाप्रातिपदिकग्रहणम्। वर्णप्रत्यययोरप्युगितोर्ग्रहणात्। पचन्ती यजन्तीति। शत्रन्ताद् ङीप्। धातोरुगितः प्रतिषेध इति। प्रतिपाद्यत इति शेषः। अञ्चतेश्चोपसंख्यानमिति। अञ्चतेर्ङीप्-प्रत्ययस्य प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदमुभयत्र प्रतिपादनम्। पादोऽन्यतरस्यामिति (४।१।८) सूत्रे ऽन्यतरस्यामिति योगविभागः करिष्यते। स चोगितश्च वनो र च पादोऽन्यतरस्यामित्येतेषां त्रयाणामपि (४।१।६।७।८) योगानां शेषः। व्यवस्थितविभाषा च सा। तेन प्रातिपदिकादुगिच्छब्दरूपान्ताद् धातूगिच्छब्दान्तादञ्चतेरेव नित्यं ङीब् भवति। ततोऽन्येभ्यस्तु न भवत्येवेति। अन्ये त्वन्यथा प्रतिपादनं कुर्वन्ति। उखास्रत् पर्णध्वदिति क्रियाकारकसम्बन्धमात्रं विवक्षितम्। न स्त्रीत्वमिति ङीब् न भवति। स्त्रीशब्दसामानाधिकरण्यात् तु स्त्रीत्वप्रतीतिरापद्यते। न च स्त्रियामित्यत्र (४।१।३) स्त्रीसामानाधिकरण्यपक्षः स्थितः। प्राचीत्यादिषु तु स्त्रीत्वं विवक्षितम्। तेनेह भवतीकार इति। उखास्रत् पर्णध्वदिति। उखेन स्रंसते पर्णानि ध्वंसत इत्यन्येभ्योऽपि दृश्यन्त इति (३।२।७५) क्विप्। अन्येषामपि दृश्यत (६।२।१२७) इत्युखस्य दीर्घत्वम्। प्राचीति प्रपूर्वादञ्चतेः क्विन्। अच इत्यकारलोपः (६।४।१३८)। चावितुरुपसर्गस्य (६।३।१३८) दीर्घत्वम्।

## ७। वनो र च।

वन इति क्वनिब्वनिपोः प्रत्यययोर्ग्रहणम्। अथ वन षण सम्भक्तौ वनु याचन इत्याभ्यामन्येभ्योऽपि दृश्यन्त इति (३।२।७५) विचि कृते यद्रूपं वनिति निष्पद्यते तत् कस्मान्न गृह्यते। गृह्यते यदि ताभ्यां विज् दृश्यते। स तु न दृश्यते। अनभिधानात्। शर्व्वरीति। शॄ हिंसायाम्। अन्येभ्योऽपि दृश्यन्त इति (३।२।७५) वनिप्। गुणो रपरत्वम्। परलोकदृश्वरीति। दृशेस्तेनैव सूत्रेण (E) क्वनिप्। वनो न हश इति। क्वचिदिति शेषः। हशः परो यो वनिब् हशन्ताद् धातोर्विहितस्तदन्तात् प्रातिपदिकात् क्वचिद् ङीब्-रेफश्चान्तादेशो न भवति। सहयुध्वेति। युध संप्रहारे। दृशेः क्वनिप् (३।२।८४)। राजनि युधिकृञः (३।२।८५)। सहे चेति (३।२।८६) क्वनिप्। नोपधायाः (६।४।७)। सर्वनामस्थान इति (६।४।८) दीर्घः। न लोपः प्रातिपदिकान्तस्य (८।२।७)। क्वचित् तु प्रतिषेधो न भवत्येव। शर्वरीति। अत्र रेफाद्धशः परो वनिप्। अवावरीति। अत्रापि हशन्ताद् धातोर्वनिब् विहितः। तथापि प्रतिषेधो न भवति। ओणृ अपनयने। अन्येभ्योऽपि दृश्यन्त (३।२।७५) इति वनिप्। विड्वनोरनुनासिकस्यादित्यात्त्वम् (६।४।४१)। अवादेशः। न च वनो न हश इत्येव वक्तव्यं कर्त्तव्यम्। यस्मात् पादोऽन्यतरस्यामित्यन्यतरस्यां (४।१।८) ग्रहणमस्यापि योगस्य शेषः। सा च व्यवस्थित-विभाषा विज्ञायते। तेन यत्र ङीब्रेफौ नेष्येते तत्र न भविष्यतः।

## ८। पादोऽन्यतरस्याम्।

पादिति कृतसमासान्तः पाच्छब्दो निर्दिश्यत इति। अथ पद गतावित्यस्माण् ण्यन्तादन्येभ्योऽपि दृश्यत इति (३।२।१७८) क्विपि कृते यत् पादिति रूपं निष्पद्यते तस्य ग्रहणं कस्मान्न विज्ञायते? विज्ञायते यदि पादयतेः क्विप् दृश्येत। स तु न दृश्यते। अनभिधानात्। द्विपाद् द्विपदीति। द्वौ पादावस्या इति बहुव्रीहिः। पादस्य लोप(५।४।१३८) इत्यनुवर्त्तमाने संख्यासु-पूर्व्वस्येत्यकारलोपः (५।४।१४४)। पादः पदिति पद्भावः (६।४।१३०)।

(E) वस्तुतस्तु दृशेः क्वनिबिति सूत्रेण (३।२।९४)।

## ९। टाबृचि।

ऋचीत्यभिधेयनिर्द्देश इति विषयनिर्द्देशाशङ्कां निराकरोति। यदि हि विषयनिर्देशः स्यात् तत ऋचि विषय ऋग्ग्रन्थे यः पाच्छब्दस्तदन्तात् प्रातिपदिकाट् टाब् भविष्यतीत्येषोऽर्थः स्यात्। तथाच ऋग्वेद एव स्यात्। नान्यत्र। अभिधेयनिर्देशे तु सर्व्वत्र भवतीति भावः।

## १०। न षट् स्वस्रादिभ्यः।

यो यतः प्राप्नोति स सर्वः प्रतिषिध्यत इति ङीपोऽनन्तरत्वात् तस्यैवायं प्रतिषेध इत्याशङ्काया निरासार्थमिदमुक्तम्। ननु चात्र टाबृचीति (४।१।९) टाबेवानन्तरः। तत् कुतो ङीपोऽनन्तरत्वम्? अस्वरितत्वात्। अस्य टापो ङीप एवानन्तर्य्यं युक्तम्। ननु च षट्संज्ञाः संख्याः शब्दाः। संख्याश्च भेदमात्रं द्रव्यस्य प्रत्याययन्ति। न स्त्रीत्वम्। या तु तस्य स्त्रीत्वप्रतीतिः सा शब्दान्तरेण सामानाधिकरण्याद् भवति। न च स्त्रीसमानाधिकरणपक्षः स्त्रियामिति (४।१।३) सूत्रे स्थितः। तथाच तेभ्यः स्त्रीप्रत्ययस्य प्राप्तिरेव नास्तीत्यपार्थकः प्रतिषेधः। नैतदस्ति। संख्या हि गुणः। संख्यापरिमाणानि पृथक्त्वं संयोगविभागाविति वैशेषिकाणां गुणसूत्रे पाठात्। गुणवचनानां चाश्रयतो लिङ्गवचनानि भवन्ति यथा शुक्ला शाटी शुक्लः कम्बलः शुक्लं वस्त्रम्। शुक्लः शुक्लौ शुक्ला इति। तथा सति प्रतिषेधे यथा शुक्लादिशब्देभ्यः स्त्रीप्रत्ययो भवति तथा षट्संज्ञकेभ्योऽपीति स्याद् यथा पञ्च ब्राह्मण्य इति। षड्भ्यो लुगिति (६।१।२२) जसो लुक्। स्वसेति। अनङ् सौ (७।१।९३)। पूर्व्ववन्नोपधाया इति (६।४।७) दीर्घः। तिसृचतसृशब्दावपि स्वस्रादिषु पठ्येते। तयोः किमर्थः पाठः? यावता विभक्तौ परत स्त्रिचतुरोः स्त्रियां तिसृचतस्रिति (७।२।९९) तिसृचतसृभ्यां भवितव्यम्। तत्र यदि तावृकारान्तलक्षणं ङीपं प्रति निमित्तभावं प्रतिपद्येयातां विभक्तेरानन्तर्य्यं ताभ्यां विहन्येत। एतच्च सन्निपातलक्षणो विधिरनिमित्तं (प, ८८) तद्विघातस्येत्ययुक्तम्। तस्मात् सन्निपातलक्षणपरिभाषयैव ङीब् न भविष्यतीति किं प्रतिषेधेन। एवं तर्ह्येतज् ज्ञापयत्यनित्यैषा परिभाषेति। तेन या सेति सिद्धं भवति।

अत्रापि हि विभक्तौ त्यदाद्यत्वमित्यकारष्टापो निमित्तं न स्यात्। टापि हि सति विभक्तेरानन्तर्यं विहन्यते। परिभाषायास्त्वनित्यत्वेनैव टाब् भवति। षट्संज्ञानामित्यादि। पञ्च ब्राह्मण्य इत्यादावनन्तरस्य विधिर्भवति प्रतिषेधो वेति (प, ६२) ङीपोऽनन्तरस्य प्रतिषेधे कृते नलोपः प्रातिपदिकान्तस्येति (८।२।७) नकारे लुप्ते सत्यकारान्ततायामुपजातायां टाबुत्पत्तिः कस्मान्न स्यात्? स्यादेव निमित्तस्य सन्निधानात्। नलोपस्यासिद्धत्वान्न स्यादिति चेत्? नैतदस्ति। नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृतीति (८।२।२) परिगणितेष्वेव विधिषु नलोपस्यासिद्धत्वमुच्यते। न च टाब्विधिस्तत्र परिगण्यते। तत् कुतस्तत्र नलोपस्यासिद्धत्वम्? टाब्विधिरपि तत्र परिगण्यत एवेति दर्शयन्नाह प्रत्याहारादित्यादि। चाबिति। चाप्सम्बन्धिनं पकारमुपलक्षयति। तदेतदुक्तं भवति सुबिति। तत्र न सप्तमी बहुवचनसम्बन्धिना सुपः पकारेण प्रत्याहारो गृह्यते। किं तर्हि यङश्चाबिति (४।१।७४) चाप्सम्बन्धिना। तस्मात् टापो विधिरपि सुब्विधिरेव। टापोऽपि प्रत्याहारान्तर्भावात्। ततश्च टाब्विधावपि नलोपस्यासिद्धत्वेन भवितव्यमिति सिद्धं सर्वमिष्टम्। सिध्यत्येव। दोषस्त्विवत्त्व इति। बहूनि चर्माण्यस्यां नगर्यामिति बहुव्रीहिः। शेषाद्विभाषेति (५।४।१५४) कप्। टाप्। नलोपः। अत्रेदानीं प्रत्ययस्थात् कादित्यनेनेत्त्वमिष्यते(७।३।४४)बहुचर्मिकेति यथा स्यात्। तच्च न प्राप्नोति। न ह्यत्र कात् पूर्वोऽकारः। नलोपस्यासिद्धत्वात्। तत्र हि राजभ्यामित्यत्र सुपि चेति(७।३।१०२) दीर्घत्वं मा भूदिति नलोपस्यासिद्धत्वार्थं सर्वविभक्त्यन्तः समास आश्रितः। सुपो विधिः सुब्विधिः। सुपि वा विधिः सुब्विधिरिति। यदि च टाबपि सुप् स्यात् ततस्तत्रापि परत्रावस्थित इत्त्वमुच्यत इति। तदपि सुब्विधिः स्यात् सुपि विधिरिति कृत्वा। ततस्तस्मिन्नपि कर्त्तव्ये नलोपस्यासिद्धत्वं स्यात्। तदयुक्तश्चापा प्रत्याहारः। तस्मान्नोभाविति। यस्मादेवं चापा सह प्रत्याहारे दोषस्तस्मादुभावपि टाब्ङीपौ न भवत इति प्रतिषिद्धौ। कथमिह हि स्त्रियामित्यर्थोऽपेक्ष्यते? अस्मिन्नर्थे यदुक्तं तन्न भवतीति स्वार्थे चोभौ ङीप्टापावुक्ताविति उभावपि भवतः।

## ११। मनः।

दामा पामेति। ददातेः पिबतेश्चातो मनिन्क्वनिब्वनिपश्चेति (३।२।७४) मनिन्। पूर्ववन्नोपधाया दीर्घः। अथ सीमा सीमानौ सीमानोऽतिमहि- मातिमहिमानावतिमहिमान इत्यत्र कथं प्रतिषेधः? यावता मन इत्यर्थवतो मन एतद्ग्रहणम्। न च यथा दामा पामेत्यत्र मनः प्रत्ययार्थेनार्थवत्त्वं तथा सीमेत्यवमादौ न केनचिदर्थेनार्थवत्त्वम्। तथाहि सीमाशब्दस्तावदव्युत्पन्नं प्रातिपदिकम्। तस्यैव चार्थवत्त्वम्। न तदवयवभूतस्य मनः। अतिमहिमेत्य- त्रापि नैव मनोऽत्त्ववर्थम्। तथाहि महतो भाव इत्यर्थविवक्षायां पृथ्वादिभ्य इमनिजिति (५।१।२२२) महच्छब्दादिमनिज् विहितः। तत्र चेमनिच एवार्थवत्त्वम्। न तदेकदेशस्य मन इत्यत आह अनिनस्मन्ग्रहणानीत्यादि। एतद्वाक्यं पठता वाक्यकारेण अन् इन् अस् मन् इत्येतेषां ग्रहणे ऽर्थवद्- ग्रहणपरिभाषा न व्याप्रियते। तेनैषामनर्थकानामपि ग्रहणं भवत्येभिश्चानर्थकैः सार्थकैश्च तदन्तविधिर्भवतीत्युक्तं भवति। ततश्च सीमाऽतिमहिमेत्यादावपि प्रतिषेधः सिद्धो भवति।

## १२। अनो बहुव्रीहेः।

अनुपधालोपी बहुव्रीहिरिहोदाहरणमिति। कथं पुनरेतल्लभ्यते? यावता नात्र विशेष उपात्त इत्याह उपधालोपिनो हीत्यादि। यस्मादन उपधालो- पिनो (४।१।२८) ऽन्यतरस्यामित्युपधालोपिनो विकल्पं वक्ष्यति तस्मात् पारिशेष्यादनुपधालोपी बहुव्रीहिरस्यावकाश इति। तस्य चोदाहरणं सुपर्वेत्यादि। शोभन मस्याः पर्व्व शोभनं चर्म्मास्या इति बहुव्रीहिः। अयञ्च न संयोगादमन्तादित्यल्लोपी (६।४।१३७) न भवति। अतिराजीति। अत्यादयः क्रान्ताद्यर्थे द्वितीययेति (२।२।१८,वा) कुगतिप्रादय इति (२।२।१८) तत्पुरुषोऽयम्।

## १३। डाबुभाभ्यामन्यतरस्याम्।

इहान्यतरस्यांग्रहणस्य डापा मुक्ते पक्षे प्रतिषेधोऽपि यथा स्यादितेवमद्दा

प्रयोजनं स्यात् ? डाप्प्रतिषेधाभ्यां मुक्ते पक्षे ङीबपि यथा स्यादित्येतद्वा ? तत्राद्यं तावदयुक्तम् । डाबपि ह्युच्यते । प्रतिषेधोऽपि । तावुभावपि वचनसामर्थ्याद् भविष्यतः । द्वितीयमप्ययुक्तम् । अन्यतरस्यांग्रहणेन ह्यनुपधालोपिनो वा बहुव्रीहेः पक्षे ङीब् विधीयते ? उपधालोपिनो वा ? तत्र प्रथमस्तावत् पक्षो नोपपद्यते । यदि ह्यत्रानुपधालोपिनः पक्षे ङीब् विधीयेत प्रतिषेधवचनमनर्थकं स्यात् । द्वितीयोऽपि नोपपद्यते । अत्र उपधालोपिनोऽन्यतरस्यामिति (४।१।२८) प्रतिपदं विकल्पेन ङीपो विधास्यमानत्वात् । न च तदन्यतरस्यांग्रहणं न करिष्याम इतीहान्यतरस्यांग्रहणं कर्त्तुं युक्तम् । तत्रावश्यमेव कर्त्तव्यम् । उपधालोपिनो हि ङीपा मुक्ते डाप्प्रतिषेधौ यथा स्याताम् । बहुराज्ञ्यौ बहुराजानौ बहुराजे इति । इतरथा हि डाप्प्रतिषेधौ सुपर्वादिष्वनुपधालोपिषु सावकाशौ परत्वाद् ङीपा बाध्येयाताम् । तस्माद् वक्ष्यमाणमप्यन्यतरस्यांग्रहणं कर्त्तव्यमेवेति तत् सर्वं मनसि कृत्वाह अन्यतरस्यांग्रहणं किमर्थमिति ? निरर्थकमिति भावः । बहुव्रीहावित्यादि । वनो र चेत्यनेन (४।१।७) यत् कार्य्यं विधीयते तस्यापि बहुव्रीहौ विकल्पो यथा स्यादित्येवमर्थमन्यतरस्यांग्रहणम् । यद् यद् प्राप्तं तत् तद् विकल्पेन प्रत्युपस्थापयितव्यम् । ङीब्रेफावप्राप्तौ । अनो बहुव्रीहेरिति (४।१।१२) प्रतिषेधात् । तस्मात् तद्विधानार्थमन्यतरस्यांग्रहणं कर्त्तव्यम् । कथमन्यतरस्यामिति ? योगविभागोऽत्र क्रियते । तत्र बहुव्रीहिग्रहणमनुवर्त्तते । वनो र चेत्येतच्च (४।१।७) मण्डूकप्लुतिन्यायेन । तेन वन्नन्ताद् बहुव्रीहेरन्यतरस्यां ङीब् रेफश्चान्तादेशो लभ्यत इति बहुपीवा बहुधीवा बहुपीवरी बहुधीवरीत्यादि सिद्धम् भवति । अनेन त्वाहुः । उभाभ्यांग्रहणसहितादन्यतरस्यांग्रहणाद् वन्नन्ताद् बहुव्रीहेर्ङीब्रेफौ लभ्येते । उभाभ्यामिति नेयं पञ्चमी । किं तर्हि ? तृतीया । वन्नन्ते बहुव्रीहौ स्त्रीत्वमुभाभ्यां ङीब्रेफाभ्यां करणाभ्यां प्रयोक्त्रा प्रत्याययितव्यमिति । ननु च मन्नन्तात् प्रातिपदिकादन्नन्ताच्च बहुव्रीहेर्डाबुभाभ्यामित्येतदुभाभ्यांग्रहणस्य प्रयोजनम् । एवं मन्यते । स्वरितत्वादेवोभाभ्यामिति वचनमन्तरेणाप्युभाभ्यामेव प्रत्ययो लभ्यत एवेति ।

## १४। अनुपसर्जनात्।

इहानुपसर्जनादिति विधिर्वानिमोत्तरत्र क्रियते ? उपसर्जनादन्यस्मादनुपसर्जनाद् ङीबादयो भवन्तीति ? प्रतिषेधो वा ? उपसर्जनान्न भवतीति? तत्र यद्याद्यः पक्ष आश्रीयेत कुक्कुटीपाद इति न सिध्येत्। पूर्वपदस्योपसर्जनत्वात्। उपसर्जनत्वं त्वस्य षष्ठीति (२।२।८) समासशास्त्रे प्रथमानिर्देशात्। कुक्कुटीत्येतदपि न सिध्येत्। प्रधानं ह्यनुपसर्जनम्। नचात्र जातिः प्रधानम्। अप्रधानापेक्षया हि प्रधानं भवति। नचात्र किञ्चिदप्रधानमस्ति यदपेक्षया जातेः प्राधान्यं स्यात्। तस्माद् विधिपक्षोऽयं दुष्ट इति मत्वा प्रतिषेधपक्षमाश्रित्याह उत्तरसूत्रेषूपसर्जनप्रतिषेधं करोतीति। कुरुचरीति। कुरुषु चरतीति चरेष्ट इति ( ३।२।१६ ) टः। उपपदमतिङिति ( १।२।१९ ) तत्पुरुषसमास इत्यस्योत्तरपदप्रधानत्वादप्रथमानिर्दिष्टत्वाच्च समासशास्त्रे चरशब्द इहोपसर्जनं न भवतीति। बहुकुरुचरेति। बहवः कुरुचरा अस्यामिति। अस्यान्यपदार्थप्रधानत्वात् प्रथमानिर्दिष्टत्वाच्च शास्त्रे समासपदानामत्रावयव उपसर्जनम्। जाते ङीषिति। जातेरस्त्रीविषयादयोपधादित्यनेन ( ४।१।६३ )। बहुकुक्कुटेति बहुव्रीहिः। अत्रापि पूर्ववज्जातिशब्द उपसर्जनम्। ननु च बहुकुरुचरेत्यत्र समुदायः स्त्रियां वर्त्तते। नावयवः। न च समुदायष्टित्। किं तर्हि ? अवयवः। तत्र टित उच्यमान ईकारः केन पुनः समुदायादटितः स्यात् ? बहुकुक्कुटेत्यत्रापि समुदायः स्त्रियां वर्त्तते। नावयवः। नच समुदायो जातिवचनः। किं तर्हि ? अवयवः। तत्र जातिवाचिन उच्यमानः प्रत्ययः केनाजातिवाचिनः समुदायात् स्याद् यत्प्रतिषेधार्थमिदमुच्यत इति मन्यमान आह कथमित्यादि। तदन्तविधिनेति परिहारः। तत्रैतत् स्यात्। ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यत ( प, ३२ ) इत्यत आह ज्ञापितञ्चेत्यादि। शूद्रा चामहत्पूर्वा जाति (ग,सू ८९) रित्यत्र महत्पूर्वेत्यनेनास्मिन् प्रकरणे तदन्तविधिरिति ज्ञापितमेतत्। तथाचेति। एवं सतीत्यर्थः। यस्मात् पूर्वं तदन्तविधिरिह प्रकरणेऽस्तीति ज्ञापितमेतत्। अनेन च सूत्रेणोपसर्जनेन

तदन्तविधिः प्रतिषिध्यते । नानुपसर्जनेन । एवञ्च सति प्रधानेन तदन्तविधिर्भवत्येव । तेन कुम्भकारी नगरकारीति सिद्धं भवति । तत्र हि कारशब्दोऽणन्तः प्रधानम् । तदन्तात् समासाट् टिड्ढाणञितीकारः (४।१।१५) स्यादेव । ननु चाणित्यत्राणिति कृद्ग्रहणम् । ततश्च कृद्ग्रहणे गतिकारकपूर्वपदस्यापि ग्रहणं भवतीत्यनया (प,२८) परिभाषयैव कुम्भकारशब्दात् कारान्तादीकारः सिध्यति । ततो नेदं तदन्तविधिज्ञापनस्य प्रयोजनमित्यत आह नचेत्यादि । कथं नेत्याह तद्धितोऽप्यण्स्तीति । तस्याप्यत्र ग्रहणम् । अन्यथा ह्यौपगवीति न सिध्येत् । तस्मान्नेदं कृद्ग्रहणम् । किं तर्हि ? कृदकृद्ग्रहणम् । तत्र यदि तदन्तविधि र्न ज्ञाप्यते तदाणिति प्रत्ययग्रहणम् । प्रत्ययग्रहणे यस्मात् स विहित स्तदादेस्तदन्तस्य च ग्रहणं भवतीतीहैव ( प, २४ ) स्यादौपगवीति । इह तु न स्यात् कुम्भकारीति । अत्र हि धातोरण् विहितः । तदन्तश्च स्त्रियां न वर्त्तते । तावन्मात्रस्य कारशब्दस्य प्रयोगाभावात् । या वा स्त्रियां वर्त्तते सोपपदम् । न तस्मात् प्रत्ययो विहितः । तदन्तविधौ तु ज्ञापिते कारशब्दान्तादपीकारः सिध्यति ।

## १५ । टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपख्युनाम् । (F)

सर्व्वत्रेति । स्त्रीप्रकरणे । ननु च पत्युर्नो यज्ञसंयोग (४।१।३३) इतो मनुष्यजातेरित्यादौ (४।१।६५) नानुवर्त्तते । तस्यात इत्यस्यासम्भवाद् विशेषणं नोपपद्यत इत्याह तत् सतीत्यादि । यत्र सम्भवति तत्र विशेषणम् भवति । यत्र तु न सम्भवति तत्रोत्तरार्थमेवानुवर्त्तते । इह कस्मान्न भवति पचमानेति ? स्थानिवद्भावेन शानचष्टित्त्वमस्ति । अत स्तदन्तादपि ङीपा भवितव्यमित्यभिप्रायः । ह्रस्वानुबन्धकत्वान्नेट इति । तेनैकानुबन्धग्रहणे न द्व्यनुबन्धक-

---

(F) टिड्ढेत्यारभ्य कञ्क्वरप इत्यन्त एवार्षः पाठः । अङ्गानामपि पारायणे धर्म इति तु सौगतानां न नियामकम् । वेदबाह्यत्वेन तेषां निरङ्कुशत्वात् । यथा हि पारायणभङ्गे न धर्महाने भंय मेवञ्च पाठस्यार्षत्वं सम्प्रदायानुगतत्वाद्यपि तेषां न गणनीयमिति काशिकायां बहुल वार्त्तिकप्रक्षेपादिना सूत्राणामन्यथाकरणमिति बोद्धव्यम् । अत्र हरदत्तः—"भाष्ये तु कञ् क्वरप इत्येतावद् सूत्रम् । ख्युनः पाठोऽनार्ष इति तस्याप्युपसंख्यानमेव कृतम् ।"—

स्येत्येतया परिभाषया लटोऽत्र ग्रहणं नास्तीति दर्शयति। तस्य ह्यकारो द्वितीयोऽनुबन्धोऽस्ति। लुग्रड़ादिषु कथमिति ? ईकारो भवतीति शेषः। आदिशब्देन गापोष्टगित्येवमादयो (३।२।८) गृह्यन्ते। लुग्रड़ादीनामपि द्व्यनुबन्धकत्वात् टिद्ग्रहणेन न भवितव्यम्। अत स्तदन्तेभ्यो ङीम् न स्यात्। ततश्च करणी सामगीत्यादि न सिध्येत्। टित्करणसामर्थ्यादिति। यदि तेषामपि टिद्ग्रहणेन ग्रहणं न स्यात् टित्करण मनर्थकं स्यात्। प्रयोजनान्तरासम्भवात्। तस्मात् सत्यपि द्व्यनुबन्धकत्वे टित्करणसामर्थ्याल् ल्युड़ादयो गृह्यन्त इत्यदोषः। लटोऽपि तर्हि टित्करणसामर्थ्यादेव ग्रहणेन भवितव्यमित्यत आह इतरत्रेत्यादि। लटि हि टित्करणस्य टित आत्मनेपदानां टेर इति (३।४।७९) टेरेत्वं फलम्। अतो यद्यपि तस्येदं ग्रहणं न भवति तथापि नैव टित्करणस्य वैयर्थ्यं प्रसज्येत। तस्मात् टित्करणस्य चरितार्थत्वादयुक्तं तस्येदं ग्रहणम्। पठिता विद्येति। अत्रापि कथमिति सम्बध्यते। इड़ागमस्य हि प्रत्ययभक्तत्वात् प्रत्ययस्य टित्त्वमस्ति। ततश्च ङीपा भवितव्यम्। तत् कथं पठितेत्येतद् रूपं भवतीति ? आगम-टित्त्वमनिमित्तमिति। प्रकृतत्वान् ङीपइति विज्ञायते। कथं ज्ञायते ऽय मनिमित्तमित्याह टयुटयुलावित्यादि। तुड् वेत्यागमटित्त्वेनैव सिद्धे ङीपि सायंचिरंप्राह्णे इत्यादिसूत्रे (३।४।७९) टयुटयुलाविति पुनः प्रत्यययोष्टित्करणं ज्ञापकमागमटित्त्वमनिमित्तं ङीप इति। सौपर्णेयी। वैनतेयीति। सुपर्णीशब्दाज्जातिलक्षणङीषन्ताद् विनताशब्दाच्च टाबन्तात् स्त्रीभ्यो ढगिति (४।१।१२०) ढक्। आयनादिसूत्रेणैयादेशः (७।१।२)। ननुच निरनुबन्धकग्रहणे न सानुबन्धकस्येति (प,८२) ढको ग्रहणेन न भवितव्यमित्यत आह निरनु-बन्धको ढशब्द इत्यादि। ननु चायं निरनुबन्धकोऽस्ति शिलाया ढ इति (५।३।१०२)। नैतदस्ति। स्वभावत एव ह्ययं नपुंसके वर्त्तते। अयं तर्ह्यस्ति स्वाभाव्यात्। सभाया ढश्छन्दसीति (४।४।१०६)। अयमपि नैव स्त्रियां वर्त्तते। छन्दसि सभेयीशब्दस्य प्रयोगादर्शनात्। तस्मान् निरनु-बन्धको ढशब्दः स्त्रियां नास्तीति नेह निरनुबन्धपरिभाषोपतिष्ठते। अन्य-थाहि ढग्रहण मनर्थकं स्यात्। षेऽपीति। अपि यत् कार्य्यं कृतं तण् षेऽपि

क्वचिदिति वचनात् क्वचिन्न भवतीत्युक्तं भवति । क्व पुन णेऽप्यणकृतं कार्य्यं भवतीति ? ताच्छीलिके । तथाहि कार्मस्ताच्छील्य इत्यत्र (६।४।१७२) ज्ञापितमेतण् णेऽप्यणकृतं कार्य्यं भवतीति । कथम् ? कार्मशब्दो हि ताच्छील्ये टिलोपार्थं निपात्यते । यदि च णेऽप्यणकृतं कार्य्यं न स्यान् निपातनमनर्थकं स्यात् । कर्मशब्दात् कर्म शीलमस्येति छत्रादिभ्यो ण इति (४।४।६२) णे कृते न स्तद्धिते (६।४।१४४) इत्येवं टिलोपस्य सिद्धत्वात् । अणिति (६।४।१६७) प्रकृतिभावान्न सिध्यतीति चेत् ? नैतदस्ति । अणि हि प्रकृतिभाव उच्यते । तत्रेनण्यनपत्य (६।४।१६४) इत्यतोऽणीत्यनुवर्त्तते । तदेवं ताच्छीलिके णेऽप्यणि कृतं कार्य्यं भवतीत्यस्यार्थस्य ज्ञापितत्वात् तत्रैवाणकृतं कार्य्यं भवति । नान्यत्र । चौरी तापसीति । चुरा शीलमस्यास्तपः शीलमस्या इति छत्रादिभ्यो ण इति (४।४।६२) णेऽप्यणकृतं भवतीति ङीप् । दाण्डा मौष्टा इति । दण्डः प्रहरणमस्यां मुष्टिः प्रहरणमस्यां क्रीड़ायामिति तदस्यां प्रहरणमिति (४।२।५७) क्रीड़ायां णः । अथाणित्यकारादारभ्य लणो णकारात् प्रत्याहारग्रहणं कस्मान्न भवति ? टिदादीनां पुनर्ग्रहणात् । प्रत्याहारग्रहणे हि तेषां ग्रहणमनर्थकं स्यात् । अणन्तादेव सिद्धत्वात् । औत्सी । औदपानीति । उत्सस्योदपानस्येयमित्युत्सादिभ्योऽञित्यञ् (४।१।८६) । अथ शार्ङ्गरवाद्यञो ङीनित्यत्र (४।१।७३) पुनरञ्ग्रहणं किमर्थं क्रियते ? यावतानेनैव सिद्धम् । तदेव हि रूपं स एव हि स्वरः । तथाहि ङीनि सति ञ्नित्यादिर्नित्य (६।१।१९७) मित्याद्युदात्तं भवति । औत्सीत्यत्राप्युत्सशब्दादञन्तात् ञित्स्वरेणाद्युदात्ताद् ङीपि कृते तदेवाद्युदात्तत्वं भवतीत्याह शार्ङ्गरवाद्यञ इत्यादि । विदस्यापत्यं गोत्रं स्त्रीत्यनृष्यानन्तर्य्ये विदादिभ्योऽञित्यञि कृते (४।१।१०४) तस्य गोत्रञ्च चरणैः सहेति (४।१।६३, भा) जातित्वाज्जातेरस्त्रीविषयादयोपधादिति (४।१।६३) ङीष् प्राप्नोति । तद्बाधनार्थं पुनः शार्ङ्गरवाद्यञो ङीनित्यत्राञो (४।१।७३) ग्रहणं क्रियते । यद्येवमिहाञ्ग्रहणं न कर्त्तव्यम् । तेनैवौत्सीत्यादेरपि सिद्धत्वात् । नैतदस्ति । जातिग्रहणं तत्रेतो मनुष्यजातेरित्यतोऽ (४।१।६५) नुवर्त्तते । पुंयोगादाख्यायामिति (४।१।४८) ङीषो

बाधा मा भूदित्येवमर्थम् । विदस्यापत्यमितरगृष्यानन्तर्य्ये इत्यादिनाऽञ् (४।१।१०४) वैदः । तस्य भार्य्या वैदीति । तस्य पुंयोगे ङीषेवेष्यते । तस्मात् तत्र जातिग्रहणमनुवर्त्तनीयम् । तस्मिंश्चानुवर्त्तमान ष्णोत्सीत्य-त्रोत्सस्येयमित्यर्थविवक्षायामञि कृतेऽजातित्वादीकारस्तत्र न प्राप्नोति । तस्मादिहाप्यञ्ग्रहणं कर्त्तव्यमेव । द्वयसजादीनामनुबन्धोच्चारणं प्रत्ययपरि-ग्रहार्थम् । प्रातिपदिकान्यपि द्वयसजादीनि सन्ति । तत्रासत्यनुबन्धोच्चारणे तेषामपि ग्रहणं विज्ञायेत । तयशब्दोऽप्यय वय तय नय गताविति तयो धातोरजन्तं प्रातिपदिकं सम्भवति । अतस्तन्निवृत्त्यर्थं पकारोच्चारणम् । ऊरुद्वयसीत्यादि । ऊरुप्रमाणमस्या जानुप्रमाणमस्या इति प्रमाणे द्वयसज्-दघ्नञ्मात्रच इति (५।२।३७) द्वयसजादयः प्रत्ययाः । पञ्चतयीति । पञ्चावयवा अस्या इति संख्याया अवयवे तयप् (५।२।४२) । आक्षिकी शालाकिकीति । अक्षैर्दीव्यति शलाकाभिर्दीव्यतीति तेन दीव्यति खनती-त्यादिना (४।४।२) ठक् । ठस्येकादेशः । लावणिकीति । लवणं पण्यमस्या इति लवणाट्ठञ् (४।४।५२) । अथ किमर्थं ठक्ठञोर्भेदेनोपादानम् ? न विशेषकराननुबन्धानुत्सृज्य ठ इति सामान्येनैव ग्रहणं क्रियेतेत्यत आह भेदेने-त्यादि । ठ इति सामान्येन ग्रहणे सति ठनादीनामपि ग्रहणं स्यात् । अतस्तन्निवृत्त्यै भेदेन ग्रहणम् । आदिशब्दो ञिठादीनां परिग्रहाय । तेन दण्डोऽस्यास्तीत्यत इनिठनाविति (५।१।११५) ठनि कृते दण्डिकीति न भवति । काशीषु भवेति काश्यादिभ्य ष्ठञ्ञिठाविति (४।२।११६) ञिठे प्रत्यये कृते काशिकीति न भवति । कञोऽनुबन्धकरणमातो-ऽनुपसर्गे क (३।२।३) इत्येवमादीनां निवृत्त्यर्थम् । यादृशी तादृशीति । त्यदादिषु दृशेरनालोचने कञ्चेति (३।२।६०) कञ् । आ सर्वनाम्न इति (६।३।९१) यत्तदोरात्वम् । क्वरपोऽनुबन्धोच्चारणं स्थेशभासेत्यादिना (३।२।१७५) विहितस्य वरचो निवृत्त्यर्थम् । यद्येवमेक एवानुबन्ध उच्चारणीयः । एके-नापि वरचो निवृत्तिः सिध्यत्येव । सत्यमेतत् । तथापि मन्दबुद्धीनां सुख-प्रतिपत्तयेऽनुबन्धद्वयोच्चारणम् । इत्वरी नश्वरीति । इण्नश्जिसर्त्तिभ्यः क्वरप् (३।२।१६३) । ह्रस्वस्य तुक् । ख्युनोऽनुबन्धोच्चारणं लाघवार्थम् ।

अन्यथा हि षष्ठीबहुवचने कृते नुटि नामि दीर्घत्वे च गुरूच्चारणं स्यात् । आढ्यङ्करणीति । अनाढ्य आढ्यः क्रियतेऽनयेत्याढ्यसुभगेत्यादिना (३।२।५६) ख्युन् । अरुर्द्विषदजन्तस्य मुम् (६।३।६७) । नञ्स्नञीकक् इत्यादि । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः । तेन नञादिभ्योऽपि भविष्यतीति । स्त्रैणी पौंस्नीति । स्त्रिया इयम् पुंस इयमिति स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति (४।१।८७) नञ्स्नञौ । शाक्तीकी याष्टिकीति । शक्तिः प्रहरणमस्या इति यष्टिः प्रहरणमस्या इति शक्तियष्ट्योरीकक् (४।४।५९) । तरुणी तलुनीति । अत्र वयो न विवक्षितम् । तरुणी सुरा तलुनी सुरेति । अत्र सुरादौ विषये तरुणतलुनशब्दाभ्यां ङीब् वेदितव्यः । नहि सुरादीनां वयोऽस्ति । तस्य प्राणिधर्मत्वात् । अभिनवत्वमात्रं सुरादीनां तरुणतलुनशब्दाभ्यां गम्यते । यदा तु वयो विवक्ष्यते तदा गौरादिपाठान् ङीषा भवितव्यम् । तत्र स्वरे विशेषः । तरुणतलुनशब्दौ हि कॄवृदारिभ्य उनन् ( उण्, ३।१४३ ) तो रश्च लो वेत्युननप्रत्ययान्तौ ( उण्, ३।३४ ) व्युत्पादितौ । अतो नित्स्वरेणाद्युदात्तौ । तत्र ङीपि सत्याद्युदात्तत्वं भवति । ङीषि तु सति प्रत्ययस्वरेणान्तोदात्तत्वम् ।

## १६ । यञश्च ।

गार्गी । वात्सीति । गर्गवत्सशब्दाभ्यां स्त्रियामपत्ये गर्गादिभ्यो यञिति ( ४।१।१०५ ) यञ् । ङीप् । यस्येति चेत्यकारस्य ( ६।४।१४८ ) लोपः । हलस्तद्धितस्येति ( ६।४।१४० ) यकारस्य च । अपत्यग्रहणं कर्त्तव्यमिति । अपत्यं गृह्यते येन तदपत्यग्रहणम् । व्याख्यानमेतदुक्तं भवति । तथा व्याख्यानं कर्त्तव्यं यथा यञो विशेषणमपत्यं गृह्यते । तत्रेदं व्याख्यानम् । उत्तरसूत्रे विकल्पार्थं प्राचामिति वचनमनेनापि योगेन सम्बध्यते । व्यवस्थितविभाषा च सा विज्ञायते । तेनापत्येऽर्थे यो यञ् विहित स्तदन्तान्नित्यं भवति । यस्तु द्वीपशब्दाज्जातादावर्थे विहितस्तदन्तान् न भवतीति । अथ योगविभागः किमर्थः ? न पूर्वसूत्र एव यञ्ग्रहणं क्रियेतेत्यत

आह योगविभाग उत्तरार्थं इति। उत्तरसूत्रे यञन्तादेव ष्फो यथा स्यात्। टिदादिभ्यो मा भूदिति।

## १७। प्राचां ष्फस्तद्धितः (G)।

षकारो ङीषर्थं इति। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष् यथा स्यात्। ननु च क्रियमाणेऽपि षकारे नैव ङीषा भवितव्यम्। ष्फप्रत्ययेनैव स्त्रीत्वस्याभिव्यक्तत्वादित्यत आह प्रत्ययद्वयेनेत्यादि। नहि केवलः ष्फः स्त्रीत्वमभिव्यङ्क्तुं समर्थ इति ङीषमपेक्षते। तेन सहिताभ्यामेव ताभ्यां स्त्रीत्वं व्यज्यत इति ङीषा भवितव्यम्। तद्धितग्रहणमित्यादि। कृत्तद्धितसमासाश्चेति (१।२।४६) प्रातिपदिकसंज्ञा यथा स्यादित्येवमर्थं तद्धितग्रहणम्। प्रातिपादिकसंज्ञा तु ङीष् यथा स्यादित्येवमर्थम्। ननु च विनापि तया षित्करणसामर्थ्यादेव ङीष् भविष्यति। अन्यथा हि षित्करणमनर्थकं स्यात्। प्रयोजनान्तराभावात्। न च त्रपूष् लज्जायामित्यतोऽपि धातोः स्यादित्यतिप्रसङ्ग आशङ्कनीयः। धातोः षित्करणस्य षिद्भिदादिभ्योऽङितयङ्-(३।३।१०४) विधौ चरितार्थत्वात्। अत इति चाधिकारात्। सत्यमेतत्। प्रतिपत्तिगौरवं तु स्यात्। तस्मात् सुखप्रतिपत्तये तद्धितग्रहणम्। सर्वत्रग्रहणमित्यादि। उत्तरसूत्रे सर्वत्रग्रहणमनर्थकम्। तद्धि सर्वेषामाचार्य्याणां मतेन यथा स्यादित्येवमर्थं क्रियते। एतच्चाप्रयोजनम्। अस्वरितत्वादेव हि प्राग्ग्रहणस्य सर्वेषां मतेन भवितव्यमिति। तस्मादुत्तरसूत्रे सर्व्वत्र ग्रहणमनर्थकम्। अतस्तदिहानुकृष्यते। किमर्थमित्याह बाधकबाधनार्थमिति। आवट्याच्चापं वक्ष्यतीत्यादिना बाधकबाधनार्थमित्यस्यैवार्थं विस्पष्टीकरोति। आवट्याच्चापोऽवकाश उदीचां मतेनावट्येति। अवटशब्दाद् गर्गादियञन्ताच्चाप्। प्राचां ष्फस्तद्धित इत्यस्यावकाशो गार्ग्यायणीति। आवट्यात् प्राचामुभयप्रसङ्गे परत्वाच् चाप् स्यात्। सर्वत्रग्रहणात् ष्फ एव भविष्यति। आवट्यायनीति।

## १८। सर्व्वत्र लोहितादिकतन्तेभ्यः।

स्वतन्त्रमिति। यो ह्यन्यस्यावयवभूतो न भवति केवलः कतशब्द

---

(G) प्राचां ष्फ तद्धित इति च बहुत्र पाठः।

स्तत् स्वतन्त्रं प्रातिपदिकम्। यस्तु कुरुकतशब्दस्यावयवः कतशब्दस्तस्य स्वातन्त्र्यं नास्ति। समुदायप्रतिबद्धत्वात्। कः पुनरसौ कतशब्दः स्वतन्त्रं प्रातिपदिकमित्यत आह कपिशब्दादित्यादि। लौहित्यायनी शांसित्यायनीति। लोहितशंसितशब्दाभ्यां गर्गादित्वाद् यञ्। बाभ्रव्यायणीति। अत्रापि बभ्रुशब्दात् मधुबभ्र्वोर्ब्राह्मणकौशिकयोरिति (४।१।१०६) यञ्। ओर्गुणः (६।४।१४६)। वान्तो यि प्रत्यय (६।१।७९) इति वान्तादेशः। यञन्तेभ्यः ष्फः। कण्वात्त्वित्यादि। कण्वशब्दात् पूर्वः शकलशब्द इष्यते। कतशब्दात् तूत्तरः। किमेवं सति भवतीत्याह पूर्वोत्तरावित्यादि। एवं सति पूर्वोत्तरौ गणौ तदन्तादी भवतः। तच्छब्देन शकलशब्दः प्रत्यवमृश्यते। शकलशब्दोऽन्त आदिश्च यथाक्रमं ययोः पूर्वोत्तरयोर्गणयोस्तौ तदन्तादी पूर्वोत्तरगणौ। लोहितादिः शकलशब्दान्तो भवति पूर्वो गणः। उत्तरो गणः कण्वादिः शकलशब्दादि र्भवति। किं पुनः पूर्वोत्तरयोर्गणयो स्तदन्तादित्वे प्रयोजन मित्याह ष्फाणौ तत्र प्रयोजनमिति। पूर्वस्य गणस्य शकलान्तत्वे ष्फः प्रयोजनम्। उत्तरस्य शकलादित्वेऽण् प्रयोजनम्। प्रातिपदिकेष्वन्यथा पाठ इति। कपि। कत। कुरुकत। अनडुह्। कण्व। शकल इत्यनयानुपूर्व्या प्रातिपदिकेषु पाठः। स एवं व्यवस्थापयितव्य इति। कण्वात्तु शकलः पूर्व्व इत्यादिना यानुपूर्वी दर्शिता तया व्यवस्थापयितव्यः। अत एतदुक्तं भवति। कुरुकत। अनडुह् इत्येतावन्यस्मिन् स्थाने पठितव्यौ। शकल-शब्दस्तु कतकण्वशब्दयोर्मध्ये पठितव्यः। मन्यत इति। श्लोकवार्त्तिककारः। कथं पुनरेवंपाठे सति शकलशब्दात् ष्फाणौ सिध्यत इत्यत आह कतन्तेभ्य इत्यादि। कतस्यान्तः कतन्त इति तत्पुरुषः। कतन्तेभ्य इति निपातनात् पररूपत्वम्। कतशब्दोऽन्ते येषां लोहितादीनां ते कतन्ता इति बहुव्रीहिः। कतन्तश्च शकलशब्दः कतन्ताश्च लोहितादय इति कतन्तश्च कतन्ताश्चेति सरूपाणामेकशेषः। तथेत्यादिना यथा कतन्तेभ्य इत्यत्र बहुव्रीहि-तत्पुरुषयोरेकशेष स्तथा कण्वादिभ्य इत्यत्रापीति दर्शयति। कण्वस्यादिः कण्वादिः शकलशब्दः। कण्वशब्द आदिर्येषां गोकक्षादीनां ते कण्वादयः। कण्वादिश्च कण्वादयश्च कण्वादयः। पूर्ववदेकशेषः। तत्पुरुषवृत्त्या संगृहीत

इति । कतन्तेभ्य इत्यत्र कण्वादिभ्य इत्यत्र तत्पुरुषवृत्त्येति । तत्पुरुषसमासेन । मध्यपातीति । कतकण्वशब्दयो र्गणयो र्वा । प्रत्ययद्वयमिति । ष्फप्रत्ययमण् प्रत्ययञ्च । प्रतिपद्यत इति । प्राप्नोति । तत्पुरुषवृत्त्या हि तस्य संग्रहे सत्यस्य सूत्रस्यायमर्थो जायते । कतन्ताच्छकलशब्दात् तथा यञन्तात् कतन्तेभ्यश्च लोहितादिभ्यो यञन्तेभ्यः स्त्रियां ष्फप्रत्ययो भवतीति । तेन ष्फप्रत्ययं प्रतिपद्यते शकलशब्दः । शाकल्यायनीति । कण्वादिभ्यो गोत्र इत्यत्रापि (४।२।१११) तत्पुरुषवृत्त्या शकलशब्दस्य संग्रहे सत्ययमर्थो भवति । कण्वादेः शकलशब्दान्ताद् गोत्रप्रत्ययान्तात् कण्वादिभ्यो गोकच्च न्तेभ्यो गोत्रप्रत्ययान्तेभ्यः शैषिकेष्वर्थेष्वण्प्रत्ययो भवतीति । तेनाण्प्रत्ययमपि शकलशब्दः प्रतिपद्यते । शाकल्यस्येमेच्छात्राः शाकला इति ।

## १९ । कौरव्यमाण्डूकाभ्याञ्च ।

कथं कौरवीति ? कौरव्यशब्दादेवात्र ङीब् विहित इति मन्यमानस्य प्रश्नः । कुरुशब्दादेवात्राण्णन्ताद् ङीब् विहित इति दर्शयन्नाह तस्येदमित्यादि । कौरव्यमाण्डूकयोरित्यादि । कौरव्यमाण्डूकयोरनेन सूत्रेण यत् कार्यं विधीयते तस्यासुरेरप्युपसंख्यानम् प्रतिपादनं कर्त्तव्यम् । आसुरेरपि ष्फः प्रतिपादयितव्य इति यावत् । तत्रेदं प्रतिपादनम् । चकारोऽत्र क्रियते । स चानुक्तसमुच्चयार्थः । तेनासुरिशब्दादपि ष्फो भविष्यतीति । आसुरायणीति । असुरस्यापत्यमित्यत्र इञ् (४।१।९५) । तदन्तात् ष्फः । इञश्चे—(४।१।११२) त्यणि प्राप्त इति । तत्र प्रस्थोत्तरपदपलद्यादिकोपधादणित्यतोऽण्ग्रहणानुवृत्तेः (४।२।११०) । छप्रत्यय इष्यत इति । कथं स लभ्यते ? न द्व्यचः प्राच्य-भरतेष्वित्यत्र (४।२।११३) नेति योगविभागः कर्त्तव्यः । तेनासुरिशब्दादणि प्रतिषिद्धे वृद्धाच्छ (४।२।११४) इतिच्छ एव भविष्यति । आसुरिणा प्रोक्त आसुरीयः कल्प इति ।

## २० । वयसि प्रथमे ।

यौवनादिरिति । आदिशब्दो वृद्धत्वाद्युपसंग्रहार्थ इति । सुतरां वर्त्तत इति । यत् प्रातिपदिकं श्रवणमात्रेणैव प्रकरणाद्यनपेक्षं प्रथमं वयः

प्रत्याययति तदत्र श्रुत्या वर्त्तते । कुमारीति । ननु च नायं कुमारीशब्दः प्रथमे वयसि वर्त्तते । क्व तर्हि पुंयोगाभावे । तथाहि वृद्धायामपि हि प्रयुज्यते वृद्धा कुमारीति । नैतदस्ति । कुमारीशब्दो हि प्रथम एव वयसि रूढ़ः । यस्तु वृद्धायामपि तस्य प्रयोगस्तत्र कुमारीसाधर्म्यात् । न तु पुंयोगाभावात् । भवति हि ताद्धर्म्यात् ताच्छब्द्यं यथा गौर्वाहीक इति । वयस्यचरम इति । अचरमेऽनन्त्ये वयसि ङीब् भवतीत्येतदर्थरूपमस्य सूत्रस्य व्याख्यानमित्यर्थः । तत्रेदं व्याख्यानम् । प्रथमवयोग्रहणमिहाचरमस्य वयस उपलक्षणम् । तेनान्त्यत्वाप्यचरमे वयसि ङीब् भवतीति । किं पुनः कारणं प्रथम एव वयसि गृह्यमाणे न सिध्यति ? येनैवं सूत्रार्थो व्याख्येय इत्याह । द्वितीयवयोवचनावितावित्यादि । इह केचिच्चत्वारि वयांसीच्छन्ति । कौमारयौवनमध्यत्ववृद्धत्वानि ।

तथाचाहुः—

प्रथमे वयसि नाधीतं द्वितीयेनार्जितं धनम् ।
तृतीये न तपस्तप्तं (H) चतुर्थे किं करिष्यति ॥ १ ॥ इति ।

अन्ये त्रीणीच्छन्ति । कौमारयौवनस्थाविराणि । तथाचाहुः—

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्त्रस्तु स्थाविरे भावे (I) न स्त्री स्वातन्त्र्यमर्हति ॥ १ ॥ इति ।

केचिद्बाल्यमध्यत्ववृद्धत्वानीति त्रीणीच्छन्ति । तथाचाहुः—

आ षोड़शाद् भवेद् बालो यावत् क्षीरान्नवर्त्तकः ।
मध्यमः सप्तति यावत् परतो वृद्ध उच्यते ॥ १ ॥ इति ।

एतेषु सर्वेषु यौवनं द्वितीयं वयो भवति । ननु प्रथमवयोवचने तु वधूटीचिरण्टीशब्दावित्यतो न प्राप्नोति । तस्मादचरमस्य वयस इहोपलक्षणं प्रथमं वय इति व्याख्येयमिति केचित् । यस्तु मन्यते केचित्तु द्वे एव वयसी इच्छन्तीति । यावत्यो वृद्धिमत्योऽवस्था स्ताः सर्वा राशीकृत्य प्रथमं वयो व्यवस्थाप्यते । यास्त्वपचयवत्योऽवस्था स्ताः सर्वा राशीकृत्य द्वितीयं वयः । तथाचोक्तम्—वर्द्धते यावदङ्गेन तावद् वर्द्धितव्यं पश्चादपायेन योक्ष्यत इतीयतदेव

---

(H) तृतीये नार्जितं पुण्यमिति वङ्गीयपुस्तके पाठः ।

(I) स्थविरीभाव इति च क्वचित् पाठान्तरम् ।

दर्शनमाश्रित्यैतत् सूत्रं प्रणीतमिति। तेन बधूटीचिरण्टीत्यत्रापि ङीब् भवतीति तेन द्वितीयवयोवचनावेतौ प्राप्तयौवना स्त्र्यभिधीयत इत्यस्य ग्रन्थस्याविरोधाय यतितव्यम्। नह्यस्मिन्दर्शने यौवनं द्वितीये वयस्यन्तर्भवति। यौवनावस्थाया वृद्धिमतीत्वात्। अथ कथमुत्तानशया लोहितपादिकेति? यावता बाल्यमत्र गम्यते। बालैव ह्युत्तानशया लोहितपादिका भवति। तस्माद् भवितव्यमेव ङीपेत्यत आह नैता वयःश्रुतय इति। नैते वयोवचनाः शब्दा इत्यर्थः। इह तावदुत्तानशयेति प्रातिपदिकश्रवणमात्रेण क्रिया-कारकसम्बन्धमात्रं प्रतीयते उत्ताना शेत इत्युत्तानशया। हरतेरनुद्यमने-ऽजित्यतोऽ (३।२।९) ज्ग्रहणेऽनुवर्त्तमाने ऽधिकरणे शेतेरि-(३।२।१५) त्यत्रो-त्तानादिषु कर्त्तृष्वितुपसंख्यानादच्। स्त्रियाः पुंवदिति (६।३।३४) पुंवद्भावः। सर्वैवोत्ताना शेते। उच्यते चेदमुत्तानशयेति। तत्र नियमो गम्यते। अन्यथा शयितुमसामर्थ्यादुत्तानैव या शेते सोत्तानशयेति गम्यते। अवगतेऽप्यस्मिन्नियमे सन्देह एव किमसौ बाला वृद्धा वेति। वृद्धापि हि कदाचिदन्यथा शयितुम-शक्ता स्यात्। उत्तानैव च शेते। तस्माद् यदोत्तानैव शेत इति नियम-प्रतीतिर्भवति वृद्धत्वाभावश्च कुतश्चित् प्रकरणादेरवसितो भवति तदा बाल्यं गम्यते। लोहितपादिकेति। अत्रापि लोहितौ पादावस्या इत्यन्यपदार्थमात्रं तावत् तच्छब्दात् प्रतीयते। यदा तु प्रकरणादिना स्वभावत एवास्या रक्तौ पादौ नालक्तकरसादिनेति प्रतीतिर्भवति तदा बालेति गम्यते। इतिशब्दः प्रकारार्थः। एवंप्रकारा नैता वयःश्रुतय इत्यर्थः। कथं बाला वत्सेति। अजादित्वाट्टाब् भविष्यति। ननु वचनसामर्थ्यादनेन ङीबपि प्राप्नोति। नैतदस्ति। तस्यान्यत्र कुमारी किशोरीत्यादौ चरितार्थत्वात्।

## २१। द्विगोः।

पञ्चपूलीति। पञ्चानां पूलानां समाहार इति। तद्धितार्थोत्तरपद-समाहारे चेति (२।१।५१) समाहारद्विगुः। अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति (२।४।३०, वा) स्त्रीलिङ्गता। त्रिफलेति। त्रयाणां फलानां समाहार इति। पूर्ववद् द्विगुः।

## २२ । अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि ।

तद्धितलुकि सतीति । एतेन तद्धितलुकोत्येषा विषयसप्तमीति दर्शयति । परसप्तमोत्येषा नोपपद्यते । लुकोऽभावरूपत्वात् । अभावे च पौर्वापर्य्याभावात् । सर्वतो मानं परिमाणमिति परिशब्दः सर्वतो भावे । सर्वत आरोहतः परिणाहतश्च मीयते परिच्छिद्यते येन तत्परिमाणं प्रस्थादिः । पञ्चाश्वेति । तद्धितार्थे द्विगुः । तेन क्रीतमित्यार्हीयष्ठक् (५।१।३७) । अध्यर्धपूर्वाद् द्विगोर्लुक् (५।१।२८) । कालः संख्या च न परिमाणमिति । नहि ताभ्यामारोहतः परिणाहतश्च मीयते । ज्ञापकाच्च न तयोः परिमाणत्वमवसीयते । यदयं परिमाणान्तस्यासंज्ञाशाणयोरिति (७।३।१७) सिद्धायामुत्तरपदवृद्धौ संख्यायाः संवत्सरसंख्यस्य (७।३।१५) चेति संख्यासंवत्सरग्रहणं करोति तज् ज्ञापयति कालः संख्या च न परिमाणं भवतीति । विस्तादि च परिमाणविशेष एव गृहीतव्यः । अतो वृत्तिग्रन्थः परिमाणार्थं ग्रहणमिति । काण्डस्य वा परिमाणत्वे तूत्तरसूत्रेण नियमार्थता न विरुध्यते । यद्येवं कालाः परिमाणिनेत्यत्र ( २।२।५ ) सामर्थ्यात् परिमाणवचनाः कालशब्दाः समस्यन्त इति यदुक्तं तद्विरुध्यते । नास्ति विरोधः । उपचारेण तथान्यत्र परिमाणिवाचिना सुबन्तेनाभिधानात् । इह हि मुख्यं कालस्य परिमाणत्वं निषिध्यते । तत्र त्वौपचारिकं कालस्य परिमाणत्वमाश्रित्य परिमाणवचनाः कालशब्दा इत्युक्तं कालाः परिमाणिनेति ब्रुवता । परिमाणवचनत्वं कालशब्दानामुपयुक्तं भवति । नहि तेन विना परिमाणापेक्षयोत्तरपदस्य परिमाणिव्यपदेश उपपद्यते । न च कालस्य मुख्यं परिमाणत्वमस्ति । अतः सामर्थ्यादौपचारिकं परिमाणत्वमाश्रितमिति गम्यते । उपचारस्य हेतुः परिच्छेदस्य हेतुत्वमात्रम् परिमाणस्य साधर्म्यम् । कालो हि मासादि जातादिसम्बन्धिनीमादित्यगतिं गमयतीति भवति परिच्छेदस्य हेतुः । अतः परिमाणसाधर्म्यादुपपद्यते तत्र च परिमाणोपचारः । द्विवर्षा । त्रिवर्षेति । द्वे वर्षे भूतेति तमधीष्टो भृतो भूतो भावीत्यनेन ( ५।१।८० ) विहितस्य ठको वर्षाल्लुगिति ( ५।१।८८ ) लुक् पाक्षिकः । चित्तवत्त्वे तु प्रत्ययार्थस्य विवक्षिते

विस्तवति नित्यमिति ( ५।१।८८ ) नित्यमेव लुक्। द्वे वर्षे प्रमाणमस्या इति प्रमाणे लो द्विगोर्नित्यमिति ( ५।२।३७, वा ) नित्यमेव लुक्। द्विशता। त्रिशतेति। द्वाभ्यां शताभ्यां क्रीतेति पणपादमाषशताद् यदिति ( ५।१।३४ ) यति प्राप्ते शाणाद्वेत्यत्रोपसंख्यानं ( ५।१।३५ ) शताच्चेति वक्तव्यमिति। तेन शतशब्दात् पक्षे संख्याया अतिशदन्तायाः कन्निति ( ५।१।२२ ) कन्। तस्य पूर्ववल्लुक्। द्विविस्तेति। द्वौ विस्तौ पचति। सम्भवत्यवहरति पचतीत्यनेनार्हीयष्ठक् ( ५।१।५२ )। तस्य पूर्ववल्लुक्। द्वावाचितौ पचति द्व्याचिता। आढ़काचितपात्रात् खोऽन्यतरस्यामिति ( ५।१।५३ ) वर्त्तमाने द्विगो ष्ठंश्चेति ( ५।१।५४ ) ष्ठन्। तस्य पूर्ववल्लुक्। द्वाभ्यां कम्बल्याभ्यां क्रीता द्विकम्बल्या। तेन क्रीतमिति ( ५।१।३७ ) ठक्। तद्वदेव लुक्। द्व्याढ़कीति। द्वावाढ़कौ पचति। आढ़काचितपात्रात् खोऽन्यतरस्यामिति ( ५।१।५३ ) वर्त्तमाने द्विगोष्ठंश्चेति (५।१।५४) पक्षे ष्ठन्। तस्य लुक्। पञ्चाश्वीति। पूर्ववत् समाहारे द्विगुः। इहेमौ द्वौ प्रतिषेधावुच्येते। तत्रैकः शक्यमकर्त्तुम्। कथम्? एवं सूत्रन्यासः करिष्यते। परिमाणान्तात् तद्धितलुकीति। पूर्वेणैव सिद्धे नियमार्थमेतत्। परिमाणान्तादेव तद्धितलुकि ङीब् भवति। नान्यस्मात्। तेन द्व्याढ़कीत्यादावेव भवति। न पञ्चाश्वेत्यादौ। ततो विस्ताचितकम्बल्येभ्यो न तद्धितलुकीत्यनुवर्त्तते। विस्तादिभ्यः परिमाणेभ्योऽपि तद्धितलुकि ङीम् न भवतीति। नैवं शक्यम्। विपरीतोऽपि नियमः सम्भाव्येत। परिमाणान्तात् तद्धितलुक्येव भवति नान्यत्रेति। ततश्च द्वयोः कुड़वयोः समाहारो द्विकुड़वीत्यत्र न स्यात्। तस्माद् यथान्यासमेवास्तु।

## २३। काण्डान्तात् क्षेत्रे।

नियमार्थमिति। क्षेत्र एव यथा स्यात्। अन्यत्र मा भूदिति। अथान्तग्रहणं किमर्थम्? यावता सामर्थ्यादेव तदन्तविधिर्लभ्यत एव यथा पूर्वस्मिन् सूत्रे। नहि केवलस्य काण्डशब्दस्य केनचिद् द्विगुसंज्ञा विहिता। सत्यमेतत्। किन्त्वसत्यन्तग्रहणे काण्डमेव क्षेत्रेण विशिष्येत काण्डशब्द एव केवलो यः

चेत्रे वर्त्तत इति । ततश्चेह प्रतिषेधः स्यात् । द्वाभ्यां काण्डसंज्ञकाभ्यां चेत्राभ्यां क्रीता द्विकाण्डी वड़वेति । इह तु न स्यात् । द्वे काण्डे प्रमाणमस्याः चेत्रभक्तेः द्विकाण्डा चेत्रभक्तिरिति । अन्तग्रहणे तु सति काण्डशब्दस्य विशेषणं चेत्रं न भवति । तस्य द्विगौ गुणभूतत्वात् ।

## २४ । पुरुषात् प्रमाणेऽन्यतरस्याम् ।

प्रमाणे यः पुरुषशब्दो वर्त्तत इति । जातिवचनोऽपि पुरुषशब्दो यदा प्रमाणशब्देनाभिसम्बध्यते तदा पुरुषगते प्रमाणे वर्त्तते । भवति पदान्तरसम्बन्धेन शब्दस्यार्थान्तरे वृत्तिर्यथा सिंहो माणवक इति । सिंहशब्दो जातिवचनोऽपि माणवकसान्निध्याच् शौर्य्यलक्षणं गुणमाचष्टे । द्विपुरुषीति । प्रमाणे द्वयसजिति (५।२।३७) विहितस्य द्वयसचः प्रमाणे लो द्विगोर्नित्यमिति (५।२।३७, वा) लुक् । अपरिमाणान्तत्वात् प्रतिषेधे प्राप्त इति । अपरिमाणविस्तेत्यादिना ( ४।१।२२ ) । द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषेति । पूर्ववदार्हीयस्य ठको लुक् । तद्धितलुकीत्येव । पञ्चपुरुषीति । प्रमाणार्थवृत्तानामेव समाश्रयणात् नास्ति द्वयङ्गविकलता ।

## २५ । बहुव्रीहेरूधसो ङीष् ।

ऊधसोऽनङिति (५।४।१३१) समासान्ते कृत इति । अकृत एव समासे बहुव्रीह्यर्थ उत्तरपदे पूर्वं समासान्तेन भवितव्यमिति । प्राक् ततः समासान्त एव भवति । ततो बहुव्रीहि स्ततः स्त्रीप्रत्यय इत्येषैवानुपूर्वी । अनो बहुव्रीहेरित्यादि । इतिशब्द आद्यर्थे । अनो बहुव्रीहेरित्यादिना (४।१।१२) शास्त्रान्तरेण इत्यर्थः । तत्रानो बहुव्रीहेरित्यनेन (४।१।१२) सूत्रेण प्रतिषेधे प्राप्ते डाबुभाभ्यामन्यतरस्यामित्यनेन (४।१।१३) डाप् । कुण्डोध्नीति । कुण्डमिवोधोऽस्या इति बहुव्रीहिः । अल्लोपोऽन इत्यकारलोपः (६।४।१३४) । प्राप्तोधा इति । प्राप्तापन्ने च द्वितीययेति (२।२।४) तत्पुरुषः । अत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घः । अन उपधालोपिन इत्यादि । अन उपधालोपिनोऽन्यतरस्यामित्येतेनापि (४।१।२८) विधीयमानस्य ङीपोऽयं ङीष् बाधक इष्यते । कथं पुनरिहोच्यमानस्तस्य बाधको भवति ? उत्तरत्रानुवृत्तेः ।

असत्यामुत्तरत्रानुवृत्तौ मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्ये (प, ६१) वमयं ङीष् डाप्प्रतिषेधावेव बाधते । नोपधालोपिनो ङीपम् । ततश्चोपधालोपिनः परत्वात् स एव पक्षे भवेत् । तस्मादन उपधालोपिन (४।१।२८) इत्यत्रास्यानुवृत्तिः कर्त्तव्या । तेनोपधालोपिनोऽप्यूधसन्तान् ङीषेव भवति । समासान्तश्च स्त्रियामेवेति । समासान्तविधेरनित्यत्वात् । अनित्यत्वं तु पुनरूध.शब्देन सकारान्तेनासमासान्तेन विशेषणाद् विज्ञायते । यदि हि नित्यः स्याद् बहुव्रीहे रूघ्न इति निर्देशः स्यात् ।

## २६ । संख्याव्ययादे ङीप् ।

द्व्यूध्नीत्यादि । द्वे ऊधसी अस्याः । त्र्यूधासस्याः । अभिगत मूधोऽस्याः । निर्गतमूधोऽस्या इति विग्रहः । आदिग्रहणं किमिति ? एवं मन्यते । संख्याव्ययाभ्यामित्येव वक्तव्यम् । बहुव्रीहे रूधस इति हि वर्त्तते । तत्रैवमभिसम्बन्धः करिष्यते । संख्याव्ययाभ्यामुत्तरो य ऊधःशब्दस्तदन्ताद् बहुव्रीहे र्ङीब् भवतीति । तथाच निष्फलमादिग्रहणम् । विनापि तेन सिद्धत्वादिति । द्विविधोध्नीत्यादि । यद्यादिग्रहणं न क्रियेत तदा संख्याव्ययाभ्यामिति पञ्चमीनिर्देशात् संख्याया अनन्तरो य ऊधःशब्दस्तदन्तादेव स्यात् । यत्र तु व्यवधानं तत्र तु न स्यात् । आदिग्रहणात् तु तत्रापि भवति । द्विविधमूधो यस्या इति विग्रहः । अत्रादिग्रहणे सति विधशब्देन व्यवधानेऽपि भवति ।

## २७ । दामहायनान्ताच्च ।

ऊधस इति निवृत्तम् । प्रकृत्यन्तरोपादानात् । संख्याग्रहणमनुवर्त्तते । नाव्ययग्रहणमिति । संख्याग्रहणस्यैव स्वरितत्वात् । डाप्प्रतिषेधविकल्पेषु प्राप्तेष्विति । डाबुभाभ्यामन्यतरस्यामित्यादिना (४।१।१३) डापि प्राप्ते ऽनो बहुव्रीहेरिति (४।१।१२) प्रतिषेधे ऽन उपधालोपिनोऽन्यतरस्यामिति (४।१।२८) विकल्पे च । द्वे दामनी अस्याइति द्विदाम्नी । द्वौ हायनावस्या इति द्विहायनी । हायनो वयसि स्मृत इति । प्रकृतिरिति शेषः । कस्य प्रकृतिः ? ङीपः प्रकृतत्वात् तस्यैव । बहुव्रीह्यधिकारादत्र हायनान्तो

बहुव्रीहिरिति गम्यते । एतदुक्तं भवति । हायनान्तो बहुव्रीहिर्वयसि गम्यमाने ङीप: प्रकृतिराचार्य्यैः स्मृत इति । तेन यदि वयो गम्यते ततो ङीब् भवति । नान्यथा । एतच्चोत्तरसूत्रेऽन्यतरस्यांग्रहणस्योभयोर्योगयोः शेषभूतत्वाद् व्यवस्थितविभाषाविज्ञानाच्च लभ्यते । अथ त्रिचतुर्भ्यां हायनस्याप्युपसंख्यानाद् यथा हि त्रिहायणी चतुर्हायणीत्यत्र णत्वं भवति तथा त्रिहायना शाला चतुर्हायना शालेत्यत्रापि कस्मान्न भवतीत्याह णत्वमपीत्यादि । तदपि हि णत्वमौपसंख्यानिक माचार्य्यैर्वयस्येव स्मर्य्यते । न च शालाया वय: सम्भवति । तस्य प्राणिधर्मत्वादिति नेह णत्वं प्रवर्त्तते । अन्तग्रहणं विस्पष्टार्थम् । बहुव्रीह्यधिकारादेव हि सामर्थ्यात् तदन्तविधिर्लभ्यते । नहि केवलयोर्दामहायनशब्दयोर्बहुव्रीहिसंज्ञा केनचिद्विहिता ।

## २८ । अन उपधालोपिनोऽन्यतरस्याम् ।

उपधालोपीति । उपधालोपो यस्य ङीपि परत: सम्भवति स उपधालोपी । नन्वित्यादि । अनो बहुव्रीहेरिति (४।१।१२) प्रतिषेध: सिद्ध: । डाबुभाभ्यामन्यतरस्यामिति (४।१।१४) डाप् । अन्यतरस्यांग्रहणाच्च पक्षे ङीप् । यदि तर्हि डाबुभाभ्यामन्यतरस्यामित्यनेन (४।१।१ ?) ङीबपि विधीयते तदा दामा पामेत्यत्रापि स्यात् । अन्यतरस्यांग्रहणस्य व्यवस्थितविभाषात्वान् न भविष्यति । अनुपधालोपिन इत्यादि । यदीदं नोच्येतानुपधालोपिनोऽपि ङीप् स्यात् । तस्मादुपधालोपिन एव ङीब् यथा स्यादनुपधालोपिनो मा भूदित्येवमर्थमिदमुच्यते । बहुराजेति ङीप्प्रतिषेध: । सर्वनामस्थाने चेति (६।४।८) नोपधाया दीर्घ: । बहुराज्ञीति ङीप् । अल्लोपोऽन: (६।४।१३४) । बहुराजे इति डाप् । औङ आप इति (७।१।१८) शीभाव: । आद्गुण: (६।१।८७) । द्विवचननिर्देशो डापोऽभिव्यक्तये । एकवचने हि डाप्प्रतिषेधयोर्न कश्चिद् विशेष: । उभयत्रापि तुल्यरूपत्वात् । क्वचिद् बहुराजा इति बहुवचनेन निर्देश: । तस्यापि तदेव प्रयोजनम् । बहुमत्स्या इति । सूर्य्यतिष्यागस्त्यमत्स्यानां य उपधाया (६।४।१४६) इति लोपविधानादुपधालोपीत्येष

बहुव्रीहिः । सुपर्वेति । अयमुपधालोपी न भवति । न संयोगाद् वमन्तादि- (३।४।१३७) त्युपधालोपप्रतिषेधात् ।

## २९ । नित्यं संज्ञाछन्दसोः ।

नित्यग्रहणं विस्पष्टार्थम् । पूर्वेणैव हि विकल्पेन ङीप् सिद्धः । तदारम्भ-सामर्थ्यादेव ङीन् नित्यं भविष्यति । अन्यथा हीदं वचनमनर्थकं स्यात् ।

## ३० । केवलमामकभागधेयपापापरसमानार्य्यकृतसुमङ्गल-भेषजाच्च ।

अथ मामकग्रहणं किमर्थम् ? यावतास्मदस्तस्येदमित्यणि (४।३।१२०) कृते तवकममकावेकवचन ( ४।३।३ ) इति ममकादेशेन मामक इति भवति । ततश्च टिड्ढाणञित्येव ( ४।१।१ ) ङीप्सिद्धेः । सत्यमेतत् । नियमार्थं तु मामकशब्दस्य ग्रहणम् । संज्ञाच्छन्दसोर्यथा स्यात् । अन्यत्र मा भूदिति ।

## ३१ । रात्रेश्चाजसौ ।

अजसाविति । विषयसप्तमीयम् । न परसप्तमी । कुतः ? स्त्रीप्रत्ययस्यान्तरङ्गत्वाज्जसः परत्वाविरोधाद् विषयसप्तमीत्वे न दोष इत्याह जस्विषयादित्यादि । अजसादिष्विति । वक्तव्यमिति । जसादिविषयादन्यत्र रात्रिशब्दाद् ङीब् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । इह लाघवार्थमजसि इति वक्तव्येऽजसावित्युक्तम् मात्राधिक्यादर्थाधिक्यसूचनार्थम् । तेनाजसादिषु ङीब् भवतीति । आदिशब्देनामादीनां ग्रहणम् । कथमित्यादि । रात्र्य इति । रात्रिशब्दस्य जसन्तस्य प्रयोगः । एवं हि दीर्घाज्जसि चेति (६।१।१०५) सवर्णदीर्घत्वे प्रतिषिद्धे यणादेश उपपद्यते । नान्यथा । यदि तु रात्रिशब्दस्यायं प्रयोगः स्यात् ततो जसि चेति ( ७।३।१०९ ) गुणे कृतेऽयादेशे च रात्रय इति रूपं स्यात् । ईकारान्तश्च रात्रिशब्दो न सम्भवति । अजसाविति ङीप्प्रतिषेधात् । ततश्च रात्र्य इति प्रयोगो नोपपद्यत इत्यभिप्रायः । ङीषयमित्यादि ।

ननु च न रात्रिशब्दो बह्वादिषु पठ्यते। तत् कथं बह्वादिलक्षणस्ततो ङीष् (४।१।४५) भविष्यतीत्यत आह तत्र ङीत्यादि। कृदिकारादक्तिन इति। कृत इकारः कृदिकारः। तदन्तात् ङीष् भवति। वृदृभ्यां विन् (उण्, ४।४८३) वर्वी। दर्वी। यस्तु क्तिन्सम्बन्धी तदन्तान्न भवति। स्त्रियां क्तिन् (३।३।९४)। कृतिः। हृतिः। सर्वतोऽक्तिन्नर्थादित्येक इति। एक आचार्य्या सर्वतोऽक्तिन्नर्थात् कृदिकारादकृदिकाराच्च ङीष् भवतीत्याहुः। राजिः। राजी। राजिशब्दोऽव्युत्पत्तिपक्षे कृदिकारान्तो न भवति। अक्तिन्नर्थादिति। न विद्यते क्तिन्नर्थो यस्य सोऽक्तिन्नर्थः। तस्मात् सर्वतो ङीष् भवति। यस्तु क्तिन्नर्थ स्तदन्तान्न भवति। कृतिः। हृतिः। आक्रोशे नञ्यनिः (३।३।१२) अकरणिः। अहरणिः। रात्रिशब्दश्चायं व्युत्पत्तिपक्षे कृदिकारान्तो भवति। रा आदाने। राशदिभ्यां त्रिप् (उण्, ४।५०७)। रात्रिः। तस्मात् पक्षे ङीष्। रात्री। अव्युत्पत्तिपक्षे तु कृदिकारान्तो न भवति। ततः सर्वतोऽक्तिन्नर्थादिति (ग, सू, ५१) ङीष्।

## ३२। अन्तर्वत्पतिवतोर्नुक्।

स तु नकारान्तत्वादेव सिद्ध इति। ऋन्नेभ्यो ङीबित्यनेन (४।१।५)। निपातनसामर्थ्यादित्यादि। यथैव हि निपातनसामर्थ्यादन्यत् किञ्चिदलाक्षणिकं कार्य्यं भवति तथार्थविशेषेऽपि वृत्तिः। कस्मिन् पुनरर्थविशेषे वृत्तिर्भवतीत्यत आह अन्तर्वत्पतिवदित्यादिना। यथाक्रममन्तर्वदित्यस्य गर्भसंयोगे वृत्तिः पतिवदित्यस्य भर्त्तृसंयोगे। गर्भेण संयोगो गर्भसंयोगः। स कस्या भवति? यस्याः कुक्षौ गर्भो व्यज्यते। भर्त्रा संयोगो भर्त्तृसंयोगः। स च कस्या भवति? यस्याः पतिर्जीवति। भर्त्ता चेह योऽग्निसाक्षिपूर्वकेण पाणिग्रहणेन सम्बन्धी स एवाभिमतः। ननु यः पृथिवीस्वामी। इह तु न भवतीति। अन्तरस्यां शालायां विद्यते। शालायां कुक्षिगतेन गर्भेण सम्बन्धाभावात्। पतिमतीति। पतिरस्या अस्तीति मतुप्। उगितश्चेति (४।१।६) ङीप्। अत्र पतिशब्द ईश्वरे स्वामिनि वर्त्तते। तेन संयोगे च न पतिवदिति निपात्यते। येन तु संयोगे निपात्यते स चाख्यात एव। मतुम् निपात्यत इति। अन्तः-

शब्दस्याधिकरणप्रधानत्वात् प्रथमासमर्थता नास्ति। प्रथमासमर्थाच्चास्ति-समानाधिकरणेन मतुब् विधीयते। नचास्तिनान्तःशब्दस्य सामानाधिकरण्यम्। तस्मान् मतुम् न प्राप्नोतीति निपात्यते। वत्त्वं तु सिद्धमिति। मादुपधायाश्चेत्यादिनैवाकारोपधत्वात् (८।२।९)। निपात्यत इति। केनचिद-प्राप्तत्वात्। मतुप् सिद्ध इति। पतिरस्यास्तीति प्रथमासमर्थस्य पतिशब्द-स्यास्तिना सामानाधिकरण्यात्। गर्भिणीत्यनेन गर्भसंयोगं दर्शयति। जीवपतिरित्यनेनापि भर्तृसंयोगम्। अन्तर्वत्पतिवतोरित्यादि। अन्त-र्वत्पतिवदितेऽतयोः शब्दयोर्निपातनान् मतुब्वत्वे भवतः। यथाक्रमं गर्भिण्यां जीवपत्याञ्च स्त्रियामभिधेयायाम्। गर्भोऽस्या अस्तीति गर्भिणी। जीवतीति जीवः। पचाद्यच्। जीवः पतिर्यस्याः सा जीवपतिः। ननु च पतिः समास एवेति (१।४।८) घिसंज्ञोऽयं पति (J) शब्दः। तत्राच्च घेरित्यात्त्वौ-त्त्वयोः (७।३।११९) कृतयोः जीवपताविति भवितव्यम्। तदयुक्तो जीव-पत्यामिति निर्देशः। नैतदस्ति। शेषो घ्यसखीति (१।४।७) सिद्धायामेव घिसंज्ञायाम् पतिः समास एवेत्यनेन (१।४।८) शेषस्यैव पतिशब्दस्य घिसंज्ञा नियमार्थं विधीयते। नचायं शेषः। ङिति ह्रस्वश्चेति (१।४।६) नदी-संज्ञासम्भवात्। नदीसंज्ञायाञ्च सत्यामिदुद्भ्यामिति (७।३।११७) ङेराम् नद्याम्नीभ्य (७।३।११६) इत्याम्। यणादेशे जीवपत्यामिति भवति। वाच्छन्दसि तु नुगविधिरिति। छन्दसि विकल्पे तु नुगविधिर्भवति। स च वक्ष्यमाणस्य विभाषाग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तेर्व्यवस्थितविभाषा-विज्ञानाच्च लभ्यते। नुकपक्ष ऋन्नेभ्यो ङीबिति (४।१।५) ङीप्। अन्त-र्वत्नीति। अनुकपक्ष उगितश्चेति (४।१।६) ङीप्। अन्तर्वतीति भवति।

## ३३। पत्युर्नो यज्ञसंयोगे।

यज्ञसंयोग इति। यज्ञसम्बन्धे। कस्य पुनर्यज्ञेन संयोगः? पतिशब्द-वाच्यस्यार्थस्य। अथ पतिशब्दस्यैव कस्मान्न भवति? असम्भवात्। तयो र्हि वाच्यवाचकभावलक्षणः सम्बन्धः स्यात्। न केवलः पतिशब्दो यज्ञस्य वाचकः। कथं पुनर्यज्ञेन संयोग इत्याह तत्साधनत्वादिति। तस्य यज्ञस्य

(J) In the printed काशिका the reading is गर्भिण्यां जीवत्पत्याञ्च।

साधनं तत्साधनम् । तदभावे यज्ञसाधनत्वम् । तस्माद् यज्ञेन संयोगो भवति । यजमानस्य या भार्य्या तस्या यागं प्रति साधनभावोऽस्तीति विना तया तदनिष्पत्तेः । नहि भार्य्याविरहितस्त्रैवर्णिकः केवलो यज्ञेऽधिक्रियते । तस्मात् स तया करणभूतया यज्ञं निष्पादयतीत्यस्ति तस्या यज्ञेन सह क्रियाकारकलक्षणः सम्बन्धः । तत्फलग्रहीतृत्वाद्वेति । यज्ञसंयोगे द्वितीयो हेतुः । अनेन तु स्वस्वामिभावलक्षणः सम्बन्धः प्रतिपाद्यते । यज्ञस्य यत्-प्रधानं फलं स्वर्गाख्यं तद् यजमानस्य पत्नी परिगृह्णाति । अतो यद्यपि यज्ञं प्रति तस्याः साधनत्वं न विवक्ष्यते तथापि तत्फलस्य ग्रहणाद् यथा यज-मानस्य यज्ञेन सह स्वस्वामिभावसम्बन्ध स्तथा तत्पत्न्या अपि । अथ फलग्रहीतृत्वादिति कथमत्र षष्ठीसमासः? कथञ्च न स्यात्? कर्त्तरि चेति (२।२।१६) तृचा सह षष्ठीसमासप्रतिषेधात् । नैवायं तृजन्तेन षष्ठी-समासः । किं तर्हि? द्वितीयेति योगविभागात् (२।१।२४) तृजन्तेन द्वितीयासमासः । अथवा याजकादिषु ग्रहीतृशब्दो द्रष्टव्यः । तेन षष्ठीसमासो भविष्यति । अथापि तत्र न पठ्यत एवमपि याजकादिभिश्चेति (२।२।९) चकारस्यानुक्तसमुच्चयार्थत्वाद् भविष्यति । ऋन्नेभ्यो ङीबिति (४।१।५) ग्रहीतृ-शब्दादिह ङीम् न भवति । स्त्रीत्वस्याविवक्षितत्वात् । क्वचित् फलगृहीतत्वा-दिति पाठः । तत्र फलगृहीतशब्दयोर्बहुव्रीहिः । फलशब्दस्य जातिवाचित्वान् निष्ठायाः पूर्वनिपाते प्राप्ते जातिकालसुखादिभ्यः परवचनमिति (२।२।३६, वा) गृहीतशब्दस्य परनिपातः । कथमित्यादि । एवं मन्यते । शूद्रस्यैव तावद् यज्ञेऽनधिकृतत्वाद् यज्ञेन संयोगो नास्ति । किं पुनस्तद्भार्य्यायाः? अतो वृषलस्य पत्नीत्येष प्रयोगो नोपपद्यत इति । उपमानाद् भविष्यतीति । पत्नीवद्धि पत्नी । यथैव हि यजमानस्य पत्न्यग्निसाक्षिपूर्वकेण पाणिग्रहणेन तत्पत्युः सम्बन्धिनी तत्कार्य्येषु चाधिकृता तथा वृषलस्य भार्य्यापि । तस्मात् पत्नीसाधर्म्यात् सापि पत्नीत्युच्यते ।

## ३४ । विभाषा सपूर्वस्य ।

पतिशब्दान्तस्येत्यादि । एतेन पतिशब्दस्य ग्रहणं सपूर्वग्रहणं मनुप-

सर्जनग्रहणञ्च वयमप्येतत् प्रातिपदिकस्य विशेषणमिति दर्शयति। सह-शब्दोऽयमस्त्येव तुल्ययोगे यथा सशिष्यो गुरुरागत इति। गुरोः शिष्यस्य चागमनेन तुल्ययोगः प्रतीयते। अस्ति च सत्तावचनो यथा सहैव दशभिः पुत्रै र्भारं वहति गर्दभीति। विद्यमानैरेवेत्यर्थः। तदिह सत्ता-वचनो गृह्यते। सपूर्वस्य विद्यमानपूर्वस्येत्यर्थः। यदि हि तुल्ययोगे वर्त्त-मानो गृह्यते ततोऽयमर्थः स्यात् सहपूर्वेण पतिशब्दान्तस्य नकारो भव-तीति। ततश्च पतिशब्दात् पूर्वस्यापि वृद्धादिशब्दस्य नकारः स्यात्। एवं हि तुल्ययोगो भवति यदि नकार उभयोरपि भवति। पूर्वशब्दोऽयमस्त्येव व्यवस्थाशब्दो यथा पूर्वं मथुरायाः पाटलिपुत्रमिति। अस्त्यवयववचनो यथा पूर्वं कायस्येति। तदिहावयववचनो गृह्यते। सह विद्यमानः पूर्वो-ऽवयवो यस्य तत् सपूर्वमित्युच्यते। यदि व्यवस्थाशब्दो गृह्येत तत्रायमर्थः स्याद्। विद्यमानः पूर्वो यस्मात् तस्य पतिशब्दान्तस्य नकारो भवतीति। ततश्च दृढ़पत्नीत्यत्र न स्यात्। नहि पतिशब्दान्तादिह कश्चित् पूर्वोऽस्तीति। अथ पतिशब्दस्यैव सपूर्वत्वमनुपसर्जनत्वञ्च विशेषणं कस्मान्न विज्ञायते? अशक्यत्वात्। स ह्यवयववचनं वा पूर्वशब्दं गृहीत्वा विशिष्येत व्यवस्थाशब्दं वा। तत्र पूर्वस्तावदयुक्तः कल्पः। अव्यभिचारात्। असम्भवाच्च। कथम्? यदि पकारं पूर्वमभिप्रेत्य विद्यमानः पूर्वोऽवयवो यस्येति विशिष्येत ततोऽव्यभिचारादयुक्तं विशेषणम्। नहि पकारेण यस्य पूर्वत्वं तत्पतिशब्दो व्यभि-चरति। अथ शब्दान्तरम्। तदसम्भवादयुक्तं विशेषणम्। नहि शब्दान्तरं पतिशब्दस्यावयव उपपद्यते। व्यवस्थाशब्दपक्षे तु विद्यमानः पूर्वो यस्मात् तदिति विशिष्यते। युज्यते च विशेष्यविशेषणभावः। किन्तु वाक्येऽपि नकारः प्राप्नोति ग्रामस्य पतिरियं ब्राह्मणीति। अस्ति ह्यत्र पतिशब्दात् पूर्वो ग्रामशब्दः। अनुपसर्जनग्रहणेनापि पतिशब्दे विशिष्यमाने बहुव्रीहौ विकल्पो न प्राप्नोति दृढ़ः पतिरस्या दृढ़पति दृढ़पत्नीति। न ह्यत्रानुप-सर्जनं पतिशब्दः। सर्वोपसर्जनत्वाद् बहुव्रीहेरिति। बहुव्रीह्यवयवानामप्युप-सर्जनत्वात्। तस्मात् प्रातिपदिकस्यैव विशेषणं युक्तम्। पतिरियं ब्राह्मणी ग्रामस्येति। ननु च व्यपदेशिवद्भावादिदमपि सपूर्वमिति शक्यते व्यप-

देष्टुम्। नच व्यपदेशिवद्भावोऽप्रातिपदिकेनेति (प, ३३) व्यपदेशिवद्भावाभावः प्रातिपदिकत्वात्। यद्येवं पतिशब्दान्ततापि नास्तीति। अतो द्यङ्गविकलता। नैतदस्ति। सपूर्वग्रहणे हि क्रियमाणे पतिशब्दान्तस्येत्येषोऽर्थो लभ्यते। अक्रियमाणे तु तस्मिन् पतिशब्दस्यैव शुद्धस्य नकारो विज्ञायते।

## ३५। नित्यं सपत्न्यादिषु।

सपत्न्यादिष्विति। के पुनः सपत्न्यादयः? ये पठ्यन्ते। तेषु प्रातिपदिकेषु येषां समानादीनि पूर्वपदानि ते सपत्न्यादयः। कुत एतत्? समानादीनां गणे पाठात्। सपत्न्यादीनाञ्चापाठात्। लाघवार्थं समानार्थं समानादिष्वित्येव वक्तव्ये कृते नकारादेशस्य सप्रत्ययस्य च सपत्न्यादिष्विति समुदायस्योच्चारणं नियोगत एष समुदाय ईकारान्त एव यथा स्यादित्येवमर्थम्। तेन सपत्नी भार्य्या यस्य स सपत्नीभार्य्य इति स्त्रियां पुंवदिति (६।३।३४) पुंवद्भावो न भवति। सपत्न्यादिषु नित्यमित्यादि। समानादिषु पूर्वेष्ववयवेषु सत्सु नित्यं पतिशब्दस्य नकारादेशो भवतीत्यर्थः। यदि पूर्वेण विकल्पे प्राप्त इदं वचनमेवं तर्हि नित्यग्रहणमनर्थकम्। आरम्भसामर्थ्यादेव हि नित्यं विधिर्भविष्यतीत्यत आह नित्यग्रहणं विस्पष्टार्थमिति। दासाच्छन्दसीति। दासशब्दात् परो यः पतिशब्दस्तदन्तस्य प्रातिपदिकस्य च्छन्दसि विषये नित्यं नकारादेशो भवति। दासःपतिर्यस्याः सा दासपत्नी। भाषायान्तु पूर्वेण विकल्पो दासपति दासपत्नीति।

## ३६। पूतक्रतोरै च।

ऐकारश्चान्तादेशो भवतीति। कुतः पुनरेतदवसितमादेशोऽयमिति? न पुनः प्रत्ययः? उत्तरसूत्रेऽप्यादेशत्वात्। उत्तरसूत्रे ह्ययमेवैकारोऽनुवर्त्तते। तत्र चास्यादेशत्वम्। अत इहाप्यादेशत्वमवसीयते। उत्तरसूत्रे कुतोऽस्यादेशत्वं निश्चितमिति चेत्? उदात्तवचनात्। यदि हि प्रत्ययस्तस्याद्युदात्तत्वादुदात्तवचनमनर्थकं स्यात्। प्रत्ययस्वरेणैवोदात्तस्य सिद्धत्वात्। त्रय एते योगा इति। अयञ्चैको वक्ष्यमाणौ चानन्तरौ द्वावेते त्रयो

योगा: पुंयोगप्रकरणे पुंयोगादाख्यायामित्येवमादौ (४।१।४८) द्रष्टव्या:। तस्मिन्नेषां स्वरितत्वेनानुवृत्ते:। पूत: क्रतुर्येन पुरुषेण स पूतक्रतु:। तस्य स्त्री पूतक्रतायी।

## ३७। वृषाकप्यग्निकुसितकुसीदानामुदात्त:।

वृषाकपिशब्दो मध्योदात्त इति। लघावन्ते द्वयोश्च बह्वषो गुरुरिति वचनात् (फिट्, २।४२)। अस्यायमर्थ:। लघावन्ते परतो द्वयोश्च लघ्वो: परतो बह्वच् शब्दस्य यो गुरु: स उदात्तो भवतीति। बह्वषिति बह्वजित्यर्थ:। पाणिनेर्यश्चकारेण प्रत्याहार: सोऽन्येषामाचार्य्याणां मतेन षकारेण। वृषाकपिशब्दे कपिशब्दसम्बन्धिनोर्लघ्वो: परत: पूर्व आकारो गुरुतर उदात्तो भवति। शेषमनुदात्तम्। तत्र यद्युदात्तग्रहणं न क्रियेतानुदात्तस्य स्थाने य आदेश: स्थानिवद्भावेन सोऽनुदात्त एव स्यात्। तस्माद् वृषाकपिशब्द उदात्तस्य स्थाने य आदेश: स्थानिवद्भावेन सोऽनुदात्त एव स्यात्। तस्माद् वृषाकपिशब्द उदात्तत्वं प्रयोजयति। अग्न्यादिषु पुनरन्तोदात्ते-ष्विति। फिषित्यादिनाग्न्यादीना ( फिट्, १।१ ) मन्तोदात्तत्वम्। आदि-शब्देन कुसितकुसीदयोर्ग्रहणम्। फिषिति प्रातिपदिकस्यैव पुनरन्याचार्य्य-कृता संज्ञा।

## ३८। मनोरौ वा।

वाग्रहणेन द्वावपि विकल्प्येऽते इति। प्रत्येकं वाग्रहणेनाभिसम्बन्धात्। यदा चैकारौकारौ न भवतस्तदा ङीबपि न भवति। तस्य सन्नियोग-शिष्टत्वात्। मनुशब्द आद्युदात्त इति। एतेनोदात्तग्रहणमनुवर्त्तयितव्यम्। अन्यथा शेषस्यानुदात्तत्वे स्थानिवद्भावेनादेशस्याप्यनुदात्तत्वं स्यादिति भाव:। मन ज्ञाने। भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उरित्यनुवर्त्तमाने (उण्,१।५) धान्ये निदिति (उण्,१।८) च शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धि-मनिभ्यश्चेत्युप्रत्यय: (उण्, १।१०)। नित्त्वाद् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं (६।१।१९७) भवति मनुशब्दस्य।

३९ । वर्णादनुदात्तात् तोपधात् तो नः ।

वर्णानां तणतिनितान्तानामित्यस्यायमर्थः । वर्णवाचिनां शब्दानां तशब्दान्तानां णकारान्तानां तिशब्दान्तानां निशब्दान्तानां तकारान्तानां चादिरुदात्तो भवतीति । आदिग्रहणमुदात्तग्रहणञ्च प्रकृतं तत्रानुवर्त्तते । प्रकृतेति । प्रकर्षेण कृतेति । कुगतिप्रादय इति (२।२।१८) समासः । प्रशब्दोऽयं निपातो निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जमित्युदात्तः ( फिट्, ४।८०।८१) । समासेऽपि कृते गतिरनन्तर इति ( ६।२।४९ ) पूर्वपदप्रकृति-स्वरेणाद्युदात्त एव भवतीति । शेषमनुदात्तम् । घृतादित्वादन्तोदात्त इति । घृतादीनाञ्चेत्यन्तोदात्तत्वविधानात् ( फिट्, १।२१ ) । एतच्च फिट्सूत्रे पठ्यते । शितिरिति । वर्णानामित्यादिना ( फिट् २।३३ ) शितिशब्द आद्युदात्तः । पिशङ्गादित्यादि । पिशङ्गशब्दो लघावन्त इत्यादिना ( फिट्, २।४३) मध्योदात्तः । ततोऽन्यतो ङीषिति (४।१।४०) ङीषि प्राप्ते ङीप उपसंख्यानं कर्त्तव्यम् । तत्रेदं प्रतिपादनम् । पूतक्रतोरै (४।१।३६) चेत्यतश्चकारोऽनुक्त-समुच्चयार्थोऽनुवर्त्तते । तेन पिशङ्गादपि ङीब् भवतीति । वक्तव्यमिति । व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । मनोरौ वेत्यतो ( ४।१।३८ ) वेत्यनुवर्त्तते । सा च व्यवस्थितविभाषा । तेनासितपलितशब्दाभ्यां ङीष् न भविष्यत्येवेति । वर्णानां तणतिनितान्तानामित्याद्युदात्ता-(फिट्,२।३३) असित-पलितशब्दौ । तयो श्छन्दसीत्यादि । असितपलितशब्दयोस्तकारस्य क्नमेक आचार्य्या इच्छन्ति । स तु व्यत्ययो बहुलमित्येव ( ३।१।८५ ) सिद्धः । भाषायामपीष्यत इति । एतेन च्छन्दोग्रहणं प्रत्याचष्टे । असिक्निकाना-मिति । अज्ञातार्थे प्रागिवात् क इति ( ५।३।७० ) कः । केऽण इति (७।४।१३) ह्रस्वः ।

४० । अन्यतो ङीष् ।

सारङ्गी कल्माषीति । लघावन्त इत्यादिना ( फिट्, २।४२ ) मध्योदात्तौ सारङ्गकल्माषशब्दौ । शबलीति । शप आक्रोशे । कलस्तृपश्चेति (उण्,१।१०४) शपेर्वश्चेति (उण्, १।१०५) कलप्रत्ययः । पकारस्य वकारः । प्रत्ययाद्युदात्त-

नेन मध्योदात्तः शवलशब्दः । खट्वेति । खट काङ्क्षायाम् । अशूप्रुषिलटिकणि-खटिविशिभ्यः क्वन्निति क्वन् (उण् १।१४६)। नित्स्वरेणाद्युदात्तः खट्वाशब्दः । कृष्णेति । कृष विलेखने । इणसिञ्जिदीङुष्यविभ्यो नक् (उण्, ३।२८२)। कृषेर्वर्णे इति नक् ( उण्, ३।२८४ )। प्रत्ययस्वरेणान्तोदात्तः कृष्णाशब्दः । कपिलेति । कमु कान्तौ । सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डि-कुकिभूभ्य इलच् ( उण्, १।५४ )। कमेः पश्चेति ( उण, १।५५ ) मकारस्य पकारः । चित्स्वरेणान्तोदात्तः कपिलाशब्दः ।

## ४१ । षिद्गौरादिभ्यश्च ।

षिद्भ्यः प्रातिपदिकेभ्य इति । षकार इद् येषां तानि । कथं पुनः प्रातिपदिकानि षिन्ति भवन्ति यावता ष्वुनादेः प्रत्ययस्य षकार इत्संज्ञको न तु तेषाम् ? नैष दोषः । अवयवगतं हि षित्त्वं समुदायस्य विशेषणं भविष्यति यथाक्षिगतं काणत्वम् पुरुषस्य काणः पुरुष इति । यद्येवं धातुगतमपि षित्त्वं समुदायस्य विशेषणं प्राप्नोति । त्रपूष् लज्जायाम् । अङ् । अपत्रपेति । नैतदस्ति । यो ह्यनुबन्धोऽवयवे निष्प्रयोजनः स समु-दायार्थो विज्ञायते । धातोऽस्तु विद्यत एव षित्करणस्य प्रयोजनं षिद्भिदादिभ्योऽङिति अङ् (३।३।१०४) यथा स्यात् । ष्वुनादीनां तु षित्करणस्य नान्यत् प्रयोजनमस्ति । अतः समुदायार्थमेव तद्विज्ञायते । रजकीति । अत्र रञ्जेश्चेत्यत्र (६।४।२६) चकारस्यानुक्तसमुच्चयार्थत्वादनुनासिकलोपः । गौरादिषु गौरशब्दस्य सतऽपि वर्णवाचित्वे प्रातिपदिकस्वरेणान्तोदात्तत्वात् पूर्वेण न प्राप्नो-तीतीह पाठः । मत्स्यादीनां यकारोपधानामयोपधादिति (४।१।६३) जाति-लक्षणस्य ङीषः प्रतिषेधे प्राप्ते । शृङ्गशब्दस्य प्राक् स्वञ्शब्दात् पुटादीनाञ्चा-मन्दवर्ज्जितानां स्त्रीविषयत्वाच् शृङ्गशब्दस्य प्राप्ते पुटादीनाञ्चास्त्रीविषया-दिति (४।१।६३) प्रतिषेधे प्राप्ते । आनन्दशब्दस्याजातिवाचित्वान् ङीष्यप्राप्ते । स्वंस्तञ्चन्नित्येतयोर् ऋन्नेभ्यो ङीबिति (४।१।५) ङीपि प्राप्ते । अनुडुह्या-नडुहीत्यनयोरनकारान्तत्वाद् ङीष्यप्राप्ते । इकारान्तयोः सप्तत्रययोर्गणे पाठः पुंवद्भावप्रतिषेधार्थोऽनडुहीभार्य्योऽनडुहीभार्य्य इति । एतदेव वचनं

ज्ञापकमनडुहः स्त्रियां विकल्पेनाम् भवतीति। तेन यदुक्तमनडुहः स्त्रियाञ्चेति वक्तव्यमिति (७।१।९८,वा) तन्न वक्तव्यमिति भवति। एषणः करण इति। एषणशब्दः करणे कारके ङीष मुत्पादयतीति। इष्यतेऽनयेत्येषणी। करण इति किम्? इष्यतेऽस्यामित्यधिकरणे टित्वात् ङीबेव भवति। एषणी। स्वरे विशेषः। देहस्य टापि प्राप्ते। देहनादीनां ल्युडन्तत्वात् टिल्लक्षणे ङीपि। मेधङ्गतरस्याजातित्वात् ङीष्यप्राप्ते। गौतमस्य शार्ङ्गरवादित्वात् ङीनि प्राप्ते। पक्षे च वचनात् सोऽपि भवत्येव। आयस्थूणादीनामालिपिशब्दपर्य्यन्ता-णामणिञोरनार्षयोरिति (४।१।७८) ष्यङि प्राप्ते। आयस्थूणशब्दः शिवाद्य-णन्तः। भौरिक्याद्योऽत इञितीञन्ताः (४।१।९५)। आपिच्छिकस्य ङीषि प्राप्ते। आपिच्छिकानां राजानः। तेषामपत्यं स्त्री। जनपदशब्दात् क्षत्रि-यादञितरञ् (४।१।१६८)। तस्यातश्चेति (४।१।१७८) लुकि कृते प्रत्यय-लक्षणेन ङीब् प्राप्नोति। आरटादीनां प्राक् शातनशब्दात् स्त्रीविषयत्वात् ङीष्यप्राप्ते। शातनादीनां ल्युडन्तत्वात् ङीपि प्राप्ते। अधिकरणाद् ङीपि। अग्रे हायनमस्या इत्याग्रहायणी। स्वार्थिकोऽण्। णत्वं निपातनात्। (K) अणन्तत्वात् ङीपि प्राप्ते। ईकारान्तस्य पाठः पुंवद्भावप्रतिषेधार्थं आग्रहायणी-भार्य्य इति। प्रत्यवरोहणसेवनयो र्ल्युडन्तयोष्टित्त्वात् ङीपि। केचित्तु पुंवद्भावप्रतिषेधार्थं प्रत्यवरोहिणीति पठन्ति प्रत्यवरोहिणीभार्य्य इति। सुमङ्गलात् संज्ञायां नित्यं संज्ञाच्छन्दसोरिति (४।१।२९) वर्त्तमाने केवल-मामकेत्यादिना (४।१।३०) ङीपि प्राप्ते। पक्षे वचनात् सोऽपि भवति। संज्ञायामिति किम्? सुमङ्गला। सुन्दरादीनां प्राक् तरुणशब्दात् स्त्रीविषय-त्वात् ङीष्यप्राप्ते। तरुणतलुनशब्दयोर्वयोलक्षणे ङीपि प्राप्ते। नञ्स्नञीकक्-ख्युंस्तरुणतलुनानामुपसंख्यानमित्यत्र (४।१।१५,वा) तु वयोग्रहणम्। बृहन्महच्छब्दयो रुगित्त्वात् ङीपि प्राप्ते। पक्षे सोऽपि भवत्येव। सुधर्मणोऽपत्यमृष्यण् सौधर्मः। अणिञोरनार्षयोरिति(४।१।७८) ष्यङि प्राप्ते। रोहिणी नक्षत्र इति। नक्षत्र इति किमर्थम्? रोहिता। रेवती नक्षत्र इति किम्? येषां रेवत-शब्दोऽस्त्याकारान्त इति दर्शनं तेषां प्रत्युदाहरणं टाब् रेवतेति। येषां त्विदं वचनं

(K) पूर्वपदात् संज्ञायामग (८।४।३) इत्यनेनैवात्र णत्वं सिध्यति।

रा विद्यतेऽस्या इति रेशब्दान् मतुम् निपातनाद् वत्वमिति तेषां प्रत्युदाहरणं उगितश्चेति (४।१।६) ङीप् रेवतीति । स्वरे विशेषः । विकलादीनां टापि प्राप्ते । कटशब्दाच्छ्रोण्यभिधाने ङीष् । कटी श्रोणिरित्यर्थः । श्रोणिरिति किम् ? कटा । पिप्पल्यादयश्चेति । एतावद् गणे पठ्यते । तांस्तु पिप्पल्यादीन् दर्शयितुं पिप्पलीहरीतक्यादिकं वृत्तिकारवचनम् । पृथिवीति । ईकारान्तनिपातनम् पुंवद्भावनिवृत्त्यर्थम् पृथिवीभार्य्य इति । क्रोष्टुशब्दस्य स्त्रियाञ्चेति (७।१।८६) तृज्वद्भावः । मातरि षिच्चेति । पितृव्यमातुलमातामहपितामहा (४।२।३६) इत्यत्र पितृमातृभ्यां पितरि वाच्ये डामहच् निपातयिष्यते । मातरि वाच्यायां डामहजेव । तस्यापि षित्त्वम् । दंष्ट्रेति । दंश दशने । दाम्नीशसेत्यादिना (३।१।१८२) ष्ट्रन् । षिल्लक्षणस्यानित्यत्वात् ङीषष्टाब् भवति ।

## ४२ । जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककवराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु ।

वर्त्तते यया सा वृत्तिरिति जीवनोपायो वृत्तिशब्देनेहोच्यते । जनपदे भवा वृत्तिर्जानपदी । उत्सादिभ्योऽञित्यञ् (४।१।८६) । जानपद्यन्येति । टिड्ढाणञिति (४।१।१५) ङीबेव भवति । स्वरे विशेष इति । ङीषि सति प्रत्ययस्वरेणान्तोदात्तत्वं भवति । ङीपि तु सतत्राद्युदात्तत्वम् । जानपदस्य ञित्स्वरेणाद्युदात्तत्वात् । अमत्रमिति । भाजनं पात्रम् । कुण्डा ऽन्येति । क्रियाशब्दोऽयमित्याहुः । कुडि दाहे । गुरोश्च हल (३।३।१०३) इत्यकारप्रत्ययः । अजाद्यतष्टाप् (४।१।४) । यस्तु द्रव्यवचनः कुण्डशब्दः स नित्यं नपुंसक एव वर्त्तत इति प्रत्युदाहर्तुं न युक्त इति । आवपनमिति । भाजनविशेष उच्यते यत्र धान्यादि प्रक्षिप्य नीयते । गोणा ऽन्येति । सा पुनर्यस्या इदं यादृच्छिकं नाम । अकृत्रिमेति । पुरुषव्यापारादिभिर्न निर्वृत्तेत्यर्थः । स्थला ऽन्येति । या पौरुषेयी । भाजीति । भज विश्राणने । चुरादिणिच् । ण्यासश्रन्थो युजिति (३।३।१०७) युच् प्राप्नोति । अस्मादेव निपातनादङ् । षङन्तात् ङीष् । श्राणेति । श्रा पाके इत्यस्मात् क्तः । संयोगादेर्धातोर्यण्वत इति

(८।२।४७) नत्वम् । अट्कुप्वाङ्नुम्व्यवाये (८।४।२) ऽपीति णत्वम् । नागशब्द इत्यादि । नागशब्दो द्विविधः । जातिवचनो गुणवचनश्च । तत्र स्थौल्यग्रहणादिह न जातिवचनो ङीषमुत्पादयति । नहि जातिवचनस्य स्थौल्यमभिधेयं सम्भवति । नापि गुणान्तरवचनः । नहि गुणान्तरशब्दान्नागवचनान् ङीषन्ताद् गुणान्तरं प्रतीयते । अपि तु स्थौल्यमेव । तस्माद् यदासौ स्थौल्यं गुणमभिधाय द्रव्ये वर्त्तते तदा ङीषमुत्पादयति । नान्यदा । अन्यत्रेत्यादि । स्थौल्यादन्यत्र गुण एव दैर्घ्यादौ वर्त्तमानो नागशब्दो यदा द्रव्यं विशिनष्टि तदा टापमुत्पादयति । जातिवचनात्त्वित्यादि । हस्तित्वादिजातिवचनाज्जातेरस्त्रीविषयादितशादिना (४।१।६३) ङीष् भवति । वर्णश्चेदिति । द्रव्ये वर्त्तमानो यदि वर्णस्तस्य प्रवृत्ति-निमित्तं भवतीत्यर्थः । काला ऽन्येति । यस्या याद्दच्छिकसंज्ञा । नीला ऽन्येति । आच्छादनं शाटिकादि । अनाच्छादने न सर्व्वत्र । किं तर्हि ? नीलादौषधौ प्राणिनि चेति । शब्दशक्तिस्वाभाव्यात् । तत्रैव नीलशब्दस्य वृत्तेः । अथवा मनोरौ वेत्यतो (४।१।३८) वाग्रहणमिहानुवर्त्तते । सा च व्यवस्थितविभाषा । तेनानयोरेवार्थयोस्ततो भविष्यति । नान्यत्रेति । संज्ञायामेवेति । अना-च्छादन एवायं विकल्पः । एषोऽपि तत एव वाग्रहणानुवृत्तेर्लभ्यते । अयो-विकार इति । विशिष्ट एव फाल इति यस्य नामधेयम् । कुशा ऽन्येति । तदाकृतिरेव काष्ठादिमयी । कामुका ऽन्येति । सा पुनर्यस्या मैथुनादन्यद् वस्तु कामयितुं शीलम् । मैथुनेच्छावती भण्यत इति । मत्वर्थीयाकारान्तस्य मैथुनेच्छाशब्दस्योपादानात् । केशवेश इति । एतदाख्ये विशिष्ट एव । कबरा ऽन्येति । कबरो वर्णोऽस्या अस्तीति मतुप् । तस्य लोपादभेदोपचाराद्वा द्रव्ये यो वर्त्तते स वेदितव्यः ।

## ४३ । शोणात् प्राचाम् ।

शोणशब्दोऽयं वर्णवचनः । वर्णानां तणतिनितान्तानामिति ( फिट् २।३३) वचनादाद्युदात्तः । तत्रान्यतो ङीषिति (४।१।४०) सिद्धे वचनं नियमार्थम् प्राचामेव यथा स्याद् । अन्येषां मा भूदिति ।

## ४४ । वोतो गुणवचनात् ।

गुणमुक्तवान् गुणवचन इति। भूते काले ल्युटो विधानात्। स पुनर्यः प्राग् गुणमभिधाय पश्चाद् मतुब्लोपादभेदोपचाराद्वा तद्वद् द्रव्यमभिधत्ते स वेदितव्यः। पट्वी मृद्वीति। अत्र पटुत्वं मृदुत्वञ्च यथाक्रमं गुणमभिधाय पटुमृदुशब्दौ तद्वति द्रव्ये वर्त्तेते इति गुणवचनौ भवतः। शुचिरिति। शुचिशब्दः शुचित्वे गुणे वर्त्तित्वा द्रव्ये वर्त्तत इति गुणवचनः। नतूकारान्तः। आखुरिति। जातिवचनोऽयम्। न गुणवचनः। गुणवचनान् ङीबाद्युदात्तार्थमिति। गुणवचनाद् ङीब् विधेयः। न ङीष्। स्वरे विशेषः। किमर्थम्? आद्युदात्तार्थम्। अन्तोदात्तेषूदात्तयणो हल्पूर्वादित्यु—(६।१।१७४) दात्तत्वमीकारस्य विधीयत इति नास्ति विशेषो ङीम्ङीषोः। आद्युदात्तेषु तु ङीबनुदात्त एवावतिष्ठते। तस्मात् तदर्थं ङीब् विधेयः। ननु च ङीष् प्रकृतः। तत् कथं ङीप् शक्यते विधातुम्। नैष दोषः। ङीबेव ह्यत्र मण्डूकप्लुतिन्यायेनानुवर्त्तते। न ङीष्। अस्वरितत्वात्। वस्वीति। वस निवासे। भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उ इति (उण्,१।५) वर्त्तमाने धान्ये निदिति (उण्, १।९) च शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युप्रत्ययः (उण्,१।१०)। निच्च। नित्त्वादाद्युदात्तत्वं भवति। गुणवचनश्चायं वसुशब्दः। वसुत्वे गुणे वर्त्तित्वा तद्वति द्रव्ये वर्त्तत इति कृत्वा। पटुशब्दोऽप्याद्युदात्तत्वान् ङीपं प्रयोजयति। पट पट गतौ। हेतुमण्णिच्। फलिपाटिनमिमनिजनां गुक् पटिनाकिधतश्चेतुप्रत्ययः (उण्, १।१८)। पाटेश्च पटिरादेशः। धान्ये निदि (उण्,१।९) त्यनुवृत्तेर्नित्त्वादाद्युदात्तत्वम्। मृदुशब्दश्च प्रत्ययस्वरेणान्तोदात्त इति। तत्र ङीपो ङीषो वा विशेषो नास्ति। म्रद मर्द्दने। कुर्भ्रश्चेत्यतः (उण्, १।२२) कुरित्यनुवर्त्तमाने प्रथिम्रदिभ्रस्जां सम्प्रसारणं चेति (उण्, १।२८) कुप्रत्ययः। सम्प्रसारणञ्च भवति। खरुसंयोगोपधप्रतिषेध इति। खरुशब्दात् संयोगोपधाच्च प्रतिषेधः। स तु वेत्यस्य व्यवस्थितविभाषाविज्ञानादेव लभ्यत इति। वक्तव्यमिति। उत इति तपरकरणं दीर्घनिवृत्त्यर्थम्। तेन पटूरित्यत्र न भवति। पटुमिच्छतीति सुप आत्मनः क्यच् (३।१।८)। अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः। पटूय इति

स्थिते क्विप् । अतो लोप इत्यकारलोपः (६।४।४८)। लोपो व्योर्वलीति (६।१।६६) यकारस्य लोपः । इष्होत इति विशेषणोपादानादेव शास्त्रीय गुणस्यापरिग्रहः सिद्धः । न ह्यदेङां मध्ये कश्चिदुकारान्तोऽस्ति । लोके तु क्वचिदुपसर्जनं गुण इतरभिधीयते यथा गुणभूता वयमिति । अप्रधानभूता इति गम्यते । यस्य गुणस्य हि भावात् तद्दति द्रव्यशब्दे निवेशस्तदभिधाने त्वतलावित्यत्र विशेषणमात्रं गुणशब्देनोच्यते । तथाहि जातावपि भावप्रत्ययो भवति गोत्वमिति । इह तु यादृशो गुण इष्यते तादृशं परिभाषितुमाह— सत्त्वे निविशतेऽपैतीत्यादि । व्यवच्छेदफलकत्वात् सर्ववाक्यानां सत्त्व एवेत्यवधारणं द्रष्टव्यम् । सत्त्वं द्रव्यम् । तत्रैव निविशते । तदेवाश्रयतीत्यर्थः । अपैति । ततः सत्त्वादपगच्छति । यथाऽऽम्रफले श्यामता पूर्वमुपैति । रक्ततायामुपजातायां ततोऽपैति । पृथग्जातिषु दृश्यते । पृथग् नाना जातयो येषां ते पृथग्जातयः । अतस्तेषु पृथग्जातिषु दृश्यते । नहि गोत्वमश्वादिषु व्यक्तिषु दृश्यते । गोव्यक्तौ दृष्टः शङ्खादावपि शुक्लादिर्गुणो दृश्यते । एतेन सर्वेण जाति गुणो न भवतीत्युक्तम् भवति । नहि जातिर्द्रव्यमेवाश्रयति । यथा हि सत्ता द्रव्यगुणकर्मसु त्रिष्वपि वर्त्तते । द्रव्यत्वं द्रव्य एव । कर्मत्वं कर्मण्येव । गुणत्व' गुणएव । नापि द्रव्यवर्त्तिनी जातिः सत्त्वादपैति । जन्मनः प्रभृत्या विनाशात् तस्याधारद्रव्यापरित्यागात् । न जातिः पृथग्जातिषु दृश्यते । नहि गोत्वमश्वादिव्यक्तिषु दृश्यते । नाप्यश्वत्वं गवादिष्विति नास्ति जाते गुणत्वप्रसङ्गः । कर्मणस्तु स्यात् । तदपि हि सत्त्व एव निविशते यदा सक्रियं द्रव्यं भवति । अपैति च ततो यदा तु निष्क्रियं भवति । पृथग्जातिषु दृश्यत इति । घटपटादिषु दृश्यते । अतः कर्मणो गुणत्व मपाकर्त्तुमाह आधेयश्चेत्यादि । आधेयो निर्वर्त्त्य उत्पाद्य इत्यर्थो यथा पाक्यद्रव्येषु रक्तता गुणः । स ह्यग्निसंयोगेन निष्पाद्यते । अक्रियाजश्चेति । क्रिया व्यापारः । ततो जातः क्रियाजः । न क्रियाजोऽक्रियाजो नित्यो यथा ऽऽकाशादिषु महत्त्वादिर्गुणः । तदेवं गुणस्योत्पाद्यत्वानुत्पाद्यत्वप्रकारद्वयदर्शनेन कर्मणो गुणत्वनिवृत्तिः कृता भवति । तद्ध्युत्पाद्यमेव । नानुत्पाद्यम् । एवमपि द्रव्यस्य गुणत्वं प्राप्नोति तस्यापि ह्येते धर्मा विद्यन्ते ।

तथाहि तदपि यदि निविशते द्रव्य एवारम्भके ऽवयवभूते निविशते। अपैति च ततः। यथा शरीर मवयवीति। तद्धि हस्तपादादिष्ववयवेषु समवैति। तद्विनाशे च विनाशात् ततोऽपैति। पृथग्जातिषु दृश्यते। हस्त्यादिषु दृश्यते। द्रव्यस्यापि पूर्वोक्तं प्रकारद्वयमस्त्येव। अवयविद्रव्यस्योत्पाद्यत्वादाकाशादेस्तद्वदनुत्पाद्यत्वादित्यत आह सोऽसत्त्वप्रकृतिर्गुण इति प्रकृतिः स्वभावः। सत्त्वं द्रव्यं प्रकृतिर्यस्य स सत्त्वप्रकृतिः। न सत्त्वप्रकृतिरसत्त्वप्रकृतिः। यथोक्तैर्धर्मैर्युक्तो यो द्रव्यस्वभावो न भवति स गुणः। द्रव्यं द्रव्यस्वभावम्। अतो गुणो न भवति।

### ४५। बह्वादिभ्यश्च।

बह्वादिषु शक्तिः शस्त्र इति पठ्यते। तस्यायमर्थः। शस्त्रेऽभिधेये शक्तिशब्दाद्वा ङीष् भवति शक्तिः शक्ती। शस्त्र इति किम्? शक्तिः सामर्थ्यम्। अन्ये तु शक्तिशस्त्री इति शब्दद्वयं पठन्ति शक्तिः शक्ती शस्त्रिः शस्त्री। इतः प्राण्यङ्गादिति। इकारान्तात् प्राण्यङ्गवाचिनो वा ङीष् भवति। धमनिः। धमनी। इत इति किम्? समर्था ग्रीवा। प्राण्यङ्गादिति किम्? श्रेणिः। कृदिकारादक्तिनः। सर्वतोऽक्तिन्नर्थादित्येके। अस्यार्थो रात्रेश्चाजसावित्यत्रैव (४।१।३१) व्याख्यातः। यदि सर्वतोऽक्तिन्नर्थात् ङीष् भवति शकटादीनां गणे किमर्थं इकारान्तानां पाठः? तस्यैव प्रपञ्चार्थः। पद्धति शब्दस्याक्तिन्नर्थादिति प्रतिषेधे प्राप्ते पाठः। पदस्य हतिः पद्धतिः। हिमकाषिहतिषु चेति (६।३।५४) पद्भावः। चन्द्रभागान्नद्यामिति। चन्द्रभागशब्दान्नद्यामभिधेयायां वा ङीष् भवति चन्द्रभागा चन्द्रभागी नदी। नद्यामिति किम्? चन्द्रभागा नाम देवता। अह्नित्ययं शब्दः केवलः स्त्रियां न वर्त्तते। तस्मात् समासे तदन्त उदाहार्य्यः। दीर्घाण्यहानि यस्यां शरदि सा दीर्घाह्नी। ङीप्प्रतिषेधावप्यस्माद् भवतः। अनो (४।१।१२) बहुव्रीहेर्डाबुभाभ्यामन्यतरस्यामित्यपि (४।१।१३) डाप् भवति। अनउपधालोपिनोऽन्यतरस्यामिति (४।१।२८) वा ङीप् च। तेन चातूरूप्यं भवति (L)। यदि

(L) वस्तुतस्तु चातुःशब्द्यम्। न रूप्यात्। चातरूप्यं तु केवलं डावेव। दीर्घाह्नी दीर्घाह्नी दीर्घाहा दीर्घाहाः शरदिति। अन्नाद्यौ शब्दौ ङीप्ङीषन्तौ। तृतीयो डाबन्तः। चतुर्थस्तु तेषां प्रतिषेधेन पाक्षिको

बहुशब्दो गुणवचनस्तत् किमर्थमस्येह ग्रहणम्? यावता पूर्वेणैव सिद्धो ङीषित्यत आह तस्येत्यादि ।

## ४६ । नित्यं छन्दसि ।

अथ नित्यग्रहणं किमर्थम्? यावता पूर्वेणैव सिद्धे विकल्पे सत्यारम्भ-सामर्थ्यादेव नित्यं भविष्यतीत्यत आह नित्यग्रहणमुत्तरार्थमिति ।

## ४७ । भुवश्च ।

प्रभ्वीत्यादि । भुवः संज्ञान्तरयोरित्यतो (३।२।१७९) भुव इत्यनुवर्त्तमाने विप्रसंभ्यो ड्वसंज्ञायामिति (३।२।१८०) डुप्रत्ययः । तदन्तान् ङीष् । स्वयम्भूरिति । भवतेः क्विबन्तस्य रूपम् । ननु च भुव इति भूशब्दाद्दीर्घादियं पञ्चमी । ततश्च दीर्घादेव प्रत्ययेन भवितव्यम् । न ह्रस्वादित्यत आह ह्रस्वादेवेयं पञ्चमीति । तर्हि भुव इति निर्देशो नोपपद्यते । घेर्ङितीति (७।३।१११) गुणे कृते भोरिति निर्देशेन भवितव्यमित्यत आह सौत्रो निर्देश इति । छन्दसि वर्णव्यत्यय उक्तः । तेन तस्य गुणेऽकृत उवङादेशः कृत इति दर्शयति ।

## ४८ पुंयोगादाख्यायाम् ।

पुंयोगादिति । विभाषा गुणेऽस्त्रियामिति (२।३।२५) हेतौ पञ्चमी । योगः सम्बन्धः । आख्यायामिति । पञ्चम्यर्थे एषा । व्यत्ययो बहुलमिति (३।१।८५) सप्तमी । आख्यायतेऽनया प्रातिपदिकार्थ इति अत्याख्या । पुंस आख्या-भूतमिति । पुंसो वाचकभूत मित्यर्थः । तच्च पुंयोगाद्धेतोः सम्प्रति स्त्रियां वर्त्तते । न पुंसि । अतीत एव काले पुंसो वाचकमासीत् । अतो भूत-ग्रहणम् । एतदुक्तं भवति । यत् प्रातिपदिकं प्राक् पुंसो वाचकमभूत् पश्चात् तु पुंयोगाद्धेतोः स्त्रियां वर्त्तते तस्मात् ङीष् भवतीति । कथं पुनर्योगे गुण-भावमापन्नस्य पुंस आख्याग्रहणं विशेषणं युज्यते? स्त्रियामित्यनुवृत्तेः । स्त्रिया

---

नकारान्तः । ङीम्ङीबन्तयोः स्वरे भेदः । ङीबन्तस्य बहुव्रीहिस्वरेण पूर्वपदप्रकृतिस्वरत्वम् । ङीषन्तस्य त्वन्तोदात्तत्वमित्येतौ द्वौ भिन्नौ । दीर्घाङ्गीत्यत्र णत्वाभावश्च । वृत्तिकारमते युवादित्वात् (८।४।११, वा) । भट्टोजिमते तु क्षुभ्नादित्वात् (८।४।३९) ।

एव । नैतदस्ति । यो हि पुंयोगात् स्त्रियां वर्त्तते सोऽवश्यं स्त्रियमाचष्ट इति विशेषणमिदमनर्थकमेव स्यात् । पुंयोगस्य तर्हीदं विशेषणम् । न । असम्भवात् । न सम्भवत्येव हि तत् प्रातिपदिकं यत् पुंयोगाद्धेतोः पूर्वं स्त्रियां वर्त्तते पुंयोगस्य चाख्याभूतम् भवति । गणकादयो हि ये शब्दाः पुंयोगात् स्त्रियां वर्त्तन्ते ते सर्वे पुंस एव वाचकाः प्रागभूवन् । न पुंयोगस्य । ये तु पुंयोगादयः शब्दाः पुंयोगस्य वाचका स्ते पुंयोगात् स्त्रियां न वर्त्तन्त एव । न चेह कश्चित् तथाविधोऽन्यः प्रकृतः । नापि श्रूयते यस्याख्याग्रहणेन सम्बन्धः स्यात् । तस्माद् गुणभूतस्यापि पुंस एवानेन सम्बन्धो विज्ञायते । गणकीत्यादि । गणयतीति गणकः । ण्वुल् । प्रतिष्ठत इति प्रष्ठः । आतश्चोपसर्ग इति (३।१।१३६) कः । प्रष्ठोऽग्रगामिनीति (M) निपातनान् मूर्धन्यः (८।३।९२) । सर्व एते पुंसो वाचकाः । पुंयोगात्तु यदोत्तरकालं स्त्रियां वर्त्तन्ते तदैतेभ्यो ङीष् । पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवादिति । गणनादिक्रियास्वभावं यद् गणकादिशब्दानां प्रवृत्तिनिमित्तं तस्य पुंसि सम्भवः । न स्त्रियां नापि नपुंसके । तस्मात् पुंसि शब्दा एते । पुंसो वाचका एते शब्दा इत्यर्थः । कथं तर्हि स्त्रियां वर्त्तन्त इत्याह तद्योगादित्यादि । तद्योगस्तस्यायमितिसम्बन्धः स्वस्वामिभावलक्षणः । तस्मादेते पुंशब्दा अपि स्वभावतः स्त्रियां वर्त्तन्ते । यथैव ह्यसौ तद्योगात् स्त्रियां स्नानोद्वर्त्तनपरिषेकादील्ँ लभते तथा ताच्छब्द्यमपि । देवदत्तेति । अत्र देवदत्तशब्दसंज्ञकेन पुरुषेण

(M) There is some controversy regarding णत्व in the word अग्रगामिनि। काशिका gives ब्रषगामिणी as an illustration of कुमति च (8. 4. 13). My MSS—(the Bengali one is of 1715 Saka)—also spells अग्रगामिणि here, with the cerebral ण। In the MSS. of the प्रक्रियाकौमुदी about 500 years old, the cerebral ण is found in the word. On the other hand मैत्रेयरचित asserts that प्रष्ठोऽग्रगामिनि ( 8. 3. 92 ) had been given with the dental न by the सूत्रकार। In annotating the वार्त्तिक युवादीनां प्रतिषेधः, says he in his तन्त्रप्रदीप on the Rule प्रातिपदिकान्तनुम्विभक्तिषु च ( 8. 4. 11 ), that "युवादीनां प्रतिषेधो वक्तव्यमित्येवं णत्वप्रतिषेधे प्रष्ठोऽग्रगामिनीत्येवमादयो निर्देशाः प्रमाणम्।" So there is at least one classical पाणिनीय Grammarian who vouches for the dental न in the word अग्रगामिनि। But others maintain नावश्यंमाभिरक्षौति and therefore allows the Rule कुमति च (8. 4. 13.) to prevail.

योगाद् देवदत्तशब्दः स्त्रियां न वर्त्तते । किं तर्हि ? स्वतएव । तस्या ह्यीयं संज्ञा कृता । परिसृष्टा प्रजातेति । प्रसूतेत्यर्थः । निर्लुठितगर्भेति यावत् । परिसृष्टप्रजातशब्दौ स्त्रियां वर्त्तमानौ प्रसवनिमित्तमुपादाय प्रवर्त्तेते । परिसर्गः प्रजनः प्रसव इत्येकार्था एते शब्दाः । तस्य च प्रसवस्य पुंयोगो निमित्तम् । तेन विना तदभावात् । तस्मात् पुंयोगाद्धेतोः स्त्रियां वर्त्तेते इति । ननु पुंशब्दाख्य इति ईकारो न भवतीति । एते शब्दा इति । बहुवचनं येऽन्येऽप्येवंजातीयाः शब्दास्तानपेक्ष्य वेदितव्यम् । अन्यथा हि परिसृष्टप्रजातशब्दयोर्द्वित्वादेतौ शब्दाविति वक्तव्यं स्यात् । गोपालिकादीनां प्रतिषेधो वक्तव्य इति । सिद्धय इति वाक्यशेषः । गोपालिकादीनां शब्दानां सिद्धये ङीष्प्रतिषेधः । स तु वोतो गुणवचनादित्यतो (४।१।४४) वेत्यनुवृत्तेस्तस्य व्यवस्थितविभाषात्वमाश्रित्य प्रतिपाद्यः । सूर्य्याद्देवतायां चाब् वक्तव्य इति । ननु च ङीष एव प्रतिषेधो वक्तव्यः । ङीषि प्रतिषिद्धे टाब् भविष्यति । टापि च सूर्य्येति सिध्यत्येव । नैतदेवम् । यद्यपि हि रूपं सिध्यति स्वरस्तु न सिध्यति । यस्मात् सूर्य्यशब्दोऽयमाद्युदात्तः । तथाहि राजसूयसूर्य्येतयत्र ( ३।१।११४ ) क्यबन्तो निपातितः । ततः क्यपः पित्वादनुदात्तत्वम् । धातोस्तु सुवतेः सर्त्तेर्वा धातुस्वरेणाद्योदात्तत्वम् । तत्र टापि सत्यनुदात्तत्वं स्यात् । चापि तु सत्यन्तोदात्तता भवति । पित्करणं तु ङ्याप्प्रातिपदिकादित्यत्र (४।१।१) सामान्यग्रहणार्थम् । सूरीति । सूर्य्यस्य स्त्री मानुषी सूरी । ङीषेव भवति । सूर्य्यतिष्यागस्त्यमत्स्यानामिति (६।४।१४९) यलोपः ।

## ४९ । इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्य्याणामानुक् ।

येषामिति । इन्द्रादीनाम् । अन्येषाम्त्विति । हिमादीनाम् । अथ किमर्थमानुक् क्रियते ? अनुगेव नोच्येत । तेन सवर्णदीर्घत्वेन सिध्यति । न सिध्यति । अतो गुणे (६।१।९७) पररूपत्वं हि प्राप्नोति । अकारोच्चारणसामर्थ्यान्न भविष्यति । पररूपे हि नुगेव वक्तव्यः स्यात् । एवं तर्ह्यकारो-

च्चारणसामर्थ्याद् भविष्यति। स्वरसन्धिरेव न भवतीत्येवमपि विज्ञायते। तस्मान् नैवं विज्ञायीत्यानुगेव वक्तव्यः। अथवेन्द्रमाचष्ट इति तत्करोति तदाचष्ट इति णिचि णाविष्ठवत् प्रातिपदिकस्येति टिलोपः (ग,सू, १८६)। इन्द्रयतेः क्विप्। णिलोपः। इन्द्रः (N) स्त्रीन्द्राणीत्यत्र दीर्घस्याकारस्य श्रवणं यथा स्यादित्येवमर्थमानुको विधानम्। अनुक्ति हि सति दीर्घो न श्रूयेत। ननु च नैवात्र ङीषा भवितव्यम्। अत इत्यधिकारात्। दीर्घोच्चारणसामर्थ्याद् भविष्यति। हिमारण्ययोर्महत्त्व इति। महत्त्वेन युक्ता हिमादयः स्त्रीलिङ्गेनाभिसम्बध्यन्ते यदा तदा स्त्रीत्वविवक्षाया-मनयोः प्रत्ययागमयोर्विधानमित्येतदनेनाख्यायते। न तु स्त्रीप्रत्ययस्याय-मपवाद उच्यते। स्त्रीत्व एव हि प्रत्ययो भवति। यवाद् दोष इति। यवाद् दोषे गम्यमाने स्त्रियां ङीष् भवति। दुष्टो यवो यवानी। यवनाल्लि-प्यामिति। यवनानां लिपिरिति। तस्येदमित्यण्प्रसङ्गे (४।३।१२०) ङीष् विधीयते। स तु तदर्थस्य ङीषैव द्योतितत्वान्न भवति। आचार्य्यादणत्वञ्चेति। नेदमपूर्वं वक्तव्यम्। क्षुभ्नादिष्वस्य पाठात्। स्वार्थ एवायं विधिरिति। एवकारेण पुंयोगो व्यवच्छिद्यते। यदि हि पुंयोगे विधिरयं स्याच् शूद्राऽपि क्षत्रियस्य भार्य्या क्षत्रियाणीति स्यात्। तस्मात् स्वार्थे एवायं विधिः क्षत्रियैव क्षत्रियाणीति। पुंयोगे तु ङीषैव भवितव्यमिति। पूर्वसूत्रेण। लिच्चेति। कस्य तल्लित्त्वम्? आनुकः। तथाहि मुद्गलानीशब्दस्य (O) द्वितीय उदात्त आम्नाये पठ्यते। ङीषस्तु लित्त्वे तृतीय उदात्तः स्यात्।

## ५०। क्रीतात् करणपूर्वात्।

करणं पूर्वं यस्मिन्नित्यादिना करणपूर्वग्रहणं क्रीतग्रहणश्चोभयमप्येतत्

---

(N) इन्द्रः स्त्रीत्यत्रेन्द्र इति षष्ठ्यन्तं पदम्। इन्द्रिति रेफान्तात् प्रातिपदिकात्। प्रथमैकवचनेऽपीन्द्रिति रेफान्तमेव पदम। संयोगान्तस्य लोपे यणः प्रतिषेध इति ( ८।२।२३,वा ) रेफलोपाभावात्।

(O) My Brahmin readers will no doubt realise here a taunt by भट्टोजि on the न्यासकार—"यत्तु न्यासकृतोक्तं मुद्गलानीशब्दे द्वितीय उदात्त इति तद्वेदबाह्यत्वप्रयुक्तमेव। लितीति (६।१।१९३) प्रत्ययात् पूर्वस्य विधीयमानं सन्निहितमानुकं विहाय द्वितीये प्रवर्त्तत इत्यत्र बीजाभावात्। सकलवैदिकपाठविरोधाच्चेति (प्रौढमनोरमा 4.1.49)। न्यासकार was वेदबाह्य because he was a बौद्ध।

प्रातिपदिकस्य विशेषणमिति दर्शयति । पूर्वशब्दोऽयमवयववचनः । करण-मवयवो यस्मिन्नित्यर्थः । अथ क्रीतशब्दस्यैव करणपूर्वग्रहणं विशेषणं कस्मान्न विज्ञायते ? अशक्यत्वात् । क्रीतशब्दो ह्यवयववाचिनं वा पूर्वशब्दं गृहीत्वा विशिष्येत करणं पूर्वमस्मिन्निति ? व्यवस्थाशब्दं वा करणं पूर्वमस्मादिति ? तत्र प्रथमः पक्षो न सम्भवति । नह्यत्र क्रीतशब्दस्य करणवाचिशब्दान्तर-मवयव उपपद्यते । द्वितीयस्तु सम्भवति । किन्तु वाक्येऽपि स्यात् । अश्वेन क्रीतेति । अस्ति ह्यत्र क्रीतशब्दात् करणं पूर्वम् । प्रातिपदिके तु विशिष्यमाणे न भवत्येष दोषः । नह्यश्वेन क्रीतेत्येतत् करणावयवं क्रीतशब्दान्तं प्राति-पदिकम् । किं तर्हि ? वाक्यम् । तस्मात् प्रकृतं प्रातिपदिकं सामान्य-मेवावयववाचिना पूर्वशब्देन विशिष्यते । क्रीतशब्देनापि तदेव करणपूर्वं प्रातिपदिकम् । तेन तस्मिन् विशिष्यमाणे सामर्थ्यात् तदन्तविधिः प्रसज्येते-त्याह क्रीतशब्दान्तात् प्रातिपदिकादिति । वस्त्रक्रीती वसनक्रीतीति । अत्र गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वस्त्र-वसनयोः करणयोः क्रीतशब्देन कर्तृकरणे कृता बहुलमिति (२।१।३२) प्रागेव सुबुत्पत्तेः समासः । सुक्रीता दुष्क्रीतेति । गत्युपपदत्वात् प्रागेव सुबुत्पत्तेः कुगतिप्रादय इति (२।२।१८) समासः । दुष्क्रीतेत्यत्रेदुदुपधस्य चाप्रत्ययस्येति (८।३।४१) षत्वम् । टाबन्तेन समास इति । सुबन्तयोरेवेति वेदितव्यम् । टापि विहिते कृदन्ततायाः विहतत्वात् । अत्र किं टाप् क्रियतामुत विभक्ति-रिति ? अन्तरङ्गत्वाट्टाप् । पश्चाद् बहिरङ्गा विभक्तिरिति विभक्त्यन्तयोः समासः । अन्तरङ्गत्वं बहिरङ्गत्वं तु टाब्विभक्त्योर्ङ्याप्प्रातिपदिकादित्यत्र (४।१।१) प्रतिपादितम् । कृते तर्हि टापि ङीष् कस्मान्न भवतीत्याह अत इति चेत्यादि । कथं पुनः टाबन्तेन समासः सिध्यति यावता गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति प्रागेव कृदन्ततायां समासेन भवितव्यमित्यत आह गतिकारकोपपदानामित्यादि । कथं पुनर्बहुलं तदुच्यत इत्याह कर्तृकरण इत्यादि । कर्तृकरणे कृता बहुलमित्यनेन ( २।१।३२ ) हि गतिकारकोपपदानां कृद्भिः समासो विधीयते । स च बहुलग्रहणात् क्वचित् कृदन्तावस्थायां प्रागेव सुबुत्पत्तेः

क्वचिदन्यथा। तेन गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति बहुलं तदाचार्य्यैरुच्यते। ततश्च टाबन्तेनापि क्वचित् समासो लभ्यत इत्यभिप्रायः।

## ५१। क्तादल्पाख्यायाम्।

अभ्रविलिप्तीति। लिप उपदेहे। अस्मात् क्तः। अल्पैरभ्रैर्विलिप्तेत्यस्य मर्थविवक्षायां पूर्ववत् प्राक् सुबुत्पत्तेः समासः। अल्पशब्दस्तु गतार्थत्वान्न प्रयुज्यते। चन्दनानुलिप्तेति। बहुचन्दनानुलिप्तेत्यर्थः।

## ५२। बहुव्रीहेश्चान्तोदात्तात्।

शङ्खभिन्नीति। रदाभ्यामिति (८।२।३४) नत्वम्। निष्ठान्तस्य निष्ठेति (२।२।३४) पूर्वनिपाते प्राप्ते जातिकालसुखादिभ्यः परवचनमिति (२।२।३६,वा स न भवति। शङ्खादिशब्दा हि जातिवचनाः। अत एव हि जातिकाल सुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्ना (६।२।१७०) इत्यन्तोदात्तत्व भवति। गलकोत्कृत्तीति। कृती छेदने इत्यस्मात् क्तः। केशलूनीति केशाल्लुँनातीति। ल्वादिभ्य इति (८।२।४४) नत्वं चोदयति। पाद पतितेति। कर्त्तृकरणे कृता बहुलमिति (२।१।३२) तत्पुरुषसमासे ऽन्तोदात्तत्वम्। अन्तोदात्ताज्जातप्रतिषेध इति। अन्तोदात्ताद्बहुव्रीहे र्ङीषो विधाने जातशब्दान्तात् प्रतिषेधः। स चान्तग्रहणादेव लभ्यत इति न वक्तव्यम्। इहान्तग्रहणं न कर्त्तव्यमेव। विनापि तेन यथा वर्णादनु दात्तादित्यत्रानुदात्तान्तादिति (४।१।३९) विज्ञायते तथेहाप्यन्तोदात्तान्तादिति विज्ञास्यते। तदेवमर्थं क्रियते। अन्तोदात्त एव यो नित्यं बहुव्रीहिस्तस्मा यथा स्यात्। विकल्पेन योऽन्तोदात्तस्ततो मा भूदिति। इह च दन्तजात स्तनजातेत्यत्र वा जात (६।२।१७१) इति विकल्पेनान्तोदात्तत्वम्। अतोऽ विधिर्न भविष्यति। अथवोत्तरसूत्रे वाग्रहणमुभयोरपि योगयोः शेषः व्यवस्थितविभाषा च। तेन जातशब्दान्तान्न भविष्यति। अस्मिंस्तु व्याख्याने ऽन्तग्रहणं विस्पष्टार्थमेवेति वेदितव्यम्। पाणिगृहीतीत्यादिना विशे इति। सिद्धय इति शेषः। पाणिगृहीतीत्यादीनां सिद्ध्यर्थं विशेष ए

ङीब् भवति । न सर्व्वत्र । एतदपि व्यवस्थितविभाषया लभ्यते । विशेषस्तु पाणिग्रहणस्य वेदितव्यः । अग्निसाक्षिपूर्वकं भार्य्यार्थं यस्याः पाणिग्रहणं क्रियते सा पाणिगृहीतीति भवति । यथा कथञ्चिदिति । यथोक्तात् प्रकारादन्येन केनापि प्रकारेणेत्यर्थः । अबहुनञितयादि । बह्वादिपूर्वान् ङीष् न भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः । व्याख्यानन्तु तस्यैव वाग्रहणस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम् । जातिकालसुखादीतयादि । बहुकृतेतयत्र बहोर्नञ्वदुत्तरपदभूम्नीतयन्तोदात्तत्वम् ( ६।२।१७५ ) । अकृता सुकृतेतयत्र नञ्सुभ्यामिति ( ६।२।१७२ ) । मासजातेतयादिषु जातिकालसुखादिभ्योऽनाच्छादनात् क्त इति ( ६।२।१७३ ) ।

## ५३ । अस्वाङ्गपूर्वपदाद्वा ।

अस्वाङ्गपूर्वपदादिति । न स्वाङ्गमस्वाङ्गम् । तत् पूर्वं पदं यस्य बहुव्रीहेः स तथोक्तः । सारङ्गजग्धीति । अद भक्षणे । अदो जग्धिरितयादिना ( २।४।३६ ) जग्धयादेशः । झषस्तथोर्द्धोऽध इति ( ८।२।४० ) तकारस्य धत्वम् । झरो झरीति ( ८।४।६५ ) धलोपः । पलाण्डुभक्षितीति । भक्ष अदने । चुरादिणिच् । सुरापीतीति । घुमास्थादिसूत्रेणेत्त्वम् (६।४।६६) । सर्वत्र जातिकालसुखादितयादिनोत्तरपदान्तोदात्तत्वम् ( ६।२।१७० ) । वस्त्रच्छन्ना वसनच्छन्नेति । छद अपवारण इतयस्य चुरादिण्यन्तस्य क्तप्रतयये वा दान्तशान्तपूर्णेतयादिना ( ७।२।२७ ) छन्नशब्दो निपातितः । अनाच्छादनादित्युत्तरपदान्तोदात्तत्वप्रतिषेधे बहुव्रीहौ प्रकृत्या पूर्वपदमिति ( ६।२।१ ) प्रकृतिस्वरे कृतेऽनुदात्तं पदमेकवर्जमिति (६।१।१५८) शेषस्यानुदात्तत्वादिहान्तोदात्तत्वं नास्ति । पूर्वपदे एवात्राद्युदात्ते । एकं नित्स्वरेणापरं लित्स्वरेण । वस आच्छादने । ष्ट्रन्प्रत्ययः । वस्त्रम् । अस्मादेव धातोर्वसनम् । ल्युट् । बहुलमित्यादिना संज्ञायाञ्छन्दसि बहुलं ङीष् भवतीतेयतदर्थंरूपं व्याख्येयमित्यर्थः । (P) तत्र वाग्रहणस्य व्यवस्थितविभाषात्वादेव बहुलं संज्ञाच्छन्दसो

(P) In the Bengali Book ( MS. 12 ) the reading is different viz : तदेदं व्याख्यानम् । पूर्वसूत्रादनुवृत्तस्य चकारस्यानुक्तसमुच्चयार्थत्वाद यत्र संज्ञाच्छन्दसोरिष्यते तत्र भविष्यतीति ।

र्भविष्यति। नन्वत्र सूत्रेणैवानेनास्य बहुव्रीहित्वाद् भविष्यति ङीष्। किमर्थं तर्हीदमित्याह प्रह्वा चेत्यादि। विग्रहविशेषेण तत्पुरुषं दर्शयति।

## ५४। स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्।

चन्द्रमुखीति। चन्द्र इव मुखमस्या इति बहुव्रीहिः। अत्र च प्रथमानिर्दिष्टमित्यादिना (१।२।४३) मुखशब्दस्योपसर्जनसंज्ञा। अतिकेशीति। कुगतिप्रादय इति (२।२।१८) समासः। एकविभक्ति चेति (१।२।४४) केशशब्दस्योपसर्जनत्वम्। अङ्गेति। अङ्गादिभ्य उपसर्जनेभ्यो ङीष् भवतीत्यतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थम्? संयोगोपधत्वाद् ङीष् न प्राप्नोति। तदर्थमेतदर्थरूपं व्याख्येयम्। तदिदं व्याख्यानम्। उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः। तेनाङ्गादिभ्यः संयोगोपधेभ्यो ङीष् भवतीति। अद्रवमिति। मुखनासिकाभ्यां योऽभिनिष्क्रामति वायुः स प्राणः। प्राणोऽस्यास्तीति प्राणी। तत्र यत् तिष्ठति तत्प्राणिस्थम्। मुखादि स्वाङ्गमित्युच्यते। यद्येवं कफोऽपि स्वाङ्गं स्यात्। ततश्च बहुकफेत्यत्र ङीष् प्रसज्येतेत्यत आह अद्रवमिति। विशेषणोपादानान्न भवत्ययं प्रसङ्गः। कफस्य द्रवात्मकत्वात्। एवमपि ज्ञानं स्वाङ्गं भवेत्। प्राणिस्थत्वादद्रवत्वाच्च। ततश्च बहुज्ञानेत्यत्रापि ङीष् स्यादित्यत आह मूर्त्तिमदिति। असर्वगतानि यानि द्रव्याणि तेषां परिमाणं ह्रस्वादिमद् यत् तन् मूर्त्तिः। सा यस्यास्ति तन्मूर्त्तिमत्। न च तज् ज्ञानेऽस्तीति। निर्गुणत्वात्। गुणानाञ्च ज्ञानस्यात्मगुणत्वान् नास्य स्वाङ्गत्वप्रसङ्गः। येषामपि काठिन्यादिस्पर्शविशेषो मूर्त्तिस्तन्मतेनापि नैव ज्ञानं मूर्त्तिमद्भवति। नहि ज्ञानस्य स्पर्शोऽस्ति। एवमपि शोफस्य श्वयथुसंज्ञकस्य स्वाङ्गत्वं प्राप्नोत्येव। यथोक्तविशेषणविशिष्टत्वात्। ततश्च बहुशोफेत्यत्र ङीष् प्रसज्येतेत्यत आह अविकारजमिति। विकारो धातुवैषम्यम्। भूतप्रक्षोभ इत्यर्थः। ततो जातं विकारजम्। न विकारजमविकारजम्। तदेवं विशेषणोपादान-

---

प्रह्वद्विलूनेत्यत्र समासस्येत्यन्तोदात्तत्वम् (६।१।२२३)। किं पुनः कारणं न सिध्यति? येन संज्ञाछन्दसोर्बहुलं ङीष् भवतीत्येतदर्थरूपं व्याख्येयमित्याह प्रह्वा चेत्यादि। विग्रहविशेषेण तत्पुरुषं दर्शयति।

सामर्थ्यात् शोफस्यापि स्वाङ्गत्वं न प्राप्नोति । यदि प्राणिस्थं स्वाङ्गं भवतीत्यवं तर्हि रथ्यादिपतितानां केशानां स्वाङ्गत्वं न स्यात् । ततश्च दीर्घकेशी रथ्येति न सिध्यतीत्यत आह अतत्स्थमित्यादि । तस्मिन् प्राणिनि तिष्ठतीति तत्स्थम् । न तत्स्थमतत्स्थम् । अप्राणिस्थम् । एवमपि केशादि स्वाङ्गं भवति यदि तत्प्राणिनि पूर्वं दृष्टं भवति । प्रतिमावयवानां तर्हि मुखादीनां स्वाङ्गता न स्यात् । अप्राणिस्थत्वात् । ततश्च दीर्घमुखी प्रतिमेति ङीष् न स्यादित्यत आह तस्य चेत् तत् तथा युतमिति । तस्य प्राणिनस्तत् स्वाङ्गं यथा युतं येन प्रकारेण संस्थानविशेषेण सम्बद्धं तथा तेन प्रकारेणाप्राणिनोऽपि यदि सम्बद्धं भवत्येवमपि तस्य स्वाङ्गत्वं भवति । अथवा तस्य चेदं प्राणिन स्तत् स्वाङ्गं तथा यदि युतं सम्भवति यथा प्राणिन एवमपि स्वाङ्गं भवति । अन्येषां पाठस्तेन चेत् तत् तथा युतमिति । तेन प्राणिना येन प्रकारेण संस्थानविशेषादिना सम्बद्धं तथा यद्यप्राणिनापि सम्बद्धं भवत्येव मपि स्वाङ्गं भवति । अथवा तेनाप्राणिना तन्मुखादि यदि तथा युतं सम्बद्धं भवति यथा प्राणिनैवमपि स्वाङ्गं भवति । अथवा तेन चेद् मुखादीनां स्वाङ्गेन तदप्राणिस्थं द्रव्यं तथा यदि युतं भवति यथा प्राणिद्रव्य मेवमपि स्वाङ्गं भवतीति । सर्वथायमर्थः । यादृशं प्राणिनो मुखादि स्वाङ्गं तादृशमेव यद्यप्राणिनोऽपि भवति स्वाङ्गमेवमेव भवतीति ।

## ५५ । नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ।

बह्वज्लक्षण इत्यादि । नासिकोदरयोः । न क्रोडादिबह्वच इति (४।१।५६) बह्वज्लक्षणे प्रतिषेधे प्राप्ते वचनम् । शेषाणामसंयोगोपधादिति (४।१।५४) संयोगोपधलक्षणे । सहनञ्विद्यमानपूर्वलक्षणस्तु प्रतिषेधो भवत्येवेति । नासिकोदरयोस्तावदयं योगः पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते (प,६३) नोत्तरानित्यनन्तरमेव बह्वज्लक्षणं प्रतिषेधं बाधते । न सहादिलक्षणम् । ओष्ठादिष्वपि मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इति (प,६१) पूर्वमेव संयोगोपधलक्षणम् । तेनासौ भवत्येव । सहनासिकाऽनासिका विद्यमाननासिकेति । बिम्बोष्ठीति । बिम्बमिवौष्ठौ यस्याः सा

बिम्बोष्ठी । ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यमितगौपसंख्यानिकं (६।१।९४, वा ) पररूपत्वम् । ये तु बिम्बौष्ठीतगौकारं पठन्ति ते वृद्धिरेचीति (६।१।८८) वृद्धिं कुर्वन्ति । पुच्छाच्चेति वक्तव्यमिति । पुच्छान्ताच्च प्रतिपदिकान् ङीष् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । किमर्थम् ? संयोगोपधादपि पुच्छान्ताद् यथा स्यात् । वग्राख्यानन्तु चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कर्त्तव्यम् । कल्याणपुच्छीति । कल्याणं पुच्छमस्याः । कवरेत्यादि । कवरादिभ्यो यः पुच्छशब्दस्तदन्तान् ङीष् भवतीति । एषोऽपि ततएव चकाराद्वाग्रहणस्य वा व्यवस्थितविभाषात्वाल्लभ्यते । कवरं पुच्छे यस्याः सा कवरपुच्छी । एवं मणिपुच्छी विषपुच्छी शरपुच्छीति । सप्तमीविशेषणे बहुव्रीहाविति ( २।२।३५ ) पुच्छस्य पूर्वनिपातो न भवति । सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनमिति ( २।२।३५, वा ) वचनात् । उपमानात् पक्षात् पुच्छाच्चेति । नित्यमिति सम्बध्यते । एतदपि पूर्वोक्तात् कारणद्वयाल्लभ्यते । पुच्छाच्चेति वक्तव्यमित्यनेनैव सिद्धे पुनरिह पुच्छग्रहणं प्रपञ्चार्थम् । नितग्रार्थं वा । उलूकस्येव पक्षौ यस्या उलूकपक्षी सा । उलूकस्येव पुच्छं यस्याः सोलूकपुच्छी ।

## ५६ । न क्रोडादिबह्वचः ।

कल्याणक्रोडेति । क्रोडाशब्दः स्त्रीलिङ्गः । क्रोडाघाटाजिह्वाशिरोधरासङ्कुलास्रहामायेति लिङ्गकारिकायां पाठात् । कल्याणी क्रोडा ऽस्या इति विग्रहः । स्त्रियाः पुंवद् इति (६।३।३४) पुंवद्भावः । उत्तरपदस्य गोस्त्रियोरित्यादिना (१।२।४८) ह्रस्वः । ततः स्वाङ्गाच्चोपसर्जनादित्यादिना (४।१।७५) प्राप्तस्य ङीषोऽनेन प्रतिषेधः । ततष्टाप् । महाललाटेति । आन्महदित्यादिनात्त्वम् (५।३।४६) ।

## ५७ । सहनञ्विद्यमानपूर्वाच्च ।

सकेशेति । सह केशैर्वर्त्तत इति । तेन सहेति तुल्ययोग इति (२।२।२८) समासः । वोपसर्जनस्येति (६।३।८२) सहस्य सभावः । अकेशेति । अविद्यमानाः केशा अस्येति । नञोऽस्त्यर्थानां बहुव्रीहिर्वत्तरपद लोपश्चेति ( २।२।२४ )

विद्यमानशब्दलोपः । अथ पूर्वग्रहणं किम् ? सहनञ्विद्यमानादितेत्र्येवोच्येत । एतया हि पञ्चम्या स्वाङ्गे विशेष्यमाणे सहादिपूर्वता लभ्यत एव । नैतदेवम् । पञ्चमी हि परत्वेन स्वाङ्गं विशेषयेत् सहादिभ्यः परं यत् स्वाङ्गमिति । ततश्च सहादिभ्यः परेण स्वाङ्गेनान्यस्यापि समासे प्रतिषेधो विज्ञायते कल्याणविद्यमानमुखेति । विद्यमानञ्च तन्मुखञ्च विद्यमानमुखम् । कल्याणं विद्यमानमुखमस्या इति विग्रहः । अथवा विद्यमानं मुखं यस्य स विद्यमानमुखः । कल्याणो विद्यमानमुखो यस्या इति विग्रहः । पूर्वग्रहणे सति पूर्वशब्दस्यावयववाचित्वात् सहादिपूर्वत्वेन प्रातिपदिकं विशेष्यत इति सहाद्यवयवं यत् स्वाङ्गान्तं प्रातिपदिकं तस्मादिति विज्ञायमाने नात्र प्रतिषेधो भवति । नह्येतत् सहाद्यवयवमेव । किं तर्हि ? कल्याणशब्दावयवमिति-न भवत्यनिष्टप्रसङ्गः ।

## ५८ । नखमुखात् संज्ञायाम् ।

शूर्पणखेति । पूर्वपदात् संज्ञायामग इति (८।४।३) णत्वम् । अथ कथं शूर्पनखी राक्षसीति ? असंज्ञात्वात् । संज्ञायामित्युच्यते । न चेयं संज्ञा । तथाहि पूर्वपदादित्यादिना (८।४।३) णत्वं न भवति । यौगिकस्त्वेष तस्या व्यपदेशः । शूर्पाकारनखयोगात् । शूर्पमिव नखो यस्याः शूर्पनखीति ।

## ५९ । दीर्घजिह्वी च च्छन्दसि ।

अथ किमर्थमीकारान्तनिपातनं क्रियते ? न दीर्घजिह्वा छन्दसीत्येवोच्येत । एवमुच्यमाने प्रतिषेधप्रकरणात् प्रतिषेधो विज्ञायेतेति चेत् ? न । संयोगोपधत्वेन प्राप्त्यभावात् । प्राप्तिपूर्वकत्वाच्च प्रतिषेधानाम् । तस्मात् सामर्थ्याद् विधिरेव विज्ञास्यत इत्याह निपातनं नित्यार्थमिति । कल्पितत्वात् प्रकृतस्य ङीष इहापि विकल्पित एवासौ विज्ञायेत । निपातनात्तु नित्यो भवति ।

## ६० । दिक्पूर्वपदान् ङीप् ।

विधिप्रतिषेधेत्यादि । विधिविषयः स्वाङ्गमुपसर्जनमसंयोगोपधत्वम् । नासिकादि च प्रातिपदिकम् । प्रतिषेधविषयः संयोगोपधञ्च प्रातिपदिकम् ।

क्रोड़ादिबह्वचः। सहनञ्‌विद्यमानपूर्वाच्चेति। एतेनैतत्‌ सूचयति स्वाङ्गाच्चोप-सर्जनादसंयोगोपधादित्यादि विधिशास्त्र (४।१।५४) मिहानुवर्त्तते। न क्रोड़ादि-बह्वच (४।१।५६) इत्यादि प्रतिषेधशास्त्रम्‌। तेन यत्र विषये ङीष्‌ विहित स्तत्रैव ङीन्‌ विधेयः। यत्र तु विषये ङीष्‌ प्रतिषिद्ध स्तत्र ङीबपि प्रतिषिध्यत इति। यत्र ङीष्‌ विहित इत्यादिना विधिविषयापेक्षायाः फलं दर्शयति। कः पुन ङींपो ङीषो वा विशेषः? यावतोभयत्र तदेव रूपमित्याह स्वरे विशेष इति। ङीपो हि पित्त्वादनुदात्तत्वं भवतीति। ङीषस्तु प्रत्ययस्वरेणाद्युदा-त्तत्वम्‌। प्राङ्मुखीति। ऋत्विगादिसूत्रेणाञ्चतेः (३।२।५९) क्विन्‌। अनिदिता-मित्यनुनासिकलोपः (६।४।२४)। उगितश्चेति (४।१।६) ङीप्‌। प्राची। प्राच्यां दिशि मुखमिति (१) दिक्‌शब्देभ्यः सप्तमीपञ्चमीत्यादिनास्तातिः (५।३।२७)। अञ्चे र्लुगिति (५।३।३०) तस्य लुक्‌। लुक्‌ तद्धितलुकीति (१।२।४९) स्त्रीप्रत्ययस्यापि लुक्‌। तद्धितश्चासर्वविभक्तिरित्यव्ययत्वम्‌ (१।१।३८)। अव्ययादाप्सुप इति (२।४।८२) सुपो लुक्‌। प्राग्‌ मुखं यस्याः सा प्राङ्मुखी। यरोऽनुनासिकेऽनुनासिको वेति (८।४।४५) ङकारः। प्राङ्मुखेति। टाप्‌। ननु च ङीपा मुक्ते स्वाङ्गाच्चोपसर्जनादिति (४।१।७४) ङीषा भवितव्यम्‌? नैतदस्ति। आचार्य्यप्रवृत्तिर्ज्ञापयति। यत्रोत्सर्गापवादयोर्विभाषा तत्रापवादेन मुक्त उत्सर्गो न प्रवर्त्तत इति। यदयं पीलाया वेति (४।१।११८) वाग्रहणं करोति। यद्यत्राणा विकल्पितेन मुक्ते स्त्रीभ्यो ढगिति (४।१।१२०) ढकारेण भवितव्यं किं वाग्रहणेन? तस्मादस्माद्वाग्रहणादिदं ज्ञाप्यते यत्रोत्सर्गोऽपि विभाषा तत्रापवादेन मुक्त उत्सर्गो न प्रवर्त्तत इति। कथं पुनरुत्सर्गो विभाषा? महाविभाषया। प्राग्दीव्यतोऽणि (४।१।८३) त्यणुत्सर्गः। स्त्रीभ्यो ढगिति ढगपवादः (४।१।१२०)। तेन मुक्ते यद्यपि स्यादण्‌ किं वाग्रहणेन? नैत्येवं ब्रूयात्‌। तत्रौत्सर्गिकाणो निवृत्त्यर्थम्‌। इह न भवतीत्यादिना प्रतिषेधा-पेक्षायाः फलं दर्शयति। प्राक्क्रोड़ा प्राग्जघनेति। अत्र हि न क्रोड़ादिबह्वच (४।१।५६) इत्यस्याप्यनुवृत्ते ङीष्‌ न भवति। प्राग्गुल्फेति। अत्राप्यसंयोगो-पधादित्यस्य (४।१।५४)। अथ पदग्रहणं किमर्थम्‌? न दिक्पूर्वादित्येवोच्येत।

(१) मुखमित्यत्र वसतीति वङ्गीयपुस्तके पाठः।

अशक्यमेवं वक्तुम् । एवमुच्यमाने दिक्शब्द एव स्वरूपेण पूर्वपदं विज्ञायेत । पदग्रहणे तु सति सर्वे दिगभिधायिनः शब्दाः पूर्वपदत्वेन विज्ञायन्ते ।

६१ । वाहः ।

सामर्थ्यात् तदन्तविधेर्विज्ञानमिति । कर्मण्युपपदे ण्वेर्विधानात् । केवलस्य वाहः सम्भवो नास्तीति सामर्थ्यात् तदन्तविधि विज्ञायते । दित्यौहीति । दित्यं वहतीति भजो ण्विः (३।२।६२) । छन्दसि सहः (३।२।६३) । वहश्चेति (३।२।६४) ण्विः । ण्वेः सर्वापहारी लोपः । प्रत्ययलक्षणेनात उपधाया इति (७।२।११६) वृद्धिः । ङीष् । वाह ऊडिति (६।४।१३२) संप्रसारणसंज्ञको वकारस्योड् भवति । तत्र वसोः संप्रसारणमित्यतः (६।४।१३२) संप्रसारणानुवृत्तेः । ठकार एत्येधत्यूठ्स्विति (६।१।८९) विशेषणार्थः । संप्रसारणाच्चेति (६।१।१०८) पररूपत्वम् । एत्येधत्यूठ्स्विति (६।१।८९) पूर्वपदाकारेण सहैकादेशो वृद्धिः ।

६२ । सख्यशिश्वीति भाषायाम् ।

सखीति । सखिशब्दात् ङीप् । नास्याः शिशुरस्तीति वाक्यविशेषेण बहुव्रीहिं दर्शयन्नशिशुशब्दो यो बहुव्रीहिः स्तस्याशिश्वीति निपात्यते । नतु तत्पुरुषो यस्तस्येति दर्शयति । तत्पुरुषे हि न शिशुरशिशुरित्येवं भवति । सखेति । अनङ् सावित्यनङादेशः (७।१।९३) । नोपधायाः सर्वनामस्थाने चेति (६।४।७) दीर्घः । सख्यशिशुभ्यामित्येवं वक्तव्ये यन्निपातनं क्रियते तस्यैतत् प्रयोजनं तुल्यश्रुतेः शब्दान्तरस्यापि यथा स्यात् सह खेन या वर्त्तते सा सखीति ।

६३ । जातेरस्त्रीविषयादयोपधात् ।

जातेः प्रातिपदिकादिति सामानाधिकरण्यानुपपत्ते र्जातिवाचि यत् प्रातिपदिकं तदिहाभिधानेऽभिधेयोपचारं कृत्वा जातिशब्देनोक्तम् । अतएव वृत्तावाह जातिवाचि यत् प्रातिपदिकमिति । अस्त्रीविषयादिति । अनन्यत्वभावेऽपि विषयशब्दो वर्त्तते । अतएव वृत्तावाह न चेत् स्त्रियामेव नियतमिति । न स्त्रियामेव यस्य भावः किन्तु स्त्रियाञ्चान्यत्र च तदस्त्री-

विषयम्। जातिरित्युच्यते। केयं जातिर्नामेति प्रश्नस्योत्तर माह आकृति ग्रहणेत्यादि। आक्रियते व्यज्यतेऽनयेत्याकृतिः संस्थानमुच्यते। तथाहि दुराकृति र्दुःसंस्थानमुच्यते। स्वाकृतिश्च सुसंस्थानम्। गृह्यतेऽनेनेति ग्रहणम्। करणे ल्युट्। आकृतिर्ग्रहणं यस्याः साऽकृतिग्रहणा संस्थानव्यङ्ग्येति यावत्। ननु चाकृतिशब्दसामानाधिकरण्याद् ग्रहणशब्दस्य स्त्रियां वृत्तिरिति टिड्ढाणञिति ( ४।१।१५ ) ङीपा भवितव्यम्। तदन्तेन समासे कृते नद्यृतश्चेति ( ५।४।१५३ ) कप्। ततश्चाकृतिग्रहणीकेति प्राप्नोति। नैष दोषः। ग्रहणशब्दो हि पूर्वं करणसामान्ये व्युत्पादितः। पश्चाद् विशेषेणाभि-सम्बध्यते। तत्र पदान्तरसन्निधानेन य स्तस्य लिङ्गविशेषसम्बन्धः स च वहिरङ्ग इति सामान्यलिङ्गेनैवान्तरङ्गेण वाक्यं कृत्वा समासः क्रियते यथा मुखनासिकावचनोऽनुनासिक ( १।१।८ ) इत्यत्र। तदनेन लक्षणेन सामान्यरूपा गोत्वादिलक्षणा जातिरित्युक्तं भवति। गोत्वादयो हि विषाणादिमत् संस्थानव्यङ्ग्यत्वादाकृतिग्रहणाः। एतेन लक्षणेन ब्राह्मणत्वादयो जातिविशेषा न संगृहीताः। नहि ते संस्थानव्यङ्ग्याः। तदाश्रयस्य संस्थानस्याभिन्नत्वात्। यादृशं हि संस्थानं ब्राह्मणस्य क्षत्रियादेःसंस्थानमपि तादृशमेवेत्यतो द्वितीयं लक्षणमाह लिङ्गानाञ्चेत्यादि। यापि सर्व्वाणि लिङ्गानि न भजति साप्यसंस्थानव्यङ्ग्यापि जातिर्यथा ब्राह्मणत्वादिः। सा हि स्त्रीलिङ्गं पुंलिङ्गञ्च भजति ब्राह्मणो ब्राह्मणीति। नतु नपुंसक लिङ्गमित्यसर्वलिङ्गभाग् भवति। ब्राह्मणत्वादिष्वप्युपदेशाभिव्यङ्ग्यताश्रय-णीया। अन्यथा देवदत्तो देवदत्तेति लिङ्गद्वयं भजति। अत्रापि जातित्वं स्यात्। नचायं जातिशब्द इष्यते। किं तर्हि संज्ञाशब्दः। विध्यर्थञ्चेदम्। अतः सर्वलिङ्गभाजोऽपि पूर्वेण लक्षणेन जातित्वमस्ति यथा तट स्तटी तटमिति। सर्वलिङ्गं भजत इति सर्वलिङ्गभाक्। कर्मण्युपपदे भजो (३।२।६२) ण्विरिति ण्विः। ननुच लिङ्गापेक्षया सर्वशब्द उपपदे भजो ण्विप्रत्ययो न प्राप्नोति। उपपदाश्रयत्वादुपपदसमासश्च। असमर्थत्वात्। नैष दोषः। यथैव हि देवदत्तस्य गुरुकुलमित्यत्रासामर्थ्येऽपि समासो भवति गमकत्वात् तथैव मुभयमपि भविष्यतीति। सा च जातिः सकृदाख्यातनिर्ग्राह्येति। सकृदेकवार

माख्यातोपदिष्टा निर्ग्राह्या निश्चयेन ग्राह्या। एतेन जातिधर्मानेकत्वनित्यत्व-प्रत्येकपरिसमाप्तित्वलक्षणान् दर्शयति। सकृदेकवारं यस्मात् कृष्णे धवले वा गोपिण्डे आख्याता तद्विलक्षणेऽपि गोपिण्डे निर्ग्राह्या तस्मादेव नित्या प्रत्येकं परिसमाप्ता च। यदि ह्येका न स्यात् सकृदाख्याता गौरिति पिण्डान्तरे न गृह्येत। यदि च नित्या न भवेत् पिण्डविनाशे तस्या अपि विनाशात् पिण्डान्तरेण न गृह्येत। यदि च प्रत्येकं सर्वात्मना परिसमाप्ता न स्यात् तस्मिन्नपि तावत् पिण्डे सर्वात्मना न गृह्येत यत्राख्याता। किं पुनः पिण्डान्तरे। अंशेन हि परिसमाप्तौ सत्यामंश एव परिगृह्यते। न जातिः। न जात्यंशो जातिर्भवति। अनेकत्वप्रसङ्गात्। तृतीयं जातिलक्षणमाह गोत्रञ्चेत्यादि। अपत्यं पौत्रप्रभृति गोत्रमिति(४।१।१६२)गोत्रं पारिभाषिकम्। इह तु लौकिकमपि गोत्रमपत्यमात्रं गृह्यते। चरणमध्ययनभेदेनानेकधा। गोत्रञ्च चरणैः सह जातिर्भवति। गोत्रं नाड़ायनादि। यद्यपि नाड़ायनतादि सामान्यं गोत्रवदेव कल्पते तथापि तत् संस्थानव्यङ्ग्यं न भवति। सर्वलिङ्ग-भाक्त्वाच्च। नाड़ायनः पुमान्। नाड़ायनी स्त्री। नाड़ायनं नपुंसकमिति। अतो गोत्रस्य जातित्वप्रतिपादनसिद्धये गोत्रञ्चेत्युक्तम्। चरणशब्दस्त्वध्ययन-क्रियासम्बन्धेन प्रवृत्तत्वात् क्रियाशब्दएव जातिशब्द इत्यतस्तदर्थस्य जातित्व-प्रतिपादनाय चरणैः सहेत्युक्तम्। कुक्कुटी शूकरी मयूरीति। आकृतिग्रहणाया जाते रुदाहरणम्। ब्राह्मणी वृषलीति। असर्वलिङ्गभाजः। नाड़ायनी चाराय-णीति। गोत्रलक्षणायाः। नड़चरशब्दयोर्नड़ादिभ्यः फगिति (४।१।९९) फ-गपत्येऽर्थे। कठी बह्वृचीति। चरणलक्षणायाः। मुण्डेति। मुण्डगुणयोगात्। मुण्डो भवत्येष इत्यस्त्रीविषयः। मुण्डो देवदत्त इति पुरुषेऽपि मुण्डशब्दस्य वृत्तेः। न तु जातिशब्दः। किं तर्हि? गुणशब्दः। मक्षिकेति। सर्वदा स्त्रियामेव नियतत्वात् स्त्रीविषयो मक्षिकाशब्दः। क्षत्रियेति। गोत्रमिह जातिः। क्षत्राद् घ इति (४।१।१३८) गोत्रापत्ये घविधानादसर्वलिङ्गभाक्त्वाच्च जातित्वम्। क्षत्रिय इति च पुंस्यपि वृत्तेरस्त्रीविषयः क्षत्रियशब्दः। योपधस्तु। योपध-प्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेध इति। कथं पुनरेष लभ्यते? उत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात्। तेन हि हयगवयादिभ्यो ङीष्-

विधानादयं प्रतिषेधो न प्रवर्त्तते। मत्सीति। सूर्य्यतिष्यागस्त्यमत्स्यानामिति (६।४।१४९) यलोपः। मनुषीति। मनोर्जातावञ्यतौ षुक् चेति (४।१।१६१) यत्प्रत्ययः। षुगागमश्च। जातित्वं च पुनरेषां हयगवयादीनामाकृतिग्रहणाद् वेदितव्यम्।

## ६४। पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च।

ओदनपाकीति। ओदनस्य पाक इति षष्ठीसमासः। व्युत्पत्तिमात्रार्थं त्वसौ क्रियते। न त्वत्रावयवार्थो विद्यते। समुदाय एव ह्ययं कस्याञ्चिज् जातौ वर्त्तते। एवं शङ्कुकर्णीत्यादिष्वपि वेदितव्यम्।

## ६५। इतो मनुष्यजातेः।

अवन्ती कुन्तीति। अवन्तिकुन्तिशब्दाभ्यामपत्येऽर्थे वृद्धेत्कोशलाजादाञ् ञ्यङ् (४।१।१७१)। स्त्रियामवन्तिकुन्तिकुरुभ्यश्चेति (४।१।१७६) तस्य लुक्। ततो ङीष्। दाक्षी प्लाक्षीति। अत इञ् (४।१।९५)। सर्व्वत्र गोत्रं हि जातिः। विट्। दरदिति। विशो ऽपत्येऽर्थे जनपदशब्दात् क्षत्रियादञ् (४।१।१५८)। दरदो द्व्यञ्मगधादिसूत्रेणाण् (४।१।१७०)। अतश्चेति (४।१।१७८) तयोः स्त्रियां लुक्। इहापि गोत्रं जातिः। तित्तिरिरिति। अत्राकृतिग्रहणा जातिः। उदमेयीति। अत इञ् (४।१।९५)। गोत्रमिह जातिः। इञ उपसंख्यानमिति। इञन्तान् ङीष उपसंख्यानं कर्त्तव्यमित्यर्थः। किमर्थम्? अजात्यर्थम्। अजातिवाचिनोऽपीञन्ताद् यथा स्यात्। तत्रेदं प्रातिपादनम्। इत इति योगविभागोऽत्र क्रियते। तेनेञन्तादजातिवाचिनोऽपि भविष्यतीति। ततो मनुष्यजातेरित्ययं द्वितीयो योगः पूर्वयोगस्यानित्यत्वज्ञापनार्थः। तेन मनुष्यजातौ नित्यम्। अन्यत्र तु यथादर्शनम्। क्वचिदेव न सर्वत्र। सौतङ्गमीत्याद्युदाहरणम्। स्यादेतत्। अत इञिति (४।१।९५) गोत्रापत्य एवात्रेञ् विहितः। गोत्रञ्च जातिरेव। तत् किमुच्यत इञ उपसंख्यान-मजात्यर्थमिति? अत आह सुतङ्गमादिभ्य इत्यादि। सुतङ्गमेन निर्वृत्ता नगरीति वुञ्छणित्यादिना (४।२।८०) सुतङ्गमादित्वादिञ्। इत इति तपरकरणं दीर्घनिवृत्त्यर्थम्। तेन अवन्तीशब्दादयन्न भवति। अवन्ति-

मिच्छति । सुप आत्मनः क्यच् (३।१।८) । अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः । अवन्तीय इति स्थिते क्विप् । अतो लोप (६।४।४८) इत्यकारलोपः । पूर्वं लोपग्रहणादपृक्तलोपात् प्राग् लोपो व्योर्वलीति (६।१।६६ ) यलोपः । पश्चाद् वेरपृक्तस्येति (६।१।६७) वकारस्य । ततो ऽवन्तो इति स्थिते यदि तपरग्रहणं न क्रियेत ततोऽस्मादपि स्यात् । ततो हल्ङ्याब्भ्य इति (६।१।६८) सुलोपः प्रसज्येत । ततोऽवन्तोरिति न सिध्येत् ।

## ६६ । ऊङुतः ।

कुरूरिति । कुरोरपत्यं स्त्री । कुरुनादिभ्यो ण्यः (४।१।१७२) । स्त्रियाम-वन्तीत्यादिना (४।१।१७६) तस्य लुक् । गोत्रमिह जातिः । ब्रह्मबन्धूरिति । ब्रह्म बन्धुरस्या वीरो बन्धुरस्या इति बहुव्रीहिः । ब्रह्मबन्धूवीरबन्धूशब्दौ कस्या-श्चिदेव जातौ वर्त्तेते । जातित्वं पुनरसर्वलिङ्गभाक्त्वात् । तौ हि स्त्रीलिङ्ग-पुंलिङ्गाविव । न नपुंसकलिङ्गौ । उत इति तपरकरणं मुखसुखार्थम् । न तु दीर्घनिवृत्त्यर्थम् । ऊकारान्तस्य मनुष्यजातिवाचिनोऽभावात् । ङकार इत्यादि । ऊङो यदि ङकारो न क्रियेत तदा नोङ्धात्वोरित्यस्मिन्नपि ( ६।१।१७५ ) न कर्त्तव्यः स्यान् ङकारानुबन्धः । ङकारानुबन्धवतो ऽन्यस्य कस्यचिदूकार-स्याभावात् । ततश्च नोधात्वोरित्युच्यमाने यवाग्वा यवाग्वै इत्यत्राप्युदात्तयणो हल्पूर्वादिति ( ६।१।१७४ ) तृतीयादिविभक्तेरुदात्तत्वस्य प्राप्तस्य प्रतिषेधः स्यात् । ननु चार्थवत ऊकारस्य ग्रहणादर्थवद्ग्रहणेनानर्थकस्ये—(प, ७३) त्यनर्थकस्य न भविष्यति । यवागूशब्दो हि स्युवचिभ्यो न्युजागूजक्नुच इत्यागूच् प्रत्ययान्तो (उण्, ३।२६१) वुरत्यादितः । तत्रागूच्शब्द एव प्रत्ययार्थेनार्थवान् । ऊकारस्त्वनर्थक एव । नैतदस्ति । यस्मान्न वर्णग्रहणेष्वियं परिभाषा व्यवस्थिता । वर्णग्रहणञ्चेदम् । अतो नोपतिष्ठते । अथोपतिष्ठेतैवमपि कृषिचमितनिधनिसर्जिखर्जिभ्य ऊरि—(उण्, १।८१) तूरप्रत्ययस्य ग्रहणं स्यात् । ततश्च खर्ज्वा खर्ज्वै इत्यत्र प्रतिषेधः प्रसज्येत । तस्माद् विशेषणार्थो ङकारः कर्त्तव्यः । अथ दीर्घोच्चारणं किमर्थम् ? ननु उङेवोच्येत । अकः सवर्णे दीर्घ इति (६।१।१०१) दीर्घत्वेन हि दीर्घस्य ग्रहणं भवतीत्यत आह दीर्घो-च्चारणमित्यादि । यदि दीर्घो नोच्चार्येत तदा शेषाद् विभाषेति (५।४।१५४)

परत्वात् पचे कप् स्यात्। अतस्तद्बाधनार्थं दीर्घोच्चारणम्। कथं पुनर्दीर्घोच्चारणेन कपो निवृत्तिः? ब्रह्मा बन्धुरस्येति समासादनन्तरमूङ् क्रियतामुत कबिति? तत्र परत्वात् कप् स्यात्। दीर्घोच्चारणेनोकारप्रश्लेषात्। पुनर्विधानं तुल्यकालप्राप्तिकं स्वार्थिकतया समानजातीयं कब्विधिमेव निवर्त्तयति न स्वादिविधिम्। स्वादयस्तूङन्ताद् भवन्त्येव। तूङोरपि ग्रहणाज् ज्ञापकाद्वा। श्वशुरः श्वश्र्वेति (१।२।७२) निर्देशात्। तेन ब्रह्मबन्धूरिति नित्यमूकारान्त एव भवति। न तु कदाचित् कबन्तः। अध्वर्य्युरिति। अध्वरमिच्छतीति क्यच्। क्याच्छन्दसीतुप्रत्ययः(३।२।१७०)। कव्यध्वरपृतनस्यर्चि लोप (७।४।३९) इत्यकारलोपः। अप्राणिजातेश्चेत्यादि। अप्राणिजातिवाचिनश्च प्रातिपदिकादूङ्-प्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। ततेदं व्याख्यानम्। पङ्गोश्चेत्यत्र (४।१।६८) चकारोऽनुक्तसमुच्चयार्थः। तेनाप्राणिजातेश्च रज्ज्वादिवर्जिताद् भविष्यति। अलाबूः कर्कन्धूरिति। कः पुनरस्योङि सत्यसति वा विशेषः? यावतोभयत्र तदेव रूपं स एव स्वरः। तथाह्यलाबूशब्द उणादिषूकारप्रत्ययान्त एव व्युत्पाद्यते। कृषिचमितनिधनिसर्जिखर्जिभ्य ऊरिति (उण्, १।८१) वर्त्तमाने णिदिति (उण्, १।८५) च नञि लम्बेर्नलोपश्चेति (उण्, १।८७) नञ्पूर्वात् लबि अवस्रंसन इत्यस्मादूप्रत्ययः। इदितो नुमित्यनेन (७।१।५८) कृतनुमागमरूपस्य नकारस्य नलोपश्च विहितः। कर्कन्धूशब्दोऽपि नृतिशृध्योः कूरिति (उण्, १।९३) वर्त्तमाने ऽन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूरि-(उण्, १।९३) तूकारान्त एव व्युत्पादितः। तत् किमर्थमूङ् विधीयते? अलाब्वा। अलाब्वे इत्यत्र नोङ्धात्वोरिति (६।१।१७५) विभक्त्या-द्युदात्तत्वप्रतिषेधो यथा स्यात्। असति हि तस्मिन् यथा खलप्वौ खलप्व इत्यत्र स न भवति तथेहापि न स्यात्।

## ६७। बाह्वन्तात् संज्ञायाम्।

## ६८। पङ्गोश्च।

श्वशुरस्योकाराकारयोर्लोपश्चेति। अयं तु श्वशुरः श्वश्र्वेति (१।२।७१) निपातनादेव सिद्ध इति न वक्तव्यः।

## ६९ । ऊरूत्तरपदादौपम्ये ।

वृत्तोरुरिति । वृत्तौ परिमण्डला ऊरू यस्याः सा वृत्तोरुः । लाघवार्थ-मूर्वन्तादिति वक्तव्य ऊरूत्तरपदादितुच्यते यत्र केवल ऊरुशब्द उत्तरपदं तत्र यथा स्यादित्येवमर्थम् । अन्यथा हि यद्यूर्वन्तादितुच्येत तदा स्वामिन ऊरू स्वाम्यूरू । हस्तिन इव स्वाम्यूरू यस्याः सा हस्तिस्वाम्यूरुरित्य-त्रापि स्यात् । भवति ह्येतदूर्वन्तं प्रातिपदिकम् । उत्तरपदग्रहणे तु न दोषः । नह्येतदूरूत्तरपदं प्रातिपदिकम् । किं तर्हि स्वाम्यूरूत्तरपदम् ।

## ७० । संहितशफलक्षणवामादेश्च ।

संहितोरुरिति । संहितशब्दः संश्लिष्टवचनः संश्लिष्टोरुरित्यर्थः (R) । सहितसहाभ्याञ्चेति वक्तव्यम् । सहित सह इत्येताभ्यां परो य ऊरुशब्द-स्तदन्ताच्च प्रातिपदिकादूङ् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । चकारोऽत्र क्रियते । स चानुक्तसमुच्चयार्थः । तेन सहित-सहाभ्यामपि भविष्यति । सूत्र आदिग्रहणमूरूत्तरपदमित्यस्यानुवृत्ते लिङ्गम् । अन्यथा संहितादिप्रातिपदिकेभ्य एव प्रत्ययो भवतीतिरयोऽर्थो विज्ञायेत । सत्यां हि स्वरितत्वादेवानुवृत्तावेभ्यो यत्परमूरूत्तरपदं सत्यप्यस्मिन् मध्यपदे तत्रैव प्रत्ययः प्रसज्येत संहितस्वाम्यूरुशब्दात् । न संहितोरुशब्दात् । गुणभावादूरुशब्दस्य न स्यादेवेह विशेषणम् ।

## ७१ । कद्रुकमण्डल्वोश्छन्दसि ।

कद्रुशब्दो वर्णविशेषवचनः । ततो वोतो गुणवचनादिति ( ४।१।४४ ) ङीषः प्राप्तस्य खरुसंयोगोपधयोरिति ( ४।१।४४, वा ) प्रतिषेधे कृते प्रातिपदिकेनानभिधाने प्राप्ते वचनम् । कमण्डलुशब्दस्याप्यप्राणिवाचि-त्वादप्राणिजातेश्चारज्ज्वादीनामितूङि ( ४।१।६६, वा ) प्राप्ते छन्दसि नियमार्थम् । अथवायं रज्ज्वादिः । ततः प्रतिषेधे सति प्राप्त्यर्थं वचनम् ।

---

(R) संहितशब्दः संसृष्टवचनः । संसृष्टोरुरित्यर्थ इति वङ्गीयपुस्तके पाठः ।

७२ । संज्ञायाम् ।

७३ । शार्ङ्गरवाद्यञो ङीन् ।

वैदी । और्व्वीति । विदीर्व्वशब्दाभ्यामनृष्यानन्तर्य्यं इत्यादिना (४।१।१०४) ऽञ् । तदन्ताद् गोत्रत्वाज्जातित्वे जातिलक्षणे ङीषि प्राप्ते ङीन् विधीयते । स्वरे विशेषः । अणन्ता एत इति । गोतमशब्दादपत्येऽर्थे ऋष्यन्धकवृष्णीत्यादिना (४।१।११४) ऽण् । शेषेभ्यस्तु तस्यापत्यमिति (४।१।९२) । गोतमशब्दाद् गौरादिपाठाद् ङीषपि भवति । ढगन्ता एत इति । शुभ्रादित्वात् । कामण्डलेय इति । ढे (६।४।१४८) लोपोऽकद्र्वा (६।४।१४७) इत्युकारलोपः । एषां टिड्ढाणञिति (४।१।१५) ङीपि प्राप्ते वचनम् । वात्स्यायन इति । वत्सशब्दाद् गर्गादियञन्ताद् यञिञोश्चेति (४।१।१०१) फक् । मौञ्जायन इति । मुञ्जशब्दान्नड़ादिभ्यः फगिति (४।१।९९) फक् । जातिरिति । गोत्रलक्षणा । लौकिकमपि हि तत्र गोत्रं गृह्यते । युवापि च लोके गोत्रमुच्यते । तथाहि वक्तारो वदन्ति गार्ग्यायणो गोत्रेणेति । ढगन्त इति । कैकसशब्दस्य (S) शुभ्रादित्वात् । अढगन्ताञ् त्र्यङन्तादपि ताविति । कपिशिविशब्दाभ्यामपत्येऽर्थे वृद्धेत्कोशलाजादाञ् ञ्यङिति (४।१।१७१) ञ्यङ् । यङश्चाबिति (४।१।७४) चापि प्राप्ते वचनम् । एहिपर्य्येणीति । ईह चेष्टायामित्यस्मादाङ्पूर्वात् पर्य्याङ्पूर्वाच्च सर्वधातुभ्य इतीन्प्रत्ययः (उण्, ५।५०७) । बह्वादिषु कृदिकारादक्तिन इति पाठाद् ङीषि प्राप्ते (४।१।४५) वचनम् । यञन्त इति । गर्गादित्वात् । यञश्च (४।१।१६) प्राचां ष्फ स्तद्धित इति (४।१।१७) ङीपि ष्फे च प्राप्ते वचनम् । उदपान इति । उदपानादागत इति शुण्डिकादिभ्योऽणित्यण् (४।१।७६) । उत्सादिष्वयं पठ्यत इति । तत्राञि कृते नास्ति विशेषो ङीपो वा ङीनो वा । उभयत्रापि हि ञ्नित्यादि र्नित्यमित्याद्युदात्तेन (६।१।१९७) भवितव्यमित्येतन् मनसि कृत्वाह शुण्डिकाद्यण्सूत्रः प्रयोजयतीति । जातिरिति । अरालचण्डालयोरसर्वलिङ्गत्वादिति जातित्वम् । वतण्डस्य गौरादिलक्षणे (T) ङीषि प्राप्ते वचनम् । प्रत्यय·

(S) कैकसाशब्दस्येति पाठान्तरम् ।

(T) गोत्रत्वाज्जातिलक्षणे ङीषीति बङ्गीयपुस्तके पाठः ।

लक्षणेन यञश्च (४।१।१६) प्राचां ष्फ स्तद्धित इति (४।१।१७) ङीप् ष्फयोर्बाधनम्। वतण्डस्यापत्यं स्त्री वतण्डाच्चेति (४।१।१०८) यञ्। तस्य लुक् स्त्रियामिति (४।१।१०९) लुक्। भोगवद्गौरिमतोः संज्ञायामिति। संज्ञायां गम्यमानायाम् भोगवद्गौरिमच्छब्दाभ्यां ङीन् भवति। मत्वन्तत्वादुगितश्चेति (४।१।६) ङीपि प्राप्ते वचनम्। ननुच भोगशब्दो घञन्तः। गौरिशब्दोऽत इञितीञन्तः (४।१।९५)। तेन द्वावप्येतौ ञित्स्वरेणाद्युदात्तौ। ताभ्यां मतुप् पित्त्वादनुदात्तः। तथाच भोगवद्गौरिमद्भ्यां ङीपि ङीनि वा विहिते न कश्चिद् विशेषः। तत् किमर्थं ताभ्यां ङीन् विधीयत इत्यत आह घादिषु नित्यं ह्रस्वार्थमिति। घरूपकल्पेत्यादिषु (६।३।४३) नित्यं ह्रस्वो यथा स्यादिति ताभ्यां ङीनो विधानम् भोगवतितरा गौरिमतितरेति। यदि पुनरुगिल्लक्षणो ङीप् क्रियेत ततो नद्याः शेषस्यान्यतर (६।३।४४) स्यामित्यनुवर्त्तमान उगितश्चेति (६।३।४५) विकल्पेन ह्रस्वत्वं स्यात्। अथानेनापि ङीनि सति कस्मादेवोगितश्चेत्यन्यतरस्यां (६।१।४५) ह्रस्वत्वं न भवति? यावता भोगवद्गौरिमद्भ्यामुगिद्भ्यामेवायं ङीन् विधीयते। नैष दोषः। उगितश्चेति (६।३।४५) सूत्रमेवं व्याख्यायते। उगित्संशब्दनेन या नदी विहिता तस्या विकल्पेन ह्रस्वत्वं भवतीति। नचानेन सूत्रेण या विहिता सा नद्युगित्संशब्दनेन विहिता भवति। उगित्त्वानाश्रयणात्। संज्ञायामिति किम्? भोगवती गौरिमतीति। उगितश्चेति ङीप् (४।१।६)। अत्र च घादिषु विकल्पेनैव ह्रस्वो भवति भोगवतितरा भोगवतीतरा गौरिमतितरा गौरीमतीतरेति। नृनरयोर्वृद्धिश्चेति। नृशब्दस्य ऋन्नेभ्यो ङीबिति (४।१.५) ङीपि प्राप्ते वचनम्। नरशब्दस्याजाद्यत इति (४।१।४) टापि प्राप्ते जातित्वान् ङीषि वा। जातिलक्षणाकृतिग्रहणाद्। वृद्धिश्च तयोर्भवति। सा च नृशब्दस्यालोऽन्त्यपरिभाषया (१।१।५२) ऋकारस्य स्थाने भवति। नरशब्दस्य यस्येति (६।४।१४८) लोपे कृते सत्यकारस्य। ननु चानन्त्यविकारेऽन्त्यसदेशस्येति (प, १०४) रेफस्यैव भवितव्यम्। नैष दोषः। वृद्धेर्याऽन्तरतमा प्रकृति स्तत्र षष्ठी। यत्र षष्ठी तत्रादेश इत्यकारःस्थानी ज्ञायते। पुत्रशब्दमत्र केचित् पठन्ति। न स केवलः स्त्रियां वर्त्तत इत्ययं समासान्तो

दृश्यते । समासान्ते च वर्त्तमानो दुहितृशब्देन समानार्थो भवन् स्त्रीलिङ्गो
भवति प्रद्योतपुत्त्रो शैलपुत्त्रीति । यथायोगमिति । यथासम्भवम् ।

७४ । यङश्चाप् ।

पकारोऽत्र ङ्याप्प्रातिपदिकादित्यत्र (४।१।१) सामान्यग्रहणार्थः । चकार-
स्तदविघातार्थः । एवमुभयोरन्यत्र चरितार्थयोरनुदात्तौ सुप्पिताविति (३।१।४)
येतद् बाधित्वा परत्वाच् चित (६।१।१६३) इत्यन्तोदात्तत्वं चापो भवति ।
अयङः ष्यङश्च सामान्यग्रहणमेतदिति । विशेषकरानुबन्धानुत्सृज्य यत्सामान्यं
यङ्मात्रं तस्येदं ग्रहणम् । कथं पुनः सामान्यग्रहणं युज्यते ? यावता अयङ
एव तत्र ग्रहणं युक्तम् । तथाहि सोऽपत्ये विधीयमानः स्त्रीत्वं वक्तुमसमर्थ
इति स्त्रीप्रत्ययमपेक्षते । नतु ष्यङ् । तस्य स्त्रियामेव विधानात् । नैतदस्ति ।
यदि हि सामान्यग्रहणं न स्यात् ष्यङो ङित्करणमनर्थकं स्यात् । तस्य ह्यत्र
सूत्रे सामान्यग्रहणमेव प्रयोजनम् । नान्यत् किञ्चित् । तस्मात् ङित्करण-
सामर्थ्यात् ष्यङोऽपि ग्रहणं भवति । आम्बष्ठ्येत्यादि । आम्बष्ठसौवीरकौशल-
शब्देभ्योऽपत्येऽर्थे वृद्धेत्कोशलाजादाञ् ञ्यङिति (४।१।१७१) अयङ् । तदन्ता-
च्चाप् । कारीषगन्ध्येति । एतत् स्वादिसूत्रे ( ४।१ २ ) व्युत्पादितम् ।
वाराह्येति । वराहशब्दादत इञ् (४।१।९५) । बालाक्येति । बलाकाशब्दाद्
बाह्वादिलक्षण इञ् । उभयत्राणिओरनार्षयोरित्यादिना(४।१।७८) ष्यङादेशः ।
तदन्ताच्चाप् । शार्कराक्ष्येत्यादि । शर्कराक्षपूतिमाषगोकक्षशब्देभ्यो गर्गादि-
यञन्तेभ्यश्चाप् ।

७५ । आवट्याच्च ।

ङीपि प्राप्त इति । यञश्चेत्यनेन (४।१।१६) ।

७६ । तद्धिताः ।

युवतिरिति । तद्धितसंज्ञायां सत्यां कृत्तद्धितेत्यादिना (१।२।४६) प्राति-
पदिकसंज्ञा भवति । अथ तद्धिता इति न सम्भवति बहुवचननिर्देशः । यथैव हि
प्रत्यय (३।१।१) इत्येकवचननिर्द्देशेऽपि वक्ष्यमाणानां बह्वनामपि सनादीनां
सर्व्वेषां सा संज्ञा भविष्यति तथात्राप्येकवचनेनैव निर्देशः कर्त्तव्य इत्यत आह

बहुवचनमित्यादि । एकवचन एव कर्त्तव्ये यद् बहुवचनं क्रियते तस्यैतत्-प्रयोजनम् । अनुक्ता ये तद्धिता लक्षणवाक्यैरनभिहितास्तेषामपि परिग्रहो यथा स्यात् । ततः पृथिव्या ञाञावित्यादि (४।१।८५, वा) न कर्त्तव्यं भवति । बहुवचनेनैवानुक्ततद्धितपरिग्रहार्थेन तेषां सिद्धत्वे महत्याः संज्ञायाः करण एतत् प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत तेभ्यो हितास्तद्धिताः । तदित्यनेन लौकिका वैदिकाश्च शब्दाः प्रत्यवमृश्यन्ते । तेषां व्युत्पाद्यत्वेन प्रकृतत्वात् । तेन तत्रैव भवन्त्यणादयो यत्र च भवन्त स्तेषामुपकारिणो भवन्ति । नान्यत्रेति । तेनाभिधानलक्षणत्वं तद्धितानामुपपन्नं भवति । अथ तद्धिताधिकारः स्त्रीप्रत्ययानामादित एव कस्मान्न क्रियते ? किमेवं सति भवति ? ज्याबन्तमपि तद्धितान्तत्वात् प्रातिपदिकमिति ज्याप्प्रातिपदि-कादित्यत्र(४।१।१)ङ्याब्ग्रहणं न कर्त्तव्यं भवति । प्राचां ष्फ स्तद्धित(४।१।१७) इत्यत्र च तद्धितग्रहणम् । यस्येति (६।४ १४८) चेतीकारग्रहणञ्च । तद्धित इत्येवं सिद्धत्वात् । अशक्यमेवं कर्त्तुम् । एवं हि क्रियमाणे तत्र ङ्याब् ग्रहणस्य यत् पूर्वं प्रयोजनमुक्तं तन्न स्यात् । ङीन्ङीष्ङीनाञ्च ङकारस्येत्संज्ञाऽतद्धित इति (३।१।८) प्रतिषेधात् । इह च पट्वीत्योर्गुण इति (६।४।१४६) गुणः स्यात् । तस्माद् यथान्यासमेवास्तु ।

## ७७ । यूनस्तिः ।

ङीपोऽपवाद इति । नकारान्तत्वाद्यन्नेभ्यो ङीबिति (४।१।५) प्राप्तस्य । अथ दन्तादितो मनुष्यजातेरिति (४।१।६५) ङीष् कस्मान्न भवति ? अमनुष्यजाति-त्वात् । नहि युवतिशब्दो मनुष्यजातिवचनः । किं तर्हि ? वयोवचनः । तथाहि यौवनावस्थायामेव स वर्त्तते । न बाल्यवृद्धत्वावस्थायाम् । न चैवंविधा जातिशब्दाः । ते हि सर्वावस्थासु व्यक्तिषु जातिनिबन्धना वर्त्तन्ते गो-शब्दादिवत् ।

## ७८ । अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।

इहाणिञोरिति प्रत्ययमात्रं वा गृह्यते ? तदन्तो वा समुदायः ? तत्र यद्याद्यः पक्ष आश्रीयेत गुरूपोत्तमयोरिति विशेषणं नोपपद्येत । नह्यणि-

ओर्गुरूपोत्तमत्वं सम्भवति। कस्य तर्हि ? तदन्तस्य समुदायस्य। तस्माद् द्वितीयः पक्ष आश्रयितुं युक्त इति मत्वाह गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोरिति। यदि तर्हि समुदायस्याणन्तस्येञन्तस्य चेदं ग्रहण मनार्षयोरिति विशेषणं न प्रकल्प्यते। समुदायस्य ऋषावेव विधानात्। अणिञोस्तु प्रकल्प्यत एतद्विशेषणम्। तयोर्ऋषावन्यत्र च विधानात्। गोत्र इत्यत्रापि विशेषणमणिञोरेव युक्तम्। न समुदायस्य। तथा ह्यपत्यं पौत्रप्रभृति गोत्रमिति (४।१।१६२) पारिभाषिकं गोत्रमिह गृह्यते। तत्र चाणिञावेव विहितौ। न समुदायः। नैष दोषः। समुदायस्यैते विशेषणे न सम्भवत इति सामर्थ्यादेकदेशयोरणिञोर्विज्ञायेते। अतएव ह्युक्तावाह गोत्रे यावणिञौ विहितावनार्षाविति। इहायं ष्यङादेशो वा स्यात् ? प्रत्ययो वा ? ननु च षष्ठीनिर्देशादादेशेनैवानेन भवितव्य मिति। असन्दिग्धमेतत्। तदयुक्ता द्वितीयपक्षाशङ्का। नैतदस्ति। प्रत्ययविधावपि षष्ठीनिर्देशो दृश्यते यथा गापोष्टक् (३।२।८) व्रीहिशाल्योर्ढगिति (५।२।२)। तस्मात् प्रत्ययपक्षशङ्कापि युक्तैव। तत्र यदि प्रत्ययः स्यादौदमेघ्येय इति न सिध्येत्। उदमेघस्यापत्यं स्त्री। अतइञ् (४।१।९५)। तदन्तादनेन ष्यङ्। इकारस्य यस्येति लोपः (६।४।१४८)। यङश्चाप्। (४।१।७४) औदमेघ्या। तस्या अपत्यमिति स्त्रीभ्यो ढक् (४।१।१२०)। एयादेशः। तस्मिन्नापत्यस्य च तद्धितेऽनातीति यलोप (६।४।१५१) इष्यते। स न प्राप्नोति। अनापत्ययकारत्वात्। ननु च हलस्तद्धितस्येति (६।४।१५०) चेत् ? न। ईतीत्यत्रानुवर्त्तते। आदेशपक्षे त्वणिञोरपत्यत्वात् तदादेशस्यापि ष्यङः स्थानिवद्भावेनापत्यत्वमिति सिध्यति यलोपः। तस्मादादेशपक्ष एव साधुरित्यभिप्रायेणाह ष्यङादेशो भवतीति। ननु चादेशपक्षेऽप्यौडुलोम्येति न सिध्यति। लोमशब्दो बाह्वादिषु पठ्यते। तस्य केवलस्यापत्येन संयोगो नास्तीति तदन्तः समुदायो गृह्यते। तत उडुलोम्नो ऽपत्यं स्त्री। बाह्वादित्वादिञि कृते तस्य च ष्यङादेशः। तत्र न स्तद्धित इति (६।४।१४४) टिलोप इष्यते। स च न प्राप्नोति। ये चाभावकर्म्मणोरिति (६।४।१६८) प्रकृतिभावात्। प्रत्ययपक्षे त्विञो व्यवहितत्वात् ष्यङः प्रकृतिभावो नास्तीति भवति टिलोपः। ननु यस्येति चेति (६।४।१४८)

लोपे कृते नास्ति व्यवधानम्। अचः परस्मिन् पूर्वविधाविति (१।१।५७) लोपस्य स्थानिवद्भावादस्त्येव। आदेशपक्षेऽप्यदोषः। आनुपूर्व्या सिद्धत्वात्। नह्यकृते लोपे गुरूपोत्तमत्वं सम्भवति। तत्र प्रागेव ष्यङ इञि तस्यैव टिलोपः। ततो गुरूपोत्तमता। ततः ष्यङित्यानुपूर्व्या सिद्धत्वम्। अयं तर्ह्यादेशपक्षे दोषः। अनेकाल्त्वात् सर्वादेशः प्राप्नोति। ङिच्चेत्यन्तस्य (१।१।५३) प्राप्नोतीति चेत्? नैतदस्ति। अपवादप्रतिषेधाद्धि सर्व्वादेशः प्राप्नोतीति। (१।१।५३) ङिच्चेत्यन्तादेशः क्रियताम्? आहोस्विदनेकाल्त्वात् सर्वादेशः? तत्र परत्वात् सर्वादेशः प्राप्नोति यथा तुह्योस्तातङ्ङाशिष्यन्यतरस्यामित्यत्र (७।१।३५) आह निर्दिश्यमानस्येत्यादि। यथा पाच्छब्दस्य पदित्ययमादेशो विज्ञायते न पाच्छब्दान्तस्य समुदायस्य तथायमपि निर्दिश्यमानयोरणिञोरेव विज्ञायते। तत् क्व तर्हि सर्वादेशेन भवितव्यम्? यत्र समुदायात् षष्ठ्युच्चारिता यथा तुह्योरिति। ङकारः सामान्यग्रहणार्थ इति। असति हि तत्र यङश्चाबित्यत्र (४।१।७४) वृद्धेत्कोशलाजादाञ्‌ (४।१।१७१) ञ्यङित्यस्यैव ग्रहणं स्यात्। न ष्यङः। षकारस्तदविघातार्थ इति। तत्र ह्यसत्येकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येत्यस्यैव ग्रहणं स्यात्। न ञ्यङः। उत्तमशब्दोऽयमस्त्येव व्युत्पन्नं तमबन्तं प्रातिपदिकम्। अस्त्यव्युत्पन्नम्। तत्र यदि व्युत्पन्नस्येदं ग्रहणं स्याद् वाराह्येति न सिध्येत्। यस्माद् व्युत्पत्तिमानुत्तमशब्दश्चतुष्प्रभृतिष्ववतिष्ठते। तथा ह्युच्छब्दादुद्गताभिधायिनस्तमप् प्रत्ययोऽतिशायने विधीयते। अनुद्गतस्यापेक्षयोद्गतो भवति। त्रिषु च द्वावुद्गतावेको ऽनुद्गतः। नच द्वयोरयं चोद्गत इत्ययमनयोरतिशयेनोद्गत इत्यर्थविवक्षायां तमबुत्पद्यते। तरपा विशेषविहितेन बाधितत्वात्। चतुर्षु तु त्रय उद्गताः। एकोऽनुद्गतः। तत्र त्रीनुद्गतानपेक्ष्यायञ्चोद्गतः। अयञ्चैषामतिशयेनोद्गत इत्यर्थविवक्षायां तमबुत्पद्यते। तस्माच्चतुर्ष्वेव प्राप्नोति। तत्र चोत्तमशब्दस्य स्वरूपसिद्धेः। ततश्च वाराह्येति न सिध्येत्। नह्यत्र चत्वारः सन्तीत्येतदालोच्याव्युत्पन्नोऽयमिहोत्तमशब्दो गृह्यत इति दर्शयन्नाह उत्तमशब्दः स्वभावादित्यादि। अव्युत्पन्न एव ह्युत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमाह। न व्युत्पन्नः। स हि चतुष्प्रभृतीनामन्त्यमाह। तस्मादुत्तमशब्दः स्वभावादित्यादिना ग्रन्थेना-

वृत्यन्नस्योत्तमशब्दस्येह ग्रहणमिति दर्शितम् भवति। तदेवमवृत्यन्नस्य ग्रहणे वाराहीतेरतदपि सिद्धं भवति। टिड्ढाणञिति (४।१।१५) ङीबेव भवतीति। प्रमादपाठोऽयम्। यथैव हि वैदीति जातित्वादजन्ताच्छार्ङ्गरवाद्यञो ङीनिति (४।१।७३) ङीन् भवति तथेहापि ङीनैव भवितव्यम्। जातित्वं तु गोत्रत्वाद्। तस्माद् शार्ङ्गरवाद्यञो ङीनिति (४।१।७३) ङीनैव भवतीत्ययमेवात्र पाठो द्रष्टव्यः। वाशिष्ठी वैश्वामित्रीति। ऋष्यन्धकेत्यादिना (४।१।११४) ऽण्। औपगवी कापटवीति। उपगुकपटुशब्दाभ्यामौत्सर्गिकोऽण् (६।४।१४६)। औगुणः। आहिच्छत्री। कान्यकुब्जीति। तत्र जात इत्यण् (४।३।२५)।

७९। गोत्रावयवात्।

गोत्रञ्च तदवयवश्चेति गोत्रावयवः। इह त्वभिधानेऽभिधेयोपचारं कृत्वा तदभिधायिप्रातिपदिकं गोत्रावयवशब्देनोक्तम्। ननु चैवं विग्रहे विशेषणत्वादवयवशब्दस्य नीलोत्पल इव नीलशब्दस्य पूर्वनिपातः स्यात्। राजदन्तादेराकृतिगणत्वाद् विशेषणस्य परनिपातो भविष्यति। गोत्रं पुनरिह लौकिकं गृह्यते। न पारिभाषिकम्। लोके च प्रधानभूत आदिपुरुषः स्वप्रभवस्यापत्यसन्तानस्य संज्ञाकारी गोत्रमित्युच्यते। तथाहि भरतो नाम कश्चिदाद्यः प्रधानः पुरुषोऽभूत्। तेन सर्व एव तत्पूर्वकाः पुत्रपौत्रादयो भरता इति व्यपदिश्यन्ते। अवयवशब्दोऽयमस्त्येवैकदेशे। तत्सम्बन्धादवयवीति समुदाय उच्यते। अस्ति च पृथग्भावे। अवयुतिरवयवः। पृथग्भूत इत्यर्थः। यद्यपि यौतिर्मिश्रणे पठ्यते तथाप्यनेकार्थत्वाद् धातूनामवपूर्वः पृथग्भावमाचष्टे। अस्यप्रधाने यथा कुलावयवोऽयं संघावयवोऽयमिति। कुलस्य संघस्य चाप्रधानभूतोऽयमिति गम्यते। तत्र यद्येकदेशवाची गृह्यते तदुपादानमनर्थकं स्यात्। गोत्रादित्येव वक्तव्यम्। गोत्रावयवोऽपि हि गोत्रं भवति यथा चीरावयवः चीरमिति। अथापि पृथग्भावे गोत्रादन्यत्र वर्त्तमानो गृह्यत एवमपि पुणिकादिभ्यो विहितयोरणिञोः ष्यङादेशो न स्यात्। पुणिकादीनां गोत्रवचनत्वात्। क्व तर्हि स्यात्? यत्र गोत्रवाचिनः प्रातिपदिकादणिञो विहितौ। अनिष्टञ्चैतत्। तस्यैकदेशवाचिनि पृथग्भाव-

वाचिनि वावयवशब्दे दोष इत्यत्राप्रधानवाच्येव गृह्यते । गोत्रावयवा इति । पुणिकादिश्रुतीनामेतद्विशेषणम् । अप्रधानगोत्राभिधायिन्य इत्यर्थः । गोत्राभिमता इति । गोत्रमित्येवमभिमता गोत्राभिधायिन्य इत्येवं लोके प्रसिद्धाः । न पुन र्गोत्राध्याये पठिता इत्यर्थः । अतएव तासामप्राधान्यम् । गोत्राध्यायेऽपठितत्वात् । कुलाख्या इति । कुलं गोत्रम् । आख्यायत आभिरित्याख्याः । आतश्चोपसर्ग (३।३।१०६) इत्यङ् । कुलस्याख्याः । इह पुणिकादिश्रुतिभिर्हि कुलमाख्यायते पुणिकोऽयं गोत्रेणेतिएवमादि । तत इति । यथोक्तविशेषणविशिष्टाभ्यः पुणिकादिश्रुतिभ्यः । यदि तर्हि ततो गोत्रविहितयोरणिञोः ष्यङ् भवत्येवं सत्यपार्थकोऽयं योगः । पूर्वेणैव सिद्धत्वादित्यत आह अगुरूपोत्तमार्थ आरम्भ इति । पौणिक्येत्यादि । पुणिकभुणिकमुखरशब्देभ्योऽत इञितीञन्तस्य (४।१।९५) ष्यङ्चाप् ।

## ८० । क्रौड्यादिभ्यश्च ।

क्रौडीति । क्रौडीतिएवमादिभ्यश्च स्त्रियां ष्यङ्प्रत्ययो भवतीति । ननु चादेशपक्षः पूर्वमाश्रितः । तत् किमर्थमिह प्रत्ययपक्ष आश्रीयते ? तदाश्रयणेऽप्यत्र दोषो नास्तीति प्रदर्शनार्थः । अगुरूपोत्तमार्थ आरम्भ इत्यादि । येऽत्राणन्ता इञन्ताश्च पठ्यन्ते तान् प्रत्ययमगुरूपोत्तमार्थ आरम्भः । ये त्वन्ये तान् प्रत्ययमणिञर्थः । तत्राद्याः क्रौड्यादयः प्राक् चौपयतशब्दादिञन्ताः । चौपयतप्रभृतय स्त्वणन्ताः प्राक् सौधातकिशब्दात् । सौधातकिशब्दस्तु सुधातोरकङ् चेतीञन्तः (४।१।९७) । सूत युवत्यामिति । सूतशब्दाद् युवत्यां प्राप्तयौवनायां ष्यङ् भवति सूत्या । अन्यत्र टाबेव सूता । भोज क्षत्रिय इति । भोजशब्दात् क्षत्रियजातौ वाच्यायां ष्यङ् भवति । जातिलक्षणस्य ङीषोऽपवादः । भोज्या । अन्यत्र टाबेव भवति भोजा । ततः परे प्राग् गौकक्ष्यशब्दादिञन्ताः । स पुनर्गर्गादियञन्तः ।

## ८१ । दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ।

गोत्रे पूर्वेण नित्य इत्यादि । यदा पौत्रप्रभृतावपत्य इञ् विधीयते तदा

पूर्वंषाखिञोरित्यादिना (४।१।७८) नितेः प्राप्ते विकल्प्यते। यदा त्वनन्तरा-पतेः तदा ऽप्राप्त एव पक्षे विधीयते।

## ८२। समर्थानां प्रथमाद्वा।

स्वार्थिकप्रत्ययावधिश्चायमधिकार इति। स्वार्थे प्रकृत्यर्थे भवाः स्वार्थिकाः। अध्यात्मादित्वाट् ठञ् (४।३।६०, वा)। स्वार्थिकाः प्रत्यया अवधिर्मर्य्यादा यस्य स तथोक्तः। प्राग्दिशो विभक्तिरिति (५।३।१) यावदिति। अनेन यतः परेण स्वार्थिकाः प्रत्यया अवधिभूताः प्रवर्त्तन्ते तत् सूत्रं दर्शयन् प्राग्दिशो विभक्ति-रित्येतत् सूत्रात् (५।३।१) प्रागयमधिकार इत्याचष्टे। किं पुनः कारणं स्वार्थि-केष्वप्ययमधिकारो न प्रवर्त्तेत इत्याह स्वार्थिकेष्वित्यादि। समर्थानामिति। सम्बद्धार्थानामित्येषोऽर्थः। सम्बद्धार्थता च द्विष्ठत्वात् प्रतियोगिनि सति भवति। स्वार्थिकानाञ्च प्रकृत्यर्थादर्थान्तरं न सम्भवति यत्प्रत्यायनाय शब्दान्तरं प्रयुज्येत यदपेक्षया च समर्थता स्यात्। तस्मात् समर्थताया अभावात् स्वार्थिकेषु समर्थानामित्येतत् तावन्नोपयुज्यते। अतएव प्रति-योगिनोऽभावात् प्रथमादितेयतदपि नोपयुज्यत एव। यदि हि प्रतियोगि-शब्दान्तरं स्यात् तत आशङ्का स्यात् किं प्रथमात् प्रत्यय उत द्वितीया-दिति? ततश्च तन्निवृत्तये प्रथमादिति वचनमनुवर्त्तमानमर्थवत् स्यात्। असति तु द्वितीये प्रतियोगिनि तदनुवृत्तिर्नोपयुज्यते। विकल्पोऽपि तत्रा-नवस्थित इति। अनियत इत्यर्थः। यतः केचित् स्वार्थिका नित्यमेव भवन्ति। तथाचाषडक्षाशितङ्ग्वलंकर्मालमित्यादौ सूत्रे (५।४।७) भाष्यकारः परिगणनं करिष्यति। के पुनर्नित्याः प्रत्ययाः? तमबादयः प्राक् कात्। ञ्यादयः प्राग्वुनः। आमादयः प्राङ्मयटः। वृहत्या जात्यन्तात् समासान्ताश्चेति। तत्रातिशायने (५।३।५५) तमबिष्ठनाविति तमप्प्रभृतयो ये प्रत्ययाः प्रागिवात् क (५।३।७०) इतेयतस्मात् प्राक् ते नित्याः। तथा पूगाञ्ञ्योऽग्रामणी-पूर्वादित्यतो (५।३।११२) ञ्यप्रत्ययात् प्रभृति पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्चेत्यतो (५।४।१) वुनः प्राग् ये ते नित्याः। तथा किमेत्तिङ-व्ययघादाम्वद्रव्यप्रकर्षे (५।४।११) इत्यत आम्प्रभृति प्राक् तत्प्रकृतवचने मयटो

(५।४।२१) ये प्रत्ययास्ते नित्याः । तथा बृहत्या आच्छादन (५।४।६) इति यो विहितः कप्रत्ययो जात्यन्ताच्छो बन्धुनीति (५।४।९) च यश्छप्रत्ययो ये समासान्ता डजादयस्ते सर्वे नित्याः । तस्माद् विकल्पः स्वार्थिकेष्वनवस्थितः । ततश्च वाग्रहणमपि तत्रानवस्थितमेव । क्वचिदनुवर्त्तते । क्वचिन्नेत्युक्तं भवति । इह प्रथमादिति विशेषणं प्रयोगवाक्यस्य लक्षणवाक्यस्य वा ? यदि प्रथमस्ततो लौकिके वाक्ये पदानां प्रयोगे नियमो नास्तीति । पात्रमाहर आहर पात्रमिति प्रयोगात् । ततश्च यदापत्यमुपगोरिति प्रयुज्यते तदापत्यशब्दात् प्रथमासमर्थात् प्रत्ययः स्यात् । ननु च तस्येत्यनेन सूत्रोपात्तेनानुकरणपदेन षष्ठ्यन्तेन प्रथमेनालौकिकवाक्यसमवायि पश्चान्निर्दिष्टमपि पदमनुक्रान्तम् । तत् प्रथमत्वात् प्रथमव्यपदेशमासादयति । तेन यदाप्यपत्यमुपगोरिति लौकिकं वाक्यं प्रयुज्यते तदोपगुशब्दादेव यथोक्तेनैव प्रकारेण लब्धप्रथमव्यपदेशात् प्रत्ययो भविष्यति । नापत्यशब्दात् । तदाद्येऽपि पक्षे समाश्रीयमाणे न दोष इति चेद् ? वार्त्तमेतत् (U) । नहि मुख्ये प्रथमे सम्भवति सति गौणस्य ग्रहणं युक्तम् । अतः सत्यप्युपगुशब्दस्य गौणेन प्रथमत्वे मुख्यात् प्रथमादपत्यशब्दादेव प्रत्ययः स्यात् । नोपगुशब्दात् । प्रतिपत्तिगौरवञ्च । द्वितीये तु पक्ष एष दोषो नावतरति । लक्षणवाक्येषु पदानां प्रयोगस्य नियतत्वात् । एतत्समाश्रित्याह लक्षणवाक्यानीत्यादि । समर्थानां मध्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्द्धार्य्यत इति यथा कृष्णा गवां सम्पन्नक्षीरतमेति गवां मध्ये कृष्णा गौः सम्पन्नक्षीरतमात्वेन । यदि तर्हि समर्थानां प्रथमात् प्रत्ययो भवत्येवं सति तस्यापत्यमित्यत्र (४।१।९२) तस्येत्येतत्सर्वनाम सामान्यवाचि प्रथमं निर्दिष्टमिति सामान्यवाचिन एव प्रत्ययः स्यात् । न विशेषवाचिनः प्रातिपदिकादुपग्वित्यादेः । नहि तल्लक्षणवाक्ये प्रथमं निर्दिष्टमित्यत आह तस्येत्यादि । विशेषलक्षणार्थमिति । विशेषोपलक्षणार्थमित्यर्थः । यदि हि तस्येत्येतद् विशेषोपलक्षणार्थं न स्यात् तदा समर्थता तस्य न स्यात् । नहि तस्येत्येतत् प्रकरणाद्यनपेक्षं विशेषेष्ववतिष्ठते । न च विशेषेष्वनवस्थितेनानेनापत्यस्य कश्चिदुपकारः

---

(U) वार्त्तं कुत्सितमित्यर्थः ।

क्रियते। सम्बन्धिसामान्यं हि सामान्यवाचिनोऽपत्यस्य प्रतिपादनेनावगतमिति। तस्येत्यनेनास्यापूर्वः कश्चिदुपकारः कृतो भवति। सम्बन्धिसामान्यस्य सम्बन्धिशब्दत्वात्। अपत्यशब्देनैव गमितत्वात्। ततश्चोपकाराभावात् समर्थता न स्यात्। उच्यते चेदं तस्येति। तस्मात् सामर्थ्याद् विशेषोपलक्षणार्थत्वं तस्येत्यस्य तेन ये विशेषा उपलक्षिताः प्रतिपादिता स्ते सम्बन्ध्यन्तरव्यवच्छेदेन विशिष्टं सम्बन्धिनं प्रतिपादयन्त उपकारिणो भवन्तीत्युपपद्यते तैः सह सामर्थ्यम्। तस्मात् तस्येतेऽतत् सामान्यं विशेषोपलक्षणार्थं द्रष्टव्यम्। तेन तस्य यत् प्राथम्यं तद्विशेषाणामुपगुशब्दादीनां विज्ञायते। ततश्च तत एव प्रत्ययो भवति। न च सामान्यवाचिनः। कम्बल उपगोरपत्यं देवदत्तस्येति। अत्रोपगुशब्दः कम्बलेन सह सम्बद्धः। नापत्येन। अपत्यशब्दस्यापि देवदत्तशब्देन। नोपगुशब्देन। तस्मादपत्यशब्देन सहोपगुशब्दस्य सम्बन्धो नास्तीति न ततः प्रत्ययो भवति। वाक्यमपि हि यथा स्यादिति। असति हि वाग्रहणे वाक्येनापत्यस्याभिधाने प्राप्ते तस्मिन्नर्थे विधीयमानः प्रत्ययस्तन्निवर्त्तयेत्। ननु च समानेऽर्थे शास्त्रान्वितो ऽशास्त्रान्वितस्य निवर्त्तको भवति यथा गमेर्डोरित्यनेन (उण्, २।२२५) शास्त्रान्वितो गोशब्दो ऽशास्त्रान्वितस्य गावीशब्दस्य। समानार्थस्यैव। नतु भिन्नार्थस्य डित्थादेः। न च वृत्तिवाक्ययोः समानोऽर्थः। वृत्तौ ह्येकार्थीभावः सामर्थ्यम्। वाक्ये तु व्यपेक्षा (V)। नैतदेवम्। सत्यपि ह्येतस्मिन्नर्थभेदे प्रधानार्थो न भिद्यते। तथाहुरुपगोरपत्यमानयेत्युक्ते य एवार्थोऽपत्यापतयवत्सम्बन्धविशिष्टः स आनीयते। औपगवमानयेत्युक्ते स एव। प्रधानापेक्षयैव च समानार्थः शास्त्रान्वितो ऽशास्त्रान्वितं निवर्त्तयति। अन्यथा हि गोशब्दोऽपि गावीशब्दं न निवर्त्तयेत्। अस्ति हि तयोरप्यर्थभेदः। तथाहि गोशब्दो गोत्वमाचष्टे। गावीशब्दस्तु तथा। अशास्त्रीयत्वञ्च तस्मादसति वाग्रहणे यथा गोशब्दः सतऽप्यप्रधानार्थभेदे प्रधानार्थस्य नार्थाद् गावीशब्दं निवर्त्तयति तथा तद्धितोऽपि शास्त्रान्वितो। वाक्यं निवर्त्तयेत्। तस्माद्वाक्यमपि यथा स्यादिति वाग्रहण

(V) व्यपेक्षाऽन्योन्यापेक्षित्वर्थः। अपेक्षा चाकाङ्क्षा।　　　　स्वरेणान्तोदात्तत्वम्।

मित्यादि । यदि वाग्रहणेन तद्धितस्य भावाभावौ कुर्व्वता वाक्यस्य भावः क्रियत एवं सति यदा वाक्यं नास्ति तदा तद्धितेनैव भवितव्यम् । समासवृत्ति-रुपगवपत्यमितीत्रषा तद्धितवृत्त्या बाध्येत । नैष दोष इत्यादि । गतार्थम् ।

## ८३ । प्रागदीव्यतोऽण् ।

प्रागदीव्यदित्ययुक्तोऽयं निर्देशः । यावता दीव्यतीति(४।४।२) वक्ष्यति । ननु दीव्यदिति । तत्र दीव्यतिशब्दस्यावधित्वेनोपादाने दीव्यतेरिति निर्देशेन भवितव्य मित्यत आह तदेकदेश इत्यादि । समस्तस्य दीव्यतिशब्दस्या-वधित्वेनोपादाने सति न युज्येतायं निर्देशः । ननु समस्तस्योपादानम् । अपि तु तदेकदेशस्य दीव्यच्छब्दस्येत्यदोषः । अथ किमर्थं दीव्यद्ग्रहणं प्राग्ग्रहणञ्च ? नाणित्येवाधिकारः क्रियताम् ? नेवं शक्यम् । एवं हि क्रियमाणे स्त्रीभ्यो ढगित्येवमादिनाऽधिकारान्तरेण (४।१।१२०) विच्छिन्नस्याणस्तेन रक्तं रागादित्येवमादिषु (४।२।१) पुनरण्ग्रहणं कर्त्तव्यं जायेत । अवधिनाधिकार-परिमाण आख्याते तदवधिकेष्वर्थेषु सर्वेष्वयमभ्यनुज्ञायत इति पुनरण्ग्रहणं कर्त्तव्यं न भवति । तस्मादधिकारपरिमाणज्ञापनार्थं दीव्यद्ग्रहणं तावत् कर्त्तव्यम् । प्राग्ग्रहणमपि कर्त्तव्यमेव । तस्यैवावधित्वद्योतनार्थम् । असति हि तस्मिन् दीव्यतोऽणित्युच्यमाने प्रकृतिरणो दीव्यच्छब्दो विज्ञायेत । त्रिष्वपि दर्शनेष्वित्यादि । कथं पुनरियमपवादविषयपरिहारेणाणः प्रवृत्तिर्लभ्यते ? यावताधिकारे तस्मिन् सति प्रतियोगमुपस्थानादपवादविषयेऽप्यण् प्राप्नोति । अत इञ् । अण् चेति । अन्यथा हि तस्य तत्रोपादानमनर्थकं स्यात् । परिभाषापक्षेऽपि प्रागदीव्यतोऽर्थेष्वणित्येवविशेषेण परिभाषिते सामान्येन परिभाषा प्रवर्त्तमाना केनापवादविषयं परिहरेत् ? विधावपि प्राग् दीव्यतो ·· प्रकृतय स्ताः सर्वा इहैकध्यमुपनीयाण् विधीयमानः सर्वतः प्रवर्त्तेत । सर्वतो विधानमनर्थकं स्यात् । एवं मन्यते । ज्ञापकादपवाद-ग्तीति । यदयं क्वचिद्वाग्रहणमन्यतरस्यांग्रहणञ्च करोति पीलाया -दश्वितोऽन्यतरस्यामिति (४।२।१८) तज्ज्ञापयति नापवाद-विधौ तु भूयान् परीहारः । नहि प्रागदीव्यतो याः

प्रकृतय स्ताभ्योऽण् विधीयते । किं तर्हि ? प्राग्दीव्यतो येऽर्थास्तेषु । तत्र समानार्थे प्रकृतिविशेषादुत्पद्यमान इञण् बाधिष्यत इति । अथ किमर्थ-मियानवधिरुपादीयते ? न प्राक् ठञ इत्येवोच्येत । प्राग् वहतेष्ठगित्येतस्मात् (४।४।१) ठकः प्रागित्यर्थः । नैवं शक्यम् । दण्डादिभ्यो यदिति (४।२।१८) रपि ठगवधित्वेन विज्ञायेत । प्राक् कंसीयादित्येवं तर्हि वक्तव्यम् । कंसीयपर-शव्ययोर्यञञौ लुक् चेति (४।३।१६८)। तत्र यः कंसीयशब्दस्ततः प्रागित्यर्थः । एवमप्यशक्यं वक्तुम् । द्विगोर्लुगनपत्ये (४।१।८८) इत्यत्रापि कंसीयादुत्प द्येत । ततश्च द्वयोः कंसीययोर्विकारो द्विकंस इत्यत्र लुङ् न स्यात् । तस्माद् यथान्यासमेवास्तु ।

८४ । अश्वपत्यादिभ्यश्च ।

८५ । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।

पत्युत्तरपदाच्चेति । एतेनोत्तरपदशब्दः पतिशब्देनैव सम्बध्यते । नान्यैर्दित्यादिभिरिति दर्शयति । एतच्च प्रत्यासत्तेर्व्याख्यानाद्वा लभ्यते । यमाच्चेति वक्तव्यमिति । यमशब्दाच्च ण्यप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयम् । तत्रेयं व्याख्या । इह लाघवार्थं पत्यन्तादिति वक्तव्ये पत्युत्तर-पदादिति वचनमधिकविधानार्थम् । ग्रन्थाधिक्यादर्थाधिक्यं भवतीति । तेन यमशब्दादपि ण्यो भविष्यतीति । अथवा पूर्वसूत्राच्चकारोऽनुवर्त्तते । तस्मादनुक्तसमुच्चयार्थत्वाद् भविष्यतीति । वागमतिपित्रमतामित्यादि । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । प्रतिपादनन्तु तदेव ग्रन्थाधिक्या-दर्थाधिक्यमाश्रित्य चकारस्यानुक्तसमुच्चयार्थस्यानुवृत्तेर्वा कर्त्तव्यम् । याम्य-मित्यादिषु (W) यथायोगं प्राग्दीव्यतीयेऽपत्यादावर्थे ण्यप्रत्ययः । पृथिव्या ञाञाविति । एते ञादयस्तद्धिता इति (४।१।७६) बहुवचनेनानुक्ततद्धित-परिग्रहार्थेन सिद्ध्यन्तीति न वक्तव्याः । तत्र पृथिवीशब्दाद् यदा ञ टाप् पार्थिवा । यदा त्वञ् तदा टिड्ढाणञिति (४।१।१५) ङीप् वद्धिपस्टिलोपश्चेत्यादि । ननु चाव्ययानां भमात्रे टिलो

(W) तथाहि याम्येन चाभवन् केशा यादवी विष्णुतेजसेति देवीमाहात्म्

कार्यार्थं इत्यनेनैव टिलोपे (६।४।१४४, वा) सिद्धिः । तत् किमर्थम्पुनरुच्यत इत्यत आह टिलोपवचनमित्यादि । आरातीय इति । अनित्यत्वज्ञापनस्य प्रयोजनम् । आराद् भवतीति वृद्धाच्छः (४।२।११४) । स्थाम्नोऽकारः । स्थामन्शब्दस्य केवलस्यापत्यार्थे प्रयोगो नास्तीति तदन्तस्याकार प्रत्ययो विज्ञेयः । अश्वस्येव स्थामास्येत्यश्वत्थामा । पृषोदरादित्वात् सकारस्य तकारः । अश्वत्थाम्नो ऽपत्यमश्वत्थामः । न स्तद्धित इति (६।४।१४४) टिलोपः । लोम्नोऽपत्य इति । लोमशब्दो बाह्वादिषु पठ्यते । तस्य केवलस्यापत्येन सम्बन्धो नास्तीति तदन्तविधि विज्ञायते । अत्रापत्यविवक्षायां बाह्विञि प्राप्ते तदपवाद एवाकारो विधीयते । उडुलोम्नोऽपत्यानि बहून्युडुलोमाः । सर्वत्रेति । अपत्ये चान्यत्र च । अथवा प्राग्दीव्यतीये चान्यत्र चार्थेऽजादिप्रत्ययप्रसङ्ग इति । अजादेः प्रत्ययस्य प्रसङ्गः प्राप्तिः । तत्र गोशब्दात् सर्वत्र यद् भवति । यद्येवमुगवादिभ्यो (५।१।२) यदित्यत्र गोग्रहणं किमर्थम् ? अस्यैव प्रपञ्चार्थम् । गव्यमिति । गोरपत्यम् । गवा चरतीति वा । अण्ठको वाऽजादेर्यत्रार्थे प्रसङ्गस्तत्र यद्भवति । नान्यत्र । गोरूप्यं गोमयमिति । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः (४।३।८१) । मयट् च (४।३।८२) । ण्यादय इत्यादि । लक्षणशब्दो निमित्तवचनः । चिह्नवचनो वा । अर्थविशेषो लक्षणं यस्य सोऽर्थविशेषलक्षणो ऽणपवादः । तस्मात् पूर्वविप्रतिषेधेन ण्यादयो भवन्ति । नचेदं वक्तव्यम् । परशब्दस्येष्टवाचित्वात् तेनैव सिद्धत्वात् । आदिशब्देनोत्सादिभ्यो ऽञित्येवमादयः (४।१।८६) प्रत्यया गृह्यन्ते । तत्र ण्यस्यावकाशो दिति देवतास्य स्थालीपाकसेत्याद्यर्थविवक्षायां नाणोऽपवादः कश्चिदन्योऽस्तीति निष्प्रतिद्वन्द्वो ण्य एवाणपवादो भवति दैत्यो वानस्पत्यमिति । ण्यश्चायं सर्वेष्वपत्यादिष्वर्थेषु विधीयत इति सामान्यप्रत्ययो भवतीति । अतो नार्थविशेषलक्षणः । अर्थविशेषलक्षणस्याण-

...वकाशो दुलेरपत्यमितीतश्चानिञ इति (४।१।१२२) ढग् दौलेयः ।

...नार्थविशेषे विधीयत इत्यर्थविशेषलक्षणो भवति । इहोभयं

...त्यं दैत्यः । वनस्पतीनां समूहो वानस्पत्यमिति वा ।

...प्रतिषेधेन । अर्थविशेषलक्षणादिति किम् ? योऽप्यप-

वादोऽर्थसामान्येनार्थविशेषे विहितः स परत्वाण्ण्यादीन् बाधित्वा भवत्येव। उष्ट्रपतिर्नाम पत्रम्। तस्योष्ट्रपतेरिदमिति तस्येदंविवक्षायां पत्त्राध्वर्युपरिषदश्चेत्यञ् (४।३।१२३) औष्ट्रपतम्। तस्येदंलक्षणो ह्ययमणोऽपवादः। न योऽर्थविशेषलक्षणस्तस्य। अर्थविशेषा ह्यपत्यादयो ऽर्थाः। तस्येदमर्थस्तु सामान्यं नार्थविशेषः। कथं दैतेय इति। यदि ण्यादयोऽर्थविशेषलक्षणादणपवादात् पूर्वविप्रतिषेधेन भवन्ति दैतेय इति न सिध्यति। अत्रापि हि ण्यप्रत्ययेनैव भवितव्यमिति भावः। दितिशब्दादित्यादि। दितिशब्दोऽयं दो अवखण्डन इत्यस्मात् क्तिच्क्ताविति (३।३।१७४) क्तिच्। द्यतिस्यतीत्यादिनेत्त्व(७।४।४०)मित्येवं यदा व्युत्पाद्यते तदा कृदिकारादक्तिन (४।१।४०, वा) इति ङीष्। अथाव्युत्पन्नं प्रातिपदिकं तदा सर्वतोऽक्तिन्नर्थादित्येक इति (४।१।४५, वा)। ननु प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति (प, ७२) दितिशब्दो गृह्यमाणो दितीशब्दमपि ग्राहयति। ततश्च यथा दितिशब्दाण्ण्यप्रत्ययः पूर्वविप्रतिषेधेन भवति तथा दितीशब्दादपि तेन भवितव्यमित्यत आह लिङ्गविशिष्टपरिभाषाऽनित्येति। अनित्यत्वं पुनरस्या अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानमिति (३।२।९, वा) घटशब्दमुच्चार्य्य घटीशब्दोच्चारणाद् वेदितव्यः।

## ८६। उत्सादिभ्योऽञ्।

तदपवादानाञ्चेति। इञादीनाम्। वष्कयाऽस इति गणे पठ्यते। तस्यायमर्थः। वष्कयशब्दादञ् भवति। असे असमासे इत्यर्थः। पूर्वाचार्यैः समासस्य स इत्येषा संज्ञा कृता। वष्कयस्यापत्यं वाष्कयः। अस इति किम्? गौवष्कयिः। अत इञितीञेव (४।१।९५) भवति। उदस्थानाद्देश इति। उदस्थानशब्दाद्देशे वाच्ये ऽञ् भवति। उदस्थाने भवो देश औदस्थानः। देश इति किम्? उदस्थानो नाम कश्चित् पुरुषः तस्यापत्यमौदस्थानिः। पृषदंश इति। पृषच्छब्दादंशे ऽभिधेये ऽञ् भवति। पृषदो ऽंशः पार्षदः। अंश इति किम्? पार्षदो (X) ऽन्यः। अणेव भवति।

(X) स्वरे विशेषः। अञन्तस्य ञित्त्वादाद्युदात्तत्वम्। अणन्तस्य तु प्रत्ययस्वरेणान्तोदात्तत्वम्।

कुरुशब्दोऽत्र पठ्यते । तस्यापत्यविवक्षायां कौरव इति न सिध्यति । यस्मात् कुर्वादिभ्यो ण्यः (४।१।१५१) । कुरुनादिभ्यो ण्य (४।१।१७२) इति च ण्यप्रत्ययः प्राप्नोति । अञ्प्रत्ययो हि सामान्यविहितः । ण्यप्रत्ययस्तु विशेषविहितः । सामान्यविहितश्च विशेषविहितेन बाध्यते । नैष दोषः । अयं योगस्तयोर्योगयोरनुवर्त्तिष्यते । तत्राप्यपत्येऽर्थे कुरुशब्दो ऽनवकाश इत्यञपि ततो भविष्यति । अपत्यार्थस्य तस्येदमित्यर्थविवक्षायां वा कौरव इति भविष्यति । ग्रीष्मादच्छन्दसीति वक्तव्यम् । ग्रीष्मशब्दादच्छन्दस्यभिधेये ऽञ् भवतीत्यतदर्थरूपं व्याख्येयमित्यर्थः । किमर्थमित्याह इह मा भूदित्यादि । छन्दसि त्रिष्टुबादौ वाच्ये सन्धिवेलादिसूत्रेण ( ४।३।१६ ) ऋत्वणेव यथा स्याद् । अञ् मा भूदित्येवमर्थम् । तेन ग्रैष्मी त्रिष्टुबित्यञ् न भवति । तत्रेदं व्याख्यानम् । वेति वर्त्तते । सा च व्यवस्थितविभाषा । तेन ग्रीष्मशब्दाच्छन्दसि वाच्ये ऽञ् न भवतीति । वृत्तं गृह्यत इति । यस्य त्रिष्टुब्जगतीत्यादयो विशेषास्तदिह वृत्तम् । अतश्छन्दो गृह्यते । न वेदः ।

## ८७ । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।

अत्र तावत् स्त्रीशब्दस्य स्वरूपग्रहणं न टाबादिस्त्रीप्रत्ययान्तस्य शब्दस्य । ततो हि स्त्रीभ्यो ढगिति (४।१।१२०) ढकं वक्ष्यति । तत्साहचर्य्यात् पुंशब्दोऽपि तद्रूपेणैव विज्ञायते । तस्यापि स्वरूपग्रहणमेव । पौंस्नमिति । संयोगान्तस्य लोप (८।२।२३) इति लोपः । यदि प्राग् भवनसंशब्दनात् स्त्रीपुंसाभ्यां नञ्स्नञौ भवतो वत्यर्थेऽपि तौ स्याताम् । ततश्च स्त्रीवत् पुंवदिति न सिध्येदित्याह स्त्रियाः पुंवदित्यादि । यदयं स्त्रियाः पुंवदिति (६।३।३४) निर्देशं करोति ततो ज्ञायते वत्यर्थे नञ्स्नञौ न भवतः । ननु चैतस्मान्निर्देशात् स्नञ्प्रत्ययो वत्यर्थे न भवतीति शक्यं विज्ञातुम् । नतु नञ्प्रत्ययो न भवतीति । ततश्च स्त्रीवदिति न सिध्यतीत्यत आह योगापेक्षञ्चेत्यादि । पुंवदिति निर्देशादयं योगो वत्यर्थे न प्रवर्त्तत इत्येवमर्थमिदं योगापेक्षं ज्ञापकम् । नतु स्नञ्प्रत्ययापेक्षम् । तेन स्त्रीवदित्येतदपि सिध्यति ।

## ८८। द्विगोर्लुगनपत्ये।

प्रागदीव्यत इति। तस्य स्वरितत्वात्। न भवनादिति। विपर्य्ययात्। द्विगोरिति पञ्चमी चेयं स्यात्? षष्ठी वा? तत्र यदि पञ्चमी तदायमर्थः स्यात्। द्विगोः परस्यानपत्यप्रत्ययस्य प्रागदीव्यतीयस्य लुग् भवतीति। ततश्च यथा द्विगुसंज्ञानिमित्तस्य लुग् भवति पञ्चकपालेषु संस्कृतः पुरोडाशः पञ्चकपाल इति तथा यो द्विगो र्निमित्तं न भवति तस्यापि स्यात्। पञ्चकपालस्य पुरोडाशस्येदं खण्डम्। तस्येदमित्यण् (४।३।१२०) पाञ्चकपालमिति। तदिमं पञ्चमीपक्षे दोषं दृष्ट्वा षष्ठीपक्षमाश्रित्याह द्विगोरिति षष्ठीति। द्विगो र्यः सम्बन्धीति। यस्य तद्धितस्यार्थे तद्धितार्थोत्तरपदसमाहारे चेति (२।१।५१) समाहारद्विगुर्विधीयते स द्विगोः सम्बन्धीति। अर्थद्वारेण तदर्थस्य द्विगुसम्बन्धित्वात्। सोऽपि तद्द्वारेण द्विगुसम्बन्धी। निमित्तत्वेनेति। अनेन निमित्तनैमित्तिकभावेन यः सम्बन्धी तस्य लुग् भवति। नतु पौर्वापर्य्यभावेन यस्तस्येति दर्शयति। एतच्च निमित्तनैमित्तिकभावस्यान्तरङ्गत्वाल्लभ्यते। स हि द्विगोराद्यस्तद्धितेन सम्बन्धः। तस्मात् स गृह्यते। पौर्वापर्य्यभावस्तूत्तरकालमपि भवतीति वहिरङ्गो भवति। अतो न तस्य ग्रहणम्। पञ्चकपाल इति। पञ्चसु कपालेषु संस्कृत इति तद्धितार्थ इति (२।१।५१) समासः। संख्यापूर्वो द्विगुरिति (२।१।५२) द्विगुसंज्ञा। संस्कृतमित्यण् (४।४।३)। तस्य लुक्। द्विवेद इति। द्वौ वेदावधीत इति पूर्ववत् समासः। तदधीते तद्वेदेत्यण् (४।४।५१)। द्वैदेवदत्तिरिति। द्वयो र्देवदत्तयोरपत्यमित्यत इञ् (४।१।९५)। पञ्चकपालस्येदमिति पाञ्चकपालमिति। अत्र संस्कृतार्थे यः प्रथमः प्रत्यय उत्पन्नः स एव द्विगोर्निमित्तम्। नतु य उत्तरकालं तस्येदमित्यर्थविवक्षायाम्। नहि तस्यार्थे विषयभूते द्विगुर्विहितः। किं तर्हि? संस्कृतार्थे यो विहितस्तस्य। तेनाद्विगुनिमित्तत्वात् तस्येदमिति (४।३।१२०) यो विहितस्तस्येह लुग् न भवति। अथवेत्यादि। पूर्वं हि द्विगोर्यस्तद्धितो निमित्तं तस्य लुग् विहितः। इदानीं द्विगोरेव विधीयत इत्यस्ति विशेषः। कथं पुनर्द्विगोरेव लुग् भवतीत्यत आह द्विगोरिति स्थानषष्ठीति। ननु

चेतग्रादिनानन्तरोक्तव्याख्यानं विघटयति। प्रत्ययस्य लुक्श्लुलुप इति (१।१।६१) लुगादिकाः प्रत्ययादर्शनस्यैताः संज्ञा विहिताः। ततो लुगुच्यमानो ऽनेन न शक्तो द्विगोरेव लुकं विधातुमित्यभिप्रायः। सतग्रमेतदिति। यदनन्तर-मुक्तम्। यद्येवं कथं लुकसंज्ञाया द्विगोर्लुग् लभ्यत इतग्रत आह उपचारेण त्वितग्रादि। अतथाभूते वस्तुनि यो ऽध्यारोपिततथाभावो ज्ञानविशेषः स उपचारः। लक्ष्यते ऽनयेति लक्षणा। सा पुनरिहोपचार एव। एतेन ह्यद्विगु-रूप स्तद्धितो द्विगुरूपतया लक्ष्यते यथा मञ्चाः क्रोशन्तीत्यत्रामञ्चरूपा अपि पुरुषा मञ्चरूपतया लक्ष्यन्ते तथेहाप्यद्विगुरूपस्तद्धितो द्विगुरूप-तया। उपचारस्य तु निबन्धनं द्विगुनिमित्तभूतत्वं यदाह द्विगु-निमित्तभूतः प्रत्यय एव द्विगुरिति। भवति हि कारणे कार्य्योपचारो यथायुर्घृतमिति। द्विगुनिमित्तकोऽपि तर्हीतग्रादि। द्विगुर्निमित्तं यस्य स तथोक्तः। यो धर्म उपचारस्य निबन्धनं स इह गुणशब्देन विवक्षितः। गुणनिमित्ता कल्पना गुणनिमित्तकल्पना। सा पुनरुपचारात्मिकैव वेदितव्या। यदुग्रपचारेण द्विगोर्निमित्तं प्रतग्रयोऽपि द्विगुरुच्यते द्विगुर्यस्य निमित्तं सोऽपि गौण्या कल्पनया कस्माद् द्विगुरिति नोच्यते? कार्य्येऽपि हि कारणशब्द उपचारात् प्रयुज्यमानो विद्यत एव यथा पुरातनं सर्वमिदं शुभाशुभं कर्म्म भुज्यत इति। पाञ्चकपालमिति। पञ्चकपालस्य पुरोडाश-स्येदं खण्डमित्यण्। स च द्विगोरुत्पन्नत्वाद् द्विगुनिमित्तक इत्यभिप्रायः। न तस्य द्विगुत्वं निमित्तमिति निष्पन्नत्वाद् द्विगो स्तद्धितस्योत्पद्यमानस्य न द्विगुत्वं निमित्तम्। किं तर्हि प्रातिपदिकम्। तथाहि नासौ द्विगु-रित्येवं विधीयते। किं तर्हि? प्रातिपदिकादित्येवम्। तस्मात् सन्नि-हितापि द्विगुता न प्रत्ययस्य निमित्तमिति न च प्रत्ययो द्विगुरित्युप-चारेण व्यपदेष्टुं शक्यत इति। इतरस्त्विति। तद्धितप्रत्ययो यस्य मूलो-दाहरणे लुग् दर्शितः। द्विगुत्वस्यैव निमित्तमिति। एवकारेण प्राति-पदिकस्य व्यवच्छेदः क्रियते। द्विगुत्वस्यैव निमित्तं न तु प्रातिपदिकत्वस्य। यतस्तदर्थे द्विगुसमासो विधीयते। न तु प्रातिपदिकत्वमित्यस्ति विशेषः। ततश्च द्विगोर्यो निमित्तं तत्रैव द्विगुत्वव्यपदेश उपचाराद्भवति। ननु

निष्पन्नाद्' द्विगोर्य उत्पद्यते तत्रापि। यद्येवमित्यादि। यदि द्विगोर्यो निमित्तं तद्धितः सोऽत्र निमित्तत्वादुपचारेण द्विगुरुच्यते तस्य लोपो भवति। एवं सतीह कथं लोपः पञ्चकपाल्यां संस्कृतः पञ्चकपाल इति ? अत्र हि पञ्चानां कपालानां समाहार इति समाहारे द्विगौ निष्पन्ने ततस्तूत्तरकालं तद्धितो विधीयमानो न द्विगोर्निमित्तं भवति। नैवाल्लेत्यादि परिहारः। कस्मान्नोत्पद्यत इत्याह त्रैशब्द्यं हीत्यादि। त्रय एव शब्दा स्त्रैशब्द्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। इहास्माभि स्त्रैशब्द्यं साध्यम्। पञ्चकपालीशब्दस्तद्धितोत्पत्तिमन्तरेणापि सिध्यतीति न तस्मात् तद्धित उत्पद्यते। पञ्चसु कपालेषु संस्कृत इत्यादिना त्रैशब्द्यं दर्शयति। द्वयोः शब्दयोरित्यादि। यश्च समाहारे पञ्चकपालीशब्दो यश्च तद्धितार्थे विषये समासे पञ्चकपालशब्दस्तौ द्वावपि समानार्थौ। तयोरेकेन पूर्वेण विग्रह एवेति। तस्मान्न तद्धितोत्पत्तिर्विज्ञेया। अपरस्मादुत्पत्तिरिति। पञ्चकपाल शब्दात्। अव्यविकन्यायेन। यथा ऽवेर्मांसमाविकमित्यविशब्देन विग्रहः। अविकशब्दस्तु प्रत्ययमुत्पादयति तद्वदिहापि। अथेह कस्मान्न भवतीत्यादि। रूप्यमयटावपि हि द्विगोर्निमित्तभूतावतस्तयोरपि लुका भवितव्यमिति भावः। वेत्यनुवर्त्तत इति। समर्थानां प्रथमाद्वेत्यतः (४।१।८२)। नन्वेवमपि सर्वत्र विकल्पेन लुक् प्राप्नोतीत्यत आह सा चेत्यादि। चशब्दो हेतौ। यस्मात् सा व्यवस्थितविभाषा विज्ञायते तेन पञ्चकपाल इत्यादौ नित्यं लुग् भवति। पञ्चगर्गरूप्यमित्यादौ न भवत्येव।

## ८९। गोत्रेऽलुगचि।

अचीति। यद्येषा परसप्तमी स्याच्छविधावितरेतराश्रयता प्रसज्येत। कथम् ? गर्गस्यापत्यानि बहूनि गर्गादिभ्यो यञ् (४।१।१०५)। तस्य यदि लुक् स्याच् छो न स्यात्। लुप्तेऽपि तस्मिन् प्रत्ययलोपे प्रत्ययलक्षणमिति (१।१।६२) चेत् ? न लुमताङ्गस्येति (१।१।६३) प्रत्ययलोपप्रतिषेधाद्वृद्धभावेन वृद्धसंज्ञा न स्यात्। ततश्च वृद्धलक्षणश्छो न स्यात्। तस्माद्वृद्धत्वं प्रातिपदिकस्य वाञ्छतो ऽलुक् पूर्वं स्यात्। स चालुक् छे परतो यदि भवति

ततश्चालुग्निमित्तश्छः । तन्निमित्तश्चालुगिति व्यक्तमितरेतराश्रयत्वम् । तदिमं परसप्तम्यां दोषं दृष्ट्वा विषयसप्तमीयमिति दर्शयन्नाह अजादौ प्राग्दीव्यतीये विषयभूत इति । विषयभूते ऽनुत्पन्न एव । बुद्धिस्थ इत्यर्थः । गार्गीया इति । गर्गस्यापत्यानि बहूनि । गर्गादित्वाद् यञ् । तस्य गर्गाणाञ्छात्रा इत्यर्थविवक्षायामजादावनुत्पन्ने बुद्ध्यभिमुखीकृते विषयभूते यञिञोश्चेति (४।१।१०१) यो लुक् प्राप्नोति तस्यानेन प्रतिषेधः क्रियते । ततश्चादिवृद्धौ कृतायां तन्निबन्धनायां च वृद्धसंज्ञायां वृद्धाच्छ (४।२।११४) इतिच्छः । ईयादेशः । यस्येत्यकारलोपः (६।४।१४८) । आपत्यस्य च तद्धितेऽनातीति (६।४।१५१) यकारस्य । वात्सीया इति । पूर्वेण तुल्यम् । आत्रेयीया इति । अत्रेरपत्यानि बहूनि । इतश्चानिञ इति (४।१।१२२) ढक् । तस्यात्रिभृगुकुत्सेत्यादिना (२।४।६५) लुकि प्राप्ते ऽत्रीणां छात्रा इति च्छे विषयभूते तस्य प्रतिषेधः । खारपायणीया इति । खरपस्यापत्यानि बहूनि । नडादिभ्यः फक् (४।१।९९) । यस्कादिभ्यो गोत्र इति (२।४।६३) तस्य प्राप्तस्य लुकः खरपाणां छात्रा इति च्छे विषयभूते प्रतिषेधः । कौवलम् । बादरमिति । कुवलीबदरीशब्दौ गौरादिङीषन्तौ प्रत्ययस्वरेणान्तोदात्तौ । तयोः शेषमनुदात्तम् । तेन कुवल्या विकारः फलं बदर्या विकारः फलमित्यर्थविवक्षाया मनुदात्तादेरञ् (४।२।४४) । तस्य फले लुगिति (४।२।१६३) तयोर्लुग् यः प्राप्नोति तस्य कुवलस्येदं बदरस्येदमित्यर्थविवक्षायामजादौ छे विषयभूते प्रतिषेधो न भवति । गोत्रग्रहणात् । गोत्रे यः प्रत्ययो वाचकत्वेन वर्त्तते तस्य लुकः प्रतिषेधेन भवितव्यम् । न चायमञ् गोत्रे वाचकत्वेन वर्त्तते । अपि तु विकारे । तेन तस्य लुग् भवत्येव । तस्मिन् सति लुक् तद्धितलुकीति (१।२।४९) स्त्रीप्रत्ययस्यापि लुक् । अञि लुप्ते वृद्ध्यभावाद् वृद्धत्वं नास्तीत्यणेव भवति । न तु च्छः । गर्गरूप्यम् । गर्गमयमिति । पूर्ववद्रूप्यमयटौ । यद्यत्रालुक् स्याद् गार्ग्यरूप्यं गार्ग्यमयमिति स्यात् । गार्गीयमिति । तस्मै हितमिति (५।१।५) प्राक् क्रीताच्छ (५।१।१) इतिच्छः । स च प्राग्दीव्यतीयो न भवति । दीव्यतः परेण विधानात् । गोत्रस्येति । गोत्रप्रत्ययस्य बहुषु लोपिन इति । बहुष्वर्थेषूत्पन्नस्य यस्य लोपो विधीयते स बहुषु

लोपी। बहुवचनान्तस्य प्रवृत्ताविति। प्रवृत्तिरर्थान्तरसंक्रान्तिः। एतदुक्तम्भवति बहुवचनान्तस्यार्थान्तरसंक्रान्ताविति। सा चार्थान्तरसंक्रान्तिस्तदन्ताद् यदा यूनि प्रत्यय उत्पद्यते तदा भवतीति वेदितव्यम्। तदा गोत्रान्तस्य यूनि प्रवृत्तेः। द्वेरकयोरिति। यदा गोत्रप्रत्ययान्तादेकस्मिन्नर्थे यूनि द्वयोर्वा यूनोः प्रत्यय उत्पद्यते तदाऽर्थान्तरसंक्रान्तौ सत्यामलुग् भवति। विदस्यापत्यानि बहूनि। अनृष्यानन्तर्ये विदादिभ्योऽञित्यञ् (४।१।१०४)। स च यञञोश्चेति (२।४।६४) बहुषु लुग्विधानाद् बहुषु लोपी भवति। तदन्ताद् युवविवक्षायामेकस्मिन् यूनि द्वयोर्वात इञ् (४।१।९५)। तस्य ण्यक्षत्रियादिसूत्रेण (२।४।५८) लुकि कृते गोत्रप्रत्ययान्तस्य तस्यार्थान्तरसंक्रान्तौ सत्यां गोत्रप्रत्ययस्याञ इहापि बहुषूत्पन्नस्य लुग् न भवति। कथं पुनर्न भवति? यावताऽलुको विषयाभावात् प्राग्दीव्यतीयोऽजादिरिञ् प्रत्यय उपनीतः। प्रत्ययलक्षणेन भविष्यतीति चेत्? नैतदस्ति। अचीति वचनाद्। वर्णाश्रयोऽसौ। वर्णाश्रये नास्ति प्रत्ययलक्षणमिति च परिभाषा (प,२२)। यथा गवे हितं गोहितमिति चतुर्थीसमासे सुब्लुकि कृते प्रत्ययलक्षणेन चतुर्थीविभक्तिमाश्रित्य गोशब्दस्य एचोऽयवायाव (६।१।७८) इत्यवादेशो न भवति। वर्णाश्रयत्वात्। वर्णाश्रयत्वं तु तस्याचि विधानात्। यथा च वर्णाश्रये नास्ति प्रत्ययलक्षणमिति (प,२२) परिभाषा तथा वैदो वैदावितत्राप्यलुका वर्णाश्रयतया न भवितव्यम्। नैतदस्ति। न ह्यलुगत्र वर्णाश्रयः। किं तर्हि? तद्धिताश्रयः। अचीत्येतत् त्विह सूत्रे विशेषणत्वेनोपात्तम्। अतएव वृत्तावुक्तम्। अजादौ प्राग्दीव्यतीये प्रत्यय इति। तस्मात् तस्याः परिभाषाया इहोपस्थानेऽसति गोत्रेऽलुगचीति भवतीति। अनेनैवात्रालुग् सिद्धः। स च बहुषु युवसु मा भूदिति द्वेरकयोरेवेत्युपसंख्यानम्। तत्र विदा इत्येव भवति। एकवचनद्विवचनान्तस्येत्यादि। एकवचनान्तस्य गोत्रप्रत्ययस्य द्विवचनान्तस्य च बहुष्वर्थेषु युवसंज्ञकेषु प्रवृत्तौ संक्रान्तौ सत्यां लुग् वक्तव्यः। तत्र वैदस्येत्येकवचनान्तं गोत्रम्। वैदयोरिति द्विवचनान्तम्। अत्र च पूर्ववदञ्। तयोर्युवापत्यबहुत्वविवक्षायामत इञ् ( ४।१।९५ )। तस्य ण्यक्षत्रियादिसूत्रेण (२।४।५८) लुकि कृते ऽञोऽपि गोत्रप्रत्ययस्य लुगिष्यते।

स च न प्राप्नोति । तस्मादुपसंख्यायते । किं पुनः कारणं न प्राप्नोतीत्याह न ह्यत्रेतरादि । यञञोश्चेति । अनेन हि बहुषूत्पन्नयोर्लुग् विधीयते । न चात्र् बहुषूत्पन्नः । किं तर्हि ? एकस्मिन् द्वयोश्च । तस्मान्न प्राप्नोतीति । तदेवं सर्व्वथा बहुषु विदा इत्येवं भवितव्यमिति स्थितम् ।

## ९० । यूनि लुक् ।

यूनीति । व्यत्ययो बहुलमिति (३।१।८५) षष्ठ्यर्थे सप्तमी । अतएव वृत्तावाह युवप्रत्ययस्येति । अजादौ प्रत्यये विवक्षिते वृद्धिस्य इत्यादिना ऽचीति विषयसप्तमीत्वं दर्शयति । यद्येषा परसप्तमी स्याद् यत्रापि च्छप्रत्ययो नेष्यते तत्रापि स्यात् । युवप्रत्ययान्तस्य वृद्धत्वादित्यभिप्रायः । फाण्टाहृतरूप्यं फाण्टाहृतमयमिति । यद्यत्र लुक् स्यात् फाण्टाहृतरूप्यं फाण्टाहृतमयमिति न स्यात् । भागवित्तिकीयमिति । प्राक्क्रीतीयच्छः पूर्ववत् ।

## ९१ । फक्फिञोरन्यतरस्याम् ।

गार्गीयाः । वात्सीया इति । पूर्ववदकारयकारलोपः । वेति वर्त्तमाने-ऽन्यतरस्यांग्रहणं पूर्वसूत्रे नित्यो विधिरिति ज्ञापनार्थम् ।

## ९२ । तस्यापत्यम् ।

पूर्वैरुत्तरैश्च प्रत्ययैरभिसम्बध्यत इति । तत्र पूर्वैस्तावदणादिभिः सम्बध्यते । असंयुक्तविधानात् । अस्य यदि पूर्वैरभिसम्बन्धो न भवेत् तस्यापत्यमत (४।१।९५) इञित्येकयोगमेव कुर्य्यात् । यतस्त्वत इञित्यनेन (४।१।९५) तस्यापत्यमित्येतदसंयुक्तं करोति ततोऽसंयुक्तविधानात् पूर्वार्थमेतद् विज्ञायत इत्येवं तावत् पूर्वैरभिसम्बध्यते । उत्तरैरप्यभिसम्बध्यते । तेष्वस्य स्वरितत्वात् । तस्येति । पुंलिङ्गेन निर्देशः क्रियत एकवचनेन च । तेन पुंलिङ्गादेवोत्पत्तिः स्यादेकवचनान्ताच्च । स्त्रीलिङ्गान्नपुंसकाच्च न स्यात् । देवदत्ताया अपत्यं कुलस्यापत्यमेवमादौ न स्यात् । द्विवचनबहुवचनान्ताच्च । द्वयोर्मात्रोरपत्यं तिसृणां मातॄणा मपत्यमेवमादौ न स्यात् । अथ नपुंसकलिङ्गेनायं निर्देशः स्त्रीलिङ्गात् पंलिङ्गाच्च न स्यात् । अपत्यमित्येकवचनेऽत्र निर्देशः क्रियते ।

तेनैकस्मिन्नेवापत्ये स्यात्। न द्वयोर्नापि बहुषु। उपगोरपत्ये औपगवौ।
उपगोरपत्यान्यौपगवा इति। एतस्मिन् पूर्वपक्ष इदमाह प्रकृत्यर्थविशिष्ट
इत्यादि। गृह्यत इति वक्ष्यमाणेन सम्बन्धः। प्रकृत्यर्थ उपग्वादिशब्दा-
नामर्थं स्तेन विशिष्टः षष्ठ्यर्थो ऽपत्यापत्यवत्सम्बन्धः। ननु च तस्यात्र
तच्छब्दस्य सामान्यवाचिनो ग्रहणम्। तस्य कुत उपग्वादिरर्थविशेषो येन
षष्ठ्यर्थो विशिष्यते? तस्येत्यस्य विशेषो पलक्षणत्वाददोषः। विशेषोपलक्षण-
त्वञ्चास्य प्रागेव प्रतिपादितम्। तस्माद् विशेष एवोपग्वादिः प्रकृत्यर्थः।
अपत्यमात्रञ्चेति। मात्रशब्दोऽधिकस्य लिङ्गादेर्व्यवच्छेदाय। लिङ्गवचनादि-
कमिति। आदिशब्देन कालस्य ग्रहणम्। वर्त्तमानेन हि कालेनायं
निर्देशः क्रियते। यथोक्तं यत्रापि साक्षादन्यक्रियापदं न श्रूयते तत्राप्य-
स्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यत इति। तत्र वर्त्तमान-
कालविवक्षायां कालान्तरे न स्यात्। किं पुनः कारणं लिङ्गवचनादि
न विवक्ष्यते? तस्याप्राधान्यात्। अवश्यं हि येन केनचिल् लिङ्गादिना
निर्देशः कर्त्तव्य इति। नान्तरीयकत्वात्। तस्येहोपादानं यथा धान्यार्थिनः
पलालादेरप्रधानस्यापि। तस्येदमित्यादि। तस्येदमित्येतत् (४।३।१२०) सूत्र-
मपत्यार्थेऽपि वर्त्तते। यो ह्यपगोरपत्यमुपगोरसावयमिति शक्यते व्यपदेष्टुम्।
तस्येदमित्यस्य (४।३।१२०) विशेषा ह्येते ऽपत्यं समूहो निवासो विकार इति।
ततश्च तस्येद (४।३।१२०) मित्यनेनैवापत्यार्थेऽप्यण् सिद्धः। तत् किमर्थं तस्या-
पत्यमित्येतत् सूत्रं कृतम्? बाधनार्थं कृतं भवेदिति। तस्येदमित्यनेन
(४।३।१२) विधीयमानस्याणो यो बाधको वृद्धाच्छ इति (४।२।११४) छः
प्राप्नोति तद्बाधनार्थमिदं कृतम्। एतत्सूत्रविहितेनाणा छप्रत्ययस्य बाधनं
यथा स्यात्। कथं पुनरशैषिकः शैषिकं बाधते? अपत्यादिभ्यश्चतुरर्थीपर्य्यन्तेभ्यो
ऽन्यो ऽर्थः शैषिकाणां विषयः। अयञ्चापत्याण् छविषये नास्त्येव। तदसन्नयं
कथञ्छप्रत्ययं बाधिष्यत इत्यत आह उत्सर्गः शेष एवासाविति। असत्यस्मिन् योग
इत्यभिप्रायः। असावित्यनेन प्रकृतत्वात् तस्यापत्यमित्येषोऽर्थः प्रत्यवमृश्यते।
उत्सर्गो उत्पन्नेनाप्यणा स एवार्थ उत्सर्गसाहचर्य्यादुच्यते। उत्सर्गसाहचर्य्यन्तु
तस्य तत्रोत्सर्गस्याणादेर्विधानात्। इहापि क्रियमाणे तस्यापत्यमित्येतस्मिन्

योगे तस्येद (४।३।१२०) मितेरतत्रिमनुप्रवेशाद् यथान्यस्तद्विशेषः शेषो भवति तथापत्यार्थोऽपि । अस्ति तस्याप्युपयुक्तापेक्षमन्यत्वम् । चतुरर्थीपर्य्यन्तेष्वनन्तर्भावात् । ततश्च शेषत्वादपत्यार्थे च्छप्रत्ययः प्राप्नोति । अस्मिंस्तु योगे सत्यपत्यार्थं तस्येदमित्यत्र शेषे नानुप्रविशति । उपयुक्तत्वात् । ततश्चाशेषत्वादपत्ये छप्रत्ययस्य प्राप्तिर्नास्त्येव । सैवाप्राप्तिर्बाधनशब्देनोक्ता । अथ बाधनार्थस्यास्य किं प्रयोजन मित्याह वृद्धान्यस्य प्रयोजनमिति । वृद्धानि प्रातिपदिकान्यस्य योगस्य प्रयोजनम् । भानोरपत्यं भानवः श्यामगोरपत्यं श्यामगवइत्यत्राण् सिद्धो भवति । असति त्वस्मिन् योगे ऽपत्यार्थः पूर्वोक्तरीत्या शेषः स्यात् । ततश्च तत्र वृद्धेभ्यो वृद्धाच्छः (४।२।११४) प्रसज्येत ।

## ९३ । एको गोत्रे ।

कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसंप्रत्यय इति (प,९) पारिभाषिकस्यैव गोत्रस्य ग्रहणम् । अपत्याधिकारे गोत्रग्रहणाच्च । अपत्यमात्रं हि लौकिकं गोत्रम् । तस्य यदीह ग्रहणमभिमतं स्यादेक इत्येवं ब्रूयात् । लौकिकस्य गोत्रस्यापत्याधिकारादेव लब्धत्वात् । तस्माद् गोत्रग्रहणाच्च पारिभाषिकस्य ग्रहणमित्याह अपत्यं पौत्रप्रभृति गोत्रमिति(४।१।१६२) । भेदेनेत्यादि । भेदेन विभागेन । अपत्यमपत्यं प्रति प्रत्यपत्यम् । यावन्त्यपत्यानि सम्भवन्ति तेभ्योऽपि सर्वेभ्यः प्रत्ययानामुत्पत्तेः प्रसङ्गे प्राप्तौ सत्यामित्यर्थः । सर्वेषामपत्येन योगेन गर्गगार्गिगार्ग्यगार्ग्यायणानामन्यतमस्य यदपत्यं तत्सर्वेषामपत्यं भवतीति परमप्रकृतेरनन्तरगोत्रयुवलक्षणाः प्रत्ययाः प्राप्नुवन्ति । गर्गस्य यदपत्यं तत्सर्वेषां गार्गिगार्ग्यगार्ग्यायणानामपि सम्बन्धि भवति । तथाहि गार्गिगार्ग्यगार्ग्यायणानामन्यतमस्य यदपत्यं तत्सर्वेषां गर्गप्रभृतीनां सम्बन्धि भवति । तथात्र यद्यपि गर्गस्यापत्यमिति गर्गशब्देन विग्रहः क्रियते तथापि नायं नियमो लभ्यते गर्गशब्दादेवोत्पत्तिरिति । अपि तु कामचारः । ततश्च यदा गर्गशब्दादुत्पत्तिर्भवति तदा गर्गादित्वाद् यञ् । यदा गार्गिशब्दात् तदा यञिञोश्चेति (४।१।१०१) फक् । यदापि गार्ग्यशब्दात् तदापि स एव फक् । यदा गार्ग्यायणशब्दात् तदात इञ् (४।१।९५) । एवं प्रत्यपत्यं विभागेन प्रत्यया-

नासुत्पत्तौ प्रसक्तायामनेन नियमः क्रियत एक एव प्रत्ययो भवतीति। एतेन प्रत्ययनियम इति दर्शयति। प्रत्ययनियम स्त्वेकशब्दस्य प्रत्ययशब्दसामानाधिकरण्याल्लभ्यते। एकशब्दश्चास्मिन्नियमे संख्यावचनो वेदितव्यो यथा एक द्वौ बहव इति। एवकारेण द्व्यादिव्यवच्छेदः क्रियते। एक एव प्रत्ययो भवति। न द्वौ नापि बहव इति। स चैकः प्रत्ययो भवन्नेकग्रहणात् परमप्रकृतेरेव भवतीति सामर्थ्यादुक्तं भवतीति। यदि हि गार्गिशब्दादुत्पद्येत द्वौ स्याताम्। इञ्फकौ। नैकः। अथ गार्ग्यशब्दादेवमपि द्वावेव यञ्-फकौ। अथ गार्गायणशब्दात् त्रयः स्युः यञ्फगिञः। तस्मान् मूलप्रकृते रेवोत्पत्तावेकः प्रत्ययः सिध्यतीत्येकग्रहणं कुर्वता सामर्थ्यान् मूलप्रकृतेरेव गोत्रप्रत्ययस्योत्पत्तिरुक्ता भवति। ननु चोत्पादयितैवापत्येन सम्बध्यते। एवं हि लोके दृश्यते पितामहस्योत्सङ्गे दारकमासीनं दृष्ट्वा कश्चित् पृच्छति कस्यायमिति ? स आह देवदत्तस्येति। तेनोत्पादयितारं व्यपदिशति। नात्मानम्। ततः सर्वेषामपत्येन योगाभावात् प्रत्यपत्यं भेदेन प्रत्ययोत्पत्तिप्रसङ्गो नास्त्येवेति निवर्त्त्याभावादिदं नियमार्थं नारब्धव्यमित्यत आह सर्वे ऽपत्येन युज्यन्त इति ? अत्रैवोपपत्तिमाह अपतनादपत्यमिति। यन्निमित्तं हि यस्य पापेष्वपतनं तदपतनात् तस्यापत्यं भवति। तस्माद् यो व्यवहितेन जनितः सोऽपि परमप्रकृतिवाच्यस्यार्थस्यापत्यं भवति। तस्यापि तेनापतनात्। परमप्रकृतिग्रहणञ्चोपलक्षणं वेदितव्यम्। इतरप्रकृतिवाच्यस्यापि ह्यर्थस्य व्यवहितजनितोऽपत्यं भवत्येव। यत्पुनरुक्तं कस्यायमित्युक्त उत्पादयितारं व्यपदिशति नात्मानमिति न तेनोत्पादयितुरेवापत्येन योगः शक्यते प्रतिपादयितुम्। यस्मान्न तत्र यस्य तेनापतनं स जिज्ञासितः स्यात्। किं तर्हि ? य उत्पादयिता स एव। अत उत्पादयितारं व्यपदिशति। नात्मानम्। यदि यस्य तु तेनापतनं स जिज्ञासितः स्यात् तदाऽऽत्मानमपि व्यपदिशेदेव। यदि च सर्वेऽपत्येन न युज्येरन्नपत्यं पौत्रप्रभृति गोत्रमिति ( ४।१।१६२ ) योऽयमपत्यपौत्रप्रभृतिशब्दयोः सामानाधिकरण्येन निर्देशः स नोपपद्यते। यदपेक्षया पौत्रादिव्यपदेशमासादयन्ति पुमांसस्तं प्रति तेषामनपत्यत्वात्। तस्मादतोऽपि निर्देशात् सर्वेऽपत्येन युज्यन्त

इति विज्ञायते । तत्पुत्रोऽपि गार्ग्य इति । अपिशब्दात् तत्पौत्रादिरपि । किं पुनः कारणं तत्पुत्रोऽपि गार्ग्य इत्याह सर्व्वस्मिन्नित्यादि । यदपि गार्ग्यायण इत्यनेनैकेन व्यवहितेन जनितं गोत्रापत्यं यस्मात् तत्रापि गर्ग-शब्दाद् यञेव भवति तस्मात् तत्पुत्रोऽपि गार्ग्यो भवति । गर्ग-शब्दादित्यनेन परमप्रकृतेर्भवतीति दर्शयति । एतच्चैकग्रहणाल्लभ्यत इत्युक्तम् । अथवेत्यादिना प्रकृतिनियमं दर्शयति । प्रकृतिनियमस्त्वेकशब्दस्य प्रकृति-सामानाधिकरण्याल्लभ्यते । एकशब्दोऽत्र प्राथम्यनियमे वर्त्तत इति वेदितव्यं यथा वर्गाणां प्रथमद्वितीयाः संवृतकण्ठाःश्वासानुप्रदाना अघोषा एके ऽल्पप्राणा इतरे सर्वे महाप्राणा इति । अत्र हि प्रथमेऽल्पप्राणा इति गम्यते । एकशब्द-स्येदं विवरणं प्रथमा प्रकृतिरिति । का च प्रथमा ? या परमप्रकृतिरप्रत्य-यान्ता गर्गनड़ इत्येवमादिका । प्रकृतिर्नियम्यत इति । प्रथमैव प्रकृतिः प्रत्ययमुत्पादयति । नाप्रथमा गार्गिगार्ग्यगार्ग्यायणप्रभृतिशब्दाः प्रत्ययान्ताः । गर्गस्यापत्यं गार्ग्यः । तत्पुत्रोऽपि गार्ग्यः । नड़स्यापत्यं नाड़ायनः । तत्-पुत्रोऽपि नाड़ायनः । सर्वत्र व्यवहितजनितेऽपि गोत्रापत्ये प्रथमा प्रकृतिः प्रत्ययमुत्पादयति ।

## ९४ । गोत्राद् यून्यस्त्रियाम् ।

अयमपि नियम इति । न केवलं पूर्व इत्यपिशब्देन दर्शयति । सर्वेषां ह्यपत्येन योगे परमप्रकृत्यनन्तरयुवभ्योऽपि युवापत्यविवक्षायां प्रत्ययः प्राप्नोति । अतस्तन्निवृत्त्यर्थं नियमः क्रियते । गोत्रादेवेति । गोत्रप्रत्ययान्तादेवेत्यर्थः । अनेन नियमस्वरूपं दर्शयति । न परमेत्यादिना नियमस्य व्यवच्छेद्यम् । गार्ग्यायणो दाक्षायण इति । गोत्रे यौ यञिञौ विहितौ तदन्ताद् यञिञो-श्चेति (४।१।१०१) फक् । औपगविः । नाड़ायनिरिति । गोत्रे यावण्फकौ विहितौ तदन्तादत इञ् (४।१।९५) । दाक्षीति । दक्षस्यापत्यं चतुर्थं स्त्री । अत इञ् ( ४।१।९५ ) । इतो मनुष्यजातेरिति (४।१।६५) ङीष् । किं पुनरत्र प्रतिषिध्यत इति । सर्व्वस्मिन् प्रतिषिध्यमाने दोषं मन्यते । तमेव दोषमाविष्कर्त्तुमाह यदीत्यादि । स्त्रियामनियमः प्राप्नोति । परम-

प्रकृत्यनन्तरयुवभ्योऽपि स्त्रियां युवप्रत्ययः प्राप्नोतीत्यर्थः। गोत्रसंज्ञाया युवसंज्ञया बाधितत्वादिति। जीवति तु वंश्ये युवेत्यत्र ( ४।१।१६३ ) तुशब्दोऽवधारणार्थः कृतः। तेन युवसंज्ञैव भवति। न गोत्रसंज्ञा। ततश्च गोत्रसंज्ञाया अभावात् स्त्रियां गोत्रप्रत्ययो न सम्भवतेरव। तेन तस्या अभिधानं न प्राप्नोति। तस्मादित्यादि। यत एव च नियम-युवप्रत्यययोरुभयोरपि प्रतिषेधे दोषस्तस्मात् तन्निरासाय योगविभागः कर्त्तव्यः। तत्र गोत्राद् यूनीतेरको योगः। अनेन च नियमः क्रियते यदाह गोत्राद् यूनि प्रत्ययो भवतीति। ततोऽस्त्रियामिति द्वितीयो योगः। तेन च यूनीत्यत्र यदुक्तं कार्य्यं तस्य प्रतिषेधः क्रियते यदाह यूनि यदुक्तं स्त्रियां तन्न भवतीति। युवसंज्ञैव प्रतिषिध्यत इति। कथमस्त्रियामित्यत्र हि योगे यूनीतेरदनुवर्त्तते। तेनैवं विज्ञायते यूनि यदुक्तं कार्य्यं स्त्रियां तन्न भवतीति। युवसंज्ञा च यून्येव कार्य्ययुक्तेत्यतः सैव प्रतिषिध्यते। युव-संज्ञैवेति। एवकारेण नियमयुवप्रतरयययोर्व्यवच्छेदः क्रियते। तेन स्त्री गोत्र-प्रतरयेनाभिधास्यत इति। तस्यां युवसंज्ञायां प्रतिषिद्धायां गोत्रसंज्ञाया अविचलत्वात्।

## ९५। अत इञ्।

अत इत्यनेन प्रकृतं प्रातिपदिकं विशिष्यते। विशेषणेन च तदन्तविधि-र्भवतीत्यत आह अकारान्तात् प्रातिपदिकादिति। अथात इति अत सातत्यगमन इत्यस्य क्विबन्तस्य ग्रहणं कस्मान्न विज्ञायते ? शिवादिभ्योऽणिति (४।१।११२) वचनात्। तद्धीञो बाधनार्थं क्रियते। यदि चेह स्वरूपग्रहणं स्यात् शिवादिभ्यः प्रसङ्ग एव नास्तीति तेभ्यस्तद्बाधनार्थमण्विधानमनर्थकं स्यात्। औघादीनाञ्चेअन्तानां पाठात्। तस्मादकारान्तस्यैवेदं ग्रहणम्। यद्येव मस्यापत्यमिरित्यत्र न प्राप्नोति। अनकारान्तत्वात्। एतदपि व्यपदेशि-वद्भावेनाकारान्तं भवतीत्यदोषः। शुभंयाः कीलालपा इति। यातेः पिबते-श्चातो मनिन्क्वनिब्वनिपश्चेत्यत्र हि (३।२।१२) विजुपेच्छन्दसीत्यत्र (३।२।७३) चकारेण विजप्यनुकृष्यते। कथमित्यादि। दशरथशब्दादप्यकारान्तत्वादिञ

भवितव्यम् । ततो दाशरथाय इत्यचन्तस्य प्रयोगो नोपपद्यत इति भावः । शेषविवक्षायामित्यादि । एतेन दशरथस्यायमित्यर्थविवक्षायामणा विहितः । न तु तस्यापत्यमित्यर्थविवक्षायामिति दर्शयति । यदा तु दशरथस्यापत्यमिति विवक्ष्यते तदेञ् भवत्येव दाशरथिरिति ।

## ९६ । बाह्वादिभ्यश्च ।

बाहविरिति । ओर्गुणः (६।४।१४६) । क्वचिदिति । अजीगर्त्तादिष्वकारान्तेषु । बाहुप्रभृतीनां वटाकुपर्यन्तानामनकारान्तत्वात् प्राप्त्यर्थः पाठः । चूडाशब्दस्य च इतश्च इति (४।१।१२१) ढकि प्राप्ते । बुकलादीनां प्राक् पुष्करसच्छब्दादद्वाभ्यो नदीमानुषीभ्य (४।१।११३) इत्यणि प्राप्ते । पुष्करसदित्येवमादीनां लोमशब्दपर्यन्तानां प्राप्त्यर्थोऽनकारान्तत्वात् । अमितौजसः सलोपश्चेति । अमितौजस्शब्दादिञ् भवति सलोपश्च । आमितौजिः । उदञ्चिति पठ्यते । तत्राञ्चते र्धातोश्चकारो वेदितव्यः । नायं पुनरकारान्तः । किं तर्हि ? क्विबन्तः । प्रत्ययवेलायां निपातनादनुनासिकलोपो न भवति । उदीचोऽपत्यमौदञ्चिः । शिरःशब्दस्तदन्तविधिं प्रयोजयति । केवलस्य नपुंसकस्यापत्येन सम्बन्धाभावात् । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । ये च तद्धित इत्यत्र (६।१।६१) चकारस्यानुक्तसमुच्चयार्थत्वाच् शीर्षभावः । लोमशब्दोऽपि पूर्ववत् तदन्तविधिं प्रयोजयति । उडुलोम्नोऽपत्य मौडुलोमिः । आर्द्रलोम्नोऽपत्यमार्द्रलोमिः । अजीगर्तादीनां प्रागुदक्शब्दादृष्यन्धकवृष्णीत्यादिनाणि (४।१।११४) बाधके प्राप्ते । उदङ्कः संज्ञायामिति । उदङ्को नाम कश्चित् । तस्यापत्यमौदङ्किः । सम्भूयोऽम्भसोः सलोपश्च । सम्भूयसम्भसित्येतयोरिञ् भवति । सकारलोपश्च । साम्भूयिः । आम्भिः । बाह्वादिप्रभृतिष्विति । प्रभृतिशब्देनेत ऊर्द्ध्वं ये वक्ष्यन्ते ते परिगृह्यन्ते । येषां दर्शनं गोत्रभावे लौकिक इति । दर्शनं प्रसिद्धिः । लौकिके गोत्रे भावः संज्ञाकारित्वम् । येषां लौकिकगोत्रभावे प्रसिद्धि स्तेषां बाह्वादिषु परिग्रहो द्रष्टव्यः । ततोऽन्यत्र तेषां प्रतिषेध इति । येषां लौकिके गोत्रभावे न दर्शनमपितु ततोऽन्यत्र दर्शनं तेषां प्रतिषेधो वेदितव्यः । तेन बाहु-

र्नाम कश्चिद्दादिपुरुषो यः संज्ञाकारित्वेन प्रसिद्धो यदपत्यसंतानान्तःपातिनः पुमांसो बाहुव्यपदेशमासादयन्ति तत एवेञ् भवति। यस्त्विदानीन्तनो बाहुर्नाम कश्चित् ततोऽपीव भवति बाहव इति। एतच्च वेत्यनुवृत्ते व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। सम्बन्धिशब्दानाञ्च श्वशुरादीनाञ्च यत् कार्य्यमुच्यते तस्य तत्सादृश्यात् प्रतिषेधो भवति। अत्रापि पूर्वोक्त एव हेतुर्वेदितव्यः। तेन राजश्वशुराद् यदिति (४।१।१३७) श्वशुरशब्दाद् यत्प्रत्ययः सम्बन्धिशब्दादेव भवति। न संज्ञाशब्दात्। तेन श्वशुरो नाम कश्चित्। तस्यापत्यं श्वाशुरिरितीञेव भवति। संज्ञाश्वशुरस्येति। संज्ञया यः श्वशुरो न सम्बन्धेन स संज्ञाश्वशुरः।

## ९७। सुधातुरकङ् च।

व्यासवरुडेत्यादि। व्यासादीनामिञ् तत्सन्नियोगेन चाकङादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। पूर्वसूत्रादिह चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन व्यासादीनामपि भविष्यति वैयासकिरिति। न य्वाभ्यामित्यादिनैज् (७।३।३) वृद्धिप्रतिषेधौ। अथ बाह्वादिष्वेव सुधातृशब्दमधीत्य तत्र चाकङादेशः कस्मान्न कृतः यथाऽमितौजसः सलोपश्चेति ? गणे पठ्यते सूत्रे वा। न तत्र कश्चिल् लाघवाभावाद् विशेषो लभ्यत इति यत्किञ्चिदेतत्।

## ९८। गोत्रे कुञ्जादिभ्यश्च्फञ्।

इञोऽपवाद इति। अकारान्तत्वात् कुञ्जादीनाम्। चकारो विशेषणार्थ इति। यद्यत्र चकारो न क्रियेत ततो व्रातच्फञोरस्त्रियामित्यत्रापि (५।३।११३) नैव क्रियते च्फञ्प्रत्ययस्याभावात्। ततश्च व्रातफञोरस्त्रियामित्युच्यमाने ऽश्वादिभ्यः फञित्यस्यापि (४।१।११०) ग्रहणं स्यात्। कौञ्जायन्यः। कौञ्जायन्याविति। पूगाञ्ञ्योऽग्रामणीपूर्वादित्यतो ञ्य (५।३।११२) इत्यनुवर्त्तमाने व्रातच्फञोरस्त्रियामिति (५।३।११३) स्वार्थे ञ्यः। कौञ्जायना इति। ञ्यादयस्तद्राजा इति (५।३।११९) तद्राजसंज्ञकत्वात् तद्राजस्य बहुष्वित्यादिना (२।४।६२) लुक्। किं पुनरत्र ञित्स्वरेण भवितव्यम् ?

उत चित्स्वरेणेत्यत आह एकवचनद्विवचनयोरित्यादि। एकवचनद्विवचनयोस्तावत् सति तस्मिञ् चित्स्वरे पश्चाञ् ञ्ये विहिते समुपजायमानो ञित्स्वरः सतिशिष्टो भवतीति तेनैव भवितव्यम्। बहुवचने तु ञ्ये निवृत्ते चकारञकारयोर्विशेषणे वृत्तौ च यथायोगं चरितार्थयोः परत्वाद् ञ्नित्यादिर्नित्यमिति (६।१।१९७) ञित्स्वरे प्राप्ते तं तयक्ता चित्स्वर एवेष्यते। कथं पुनरिष्यमाणोऽपि स लभ्यते। चित्करणसामर्थ्यादिति चेत्? न। ञित् करणसामर्थ्याञ् ञित्स्वरोऽपि लभ्यते। एवं तर्हि स्वरविधौ योगविभागः करिष्यते। इदमस्ति। चित इति (६।१।१६३)। ततस्तद्धितस्येति (६।१।१६४) तत्र चित इतीयवानुवर्त्तते। किमर्थमिदम्? परत्वाञ् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं (६।१।१९७) प्राप्नोति। तद्बाधनार्थम्। ततः कित इति (६।१।१६५)। कितश्च तद्धितस्यान्त उदात्तो भवति।

## ९९। नडादिभ्यः फक्।

नडादिषु शलङ्कु शलङ्कञ्चेति पठ्यते। तस्यायमर्थः। शलङ्कुशब्दः प्रत्ययमुत्पादयति शलङ्कभावञ्चापद्यते। तेन शालङ्कायन इति भवति। पैलादिष्विति पैलादिषु शालङ्किशब्द इञन्तः पठ्यते। तत उत्पन्नस्य युवप्रत्ययस्य लुग् यथा स्यात्। शालङ्किः पिता शालङ्किः पुत्र इति। तत्र हि ण्यक्षत्रियार्षञित इत्यादेः सूत्राद् (२।४।५८) यूनि लुगिति (४।१।९०) चानुवर्त्तते। तस्य शालङ्किशब्दस्य तत्र पाठो न युज्यते। नडादिषु पाठात् फका भवितव्यमिति कृत्वा। तत् कथमिञन्तस्तत्र पठ्यत इति चोद्यम्। तस्य परिहारमाह गोत्रविशेष इत्यादि। कौशिकं यद् गोत्रं तत्रैव शलङ्कुशब्दादाचार्य्याः फकं स्मरन्ति। ततोऽन्यत्र त्विञेव भवतीत्यदोषः। स त्विञ् बाह्वादेराकृतिगणत्वाल्लभ्यते। अभ्युपेत्यापि गोत्रमात्रे फको विधानम्। परिहारान्तरमाह अथवेत्यादि। इञो भाव उपलक्षणम्। शलङ्कभावस्यापि हि पैलादिपाठ एव ज्ञापकम्। पूर्वत्रापि परिहारे तस्य स एव ज्ञापकं वेदितव्यम्। अग्निशर्मन् वृषगण इति। अग्निशर्मञ्शब्दाद् वृषगणे गोत्रे फक् भवति आग्निशर्मायणः। अन्यत्राग्निव।

आग्निशर्म्म्‌:। अमुष्येति पठ्यते। तत्र निपातनाद्‌ विभक्तेरलुक्‌। आमुष्यायण इति। कृष्णरणौ ब्राह्मणवाशिष्ठयोरिति। कृष्णरणशब्दौ यथाक्रमं ब्राह्मणे वाशिष्ठे चाभिधेये फकमुत्पादयतः। कार्ष्णायनो ब्राह्मणः। राणायनो वाशिष्ठः। वशिष्ठगोत्र इत्यर्थः। अन्यत्रेञेव भवति कार्ष्णिः। राणिरिति। क्रोष्टु क्रोष्टश्चेति पठ्यते। क्रोष्टुशब्दः फकमुत्पादयति। क्रोष्टुश्चापत्यते। क्रौष्टायनः।

## १००। हरितादिभ्योऽञः।

नचेत्यादि चोद्यम्‌। सत्यमेतदित्यादि परिहार उच्यते। गोत्रे योऽञ्‌ विहितस्तदन्तेभ्यो हरितादिभ्यः फक्‌। न च गोत्रप्रत्ययादपरो गोत्र-प्रत्ययः सम्भवति। तत्र सामर्थ्याद्‌ गोत्राधिकारेऽपि यूनि प्रत्ययो विज्ञायते। यद्येवं गोत्राधिकारः किमर्थ इत्याह गोत्राधिकार उत्त-रार्थ इति।

## १०१। यञिञोश्च।

अथ द्वीपादनुसमुद्रं यञिति (४।३।१०) यो यञ्‌ विहितो यश्च बुञ्छणित्यादिना (४।२।८०) सूत्रेण सुतङ्गमादिभ्य इञिति तदन्तात्‌ कस्मान्न भवति? न ह्यत्र कश्चिद्‌ विशेष उपात्त इत्यत आह द्वीपादनु समुद्रं यञित्यादि। गोत्रग्रहणेन ह्यत्र यञिञौ विशिष्येते गोत्रे यौ यञिञाविति। न च द्वीपादित्यादिना (४।३।१०) गोत्रे यञ्‌ विहितः। किं तर्हि? जातादावर्थविशेषे। नापि सुतङ्गमादिभ्यो गोत्रे इञ्‌ विहितः। किं तर्हि? तदस्मिन्नस्तीति देश इत्येवमादिषु चतुर्ष्वर्थेषु (४।१।६७-७०)। तेन तदन्तान्न भवति। यदि तर्हि गोत्रग्रहणेनेह यञिञौ विशिष्येते न प्रत्ययार्थ एवं सति क्वायं प्रत्ययो भवतीति न विज्ञायत इत्यत आह तदन्तादित्यादि। कस्मात्‌ तदित्याह गोत्राद्‌ यूनीति वचनादिति।

## १०२। शरद्वच्छुनकदर्भाद्‌ भृगुवत्साग्रायणेषु।

गोत्र इत्येतदिति। यदि तर्हि गोत्र इति वर्त्तते भृगुवत्साभ्यां मूल-प्रकृतिभ्यां प्रत्ययार्थस्य विशेषणं नोपपद्यते। गोत्रप्रत्ययान्ताभ्यामेव हि

ताभ्यां गोत्रापत्यं प्रत्ययार्थः शक्यो विशेषयितुम् । अतएव युक्तं स्यादुक्तुं भार्गववात्स्यायनाश्रायणेष्विति । नैष दोषः । गोत्राधिकारसामर्थ्याद्धि गोत्रापत्य एव वर्त्तमानाविह गृह्येते कार्य्यं कारणोपचारं कृत्वा । तामेव गोत्रापत्ये तयोर्वृत्तिं दर्शयितुं वृत्तावितुरुक्तं शारद्वतायनो भवति भार्गवश्चेद् । शौन-कायनो भवति वात्स्यश्चेदिति ।

## १०३ । द्रोणपर्वतजीवन्तादन्यतरस्याम् ।

कथमित्यादि । यदि गोत्रापत्ये द्रोणादिभ्यः फग् भवति तत् कथं द्रौणायनो द्रोणतः प्रतीत्येवमादिषु प्रयोगेष्वनन्तरोऽश्वत्थामा द्रौणायन इत्युच्यते ? नैवात्रेति । नात्रेदानीन्तनो द्रोणस्तदनन्तरापत्ये फका द्रौणायन इति । किं तर्हि ? अनादिरिति । श्रुतिसम्भवदर्शनार्थमिदमुक्तम् । येन हेतुनाश्वात्थामा द्रौणायन इत्युच्यते तमिदानीन्तनेत्यादिना दर्शयति । इदानीन्तनाद् त्वित्यादि । अनादिद्रोणव्यवच्छेदपरमेतद् वेदितव्यम् । नहि तावद् भारतद्रोण इदानीन्तनो भवति । चिरातीतत्वात् । चिराती-तोऽप्यर्थो बुद्धौ परिभाव्यमानो वर्त्तमानतां प्रतिपद्यते यथाऽद्य कंसो हन्यताम् । इदानीन्तनाद् द्रोणादप्यश्वत्थाम्नि द्रौणायन इत्येवं गोत्रप्रत्ययेन यदभिधानं तदध्यारोपेण भवति । अविद्यमानस्यैव तत्रासञ्जनमध्यारोपः । कस्याध्यारोपः ? गोत्रस्य । श्रुतिसामान्यादिति । अध्यारोपे हेतुः । अनादेर्द्रोण-स्याश्वत्थाम्नः पितुश्च द्रोण इति समाना श्रुतिः । अतः श्रुतिसामान्यादनादि-द्रोणापत्यस्य यो धर्मो गोत्रत्वं तद्भावं भारतद्रोणापत्येऽश्वत्थाम्न्यपि श्रुति-सामान्याच्चलितबुद्धयः प्रतिपत्तार अध्यारोपयन्ति । तेनाध्यारोपेण द्रौणायन इति तत्राभिधानं प्रवर्त्तते ।

## १०४ । अनृष्यानन्तर्य्ये बिदादिभ्योऽञ् ।

ये पुनरत्रानृषिशब्दा इत्यादि । ननु च सूत्र आनन्तर्य्यशब्दो भाव-प्रत्ययान्त उपात्तः । तत्रैवं विवरितव्यम् । ये पुनरत्रानृषिशब्दाः पुत्रादय-स्तेभ्योऽपत्यआनन्तर्य्ये एव भवति । नैतदस्ति । नह्ययं भावे ष्यञ् विहितः । किं तर्हि ? स्वार्थे एव । चातुर्वर्ण्यवत् । अन्यथापत्यस्य धर्मे आनन्तर्य्ये

प्रत्यय: स्यात् । नापत्ये । तत्रेष्यते च । कथं पुनर्गोत्राधिकारे सत्यनृषिभ्यो ऽनन्तरापत्य एव प्रत्ययो लभ्यते ? अत्र गोत्रग्रहणं निवर्त्तते । ऋषिशब्देभ्यो-ऽनन्तरापत्य एव स्यादित्यत आह अनृष्यानन्तर्य्य इत्यस्यायमित्यादि । यद्ययमर्थ इत्यादि । अस्मिन् ह्यर्थे सत्यनृष्यानन्तर्य्य इत्येतद् विध्यर्थम् भवति । अनृषेरनन्तरापत्ये प्रत्ययविधानात् । ततश्च ऋष्यपत्य आनन्तर्य्यप्रतिषेधो न कृत: स्यादित्याह ऋषिशब्दोऽत्र ऋषिजातावृषित्वे वर्त्तते । अपत्येषु नैरन्तर्य्यमिति । सप्तमीति (२।१।४०) योगविभागात् समास: । पश्चादृषेरपत्य-नैरन्तर्य्यमिति षष्ठीसमास: । तदायमर्थो भवति ऋषित्वस्यापत्येषु नैरन्तर्य्य-विषयेऽञ: प्रतिषेधो न कृत: स्यात् । अथवा ऋषयश्च ते ऽपत्यानि च ऋष्य-पत्यानि । तेषां नैरन्तर्य्यं तद्विषये प्रतिषेधोऽञ: प्रत्ययस्य न कृत:स्यादि-त्यर्थ: । तत्र को दोष इत्याह तत्रेदमित्यादि । सप्त काश्यपा ऋषयो ऽपत्यापत्यवत्सम्बन्धेन परस्परं सम्बद्धा येषाम् मित्रद्रुर्नाम (Y) काश्यप: सप्तम: । तेषा मृषित्वस्यापत्येषु नैरन्तर्य्यम् । तत्र ऋष्यपत्यानां वा नैरन्तर्य्ये विषये ऽञ: प्रतिषेध इष्यते काश्यपानामित्येतद्रूपं यथा स्यात् । अञि सति तस्य बहुषु लोपात् कश्यपानामिति प्राप्नोति । स च प्रतिषेधोऽस्मिन्नर्थे सति न प्राप्नोति । ततश्च काश्यपानामिति न सिध्यति । तस्मादनृष्यानन्तर्य्य इत्यस्य ऋष्यपत्यनैरन्तर्य्येण न भवतीत्येषोऽर्थो विज्ञायत इत्यभिप्राय: । अनन्तरापत्य-रूपेणैवेति । नचात्र गोत्रापत्यं विवक्षितम् । किं तर्हि ? अनन्तरापत्यम् । अतोऽनन्तरापत्यरूपेणैव ऋष्यणा ऋष्यन्धकादि ( ४।१।११४ ) सूत्रविहितेन काश्यपानामित्यभिधानं भविष्यति । एतदेव दृढ़यितुमाह अवश्यञ्चेत्यादि । ऋष्यपत्यं नैरन्तर्य्यं विषयो यस्य प्रतिषेधस्य स तथोक्त: । ऋषित्वस्यापत्येषु ऋष्यपत्यानां वा यन्नैरन्तर्य्यं तद्विषये प्रतिषेधे विज्ञायमान इत्यर्थ: । कौशिको विश्वामित्र इति दुष्यतीति । किं कारणम् ? विश्वामित्रस्तपस्तेपे नानृषि: स्यामिति । तत्रभवानृषि:सम्पन्न: । स पुनस्तपस्तेपे नानृषे: पुत्र:स्या-मिति । तत्रभवान् गाधिरपि ऋषि: सम्पन्न: । स पुनस्तपस्तेपे नानृषे:

(Y) In the printed काशिका, the reading is इन्द्रभूर्नाम काश्यप: सप्तमस्तेषाम् &c. So it is also in the Bengal MS. पदमञ्जरी has इन्द्रहू: ।

पौत्रःस्यामिति । तत्रभवान् कुशिकोऽपि ऋषिः सम्पन्नः । तदेतद्भवति ऋषित्वस्यापत्येषु नैरन्तर्य्यम् । ऋष्यपत्यानां वानन्तर्य्यम् । ततश्च ऋष्यपत्य-नैरन्तर्य्ये न भवतीत्येवं विज्ञायमाने कौशिको विश्वामित्र इति न सिध्यति । परस्त्री परशुश्चेति । परस्त्रीशब्दः प्रत्ययमुत्पादयति परशुभावश्चापद्यते । परस्त्रिया अपत्यं पारशवः ।

## १०५ । गर्गादिभ्यो यञ् ।

कथं मानवी प्रजेति । गर्गादिषु पाठाद् यञा भवितव्यम् । ततश्च मानवीति न सिध्यतीति । लोहितादिलक्षणे हि यञन्तात् तु ष्फे विहिते मानव्यायनीति भवितव्यमित्यभिप्रायः । गोत्रमित्युच्यते । गोत्रे हि यञ् प्रत्यय उच्यते । नापत्यसामान्ये । तेन तत्रौत्सर्गिकोऽण् मानवीति भविष्यति । कथ-मित्यादि । यदि गोत्रमित्युच्यते ततो यथा गर्गशब्दादनन्तरापत्ये यञ् न भवति तथाच जमदग्निपराशरशब्दाभ्यामपि न भवितव्यम् । तत्-कथमनन्तरो रामो जामदग्न्यो व्यासः पाराशर्य्य इत्यत्र यञ् भवति ? गोत्ररूपाध्यारोपेण भविष्यतीति । यदानन्तरापत्ययोरपि गोत्ररूपयो रामव्यासयो र्विवक्षितत्वाद् गोत्ररूपाध्यारोपः क्रियते तदा यञ् भवतीत्य-दोषः । असतो न युक्ता विवक्षेत्येतच्च न सम्भावनीयम् । दृश्यते ह्यसतोऽपि विवक्षा यथा विन्ध्यो वर्द्धितकः (Z) समुद्रः कुण्डिकेति । यदा तर्ह्यनन्त-रापत्यविवक्षा भवति तदा केन भवितव्यमित्याह अनन्तरापत्यविवक्षायां त्वित्यादि । वाजाऽसे इति । वाजशब्दो यञ मुत्पादयति । असे ऽसमास इत्यर्थः । वाज्यः । असमास इति किम् ? सौवाजिः ।

## १०६ । मधुबभ्रोर्ब्राह्मणकौशिकयोः ।

यदि तर्हि बभ्रुशब्दस्य गर्गादिपाठादेव सिद्धे कौशिके नियमार्थमिह ग्रहणमेवं सति नार्थो गर्गादिषु पाठेन । कौशिके विध्यर्थमेव ग्रहणमस्तु । नास्येत्यत आह गर्गादिषु पाठोऽपीत्यादि । गर्गादिषु पाठोऽपि कर्त्तव्यः । सर्वत्र लोहितेत्यादिनान्तर्गणकार्य्यं (४।१।१८) ष्फो यथा स्यात् । अथ गण एव

(Z) विन्ध्यो वल्मीक इति वङ्गीयपुस्तके पाठः । भाष्ये पदमञ्जर्याञ्च वर्द्धितक इत्येव ।

कौशिकग्रहणं कस्मान्न कृतम्? कःपुनरेवं सति गुणो भवति। सूत्रे पुनर्बभ्रु-ग्रहणं न कर्त्तव्यं भवति। सत्यमेतत्। अपाणिनीयत्वाद् गणस्य। नैवं चाकारणे पाणिनिरुपालम्भमर्हति। गणकारेणापि हि न कृतं वैचित्र्यार्थम्। विचित्रा हि गणस्य कृतिर्गणकारेण।

१०७। कपिबोधादाङ्गिरसे।

कापेय इति। इतश्चानिञ इति (४।१।१२२) ढक्। यदि कपिशब्दो गर्गादिषु पठ्यते नियमार्थं त्विह तस्य ग्रहणम्। एवं सत्याङ्गिरसे विध्यर्थ मेवास्य ग्रहण मेवास्तु। नार्थो गर्गादिषु पाठेनेत्यत आह लोहितादिकार्य्यार्थ-श्चेत्यादि।

१०८। वतण्डाच्च।

किमर्थमिदम्? अनर्थकमिदमित्यर्थः। किं कारण मित्याह यावते-त्यादि। शिवादिष्वपीत्यादिना प्रयोजनं दर्शयति। यदीदं नोच्येत ततो गर्गादिपाठादाङ्गिरसे यथा यञ् भवति तथा शिवादिषु पाठादणपि स्यात्। तस्मादाङ्गिरसे यञा शिवाद्यणो बाधनं यथा स्यादित्येवमर्थं पुनर्वचनम्। अथ गर्गादिपाठादेव सिद्ध आङ्गिरसे नियमार्थमेतदिति कस्मान्नोक्तम्? अशक्यमेवं वक्तुम्। प्रयोजनाभावे हि नियमार्थं भवति। इह चास्ति प्रयो-जनम्। तच्च दर्शितमेव।

१०९। लुक् स्त्रियाम्।

वातण्ड्यायनीति। लोहितादिलक्षणः ष्फः।

११०। अश्वादिभ्यः फञ्।

ये त्वत्रेत्यादि। एको गोत्र इति (४।१।९३) वचनाद् गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो नोपपद्यते। तत्र सामर्थ्याद् गोत्राधिकारेऽपि ये गोत्र-प्रत्ययान्ताः पठ्यन्ते तेभ्यो गोत्राद् यून्यस्त्रियामिति (४।१।९४) यूनि

प्रत्ययो विज्ञायते । शप आत्रेय (A A) इति । शपशब्दाद् फञात्रेयश्चेद् भवति शापायन आत्रेयः । अन्यत्र शापिः । वैल्वशब्दो गोत्रप्रत्ययान्तः । तस्माद् यूनि भवति । विलिर्नाम राजर्षिः । तस्यापत्यं गोत्रं वृद्धेत्कोसलाजादाञ्ञ्यङ् ( ४।१।१७१ ) वैल्वः । तस्यापत्यं वैल्वायनो युवा । आनडुह्य-शब्दोऽपि गोत्रप्रत्ययान्तो गर्गादिषु । यञन्तत्वात् । तस्मादपि यून्येव फञ् । आनडुह्यायनो युवा । पुंसि जात इति । जातात् पुंसि वर्त्तमानात् फञ् भवति । जातस्यापत्यं जातायनः । पुंसीति किम् ? स्त्रियां ढगेव भवति । जाताया अपत्यं जातेयः । आत्रेय भारद्वाज इति । आत्रेयशब्दात् फञ् भारद्वाजश्चेदपत्यार्थो भवति । आत्रेयायणो भारद्वाजः । अन्यत्र आत्रेयिः । भारद्वाज आत्रेय इति । भारद्वाजशब्दात् फञ् आत्रेयेऽपत्यविशेषे । भारद्वाजायन आत्रेयः । अन्यत्र ऋष्यण् ।

## १११ । भर्गात् त्रैगर्त्ते ।

## ११२ । शिवादिभ्योऽण् ।

यथायथमिति । यथास्वम् । यस्य य इञादिरात्मीयप्रत्ययस्तदपवादोऽण् विधीयते । अथाण्ग्रहणं किमर्थम् ? न शिवादिभ्य इत्येवोच्येत । शिवादिभ्य इत्येतावत्युच्यमाने यथाविहितमिञादिरेव प्रत्ययो मा भूद् । अणेव यथा-स्यादित्येवमर्थमिति चेत् ? नैतदस्ति । यथाविहितमिञादीन् प्रत्ययान् प्रत्येतद्वचनमनर्थकम् । विनाप्यनेन तत्सिद्धेः । तस्मादनन्तरेणाप्यण्ग्रहणमणेव भविष्यति । ननु चासत्यण्ग्रहणे फञः प्रकृतत्वात् तस्यैव विधिर्विज्ञायते । नैतदस्ति । यदि हि शिवादिभ्यः फञ् विधातुमिष्टः स्यात् ततोऽश्वादिष्वेव तेषां पाठं कुर्य्यात् । इदं तर्हि प्रयोजनम् । अयमृष्टिषेणशब्दः शिवादिषु पठ्यते । तस्य सेनान्तलक्षणकारिभ्यश्चेति ( ४।१।१५२ ) ण्यप्रत्ययः प्राप्नोति ।

---

( A A ) The printed काशिका does not give such a गणसूत्र. There is a reading वेश आत्रेय here in the गण । The पदमञ्जरी puts the गणसूत्र as शप आत्रेय इति and has शपशब्दात् फञ् भवति । आत्रेयश्चेत् । शापायनः । आत्रेयादन्यत्र शापिः । अतइञित्यादिना भवति । बाह्वादि र्वा ।

तचासत्यण्ग्रहणे पुनर्विधानमिदं तद्बाधने कृतार्थमिति। ततो यथा-विहितमिञेव स्यात्। नाण्। ततोऽणेव यथा स्यादित्यण्ग्रहणम्। उदीचामिञं बाधितुमिति। उदीचामित्यनेनेञ् (४।१।१५३) प्राप्नोति। ततस्तं बाधितुं तक्षन्‌शब्दोऽत्र पठ्यते। यथा तर्हि तक्षन्‌शब्दस्यात्र पाठादुदीचामिञ् बाध्यते तथा सेनान्तलक्षणकारिभ्यश्चेति (४।१।१५२) यो ण्यस्तस्यापि बाधा प्राप्नोति। ततश्च ताक्षण्य इति न सिध्यतीत्याह ण्यप्रत्ययस्य तु बाधा नेष्यते। कथमनिष्यमाणापि न भवति? सुपिष्टशब्दादिभिः साहचर्यात्। इह यस्तक्षन्‌शब्दः सुपिष्टमयूरखरदूरतक्षन्नित्येवं सुपिष्टा-दिभिः सह पठ्यते यथा तेषाम्ञेऽपवादार्थोऽत्र पाठस्तैःसाहचर्यात्त-स्यापीञपवादार्थ एव पाठो विज्ञास्यते। तत्र शिवादीनां प्राग् भूरिशब्दादिञपवादार्थं वचनम्। भूरिसम्भिमुनि इत्येतेषामितश्चानिञ इति (४।१।१२२) ढकि प्राप्ते। कुठार अनभिम्लान इत्येतयोः ककुत्स्थ इत्येवमादीनां प्राग् जरत्कारुशब्दादिञो बाधनार्थम्। जरत्कारुप्रभृतीनां प्राक् सुपिष्टशब्दात् स्त्रीभ्यो ढगिति (४।१।१२०) ढकि प्राप्ते। सुपिष्टादीनां प्राक् तक्षन्-शब्दादिञः। तक्षन्नित्यस्य कारिलक्षणोदीचामिञः। ऋष्टिषेणस्य सेनान्तल-क्षणस्य ण्यस्य च बाधनार्थन्। गङ्गाविपाट्शब्दयो र्यस्मिन्नप्राप्त इह पाठः स वृत्तिकारेणैव व्याख्यातः। यस्कादिभ्यः प्राग् भूमिशब्दादिञि प्राप्ते। भूमिशब्दस्येतश्चानिञ इति (४।१।१२२) ढकि। इलाशब्दस्यापि द्व्यचश्चेति (४।१।१२१) ढकि। एवमेव सपत्नीशब्दस्यापि स्त्रीभ्यो ढगिति (४।१।१२०) ढक्येव। द्व्यचो नद्या इति। नदी वाचका ये द्व्यच स्तेभ्योऽण् भवति। सन्ध्या सान्ध्यम्। कुल्या कौल्यम्। ननु चात्र तन्नामिकोऽणस्त्येव। सत्यमस्ति। स तु द्व्यच इति (४।१।१२१) ढका बाध्यते। तस्मात् तद्बाधनार्थं वचनम्। त्रिवेणी त्रिवणश्चेति। त्रिवेणीशब्दः प्रत्ययमुत्पादयति त्रिवणश्चापद्यते। त्रिवेण्या अपत्यं त्रैवणः।

## ११३। अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः।

शास्त्रान्तरे परिभाषितमपि वृद्धमस्ति। अपत्यमन्तर्हितं वृद्धमिति। इह

शास्त्रेऽपि परिभाषितं वृद्धमस्ति वृद्धिर्यस्याचामादिस्तद् वृद्धमिति (१।१।७३)। अतो वृद्धप्रतिषेधे कस्यचित् सन्देहः स्यात् कस्य वृद्धस्यायं प्रतिषेधः? किं स्वित् यदिह परिभाषितं तस्यायं प्रतिषेध उत यच्छास्त्रान्तरेण परिभाषितं तस्येत्यतस्तन्निरासाय वृद्धिर्यस्येत्यादिनेहैव (१।१।७३) शास्त्रे यत् परिभाषितं तस्यायं प्रतिषेध इति दर्शयति। कुतः पुनरेतदवसितमिह वृद्धं यत् परिभाषितं तस्यायं प्रतिषेध इति? नदीमानुषीनामधेयस्य गोत्रप्रत्ययान्तस्यासम्भवात्। नदीग्रहणे त्विह लौकिक्येव नदी गृह्यते। न तु पारिभाषिकी। कुत एतत्? लौकिकार्थवृत्तिना मानुषीशब्देन साहचर्य्यात्। अथ स्वरूपग्रहणमेव नदीमानुषीशब्दयोः कस्मान्न भवति? वृद्धप्रतिषेधात्। स्वरूपग्रहणे हि वृद्धप्रतिषेधोऽनर्थकः स्यात्। प्रसङ्गाभावात्। बहुवचननिर्देशाच्च न स्वरूपग्रहणम्। स्वरूपग्रहणे हि नदीमानुषीशब्दयोर्द्वित्वाद् द्विवचनेनैव निर्देशं कुर्य्यात्। अवृद्धाभ्य इति शब्दधर्म इति। वृद्धसंज्ञकप्रतिषेधे सति नञिवयुक्तन्यायेन (प,७५) च वृद्धसदृशस्यावृद्धस्यैव ग्रहणात्। नदीमानुषीत्यर्थधर्म इति। पारिभाषिक्या नद्याः स्वरूपस्य चाग्रहणार्थस्यैव ग्रहणं युक्तम्। तयोर्हि ग्रहणे शब्दधर्मः स्यात्। यदि तर्ह्यर्थधर्मोऽयं कथं नदीमानुषीभ्य इत्यनेन प्रकृतयो निर्दिश्यन्ते? अर्थधर्म्म एव ह्येवं निर्दिष्टो भवति। न प्रकृतय इत्यत आह तेनेत्यादि। तेनार्थेनाभेदोपचारात्। नदीमानुष्यभिधायिन्यः प्रकृतयो निर्दिश्यन्ते। प्रत्ययप्रकृतिरिति। प्रत्ययस्य प्रकृतिरिति षष्ठीसमासः। ढकोऽपवाद इति। अवृद्धादीनां नदीनां मानुषीणां नामधेयानां स्त्रीप्रत्ययान्तत्वात्। वैतस्तो नार्मद इति। वितस्तानर्मदाशब्दाभ्यामण्। शैचित इति। शिचिताशब्दात्। सौपर्णेयो वैनतेय इति। सुपर्णाविनताशब्दौ पक्षिणीनामभिधेये। न नदीमानुष्यौ। शोभनेय इति। शोभनाशब्दो वर्त्तते नदीमानुष्यर्थः। न तु संज्ञात्वेन। किं तर्हि? विशेषणत्वेन।

## ११४। ऋष्यन्धकवृष्णिकुरुभ्यश्च।

इञोऽपवाद इति। ननु चानकारान्तेभ्योऽत्रादिभ्यो ये ढगादयः प्राप्नुवन्ति तदपवाद एव युक्त इत्यत आह अत्रादिभ्यस्त्वित्यादि। एकेनादिशब्देन

ऋषयो जातसेनादयो ऽन्धकादिषु च वर्त्तमाना उग्रसेनादयः परिगृह्यन्ते। द्वितीयेन ण्यादयः प्रत्यया:। तत्र ऋष्यणोऽवकाशो वासिष्ठः। इतश्चानिञ इति (४।१।११२) ढकोऽवकाशो दौलेयः। अत्रिशब्दादुभयप्राप्तौ परत्वाद् ढग् भवति। आत्रेयः। ऋष्यणोऽवकाशः सएव। सेनान्तलक्षणस्य ण्यस्यावकाशः कारिषेण्यो हारिषेण्यः। जातसेनो नाम ऋषिः। तस्मादुभयप्राप्तौ परत्वाण् ण्यो भवति जातसेन्यः। अन्धकाणोऽवकाशः श्वाफल्कः। ण्यस्य स एव। उग्रसेनो नामान्धकः। तस्मादुभयप्राप्तौ परत्वाण् ण्यो भवति। औग्रसेन्यः। वृष्ण्यणोऽवकाशो वासुदेवः। ण्यस्य स एव। शूरसेनो विष्वक्सेनो नाम वृष्णिः। तस्मादुभयप्राप्तौ परत्वाण् ण्यो भवति शौरसेन्यः। वैष्वक्सेन्यः। कुर्वणोऽवकाशो नाकुलः। ण्यस्य स एव। भीमसेनो नाम कुरुः। तस्मादुभयप्राप्तौ परत्वाण् ण्यो भवति भैमसेन्यः। कथं पुनरित्यादि चोद्यम्। केचिदाहुरित्यादि चोद्यपरिहारः। काकतालीयमिति। अबुद्धिपूर्वकमित्यर्थः। सङ्कलिता इति। समुच्चिताः। नित्या एवेति। अन्धकादीनां वंशानामनादित्वात्।

## ११५। मातुरुत्संख्यासंभद्रपूर्वायाः।

द्वैमातुर इति। प्राक् तद्धितार्थे विषये द्विगुः पश्चात् तद्धितः। साम्मातुर इति। पूर्वं प्रादिसमासः। पश्चात् तद्धितः। भाद्रमातुर इति। पूर्वं विशेषणसमासः। ततस्तद्धितः। अथ प्रत्ययार्थं वचनं कस्मान्न भवतीत्याह प्रत्ययः पुनरित्यादि। उत्सर्गलक्षणेनैव तस्यापत्यमित्यनेन (४।१।९२)। ननु च संख्यादिपूर्वत्वं मातृशब्दस्य विशेषणम्। तत्र मातृशब्दापेक्षया निर्देशः क्रियमाणः पुंलिङ्ग एव युज्यते। तत् कथं संख्यासंभद्रपूर्वाया इति स्त्रीलिङ्गेन निर्देश इत्यत आह स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष इति। मातुःशब्दस्य योऽर्थस्तदपेक्षोऽयं निर्देशः। स चार्थः स्त्रीलिङ्गः। तेन स्त्रीलिङ्गेन निर्देशः कृतः। तेनेत्यादिनार्थापेक्षस्य फलं दर्शयति। अर्थापेक्षे हि स्त्रीलिङ्गनिर्देशे स्त्रीलिङ्गो यस्यार्थो मातृशब्दस्य तस्यैव ग्रहणेन भवितव्यम्। तेन धान्यमातुर्ग्रहणं न भवति। नहि तस्य स्त्रीलिङ्गोऽर्थः। किं तर्हि? पुंलिङ्गः।

धान्यं मिमीते यो भृतकः स धान्यमातेत्युच्यते। सौमात्र इति। प्राक् प्रादिसमासः। तत औत्सर्गिकोऽण्।

११६। कन्यायाः कनीन च।

११७। विकर्णशुङ्गच्छगलाद् वत्सभरद्वाजात्रिषु।

अत्र वत्सभरद्वाजात्रिशब्दा वात्स्यभारद्वाजात्रेयेषु गोत्रविशेषेषु लब्धवृत्तय उपात्ता इति। अतएवाह वैकर्णो भवति वात्स्यश्चेत्। शौङ्गो भवति भारद्वाजश्चेत्। छागलो भवत्यात्रेयश्चेदिति। सा पुनस्तेषां गोत्रापत्ये वृत्तिः कार्य्ये कारणोपचाराद् वेदितव्या। इयमपि चैतत् प्रमाणमिति। कथं पुनः परस्परविरुद्धमपि प्रमाणं भवतीत्याशङ्क्याह उभयथा सूत्रप्रणयनादिति। उभयथा ह्येतत् सूत्रमाचार्य्येण प्रणीतम्। तस्मात् को विरोधः?

११८। पीलाया वा।

११९। ढक् च मण्डूकात्।

१२०। स्त्रीभ्यो ढक्।

इह स्त्रीग्रहणेन टाबादिस्त्रीप्रत्ययान्ताः शब्दा गृह्यन्त इति। अथ स्वरूपग्रहणं कस्मान्न भवति? बहुवचननिर्देशात्। स्वरूपग्रहणे हि तस्यैकत्वादेकवचनेनैव निर्देशं कुर्य्यात्। स्वार्थमात्रस्य ग्रहणं कस्मान्न भवति? विमातृशब्दस्य स्वार्थस्य शुभ्रादिषु पाठात्। यद्यत्र स्वार्थमात्रस्य स्त्रीशब्दस्य ग्रहणं स्यात् तस्य शुभ्रादिषु पाठोऽनर्थकः स्यात्। अनेनैव ढकः सिद्धत्वात्। ऐड़विड़ो दारद इति। इड़विड़ोऽपत्यं दरदोऽपत्यमित्यणेव भवति। ढगिति वर्त्तमाने ढकः पुनर्ग्रहणं नित्यार्थम्। वड़वाया वृषे वाच्य इति। यस्तस्या गर्भे वीजं प्रक्षिपति स वृषो वाड़वेय इत्युच्यते। अण् क्रुञ्चाकोकिलात् स्मृत इति। वृष इति नापेक्ष्यते। अपत्ये विधिरेवायम्। ढकोऽपवादः।

१२१। द्व्यचः।

तन्नामिकाणोऽपवाद इति। ये द्व्यचः स्त्रीप्रत्ययान्ता नदीमानुषीनामधेयभूता स्तेभ्यो विशेषविहितत्वात् तन्नामिकाण् भवति। ततस्तद्बाधनार्थं ढग् विधीयते।

१२२। इतश्चानिञः।

१२३। शुभ्रादिभ्यश्च।

यथायोगमित्यादि। ये तावदकारान्तास्तेभ्य इञोऽपवादः। शलाका कुरेका अम्बिका अशोका खट्वा पिङ्गला खण्डोन्मत्ता इत्येतेभ्यस्तन्नामिकाणः। विधवाशब्दात् क्षुद्रालक्षणस्य ढ्रकः। किंकसा रोहिणी अजवस्ति शकन्धि कृकलास सुदत्त परिधि एतेभ्य श्चतुष्पाल्लक्षणस्य ढञः। गोधाशब्दाद् गोधाया ढ्रकः। वचनसामर्थ्यात् सोऽपि भवत्येव। शेषेभ्य औत्सर्गिकोऽण इतेत्रष यथा-योगार्थः। लक्षणश्यामयोर्वासिष्ठ इति। लक्षण श्याम इतेतयोर्वासिष्ठेऽपत्य-विशेषे ढग् भवति। लाक्षणेयो वासिष्ठः। लाक्षणिरन्यः। श्यामेयो वासिष्ठः। श्यामायनोऽन्यः। अश्वादित्वात् फञ्।

१२४। विकर्णकुषीतकात् काश्यपे।

१२५। भ्रुवो वुक् च।

१२६। कल्याण्यादीनामिनङ्।

१२७। कुलटाया वा।

कुलान्यटतीति कुलटा। नन्वकः सवर्णे दीर्घत्वे कृते कुलाटेति भवितव्य-मित्यत आह पररूपमित्यादि। पूर्वेणैवेति। स्त्रीभ्यो (४।१।१२०) ढगित्यनेनैव। व्यवहितेऽपि पूर्वव्यपदेशः प्रवर्त्तते यथा मथुरायाः पाटलिपुत्रं पूर्वमिति। कौलटेर इति। एयादेशे कृते वलि यलोपः।

१२८। चटकाया ऐरक्।

चटकाया अपत्यं स्त्री चटकेति। लुक् तद्धितलुकीति (१।२।४९) लुकि कृते पुनष्टाप् कर्त्तव्यः। पुंलिङ्गादपि स्त्रियामिष्यत एव लुक्। एवं चटकादै-रगित्येतत् सूत्रमासीत्। इदानीं प्रमादाच्च चटकाया इति पाठः।

१२९। गोधाया ढ्रक्।

गौधेर इति। पूर्ववद् यलोपः।

## १३० । आरगुदीचाम् ।

आचार्य्यग्रहणं पूजार्थमिति । ननु चासत्याचार्य्यग्रहणे नित्य एवायं विधिः स्यात् । तथाचारकः पूर्वेण ढका समावेशो न स्यात् । तद्विकल्पार्थमेवाचार्य्यग्रहणं कस्मान्न भवतीत्याह वचनसामर्थ्यादिति । ढगपि ह्युच्यते । आरगपि । तत्र वचनसामर्थ्यात् समावेशो भविष्यति । तस्मात् पूजार्थमेवाचार्य्यग्रहणम् । ज्ञापकं त्वित्यादि । ढका सिद्धे यदारग्वचनं तज् ज्ञापनार्थम् । तेनैवं ज्ञायते ऽन्येभ्योऽप्ययं भवति । अन्यथा ह्यारग् वचनमनर्थकं स्यात् । ढकि सिद्धेः । तेन जडस्यापत्यं जाडारः । पाण्डार इति सिद्धं भवति । नह्येतड्ढका सिध्यति ।

## १३१ । क्षुद्राभ्यो वा ।

अर्थधर्मेति । अर्थस्य क्षुद्रत्वात् तदभिधायिन्योऽपि प्रकृतय उपचारेण क्षुद्रा इति निर्दिश्यन्ते ।

## १३२ । पितृष्वसुश्छण् ।

## १३३ । ढकि लोपः ।

कथं पुनरित्यादि । ढग्विधौ टाबादिस्त्रीप्रत्ययान्तग्रहणात् पितृष्वसृशब्दस्य चास्त्रीप्रत्ययान्तत्वात् । ततो ढको भावमसम्भावयतः प्रश्नः । एतदेवेत्यादि । यदेतत् पितृष्वसृशब्दं प्रति ढको निमित्तत्वेनाश्रयण मेतदेव पितृष्वसृशब्दात् तस्य भावं ज्ञापयति । नह्यसतो निमित्तभाव उपपद्यते ।

## १३४ । मातृष्वसुश्च ।

पितृष्वसुरितिप्रतदपेक्षत इति । इहाप्यनन्तरस्य पितृष्वसुर्विधिर्वा भवति प्रतिषेधो वेति (प,६२) लोप एवानन्तरः प्राप्नोति । न च्छण् । व्यवहितत्वात् । उभयमपि चैतदिष्यते । तत्र यतो हेतोरेतद्द्वयमपि लभ्यते तमनेन दर्शयति । पितृष्वसुरिति । एतदिहापेक्ष्यमाणं ह्यर्थात् षष्ठ्यन्तं ज्ञायते यथा लोपविधौ । पितृष्वसुरिति च षष्ठी । तेनायमर्थः सम्पद्यते । पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि । तेन च्छण् ढकि लोपश्च लभ्यते । उभयमपि ह्येतत् पितृष्वसुरुक्तम् ।

## १३५। चतुष्पाद्भ्यो ढञ्।

चतुष्पाद्भ्य इति। चत्वारः पादा आसामिति तास्तथोक्ताः। पादस्य लोपोऽहस्त्यादिभ्य इति (५।४।१३८) लोपः। इहाप्यर्थधर्मेण तदभिधायिन्यः प्रकृतयो निर्दिश्यन्ते। अतएवाह चतुष्पादभिधायिनीभ्यः प्रकृतिभ्य इति। बहुवचननिर्देशः स्वरूपविधिनिरासाय। अणादीनामिति। आदिशब्देन ढगादीनां ग्रहणम्। कामण्डलेय इत्यादि। कमण्डलूशुन्तिबाहुजम्बुशब्दा श्चतुष्पाज्जातिवाचिनः। तेषां ढे लोपोऽकद्रवा इत्युवर्णलोपः (६।४।१४७)।

## १३६। गृष्टादिभ्यश्च।

अणादीनामपवादः। आदिशब्देन ढकः। बहुवचननिर्देशस्तु प्रकृति-भेदेन तयोर्भेदस्य विवक्षितत्वात्। तत्राजवस्तिमित्रयुशब्दयोरणोऽपवादः। शेषाणामितश्चानिञ इति (४।१।१२२) ढकः।

## १३७। राजश्वशुराद् यत्।

क्षत्रियजातिश्चेदिति। प्रत्ययान्तेन यदि क्षत्रियजातिर्गम्यते। एवं यद् भवति यो ह्यपत्यमेव राज्ञो न क्षत्रियजातिस्तत्राणेवौत्सर्गिको भवति। एतच्च वेत्यस्येहानुवृत्तस्य व्यवस्थितविभाषात्वविज्ञानाल्लभ्यते। राजन्य इति। ये चाभावकर्मणोरिति (६।४।१६८) प्रकृतिभावः। राजन इति। अन्नाप्यनिति (६।४।१६४) प्रकृतिभावः।

## १३८। क्षत्राद् घः।

घप्रत्ययो भवतीति। घशब्दएव। नतु तरप्तमपा इति वेदितव्यम्। कथं पुनरेतल्लभ्यते? यावता घ इति तरप्तमपोरियं संज्ञा। संज्ञा चोच्चारिता संज्ञिनं सम्प्रत्याययतीति तयोरेव ग्रहणं युक्तम्। नैष दोषः। प्रत्ययविधौ यत्र घ इति श्रूयते तत्र स्वरूपस्य ग्रहणं भवति। ज्ञापकाद्। यदयं प्रत्ययादेर्घकारस्येयादेशं शास्ति तज् ज्ञापयति यत्र प्रत्ययविधौ घः श्रूयते तत्र स्वरूपमेव गृह्यत इति। नहि संज्ञिनोर्ग्रहणेन प्रत्ययादे र्घः संभवति।

## १३९ । कुलात् खः ।

उत्तरसूत्र इत्यादि। उत्तरसूत्रे हि पूर्वपदप्रतिषेधाद् यस्यां परिभाषायां प्रातिपदिकश्रुतिरस्ति सात्र नोपतिष्ठत इत्येषोऽर्थो ज्ञायते। यदि ह्युपतिष्ठेत तदा ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादेव स पूर्वपदान्न भविष्यतीत्यपूर्वपदादिति प्रतिषेधोऽनर्थकः स्यात्। सामान्यापेक्षञ्च ज्ञापकम्। तेन व्यपदेशिवद्भावोऽप्रातिपदिकेन (प, ३३) ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेष्यत (प, ३२) इत्येतयोर्द्वयोरपीह परिभाषयोरुपस्थानं न भवति। ततश्च कुलशब्दान्तं प्रातिपदिकं केवलश्च कुलशब्दो गृह्यते।

## १४० । अपूर्वपदादन्यतरस्यां यड्ढकञौ ।

ननु पूर्वशब्दोऽवयववचनः। न च कुलशब्दस्य पदान्तरमवयव उपपद्यते। पृथग्भूतत्वात्। अनारम्भकत्वाच्च। ततो व्यवच्छेद्याभावादपूर्वपदादित्ययुक्तमेतत् कुलशब्दस्य विशेषणमित्याह समाससम्बन्धेत्यादि। समासे सतेत्यतद् भवति पूर्वपदमुत्तरपदमिति। तस्मात् समाससम्बन्धिनः पूर्वपदस्याभावेन कुलशब्दो विशेष्यते। अविद्यमानं समाससम्बन्धि पूर्वपदं यस्येति। कस्य चाविद्यमानम्? यः समासस्यान्तर्भूतो न भवति केवलः कुलशब्दः। तेन केवलात् कुलशब्दादयं विधिरित्युक्तं भवति। अथ व्यवस्थावाच्येव पूर्वशब्दः कस्मान्नाश्रीयते? अशक्यत्वात्। तत्र ह्याश्रीयमाणेऽविद्यमानं पूर्वपदं यस्मात् कुलशब्दात् सोऽपूर्वपदशब्देनोच्यते। ततश्च देवदत्तः कुल्यो देवदत्तः कौलेयक इति वाक्ये यड्ढकञौ न स्याताम्। देवदत्तशब्दस्येह पूर्वपदस्य विद्यमानत्वात्। पदग्रहणं किमिति? अपूर्वादित्येवं कस्मान्नोक्तम्? एवमपि ह्यष्टं सिध्यति। लघु च सूत्रं भवतीति मन्यते। बहुच्पूर्वपदादपि यथा स्यादिति। अपूर्वादित्युच्यमाने बहुच् पूर्वं यत् प्रातिपदिकं बहुजस्य पूर्वं इति ततः प्रत्ययो न स्यात्। पदग्रहणे तु सति ततोऽपि भवति। तस्यापूर्वपदत्वात्। बहुकुल्य इति। ईषदसमाप्तं कुलमिति विभाषा सुपो बहुच् पुरस्तात्त्विति (५।३।६८) बहुच्। बहुकुलस्यापत्यं बहुकुल्यः।

१४१। महाकुलादञ्खञौ।

१४२। दुष्कुलाड् ढक्।

१४३। स्वसुश्छः।

१४४। भ्रातुर्व्यच्च।

तकारः स्वरार्थ इति। तित् स्वरितमिति (६।१।१८५) स्वरितत्वं यथा स्यात्।

१४५। व्यन् सपत्ने।

ननु नित्यं सपत्न्यादिष्विति (४।१।३५) सपत्नीशब्द एव स्त्रीलिङ्गो व्युत्पादितः। तत् कथं सपत्न इति प्रयोगः पुंलिङ्गस्य युज्यत इतयाह सपत्नशब्दः शत्रुपर्य्याय इत्यादि। इवार्थ इति। इवार्थः सादृश्यम्। यथैव हि सपत्नी दुःखहेतुस्तथा शत्रुरपीति। यः सपत्नीव सपत्नः स उच्यते।

१४६। रेवत्यादिभ्यष्ठक्।

यथायोगमित्यादि। तत्राद्यानां चतुर्णां स्त्रीप्रत्ययान्तत्वाड् ढकोऽपवादः। वृकवञ्चिन्नित्यस्याणः। शेषाणामकारान्तत्वादिञः।

१४७। गोत्रस्त्रियाः कुत्सने ण च।

अपत्यं पौत्रप्रभृति गोत्रं गृह्यत इति। न लौकिकमपत्यमात्रम्। तद्ग्रहणे हि गोत्रग्रहणमनर्थकं स्यात्। अपत्याधिकारादेव तद्ग्रहणस्य लब्धत्वादिति भावः। पितुरसंविज्ञान इति। अप्रसिद्धौ। तस्य पितुरसंविज्ञानप्रदर्शनार्थं मात्रा यो व्यपदेशो ऽस्ति तेन कुत्सा स्यात्। गार्गौ जाल्मो गार्गिक इति। गर्गशब्दाद् गोत्रे गर्गादियञन्ताद् यञश्चेति (४।१।१६) ङीपि हलस्तद्धितस्येति (६।४।१५०) लोपे (B B) सति यकारस्य गार्गी इति स्थिते णठकौ। ग्लौचुकायन इत्यादि। ग्लुचुकस्यापत्यं गोत्रं स्त्री प्राचामवृद्धात् फिन् बहुलमिति फिन् (४।१।१६०)। तत इतो मनुष्यजातेरिति

---

(B B) वस्तुतस्त्वापत्यस्य च तद्धितेऽ (६।४।१५१) नातीत्यनेनात्र यलोपः। यस्येति चेत्यकारलोपः (६।४।१४८)।

(४।१।६५) ङीष् । ततो पाठकौ । कारिकेय इति । कारकशब्दात् ण्वुलन्तात् टाप् । कारिकाशब्दोऽयं गोत्रे न वर्त्तते । ततो ढगेव भवति । औपगविरिति । उपगोरपत्यं गोत्रं पुमान् । अण् । तदन्तादिञेव भवति । अत्र केनचित् प्रतिषिद्धाचरणादिना कुत्सा वेदितव्या । गार्गेयो माणवक इति । अत्र पितरि विज्ञाते मातुः परिज्ञानार्थं तन्मात्रा व्यपदेशः क्रियत इति नास्ति कुत्सा । तेन ढगेव भवति ।

## १४८ । वृद्धाट् ठक् सौवीरेषु बहुलम् ।

सौवीरेष्विति प्रकृतिविशेषणमिति । सौवीरेषु यद् वृद्धं सौवीरगोत्राभिधायि यद् वृद्धमित्यर्थः । भागवित्तेरित्यादि । भगवित्तस्यापत्यं गोत्रम् । अत इञ् (४।१।९५) । तदन्तात् ठक् । भागवित्तिकः । भागवित्तायन इति । यञिञोश्चेति (४।१।१०१) फक् । तृणविन्दोरपत्यमौत्सर्गिकोऽण् तार्णविन्दवः । ततष्ठक् तार्णविन्दविकः । पूर्वसूत्रे ठक् चानुकृष्ट इतीह नानुवर्त्तत इति पुनष्ठग्ग्रहणं णस्य निवृत्त्यर्थम् । वापूर्वकं हि ठग्ग्रहणं णप्रत्ययेन सम्बद्धम् । अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । भागपूर्वपदो वृत्तिरित्यादि । येभ्योऽनेन सूत्रेण ठगिष्यते त एतेन श्लोकेन परिगण्यन्ते । भाग इत्येतत् पूर्वपदं यस्य वृत्तिशब्दस्य स तथोक्तः । अयं तावदेको भागवित्तिः । द्वितीयस्तार्णविन्दवः । तृतीयस्त्वाकशापेयः । य एते त्रयः शब्दा गोत्रे ठग् बहुलं तत इति । सौवीरगोत्रवचनात्तात् प्रातिपदिकाद् बहुलं य ष्ठगुच्यते स ततस्तेभ्य एव भागवित्तिप्रभृतिभ्यस्त्रिभ्यो भवति । नान्येभ्य इत्यर्थः । अथ वृद्धग्रहणं किमर्थम् ? यावता पूर्वसूत्राद् गोत्रग्रहणमनुवर्त्तते । सौवीरग्रहणेनैव विशेषयिष्यामः । यच्च सौवीरगोत्रे वर्त्तते प्रातिपदिकं भागवित्त्यादिकं तद् वृद्धमेव । ततो निवर्त्त्याभावादपार्थकं वृद्धग्रहणमित्याह वृद्धग्रहणमित्यादि । तद्धि गोत्रग्रहणं स्त्रिया विशेषणम् । अतस्तस्मिन्ननुवर्त्तमाने विशेष्यायाः स्त्रिया अनुवृत्तिः स्यात् । तस्मात् तन्निवृत्त्यर्थं वृद्धग्रहणम् । गोत्रग्रहणमेवानुवर्त्तिष्यते । तस्यैव स्वरितत्वात् । न स्त्रीति । एतद्व्याख्येयं भवति । व्याख्यानाच्च लघु वृद्धग्रहणमेव । औपगविरिति । अणन्तादिञ् ।

ननु च परिगणनं कृतम्। तत् कथमौपगवशब्दात् ठक्प्रसङ्गः? सौवीरग्रहणे सति तत्परिगणनम्। तथाहि भागवित्तिप्रभृतयः सौवीरगोत्राभिधायिन एव परिगणिताः। तत्रासति सौवीरग्रहण औपगवशब्दादपि प्रसज्यते। भागवित्तायन इति। पूर्ववत् फक्। अथ बहुलग्रहणं किमर्थम्? न वाग्रहणमेव क्रियेत। तेनापि हि भागवित्तिको भागवित्तिकायन इत्यादि सिध्यत्येवेत्यत आह बहुलग्रहणमित्यादि। वाग्रहणाद् विकल्पमात्रं लभ्यते। न तूपाधिवैचित्र्यम्। बहुलग्रहणे तु तदपि। तस्मादुपाधीनां विशेषणानां वैचित्र्यं नानाप्रकारता यथा स्यादित्येवमर्थं बहुलग्रहणम्। तदेवोपाधिवैचित्र्यं दर्शयितुमाह गोत्रस्त्रिया इत्यारभ्येत्यादि। सुखावबोधम्।

१४८। फेश्छ च।

यमुन्दस्येत्यादि। येभ्योऽनेन सूत्रेण च्छठकाविष्येते तेषामनेन श्लोकेन परिगणनं क्रियते। तत् तु बहुलग्रहणानुवृत्तेरेव लभ्यत इत्येवं तद्वेदितव्यम्। यमुन्दमुद्दिश्य वृत्तिकारेणैवोदाहरणं दर्शितम्। इतरयोस्तु दर्शयामः। सुयाम्नोऽपत्यं (C C) फिञ् सौयामायनिः। तस्यापत्यं सौयामायनीयः सौयामायनिकः। वृषस्यापत्यं फिञ्। तस्य दगुकोशलकर्मारच्छागवृषाणां युड् वादिष्टस्येति (४।१।१५५ वा) वचनादायन्नादेशे कृते युड़ागमः। वार्ष्यायणिः। तस्यापत्यं वार्ष्यायणीयः। वार्ष्यायणिकः। एते यमुन्दादयः शब्दाः फिञः स्मृताः फिञन्ता विज्ञाताः। गोत्रस्त्रियाः कुत्सने ण (४।१।१४७) चेत्यादयश्चत्वारो योगाः। तत्राद्यः कुत्सन एव। अन्त्यः सौवीरेष्वेव। मध्यमौ तु द्वौ सौवीरेषु कुत्सायाञ्च शब्दवित् स्मरेज् जानीयात्।

१५०। फाण्टाहृतिमिमताभ्यां णफिञौ।

अल्पाच्तरस्येत्यादि। मिमतशब्दोऽयमल्पाच्तरः। तस्याल्पाच्तरमिति (२।२।३४) पूर्वनिपाते प्राप्ते यः परनिपातः स लक्षणव्यभिचारचिह्नं सूचयति।

(C C) सुषामा is the reading in the Bengal MS.

यथेदं पूर्वनिपातलक्षणं व्यभिचरति स्वविषये न प्रवर्त्तते तथा यथासंख्यलक्षणमपीति यथासंख्यं न भवति । अतएवैकैकस्मात् प्रत्ययद्वयं सिद्धं भवति ।

## १५१ । कुर्वादिभ्यो ण्यः ।

कौरव्य इति । ओर्गुणः (६।४।१४६) । वान्तो यि प्रत्यय इत्यवादेशः (६।१।७९) । कुरुनादिभ्यो ण्य इत्यादि । किमर्थम् पुनः कुरुशब्दादपरोऽपि ण्यप्रत्ययो भविष्यति ? यावतानेनैव सिद्धम् । तदेव हि रूपम् । स एव च स्वर इत्यत आह स तु क्षत्रियादिति । अनेनार्थभेदं दर्शयति । स हि जनपदशब्दात् क्षत्रियादञित्यधिकारात् (४।१।१६८) क्षत्रियाद् भवति । अयं तु ततोऽन्यतः । ततश्चैकः क्षत्रियापतेय भवति । अपरस्त्वक्षत्रियापत्य इति स्पष्ट एवार्थभेदः । रूपविशेषोऽपि बहुषु विद्यत इति दर्शयन्नाह तद्राजसंज्ञक इत्यादि । तस्य हि तद्राजसंज्ञकत्वात् तद्राजस्य बहुष्वित्यादिना (२।४।६२) बहुषु लुका भवितव्यं कुरव इति । अयन्तु श्रूयत एव कौरव्या इति । रथकारशब्दोऽत्र पठ्यते । तत्र रथकारशब्दश्चास्त्येव जातिवचनः । अस्ति च कारिवचनः । तदिह तयोः कतरः पठ्यत इत्याह रथकारशब्दोऽत्र पठ्यत इत्यादि । अथ कारिवचनोऽपि कस्मान्न पठ्यत इत्याह कारिणस्त्वित्यादि । यो हि कारिवचनो रथकारशब्द स्तत उत्तरसूत्रेणैव ण्यः सिद्धः । तत् किमत्र तस्य पाठेन ? पुंवद्भावो न भवतीति । भस्याढे तद्धित इति (६।३।३५, वा) यः पुंवद्भावः प्राप्नोति स केशिनीशब्दस्य न भवति । यदि स्यान् न स्तद्धित इति (६।४।१४४) टिलोपे कृते कैश्य इत्यनिष्टं रूपं स्यात् । कस्मान्न भवतीत्याह स्त्रीप्रत्ययस्य निर्देशसामर्थ्यादिति । यदि हि पुंवद्भावः स्यात् स्त्रीप्रत्ययेनास्य निर्देशोऽनर्थकः स्यात् । पुंलिङ्गमेवैनं पठेद् । पुंलिङ्गस्यापि पाटे लिङ्गविशिष्टपरिभाषया केशिनीशब्दादपि प्रत्ययः सिध्यति । ननु च पुंलिङ्गनिवृत्त्यर्थः स्त्रीप्रत्ययान्तस्य पाठः स्यात् । नैतदस्ति । अनभिधानादेव हि पुंलिङ्गान्न भविष्यति । तस्य कण्वादिवदिति । अपत्याधिकारे ऽयमतिदेशो भवन् कण्वादिभिरपत्यप्रत्ययान्तैर्विज्ञायते । कण्वादयश्च गर्गाद्यन्तःपातिनः । तेन

यञन्तानां कण्वादीनां यत् कार्य्यं तद् वामरथ्यस्य स्वरवर्जं भवतीत्यर्थः भवति। लुगादिकमिति। आदिशब्देन ङीबादिकं गृह्यते। कण्वादीनामपत्यप्रत्ययस्य यञञोश्चेति (२।४।६४) बहुषु लुग् भवति। स्त्रियां यञश्चेति (४।१।१६) ङीप्। प्राचां ष्फ तद्धित इति (४।१।१७) ष्फप्रत्ययः स्त्रियामेव। यञिञोश्चेति (४।१।१०१) फक्। शैषिकेष्वर्थेषु कण्वादिभ्यो गोत्र (४।२।१११) इत्यण् तस्येद(४।३।१२)मित्यर्थविवक्षायाम्। संघाङ्क लक्षणेष्वञयञिञामणिति(४।३।१२३)। एतानि कार्य्याणि यथा कण्वादीनां भवन्ति तथा वामरथ्यस्यापि। एषां वामरथा इत्यादीनि यथाक्रममुदाहरणानि। नातिदेशिकमाद्युदात्तत्वमिति। यथा कण्वादीनां यञन्तानां ञित्स्वरेणाद्युदात्तत्वं न तथा वामरथ्यस्य। किं तर्हि ? प्रत्ययस्वरेणान्तोदात्तत्वमेव भवति। सम्राजः क्षत्रिय इति। सम्राजः क्षत्रिये ण्यो भवति। सम्राजोऽपत्यं साम्राज्यः। अन्यत्राणेव साम्राजः।

## १५२। सेनान्तलक्षणकारिभ्यश्च।

अत्र ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाल्लक्षणशब्दस्य स्वरूपग्रहणम्। अतएवाह लक्षणशब्दादिति। कारीत्यर्थग्रहणम्। तत्रार्थे कार्य्यस्याभावात् तद्वाचिनः प्रत्ययो विज्ञायत इत्याह कारिवचनेभ्यश्चेति। यथा लक्षणशब्दस्य स्वरूपग्रहणं तथा कारिशब्दस्य कस्मान्न भवति। शिवादिषु तक्षन्निति पाठात्। अस्य हि कारिलक्षणमिञं बाधितुं तत्र पाठः। यदि च कारिशब्दस्येह स्वरूपग्रहणं स्यात् तक्षञ्शब्दादिञः प्राप्तेरसम्भवादुत्सर्गेणैवाणा भवितव्यमिति तस्य शिवादिषु पाठोऽनर्थकः स्यात्। अर्थग्रहणे त्वनेन प्राप्तस्येञो बाधनार्थस्तत्र पाठो युज्यते।

## १५३। उदीचामिञ्।

वचनसामर्थ्यादित्यादि। ण्योऽप्युच्यते। इञपि। वचनसामर्थ्यादेवान्तरेणाचार्य्यग्रहणं तयोः समावेशे सिद्धे यदाचार्य्यग्रहणं क्रियते तद्वैचित्र्यार्थम्। आचार्य्यग्रहणस्यातिरिच्यमानत्वादयमर्थो लभ्यते ग्रन्थाधिक्यादर्थाधिक्यं भवतीति कृत्वा। ननु च पूजार्थमाचार्य्यग्रहणं स्यात्। नैतदस्ति। एवं हि प्राचामपि

ग्रहणं कर्त्तव्यं स्यात् । तेऽपि हि सेनान्तलक्षणकारिभ्य इञं न स्मरन्ति । तक्षन्शब्द इत्यादिना वैचित्र्यं दर्शयति । ताक्ष्ण इति । शिवाद्यणि कृते यपूर्वस्यन्हतराज्ञामणीतयल्लोपः (६।४।१३५) । ताक्षण्य इति । ये चाभाव-कर्मणोरिति (६।४।१६८) प्रकृतिभावः ।

## १५४ । तिकादिभ्यः फिञ् ।

कौरव्यशब्दः पठ्यत इत्यादि । कौरव्यशब्दोऽयमस्त्येव क्षत्रियगोत्रवचनो यः कुर्वादिभ्यो ण्य इति (४।१।१७२) ण्यप्रत्ययान्तः । अस्ति ब्राह्मणादिगोत्र-वचनो यः कुर्वादिभ्य इति (४।१।१५१) ण्यप्रत्ययान्तः । तयोरिह पूर्वो गृह्यते । कुत एतत् ? औरसशब्देन साहचर्य्यात् । औरसशब्दोऽयं जनपदशब्दात् क्षत्रियादञित्यञ्प्रत्ययान्तः (४।१।१३८) । तेनासौ क्षत्रियवचनः । तत्साह-चर्य्याच्च कौरव्यशब्दो यः क्षत्रियप्रत्ययान्तत्वात् क्षत्रियवचनः स एव गृह्यते । यस्त्वित्यादि । यस्तु कुर्वादिभ्यो ण्य इति (४।१।१५१) ण्यप्रत्ययान्तो ब्राह्मणादि-गोत्रवचनस्तस्मादत इञितीञैव (४।१।९५) भवितव्यम् । तत्रैतत् स्यात् । स्वमनीषिकेयं भवत इत्याह तथा चेत्यादि । यत एवं ब्राह्मणादिगोत्र-वचनादिञैव भवितव्यम् । तथाहि ण्यक्षत्रियादिसूत्रे (२।४।५८) पूर्वैरपि वृत्तिकारैः कौरव्यः पिता कौरव्यः पुत्र इत्युदाहृतम् । यदि चातः फिञ् स्यात् तदुदाहरणं न युज्येत । नहि ण्यप्रत्ययान्ताद् विहितस्य फिञो यूनि लुगुच्यते । अपि त्विञः ।

## १५५ । कौशल्यकार्मार्य्याभ्याञ्च ।

परमप्रकृतेरेवायं प्रत्यय इष्यत इति । कोशलशब्दात् कर्मारशब्दाच्च । एवकारो वृद्धेत्कोशलाजादाञ्ञ्यङिति (४।१।१७१) ञ्यङन्तो यः कौशल्य-शब्दो यश्च सेनान्तलक्षणकारिभ्यश्चेति (४।१।१५२) कारिलक्षणण्यप्रत्ययान्तः कार्मार्य्यशब्दस्तयोर्व्यवच्छेदाय । यदि मूलप्रकृतेरेवेष्यते कथमिदं विकृतं प्रकृतिरूपं श्रूयत इत्याह प्रत्ययसन्नियोगेनेत्यादि । न चेयं स्वमनीषिका । अपित्वाचार्य्याणामेव भाष्यकारप्रभृतीनामिदं मतमिति दर्शयन्नाह तथा चेत्यादि । कः पुनः परमप्रकृतेः प्रत्ययान्ताद्वोत्पत्तौ विशेषः ? परमप्रकृते-

तत्यत्तावपत्यमात्रे प्रत्ययो लभ्यते। प्रत्ययान्तात् तूत्पत्तौ गोत्राद् यूनीति (४।१।९४) वचनाद् यून्यपत्य इत्येव विशेषः। युड् वादिष्टस्येति। आदिष्ट-ग्रहणमायन्नादेशे कृते यथा स्यादित्येवमर्थम्। अन्यथा ह्यनादित्वादायन्नादेशो न स्यात्। दागव्यायनिरिति। ओर्गुणे (६।४।१४६) कृते वान्तो यि प्रत्यय इत्यवादेशः (६।१।७९)।

## १५६। अणो द्व्यचः।

कार्त्त्रायणिरिति। कर्त्तुरपत्यमित्यण्, कार्त्त्रः। ततः फिञ्। दाक्षायण इति। दाक्षिशब्दादिञन्ताद् यूनि यञिञोश्चेति फक् (४।१।१०१)। प्रतिपाद-नादि सुगमम्।

## १५७। उदीचां वृद्धादगोत्रात्।

वृद्धादिति। इहैव यत्पारिभाषिकं वृद्धं तद् गृह्यते। न शास्त्रान्तर-प्रसिद्धम्। अगोत्रादिति प्रतिषेधात्। कारिशब्दादित्यादि। कारिलक्षणस्ये-ञोऽवकाशस्तान्तुवायिरिति। फिञोऽवकाश आम्रगुप्तायनिरिति। इहोभयं प्राप्नोति नापितायनिरिति। परत्वात् फिञेव भवति।

## १५८। वाकिनादीनां कुक् च।

यदिह वृद्धमगोत्रमिति। वाकिनशब्दादिकाकपर्य्यन्तम्। इञाद्यपवादो योग इति। आदिशब्देनाणो ग्रहणम्। तत्र चर्म्मिवर्म्मिशब्दयोरणोऽपवादः। शेषाणा-मिञः। चर्म्मिवर्म्मिणोर्नलोपश्चेति। चर्म्मिन् वर्म्मिन् इत्येतयोः कुक्फिञौ भवतो नलोपश्चेति। कुकि कृते प्रातिपदिकस्यानकारान्तत्वान् नलोपोऽत्र न प्राप्नो-तीति विधीयते। चार्म्मिकायणिः। वार्म्मिकायणिः।

## १५९। पुत्रान्तादन्यतरस्याम्।

तेनेत्यादि। वचनात् पूर्वसूत्रेणैवोदीचां मतेन यः पक्षे फिञ् विहित स्तस्मिन्ननेनान्यतरस्यां कुगागमोऽपि विधीयते। तेन त्रीणि रूपाणि भवन्ति।

## १६०। प्राचामवृद्धात् फिन् बहुलम्।

विकल्पार्थ इति। विकल्पप्रयोजनाय। एकेनैव सिध्यतीति। विकल्पार्थ-त्वादिति। प्रकृतत्वाद्विकल्प इति गम्यते। अतश्च किमर्थं सर्व्वेषां ग्रहण

मित्यध्याहार्य्यम् । तत्रेतरायुत्तरम् । यच्चोदीचांग्रहणं यच्च प्राचांग्रहणं तदुभयं पूजार्थम् । बहुलग्रहणं वैचित्रार्थम् । पारिशेष्यादन्यतरस्यांग्रहणं विकल्पार्थमित्युक्तं भवति । क्वचिदित्यादिना बहुलग्रहणस्य वैचित्रार्थतां दर्शयति ।

## १६१ । मनो र्जातावञ्यतौ षुक् च ।

तथाचेत्यादि । यस्मादपत्यार्थोऽत्र नास्त्येवञ्च कृत्वा मानुषा इति बहुषु लुङ् न भवति । अपत्यार्थे तु सति यञञोश्चेति (२।४।६४) बहुषु लुक् प्रसज्येत । अपत्ये कुत्सित इत्यादि । मूर्धन्योपसंख्यानपरोऽयं श्लोक: । अण्प्रत्ययोऽपत्यविवक्षायां तस्यापत्यमित्यनेनैव (४।१।८२) सिध्यति । ननु च मूर्धन्योऽपि च बहुलग्रहणानुवृत्त्या सिध्यत्येव । एवं तर्हि बहुलग्रहणानुवृत्तेर्लभ्य एवार्थ: श्लोकेन कथ्यते । स चापि मूर्धन्यो विशिष्ट एव विषये मूढादावपत्ये भवति । न सर्वत्र । अनधीतवेदत्वादज्ञो मूढ: । मूढत्वादेव प्रतिषिद्धाचरणाद्वा कुत्सितो य:स ब्राह्मणजातीयो माणव उच्यते ।

## १६२ । अपत्यं पौत्रप्रभृति गोत्रम् ।

प्रभृतिशब्द आदिशब्दस्यार्थे । पौत्र: प्रभृतिर्यस्येति बहुव्रीहि: । यदि पौत्रप्रभृति यदपत्यं तद् गोत्रसंज्ञं भवति गर्गस्यापि गोत्रसंज्ञा प्राप्नोति । सोऽपि कञ्चित् प्रति पौत्रो भवत्येव । सत्याञ्च गोत्रसंज्ञायां गोत्रशब्दादनन्तरापत्ये प्रत्ययो न प्राप्नोतीति चोद्यमाशङ्क्याह सम्बन्धिशब्दत्वादित्यादि । गोत्रसंज्ञा ह्यपत्यस्य पौत्रप्रभृतेर्विधीयते । तेन च यश्चापत्यमिति सम्बन्धिशब्दोऽसौ नियोगतोऽपत्यवन्तमपेक्षते । तेन तस्य यदपत्यं तदपेक्षया गोत्रसंज्ञा विधीयते । न च यस्य गर्ग: पौत्र स्तस्यासौ गर्गोऽपत्यमिति शक्यते व्यपदेष्टुम् । अपत्यत्वस्य तत्राप्रतिभासनात् । अप्रतिभासनं पुनस्तस्य तद्वतोऽविवक्षितत्वात् । यदपि हि तत्रापत्यत्वं तदप्यविवक्षितस्वरूपेण नाख्यातम् । ततोऽपत्यस्य पौत्रप्रभृते र्विधीयते । अत: स्वरूपेण प्रतिभासमानो न भवति गर्गस्य गोत्रसंज्ञाया: प्रसङ्ग: । गर्गस्य पौत्रप्रभृतीति । गर्गसम्बन्धि पौत्राद्यपत्यं गार्ग्य इति गोत्रसंज्ञायां सत्यां गोत्रे कुञ्जादिभ्यश्च्फञ्-(४।१।९८) अतो गोत्र इत्यनुवर्त्तमाने गर्गादिभ्यो यञिति (४।१।१०५) गोत्रेऽपत्ये यञ्

भवति। अपत्यमिति व्यपदेशोऽयमिति। संज्ञिन इति शेषः। तचोत्तरसूत्र इत्यभिप्रायः। इह तु पौत्रस्यापत्यत्वाव्यभिचारात् तदपत्यमेव प्रत्ययार्थः संज्ञित्वेन विज्ञायत इति नार्थः संज्ञिव्यपदेशार्थेनापत्यग्रहणेन। उत्तरसूत्रे तु पौत्रप्रभृत्येतत् षष्ठ्यन्तं विपरिणम्य पौत्रप्रभृतेः सम्बन्धिनोऽपत्यस्य युवसंज्ञेष्यते। सा चापत्यग्रहणमन्तरेण न लभ्यते। अन्यदपि ह्यपत्यात् पौत्रप्रभृतेः सम्बन्ध्यस्ति। तत्र न ज्ञायते कस्येयं संज्ञेति? अतस्तत्र संज्ञिनो व्यपदेशाय युक्तमपत्यग्रहणमित्येके। इह तु संज्ञिव्यपदेशार्थं युक्तमपत्यग्रहणं पश्यामः। असति ह्यपत्यग्रहणे सम्बन्धिशब्दत्वादपत्यशब्दस्येत्यादि यदुक्तं चोद्यनिरासाय तदघटमानं स्यात्। ततश्च गर्गस्यापि गोत्रसंज्ञा स्यादेव। तस्मादिहापि संज्ञिव्यपदेशायापत्यग्रहणं कर्त्तव्यमेवापत्यरूपेण प्रतिभासमानस्य संज्ञा यथा स्यात्। अन्यस्य मा भूदिति। ननु च यदेव तत्प्रकृतमपत्यग्रहणं तदेव संज्ञिव्यपदेशाय भविष्यति। तत् किमपरेणापत्यग्रहणेन? नैतदस्ति। तद्धि प्रत्ययार्थतया प्रकृतं कथं संज्ञिनो व्यपदेशाय स्यात्? स्यादेतत्। यद्यपि तत्प्रत्ययार्थे कृतं तथापि तस्येहानुवृत्तस्य तत्प्रयोजनं नास्तीत्यतः संज्ञिव्यपदेशाय विज्ञास्यत इति। एतच्च नास्ति। उत्तरार्थं ह्यधिकाराणामनुवृत्तिरिष्यते। व्याख्यानश्चैवं कर्त्तव्यं स्यात्। व्याख्यानाच्च वचनमेव लघुतरमित्यपत्यग्रहणं कर्त्तव्यम्। कौञ्जिः। गार्गिरिति। अनन्तरस्य गोत्रसंज्ञाया अभावाद् गोत्रे कुञ्जादिभ्यश्च्फञ् (४।१।९८) गर्गादिभ्यो यञिति (४।१।१०५) यश्च गोत्रे विधीयमानो न स भवति।

## १६३। जीवति तु वंश्ये युवा।

अभिजनप्रबन्ध इति। अभिजनाः पितामहादयः। प्रबन्धः सन्तानः। तत्र भवो वंश्य इति दिगादित्वाद् यत्। पौत्रप्रभृत्यपत्यमिति षष्ठीसमासः। पौत्रप्रभृतीति चेत्यादि। यदि पौत्रप्रभृतीत्येतत् सामानाधिकरण्येनापत्यं विशेषयेत् पौत्रप्रभृति यदपत्यमिति तदारभ्य युवसंज्ञा स्यात्। तच्चानिष्टम्। तस्मान्नैतत् सामानाधिकरण्येनापत्यस्य विशेषणम्। किं तर्हि? अर्थाद् विभक्तिविपरिणामे कृते षष्ठ्यन्ततामापन्नं वैयधिकरण्येन पौत्रप्रभृतेर्यदपत्य-

मिति । तथा सति यदिष्टं सम्पद्यते तद् दर्शयितुमाह तेनेत्यादि । यतएवं विभक्तिविपरिणामे कृते पौत्रप्रभृतीत्यनेन षष्ठ्यन्तेनापत्यं विशेष्यते तेन चतुर्थादारभ्य युवसंज्ञा विधीयते । तस्य च विभक्तिपरिणामस्यापत्यं हेतुः । अपत्यशब्दो हि सम्बन्धिशब्दत्वाद्वेत्याद्यपेक्षते । तत्र षष्ठ्या हेतुर्भवति । सन्निहितत्वाच्च । पौत्रप्रभृति तस्येत्येतदेवापेक्षते । ततस्तत्रैव षष्ठीं प्रकल्पयति यदि तर्ह्यपत्यग्रहणसामर्थ्यात् पौत्रप्रभृतेः षष्ठीविपरिणामो भवति । पूर्वसूत्रेऽपि कस्मान्न भवति ? तत्र प्रथमाया अनवकाशत्वात् । पूर्वसूत्रे ह्यकृतार्था प्रथमा । ततो न शक्यते तस्याः षष्ठीं विपरिणमयितुम् । इह तु कृतार्था शक्यते षष्ठीभावेन विपरिणमयितुम् । गार्ग्यायण इति । इह युवसंज्ञायां सत्यां गोत्राद् यून्यस्त्रियामिति (४।१।९४) गोत्रप्रत्ययान्ताद् यूनि प्रत्ययो भवति । तुशब्दोऽवधारणार्थ इति । कः पुनः संज्ञासमावेशे दोषः कथ्यते ? शालङ्केरपत्यं युवा यञिञोश्चेति (४।१।१०१) फक् । पैलस्यापत्यं युवा ऽणो द्व्यच (४।१।१५६) इति फिञ् । तयोः पैलादिभ्यश्चेति (२।४।५९) लुगुच्यते । शालङ्किर्युवा पैलो युवेति । यदि च गोत्रयुवसंज्ञयोः समावेशः स्यात् तदा शालङ्कीयूनम्छात्रा इत्यर्थविवक्षायां प्राग्दीव्यतीयेऽजादौ प्रत्यये विषयभूते गोत्राश्रयो गोत्रेऽलुगचीत्यलुक् ( ४।१।८९ ) स्यात् । ततस्तस्माद् यूनो गोत्रसंज्ञा मा भूदित्यवधारणार्थस्तुशब्दः क्रियते ।

## १६४ । भ्रातरि च ज्यायसि ।

भ्रातृशब्दस्य सम्बन्धिशब्दत्वाद् यदपेक्षं भ्रातृत्वं तमेव भ्रातरं संज्ञित्वेनोपक्षिपति । ज्यायानिति । प्रशस्यतरो वृद्धतरश्चाभिधीयते । तस्य च ज्यायस्त्वं गुणैर्वयसा वा । युवानं प्रतियोगिनमपेक्ष्य भवतीति स एव ज्यायसीत्यनेन प्रतियोगी प्रत्युपस्थाप्यते । तेन भ्रातुरेव कनीयसः संज्ञा विज्ञायत इति मत्वाह कनीयान् भ्राता युवसंज्ञो भवतीति । पूर्वजा इत्यादिना ऽवंश्यार्थतामारम्भस्य समर्थयते । अकारणत्वादित्यनेनापि भ्रातुरवंश्यत्वम् । यो हि साक्षात् पारम्पर्य्येण वा कारणं स वंश्यः । नच भ्राता कारणम् । तस्मादसौ वंश्यो न भवतीति । गार्ग्यो जीवति भ्रातरि जीवती·

त्यर्थः। एवं वात्स्ये जीवति वात्स्यायनोऽस्य कनीयान् भ्राता। दाक्षौ जीवति दाक्षायणोऽस्य कनीयान् भ्राता वेदितव्यः।

१६५। वान्यस्मिन् सपिण्डे स्थविरतरे जीवति।

सप्तमपुरुषावधय इति। सप्तमः पुरुषो ऽवधिर्येषां सपिण्डानां ते तथोक्ताः समानपिण्डाः। निपातनात् सभावः। समानस्येति (६।३।८४) योगविभागाद्वा। तस्य च योगविभागस्यैतन्निपातनं लिङ्गम्। तेन सपिण्डाः शाखेष्वा सप्तमात् पुरुषात्। परेण ये ते सपिण्डा नोच्यन्ते। येषामित्यस्याधिकार इति परेण सम्बन्धः। उभयत्रेति। जन्मनि मरणे च। इतेऽवमादिकायामिति। आदिशब्देन निवृत्त्यादिकाः क्रियाश्च गृह्यन्ते। तथाचोक्तम्—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्त्तते॥ १॥ इति

जीवतीति। सप्तम्येकवचनमेतत्। प्रथमायाश्च स्थाने सुब्व्यत्ययेन सप्तमी विहिता। अतएवाह जीवद्वेति। तरम्निर्देश इत्यादि। असति हि तरम्निर्देशे स्थविरशब्दाद् वयःप्रकर्षमात्रं गम्यते। तरपा तु स्थानप्रकर्षोऽपि गम्यते। तस्मादुभयोरुत्कर्षार्थं स्तरम्निर्देशः कृतः। पितृव्ये पितामहे भ्रातरि चेति। द्वावप्येतौ स्थानत उत्कृष्टौ। स्थानशब्देन चेह सम्बन्धविशेष उच्यते। अनेकार्थत्वाद्धातूनाम्। गार्ग्य एव भवतीति। न गार्ग्यायणः। युवसंज्ञायामसत्यां युवप्रत्ययस्य फको ऽनुत्पत्तेः। मृत इति। स्थविरतरे सपिण्डे। मृतो वेति। पौत्रप्रभृतिरप्यत्र मृतोऽर्थः।

१६६। वृद्धस्य च पूजायाम्।

अपत्यमन्तर्हितमित्यादिना शास्त्रान्तरेण परिभाषितं यद् वृद्धं तत् परिगृह्यते। नतु यदिह शास्त्रे परिभाषितं तदिति दर्शयति। कुतः पुनरेतदवगतं शास्त्रान्तरपरिभाषितमिह वृद्धं गृह्यत इति? अपत्याधिकारात्। शब्दात्मकस्य वृद्धस्यापत्यत्वासम्भवाद् विज्ञायते। पूजायां गम्यमानायामिति। का पुनरिह पूजा विवक्षिता? युवत्वमेव। तद्धि लोके सर्वप्राणिनामभिमतम्। ननु च नेह युवशब्दो वयःपदार्थको गृह्यते। किं तर्हि? संज्ञापदार्थकः।

तत् कथं ह्यनेन पूजा ? नैष दोषः। पूजाग्रहणसामर्थ्याद्धि वयःपदार्थक एवायं युवशब्दो गोत्रे वर्त्तिष्यते। संज्ञासामर्थ्यादित्यादिना संज्ञाप्रणयनस्य प्रयोजनं दर्शयति। गोत्रप्रत्ययेनाभिहितमपि गोत्रम्। संज्ञासामर्थ्यात् पुनर्युवप्रत्ययो विधीयते। गार्ग्यायण इति। अथ किमर्थं वृद्धस्येति षष्ठ्या निर्देशः क्रियते ? न वृद्धमिति प्रथमान्तं निर्दिश्यते ? एवं हि लघु सूत्रं भवतीत्याह वृद्धस्येत्यादि। इतिकरणो हेतौ। यस्माद् विचित्रा सूत्रस्य कृति-स्तस्माद् वृद्धस्येति षष्ठ्या निर्देशः। एवं हि सूत्रे कृते वैचित्र्यं सम्भवतीत्यभि-प्रायः। तत्रभवान् गार्ग्यायण इति। तत्रभवच्छब्दस्य पूजावचनस्य प्रयोगेण पूजां गमयतीति।

## १६७। यूनश्च कुत्सायाम्।

ननु च युवसंज्ञा पूर्वमेवाभिनिर्वृत्ता यदाह यूनश्चेति। न ह्यसत्यां तस्यामयं निर्देश उपपद्यते। तदभिनिर्वृत्तायास्तस्याः पुनर्विकल्पेन विधानमनुपपन्नमित्यत आह निवृत्तिप्रधानो विकल्प इति। नायं विधि-प्रधानो विकल्पः। किं तर्हि ? प्रतिषेधप्रधानः। प्रतिषेधप्रतिपादनपर इत्यर्थः। सिद्धायां संज्ञायां विधानं नोपपद्यत इति सामर्थ्यादनेन पक्षे निवृत्तिः क्रियत इति विज्ञायते। यद्येवं पक्षे युवसंज्ञायां प्रतिषिद्धायां गोत्र-संज्ञा वक्तव्या। अन्यथा यूनो गोत्रप्रत्ययेनाभिधानं न स्यादित्यत आह युवसंज्ञायामित्यादि। गोत्रसंज्ञाया युवसंज्ञा प्रतिपक्षः प्रत्यनीकः। सा चेन्निवृत्ता गोत्रसंज्ञैव प्रवर्त्तते। प्रतिपक्षाभावात्। अतो न वक्तव्येति भावः। गार्ग्यो जाल्म इति। जाल्मशब्दस्य कुत्सावचनस्य प्रयोगेण कुत्सां गमयति। कुत्सा पुनरिह यूनो वृद्धतयाभिधानस्यैवानभिमतत्वात्। अत-एवाकुत्सिते युवेति वाक्यार्थं पदमन्वाख्यायते। सा च कुत्सा यान्या वा ततो वेति विशेषो नाश्रीयते यथा कन्नादिविषये देवदत्तादीनाम्।

## १६८। जनपदशब्दात् क्षत्रियादञ्।

जनपदवृत्तिशब्दः पञ्चालादिर्जनपद इत्युक्तः। क्षत्रियवृत्तिः क्षत्रिय इत्यभिधानेऽभिधेयोपचारात् साहचर्य्याद्वा। ननु पञ्चालादयः शब्दाः

क्षत्रियशब्दाः । ते तस्य निवास इति ( ४।२।६९ ) तद्धिते कृते तस्य जनपदे लुबिति (४।२।८१) लुपि च जनपदे वर्त्तन्ते । तत् कथमवरकालतया जनपद-शब्दतया नित्याः क्षत्रियशब्दा विशेष्यन्ते ? कथं पुनः क्षत्रियसम्बन्धादेते जनपदे वर्त्तन्त इत्येतदभिधातुमर्हति विद्वान् । सूत्रकारेण हि तदशिष्यं संज्ञाप्रमाणत्वाल्लुब्योगाप्रख्यानादिति ( १।२।५३-५४ ) युक्तवद्भावं लुपश्च प्रत्यादिशता जनपदे क्षत्रियेष्विव स्वत एव पञ्चालादिशब्दस्य वृत्तिरुक्ता । यथा शब्दा नित्यास्तथा पञ्चालादिरपि जनपद इति कुतो जनपद-वचनात्ताया अवरकालता ? पाञ्चाल इत्यादि । पञ्चालादयः शब्दा देशे सन्तः क्षत्रियवाचिनोऽपि भवन्ति स्वभावत एव । तेभ्योऽपत्यार्थेऽञ् । ऐक्ष्वाक इति । इक्ष्वाकुशब्दस्य दाण्डिनायनहास्तिनायनेत्यादौ सूत्र (६।४।१७४) उकारलोपो निपातितः । द्रौह्यव इति । द्रुह्युशब्दः क्षत्रियवचन एव । न जनपदशब्दः । तेनाणेव भवति । पाञ्चालिर्वैदेहिरिति । इह पञ्चाल-विदेहशब्दौ भवतो जनपदशब्दौ । नतु क्षत्रियवचनौ । अपि तु ब्राह्मण-वचनौ । तेनेञेव भवति । क्षत्रियसमानशब्दादित्यादि । क्षत्रियवचन एव शब्द उपचारेण क्षत्रिय इत्युक्तः । जनपदशब्दो जनपद इति । क्षत्रियेण समानःशब्दो यस्य स तथोक्तः । तस्मात् क्षत्रियसमानशब्दादस्येति षष्ठी-समर्थाद् राजन्यभिधेयेऽपत्यवत् प्रत्ययोत्पत्तिरिति वक्तव्यम् । अवृद्धादपि बहुवचनविषयादिति (४।२।१२५) प्राप्तस्य वुञोऽपवादः । यथा पञ्चालस्या-पत्यमित्यत्र भवति पाञ्चालस्तथा पञ्चालानां राजा पाञ्चाल इत्यत्रापि भवति । मागध इति । यथा मगधशब्दादपत्ये द्व्यञ्मगधेत्यादिनाण् (४।१।१७०) भवति तथा तस्य राजेत्यत्रापि ।

१६९ । साल्वेयगान्धारिभ्यां च ।

१७० । द्व्यञ्मगधकलिङ्गसूरमसादण् ।

१७१ । वृद्धेत्कोशलाजादाञ्ञ्यङ् ।

वृद्धग्रहणेनेह वृद्धिर्यस्याचामादिस्तद् वृद्धमिति (१।१।७३) गृह्यते । तस्यैव हि जनपदशब्दता क्षत्रियवाचित्वं च सम्भवति । न शास्त्रान्तरपरिभाषितस्य ।

आम्बष्ठ्यः । सौवीर्य इति । आम्बष्ठसौवीरशब्दाभ्यां ञ्यङ् । आवन्त्यः कौन्त्य इति । अवन्तिकुन्तिशब्दाभ्यां ञ्यङ् । कौमार इत्यत्राञ् भवति । अण् वात्स्य इति । क्षत्रियञ्यङोऽपवाद इति । ङकार इत्लोपार्थ इति । स च वान्यस्मिन् सपिण्ड इत्यतो (४।१।१६५) मण्डूकप्लुतिन्यायेन वेत्यनुवृत्तेर्लभ्यते । तथैवमतिप्रसङ्गो भवति । व्यवस्थितविभाषात्वात् स न भविष्यति । अन्यस्मात् पाण्डव इति । यः पाण्डुशब्दः क्षत्रिये वर्त्तते तस्मादौत्सर्गिकेऽणि कृते पाण्डव इति भवति ।

## १७२ । कुरुनादिभ्यो ण्यः ।

अञणोरपवादः । कुरुशब्दस्य तु द्व्यञ्लक्षणस्याणः । कुरुशब्दात् कुर्वादिभ्यो ण्य इति (४।१।१५१) पूर्वमपत्ये उक्तः । तस्य यो जनपदशब्दः क्षत्रियो न भवति सोऽवकाशः । यस्तु जनपदशब्दः क्षत्रियस्तस्मात् परत्वादञि प्राप्ते तदपवादो द्व्यञ्लक्षणोऽण् स्यात् । अतस्तं बाधितुं पुनर्ण्यो विधीयते ।

## १७३ । साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।

अणपीष्यत इति । तन्नामिकालक्षणः । कुतो विज्ञायते ? साल्व इति निपातनात् । तदवयवा जनपदानां वाचकाः क्षत्रियाणां समाना भवन्ति । अतस्तेऽप्यौपचारिकं साल्वापदेशमासादयन्ति ।

## १७४ । ते तद्राजाः ।

गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वादिति । गोत्रयुवसंज्ञाप्रकरणं हि यदन्तरा व्यवधायकं कृतं तस्यैतदेव प्रयोजनम् । तेन ये व्यवहिताः पूर्वेऽणादय स्तेषां ते तद्राजा इत्यत्र सर्वनाम्ना प्रत्यवमर्शो मा भूदिति । तथाचैवोदाहृतम् । तद्राजस्य बहुषु तेनैवास्त्रियामित्यत्र (२।४।६२) कार्य्याश्रयमुदाहृतम् । इह तु प्रकरणे रूपाश्रयम् ।

## १७५ । कम्बोजाल्लुक् ।

चोलः शक इति । द्व्यञ्मगधलक्षणस्याणो (४।१।१७०) लुक् । केरल इत्यञः ।

१७६ । स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।

अवन्ती । कुन्तीति । तद्धितलुकि कृत इतो मनुष्यजातेरिति (४।१।६५) ङीष् । कुरूरिति । ऊङ्कुतः (४।१।६६) ।

१७७ । अतश्च ।

तकारो विस्पष्टार्थ इति । तकारे ह्यसत्यश्चेति निर्देशेन भवितव्यम् । ततश्च समानत्वात् निर्देशस्य सन्देहः स्यात् किमयमवर्णस्य निर्देश आहो-स्विदिदम इति । तकारे तु सत्येष दोषो न भवति । तपरस्य वर्णस्यैव प्रसिद्धत्वात् । दीर्घनिवृत्त्यर्थस्तु तकारो न भवति । दीर्घस्यासम्भवात् । सूरसेनी । मद्रीति । सूरसेनशब्दाद् योऽञ् मद्रशब्दाद् यो द्व्यञ्लक्षणोऽण् तयो-र्लुकि कृते जातेरस्त्रीविषयादयोपधादिति (४।१।६३) ङीष् । दरदिति । दरच्छब्दाद् द्व्यञ्मगधलक्षणस्याणो (४।१।१७०) लुक् । यद्यत इति-वर्णस्येदं ग्रहणमेवं सति वर्णग्रहणं तदन्तविधिं प्रयोजयतीतीहापि प्राप्नोतयाम्बष्ठ्या सौवीर्या इति । अतश्चाह अवन्त्यादिभ्यो लुगित्यादि । यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्यात् । अनेनैव सिद्धत्वात् । तदन्तवि-धावसत्यकारग्रहणमात्रेण न सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद् भवति ।

१७८ । न प्राच्यभर्गादियौधेयादिभ्यः ।

पाञ्चाली वैदेहीति । जनपदशब्दादित्यादिनाञ् (४।१।१६८) । शार्ङ्गर-वाद्यञो ङीन् (४।१।७३) । आङ्गी मागधीति । द्व्यञ्मगधेत्यादिनाण् (४।१।१७०) । जातेरस्त्रीविषयादयोपधादिति (४।१।७३) ङीष् । भर्गशाल्व-शब्दाभ्यां द्व्यञ्मगधलक्षणोऽण् । (४।१।१७०) शेषेभ्यस्त्वञ् । भार्गीत्यादौ पूर्ववत् ङीष् । यौधेयी शौक्रेयी शौभ्रेयीति । यौधेयशौक्रेयशौभ्रेयशब्देभ्यः स्वार्थे पर्श्वादियौधेयादिभ्योऽणञौ (५।३।११७) इत्यण् । भार्गीत्यादौ पूर्ववत् ङीष् । कस्य पुनरित्यादि । येनाभिप्रायेण पृष्टवान् तं कथमित्यादिनाविष्करोति । पर्श्वादीत्यादि । पर्शुः क्षत्रियो जनपदेन समानशब्दः । तस्यापत्यं स्त्रीत्व-विशिष्टम् । द्व्यञ्मगधेत्यादिनाण् (४।१।१७०) । तस्यातश्चेति (४।१।१७७)

लुक् । पर्श्वादियौधेयादिभ्योऽणञावित्यनेनापि (५।३।११७) यः स्वार्थिकोऽण् तस्यापि लुक् । एवं रक्षाः । असुरशब्दाज्जनपदशब्दादित्यादिनाञ् (४।१।१६८) । तदन्तात् पूर्ववत् स्वार्थिकोऽण् । तयोर्लुक् । तथाचेत्यादिना ज्ञापकमेव भाष्यकारमतेन द्रढ़यति ।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य
प्रथमः पादः समाप्तः ॥ ४।१ ॥

---

अथ

# काशिकाविवरणपञ्जिका।

## चतुर्थोऽध्यायः।

## द्वितीयः पादः।

——:०:——

१। तेन रक्तं रागात्।

रञ्जिरयमस्त्येवानुरागे देवे रक्तः स्त्रियां रक्त इति। अस्ति च वर्णविशेषे रक्तो गौरिति। लोहित इत्यर्थः। अस्ति शुक्लस्य वर्णान्तरापादने रक्तः पट इति। शुक्लमपनीय रक्तादिकं वर्णान्तरमापादित इत्यर्थः। इह तृतीयेऽर्थे वर्त्तमानो गृह्यते यदाह शुक्लस्येत्यादि। रागशब्दोऽयमस्त्येव भावसाधनः। अस्ति च करणसाधनः। ततेह द्वितीयो गृह्यते यदाह रज्यतेऽनेनेति राग इति। रागग्रहणेन चार्थस्य ग्रहणम्। न स्वरूपस्य। तेन रागविशेषवाचिनः प्रातिपदिकात् प्रत्ययो विधीयते। नतु रागशब्दादेवेत्यत आह रागविशेषवाचिनः प्रातिपदिकादिति। अथ स्वरूपग्रहणं कस्मान्न भवति? अर्थपरत्वान्निर्देशस्य। यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्यते। न यत्रार्थपरो निर्देश इति प्राक् प्रतिपादितमेव। अर्थपरत्वञ्च निर्देशस्याविच्छिन्नाचार्य्यपारम्पर्य्योपदेशाद् गम्यते। यदि तर्हि शुक्लस्य वर्णान्तरापादनं रञ्जेरिहार्थः काषायौ गर्द्दभस्य कर्णौ हारिद्रौ कुक्कुटस्य पादाविति न सिध्येत्। न ह्यत्र शुक्लस्य वर्णान्तरापादनमित्यभिप्रायेणाह कथमिति। उपमानादित्यादि परिहारः। यथा गौर्वाहीक इत्युपमानाद् गोशब्दोऽर्थान्तरे वाहीके वर्त्तते तथेहापि काषायादिशब्दो गर्द्दभकर्णादाविति भावः।

## २ । लाक्षारोचनाशकलकर्दमाट्ठक् ।

शकलकर्दमाभ्यामणपीष्यत इति । स च वान्यस्मिन् सपिण्डे इत्यतो (४।१।१६५) मण्डूकप्लुतिन्यायेन वाग्रहणानुवृत्तेर्लभ्यते । न चैवं सत्यतिप्रसङ्गो भवति । व्यवस्थितविभाषाविज्ञानात् ।

## ३ । नक्षत्रेण युक्तः कालः ।

इह कालं क्रियात्मानं केचिदिच्छन्ति । अपरे द्रव्यात्मानमाकाशादिकल्पम् । दर्शनद्वयमपि चैतदिहाश्रयितुमयुक्तम् । पूर्वस्मिन् दर्शने समाश्रीयमाणे सूर्यादिद्रव्यान्तरस्थाया वा क्रियाया नक्षत्रेण योगः स्यात् ? आत्मस्थाया वा ? पूर्वस्यास्तावन्न सम्भवति । अर्थान्तरासमवायात् । अन्यथा ह्याकाशादयोऽपि क्रियावन्तः स्युः । नह्यर्थान्तरसमवायिन्या अपि क्रियाया द्रव्यान्तरेण योगः स्यात् । आत्मस्थायास्तु क्रियाया विद्यते नक्षत्रेण योगः । किन्तु युक्तग्रहणं विशेषणं नोपपद्यते । व्यवच्छेद्याभावात् । नहि पुष्यादिस्थायाः कालस्य पुष्यादिभिः कदाचिद् योगो युज्यते यद्व्यवच्छेदार्थं युक्तग्रहणं क्रियते । एवं तावत् क्रिया काल इत्येतद् दर्शनमत्राश्रयितुमयुक्तम् । द्वितीयमप्ययुक्तमेव । यस्मात् कालविशेषावधारणहेतुरिह योगोऽभिप्रेतः । तथाहि कालविशेषावधारणार्थमेव पौषीत्यादि लोके प्रयुज्यते । स चैवंविधो योगस्तयोरेव भवतीति ययोः सन्निकर्षविप्रकर्षौ स्तो यथा पुष्यचन्द्रमसोः । तयोर्हि कदाचित् सन्निकर्षो भवति । कदाचिद्विप्रकर्षः । न च नक्षत्रकालयोः कदाचित् सन्निकर्षविप्रकर्षौ स्तः । तयोर्नित्यत्वादित्येतच्चेतसि कृत्वाह कथं पुनरित्यादि । न कथञ्चिदित्यभिप्रायः । नक्षत्रनिकटवर्त्तिनि चन्द्रमसि वर्त्तमानः सूत्रे नक्षत्रशब्द उपात्त इत्येतत् सूचयन्नाह पुष्यादिसमीपस्थ इत्यादि । यथैव हि सामीप्याद् गङ्गायां घोष इति गङ्गासमीपस्थे देशे गङ्गाशब्दो वर्त्तते तथेहापि पुष्यादयो नक्षत्रविशेषवाचिनः शब्दाः पुष्यादिसमीपस्थे चन्द्रमसि वर्त्तन्ते । तेन तत्रैव ते वर्त्तमानाः प्रत्ययमुत्पादयन्ति । तेन पुष्यादिसमीपस्थचन्द्रमसा कालस्य विशेषावधारणहेतुर्योग उपपद्यते । तदवस्थस्य चन्द्रमसः कादाचित्कत्वात् । पुष्यसमीपस्थेन चन्द्रमसा युक्त

इत्यर्थः। तदवस्थे चन्द्रमसि पुष्यशब्दस्य वृत्तेः। पौषीति। सूर्यतिष्यागस्त्यमत्स्यानां य उपधाया इत्यत्र (४।१।१५८) तिष्यपुष्ययो र्नक्षत्राणि यलोप इति वचनाद् यलोपः।

४। लुबविशेषे।

यद्यविशेषे लुब् भवतीहापि प्राप्नोति पौषी रात्रिः पौषमहरिति। अत्राप्यविशेषो गम्यत एव। तथाहि पौषी रात्रिरित्युक्ते ऽद्य श्वो वेति विशेषो न गम्यत इत्यत आह नचेत् नक्षत्रयुक्तस्येत्यादि। एवं मन्यते। नक्षत्रेण युक्तः काल (४।२।३) इत्यनुवर्त्तते। तेन तद्विशेष एव न भवतीति। रात्र्यादिविशेष इति। आदिशब्देनाहर्मुहूर्त्तौ लव इत्येते विशेषा गृह्यन्ते। यावानित्यादि। अनन्तरोक्तमेवार्थं विस्पष्टीकरोति। कियांश्च कालो नक्षत्रेण युज्यते? अहोरात्रः। तदेवं यावान् कालो नक्षत्रेण युज्यते तस्याविशेषे गम्यमाने लुपा भवितव्यम्। तेन च पौषी रात्रिः पौषमहरित्यत्र यावान् कालो नक्षत्रेण युक्तस्तस्याविशेषो न गम्यते। अपि तु तदेकदेशस्य रात्रे रह्नो वेति नायं लुपो विषयः। यद्येवं प्रत्ययस्यापि कथमेकदेशो विषयः? समुदायद्वारेण तदन्तःपातिनो गृह्यन्ते। एकदेशानामपि योगात् पूर्वेण प्रत्ययोत्पत्तिः सिद्धा भवति। पुनरिहावयवस्यैकदेशो लुपो विषय इति। इह तर्हि प्राप्नोति। पौषोऽहोरात्र इति। अत्र यावान् कालो नक्षत्रेण युक्तस्तस्याविशेषो गम्यते। तथाह्यहोरात्र इत्युक्ते न ज्ञायते किमतीतोऽथानागतोऽथ वर्त्तमान इति। नैष दोषः। अविशेष इति प्रसज्यप्रतिषेधोऽयम्। तेन नक्षत्रयुक्तस्य कालस्य यत्र विशेषो रात्र्यादिस्तत्र न लुब् भवतीति ज्ञायते। नतु यत्राविशेषः। तत्र तु लुब् भवतीति।

५। संज्ञायां श्रवणाश्वत्थाभ्याम्।

लुपि युक्तवद्भावः कस्मान्न भवतीति? यदि स्याच् श्रवणशब्दस्य पुंलिङ्गता स्यात्। निपातनादित्यादिना परिहारः। गतार्थः।

६। द्वन्द्वाच्छः।

नक्षत्रग्रहणं यत्प्रकृतं तदिहार्थात् षष्ठ्यन्तं विपरिणम्यते। तेन नक्षत्राणां

यो द्वन्द्वस्तस्मात् प्रत्ययो विज्ञायत इत्याह नचत्रद्वन्द्वादिति । विशेषे चाविशेषे चेति । अविशेषग्रहणस्य निवृत्तत्वात् । अद्य राधानुराधीयमिति । ननु चाविशेषे लुपा भवितव्यम् । तत् कथं प्रत्ययस्य श्रवणमित्याह लुपं परत्वाद् बाधत इति ।

७ । दृष्टं साम ।

८ । कलेर्ढक् ।

तीयादिति । द्वे स्तीय इति (५।२।५४) तीयः । त्रेः संप्रसारणञ्चेति (५।२।५५) तीयं वक्ष्यति । तदन्तात् स्वार्थे ईकग् वक्तव्यः । न विद्याया इति । विद्याया अभिधाने तीयादीकङ् न भवति । गोत्रादङ्कवदिति (४।३।८०) । यथा तस्याङ्क इत्यत्रार्थे विवक्षिते गोत्रात् प्रत्ययो भवति तेन दृष्टं साम इत्यत्रार्थे (४।२।७) विवक्षिते तथैवेष्यते । औपगवेन दृष्टं सामेति । औपगवशब्दस्तस्यापत्यमिति (४।१।९२) गोत्रप्रत्ययान्तः । गोत्रचरणाद् वुञ् भवतीति । यथौपगवस्यायमङ्क औपगवक इतग्रौपगवशब्दाद् गोत्रप्रत्ययान्तादङ्के वुञ् भवति तथा तेन दृष्टं सामित्यत्रापि । ननु च गोत्रचरणाद्वुञित्यत्र (४।३।१२३) नाङ्कार्थ उपात्तः । तत् कथमनेनाङ्कवदित्युच्यमाने वुञ् भवति ? नैष दोषः । तत्राङ्कवदित्यनेन विहितस्येदमर्थो विवक्ष्यते । तेन गोत्रप्रत्ययान्ताद् यथा तस्येदमित्यत्रार्थे (४।३।१२३) प्रत्यय इष्यते तथा तेन दृष्टं सामित्यत्रापीत्यर्थः (४।२।७) । दृष्टे सामनीति संग्रहः । गतार्थः ।

९ । वामदेवाड् ड्यड्ड्यौ ।

वामदेव्यम् । वामदेव्यमिति । एकस्मिंस्तित्स्वरेणान्तस्वरितः । द्वितीयः प्रत्ययस्वरेणान्तोदात्तः । डित्करणं किमर्थमिति । यस्येति चेत्येवं (६।४।१४८) लोपस्य सिद्धत्वाड् डित्करणस्यानर्थक्यं मन्यते । ड्यड्ड्यावित्यादि । न वामदेव्यमवामदेव्यमिति । अत्र नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिता इत्यतो ( ६।२।१५५ ) नञ इत्यनुवर्त्तमाने ययतोश्चातदर्थे ( ६।२।१५६ ) इत्युत्तरपदस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणम् मा भूदित्येवमर्थं डित्करणम् । असति च तत्रानयोर्ग्रहणे नञ एव स्वरो भवति । स पुनरुदात्तः । निपाता

आद्युदात्ता भवन्तीति (फिट्, ४,८०) वचनात्। अथ क्रियमाणे ङित्करणे कस्मादनयोर्ग्रहणं न भवतीत्याह निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया ञङ्ञयोरपि निवृत्तिः क्रियते। यद्ग्रहणेऽप्येकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति परिभाषया यतः। अनयोश्च परिभाषयोरस्तित्व एतदेव ङित्करणं लिङ्गम्। संग्रहश्लोकेऽतदर्थ इत्यनेन ययतोश्चातदर्थ इत्येतत् सूत्रं (६।२।१५६) लभ्यते। एतस्मिन् सूत्रे इत्यर्थः। नञ्स्वर इति। नञो यः स्वरः स नञ्स्वरः। शेषो गतार्थः।

## १०। परिवृतो रथः।

चार्म्मण इति। अनिति (६।४।१६७) प्रकृतिभावे टिलोपो न भवति। न संयोगाद् वमन्तादित्यल्लोपो (६।४।१०७) न भवति। अथेह कस्मान्न भवति च्छात्रैः परिवृतो रथ इति? अत्राह समन्ताद् वेष्टित इत्यादि। वृणोतिरयं वेष्टने वर्त्तते। तस्य परिणा सर्व्वतो भावो द्योत्यते। तस्माद् यः सर्वतो वेष्ट्यते तत्रैव प्रत्ययेन भवितव्यम्। न तु छात्रै रथः सर्वतो वेष्टितः। ततो न तत्र प्रत्ययस्य प्रसङ्गः। यस्तु च्छात्रैः परिवृतो रथ इति प्रयोगः स परिवृतस्याध्यारोपेणौपचारिकः। न च मुख्ये सति परिवृतत्वे गौणस्याध्यारोपितस्य ग्रहणं युक्तम्।

## ११। पाण्डुकम्बलादिनिः।

पाण्डुकम्बलीति। सौ चेति (६।४।१३) दीर्घः। मत्वर्थीयेनैव सिद्ध इति। यद्धि येन समन्ताद् वेष्टितं तत् तस्यास्ति। तस्मादत इनिठनाविति (५।२।११५) मत्वर्थीयेनेनिना सिद्धे यत् तद्वचनं तदणो निवृत्त्यर्थम्। यदि लभ्येत तन्नारभ्येत। यदि ह्येतद्वचनं न स्यात् तदा परिवृतो रथ इत्यण् प्रसज्येत। ततश्च पाण्डुकम्बल इति स्यात्। पाण्डुकम्बलीति चेष्यते। तस्मादण्निवृत्त्यर्थमुच्यते।

## १२। द्वैपवैयाघ्रादञ्।

द्वीपिव्याघ्रयोर्विकार इत्यादि। द्वीपिनो विकारश्चर्म व्याघ्रस्य विकारश्चर्मेत्यर्थविवक्षायां प्राणिरजतादिभ्यो ऽञित्यञ्—(४।३।१५४) प्रत्ययान्तत्वात्

द्वैपवैयाघ्रशब्दयो: । ताभ्यामिह द्वीपिव्याघ्रविकारत्वाच् चर्म्मणी अभिधीयेते । चर्मणैव द्वीपिव्याघ्रविकारेण रथस्य परिवृतत्वं सम्भवति । न विकारमात्रेणेति चर्मणी इह द्वैपवैयाघ्रशब्दाभ्यां विवक्षिते इति गम्यते ।

## १३ । कौमारापूर्ववचने ।

अपूर्ववचन इति । अपूर्वस्य वचन इति । अपूर्वाभिधान इत्यर्थ: । कस्यापूर्ववचनमित्याह पाणिग्रहणस्येत्यादि । एतच्च सामान्योक्तावपि निपातनसामर्थ्याल्लभ्यते । यथैव हि निपातनसामर्थ्यादन्यदपि किञ्चिद-लाक्षणिकं कार्य्यं लभ्यते तथेदमपि । उभयत: स्त्रियामित्यादि । यदि कौमार इति पुमानभिधीयत एवमप्यस्यापूर्वत्वं यदा स्त्रिया एव विशेषणं भवति । अथापि कौमारीति स्त्र्यभिधीयत एवमप्यपूर्वत्वं यदा स्त्रिया एव विशेषणं भवति । न पुंस: । एवमेतन्निपात्यते । नान्यथेत्यर्थ: । अपूर्व-पतिमिति । नास्या: पूर्व: पतिरिति बहुव्रीहि: । पत्या सह यस्या: पाणि-ग्रहणं निवृत्तं साऽपूर्वपति: । तां पतिरुपपन्न: प्राप्तवानित्यर्थ: । अपूर्व-पतिरिति । अयमपि बहुव्रीहि: । कौमारापूर्ववचन इत्यादि । कौमारइत्ये-तन्निपात्यते । अपूर्ववचने । किं पुनरिह निपात्यत इत्याह कुमार्य्या अण् विधीयत इति । कुमारीशब्दादण् निपात्यत इत्यर्थ: । कदेत्याह अपूर्वत्वं यदा तस्या इति । इह हि निपातनेन पुमानभिधीयते स्त्री वा तत्र द्वयोरपि पक्षयोरपूर्वत्वम् । यदा तस्या: स्त्रिया विशेषणं भवति न पुंसस्त-देतन्निपातनम् । नान्यथेत्यर्थ: । कुमार्य्यां भवतीति वेति । अनेन योग: प्रत्याख्यायते । यो हि कुमारीं प्राप्तवानसौ तत्र भवति । ततश्च तत्र भव इति (४।४।३) शैषिके भवार्थे ऽण्णन्तं कौमारशब्दं व्युत्पाद्येत तत: पुंयोगलक्षणे ङीषि सति हि कुमारीत्येतत् सिद्धम् । स्वरकृतो विशेषो नास्त्येव । तथा-ह्यणन्तान् ङीष्यपि कृते यस्येति चेति (६।४।१४८) लोपे चानुदात्तस्य च यत्रोदात्तलोप (६।१।१६८) इत्युदात्तेन ङीपा भवितव्यम् । ङीष् प्रत्यय-स्वरेणाद्युदात्त एव । ननु चैवं सति कौमारस्य यान्यापि स्त्री कौमारव्यपदेशस्य कारणं सापि कौमारीति प्रसज्यते । नैष दोष: । प्रत्यासत्तेर्हि या तस्य

प्रत्यासन्ना सैव तस्य कौमारीति भविष्यति। का पुनस्तस्य प्रत्यासन्ना? या कौमारे व्यपदेशस्य हेतुः। यस्यामसौ भवन् कौमार इत्युच्यते सैव। नान्या। यद्यपि व्यासादयोऽपि कुमार्य्यां भवन्ति तथापि तेष्वण् न भविष्यति। अनभिधानात्। एतच्चावश्यमनभिधानमाश्रयणीयमिति। इतरथा हि क्रियमाणेऽपि निपातने तत्र भव (४।४।३) इत्यनेनाण् स्यादेव।

## १४। तत्रोद्धृतममत्रेभ्यः।

## १५। स्थण्डिलाच्छयितरि व्रते।

समुदायेन चेत्यादिना प्रकृतिप्रत्ययोपाधित्वं व्रतस्य दर्शयति। शास्तितशब्दो वाचि यमो व्रत इत्यत्र (३।२।४०) व्युत्पादितः (A)।

## १६। संस्कृतं भक्षाः।

संस्कृत मिति। अत्र सामान्यशब्दत्वात् संस्कृतशब्दस्य नपुंसकलिङ्गत्वम्। एकवचनत्वञ्च। भक्षा इति। विशेषशब्दत्वाद् भक्षशब्दस्य पुंलिङ्गत्वम्। बहुवचनत्वञ्च। भक्षशब्दोऽयं घञन्त उपात्तः। स च खरविशदाभ्यवहार्य्ये एव रूढ़ इत्याह खरविशद इत्यादि। सुबोधम्।

## १७। शूलोखाद् यत्।

## १८। दध्नष्ठक्।

ठकं वक्ष्यति। संस्कृतमित्यनेन (४।४।३)। तेनैव सिद्धमिति। यद् दध्नि संस्कृतं तद दध्ना हि संस्कृतं भवतीत्यभिप्रायः। इह दध्यधिकरणमाधारभूतमिति। यथा शूले संस्क्रियमाणस्य मांसस्य शूलम्। नहि शूलेन मांसस्य कश्चित् संस्कारः क्रियते। अपि तु लवणादिना। आधारभावमात्रं तु मांसस्य शूलं प्रतिपद्यते। यदि तर्हि दधि केवलमाधारभूतं केन तत्र तर्हि संस्कारः क्रियत इत्याह द्रव्यान्तरेणेत्यादि।

(A) Here too, as in 3. 2. 40, the printed काशिका has the reading शास्तत: for शास्तितः। But like the न्यासकार, हरदत्त also gives शास्तितः and explains it thus संजातशास्त इत्यर्थः। यद्वा तृतीयासमर्थाद् विधानेऽर्थे प्रातिपदिकाद् धात्वर्थे इति णिच्। कर्मणि क्तः। शास्त्रेण विहित इ त्यर्थः।

## १९ । उदश्वितोऽन्यतरस्याम् ।

औदश्वित्कमिति । इसुसुक्तान्तात् कः (७।३।५१) ।

## २० । चौराड् ढञ् ।

चौरेयीति । टिड्ढाणञिति (४।१।१५) ङीप् ।

## २१ । सास्मिन् पौर्णमासीति संज्ञायाम् ।

ततश्चेद् विवक्षा भवतीति । तत इति प्रत्ययान्तो निर्दिश्यते । एतदुक्तं भवति । यदि प्रत्ययान्ताल्लोकेऽस्य विवक्षा भवत्येवं प्रत्ययो भवति । नान्यथे-त्यर्थः । प्रत्ययान्तेन चेत्यादिना संज्ञायाः समुदायोपाधित्वं स्पष्टीकरोति । एषा संज्ञेति या प्रत्ययान्तेन गम्यते । पौषीति । नक्षत्रेण युक्तः काल (४।२।३) इत्यण् । तदन्तान् ङीप् । इह न भवतीति । संज्ञाया अनवगम्यमानत्वात् । नहि दशरात्रस्य प्रत्ययान्तः संज्ञा । नापि भृतकमासस्य । किं तत् तुल्यं फलमित्याह प्रयोगानुसरणमिति । प्रयोगानुसरणं प्रयोगोपलक्षणमित्यर्थः । संज्ञाग्रहणे ह्येतत् क्रियते । प्रयोगमुपलक्ष्य यत्र प्रयोगो दृश्यते मासार्द्धमाससंवत्सरेषु तत्र प्रत्यय उत्पादयितव्यः । नतु भृतकमासादौ । इतिकरणेनाप्येतदेव क्रियते । तथाहि प्रत्ययान्ताद् यदि लोकस्यार्थविवक्षा भवत्येवं हि प्रत्यय उत्पा-दयितव्यः । नान्यथेति । एवमर्थमितिकरण उपादीयते । ततश्च लोक-विवक्षा मासार्द्धमाससंवत्सरविषया भवति । एवं हि न भृतकमासादि-विषया । तस्मात् प्रयोगानुसरणमुभयोरपि फलं तुल्यमेव । संज्ञेत्यादि । ननु च यथा संज्ञाशब्दः प्रयोगानुसरणफलतया लोके प्रसिद्ध स्तथेतिकरणोऽपि । तत् किमर्थमिह तस्य तेन तुल्यत्वमेव ज्ञायत इत्याह नह्ययमित्यादि । तथाहि लोकेऽयं संज्ञाशब्दः प्रयोगानुसरणफलत्वेन यथा प्रसिद्धो न तथेति-करणः । तस्मादस्य तेन तुल्यता ज्ञापितेति भावः । संज्ञार्थत्वेत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति । संज्ञया तुल्योऽर्थो यस्य स संज्ञार्थः । समासेन गम्यमानत्वात् तुल्यशब्दो न प्रयुज्यते यथा रुच्यर्थानामित्यत्र (१।४।३३) रुचिना समानशब्द इति भावः । संज्ञार्थस्य भावः संज्ञार्थत्वम् । अर्थशब्दश्चायं प्रयोजन-वचनः । तदुपपन्नं भवतीति । यतएव संज्ञाशब्देनेतिकरणस्य तुल्यार्थता ज्ञापिता

तेन यत्र प्रयोगानुसरणार्थं इतिकरणं स्ततस्तत्र विवक्षा भवतीत्युच्यते। तदुपपन्नं भवतीति। इतिकरणस्य संज्ञाप्रयोजनत्वात्। पूर्णमासादणिति। पूर्णो मासो यस्यां तिथाविति तत्रार्थे बहुव्रीहिः। अस्मादेव निपातनादण्। पूर्णमासस्येयं पौर्णमासी। तस्येदमित्यण् (४।३।१२०)। तिथिविशेषस्येयं संज्ञा। व्युत्पत्तिस्तु यथा कथञ्चित् कर्त्तव्या।

२२। आग्रहायण्यश्वत्थाट् ठक्।

२३। विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः।

२४। सास्य देवता।

तस्मिन्नभिधेय इति। यागसम्प्रदानभूतदेवतास्वामिनीके पुरोडाशादौ। एष चाभिधेयविशेषः। सामान्योक्तावपीतीतरस्येहानुवृत्तेर्लभ्यते। आदित्यं वार्हस्पत्यमिति। दित्यादित्यपत्युत्तरपदेत्यादिना (४।१।८५) ण्यः। यागस्य देवतेहाभिप्रेता। ऐन्द्रो मन्त्र इति च प्रयोगे कस्यचित् पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य संप्रदानत्वं नास्ति। अतो नासौ देवतेति प्रत्ययेनात्र न भवितव्यमिति मन्यते। मन्त्रस्तुत्यमिति। यथा देवता पूजार्हा तथा मन्त्रस्तुत्यमपि वस्तु। ततो देवतासाधर्म्यात् तदपि देवतेत्युपचरन्ति विद्वांसः। इन्द्रश्च मन्त्रस्तुत्यो भवति। तस्मादसम्प्रदानभूतमपि तं देवतेत्युपचरन्ति। देवतोपचारं तत्र कुर्व्वन्तीत्यर्थः। नन्वेवमपि नैवात्र प्रत्ययेन भवितव्यम्। मुख्ये सति गौणस्याश्रयणस्यायुक्तत्वात्। नैष दोषः। यथैव हि कश्चिदेकेनैव यत्नेन श्वेतो धावतीति तन्त्रेण वाक्यद्वयमुच्चारयति तथेहाप्याचार्य्येण द्वे वाक्ये तन्त्रेणोच्चारिते। तत्रैकं मुख्यार्थम्। अपरं गौणार्थं भविष्यति। कथमित्यादि। अग्नेर्हि न मुख्यं देवतात्वं नापि गौणम्। तत्र मुख्यं तावन्नास्ति। देयाभावेनासंप्रदानभूतत्वात्। गौणमपि नास्ति। मन्त्रशब्दाभावेन मन्त्रस्तुत्यतयानुपात्तत्वात्। तस्मादत्र प्रत्ययेन न भवितव्यमिति भावः। उपमानाद् भविष्यतीति। देवतास्वामिनीक एवात्र प्रत्यय उपपद्यते। यस्त्वर्थान्तरे प्रत्ययान्तप्रयोगः स आग्नेय इवाग्नेय इत्युपमानाद् भविष्यति यथा काषायौ गर्द्दभस्य कर्णाविति।

ननु च सास्मिन् पौर्णमासीति सेति प्रकृतमेव। तत् किमर्थं पुनरिह समर्थविभक्तिर्निर्दिश्यत इत्यत आह सेति प्रकृत इत्यादि। यदिदं सेति प्रकृतं तत्संज्ञासम्बद्धमिति। तदनुवृत्तौ संज्ञाग्रहणस्याप्यनुवृत्तिः स्यात्। तस्मात् तन्निवृत्त्यर्थं पुनरिह समर्थविभक्तिर्निर्दिश्यत इति।

२५। कस्येत्।

तकारो मुखसुखार्थः। न दीर्घनिवृत्त्यर्थः। भाव्यमानेनाणा सवर्णानामग्रहणात्। सत्यपि सवर्णग्रहणे आन्तरतम्याद् ह्रस्वस्य ह्रस्व एव भविष्यति। न दीर्घः। प्रजापतेर्वाचक इति। अनेनासर्वनामत्वमस्य दर्शयति। इकारस्य यस्येति चेति (६।४।१४८) लोपो न भवति। विधानसामर्थ्यात्। कायमिति। वृद्ध्यायादेशौ।

२६। शुक्राद् घन्।

२७। अपोनप्त्रपान्नप्तृभ्यां घः।

अपोनपात्। अपान्नपादिति। यद्येते देवतानामधेये तत् कथमेतद्विलक्षणं प्रकृतिरूपं सूत्रे श्रूयत इत्याह तयोस्तु प्रत्ययसन्नियोगेनेत्यादि।

२८। छ च।

अथ किमर्थं योगविभागः क्रियते? नापोनप्त्रपान्नप्तृभ्यां घच्छावित्येकयोग एव क्रियत इत्याह योगविभाग इत्यादि। एकयोगे हि द्वे प्रकृती। प्रत्ययावपि द्वावेव। समसंख्यत्वात् संख्यातानुदेशः स्यात्। अतस्तन्निवृत्तये योगविभागः क्रियते। छप्रकरण इत्यादि। पैङ्गाक्षीपुत्रादिभ्यश्छप्रकरणे छस्योपसंख्यानं प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्। चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन पैङ्गाक्षीपुत्रादिभ्यश्छो भवतीति।

२९। महेन्द्राद् घाणौ च।

अथ महेन्द्रादण् चेत्येव कस्मान्नोक्तम्? चकाराद् घच्छौ भविष्यतः।

एवमुच्यमाने द्वेष्यमपि विज्ञायते। अनन्तरं छ एव चकारेणात्र कृष्यत इति। तस्मात् तथा मा विज्ञायीति चग्रहणम्।

३० । सोमाट् ट्यण्।

सौमीति। हलस्तद्धितस्येति (६।४।१५०) यलोपः।

३१ । वाय्वृतुपित्रुषसो यत्।

वायव्यम्। ऋतव्यमिति। ओर्गुणः (६।४।१४६)। वान्तो यि प्रत्यय (६।१।७९) इत्यवादेशः। पित्र्यमिति। रीङृत इति (७।४।२७) रीङ्। यस्येति (६।४।४८) लोपः।

३२ । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति-गृहमेधाच्छ च।

अणो ण्यस्य चापवाद इति। वास्तोष्पतिशब्दाद् दित्यादित्येत्यादिना (४।१।८५) प्राप्तस्य ण्यस्यायमपवादः। शेषेभ्यस्त्वौत्सर्गिकस्याणः। वास्तुनः पति र्वास्तोष्पतिः। वास्तुशब्दस्य नपुंसकस्य पुंलिङ्गता षष्ठ्यर्थेऽलुक् च निपातनात्। षष्ठ्याः पतिपुत्रपृष्ठेत्यादिना (८।३।५३) षत्वम्। द्यावापृथिव्याविति। दिवो द्यावेतिति (६।३।२९) द्यावादेशः। शुनासीरीयमिति। देवताद्वन्द्वे चेत्यानङ् (६।३।२६)। अग्नीषोमीयमिति। ईदग्नेः सोमवरुणयोरितीत्त्वम् (६।३।२७)। अग्नेः स्तुत्स्तोमसमा (८।३।८२) इति षत्वम्।

३३ । अग्नेर्ढक्।

३४ । कालेभ्यो भववत्।

बहुवचनग्रहणेन स्वरूपग्रहणे निरस्ते। कालविशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह कालविशेषवाचिभ्य इत्यादि। वत्करणमित्यादि। सर्वस्य सादृश्यस्य परिग्रहो यथा स्यादित्येवमर्थं वत्करणम्। कालेभ्यो भव इत्युच्य-माने यदि तावत् कालग्रहणं भवप्रत्ययैः सम्बध्यते भवेऽर्थे कालेभ्यो विधास्यन्ते ये प्रत्ययास्ते सास्य देवतेत्येतस्मिन्नर्थे (४।२।२४) भवन्ति तदा च देवता-प्रकृतिरविशेषिता स्यात्। एवञ्च देवतामात्रवाचिनः प्रातिपदिकादविशेषेण प्रत्ययाः प्रसज्येरन्। अथ देवताप्रकृतिभिः कालग्रहणं सम्बध्यते भवे ये

विधास्यन्ते ते प्रत्यया: कालेभ्यो देवताभ्य: प्रसज्येरन्। अथाप्युभयेषां सन्निधानाद् विशिष्यभेदेन वाक्यभेदाच्च प्रत्ययै: प्रकृतिभिश्च सम्बध्यते। कालेभ्यो भवेऽर्थे विधास्यन्ते ये प्रत्ययास्ते कालेभ्यो देवताभ्यो भवन्तीत्येवमपि य: कश्चित् कालप्रकृति: प्रत्ययो यत: कुतश्चित् कालाद्देवताया: स्यात्। ऋतुभ्योऽण् (B) मुहूर्त्तादिभ्योऽपि स्यात्। वतौ तु सति तस्य सादृश्यविधानात् सर्वसादृश्यपरिग्रहो भवति। तेन याभ्य: प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया भवार्थे विधास्यन्त इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन तएव प्रत्यया भवन्तीति न भवत्यनिष्टप्रसङ्ग:। वासन्त इति। सन्धिवेलादि ( ४।३।१६ ) सूत्रेणाण्। प्रावृषेण्य इति। प्रावृष एण्य: (४।३।१७)।

## ३५। महाराजप्रोष्ठपदाट् ठञ्।

## ३६। पितृव्यमातुलमातामहपितामहा:।

पितामही मातामहीति। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्।

## ३७। तस्य समूह:।

काकम् (C)। शौकम्। वाकमिति। काकशुकवकशब्दा आद्युदात्ता:। प्राणिनां कुपूर्वाणामित्यनेन ( फिट्, १।३० )। अस्यायमर्थ:। प्राणिविशेषवाचिनां शब्दानां य आदिभूता: कवर्गात् पूर्वे तेषामुदात्तो भवतीति।

## ३८। भिक्षादिभ्योऽण्।

अथाण्ग्रहणं किमर्थम्? न भिक्षादिभ्यो यथाविहितमेवोच्येतेत्यत आह अण्ग्रहणमित्यादि। भिक्षाशब्दोऽयं गुरोश्च हल (३।३।१०३) इत्यकारप्रत्ययान्तत्वादन्तोदात्त:। तत्रानुदात्तादेरञित्यञ् (४।२।४४) अणो बाधक: प्राप्नोति। तस्य बाधकस्य बाधनार्थमण्ग्रहणम्। ननु च यद्यत्राण् स्यात् पुनर्वचनमनर्थकं स्यात्। नैतदस्ति। परत्वादचित्तलक्षण ठक् प्राप्नोति। अतस्तद्बाधनार्थं पुनर्वचनं स्यात्। अञ्प्रत्ययस्तु स्यादेव। अण्ग्रहणात्

---

(B) देवताभ्योऽपीति महीशूरपुस्तके पाठ:।

(C) कौकमिति महीशूरपुस्तके पाठ:।

पुनरणेवेति न भवत्येष दोषः। गार्भिणमिति। गर्भिणीनां समूहो भस्याढे तद्धिते (६।३।३५, वा)। सिद्धत्वात् प्रत्ययविधाविति (४।२।३८,वा) पुंवद्भावेन स्त्रीप्रत्ययनिवृत्तिः। ततोऽण्। तस्मिन् न स्त्वद्धित इति (६।४।१४४) टिलोपः प्राप्तः। इनण्यनपत्य इति (६।४।१६४) प्रकृतिभावान्न भवति। तस्य ग्रहणेति। युवतिशब्दस्य यदि पुंवद्भावो न भवति तदा तस्य प्रत्ययान्तत्वादनुदात्तादेरित्यञि (४।२।४४) प्राप्ते तद्बाधनार्थमिहाण्ग्रहणमर्थवद्भवति। यदि पुंवद्भावः स्यात् तदा तदनर्थकं स्यात्। तथाहि सिद्धत्वात् प्रत्ययविधाविति (४।२।३८,वा) वचनादनुत्पन्न एव तद्धिते बुद्धिस्थे पुंवद्भावेन भवितव्यम्। युवशब्दस्य कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिव इति ( उण्, १।१५४ ) कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वम्। तत्र यदि पुंवद्भावः स्यादुत्सर्गलक्षणेनैवाण् सिद्ध इतीह ग्रहणमनर्थकं स्यात्। तस्माद् मा भूदस्यानर्थक्यमिति तस्य ग्रहणसामर्थ्यादेव पुंवद्भावो न भवति। तेन यौवतमिति सिद्धं भवति।

## ३९। गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्।

अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इति। यद्येवं गोत्रग्रहणेनैतस्य सिद्धत्वाद् राजन्यमनुष्ययोरुपादानमनर्थकम्। नैतदस्ति। नहि तौ गोत्रप्रत्ययान्तौ। जातिः प्रत्ययार्थत्वात्। यद्येवं लोपस्य प्राप्तिरेव नास्ति। तत्र यदुक्तं प्रकृत्याके राजन्यमनुष्ययुवान इति (६।४।१६३, वा) यलोपो न भवतीति तदनर्थकं स्यात्। एतत् पुनरेकीयमतमाश्रित्योक्तम्। केचिदाचार्य्या राजन्यमनुष्ययोरपत्यप्रत्ययान्तत्वमिच्छन्ति। अतस्तन्मतमाश्रित्येतदुक्तमित्यदोषः। तन्मतेन तर्हि राजन्यमनुष्ययोर्ग्रहणमनर्थकं स्यात्। ज्ञापनार्थत्वात्। तेनैतत् ज्ञाप्यते। राजन्यमनुष्ययोर्यकारस्य किञ्चिदपत्याश्रितं कार्य्यं न भवतीति। किं पुनस्तत्? आपत्यव्यपदेशम्। तेन राजन्यकं मानुष्यकमिति। अत्राप्यपत्यस्य तद्धितेऽनातीति (६।४।१५१) यलोपो न भवतीति। तथा सूत्रोपात्त एव राजन्यमनुष्ययोः प्रकृतिभावः प्रकृत्याके राजन्यमनुष्ययुवान (६।४।१६३,वा) इत्यनेनाख्यायत इति वेदितव्यम्। वृद्धाच्चेति वक्तव्यमिति। वृद्धशब्दाद्वुञ्

भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। इह पुनरुत्तरसूत्राच्चकारोऽनुवर्त्तते सिंहावलोकितन्यायेन। स चानुक्तसमुच्चयार्थः। तेन हस्तशब्दाद् वुञ् भवतीति। योगश्चायं यथायोगमणञोरपवादः।

## ४०। केदाराद् यञ्च।

गणिकायाश्च यञ् वक्तव्यः। वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। इहाप्युत्तरसूत्राच्चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन गणिकाशब्दादपि यञ् भवतीति। वुञ् न भवतीति। अनभिधानात्।

## ४१। ठञ् कवचिनश्च।

कवचिन्शब्दो मत्वर्थीयेनिप्रत्ययान्तः। प्रत्ययस्वरेणान्तोदात्तः। तस्मादनुदात्तादिलक्षणेऽञि (४।२।४४) प्राप्ते वचनम्।

## ४२। ब्राह्मणमाणववाडवाद् यन्।

पृष्ठादुपसंख्यानमिति। पृष्ठशब्दाद् यन्प्रत्ययस्योपसंख्यानं व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्। पूर्वसूत्रादिह चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन पृष्ठशब्दादपि भविष्यतीति। अह्नीन इति। अह्नष्टखोरेव (६।४।१४४) टिलोपः। आह्न इति। अल्लोपोऽन इत्यकारलोपः (६।४।१३४)। ननु चाचित्तलक्षणेन ठका भवितव्यम्। तत् कथमाह्न इति भवतीत्याह खण्डिकादिष्वित्यादि। णस् वक्तव्य इति। सकारः सिति चेति (१।४।१६) विशेषणार्थः। तेन पार्श्वमित्यत्र भत्वाभावादोर्गुणो न भवति।

## ४३। ग्रामजनबन्धुसहायेभ्यस्तल्।

ग्रामशब्दादचित्तलक्षणे ठकि प्राप्ते। जनशब्दो ञित्स्वरेणाद्युदात्तः। घञन्तत्वात्। तथा बन्धुशब्दोऽपि नित्स्वरेणाद्युदात्त एव। तथाहि स धान्ये निदिति (उण्, १।९) वर्त्तमाने शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्यनेन (उण् १।१०) व्युत्पादित उप्रत्ययान्तः। आद्युदात्तत्वादञि प्राप्ते। सहायशब्दोऽपि लघावन्ते द्वयोश्च बह्वषो गुरुरिति (फिट् २।४२) मध्योदात्तः। तत्रानुदात्तादेरञि (४।२।४४) प्राप्ते तलो विधानम्। गजाच्चेति

वक्तव्यमिति। गजशब्दात् तल् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानञ्चेह चकारस्यानुवृत्तिमाश्रित्य कर्त्तव्यम्।

४४। अनुदात्तादेरञ्।

कापोतं मायूरमिति। कपोतमयूरशब्दौ लघावन्ते द्वयोश्च बह्वषो गुरुरिति (फिट्, २।४२) मध्योदात्तौ। तैत्तिरमिति। तित्तिरिशब्द इगुपधात् किदिति (उण्, ४।५५९) कित्प्रत्ययान्तः। ततः सन्वल्लुक् चाभ्यासस्येति प्रत्ययस्वरेणान्तोदात्तः। ननु च सन्वद्भावादाद्युदात्तः प्राप्नोति। उणादयो बहुलमिति (३।३।१) बहुलवचनात् स्वरे सन्वद्भावो न भविष्यतीत्यदोषः।

४५। खण्डिकादिभ्यश्च।

आद्युदात्तार्थमचित्तार्थञ्च वचनमिति। असत्येतस्मिन्नाद्युदात्तेभ्योऽण् स्यात्। अचित्तेभ्योऽचित्तलक्षणष्ठक् प्रसज्येत। क्षुद्रकाश्च मालवाश्चेति क्षत्रियद्वन्द्व इति। क्षुद्रकस्यापत्यानि बहूनि। जनपदशब्दात् क्षत्रियादञ् (४।१।१६८) मालवस्यापत्यानि बहूनि। वृद्धेत्कोशलाजादाञ् ञ्यङ् (४।१।१७१)। तयोस्तद्राजस्येति (२।४।६२) बहुषु लुक्। पश्चाद् द्वन्द्वः। ततः पूर्वेणाञि सिद्ध इति। समासान्तोदात्तत्वे कृते द्वन्द्वसमासस्यानुदात्तादित्वात्। वचनं गोत्रवुञो बाधनार्थम्। गोत्रोक्षोष्ट्रोरभ्रेत्यादिना (४।२।३९) गोत्रलक्षणो वुञ् प्राप्नोति। तद्बाधनार्थं क्षुद्रकमालवकस्येह गणे पाठः। ननु चेत्यादि। परत्वादेवाञ् वुञं बाधिष्यत इत्यतो नार्थो वुञो बाधनार्थेनानेन वचनेनेति भावः। एतच्च गोत्रत्वमभ्युपेत्योक्तम्। इदानीं गोत्रत्वमेव न भवतीति दर्शयितुमाह नचेत्यादि। गोत्रसमुच्चयोऽयम्। न च गोत्रसमुदायो गोत्रग्रहणेन गृह्यते यथा जनपदसमुदायो न जनपदग्रहणेन। तथा च काशयश्च कोशलाश्च काशिकोशलाः। तेषु भवाः काशिकोशलीयाः। जनपदत्वाभावाज्जनपदतदवध्योश्चेति (४।२।१२४) वुञ् न भवति। वृद्धाच्छ (४।२।११४) एव तु भवति। स्यादेतत्। यद्यपि गोत्रसमुदायो गोत्रं न भवति तदवयवस्तु भवति। क्षुद्रकमालवकशब्दोऽवयवो गोत्रम्। अतस्तदन्तविधिना तदन्ताद् गोत्रसमुदायादपि वुञ् प्राप्नोतीत्यत

आह नचेत्यादि । नहि सर्वस्तदन्तविधिर्भवतीति । तथाहि येन विधिस्तदन्तस्येत्यत्रोक्तं (१।१।७७,वा) समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जमिति । प्रत्ययविधिश्चायम् । येषु तत्र च तदन्तविधिरिष्यते ते तत्रैव भयाद्यादिग्रहणमित्यादिना परिगणिताः । न चास्य तत्र परिगणनम् । ततो नास्ति तदन्तविधिः । एवं तर्हीत्यादि । यदयं क्षुद्रकमालवकग्रहणं करोति वुञ्बाधनार्थं तज्ज्ञापयति वुञि पूर्वविप्रतिषेधो भवति । न परविप्रतिषेधः । सामूहिकेषु च तदन्तविधिरस्तीति । किमेतस्य ज्ञापने प्रयोजन मित्याह औपगवकं कापटवकमिति । एतद् वुञ्पूर्वविप्रतिषेधज्ञापनस्य प्रयोजनम् । असति ह्येतस्मिञ् ज्ञापने परविप्रतिषेधेनानुदात्तादेरञितयञ्(४।२।४४)स्यात् । वुञस्तु यत्राद्युदात्तत्वं सोऽवकाशो ग्लौचुकायनकमिति । ग्लुचुकायनशब्दो हि प्राचामवृद्धात् फिन् बहुलमिति (४।१।१६०) फिन्प्रत्ययान्तत्वाद् नित्स्वरेणाद्युदात्तः । वानहस्तिकम् । गौधेनुकमिति । तदन्तविधिज्ञापनस्य प्रयोजनम् । असत्येतस्मिञ् ज्ञापने ऽचित्तहस्तिधेनो ष्ठगिति (४।२।४७) धेनुहस्तिशब्दाभ्यां विधीयमानष्ठक् न तदन्तात् स्यात् । क्षुद्रकमालवकादिति । गणे क्षुद्रकमालवात् सेनासंज्ञायामिति पठ्यते । तत्र यद्ययमेको योगः स्यादेकेन यत्नेन च ज्ञापनं नियमश्च न लभ्यते । तस्मादत्र योगविभागः कर्त्तव्यः । तत्र क्षुद्रकमालवादित्येको योगः । सेनासंज्ञाया मिति द्वितीयः । तत्र पूर्वो योगो ज्ञापनार्थ उत्तरो नियमार्थः । पुनरस्यैवेति । क्षुद्रकमालवादित्यस्यैव योगस्य । क्षौद्रकमालवीति । टिड्ढाणञिति (४।१।१५) ङीप् । क्षौद्रकमालवकमन्यदिति । तदन्तविधिनात्र वुञ् भवति । अञ्सिद्धेरित्यादि । क्षुद्रकमालवशब्दादनुदात्तादेरञित्यञ् (४।२।४४) सिद्धः । तत् कोऽर्थः किं प्रयोजनं तस्य गणपाठेन? न किञ्चिदित्यर्थः । स्यादेतत् । यो गोत्रलक्षणो वुञ् स्यादत स्तद्बाधनार्थः पाठ इत्याह गोत्राद्वुञ् विधीयते । न च क्षुद्रकमालवशब्दो गोत्रम् । तत् कुतस्ततो वुञ्प्राप्तिः? तदन्तादित्यादि । यद्यपि क्षुद्रकमालवशब्दो गोत्रसमुदायो गोत्रं न भवति तदवयवस्तु भवति । तेन तदन्तविधिना प्राप्नोत्येव । नच सर्वत इति । न च तदन्तविधिः सर्वत्रैव भवति । परिगणितेष्वेव कार्य्येषु तदन्तविधिरिष्यते । नचेदं तत्र परिगण्यते ।

तत् कुत स्तदन्तविधिना वुञ्प्राप्तिः ? ज्ञापकं स्यादित्यादि । इदं हि क्षुद्रकमालवग्रहणं ज्ञापनार्थं भवेत् । एतज् ज्ञापयति सामूहिकेषु तदन्तविधिरस्तीति । एवं कृत्वापिशलेर्विधि रुपपन्नो भवति । विधीयतेऽनेनेति विधिः । स पुन र्धेनोरनञ इति । एतद्धि तत्सूत्रम् । अस्याय मर्थः । धेनुशब्दः समूहेऽर्थे ठक मुत्पादयति न चेद्धेनुशब्दो नञ उत्तरो भवतीति । नञ्पूर्व्वपदो न भवतीति यावत् । यदि तत्र सामूहिकेषु तदन्तविधिर्न स्याद नञिति वचनं नोपपद्यते । असति तदन्तविधौ धेनुशब्दादुच्यमानः प्रत्ययः कः प्रसङ्गो यदधेनुशब्दात् स्यात् ? तदेतदनञिति वचनं परमर्थवद्भवति यदि सामूहिकेषु तदन्तविधिर्भवति । नान्यथा । प्रयोजनान्तरमाह सेनायामित्यादि । सेनासंज्ञायामेव क्षुद्रकमालवशब्दादञ् भवतीत्येष नियमो यथा स्यादित्येवमर्थ स्तस्य गणे पाठ इत्यर्थः । यथेत्यादि । चेति समुच्चये । पूर्वविप्रतिषेधेन वुञाऽञो बाधनं यथा स्यादित्येवमर्थो गणे पाठः । खण्डिक इति । खण्डिकशब्दो मत्वर्थीयठन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । वल संवरणे इत्यस्मादुणादयो बहुलमि—(३।३।१) त्यवन्प्रत्यये डलयोरेकत्वस्मरणाल् लकारस्य डकारादेशे टापि वड्वेति भवति । भिक्षुकशब्दोऽपि कुत्सार्थविवक्षायां (D) कन्नन्तत्वात् पूर्व्वपदाद्युदात्तः । शुकोलूकयोरपि प्राणिनां कुपूर्वाणामिति ( फिट्, १।३० ) कुपूर्वादिरुदात्त एव । श्वन्शब्दःकनिन् युवृषोत्पत: (उण्, १।१५४) कनिन्ग्रहणेऽनुवर्त्तमाने श्वन्नुक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन् मज्जन्नर्य्यमन्विश्वप्सन् परिज्मन् ( उण्, १।१५७ ) मातरिश्वन् मघवन्निति कनिन्प्रत्ययान्तो निपातितः । तेनासावपि पूर्ववदाद्युदात्तः । युगवरत्राशब्दयोरचित्तार्थः । संहतविग्रहीतार्थं युगवरत्राग्रहणं वर्णयन्ति । यौगम् । वारत्रम् । यौगवरत्रमिति ।

४६ । चरणेभ्यो धर्म्मवत् ।

गोत्रचरणाद् (४।३।१२६) वुञित्यारभ्येति । ननु च तत्र धर्मग्रहणं नास्ति । तत् कथं धर्मवदित्यतिदेशः प्रयुज्यत इत्याह तत्रेदमित्यादि ।

(D) महीशूरपुस्तकेऽनुकम्पार्थविवक्षायामिति पाठः ।

इदमेव धर्मवदिति वचनं लिङ्गभूतं गमयति चरणाद्धर्माम्नाययोरितिरतद्वचनं (४।३।१२०,वा) शेषभूतमिति । नहि तेन विनातिदेश उपपद्यते । वतिः साहश्यार्थ इति । असति हि वतौ यदि चरणग्रहणं धर्मप्रतरयैरभिसम्बध्यते चरणेभ्यो धर्मेऽर्थे ये प्रतरया अभिधास्यन्ते ते भवन्ति तस्य समूह इत्ये-तस्मिन्नर्थ इति समूहप्रकृतिर्न विशेषिता स्यात् । एवञ्चेह प्रकृतिमात्राद्धर्म-प्रतरयाः प्रसज्येरन् । अथ प्रकृतिः सम्बध्यते धर्मे ये विधास्यन्ते प्रतरयास्ते भवन्ति चरणेभ्यः समूह इत्येतस्मिन्नर्थ एवमपि धर्मप्रत्यया न विशेषिताः स्युः । ततश्चाचरणेभ्योऽपि ये धर्मे विधास्यन्ते प्रत्ययास्तेऽपीह चरणेभ्य आपद्येरन् । अथाप्युभयसन्निधानादुभयं विशेष्यते ? तेन वाक्यभेदं कृत्वा प्रत्ययैः प्रकृतिभिः सम्बध्यते । चरणेभ्यो धर्मेऽथ ये प्रत्यया विधास्यन्ते ते समूहे भवन्ति चरणेभ्य इति । एवमपि कश्चित् चरणप्रकृतिकः प्रत्ययो यतः कुतश्चिच्चरणात् समूहे स्यात् । कौपिञ्जलहास्तिपदादण् (४।३।१३२) छन्दो-गादिभ्योऽपि स्यात् । वतौ तु तस्य साहश्ये विधानात् सर्वसाहश्यपरिग्रहो भवति । तेन याभ्यः प्रकृतिभ्यश्चरणविशेषणेन ये प्रत्यया विहिता इहापि ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन तएव प्रत्यया भवन्तीति न किञ्चिद-निष्टमापद्यते । तस्मात् सर्वसाहश्यपरिग्रहार्थं वत्करणं कर्त्तव्यम् । काठकम् । कालापकमिति । गोत्रचरणाद् वुञ् (४।३।१२६) । छान्दोग्यम् । औक्-थिक्यमिति । छन्दोगौक्थिकयाज्ञिकबह्वृचनटां ञ्यः इति (४।३।१२९) ञ्यः । आथर्वणमिति । कौपिञ्जलहास्तिपदादण् (४।३।१३२) । आथर्वणिकस्येक-लोपश्चेत्यण् (४।३।१३३) । इकलोपश्च । एते प्रत्यया यथा चरणेभ्यो धर्मे भवन्ति तथा समूहेऽपि ।

## ४७ । अचित्तहस्तिधेनोष्ठक् ।

अचित्त इति । अर्थप्रधानत्वान्निर्देशस्यार्थस्येदं ग्रहणम् । न स्वरूपस्य । तेनाचित्तवाचिभ्य ठग् विज्ञायत इत्याह अचित्तवाचिभ्यः शब्देभ्य इति । हस्तिधेनुशब्दयोश्च शब्दप्रधानत्वान्निर्देशस्य स्वरूपग्रहणम् । अतएव हस्ति-धेनुशब्दाभ्यामिति । अधेनोरिति वक्तव्यमिति । धेनुशब्दादनञ्पूर्वात् ठग्

भवतीतिरतदर्थरूपं व्याखेरयमित्यर्थः । तत्रेदं व्याख्यानम् । वक्ष्यमाणमिहान्यतरस्यांग्रहणमुभयोरपि योगयोः शेषो विज्ञायते । व्यवस्थितविभाषा च । तेन धेनुशब्दादनञ्पूर्वादेव भवतीति । न नञ्पूर्व्वादिति । चाधेनवमिति । उत्सादिभ्योऽञ् (४।१।८६) । ननु च धेनुशब्दस्तत्र पठ्यते । तत् कथमधेनुशब्दाद् भवतीति ? तत्रापि तदन्तविधेः सम्भवात् । तत् कथं विज्ञायते ? वष्कयास इति वष्कयशब्दस्य समासे प्रतिषेधात् । वष्कयशब्दाद्धि प्रत्ययविधानम् । गोवष्कयशब्दान्न प्राप्नोति । किं समासप्रतिषेधेन ? इतः प्रतिषेधाद्विज्ञायते ऽस्ति तत्र तदन्तविधिरिति ।

## ४८ । केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।

केशशब्दादचित्तलक्षणे ठकि प्राप्ते वचनमिदम् । अश्वशब्दादप्यणि सूत्रमिदमारभ्यते । अन्यतरस्यांग्रहणाट् ठगणावपि भवतः ।

## ४९ । पाशादिभ्यो यः ।

अचित्तलक्षणके ठकि प्राप्ते वचनमिदम् ।

## ५० । खलगो रथात् ।

गोशब्दादणि प्राप्ते खलरथाभ्यामचित्तलक्षणे ठकीदं वचनम् । अत्र पाशादिष्वेव खलादीनां पाठः कस्मान्न कृत इतराह पाशादिष्वपाठ उत्तरार्थ इति । उत्तरसूत्र इनित्रकट्यचः खलादिभ्य एव यथा स्युः । पाशादिभ्यो मा भूदिति ।

## ५१ । इनित्रकट्यचश्च ।

खलादिभ्य इनिर्वक्तव्य इति । वक्तव्यो व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् । चकारोऽत्र क्रियते । स चानुक्तसमुच्चयार्थः । तेन खलादिभ्य इनिप्रत्ययो भविष्यति । आदिशब्दश्चायं प्रकारे । खलप्रकार इत्यर्थः । किं पुनस्ते खलप्रकाराः ? येभ्य इनिर्दृश्यते । यदि तर्हि खलादिभ्य इनिर्भवति वैषम्याद् यथासंख्यं न प्राप्नोति । वाक्यभेदाददोषः । एकं वाक्यं यथासंख्यं न भवति । इह द्वे वाक्ये इति । इनित्रकट्यचः खलगोरथेभ्यो

भवन्तीत्येकं वाक्यम् । चकारश्चानुक्तसमुच्चयार्थः । ततः खलादिभ्य इनिर्भवतीति द्वितीयम् । द्वितीये तु वाक्ये खलशब्दस्य तत्र प्रकारोपलक्षणत्वं वेदितव्यम् । न तु प्रकृतित्वम् ।

## ५२ । विषयो देशे ।

योऽसौ विषयो देशश्चेत् स भवतीति । ननु च यो विषयः स देश एव भवति । किं तद्विशेषणेन देशग्रहणेनेत्याह विषयशब्दोऽयमित्यादि । अत्यन्तशीलित इति । अत्यन्ताभ्यस्त इत्यर्थः ।

## ५३ । राजन्यादिभ्यो वुञ् ।

आकृतिगणश्चायमिति । अपरिसमाप्ततां राजन्यादेर्दर्शयति । आदिशब्दश्चायं प्रकारार्थः ।

## ५४ । भौरिक्याद्यैषुकार्य्यादिभ्यो विधल्भक्तलौ ।

## ५५ । सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ।

छन्दस इति । न स्वरूपग्रहणम् । नापि मन्त्रब्राह्मणयोः । कस्य तर्हि ? अक्षराणामियत्तावचनश्छन्दःशब्दोऽस्ति यस्य जगत्यादयो विशेषाः । तस्येदं ग्रहणम् । तस्यैव हि प्रगाथ इत्यादौ सम्बन्धः । नेतरस्य । तेन पङ्क्त्यादिभ्यः प्रत्ययो भवतीत्युक्तं भवति । प्रग्रथ्यनेनेति । उच्चारणविशेषणेन प्रग्रन्थनात् प्रकर्षाद् गायनार्थाद्वेति । एतेन यन्निमित्तकः प्रगाथशब्दस्तां क्रियां दर्शयति । प्रगाथशब्दोऽयं यदाऽकर्त्तरि च कारके संज्ञायामिति(३।३।१९) कर्मणि घञन्तो व्युत्पाद्यते प्रग्रथ्यते ऽसौ प्रगाथ इति पृषोदरादिपाठाद् ग्रन्थे रेफानुनासिकयोर्लोपश्च तदा प्रग्रन्थनक्रियानिमित्तको भवति । यदा तु कै गै शब्द इत्यस्मादुणादयो बहुलमिति (३।३।१) प्रगाथ स्थन्प्रत्ययान्तो व्युत्पाद्यते तदा गायनक्रियानिमित्तो भवति । नपुंसक इत्यादि । नपुंसकलिङ्गे स्वार्थे एव च्छन्दसः प्रत्ययस्योपसंख्यानम् । तत्रेदं व्याख्यानम् । इतिकरणो विवक्षार्थः । तेन यत्र प्रत्ययान्ताच्छिष्टानां विवक्षा भवति तत्र प्रत्ययेन भवितव्यम् । नपुंसकलिङ्गे स्वार्थेऽपि च सा भवति । अतस्तत्रापि प्रत्ययो भवति । अवश्यं

चैतदेव विज्ञेयम्। यो हि मन्यते सर्वातिप्रसङ्गनिवृत्तिरितिकरणेन क्रियत इति तस्यासावनर्थक एव स्यात्। सर्वातिप्रसङ्गानामुपाधिभिर्निरस्तत्वात्।

५६। संग्रामे प्रयोजनयोद्धृभ्यः।

अत्र संग्राम इति प्रत्ययार्थ इति। सप्तम्यन्तत्वात्। प्रयोजनयोद्धृभ्य इति पञ्चम्यन्तत्वात् प्रकृतिनिर्देशः। ततश्च समर्थानां ( ४।१।८२ ) प्रथमाद्देत्येतद्धि- रुध्यते। प्रथमस्य प्रत्ययार्थत्वेन द्वितीयस्य प्रकृतित्वेनोपादीयमानत्वादित्यस्य चोद्यस्य निरासायाह सोऽस्येति समर्थविभक्तिः प्रत्ययार्थश्चानुवर्त्तत इति। एतेनैतद् दर्शयति। प्रयोजनयोद्धृभ्य इत्येतदेवमर्थं यस्मात् पूर्वसूत्रादेव स इति प्रथमं तदिहानुवर्त्तते। तद्विशेषणं तु प्रयोजनयोद्धृभ्य इति प्रत्ययार्थो ऽप्यस्येति पूर्वसूत्रादनुवर्त्तते। तद्विशेषणं संग्रामः। ततो नास्ति विरोधः। पूर्वसूत्रे यत् प्रथमानिर्दिष्टं तत एव प्रत्ययविधानादिति।

५७। तदस्यां प्रहरणमिति क्रीडायां णः।

५८। घञः सास्यां क्रियेति ञः।

क्रियेति प्रकृतिविशेषणमिति। यत्र तद् घञन्तं क्रियावाचि चेद् भवतीति। तेन भावे यो घञ् तदन्तात् प्रत्ययो भवतीत्युक्तं भवति। ननु च भावे यो घञ् तेनैव तदन्तं क्रियावाचि। यस्माद् धात्वर्थस्य सिद्धता नाम यो धर्म स्तत्र घञादिभिर्भवितव्यमित्युक्तं प्राक्। धर्मधर्मिणोर्भेदस्या- विवक्षितत्वात् क्रियाधर्मोऽपि क्रियाशब्देनोक्त इत्यदोषः। इतिकरणो विव- क्षार्थ इति। ननु च पूर्वसूत्रादेवेतिकरणोऽनुवर्त्तिष्यते। तत् किं पुनरिह तस्योपादानम्? इतिकरणस्येह प्रकरणे ऽनधिकारतां दर्शयितुं पुनरुपा- दानम्। तेन तदधीते तद् ( ४।२।५९ ) वेदेत्यत्रास्येतिकरणस्याननुवृत्तौ विवक्षानियमाभावादध्येतृवेदितृमात्रे प्रत्ययः सिद्धो भवतीत्येके। वैचित्र्यार्थ- मितिकरणोपादानमित्यपरे। श्यैनम्पातेति। शल हुल पत्लृ गतौ। भावे घञ्। श्येनस्य पात इति षष्ठीसमासः। ञे विहिते श्येनतिलस्य पाते ञ इति (६।३।७१) मुम्। प्राकार इति। करोतेः प्रपूर्व्वादकर्त्तरि च कारके संज्ञाया-

मिति (३।३।१९) कर्मणि घञ्। उपसर्गस्य घञ्यमनुष्ये बहुलमिति (६।३।१२२) प्रशब्दस्य दीर्घः। भवतीदं घञन्तम्। नतु क्रियावाचि। प्राकारस्य द्रव्यत्वात्। अथेत्यादि चोद्यम्। क्रीडायामित्यनेन तत्सम्बद्धमित्यादि परिहारः। स्यादेतत्। अनुवर्त्ततां क्रीड़ा। तस्याश्चेदं प्रत्ययविधानमिष्यत इत्यत आह सामान्येन चेत्यादि।

## ५९। तदधीते तद्वेद।

वैयाकरण इति। न य्वाभ्यामित्यादिना (७।३।३) वृद्धिप्रतिषेधः। ऐजागमश्च। द्विस्तद्ग्रहणमित्यादि। यदि तदधीते वेदेत्येवोच्येत प्रत्ययार्थद्वयस्य द्वितीयासमर्थे समुच्चयो विज्ञायेत। ततश्च यस्त्वधीते वेत्ति च तत्रैव स्यात्। यस्त्वधीते केवलं न वेत्ति वेत्ति वा केवलं नाधीते तत्र न स्यात्। द्विस्तद्ग्रहणे तु वाक्यभेदादधीयाने विदुषि च प्रत्येकं प्रत्ययः सिध्यति। तदर्थं द्विस्तद्ग्रहणम्। नैतद् द्विस्तद्ग्रहणस्य प्रयोजनम्। यथैव हि तेन दीव्यति खनति जयति जितमित्यत्र (४।४।२) सकृत् समर्थविभक्त्युपादानेऽपि प्रत्ययार्थचतुष्टयेन तृतीयासमर्थेन समुच्चयो न विज्ञायते तथेहापि न विज्ञास्यते। तेन यथा दीव्यतिप्रभृतिषु प्रत्येकं प्रत्ययो भवति तथेहापि प्रत्येकमधीयाने विदुषि च भविष्यतीति। न ब्रूम इहैव द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति। कुतस्तर्हि? क्रतूक्थादिसूत्रान्तात् ठग् (४।२।६०) वसन्तादिभ्यष्ठगित्यत्र (४।२।६३) च। किं कारणं तत्र न स्यात्? क्रतुशब्दः कर्मनामधेयः। वसन्तादयोऽप्यृतुवचनाः। तेषामध्ययनं नोपपद्यते। तत्सहचरिते ग्रन्थे स्यात्। स च तत्र गौण इति न गृह्यते। मुख्य एवार्थे वेदने सम्भवतीति तेभ्यो विदुष्येव प्रत्ययः स्यात्। नाध्येतरि। पुनर्द्विस्तद्ग्रहणाद् गौणस्यापि ग्रहणं भवतीति प्रत्येकमध्येतृविदुषोरत्र ठक्प्रत्ययो भवति।

## ६०। क्रतूक्थादिसूत्रान्ताट्ठक्।

क्रतुशब्दः कर्मनामधेयः। तस्याध्ययनवेदने द्वे न सम्भवत इति साहचर्यात् तदर्थो ग्रन्थो गृह्यते। नतु क्रतुनामा क्रतुरस्तीति तद्विशेषा ये ऽग्निष्टोमादय-

स्तदर्थो ग्रन्थो गृह्यते । तत्र चाह क्रतुविशेषवाचिभ्य इति । अग्निष्टोममधीत इत्यग्निष्टोमेन सहचरितं तदर्थग्रन्थमधीत इत्यर्थः । सूत्रान्तादकल्पादेरिष्यत इति । किमिष्यत एव ? ततो न तच् शस्यते लभ्यते च । कुतः ? वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानात् । किं तर्हि ? सामलक्षण औक्थिक्ये वर्त्तमान इति । उक्थसंज्ञकानां साम्नां लक्षणं व्याख्याग्रन्थ औक्थिक्यः । छन्दोगौक्थिक्ये-त्यादिना (४।३।१२९) ञ्यः । तत्रौक्थिक्ये सामलक्षणे ग्रन्थे वर्त्तमान उक्थशब्दः प्रत्ययमुत्पादयति । कुत एतत् ? गौणेन सह क्रतुशब्देन निर्देशात् । औक्थिक्ये उक्थशब्दस्य वृत्तिस्तादर्थ्याद्भवति । भवति च तादर्थ्यात् ताच्छब्द्यं यथा प्रदीपार्था मल्लिका प्रदीप इति । अत्रौक्थिक्यं योऽधीते कथं तत्र भवितव्यमित्यत आह औक्थिक्यशब्दाच्चेति । तत्रैव कारणमाह अनभिधानादिति । विद्यालक्षणकल्पसूत्रान्तादित्यस्यातिप्रसक्तस्यापवादमाह विद्या चेत्यादि । विद्याशब्दोऽनङ्गक्षत्रधर्मसंसर्गत्रिपूर्व एव प्रत्ययमुत्पादयति । नाङ्गादिपूर्व इत्यर्थः । त्रैविद्य इति । त्रयवयवा विद्या । शाकपार्थिवादित्वादुत्तरपदलोपी समासः । त्रिविद्यामधीते त्रैविद्यः । यावक्रीतमाख्यानमधीते यावक्रीतिकः । प्रियङ्गुमधीते प्रैयङ्गविकः । वासवदत्तामाख्यायिकामधीते वासवदत्तिकः । सुमनोत्तरामधीते सौमनोत्तरिकः । सर्वसादे र्द्विगोश्च लइति । सर्वादेःसादेर्द्विगोरुत्पन्नस्य ठको लोपो भवतीत्यर्थः । ननु च द्विगोर्लुगनपत्ये (४।१।८८) इत्येवं सिद्धः । सत्यमेतत् । इह तु कैश्चिद् विद्यालक्षणकल्पसूत्रान्तादित्यादिना प्रतिपदं प्रत्ययो विधीयते । तद् द्वैष्यमपि जायेत । प्रतिपदविधानान्न लुक् । ततो लुग्वचनम् । अनुसूर्लक्ष्यलक्षणे चेति । अनुसूशब्दः प्रत्ययमुत्पादयति । लक्ष्यलक्षणे च शब्दरूपे प्रत्ययमुत्पादयतः । आनुसुक इति । इसुसुक्तान्तात् कः (७।१।५१) इति कः । केऽणः (७।४।१३) इति ह्रस्वः । इकन् बहुलं पदोत्तरपदादिति । पदशब्द उत्तरपदं यस्य स तथोक्तः । शतषष्टेः षिकन् पथ इति । शतषष्टिशब्दाभ्यामुत्तरस्मात् पथः षिकन् प्रत्ययो भवति । षकारो ङीषर्थः । नकारः स्वरार्थः । एतत् सर्वमुक्थादिषु पाठादेव सिद्धम् । यदपीह किञ्चिन्न पठ्यते तदपि च बहुलग्रहणेन संगृहीतम् । उक्थादिष्वपि ठिकन् बहुलं पदोत्तरपदाच्चेति पठ्यते ।

६१ । क्रमादिभ्यो वुन् ।

६२ । अनुब्राह्मणादिनिः ।

ब्राह्मणसदृशोऽयं ग्रन्थो ऽनुब्राह्मणमिति । यथार्थेऽव्ययीभावं दर्शयति । ननु योऽनुब्राह्मणमधीते तस्यानुब्राह्मणमस्तीति । तत्र मत्वर्थीयेनैवेनिना सिद्धम् । तत् किमर्थमिदम् ? अण्बाधनार्थम् । यदीदं नोच्येत तदधीते तद्वेदेत्यण् (४।२।५९) प्रसज्येत ।

६३ । वसन्तादिभ्यष्ठक् ।

वसन्तसहचरितो ग्रन्थो वसन्त इति । यो वसन्ते पठ्यते नियोगेन यत्र च वसन्तो वर्ण्यते स वसन्तसहचरितो भवति । वर्षाशरदमिति । वर्षाश्च शरच्च वर्षाशरदम् । द्वन्द्वाच्चुदषहान्तात् समाहार इति (५।४।१०६) टच् । समासान्तेन निर्देशः । (E)

६४ । प्रोक्ताल्लुक् ।

युक्तो निर्देशो यदि प्रोक्तनामा ग्रन्थो व्याकरणादिर्भवति । न चासावस्ति । अन्यार्थेन ततःपरः सम्भवतीत्येतं दोषमपाकर्त्तुमाह प्रोक्तसहचरित इत्यादि । साहचर्य्यात् सोऽयमित्यभेदोपचारेण प्रोक्तार्थे यो विहितः प्रत्ययः स प्रोक्त-शब्देनोक्त इति दर्शयति । पाणिनीय इति । वृद्धाच्छः (४।२।११४) तदन्तात् तदधीते (४।२।५९) तद्वेदेत्यण् । तस्य लुक् पाणिनीयः । आपिशलिना प्रोक्तमित्यण् । तस्य लुक् । आपिशलः । कः पुनरत्र विशेषोऽर्थो लुकि सति ? यावता तदेव रूपमित्याह स्त्रियामित्यादि । असति लुकि टिड्ढाणञिति (४।१।१५) ङीप् स्यात् । सोऽणः स्वरेणान्तोदात्तः । लुकि हि सति टाब् भवति । स्वरेण तु मध्योदात्तः । आपिशलिशब्दाल्लुकि सति स्वरे नास्ति विशेषः । सत्यपि हि लुक्यन्तोदात्तत्वेन भवितव्यम् । स्त्रियान्तु पूर्वोक्तो विशेषो वर्त्तते । नहि लुकि सति ङीब् भवति । सत्यप्यणि तत्रैवानुपसर्जनादित्यधि-कारात् (४।१।१४) प्रतिषेधात् । प्रोक्तार्थविहितस्य चाण इहोपसर्जनत्वात् ।

(E) In the printed काशिका the गण has no compound as वर्षाशरदम् । वर्षा and शरद् are there separately.

## ६५। सूत्राच्च कोपधात्।

कोपधादिति वचनात् स्वरूपग्रहणं न भवतीत्यत: सूत्रवाचिनो ग्रहणं विज्ञायत इत्याह सूत्रवाचिन: प्रातिपदिकादिति। अष्टकमिति। अष्टावध्याया: परिमाणमस्य। तदस्य परिमाणमित्यनुवर्त्तमाने (५।१।५७) संख्याया: संज्ञासङ्घ-सूत्राध्ययनेष्विति (५।१।५८) च संख्याया अतिशदन्ताया: कनिति (५।१।२२) कन्। संख्याप्रकृतेरिति वक्तव्यमिति। संख्या प्रकृतिर्यस्य प्रत्ययस्य स संख्या-प्रकृति:। तदन्तात् कोपधादुत्पन्नस्य लुब् भवतीत्येतदर्थरूपं वक्तव्यं व्याख्येय मित्यर्थ:। तत्रेदं व्याख्यानम्। वेति वर्त्तते। सा च व्यवस्थितविभाषा। तेन संख्याप्रकृतेरेव भविष्यति। नान्यस्मादिति। चातुष्टयमिति। चत्वारोऽवयवा अस्येति। संख्याया अवयवे तयप् (५।२।४२)। ह्रस्वात् तादौ तद्धित इति (८।३।१०१) मूर्धन्य:। षत्वं भवति। एतत् संख्याप्रकृतिप्रत्ययान्तं नतु कोप-धम्। किं तर्हि? योपधम्।

## ६६। छन्दोब्राह्मणानि च तद्विषयाणि।

प्रोक्तग्रहण मनुवर्त्तत इति। तच्चेहार्थात् प्रथमान्तं विज्ञायते। छन्दो-ब्राह्मणानीत्यस्य समानाधिकरणार्थम्। अत आह च्छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानीति भवन्ति। स्वरूपग्रहणमिह न भवति। तथाहि प्रोक्तग्रहण-मिहानुवर्त्तते। नच च्छन्दोब्राह्मणशब्दौ प्रोक्तप्रत्ययान्तौ। तस्माच्छन्दोब्राह्मण-वाचिनो ये शब्दा: प्रोक्तप्रत्ययान्तास्ते गृह्यन्ते। किमर्थं पुनरिदमुच्यते? इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता लभ्यते। तथाहि क्वचित् तदन्तस्य स्वातन्त्र्य-मुपलभ्यते यथा पाणिनिना प्रोक्तं पाणिनीयं शास्त्रम्। प्रोक्तार्थ एव वृत्ति: स्वातन्त्र्यम्। पाणिनीयशब्दस्य चात्र प्रोक्तार्थ एव वृत्ति:। क्वचिदुपाध्यन्तरयोगो यथा पाणिनीयं महत् भवतस्तु विहितमिति। क्वचिद्वाक्यम् पाणिनीय मधीत इति। क्वचिद् वृत्ति: पाणिनीय इति। तदिह छन्दोब्राह्मणाना मध्येतृवेदितृविषया वृत्तिर्यथा स्यात्। प्रकारान्तरं मा भूदित्येवमर्थ मिदमुच्यते। अध्येतृवेदितृ इति। अध्येतृवेदितृप्रत्ययो विषयो येषामिति बहुव्रीहि:। अनन्यत्रभावो विषयार्थ इति। यथा मत्स्यानां जलं विषय इत्यत्रानन्यत्रभावे

विषयशब्दो वर्त्तते तथेहापि । एतेन यद्यपि ग्रामसमुदायादिष्वप्यर्थेषु विषयशब्दस्य वृत्तिस्तथापीहानन्यत्रभावे वर्त्तमानः संगृह्यत इति दर्शयति । तेनेत्यादिना ऽनन्यत्रभाववृत्तिशब्दस्य फलं दर्शयति । एवं ह्यनन्यत्रभावो भवति यदि स्वातन्त्र्यादि न भवति । उपाध्यन्तरयोगो महत्त्वादिना विशेषेण सम्बद्धः । कठ इति । कठेन प्रोक्तमिति । कलापिवैशम्पायनान्तेवासिभ्यश्चेति (४।३।१०४) णिनिः । तस्य कठचरकाल्लुक् (४।३।१०७) । ततः कठेन प्रोक्तमधीते तद्वेदेति पुनरण् । तस्यापि प्रोक्ताल्लुगिति (४।२।६४) लुक् । मौदाः पैप्पलादा इति । कलापिवैशम्पायनान्तेवासिभ्यश्चेति (४।३।१०४) णिनिः । मोदेन प्रोक्तमिति । कलापिनो ऽणित्यण् (४।३।१०८) । तदन्ताद् तदधीते तद्वेदेत्यण् (४।२।५९) । तस्य प्रोक्ताल्लुगिति (४।२।६४) लुक् । आर्चाभिन इति । ऋचाभेन प्रोक्तमिति कलापिवैशम्पायनान्तेवासिभ्यश्चेति (४।३।१०४) णिनिः । तदन्तात् तदधीते (४।२।५९) तद्वेदे त्यण् । वाजसनेयिन इति । वाजसनेयेन प्रोक्तमिति । शौनकादिभ्यश्छन्दसीति णिनिः (४।३।१०६) । तदन्तात् तदधीते तद्वेदेत्यण् (४।२।५९) । तस्य लुक् । ताण्डिन इति । ताण्ड्यशब्दाद् गर्गादियञन्तात् प्रोक्तार्थे पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति (४।३।१०५) णिनिः । आपत्यस्य च तद्धिते ऽनातीति (६।४।१५१) यलोपः । ततस्तदधीते तद्वेदेत्यण् (४।२।५९) । तस्य लुक् । भाल्लविन इति । भाल्लविशब्दादिञन्तात् प्रोक्तार्थे पूर्ववण्णिनिः । तदन्तात् तद्वेदेत्यण् । तस्य लुक् । शाट्यायनिन इति । शाट्यशब्दाद् गर्गादियञन्ताद् यञिञोश्चेति (४।१।१०१) फक् । ततः प्रोक्तार्थे पूर्ववण्णिनिः । तदन्तात् तदधीते तद्वेदेत्यण् (४।२।५९) । तस्य लुक् । ऐतरेयिण इति । ऐतरेयशब्दाच् शुभ्रादिढगन्तात् पूर्ववण्णिनिः । ततस्तदधीत इत्यण् । तस्य लुक् । ब्राह्मणविशेषप्रतिपत्त्यर्थमिति । ब्राह्मणविशेषः पुराणप्रोक्तत्वम् । तस्य प्रतीतिः प्रतिपत्तिर्यथा स्यादित्येवमर्थं ब्राह्मणग्रहणम् । याज्ञवल्क्यानीति । याज्ञवल्क्यशब्दाद् गर्गादियञन्तात् प्रोक्तार्थे कण्वादिभ्यो गोत्र इत्यण् (४।२।१११) । सौलभानीति । सुलभेन प्रोक्तानीति । पूर्ववत्कलापिनो ऽणित्यण् (४।३।१०८) । अत्र स्वातन्त्र्यं भवति । नहीह पुराणप्रोक्तत्वमस्ति । इदानीन्तनेन प्रोक्तत्वात् । काश्यपिनः कौशिकिन इति ।

काश्यपेन प्रोक्तः कल्पः। कौशिकेन प्रोक्त इति। काश्यपकौशिकाभ्यामृषिभ्यां णिनिः। तदन्तात् तदधीत इत्यण्। तस्य लुक्। पाराशरिणः शैलालिन इति। पाराशर्य्येण प्रोक्तं सूत्रं शिलालिना प्रोक्तं सूत्रम्। पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयो (४।३।११०) रिति णिनिः। आपत्यस्य च तद्धितेऽनातीति (६।४।१५१) यलोपः। ततस्तदधीत इत्यण्। तस्य लुक्। कर्मन्दिनः। कृशाश्विन इति। कर्मन्देन प्रोक्तं सूत्रम्। कृशाश्वेन प्रोक्तं सूत्रमिति कर्मन्दकृशाश्वादिनिः (४।३।१११)। तदन्तात् तदधीते तद्वेदेत्यण् (४।२।५९)। तस्य लुक्। पैङ्गी कल्प इति। पिङ्गेन प्रोक्तः कल्पः। पुराणप्रोक्तेष्वादिना (४।३।६५) णिनिः। तत्र स्वातन्त्र्यमेव भवति। न च तद्विषयता।

## ६७। तदस्मिन्नस्तीति देशे तन्नाम्नि।

प्रत्ययान्तनामेति। यदि तर्हि तन्नाम्नि देशे प्रत्यय इतिकरणोऽनर्थकः। तन्नामग्रहणादेवातिप्रसङ्गनिवृत्तिः। नैतदस्ति। द्विविधं हि नाम। संकेतितमनुवृत्तञ्च। संकेतितं यदद्यापि व्यवहारपदवीं नानुपतति। अनुवृत्तञ्च व्यवहारमनुपतति। तत्रानुवृत्तं यन्नाम तत्रायं योगः। अनुवृत्तञ्च व्यावहारिकम्। तत्प्रतिपत्त्यर्थमितिकरणः क्रियते। ग्रामादिविशेषपरिग्रहार्थञ्च। यद्येवमितिकरण एव क्रियताम्। किं तन्नाम्नीत्यनेन? एतदपि न कर्त्तव्यम्। नामधेयता विरोधिनोऽपि बलीयसोऽपि प्रत्ययान् बाधितुम्। कथम्? नाप्राप्ते मतुप्ययं योग आरभ्यमाणो मतुपमपवादत्वाद् बाधते। तदपवादैस्त्विनिठनादिभिः सह सम्प्रधारणायामपवादविप्रतिषेधादिनिठनादय एव स्युः। नामग्रहणे तु सति बलीयोभिरपि सम्प्रधारणायाः सम्प्रत्ययो भवति यो नामधेयतां गमयति स चातुरर्थिक एवेति। अतः स एव भवति।

## ६८। तेन निर्वृत्तम्।

चतुर्ष्वपीति। अनन्तरातीतेऽस्मिन् वक्ष्यमाणयोश्च योगयोः। कर्त्तरि चेति। लक्ष्यानुरोधेन क्वचिद्धेतौ क्वचित् कर्त्तरि च। सहस्रेणेति। हेतौ। कुशाम्बेनेति। कर्त्तरि। यदा हेतौ तदा वृत्तेरकर्मकत्वान्निर्वृत्त इति कर्त्तरि

निष्ठा । यदा कर्त्तरि तदाऽन्तर्भावितण्यर्थत्वात् कर्मणि । अकर्मका अप्यन्त-र्भावितण्यर्थाः सकर्मका भवन्ति ।

६९ । तस्य निवासः ।

७० । अदूरभवश्च ।

७१ । ओरञ् ।

यथायथमिति । यथास्वम् । तत्र प्रथमे प्रथमासमर्थविभक्तियुक्तात् । द्वितीये तृतीयासमर्थविभक्तियुक्तात् । तृतीयचतुर्थयोः षष्ठीसमर्थविभक्तियुक्तात् । नद्या तु परत्वान् मतुबेव भवतीति । नद्यां मतुबित्यनेन (४।२।८५) ।

७२ । मतोश्च बह्वजङ्गात् ।

मालावतमिति । यदि बह्वजिति न भवत्येष दोषः ।

७३ । बह्वचः कूपेषु ।

७४ । उदक् च विपाशः ।

७५ । संकलादिभ्यश्च ।

७६ । स्त्रीषु सौवीरसाल्वप्राक्षु ।

७७ । सुवास्त्वादिभ्योऽण् ।

उवर्णान्तलक्षणस्येत्यादि । य उवर्णान्तास्तेभ्य ओरञिति ( ४।२।७१ ) प्राप्तस्याञोऽपवादः । शेषेभ्यश्च बह्वचः कूपेष्वित्यादिना ( ४।२।७३ ) प्राप्तस्य कूपलक्षणस्य । अथाण्ग्रहणं किमर्थम् ? सुवास्त्वादिभ्यो यथाविहितमेवोच्येत । पुनर्वचनं यो विहितो नच प्राप्नोति तदर्थं विज्ञायते । अणेव च विहितो न प्राप्नोति । अपवादेन बाधितत्वात् । अथ स भविष्यतीत्यत आह अण्ग्रहण-मित्यादि । असति ह्यण्ग्रहणे मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति (प, ६१) नदीमतुपा सह संप्रधारणायां परत्वान्नदीमतुप् स्यात् । अणो ग्रहणादणेव भवति । तस्मान् मतुपो बाधनार्थमण्ग्रहणम् ।

७८। रोणी।

कोऽयं निर्देश इति। कुत्सितोऽयं निर्देश इत्यर्थः। कुत्सितत्वं तु लक्षणातिक्रान्तत्वात्। तदेव लक्षणातिक्रान्तत्वं दर्शयितुमाह यावतेत्यादि। सर्वावस्थाप्रतिपत्त्यर्थमित्यादि। सर्वावस्था च केवलस्य तदन्तस्य च प्रतिपत्तिः प्रकृतित्वेन यथा स्यादित्येवमर्थमुच्यते। यदि रोण्या इत्यादिनिर्देशः क्रियेत तदा ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति ( प, ३२ ) केवलादेव स्यात्। न तदन्तात्। रोणीति शास्त्रानपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिष्यते। तदस्याः परिभाषाया अनपेक्षणादिह तदन्तादपि प्रत्ययः सिद्धो भवति। ननु च ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते। न चेदं प्रातिपदिकम्। स्त्रीप्रत्ययान्तत्वात्। अथ मतं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं ( प, ७२ ) भवतीति प्रातिपदिकस्य तदन्तविधेः प्रतिषिध्यमानः स्त्रीप्रत्ययान्तस्यापि प्रतिषिध्यत इति। एतच्च यत्र हि प्रातिपदिकस्य स्वरूपग्रहणं तद्विषया परिभाषेति प्राग् ज्ञापितमेतत्। एवं तर्हि तस्य ज्ञापनस्य प्रायिकत्वं दर्शयति। तेन क्वचिदस्वरूपग्रहणेऽप्येषा परिभाषा प्रवर्त्तते। तेन कुमारीमाचष्टे कुमारयतीत्यत्र णाविष्ठवत् प्रातिपदिकस्येतीष्ठवद्भावः (६।४।१५५, वा) सिद्धो भवति।

७९। कोपधाच्च।

८०। वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः।

औत्सर्गिकोऽपि तत्रेष्यत इति। यद्येवं तस्य श्रवणं प्राप्नोतीत्यत आह तस्य चेत्यादि। तथाचोक्तमितरादि। तदेव द्रढयति। औत्सर्गिक इत्येव। शिरीषाणामदूरभवो ग्रामः शिरीषाः। तस्य वनं शिरीषवनमिति भाष्यकारवचनाल्लभ्यते। विशेषविहितानां हि लुपा न भवितव्यम्। अत औत्सर्गिकस्य लुब् भवतीति विज्ञायते।

८१ । जनपदे लुप् ।

८२ । वरणादिभ्यश्च ।

८३ । शर्कराया वा ।

पाठसामर्थ्यादित्यादि । यदि नित्यो लुप् स्याद् गणयोरस्य पाठोऽनर्थकः स्यात् । तस्मात् पाठसामर्थ्यादेव पक्षे श्रवणं भविष्यतीत्यत आह । एवं तर्हीत्यादिना वाग्रहणस्य ज्ञापकं दर्शयति । शर्करेति । औत्सर्गिकस्य लुप् । शार्करमिति तस्यैव पक्षे श्रवणम् । शर्करिकमिति । कुमुदादित्वात् ठच् । शार्करकमिति । वराहादित्वात् कक् । शार्करिकं शार्करीयमिति । उत्तर-सूत्रेण ठञ् छौ ।

८४ । ठक्छौ च ।

८५ । नद्यां मतुप् ।

उदुम्बरावतीति । मतौ बह्वचोऽनजिरादीनामिति (६।३।११९) दीर्घः ।

८६ । मध्वादिभ्यश्च ।

८७ । कुमुदनड़वेतसेभ्यो ड्मतुप ।

कुमुदशब्दात् ठच्ठकौः प्राप्तयोः । नड़शब्दादपि नड़शादाड्ड्वलजिति (४।२।८८) नड़ादीनां कुक्चेति (४।२।९१) । अस्मिंश्च विधौ प्राप्ते वेतसशब्दादपि मतुब् विधीयते । महिषाच्चेत्यादि । महिषशब्दान्मतुब् विधीयत इत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । पूर्वसूत्राच्चकारोऽनुवर्त्तते । स चानुक्त-समुच्चयार्थः । तेन महिषशब्दादपि भविष्यतीति ।

८८ । नडशादाड् ड्वलच् ।

नड़शब्दात् पूर्वसूत्रेण ड्मतुप्यपि प्राप्ते शादशब्दादण्यणि ड्वलज् विधीयते ।

८९ । शिखाया वलच् ।

शिखाया वलचं वक्ष्यतीति । दन्तशिखात् संज्ञाया मित्यनेन (५।२।११३)।

९० । उत्करादिभ्यश्छः ।

९१ । नड़ादीनां कुक् च ।

क्रुञ्चाया ह्रस्वत्वश्चेति । क्रुञ्चाशब्दस्य कुग् भवति ह्रस्वत्वञ्च । क्रौञ्चकीयमिति । तक्षन्नलोपश्चेति । तक्षन्नित्येतस्य कुगागमो भवति नलोपश्च तक्षकीयमिति ।

९२ । शेषे ।

उपयुक्तादन्यः शेष इत्येतद् ग्रहणकवाक्यम् । तदेवापत्यादिभ्य इत्यादिना विवृणोति । अपत्यादयो हि चातुरर्थ्यपर्य्यन्ताः प्रत्ययविधौ विनियुक्ताः । तस्मात् तेभ्यो योऽन्यो जातादिरर्थः स शेषः । ननु च निवृत्ता अपत्यादयः । तेभ्यश्चान्तरेषु जातादिषु येषु घादयस्ततोऽपत्यादिषु नैव ते प्राप्नुवन्तीति तत् किं तन्निवृत्त्यर्थेन शेषाधिकारेणेत्यत आह तस्येदमित्यादि । जातादिष्वर्थेषु तस्येदमित्येषोऽर्थः पठ्यते । तच्चापत्यादीनां सामान्यम् । सामान्ये च विधीयमान स्तद्विशेषेऽपि विधीयते । तदुपलक्षणत्वात् सामान्यस्य । अतस्तस्येदं विशेषत्वाज् जाताद्यन्तःपातिष्वपत्यादिषु घादयः प्राप्नुवन्ति । तस्मात् तेषु मा भूवन्निति शेषाधिकारः क्रियते । किञ्चेतरादिना प्रयोजनान्तरं दर्शयति । असति हि शेषाधिकारे घादीनां प्रथमार्थेनैव सम्बन्धमनुभवतां तत्रैव कृतार्थता विज्ञायेत । तत्र द्वितीयादिष्वर्थेषु प्राग्दीव्यतीया एवाणादयः स्युः । नतु घादयः । शेषशब्दस्तूपयुक्तादन्यतया जातादीनर्थानेकीकृतत्र शक्नोतत्रभिधातुम् । सर्वत्र घादयः सिध्यन्तीति । अतः साकल्यार्थं वा शेषवचनम् । लक्षणं चाधिकारश्चेति । इह लक्षणस्य विधायकत्वाल्लक्ष्यतेऽनेनेति लक्षणमिति कृत्वा । उत्तरत्राधिकारः स्वरितत्वात् । तत्र यदास्य लक्षणं चाक्षुषादयः सिध्यन्ति । यदा त्वधिकारता तदा सर्वेषु जातादिष्वर्थेषु घादयो भवन्ति । यदि तर्हि शेष इति लक्षणमपीदमनेनैव यथा ग्रहणादिष्वर्थेषु शेषेष्वर्थेषु प्रतययो भवति तथा जातादिष्वपि भविष्यतीति जाताद्यनुक्रमणमनर्थकम् । न । अपवादविधानार्थत्वात् । यानि त्वनपवादार्थानि जातनिवृत्तलब्धक्रीतकुशला इत्येवमादीनि तानि शेषग्रहणस्यैव प्रपञ्चो वेदितव्यः ।

## ९३ । राष्ट्रावारपाराद् घखौ ।

राष्ट्रशब्दाद्वृद्धाच्छ (४।२।११४) इति च्छे प्राप्ते । अवारपारशब्दादणि घखौ विधीयेते । अवारस्य पारमवारपारमिति षष्ठीसमासः । राजदन्तादिषु दर्शनात् पारावारमित्यपि पक्षे भवति । विगृहीताद् विपरीताच्च लभ्यते । वक्तव्यमेवैतत् । अथवैकशेषो विज्ञास्यते । तत्रैकः समुदायार्थोऽपरोऽवयवार्थो भविष्यति । विपरीतस्याप्येकार्थानां विरूपाणा (१।२।६४,वा) मित्येकशेषो न विरुध्यते । यथा वक्रदण्डश्च कुटिलदण्डश्च कुटिलदण्डाविति । यथाच शङ्कुलुकाविति । ननु च तस्यैवं प्रकृतयो न्यन्ति । पञ्च राष्ट्रादिशब्दाः । प्रत्ययौ तु द्वाविति वैषम्यात् संख्यातानुदेशो न सिध्यति । नैष दोषः । निर्देशापेक्षं हि यथासंख्यत्वम् । निर्देशश्च द्वयोरेव । तदपेक्षया प्रकृते यथासंख्यत्वम् । एवं पञ्चाद्यभेद उपजायते । न ध यथासंख्यं बाधते । यथा वुञादीनाञ्च गणापेक्षया यथासंख्यं प्रवृत्ते तु यथासंख्येन प्रत्ययोत्पत्तिवेलायां गणेषु यद्यपि प्रातिपदिक रूपाण्यसमसंख्यानि भवन्ति तथात्रापि यथासंख्यं न हीयते । कुतः पुनरव-गतमेकशेषोऽयमिति ? व्याख्यानात् । प्रकृतिविशेषोपादानमात्रेणेति । मात्रशब्दो जात्यर्थविभक्तिनिर्देशस्य च व्यवच्छेदाय ।

## ९४ । ग्रामाद् यखञौ ।

वृद्धलक्षणे छे प्राप्ते वचनम् ।

## ९५ । कत्त्र्यादिभ्यो ढकञ् ।

कत्त्र्यादिषु यद्वृद्धं पठ्यते ततश्छे प्राप्ते शेषेभ्यस्त्वणीति योगोऽयमारभ्यते । कत्त्रिशब्दश्च तत्पुरुषः । कुत्सिता त्रयः । कोः कदिति (६।३।१०१) योगविभागात् कद्भावः । अतएव निपातनाद् बहुव्रीहिर्वा कुत्सिता त्रयो यस्याः सा कत्त्रिः । कुड्याया यलोपश्चेति । कुड्याशब्दाड् ढञ् भवति यलोपश्च । कौड़ेयकः । ये तु कु (ण्ड्या) ल्याया यलोपश्चेति पठन्ति, तेषां कौ (ण्डे) लेयकः ।

## ९६ । कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ।

अणोऽपवादो योगः ।

९७। नद्यादिभ्यो ढक्।

यान्यत्र वृद्धानि तेभ्योऽणि प्राप्ते वृद्धेभ्यस्तु वाराणसीत्येवमादिभ्यश्छे प्राप्ते ऽपवादः। केषाञ्चिद् रोपधेतोः प्राचामिति (४।२।१२७) वुञि प्राप्ते ढगारभ्यते। पौरेयमिति। पुरि भवम्। वने भवं वानेयम्। गैरेयमिति। गिरौ भवम्। तदुभयमपि दर्शनम् प्रमाणभूतमिति। उभयथाप्याचार्य्येण शिष्याणां प्रतिपादितत्वात्। गणे नदीत्येतत् स्वरूपेण ग्रहणम्। न संज्ञाग्रहणार्थम्। संज्ञाग्रहणे हि मह्यादीनां पाठोऽनर्थकः स्यात्।

९८। दक्षिणापश्चात्पुरसस्त्यक्।

पश्चात्पुरसोरव्ययत्वात् साहचर्य्याद् दक्षिणाशब्दोऽपि दक्षिणादाजि-(५।३।३६) त्याजन्तमव्ययमेव गृह्यते। एवञ्चाव्ययात् (४।२ १०४) त्यबित्यत्र परिगणनात् त्यपः प्राप्तिर्नास्तीत्यणो ऽपवादोऽयं योगः।

९९। कापिश्याः ष्फक्।

वृद्धादिति (४।२।११४) छे प्राप्ते कापिशीशब्दात् ष्फग् विधीयते। वाह्लीत्यादि। वाह्लीत्यादिभ्यः ष्फग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। उत्तरसूत्रादिह चकारः सिंहावलोकितन्यायेनानुवर्त्तते। तस्यानुक्तसमुच्चयार्थत्वाद् वाह्ल्यादिभ्योऽपि ष्फग् भवतीति।

१००। रङ्कोरमनुष्येऽण् च।

ओर्देशे ठञिति (४।२।११९) ठञि जनपदतदवध्योश्चेति (४।२।४) जनपदलक्षणे वुञि कोपधादण्ित्यणि (४।२।१०२) प्राप्ते वचनम्। कच्छादिपाठादणपि सिद्ध इति। कच्छादिभ्यश्चेत्यत्र (४।२।२२) कोपधादणित्यण्-(४।२।१०२) ग्रहणानुवृत्तेः। नञिवयुक्तन्यायेनेति। नञ्युक्ते चेवयुक्ते च तत्सदृशसंप्रत्ययो भवति। इह च मनुष्यशब्दो नञ्युक्तः। तस्मान्नेह मनुष्यप्रतिषेधः क्रियते। अपि च मनुष्यसदृशे प्राणिन्येव प्रवृत्तिः। तेन मनुष्यसदृशे प्राणिनि ष्फगणौ भवतः। अप्राणिनि तु कच्छादिपाठादणेव भवति। न ष्फक्। राङ्कवः कम्बल इति। विशेषविहितेनेत्यादि। यदीहाप्यण् न क्रियेत तदा कच्छादिभ्योऽणित्यणो

(४।३।१३३) राङ्कवः कम्बल इत्यत्र सावकाशत्वात् प्राणिनि विशेषविहितेन ष्फका तस्य बाधनं स्यात् । तस्मादेष दोषो मा भूदित्यणपि क्रियते ।

## १०१ । द्युप्रागपागुदक्प्रतीचो यत् ।

अणि प्राप्ते यद् विधीयते । प्रागित्यादयः शब्दा अञ्चतेः ऋत्विगादिना (३।२।५९) क्विनि कृते सत्यात्मानं लभन्ते । ते च द्विविधाः । अव्ययसंज्ञका अनव्ययसंज्ञकाश्च । यदा त्वस्तातिप्रत्ययान्ता भवन्ति तदा तद्धितश्चासर्वविभक्तिरि- (१।१।३८) त्यव्ययसंज्ञाविधानादव्ययसंज्ञकाः । अन्यदा त्वनव्ययसंज्ञाः । तेषामिह विशेषस्यानुपादानादुभयेषामपि ग्रहणम् । प्राच्यम् । अपाच्यमिति । अच (३ ४।१९) इत्यकार लोपः । चाविति दीर्घः (६।३।१३८) । उदीच्यमिति । उद ईदितीकारः (६।४।१३९) । प्राक्तनमिति । प्राक्शब्दाद् दिक्शब्देभ्यः सप्तमी- पञ्चमीप्रथमाभ्यो दिगित्यादिनास्तातिः (५।२।२७) । तस्याञ्चेर्लुगिति (५।३।३०) लुक् । ततोऽ नेन यति प्राप्ते सायञ्चिरमित्यादिना (४।३।२२) ट्यट्युलौ भवतः । यतस्तु यत्र कालवाची सोऽवकाशः ।

## १०२ । कन्यायाष्ठक् ।

अणपवादोऽयं योगः ।

## १०३ । वर्णौ वुक् ।

वर्णुरिति । नदोऽभिधीयते । स्रोतसि च कन्या न सम्भवतीति सामीपिक- मधिकरणं विज्ञायते । अत आह तत्समीपो देशो वर्णुरिति । वर्णुशब्दाददूर- भवश्चेत्यत्रार्थे (४ २ ७०) सुवास्त्वादिभ्योऽणित्यण् (४।२।७१) । तस्य जनपदे लुबिति (४।२।८४) लुपि कृते वर्णुरिति भवति । ननु च प्रतिपदविधानात् प्रत्ययस्य लुब् न भवति । नेवम् । सुवास्त्वादिपाठो हि जनपदादन्यस्मिन् प्रत्ययार्थे कृतार्थो वार्णवो ग्रामो वार्णवं नगरमिति । न तु जनपदे । तत्र तु परत्वाल्लोपेन भवितव्यम् । तद्विषयार्थेति । विषयग्रहणेन वर्णाविति सप्तम्या विषयसप्तमीत्वं दर्शयति । स वर्णुदेशो विषयो यस्य तद्विषयार्थः । सा पुनः कन्यैव ।

## १०४। अव्ययात् त्यप्।

अमेहेत्यादि परिगणनम्। एतच्चोत्तरसूत्रस्थस्यान्यतरस्यांग्रहणस्योभयोर्योगयोः शेषभूतत्वाद् व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। अमाशब्दः समीपवाची। स्वरादिपाठादव्ययत्वम्। इहेत्यादीनां तद्धितश्चासर्वविभक्तिः (१।१।३८) रिति। अमा भवोऽमात्यः। आपरिष्ट इति। उपरिष्टाद् भवतीत्यणि कृतेऽव्ययानां भमात्रे टिलोपो वक्तव्य इति (६।४।१४४, वा) टिलोपः। परतो भावः पारतः। परतःशब्दो विभाषा परावराभ्यामित्यसुजन्तः (५।३।२९)। आरातीय इति। अत्र टिलोपो न भवति। वह्निषष्टिलोपश्चेत्यत्वानित्यत्वस्य (४।१।८५) ज्ञापितत्वात्। त्यब् नेर्ध्रुव इति। निशब्दाद् ध्रुवे वाच्ये त्यब् भवति। नियते सर्वकाले भवो नित्यः। निसो गत इति। निःशब्दाद् गते वाच्ये त्यब् भवति। निष्ट्य इति। ह्रस्वात् तादौ तद्धित इति (८।३।१०) मूर्धन्यः। एवमाविष्ट्य इत्यत्रापि भवति।

## १०५। ऐषमोह्यःश्वसोऽन्यतरस्याम्।

ऐषमःप्रभृतीनि कालवाचीनि प्रातिपदिकान्यव्ययानि। सायंचिरमित्यादिना (४।३ २३) परत्वाट्ट्युट्युलोः प्राप्तयोरिदं वचनम्। शौवस्तिकमिति। द्वारादीनाञ्चेत्यैजागमः (७।३।४)।

## १०६। तीररूप्योत्तरपदादञ्ञौ।

अथ तीररूप्योत्तरादित्येवं कस्मान्नोक्तम्? एवं हि लघु सूत्रं भवतीत्यत आह तीररूप्यान्तादित्यादि। यदीह तीररूप्यान्तादित्युच्येत बहुच्पूर्वादपि स्यात्। बहुतीरे जात इति। भवति ह्येतत् तीरान्तम्। उत्तरपदग्रहणे ह्येषोऽतिप्रसङ्गो न भवति। नह्येतत् तीरोत्तरपदम्। यस्मात् समासे सत्येतद्भवति। पूर्वपदमुत्तरपदमिति न्यायेन नायं समासः।

## १०७। दिक्पूर्वपदादसंज्ञायां ञः।

पौर्वशाल इति। पूर्वस्यां शालायां भवः पौर्वशालः। तद्धितार्थेत्यादिना (२।१।५१) तद्धितार्थे समासः। ततः प्रत्ययः। अथ पदग्रहणं किमर्थम्? न

दिक्पूर्वादित्येवोच्येतेत्यत आह पदग्रहणमित्यादि। असति हि पदग्रहणे स्वरूपग्रहणं स्यात्। तथाच दिग्गजो दिग्नागो दिग्भागो दिग्दाह इत्येवमादिः प्रकृतिर्विज्ञायते। पदग्रहणे तु सति दिग्विशेषो गृह्यते। कथम्? पदग्रहणसामर्थ्याद् व्यधिकरणे बहुव्रीहिर्विज्ञायते। दिशः पूर्वपदं यस्य। दिश इति च वाचकापेक्षया षष्ठी विज्ञायते। तेनेह तदभिधायी पूर्वादिदिक्शब्दो गृह्यते।

## १०८। मद्रेभ्योऽञ्।

पौर्वमद्र इति। पूर्ववत् तद्धितार्थे समासः। ततोऽणि प्राप्ते। अवृद्धादपि बहुवचनविषयादिति (४।२।१२५) च वुञि। मद्रवृज्योः कन्निति (४।२।१२१) कन्यञ् विधीयते।

## १०९। उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्।

शैवपुरम्। माहानगरमिति। शिवपुरमहानगरशब्दौ समासस्वरेणान्तोदात्तौ। माथुरमिति। मथुराशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। मध्यदेशग्रामस्तु। तेनाण्येव भवति। ध्वाजमिति। ध्वजीशब्दः पिप्पल्यादित्वान् ङीषन्तः। गौरादिषु हि पिप्पल्यादयः पठ्यन्ते। तेनासौ प्रत्ययस्वरेणान्तोदात्तः। उदीच्यग्रामश्च बह्वजन्तो भवति। धानशब्द उदात्त इति। गतिकारकोपपदादिति (६।२।१३९) धानशब्दस्य ल्युडन्तस्य प्रकृतिभावात्।

## ११०। प्रस्थोत्तरपदपलद्यादिकोपधादण्।

उदीच्यग्रामलक्षणस्याञोऽपवाद इति। प्रस्थोत्तरपदादीनामुदीच्यग्रामत्वात्। माद्रीप्रस्थः। माहकीप्रस्थ इति। अत्र प्रकृतिः समासस्वरेणान्तोदात्ता। अथोत्तरपदग्रहणं किमर्थम्? न प्रस्थान्तादित्येवोच्येत? नैवं शक्यम्। तदिहापि प्रसज्येत। उत्तमकर्णीप्रस्थः। तत्राप्युत्तरपदग्रहणान्न भवति। नह्यत्र प्रस्थशब्द उत्तरपदम्। किं तर्हि? कर्णीप्रस्थशब्दः। ततष्ठञ्ञिठयोरपवाद इति। वाहीकग्रामेभ्यश्चेति (४।२।११७) प्राप्तयोः। अथ वाहीकशब्दः किमर्थमिह पठ्यते? यावता कोपधत्वादेवाण् सिद्धः। अताह

वाह्नीकशब्द इत्यादि। यदि वाह्नीकशब्द इह न पठ्यते परत्वाद् वृद्धाच्छ इति (४।२।११४) च्छः स्यात्। कोपधस्य तु निलीक इत्यत्राद्वृद्धमवकाशः। तस्मात् परमपि च्छं बाधित्वा ऽण् यथा स्यादिति कोपधोऽपि वाह्नीकशब्दः पठ्यते। अथाण्ग्रहणं किमर्थम्? न यावता यथाविहितमेवोच्येत? न। पुनर्विधाना-दणेव भवतीति विज्ञायते। अपवादस्य विधाने पुनर्विधानमनर्थकमित्याह अण्ग्रहणमित्यादि। यदत्र वृद्धं वाह्नीकग्रामस्तस्मात् प्रागदीव्यतोऽ(४।१।८३)-णित्यतोऽणि प्राप्ते वृद्धाच्छः (४।२।११४) प्राप्नोति। तस्मिन् वाह्नीकग्रामेभ्यश्चेति (४।२।११७) ठञ्ञिठौ। तौ परत्वाद् बाधित्वा यद्यत्राण्ग्रहणं न क्रियेत तदा पुनर्विधानाच्छ एव स्यात्। अण्ग्रहणादणेव भवति। गोष्ठ्यां भवं गौष्ठमिति। तस्मात् बाधकमपि बाधित्वाणेव यथा स्यादित्येवमर्थमण्ग्रहणम्। कोपधग्रहणमिहाजनपदार्थम्। जनपदतदवधि(४।२।१२४)कोपधादणित्यनेन (४।२।१३२) सिद्धः। यक्लोमशब्दः पलद्यादिषु पठ्यते। तस्य नलोपो निपात्यते। अन्यथान्निति (६।४।१६७) प्रकृतिभावे सति यक्लोम्नि भवः याक्लोम इति न सिध्येत्।

## १११। कण्वादिभ्यो गोत्रे।

गोत्रग्रहणमिह न प्रत्ययार्थमिति। शेषाधिकारात्। यदि हि प्रत्ययार्थः स्याच् शेषाधिकारो बाध्येत। न प्रकृतिविशेषणम्। असम्भवात्। नहि कण्वादीनाम् परमप्रकृतिरूपाणामेव गोत्रार्थत्वं सम्भवति। तर्हि गोत्रग्रहणं सम्बध्येतेत्येवमर्थं वृच्छत्येवमित्यादिना प्रत्ययविधिविशेषणं गोत्रग्रहणमिति दर्शयित्वा तेन गोत्रप्रत्ययान्तेभ्यः कण्वादिभ्यो ऽण् भवतीति दर्शयति। छस्यापवाद इति। गोत्रप्रत्ययान्तानां कण्वादीनां वृद्धत्वात्। काण्वाः। गौकक्षा इति। कण्वगोकक्षशब्दाभ्यां गोत्रापत्ये गर्गादित्वाद् यञ्। तदन्तादण्। आपत्यस्येत्यादिना (६।४।१५१) यलोपः। काण्व इति। सास्य देवतेत्यण् (४।२।२४)।

## ११२। इञश्च।

दाक्ष्यादिभ्यो ऽत (४।१।९५) इञितीञन्तेभ्योऽण्। सौतङ्गमीयमिति।

सुतङ्गमेन निर्वृत्तमिति वुञ्छणित्यादिना (४।२।८०) सुतङ्गमशब्दाच्चातुरर्थिक इञ् ।

## ११३ । न द्व्यचः प्राच्यभरतेषु ।

पैङ्गीयाः । प्रौष्ठीया इति (F)। प्राच्यगोत्रोदाहरणम् । काशीयाः पाशीया इति । भरतगोत्रोदाहरणम् । कथमित्यादि चोद्यम् । नैतदस्तीति परिहारः । उभयञ्चैतत् तदुदाहरणम् । उभयञ्चैतदनुगतार्थम् । ननु च भरताः प्राच्या एव । ततः प्राच्यग्रहणेनैव तेषां ग्रहणं भविष्यति । तत् किमर्थं तेषां स्वशब्देनोपादानमित्यत आह ज्ञापकादन्यत्रेत्यादि । क्वान्यत्र । बह्वच इञः प्राच्यभरतेष्वित्यत्र (२।४।६६) ।

## ११४ । वृद्धाच्छः ।

अव्ययतीरेत्यादि । तत्राव्ययविधिं बाधते । आराद् भव आरातीयः । तीरोत्तर एव विधिस्तच्च । वायसतीरे भवो वायसतीरीयः । रूप्योत्तरपदात् तु च्छं बाधित्वा धन्वयोपधाद् वुञिति (४।२।१२१) योपधलक्षणो वुञ् भवति । मणिरूप्ये भवो माणिरूप्यक इति । उदीच्यग्रामविधिं बाधते । वाड्वाल्वे भवो वाड्वाल्वीयः । साड्लपुरे भवः साड्लपुरीयः । कोपधलक्षणम् । औदके भव औदकीयः । चौलुके भवश्चौलुकीयः । तेषां तु विधीनामवृद्धोऽवकाशः ।

## ११५ । भवतष्ठक्छसौ ।

सकारः पदसंज्ञार्थ इति । सिति चेति पदसंज्ञा (१।४।१६) यथा स्यात् । तस्याञ्च सत्यां भवदीयमित्यत्र झलाञ्जशोऽन्त इति (८।२।३९) जश्त्वं भवति । भावत्क इति । इसुसुक्तान्तात् कः (७।१।५१) । अवृद्धात्तु भवत इति । शत्रन्तादिति ।

## ११६ । काश्यादिभ्यष्ठञ्ञिठौ ।

काशिचेदिशब्दाभ्यां जनपदलक्षणे वुञि प्राप्ते साजातेरिञश्चेत्यणि

(F) These two examples do not occur in the printed काशिका ।

(४।२।११२) सांवाहादिभ्यो हृडाच्छे (४।२।११४) हस्तिकर्षूशब्दादोर्देशे ठञिति (४।२।११८) ठञि परिशिष्टेभ्यः प्राग्दीव्यतोऽणित्यणी-(४।१।८३)दमारभ्यते। कथं पुनर्ञकार एव विपर्य्यस्तदेशेऽनुबन्धे क्रियमाणे विशेष इत्यत आह स्त्रीप्रत्यये विशेष इति। अन्ते हि ञकारेऽनुबन्धे सति टिड्ढाणञिति ङीब् (४।१।१५) भवति। आदौ हि सति टाबेव भवति। हृद्धादित्यनुवर्त्तत इति। यद्येवमत्र ये हृद्धाः पठ्यन्ते तेभ्यः प्रत्ययो न प्राप्नोतीत्याह ये त्वहृद्धा इत्यादि। यदि तर्ह्यहृद्धेभ्योऽपि वचनप्रामाण्यात् प्रत्ययो भवति हृद्धादित्यस्यानुहृत्तिरपार्थिकेत्यत आह देवदत्तशब्द इत्यादि। देवदत्तशब्दस्य प्राग्देश एव हि वर्त्तमानेऽस्य हृद्धसंज्ञा। न वाहीकग्रामे। तत्र यदि हृद्धादिति नानुवर्त्तेत वाहीकग्रामवाचिनोऽपि ततष्ठञ्ञिठौ स्याताम्। तस्मात् तन्निहृत्त्यर्थं हृद्धाधिकारोऽर्थवान् भवतीति भावः। कथमित्यादिना हृद्धसंज्ञायां देवदत्तीया इति भाष्यकारस्योपन्यासे तदुदाहरणं विघटय्य तत्रैवं वर्णयन्तीत्यादिना समर्थयते। आपदादिपूर्वपदात् कालादिति। आपच्छब्द आदिर्येषां तान्यापदादीनि। तानि पूर्वपदं यस्य तदापदादिपूर्वपदम्। ततः कालाट् ठञ्ञिठौ भवतः। आदिशब्देनोर्द्ध्वादयः शब्दा गृह्यन्ते।

११७। वाहीकग्रामेभ्यश्च।

११८। विभाषोशीनरेषु।

११९। ओर्देशे ठञ्।

नैषादकर्षुकः। शावरजम्बुक इति। निषादकर्षूशवरजम्बूशब्दाभ्यां ठञ्। इसुसुक्तान्तात् कः (७।१।५१)। केऽण इति (७।४।१३) ह्रस्वः। ननु च ठञ् प्रकृत एव। स एवेहानुकृष्यते। तत् किं ठञ्ग्रहणेनेत्यत आह ठञ्ञिठयोरिति। यथैव हि ठञ् प्रकृत एवं ञिठोऽपि। तत्र द्वयोरपि प्रकरणे ठञ् चानुवर्त्तिष्यते नेतर इत्येतन्न लभ्यते। तस्माद् ञिठस्य निहृत्तये पुनष्ठञ्ग्रहणं कृतम्। ननु चास्वरितत्वादेव ञिठो नानुवर्त्तिष्यते। सत्यमेतत्। तदेवास्वरितत्वं ज्ञापयितुं ञिठस्य ठञ्ग्रहणं कृतम्। तच्चास्वरितत्वमाख्यायते मन्दबुद्धीनामनुग्रहाय।

## १२० । वृद्धात् प्राचाम् ।

आढ़कजम्बुक इति । पूर्ववत् कादेशो ह्रस्वत्वञ्च ।

## १२१ । धन्वयोपधाद् वुञ् ।

धन्वनोऽर्थस्य ग्रहणं न स्वरूपस्य । वृद्धाधिकारात् । नहि धन्वशब्दो वृद्धः । पारिधन्वनि जातः पारिधन्वकः । न स्तद्धितइति (६।४।१४४) टिलोपः । ऐरावते जात ऐरावतकः ।

## १२२ । प्रस्थपुरवहान्ताच्च ।

वृद्धादितेरवेति । यदि तर्हि वृद्धादित्यनुवर्त्तते वृद्धाधिकारादेव स्वरूपग्रहणाभावात् कथं तदन्तविधिर्भविष्यति । नहि प्रस्थादेः केवलस्य वृद्धत्वं सम्भवति । किं तर्हि ? तदन्तस्य । तत् किमन्तग्रहणेन ? मैवम् । सत्यपि वृद्धाधिकारे यथा धन्वेति वृद्धग्रहणं हि देशस्य विशेषणं तथेहापि स्यात् । तन्निवृत्त्यर्थमन्तग्रहणं कृतम् ।

## १२३ । रोपधेतोः प्राचाम् ।

ईकारान्तस्येति । कथं पुनर्ज्ञायते दीर्घस्येदं ग्रहणम् ? न ह्रस्वस्येति ? सामर्थ्यात् । प्राग्ग्रहणं हि देशस्य विशेषणम् । वृद्धादिति वर्त्तते । न च वृद्धमिकारान्तं प्राग्देशवाच्यस्ति । तस्माद् दीर्घस्येदं ग्रहणमिति विज्ञायते । एकचक्राशब्दस्य त्वेङ् प्राचामिति (१।१।७५) वृद्धसंज्ञा । अथ तपरकरणं किमर्थम् ? नेह किञ्चित् तस्य व्यावर्त्त्यमस्तीत्यत आह तपरकरणं विस्पष्टार्थम् । असति हि तस्मिन् रोपध इति स्थिते गुणे कृते विभक्तौ च रोपधयोरिति निर्देशः स्यात् । तत्रैवं सन्देहः स्यात् । किं रोपधस्येदं ग्रहणमुत रोपधस्येकारान्तस्येति । तपरकरणे तु सति सन्देहो न भवति । ईरोपधादिति नोक्तम् । वैचित्र्यार्थम् ।

## १२४ । जनपदतदवध्योश्च ।

तदवधेरपीत्यादि । जनपदतदवध्योश्चेत्यत्र तच्छब्देन सन्निहितत्वाज्जनपद एव परामृश्यते । न चायं षष्ठीसमासः । षष्ठीसमासे ह्यजनपदो-

ऽपि यो ऽवधिस्ततोऽपि वुञ् प्रसज्येत । छ एव तस्येष्यते । मौञ्जी नाम वाहीकानामवधिर्ग्रामः । तत्र भवो मौञ्जीय इति । तस्मात् समानाधिकरण एवायं समासः । स एव जनपदोऽवधिर्मर्य्यादा तदवधिरिति । तेन जनपदावधिरेव जनपदा एव गृह्यन्ते । न ग्रामः । किमर्थं तर्हि तदवधिग्रहणमिति । यदि तदवधिरपि जनपद एव गृह्यते निरर्थकं तर्हि तस्य ग्रहणम् । जनपदाच्चेत्येतावदेव वक्तव्यमित्यभिप्रायः । बाधकबाधनार्थमिति । गर्त्तोत्तरपदाद् वक्ष्यमाणश्छ (४।२।१३७) एव परत्वाद् विशेषविहितत्वाच्च बाधकः । तस्य बाधनार्थं तदवधिग्रहणम् । तेन हि त्रिगर्त्तेषु भव स्त्रैगर्त्तक इत्यत्रोत्तरसूत्रेण गर्त्तोत्तरपदाच्छं (४।२।१२६) बाधित्वा वुञेव भवति ।

## १२५ । अवृद्धादपि बहुवचनविषयात् ।

अणृछयोरपवाद इति । अवृद्धादणोऽपवादः । वृद्धाच्छस्य । अथ विषयग्रहणं किमर्थम् ? विनापि तेन विशेषो लभ्यत एव । कथम् ? इह जनपदतदवधिशब्दाभ्यां समानाधिकरणत्वाद् बहुवचनशब्दो न पारिभाषिको विज्ञायते । किं तर्हि ? अन्वर्थः । बहूनामर्थानां वचनो यो जनपदस्तदवधिश्चेति । यश्च बहूनामर्थानां वचनः सोऽर्थान् बहून् ब्रुवन् सामर्थ्यादेव बहुवचनविषयो भवतीत्याह विषयग्रहणमित्यादि । अनन्यत्रभावः कथं नाम लभ्यत इत्येवमर्थं विषयग्रहणम् । अनन्यत्रभावः किमर्थमिष्यत इत्याह जनपदैकदेशः क्रियते । वर्त्तनी च वर्त्तनी च वर्त्तनी च वर्त्तन्यः । तद् बहूनां वाचको भवति । ततश्च यदि विषयग्रहणं न क्रियते ततो वर्त्तनीषु भव इति वुञ् स्यात् । विषयग्रहणे तु सति न भवति । अनन्यत्रभावो विषयः । तेनैवं विज्ञायते । बहुवचनं न यो व्यभिचरतीति । यश्चैकशेषः स बहुवचनं व्यभिचरति । तस्य हि विवक्षाभावे बहुत्वात् । द्वयोरपि च कदाचिद्वृत्तेः । अपिग्रहणमिति । अपिग्रहणं हि वृद्धादपि यथा स्यादित्येवमर्थं क्रियते । वृद्धात् पूर्वेणैव सिद्धः प्रत्ययः । तत् किमपिग्रहणेन ? तक्रकौण्डिन्यन्यायेनेति । यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति सामान्येन प्राप्तस्य दधि दानस्य विशेषे वर्त्तमानेन तक्रदानेन बाधा क्रियते

तथेहापि बहुवचनविषये च सामान्येन प्रवृत्तस्य पूर्वयोगस्य बहुवचनविषये वर्त्तमानेनानेन योगेन बाधा विज्ञायते । तस्माद् वृद्धादपि यथा स्यादित्यपि-शब्देन समुच्चीयते ।

## १२६ । कच्छाग्निवक्त्रगर्त्तोत्तरपदात् ।

कच्छशब्दार्थमुत्तरपदग्रहणम् । स हि केवलोऽपि देशे वर्त्तते । इतरेषां तु केवलानां देशे वृत्त्यसम्भवात् सामर्थ्यादेव तदन्तविधिर्लभ्यत इतीतरान् प्रत्युत्तरपदग्रहणमनर्थकम् । कच्छाग्निवक्त्रगर्त्तान्तादिति नोक्तम् । बहुच्-पूर्वास्मा भूत् । यदा हि कच्छदेशेन देशान्तरस्य गुणसाम्ये सतीषदसमाप्तः कच्छदेश इति कच्छशब्दाद् बहुच् क्रियते तदा बहुकच्छशब्दो देशवचन इति । अन्तग्रहणे तु सति ततोऽपि प्रत्ययः स्यात् । उत्तरतपदग्रहणान्न भवति । दारुकच्छक इति । कच्छशब्दस्योत्तरपदस्य वृद्धस्योदाहरणम् । पैप्पली-कच्छक इत्यवृद्धस्योदाहरणम् । एवमग्न्याद्युत्तरपदानामपि । एकमवृद्धस्यो-दाहरणम् । अपरं वृद्धस्य वेदितव्यम् ।

## १२७ । धूमादिभ्यश्च ।

अणादेरपवाद इति । आदिशब्देन कच्छादीनां ग्रहणम् । तत्र देशवचना अवृद्धा ये धूमादयस्तेभ्योऽणोऽपवादः । ये तु वृद्धास्तेभ्यश्छस्य । य उदीच्य-ग्रामास्तेभ्योऽणः । ये वाहीकग्रामास्तेभ्य ठञ्ञिठयोः । तस्य योपधत्वादेव वुञि सिद्ध इति । धन्वयोपधाद्वुञित्यनेन (४।२।१२१) । जनपदलक्षणे वुञि सिद्ध इति । अवृद्धादपीत्यादिना (४।२।१२५) । कुलात् सौवीरेषु इति । कुल-शब्दाद् वुञ् भवति सौवीरेषु । कौलको भवति सौवीरश्चेत् । कौलोऽन्यत् ।

## १२८ । नगरात् कुत्सनप्रावीण्ययोः ।

नागरा ब्राह्मणा इति । अण् । ननु च नगर माहिष्मतीति नगरशब्दः कत्र्यादिषु पठ्यते । ततो ढकञा भवितव्यम् । तत् कथं नागरा इति प्रत्युदाह्रियत इत्याह कत्र्यादिष्वित्यादि । द्विविधो नगरशब्दः । जाति-वचनः संज्ञाशब्दश्च । तयोः कत्र्यादिषु माहिष्मतीशब्देन साहचर्यात् संज्ञाशब्दः

पद्यते। तत्र जातिशब्दान्नागरा इति प्रत्युदाहृतम्। संज्ञाशब्दे तु नागरेयक इति प्रत्युदाहर्त्तव्यम्।

१२९। अरण्यान् मनुष्ये।

औपसंख्यानिकस्य णस्यापवाद इति। अरण्याण्ण (४।२।१०४) इत्युपसंख्यानात् प्राप्तस्य। पथ्यध्यायन्यायेत्यादि। एषु पथ्यादिषु वुञ् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। धूमादिभ्य(४।२।१२७)-श्चेत्यतश्चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन पथ्यादिषु वुञ् भवति। वा गोमयेष्विति। गोमयेषु वाच्येषु वा वुञ् भवतीति। स तु तस्यैव चकारस्यानुक्तसमुच्चयार्थस्यानुवृत्तेर्वक्ष्यमाणस्य विभाषाग्रहणस्योभयोः शेषभूतत्वाल्लभ्यते। यदि तर्हि वक्ष्यमाणं विभाषाग्रहणमुभयोर्योगयोः शेषभूतं पथ्यादिष्वपि विकल्पेन विधिः स्यात्। नैष दोषः। व्यवस्थितविभाषा हि सा। तेन गोमयाद् विकल्पेन विधिर्भवति। पथ्यादिषु नित्यमिति।

१३०। विभाषा कुरुयुगन्धराभ्याम्।

सैषा युगन्धरार्था विभाषेति। न कुरुशब्दार्था। तत्र कच्छादिपाठाद् विनापि विभाषाग्रहणेनाणा भवितव्यम्। ननु युगन्धरशब्दादप्यणवृद्धादपि बहुवचनविषयादिति (४।२।१२५) नित्यएव वुञि प्राप्ते वचनमनित्यार्थं भविष्यति। नित्ये हि वुञि पुनरारम्भोऽनर्थकः स्यात्। तस्माद् युगन्धरार्थोऽपि विभाषा न प्रसज्येत। नैतत्। पुनरारम्भो विपर्य्ययेणापि शक्यते समर्थयितुम्। जनपदलक्षणो यो वुञ् स विभाषा। अयं तु नित्य इति। तस्मात् तु युगन्धरार्थं विभाषाग्रहणं कर्त्तव्यम्। मनुष्यतत्स्थयोस्तु कुरुशब्दान्नित्य एव वुञ् भवति। कच्छादिषु पाठसामर्थ्यात्। अन्यथानयैव विभाषया वुञणोः सिद्धत्वात् कच्छादिपाठोऽनर्थकः स्यात्। अनवकाशत्वात्।

१३१। मद्रवृज्योः कन्।

जनपदवुञोऽपवाद इति। अवृद्धादपीत्यादिप्राप्तस्य (४।२।१२५)। मद्रवृज्योः कन्निति घ्यन्तस्य परनिपातो द्वन्द्वे घीत्यस्य (२।२।३२) विधेरनित्यत्वज्ञापनार्थम्। तेन धूमाग्नी इतेरवमादि सिद्धं भवति।

## १३२ । कोपधादण् ।

जनपदवुञोरपवाद इति । पूर्ववत् प्राप्तस्य । किं पुनर्देशादन्यत्र वर्त्तमानो नेष्यते ? यो देशे न वर्त्तत इत्याह अन्यत्रेतरादि । पूर्वेणेति । प्रस्थोत्तरपदादिसूत्रेण (४।२।११०) । अथाण्ग्रहणं किमर्थम् । न कोपधाद् यथाविहितमेवोच्येत । यथाविहितमुच्यमानेऽणपवादो वुञ् स्यादिति चेत् ? न । वुञ् विधाने हि वचनमनर्थकं स्यात् । तेन विना वुञः सिद्धत्वात् । तस्माद् वचनसामर्थ्याद् विहितोऽणेव प्राप्नोति । अन्येन बाधित्वा अतएवाण् भविष्यतीति । स हि प्रागदीव्यतोऽणिति ( ४।१।८३ ) विहितो बाधितश्च वुञैवेत्यत आह अण्ग्रहणमित्यादि । इक्ष्वाकुषु जात इतीक्ष्वाकुशब्दादोर्देशे ठञ् (४।२।११९) प्राप्तः । तस्मिञ् जनपदवुञा बाधिते यदीहाण्ग्रहणं न क्रियते तदा पुनर्वचनाद् वुञेव भवति । अण् ग्रहणादणेव भवति । ऐक्ष्वाक इति । दाण्डिनायनहास्तिनायनेत्यादा—(६।४।१७४) विक्ष्वाकुशब्दस्योकारस्य लोपो निपातितः ।

## १३३ । कच्छादिभ्यश्च ।

वुञादेरपवाद इति । आदिशब्देन ठञः । तत्र ये जनपदबहुवचनविषया-स्तेभ्यो वुञः प्राप्तस्यापवादः । सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः (४।२।११९) । कच्छशब्दो न बहुवचनविषय इति । तेनाबृद्धादपीत्यादिना (४।२।१२५) बाधकस्य वुञोऽप्राप्तावेव सामान्येनाण् सिद्धएवेति दर्शयति । यद्येवं किमर्थं तस्य पाठ इत्याह तस्येत्यादि । उत्तरसूत्रेण वुञ् मनुष्यतत्स्थयोर्यथा स्यादित्येव-मर्थः । कच्छस्येह पाठो नत्वनर्थकः । कोपधादेवाण् सिद्ध इति । पूर्वसूत्रेणेति । इह ग्रहणमुत्तरार्थमिति । उत्तरसूत्रे वुञ् यथा स्यात् ।

## १३४ । मनुष्यतत्स्थयोर्वुञ् ।

## १३५ । अपदातौ साल्वात् ।

साल्व इति । कच्छादि पाठादण् ।

## १३६ । गोयवाग्वोश्च ।

## १३७। गर्त्तोत्तरपदाच्छः।

अवृद्धार्थं वचनम्। वृद्धात्तु वृद्धाच्छ (४।२।११४) इत्यनेनैव सिद्धमिति। सति तु वृद्धादपि परत्वादनेनैव भवितव्यम्। अणोऽपवाद इति। नाप्राप्ते तस्मिन्नस्यारम्भात्।.वाहीकग्रामलक्षणश्चेत्यादि। यद् गर्त्तोत्तरपदं वाहीकवाचि ततो वाहीकग्रामलक्षणौ ठञ्ञिठौ। बाधितत्वात् परत्वाच्छ एव भवति। तस्य गर्त्तोत्तरपदमवकाश इति। अथोत्तरपदग्रहणं किमर्थम्? न गर्त्तान्तादित्येवोच्येतेत्याह उत्तरपदग्रहणमित्यादि। यदि गर्त्तान्तादित्युच्येत तदा बहुगर्त्त इत्येतस्मादपि बहुचपूर्वात् स्यात्। भवति ह्येतद् गर्त्तान्तम्। उत्तरपदग्रहणे तु सति न भवति। नह्येतद् गर्त्तोत्तरपदम्। समासे हि सत्येतद् भवति पूर्वपदमुत्तरपदमिति।

## १३८। गहादिभ्यश्च।

अणादेरपवाद इति। आदिशब्देन वुञः। तत्र कामप्रस्थशब्दात् प्रस्थपुरवहान्ताच्चेति (४।२।१२२) प्राप्तस्य वुञोऽपवादः। शेषेभ्यस्त्वौत्सर्गिकस्याणः। सम्भवापेक्षं विशेषणमिति। सम्भवमपेक्षत इति सम्भवापेक्षम्। येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेवेदं विशेषणमिति। एतदुभयमपि विशेषणमेवाचार्य्यैः स्मर्य्यते। पृथिवीमध्यस्येत्यादिना तद्विशेषं दर्शयति। चरणसम्बन्धेनेत्यादि। चरणेनार्थेन सम्बन्धः चरणसम्बन्धः। तेन हेतुना कारणेन वाण् भवति। किंविशिष्टः? निवासलक्षणः। निवासो लक्षणं यस्य स तथोक्तः। कथं निवासलक्षणः? यः पृथिवीमध्ये निवासभूते वर्त्तमानान् मध्यशब्दाद् भवति स हि निवासेन लक्ष्यते। तदेतदुक्तं भवति पृथिवीमध्यनिवासोऽस्य चरणस्येति। यदायमर्थो विज्ञायते तदाण् भवति। नान्यत्रेति। तेन यदा पृथिवीमध्याद् गतं चरणमिति विवक्ष्यते तदा च्छ एव भवति मध्यमीय इति। कथं पुनः सामान्योक्तावेष विशेषो लभ्यत इति? सामान्याभिधानेऽपि विशेषोपस्थानदर्शनात्। घृतचरणवच्च स ह्यविशेषेणोपदिष्टो घृतादिष्वेवावतिष्ठते। तस्मात् सामान्योक्तावपि पृथिवीमध्य एव वर्त्तमानो मध्यशब्दो

मध्यमभावमापद्यते । चरणे च प्रत्ययार्थे निवासलक्षण एवाण् भवति । नहि सर्वेषु जातादिष्वर्थेषु । मुखपार्श्वतसोर्लोप इति । मुखपार्श्वशब्दयोस्तसस्तयोः प्रत्ययसन्नियोगेन लोपो भवति । स चालोऽन्त्यस्येति ( १।१।५२ ) वचनादन्त्यस्य लोपवचनम् । अव्ययानां भमात्रे टिलोप इत्यस्यानित्यत्वज्ञापनार्थम् । तेनारातीय इत्यत्र न भवति । मुखतीयम् । पार्श्वतीयम् । अपादाने चाहीयरुहोरिति (५।४।४५) मुखपार्श्वशब्दाभ्यां तसिः । आद्यादिभ्य उपसंख्यानमित्यौपसंख्यानिके (५।४।४४, वा) सकारस्य लोपे कृते ऽकारस्यापि यस्येति चेति ( ६।४।१४८ ) लोपः । देवस्य चेति वक्तव्यमिति । देवशब्दस्य कुग् भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । कुग्जनस्य परस्येत्यत्र चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन देवशब्दादपि भविष्यति ।

१३९ । प्राचां कटादेः ।

१४० । राज्ञः क च ।

१४१ । वृद्धादकेकान्तखोपधात् ।

कोपधलक्षणस्य चेत्यादि । अकेकान्तात् कोपधादणित्यणि (४।२।११०) प्राप्तेऽणोऽपवादः । कोपधादपि वाहीकग्रामलक्षणस्य ठञो ञिठस्य च । रोपधेतोः प्राचामिति । अकेकान्तग्रहणमिति । इह सूत्रे ऽकेकान्तग्रहणमपनीय कोपधग्रहणं कर्त्तव्यम् । कोपधादित्येवं वक्तव्यमित्यर्थः ।

१४२ । कन्थापलदनगरग्रामह्रदोत्तरपदात् ।

वाहीकग्रामलक्षणस्येति । ठञ्ञिठयोश्च । अन्तग्रहणेनैव सिद्धे सत्युत्तरपदग्रहणं वैचित्र्यार्थम् ।

१४३ । पर्वताच्च ।

१४४ । विभाषाऽमनुष्ये ।

पार्वतीयानि फलानीति । ननु चामनुष्यशब्दो रक्षःपिशाचादिष्वेव रूढः । तथाहि सभाराजाऽमनुष्यपूर्वेत्यत्रेह ( २।४।२३ ) कस्मान्न भवति काष्ठसभेति । तत्रेदमुक्तम् । अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव

वर्त्तत इति। तत् कथममनुष्य इत्युच्यमाने फलादिष्वभिधेयेषु भवति ? नैष दोषः। द्वौ ह्यमनुष्यशब्दौ। रूढो व्युत्पन्नश्च। तत्र सभाराजाऽमनुष्य-पूर्वेत्यत्र ( २।४।२३ ) रूढिशब्दस्य ग्रहणम्। इह त्वितरस्य मनुष्यादन्यत्र वर्त्तमानस्य।

१४५। कृकणपर्णाद् भारद्वाजे।

भारद्वाजशब्दोऽपि देशवचन एव। न गोत्रशब्द इति। देश एव भारद्वाजे कृकणपर्णशब्दद्वयस्य सम्भवात्।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य
द्वितीयः पादः समाप्तः ॥ ४।२ ॥

अथ

# काशिकाविवरणपञ्जिका।

## चतुर्थोऽध्यायः।

## तृतीयः पादः।

———:०:———

### १। युष्मदस्मदोरन्यतरस्यां खञ्च।

तत्र वैषम्याद् यथासंख्यं न भवतीति। द्वे हि प्रकृती। प्रत्ययाश्च त्रय इति वैषम्यम्। ननु च खञ्छावेवानेन विधीयेते। अण्प्रत्ययस्त्वन्यतरस्यां ग्रहणेन यथाप्राप्तस्याभ्यनुज्ञाने कृते शास्त्रादेव भवति। तत् कुतो वैषम्यम्? छोऽपि तर्हि तेनैवानेन विधीयते। तस्यापि हि चकारोऽभ्यनुज्ञापक एव। सोऽपि स्वशास्त्रादेव वृद्धाच्छ (४।२।११४) इत्येतस्माद् भवतीति। एवमपि वैषम्यम्। सर्वथा नास्ति यथासंख्यप्रसङ्गः।

### २। तस्मिन्नणि च युष्माकास्माकौ।

तस्मिन्निति साचाद् विहितः खञ् निर्दिश्यत इति। तस्मिन्नित्युक्ते प्रागेव तत्रैव प्रतीत्युत्पत्तेः। तत्र पुनः कारणं साक्षाद्विहितत्वम्। आनन्तर्याच्च खञः। तस्यैव निर्देशो युक्तः। ननु च पूर्वसूत्रे खञ्चेति चकारेण च्छोऽनुकृष्यते। वाचकदेशश्च वाच्य इति। खञश्छ एवानन्तरो भवति। स्यादनन्तरो यदि चकारस्तस्य वाचकः स्यात्। नचासौ तस्य वाचकः। स हि समीपवर्त्तिनः पदार्थान्तरस्य सहायतामात्रमाचष्टे। खञः सहायता माख्याय निवृत्ते चकारे सा सहायता प्रकरणाच्छेनैव विज्ञायते। तस्माच् चकार स्तस्य वाचको न भवतीति नासौ तादृशः। तत्कृतयोस्तस्यामन्तर्य-

निमित्तयोरित्यादि। द्वे हि निमित्ते खञणौ। निमित्तिनावपि द्वावेवा-देशौ। ततः समानत्वाद् यथासंख्येनात्र भवितव्यमिति मन्यमानस्य प्रश्नः। योगविभाग इत्यादि परिहारः। युष्मदीयः। अस्मदीय इति। यदि तस्मिन्नणि चेति नोच्यते ततो यथा पूर्वसूत्रविहितयोः खञणोरिमावादेशौ भवतस्तथा छेऽपि स्याताम्। तस्मिंस्तु सति न भवतः।

## ३। तवकममकावेकवचने।

पूर्वेण युष्माकास्माकयोः प्राप्तयोः प्रत्ययोत्तरपदयोश्चेति (७।२।९८) त्वमयोरेकवचने तवकममकावादेशौ विधीयेते। एकवचनपरयोरिति। एक-वचनं परं याभ्यां ते तथोक्ते। निमित्तयोस्त्वित्यादि। यथा पूर्व एव सूत्रे योगविभागान्निमित्तयोरादेशौ प्रति यथासंख्यत्वं न भवति तथेहापि न भविष्यति। तस्य च यथासंख्याभावस्य पूर्वसूत्रएव योगविभागो हेतुः। तेन हि पूर्वत्र निमित्ते निवृत्ते यथासंख्ये कृते तस्मादिहाप्यनुवर्त्तेते। ते निवृत्ते यथासंख्ये एवानुवर्त्तेते। अजहद्धर्मत्वादधिकाराणाम्। तस्मादि-हापि पूर्वकयोगविभागाद् यथासंख्याभावः। इह सर्वविधिभ्यो लुग्विधिर्बल-वानितिऽएकवचनस्य लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलोपलक्षणेन समर्थयितव्या। तदपि प्रत्ययलोपलक्षणं प्रतिषेधयितु माह ननु चेत्यादि। वचनादित्यादि परिहारः। यदि हि प्रत्ययलोप-लक्षणं न स्यादिदं वचनमपार्थकं स्यादित्यभिप्रायः। ननु च यस्यैकवचन-परता सम्भवति तस्य विशेषणार्थमेकवचनं स्यात्। कस्यैकवचनपरता सम्भ-वति ? निमित्तस्य खञादेः। निमित्ते त्वेकवचनपरत्वेन विशेष्यमाणे सतीहैव स्यातां यौष्माकः पुत्त्र आस्माकः पुत्रः। अत्र ह्येकवचनपरत्वं तद्धि तस्योप-पद्यते। इह च न स्यातां तावकाः पुत्रा मामकाः पुत्रा इति। नह्यत्र निमित्तस्यैकवचनपरता सम्भवतीति। नैतदस्ति। युष्मदस्मदी पूर्वसूत्रे विशेष्ये अभूताम्। तथाहि खञणि च परतो युष्मदस्मदोरिति खञण्परता तयोः। अतएव युष्मदस्मदी विशेष्येते। तदिहापि तथाभूते एवानुवर्त्तेते। अजहद्धर्म-त्वादधिकाराणामिति। तयोरेवैकवचनपरत्वं विशेषणं युक्तम्। अथवा तवक-

ममकयोर्विधेयत्वेन प्राधान्यात् तयोरेवैतद् विशेषणं युक्तम्। तयोरेव तद् विशेषणं भवत् स्थानिद्वारकमेव भवति। यदि स्थानिनोरेकवचनपरत्वेव-मादेशौ स्थानिवत्त्वादेकवचनपरौ भवतः। तदनेनापि प्रकारेण युष्मदस्मदो-रेकवचनविशेषणं युक्तम्। ननु कथञ्चिन्निमित्तस्य खञादेः। अथवेत्यादि। पूर्वं पारिभाषिकमेकवचनमाश्रित्य व्याख्यातम्। इदानीमन्वर्थमाश्रित्य व्याचष्टे। एकोऽर्थउच्यते येन तदेकवचनम्। अत्र तु व्याख्यान एकवचने इति नेदं सप्तम्येकवचनम्। किं तर्हि ? प्रथमाद्विवचनान्तम्।

## ४। अर्धाद् यत्।

## ५। परावराधमोत्तमपूर्वाच्च।

ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति तदन्तविधिप्रतिषेधात् पूर्वेणाप्राप्तावयमारम्भः। तत्राधमोत्तमशब्दौ निन्दाप्रशंसावचनौ। तत्-पूर्वादणि प्राप्ते सत्ययमारम्भः। परावरशब्दौ यावदिक्छब्दौ तत्पूर्वादप्यण्येव। यौ तु दिक्शब्दौ तत्पूर्वादुत्तरसूत्रेण ठञि यति च। कथं पुनः परावराध-मोत्तमेभ्य इत्युच्यमाने परावरादिपूर्वता शक्या विज्ञातुमित्याह अर्धादिति-वर्त्तत इत्यादि। इह हि पूर्वसूत्रादर्धादित्यनुवर्त्तते। तत्र परावराधमोत्त-मेभ्यःपरो योऽर्धशब्द इत्येवं विशेष्यमाणेऽर्धशब्दसामर्थ्यादेव तस्य परावरादि-पूर्वता विज्ञास्यते। तत् किं पूर्वग्रहणेन ? तत्रेति। परावरयोरदिक्शब्दयोः परेणेति। उत्तरसूत्रेण ठञ्यतौ स्यातामिति। यदि पूर्वग्रहणं न क्रियेते-त्यभिप्रायः। अस्मादित्यादि। परावरादिपूर्वादेव यथा स्यादित्येतदेव हि पूर्वग्रहणस्य प्रयोजनम्। तेन हि पूर्वं कार्यं भवति। न परमित्येषोऽर्थः सूच्यते। तस्मात् पूर्वग्रहणाद् दिक्शब्दपक्षेऽपि परावरपूर्वाद् यदेव भवति।

## ६। दिक्पूर्वपदाट् ठञ्च।

पौर्वार्धिकमिति। पूर्वस्मिन्नर्धे जातः। तद्धितार्थ इत्यादिना (२।१।५१) समासः। ततस्तद्धितः। अथ पदग्रहणं किमर्थम् ? दिक्पूर्वादित्येवोच्येतेत्याह पदग्रहणमित्यादि। असति हि पदग्रहणे स्वरूपविधिः स्यात्। ततश्च दिगर्धे

जात इत्यत्रैव स्यात्। पदग्रहणे तु सति यन्नाम किञ्चिद् दिक्सम्बन्धि पूर्वपदं तस्य ग्रहणमुपपन्नं भवति।

## ७। ग्रामजनपदैकदेशादञ्ठञौ।

यतोऽपवादाविति। पूर्वेण प्राप्तस्य। पौर्वार्द्धा इति। पूर्ववत् समासः। नन्वत्र पूर्व्वस्मिन्नर्द्धे ग्रामस्येति ग्राममपेक्षमाणस्यार्द्धशब्दस्यासामर्थ्यात् समासो नोपपद्यते। नैष दोषः। प्रधानमत्रार्द्धं भवति। प्रधानस्य सापेक्षस्यापि समास इत्येतदुपमितं व्याघ्रादिभिः सामान्याप्रयोग (२।१।५६) इत्यत्र ज्ञापितम्।

## ८। मध्यान्मः।

मध्यशब्दो यो गहादिषु पृथिवीमध्यवचनो मध्यमध्यमञ्चाण् चरण इति पठ्यते ततस्तु तत एव विधिर्भवति। यस्त्वन्यस्तस्येह ग्रहणं वेदितव्यम्।

## ९। अ साम्प्रतिके।

न्याय्यं युक्तमित्यादिभिः पर्य्यायैः साम्प्रतिकशब्दार्थमाचष्टे। साम्प्रतिकं न्याय्यमुच्यते। तथाहि प्रयोगो दृश्यते न वाच्यं प्राप्तमित्येवं वर्त्तितव्यमसाम्प्रतमिति। अत्र न्याय्यः प्रतिषेधः प्रतीयते। साम्प्रतमेव साम्प्रतिकम्। विनयादेराकृतिगणत्वाद्विनयादिभ्यश्चेति (५।४।३४) ठक्।

## १०। द्वीपादनुसमुद्रं यञ्।

अनुसमुद्रमिति। समुद्रं समयाऽनुसमुद्रम्। अनुर्यत्समयेत्यव्ययीभावः (२।१।१०)। अणो मनुष्यवुञश्चापवाद इति। कच्छादिभ्यश्चेति (४।२।१३३) प्राप्तस्याणः। मनुष्यतत्स्थयोर्वुञिति (४।२।१०४) प्राप्तस्य वुञः।

## ११। कालाट्ठञ्।

कालविशेषवाचिन इति। अनेन कालादित्यर्थग्रहणम्। न स्वरूपस्येति। यदि हि स्वरूपग्रहणं स्यात् सन्धिवेलादिसूत्रेणाणो (४।३।१६) विधानमनर्थकं स्यात्। प्राग्दीव्यतोऽणित्यनेनैव (४।१।८३) सिद्धत्वात्। इह त्वर्थग्रहणे ठञ्बाधनार्थत्वात् तस्यानर्थक्यं भवति। तस्मादर्थग्रहणमेतत्। इह केचिच्छब्दा

मुख्यया वृत्त्या काले वर्त्तन्ते मासोऽर्द्धमास इति । केचिद् गौण्या वृत्त्या । कदम्बपुष्पसाहचर्य्यात् कालः कदम्बपुष्पः । व्रीहिपलालेन साहचर्य्यात् कालो व्रीहिपलाल इति । तेषामिहोभयेषामपि ग्रहणम् । अत एवाह यथा कथञ्चिदिति । येन केनचित् प्रकारेणेत्यर्थः । गुणवृत्त्यापीति । अनेन यथा कथञ्चिदित्यस्यार्थं विस्पष्टीकरोति । औपचारिकी वृत्तिरप्रधानभूता वृत्तिरित्यर्थः । अपिशब्दान्मुख्ययापि वृत्त्या । ननु च मुख्ये सति गौणस्य ग्रहणमयुक्तम् । गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्ययात् । नैष दोषः । आचार्य्यप्रवृत्तिर्ज्ञापयति गौणस्यापि कालस्य ग्रहणमिति । यदयं सन्धिवेलादिसूत्रे (४।३।१६) प्रकृतेन कालग्रहणेन नक्षत्राणि विशिनष्टि । नहि मुख्यार्थः कालो नक्षत्राणां विशेषणमुपपद्यते । तेषु मुख्यस्य कालत्वस्यासम्भवात् ।

## १२ । श्राद्धे शरदः ।

ऋत्वणोऽपवाद इति । सन्धिवेलादिसूत्रेण (४।३।१६) प्राप्तस्य । श्राद्ध इति न कर्म गृह्यत इति । क्रियाविशेषः कश्चित् शास्त्रोक्तेन विधिना साध्यः श्राद्धग्रहणेन गृह्यते । नतु श्रद्धावान् पुरुषः । कुत एतत् ? तस्य प्रत्ययेनानभिधानात् । शारदिकशब्देन ह्यभिधानशक्तिस्वाभाव्यात् कर्मण एवाभिधानम् । न पुरुषस्य ।

## १३ । विभाषा रोगातपयोः ।

## १४ । निशाप्रदोषाभ्याञ्च ।

## १५ । श्वसस्तुट् च ।

तस्य वेति । ठञः । कुत एतत् ? तस्य विधीयमानतया प्राधान्यात् । प्रधाने च कार्य्यसंप्रत्ययात् । स च तुडागम इकादेशे कृते भवतीति वेदितव्यम् । ननु सन्नियोगशिष्टत्वात् तुटस्तेनैव तावद् भवितव्यम् । पश्चादङ्गसंज्ञायामभिनिर्वृत्तायामिकादेशेन । नैतदस्ति । उपदेशावस्थायामेव हीकादेशे कृते न भवितव्यम् । ज्ञापकात् । यदयं वुञ्छण्कठजिति (४।२।८०) प्रत्ययस्वरार्थमनुबन्धं चकारं करोति । प्रत्ययसंज्ञायाः सन्नियोगाद्धि प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वम् । किं चित्करणेन ? तस्माच्चित्

करणाद् विज्ञायते सन्नियोगशिष्टेभ्योऽपि पूर्व्वमिकादेशो भवति। तेन ठग्-ग्रहणान्यङ्गसंज्ञाभूतानीकमेव बोधयन्तीति तुडपि तस्यैव भविष्यतीति विज्ञायते। एताभ्यामित्यादि। श्वःशब्दोऽयमव्ययं कालवाची। तेन यदा ठञ्त्यपौ न भवत स्तदा सायश्चिरमित्यादिना ट्युट्युलौ (४।३।२३) अपि भवतः।

१६। सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्।

ठञोऽपवाद इति। कालाट्ठञिति (४।३।११) प्राप्तस्य। अथाण्ग्रहणं किमर्थम्? यथाविहितमेवोच्येत। तेनैवमुच्यमाने न प्राप्नोतीत्याशङ्कनीयम्। यदि ठञ् स्यात् पुनर्वचनमनर्थकं स्यात्। तस्माद् वचनप्रामाण्याद् यो विहितो न स प्राप्नोति। ठञ् प्रत्ययेन बाधितत्वात् स एव भविष्यति। स चाण् चेत्यत आह अण्ग्रहणमित्यादि। सन्धिवेलादिषु पौर्णमासीशब्दो वृद्धः पठ्यते। स्वातिरिति नक्षत्रशब्दो वृद्धोऽस्ति। तत्र यद्यण्ग्रहणं न क्रियेत ताभ्यां परत्वाट् ठञा छे बाधिते पुनर्वचनाच्छ एव स्यात्। तस्मात् तमपि बाधित्वा वृद्धादण्णेव यथा स्यादित्येवमर्थं पुनरण्ग्रहणम्। तैषम्। पौषमिति। तिष्यपुष्यशब्दाभ्यां नक्षत्रेण युक्तःकाल (४।२।३) इत्यण्। तस्याणो लुबविशेष इति (४।२।४) लुप्। ततोऽनेनाण्। तिष्यपुष्ययोर्नक्षत्राणीति (६।४।१४८ वा) यलोपः। संवत्सरफलपर्वणोरिति। संवत्सरशब्दादण् भवति फले पर्वणि चाभिधेये। सांवत्सरं फलम्। सांवत्सरं पर्व वा। सांवत्सरिकमन्यत्।

१७। प्रावृष एण्यः।

अथ किमर्थं प्रत्यये मूर्धन्यः पठ्यते। न रषाभ्यामित्यनेनैव (८।४।१) णत्वं भविष्यति? नैवं शक्यम्। इह हि न स्यात्। प्रावृषेण्येति। (A) पदान्तत्वात्।

१८। वर्षाभ्यष्ठक्।

अथ किमर्थं ठग्विधानम्? कालाट् ठञेव (४।३।११) सिद्धत्वात्।

(A) प्रावृषेण्यमाचष्टे प्रावृषेण्ययति। ततः क्विप्। णिलोपः (६।४।५१)। लोपो व्यो र्वलीति (६।१।६६) यलोपः। प्रावृषेण्।

उभयत्रापि तदेव रूपमिति । नैवम् । ठकि सति प्रत्ययस्वरेणान्तोदात्तत्वं स्यात् । ठञि तु सति ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम् (६।१।१९७) ।

१९ । छन्दसि ठञ् ।

२० । वसन्ताच्च ।

२१ । हेमन्ताच्च ।

योगविभाग उत्तरार्थ इति । सर्वत्राण् च तलोपश्चेति (४।३।२२) वक्ष्यति । स हेमन्तशब्दस्यैव यथा स्यात् । वसन्तस्य मा भूत् । यदि हेमन्तवसन्ताभ्यामित्येकयोगः क्रियेत ततो वसन्तस्यापि स्यात् । तस्य ह्युत्तरत्रानुवृत्तेः ।

२२ । सर्वत्राण् च तलोपश्च ।

छन्दसि पूर्व्वेण ठञि प्राप्ते भाषायामपि ऋत्वणि चैतदुच्यते । सर्व्वत्र ग्रहणमित्यादिना सर्वत्रग्रहणस्य प्रयोजनमाचष्टे । छन्दसि भाषायाञ्चेत्यादिना छन्दोऽधिकारनिवृत्तेः फलं दर्शयति । ननुचेत्यादि । अस्वरितत्वादेव च्छन्दसीति नानुवर्त्तिष्यते । ततो नार्थश्छन्दोऽधिकारनिवृत्त्यर्थेन सर्वत्रग्रहणेनेत्यभिप्रायः । सैवेत्यादिना यासावस्वरितत्वादननुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते । किमर्थमित्याह प्रयत्नाधिक्येनेत्यादि । प्रयत्नाधिक्यमेतदेव शब्देनाख्यातम् । तेन हेतुना पूर्वसूत्रेऽपि सर्वत्रशब्दस्य सम्बन्धो यथा स्यादितेऽयमर्थः शब्देनाख्यायते । कस्मात् पुनः पूर्वसूत्रेऽपि सर्वत्रग्रहणस्य सम्बन्ध इष्यत इत्याह हैमन्तिकमिति हीत्यादि । हिशब्दो हेतौ । आचार्य्या हि हैमन्तिकमिति भाषायां ठञं स्मरन्ति । स चैवं भाषायामपि सिध्यति । यदि पूर्वसूत्रेऽपि सर्वत्रग्रहणस्य सम्बन्धो भवति तत्र हि सति पूर्वसूत्रस्यायमर्थो भवति। हेमन्ताच्च सर्वत्र च्छन्दसि भाषायामपि ठञ् भवतीति । कः पुनरनयोरण्ठञोर्विशेष इति ? न कश्चिदिति भावः । ऋत्वणि हीत्यादिना विशेषं दर्शयति । हैमन्तीति । टिड्ढाणञिति (४।१।१५) ङीप् । तदेवमित्यादि । यत एव पूर्वसूत्रेण ठञ् भवत्यनेनाण् तलोपसहितस्तेन त्रीणि रूपाणि भवन्ति ।

२३ । सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।

कालाट् ठञिति (४।३।११) ठञि प्राप्ते सायमादिभ्यष्ट्युट्युलौ विधीयेते ।

तयोश्च तुडागमः। ठञपवादत्वाच्च ट्युट्युलौः। ठञैव च्छस्य बाधितत्वादेताभ्यां पुनश्छस्य संप्रधारणैव नास्ति। तेन ह्यसादपि ट्युट्युलावेव भवतः प्राक्तनमिति। तयोश्चेत्यादि। यद्यनादिष्टयोस्तुट् स्यात् तदा युरूपौ प्रत्ययौ न भवत इत्यनादेशो न स्यात्। तस्मादादिष्टयोस्तयोः क्रतादेशयोस्तुडागमः। एतच्च घकालतनेषु कालनाम्न इति (६।३।१७) निर्देशाल्लभ्यते। न ह्यनादिष्टयोस्तुड्-विधानेन तनशब्द उपपद्यते। अथ प्रत्यययोष्टित्करणं किमर्थम्? न तुट एव टित्त्वेन प्रत्यययोरपि टित्त्वं विज्ञास्यत इति। यतस्तद्ग्रहणेन ग्रहणादागमानाम्। नैतदस्ति। युक्तं यत् प्रत्ययधर्मा आगमे भवन्ति तस्य प्रत्ययभक्तत्वात्। न त्वागमधर्माः प्रत्यये। तस्माट्टित्कार्य्यार्थं प्रत्यययोरपि टित्त्वमासज्यते। स्यतेरन्तकर्मण इति। षोऽन्तकर्मणीत्यस्य। प्राह्णे प्रगे इत्येकारान्तत्वमिति। निपात्यत इति सम्बन्धः। ननु च घकालतनेषु कालनाम्न इति (६।३।१७) सप्तम्या अलुकैव सिद्धम्। तदपार्थकं निपातनम्। यत्र तर्हि सप्तम्यर्थो नास्ति तदर्थं निपातनम्। प्राह्णः सोढोऽस्य प्राह्णेतनः। प्रगः सोढोऽस्य प्रगेतन इति। अत्र हि तदस्य सोढमिति (४।३।५२) प्रथमासमर्थात् प्रत्ययविधानात् सप्तम्यर्थो नास्ति। तदभावात् सप्तम्यपि नास्त्येव। चिरपरुत्परारिभ्यस्त्नो वक्तव्य इति। व्याख्येय इत्यर्थः। व्याख्यानन्तु तद्धिता (४।१।७६) इत्यत्रैव क्रतम्। एवमुत्तरत्रापि वेदितव्यम्। चिरशब्दस्य सूत्रे चोपादानाट् ट्युट्युलावपि भवतः। प्रगस्य च्छन्दसि गलोपश्चेति वक्तव्य इति सम्बन्धः। वक्तव्यशब्दस्य स एवार्थः। व्याख्यानात् त्विहापि प्रत्नपूर्वविश्वेमात् थाल् (५।३।१११) च्छन्दसीति निपातनमाश्रित्य कर्त्तव्यम्। अग्राच्चेति वक्तव्यम्। अग्रशब्दाड्डिमज् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु क्रतमेव। डिमचो डित्करणं पश्चादित्यस्य टिलोपार्थम्। ननु चाव्ययानां भमात्रे टिलोपो वक्तव्य इत्यनेनैव (६।४।१४४, वा) सिद्धम्। न सिध्यति। अनित्यत्वात् तस्य। यथारातीय इत्यत्र न भवति तथेहापि न भवतीति कस्यचिद् भ्रान्तिः स्यात्। अतस्तन्निरासार्थं डित्करणम्।

## २४। विभाषा पूर्वाह्णापराह्णाभ्याम्।

पूर्वाह्णेतन इति। अह्नः पूर्वो भाग इति पूर्वादि (२।२।१) सूत्रेणैकदेशि-

समासः । राजाहःसखिभ्यष्टजिति (५।४।९१) टच् समासान्तः । अह्नोऽह्न एतेभ्य इत्यह्नादेशः (६।४।८८) । अह्नोऽदन्तादिति (८।४।७) णत्वम् । यदाऽसप्तम्यन्तात् प्रत्ययस्तदा पूर्वाह्णतन इति भवितव्यमिति । सप्तम्यभावात् । सप्तम्यभावस्तु प्रथमासमर्थात् तद्धितोत्पत्तेः ।

## २५ । तत्र जातः ।

अणादयो घादयश्चेति । एकेनादिशब्देनाणादीनामिहोत्सर्गाणां ग्रहणम् । द्वितीयेन घादीनां शेषाधिकारविहितानाम् । स्रौघ्नः । माथुर इति । प्राग्दीव्यतोऽण् (४।१।८३) । औत्सः । औदपान इति । उत्सादिभ्योऽञ् (४।१।८६) । राष्ट्रियः । अवारपारीण इति । राष्ट्रावारपाराद् घखौ (४।२।९३) । शाकलिकः । माकलिक इति । वाहीकग्रामेभ्यश्चेति (४।२।११७) ठञ्ञिठौ कात्त्रेयक औम्भेयक इति । कत्त्र्यादिभ्यो ढकञ् (४।१।९५) ।

## २६ । प्रावृषष्ठप् ।

एण्यस्यापवाद इति । प्रावृष एण्य इत्यनेन (४।३।१७) प्राप्तस्य ।

## २७ । संज्ञायां शरदो वुञ् ।

समुदायेन चेत् संज्ञा गम्यत इति । अनेन समुदायोपाधित्वं संज्ञाया दर्शयति । प्रकृतिप्रत्ययसमुदायेन चेत् संज्ञा गम्यत इत्यर्थः । यद्येवं शारदका दर्भा इति दर्भशब्दस्य प्रयोगो न प्राप्नोति । प्रत्ययान्तेनाभिहितत्वात् । नैष दोषः । यथैव हि शारदकशब्दो दर्भविशेषस्य नामधेयं तथा मुद्गविशेषस्यापि । तत्रासति दर्भशब्दप्रयोगे ऽनेकार्थसाधारणत्वात् कस्य नामधेयमिति सन्देहः स्यात् कोऽर्थः शारदकशब्देन विवक्षित इति । तस्मादसन्देहार्थो दर्भशब्द उपादीयते । संज्ञाधिकारमित्यादि । केचिदिति वचनात् केचिन्नानुवर्त्तयन्तीत्युक्तं भवति ।

## २८ । पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन् ।

पूर्वाह्णकः । अपराह्णक इति । पूर्ववदेकदेशिसमासादिकं कार्य्यं विधेयम् । विभाषा पूर्वाह्णापराह्णाभ्यामिति (४।३।२४) । तत्र ट्युट्युल्विधिश्च । आर्द्रकः ।

मूलक इति। नक्षत्रेण युक्तः काल (४।२।३) इत्यागतस्याणो लुबविशेष इति लुप् (४।२।४)। ततो वुन्। निशाप्रदोषाभ्यामिति। ठञ् विधेः। ठञादय एवेति। आदिशब्देन ट्युट्युलादयो गृह्यन्ते।

३९। पथः पन्थ च।

३०। अमावास्याया वा।

एकदेशविकृतस्येत्यादि। अमावस्यदन्यतरस्यामित्यत्र (३।१।१२२) ह्रस्वइत्त्विरेव निपात्यते। अवृद्धिस्तु वृद्धेरेकादेशभूततया विकारो भवतीत्येकदेशविकृतत्व ममावस्याशब्दस्योपपद्यते। ये तु सन्धिवेलादिषु ह्रस्वोपधमधीयते तेषां वृद्ध्युपधस्य ग्रहणं न प्राप्नोति। नहि विकृतिः प्रकृतिं गृह्णाति। तस्माद् दीर्घ एव पाठो युक्तः।

३१। अ च।

अथ योगविभागः किमर्थः? नामावास्याया अ च वेत्येवोच्येत। चकारो वुनोऽनुकर्षणार्थो भविष्यति। वावचनञ्चोभयोर्विकल्पार्थम्। तेन ताभ्यां मुक्तेऽणपि भविष्यति। अस्त्येतत्। किन्त्वेकयोगे सति सिन्धुपकराभ्यां कन्निति (४।३।३२) कन्नेव विकल्पेन भवतीति कस्यचिद् भ्रान्तिः स्यात्। अतस्तन्निवृत्त्यर्थं योगविभागः। योगविभागे हि सति व्यवधानतया विकल्पस्य कन् नितरां विज्ञायते।

३२। सिन्धुपकराभ्यां कन्।

अपकरशब्दादौत्सर्गिकेऽणीति। प्राप्ते विधानमिति सम्बन्धः।

३३। अणञौ च।

यथासंख्यार्थो योगविभागः। यदि सिन्धुपकराभ्याञ्च कनणञ इत्येकयोगः क्रियेत ततो वैषम्यादेकस्याः प्रकृतेः प्रत्ययास्त्रयःस्युः।

## ३४ । श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढ़ाबहुलाल्लुक् । (B)

नक्षत्राणः श्रवणे प्राप्ते लुगुच्यते । ननु च नक्षत्रेभ्यो बहुलमित्यनेनैव (४।३।३७) लुग् भविष्यति । सत्यमेतत् । तस्यैवायं प्रपञ्चः । उत्तरावपि योगौ प्रपञ्चौ तस्यैव वेदितव्यौ । श्रविष्ठादयश्चेति नक्षत्रेण युक्तः काल (४।२।३) इत्यनेनागतस्याणो लुबविशेष इति (४।२।४) कृते लुबन्ता वेदितव्याः । स्त्रीप्रत्ययस्यापि लुक् तद्धितलुकीति (१।२।४९) लुग् भवतीति ये स्त्रीप्रत्ययान्तास्तेषामुपसंख्यानमिति प्रतिपादनमित्यर्थः । तच्चोपरिष्टात् करिष्यते । चित्रायाष्टापो लुकि कृते पुनष्टाप् क्रियते । गौरादित्वात् ङीषिति । रेवतीरोहिण्योत्यत्र । फल्गुन्यषाढ़ाभ्यां टानौ वक्तव्याविति । स्त्रियामित्यपेक्षते । तयोस्तु विधानसामर्थ्यान्न लुग् भवति । टस्य टकारो ङीबर्थः । अनो नकार आद्युदात्तार्थः । वक्तव्यशब्दो व्याख्येये वर्त्तते । व्याख्यानन्तु कृतमेव च । श्रविष्ठाषाढ़ाभ्यां छणपि वक्तव्य इति । अत्र स्त्रियामिति नोपपद्यते । णकारो वृद्ध्यर्थः । वक्तव्यशब्दस्य स एवार्थः । व्याख्यानमपि करिष्यते च । कृतमेव ।

## ३५ । स्थानान्तगोशालखरशालाच्च ।

गोशालखरशालयो र्ह्रस्वान्तयोः पाठान्नपुंसकयोर्ग्रहणं विज्ञायते । नपुंसकलिङ्गता तु विभाषा सेनासुरेत्यादिना (२।४।२५) । यद्यपि नपुंसकयोर्ग्रहणं तथापि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भविष्यतीति स्त्रीलिङ्गाभ्यामपि लुग् भवत्येव । उदाहरणेऽप्यौत्सर्गिकस्याणो लुक् ।

## ३६ । वत्सशालाभिजिदश्वयुक्शतभिषजो वा ।

वत्सशालशब्दो नपुंसकलिङ्गो गृह्यते । कुत एतत् । व्याप्तेर्न्यायात् । नपुंसकलिङ्गस्य हि ग्रहणे लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि लुग् न सिध्यति । नतु स्त्रीलिङ्गस्य ग्रहणे नपुंसकात् । बहुलग्रहणस्यायं प्रपञ्च

(B) कृत्तिकापर्य्यायो बहुलाशब्दः । अत्र द्वन्द्वैकवद्भावेन निर्देशः ।

इति । वत्समालशब्दो यद्यपि नक्षत्रवचनो न भवति तथापि बहुलवचनात् ततोऽपि लुग् भविष्यतीत्यभिप्रायः ।

## ३७ । नक्षत्रेभ्यो बहुलम् ।

रोहिणे इत्यादौ नक्षत्राणः पक्षे लुक् । मृगशिरा इति । अत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घः । मार्गशीर्षे इति । ये च तद्धिते (६।१।६१) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाच् शिरसः शीर्षभावः । अथ बहुलग्रहणं किमर्थम् ? न पूर्वसूत्रादेव वाग्रहणमनुवर्त्तिष्यते । इदं प्रयोजनम् । न क्वचिदन्यदेव यथा स्यात् । तेन फल्गुन्यषाढ़ाभ्यां टानौ सिद्धौ भवतः । श्रविष्ठा-षाढ़ाभ्याञ्छाणपीति ।

## ३८ । कृतलब्धक्रीतकुशलाः ।

ननु चेत्यादि । जन्मवदस्तु जातशब्दस्यार्थः । कृतस्यापि जन्मास्त्येव । तस्माद् यद् यत्र कृतं जातमपि तत् तत्र भवति । यच्च क्रीतमित्यादि प्राप्तं लब्धमप्युच्यते । यदपि क्रीतं प्राप्तमपि तद् भवत्येव । तस्मात् क्रीतं लब्ध-मपि भवति । शब्दस्यार्थस्याभिन्नत्वादिति । स्वजन्मन्यनुभूतकर्त्तृभावो जातशब्दस्यार्थः । जातशब्दस्यैव विशेषोपलक्षितपरव्यापारो स्वजन्मनिष्पत्तौ कृतशब्दस्यार्थः । प्राप्तिसामान्यं लब्धशब्दस्यार्थः । प्राप्तिविशेषो यस्य मूल्य-हेतुका प्राप्तिः स क्रीतशब्दस्यार्थः । न च सामान्यविशेषयोरेकार्थता युक्ता । मा भूत्पर्य्यायप्रसङ्ग इति भिद्यते शब्दार्थः । वस्तुमात्रेणेति । क्रीतलब्धयो-र्यदाधारभूतं वस्तुमात्रं तस्याभिन्नरूपत्वात् क्रीतं लब्धं भवति । मात्रग्रहणं शब्दार्थव्यवच्छेदार्थम् । अतएवाह शब्दार्थस्तु भिद्यत एव । नहि येन रूपेण क्रीतशब्देन तत्प्रत्याय्यते तेनैव लब्धशब्देन । एवं जातकृतशब्दयोर्वस्तु-त्वेनाभिन्नत्वम् । शब्दार्थद्वारेण तु भिन्नार्थत्वमेव । अन्येनैव हि रूपेण जात-शब्देन तद्वस्तु प्रत्याय्यते । अनेन कृतशब्देन ।

## ३९ । प्रायभवः ।

प्रायभवग्रहणमनर्थकमिति । वैचित्र्यादन्यस्यार्थस्याभावादनर्थकमित्युच्यते । वैचित्र्येण तु सार्थकमेव । कस्मात् पुनरनर्थकमिति ? तत्र भवेन कृतार्थ-

त्वादिति। यत् प्रायभव इत्यस्य साध्यं तस्य तत्र भव (४।३।५३) इत्यनेनैव साधितत्वादिति भावः। यो हि राज्ये प्रायेण भवति तत्रासौ भवत्येव। ततश्च तत्र भवे तस्यान्तर्भावात् तत्र भव इत्यनेनैव कृतं सम्पादनमिति किं प्रायभवग्रहणेन ? अनित्यभव इत्यादिना परस्योत्तरमाशङ्कते। स्यादेतत्। अनित्यभवः प्रायभवो नित्यभवस्तत्र भव इति। तस्मात् तत्र भवेन प्रायभवस्यासंग्रहान्न सिध्यतीत्याशङ्क्याह मुक्तसंशयेन तुल्यमिति। मुक्तस्त्यक्तः संशयो येन तत् मुक्तसंशयम्। न्याय्यस्तत्र भवोऽयमिति यो निश्चितस्तेन तुल्यं भवति। तथाहि स्रुघ्ने भवो देवदत्तः स्रौघ्न इत्युच्यते। न चासौ स्रुघ्ने सदा भवति। अवश्यं हि कदाचिदुदग्देशादीनपक्रामति। अथच तत्र भवप्रत्ययो भवति। यदि च नित्यभवस्तत्र भवो जिह्वामूले भवो वर्णः जिह्वामूलीय इत्यत्र तत्र भव इत्यधिकारे (४।३।५२) जिह्वामूलाङ्गुलेश्छ इति (४।३।६२) च्छो न स्यात्। नहि वर्णो नित्यं जिह्वामूले भवति। तस्मात् प्रायभवस्य तत्रभवान्तर्भावात् ततो न व्यतिरिच्यत इत्यनर्थकं प्रायभवग्रहणम्।

## ४० । उपजानूपकर्णोपनीवेष्ठक् ।

जानुनः समीपं कर्णस्य समीपं नीव्याः समीपमिति। अव्ययं विभक्तीत्यादिनाव्ययीभावः (२।१।६)। उपजानुक इति। इसुसुक्तान्तात् कः (७।३।५१)।

## ४१ । सम्भूते ।

अवक्लृप्तिरित्यादि। अवक्लृप्तिः सम्भावना। प्रमाणानतिरेक आधारप्रमाणादाधेयप्रमाणस्यानतिरिक्तता यस्यां सत्यां सर्वमाधेयमाधारमनुप्रविशति। स्रुघ्ने सम्भवति। यस्तु स्रुघ्ने सम्भाव्यते स्रुघ्नप्रमाणान्नातिरिच्यते तदनुप्रवेशात् स सेनादिकोऽर्थ एवमुच्यते।

## ४२ । कोशाड्ढञ् ।

कौशेयं वस्त्रमिति। ननु च वस्त्रं कौशेयं न सम्भवति। किन्तु कृमिः। ततश्च कृमावेव स्यात्। न वस्त्रे। अपि च विशेषानभिधानात् खड्गसम्बन्धि-

गोऽपि कोषात् प्रत्ययः प्रसज्येतेत्यत आह रूढ़िरेषेत्यादि। रूढ़िशब्दो हि यथा कथञ्चिदुत्पाद्यते। न तत्रावश्यमवयवार्थोऽपेक्ष्यः। क्वचिदवयवार्थसम्भवात्। तथाहि तैलं पिवतीत्येवं तैलपायिकाशब्दो व्युत्पाद्यते। स च तैलपानक्रिया-रहित एव क्वचित् प्राणिविशेषे वर्त्तते। तस्माद् यद्यपि कोशे सम्भूतमित्येवं विगृह्य कोशशब्दात् प्रत्यय उत्पाद्यते तथापि वस्त्रे सूत्रे वा कौशेयशब्दः साधु-भावमनुभवति। न क्रमौ। अथ खड्गकोशादुत्पत्तौ को दोषः? येन ततः प्रत्ययो नेष्यते? खड्गस्याभिधानं प्राप्नोति। स हि तत्र सम्भवतीति चेदितर-स्मादपि तर्हि कोशात् प्रत्ययोत्पत्तौ च क्रमेरभिधानं प्राप्नोति। स हि तत्र सम्भवति। अथ तत्रापि रूढ़िवशाद् वस्त्रस्याभिधानं न क्रिमेः। इतरस्मादपि तर्हि कोशादुत्पत्तौ वस्त्रस्याभिधानं न खड्गस्य। एवं मन्यते। यद्यपि सम्भूताधिकारे कोशाड् ढञ् विधीयते तथापि कौशेयशब्दान्न सम्भवोऽर्थः प्रतीयते। अपि तु विकारोऽर्थः। रूढ़िवशात्। कौशेयं वस्त्रमिति कोशविकारो वस्त्रमित्यर्थः। तथाच वार्त्तिककारेणोक्तं विकारे कोशाड् ढञ् सम्भूतार्था-नुपपत्तेरिति। विकारश्च कौशेयशब्दात् क्रमिकोशस्य प्रतीयते। न खड्ग-कोशस्य। रूढ़िवशात्। तस्माद् यस्य विकारः प्रतीयते तदभिधायिन एव कोशशब्दाद् युक्तः प्रत्ययः। नेतरस्मात्।

## ४३। कालात् साधुपुष्प्यत्पच्यमानेषु।

कालादिति स्वर्य्यते। प्रकृतीरुत्तरा विशेषयितुम्। न च स्वरूपग्रहणे सतुत्तराः प्रकृतयः शक्या विशेषयितुम्। स्वरूपस्यासाधारणत्वात्। तस्मादर्थग्रहणमेवेतत्। तेन कालविशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह कालविशेषवाचिभ्य इत्यादि। हैमन इति सर्वत्राण् च तलोपश्च (४।३।२२)। शैशिर इत्यादौ सन्धिवेलादिसूत्रेण (४।३।१६) ऋत्वण्।

## ४४। उप्ते च।

योगविभाग उत्तरार्थ इति। उत्तरत्र वुञ् उप्तएव यथास्यात्। साध्वादिषु मा भूत्।

४५ । आश्वयुज्या वुञ् ।

ठञोऽपवाद इति । कालाट् ठञिति (४।३।११) प्राप्तस्य । ननु च कालाट् ठञ् विहितः । नचाश्वयुजीशब्दः कालवाची । ततः कुतष्ठञि-त्याशङ्क्य कालवाचित्वमाश्वयुजीशब्दस्य प्रतिपादयितुमाह अश्विनीभ्यां युक्तेत्यादि ।

४६ । ग्रीष्मवसन्तादन्यतरस्याम् ।

४७ । देयमृणे ।

४८ । कलाप्यश्वत्थयवबुसाद्वुन् ।

कथं पुनः कलापादयः शब्दाः काले वर्त्तन्ते ? यावता मयूरादिषु तेषां वृत्तिः प्रसिद्धेत्यत आह कलापादयः शब्दा इत्यादि । एतदेव विषयं स्पष्टी-करोति यस्मिन् काल इत्यादि । अश्वत्थशब्दोऽत्र वृक्षविशेषे रूढ़ः । तेन सर्व्वएव कालः सम्बध्यत इति तद्द्वारेण कालविशेषो न संज्ञायते । तस्मादश्वत्थ-फलसहचारिणि कालेऽश्वत्थशब्दो वर्त्तत इति दर्शयितुमाह यस्मिन्नश्वत्थाः फलन्तीत्यादि । अश्वत्थशब्दो यद्यपि वृक्षे वर्त्तते तथापि फले वर्त्तत एव ।

४९ । ग्रीष्मावरसमाद् वुञ् ।

अण्ठञोरपवाद इति । ग्रीष्मशब्दाद्दृत्वणोरपवादः । अवरसमाशब्दात् कालाट् ठञः । अवरा चासौ समा चेत्यवरसमा ।

५० । संवत्सराग्रहायणीभ्यां ठञ् च ।

कालाट् ठञि प्राप्ते वचनम् । तेन ठञ् न वक्तव्य इति । वुञि विकल्पिते विनापि ठञ्ग्रहणेन पक्षे यथाप्राप्तं ठञेव भवतीत्यभिप्रायः । ठञ्ग्रहण-मितरादि । तत्र यद्यत्र ठञ्ग्रहणं न क्रियेत सन्धिवेलेत्यादिषु (४।३।१६) संवत्सरात् फलपर्वणोरिति पाठात् सन्धिवेलाद्यण् ठञपवादत्वादण्त्वेन काले विवक्षिते वुञा मुक्तेऽणेव स्यात् । ठञ्ग्रहणादणमपि बाधित्वा ठञेव भवति ।

५१। व्याहरति मृगः।

नैशिकी नैशः। प्रादोषिकः प्रादोष इति निशाप्रदोषाभ्यां ठञ् (४।३।१४)। तेन मुक्ते पक्ष ऋत्वणेव भवति।

५२। तदस्य सोढम्।

कालादिति वर्त्तते। न च कालो जीयते। तस्मान्निशासहचरितमिहाध्ययनं गौण्या वृत्त्या निशेत्येवमादिभिरभिधीयत इति विज्ञायते। अतएवाह निशासहचरितमध्ययनं निशेति।

५३। तत्र भवः।

५४। दिगादिभ्यो यत्।

अणश्छस्य चापवाद इति। यद्दिगादिषु वृद्धं वाप्यादि ततश्छस्यापवादः। शेषेभ्यस्त्वणः प्राग्दीव्यतीयस्य। अथ मुखजघनयोश्च किमर्थः पाठो दिगादिषु? यावता शरीरावयवात् ताभ्यामुत्तरसूत्रेणैव भविष्यतीत्याह मुखजघनयोरिति। सेनावयववाचिनौ हि यौ मुखजघनशब्दौ तौ शरीरावयववाचिनौ न भवतः। पाणिपादाद्यवयवस्वभावं हि शरीरम्। न चैवमात्मिका सेना। किं तर्हि? रथादिसमुदायात्मिका। उदकात्संज्ञायामिति। उदकशब्दात् संज्ञायां गम्यमानायां यद्भवति। उदक्या स्त्री। रजस्वलोच्यते। नचात्र प्रकृत्यर्थः प्रत्ययार्थो वा विद्यते। सा च तयोरविद्यमानता संज्ञाग्रहणेन विज्ञायते। संज्ञायामन्यत्र। औदको मत्स्य इति। अत्राणेव भवति।

५५। शरीरावयवाच्च।

अणोऽपवाद इति। नाप्राप्ते तस्मिन्नस्यारम्भात्। यस्तु पादादिभ्यस्ततः परत्वाद् यच्छं बाधते।

५६। दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्।

दृतिकुक्षिभ्यां शरीरावयवत्वाद् यति प्राप्ते। कुक्षिशब्दो धूमादिष्वपि पठ्यते। तस्माद् धूमादिभ्यश्चेति (४।२।१२७) वुञि प्राप्ते शेषेभ्यस्त्वणि ढञ् विधीयते। अस्तिशब्दस्तिङन्तो मा विज्ञायीत्यत आह अस्तिशब्द इत्यादि। विभक्तिस्वर-

प्रतिरूपकाश्चेति निपाता भवन्तीति निपातसंज्ञकं तिङन्तसदृशं प्रातिपदिकमेतत् । न तिङन्तः । एतच्च न तिङन्तेन समानार्थं यथास्तिक्षीरा ब्राह्मणीति । भिन्नार्थञ्च यथा धने वर्त्तते यथा ऽस्तिमानिति । धनवानिति गम्यते । तदिह विशेषस्यानभिधानादुभयस्यापि ग्रहणम् ।

## ५७ । ग्रीवाभ्योऽण् च ।

बहुवचननिर्देशाद् बहुवचनान्तात् प्रत्ययेन भवितव्यम् । अन्यथा ह्येकवचनेनैव निर्देशं कुर्य्यादिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तां निराकर्त्तुमाह ग्रीवाशब्द इत्यादि । अथ विशेषाद् बहुवचननिर्देशः कृतः । ननु बहुवचनान्तादेव यथा स्यादिति दर्शयति ।

## ५८ । गम्भीराञ्ञ्यः ।

बहिर्देवेत्यादि । बहिर्देवपञ्चजनेभ्यश्च ञ्यो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । चकारोऽत्र वर्त्तते । तेन बहिरादिभ्योऽपि ञ्यो भविष्यतीति ।

## ५९ । अव्ययीभावाच्च ।

किं तर्हीत्यादि । कथं पुनरव्ययीभावादिति सामान्येनोच्यमानः प्रत्ययः परिमुखादेरेवेत्यत आह परिमुखादीनाञ्चेत्यादि । चशब्दो हेतौ । न ह्यन्यत् कार्य्यमस्ति परिमुखादिगणपाठस्य । तत्र यद्यप्येतदपि न स्याद् विध्यर्थमेव तस्य स्यात् । तस्मात् परिमुखादेरेव भवति । न सर्वस्मादव्ययीभावात् । यद्येवं परिमुखादेरित्येवं वक्तव्यमित्याह तेषामितरादि । यदि हि परिमुखादेरित्युच्यते ततोऽसत्यव्ययीभावग्रहणे तत्पुरुषेभ्योऽपि परिमुखादिभ्यः प्रत्ययः स्यात् । तस्मिंस्तु सति न भवति । परिगतं मुखं परिमुखमिति प्रादिसमासः । तत्र भवः पारिमुखः । अणेव भवति । अपि चोत्तरार्थमव्ययीभावग्रहणमवश्यमेव कर्त्तव्यम् । अन्तःपूर्वपदाट् ठञ् (४।३।६०) । ग्रामात्पर्य्यनुपूर्वादितरव्ययीभावाद् (४।३।६१) यथा स्यात् । पारिहनव्यमिति । ओर्गुणः (६।४।१४६) । वान्तो यिप्रत्यय इत्यत्रादेशः (६।१।७९) ।

नौपकूलमिति। अव्ययं विभक्तीत्यादिनाव्ययीभावः (२।१।६१)। एष च परिमुखादिषु न पञ्चत इत्यनेनैव भवति। अत्र परिमुखमिति कथमव्ययीभावः? यावता अपपरिवहिरञ्चवः पञ्चम्या समस्यन्ते। पञ्चमी च परिणा कर्मप्रवचनीयेन योगे भवति। कर्मप्रवचनीयसंज्ञा लपपरी वर्जने (१।४।८८) इत्यनेन। न च परिमुखे वर्जनं गम्यते। किं तर्हि? सर्वतोभावः। एवं तर्ह्यव्ययमिति (२।१।६) योगविभागादव्ययीभावो भविष्यति। अन्ये तु येऽत्र परिश्चनुप्रभृतयोऽव्ययीभावास्तेऽपपरिवहिरञ्चवः पञ्चम्या (२।१।१२) इत्यनेनैव भवन्ति। अत्र येष्वपि वर्जनं न गम्यते ततस्तेष्वप्यव्ययमिति (२।१।६) योगविभागेनैव। ये तूपसीरादय उपपूर्वास्ते सामीप्येऽव्ययमित्यादिना (२।१।६)। अनुगङ्गमिति। यस्य चायाम इत्यव्ययीभावः (२।१।१६)। अन्ये तु येऽनुसीरादयोऽनुपूर्वास्ते पश्चादर्थेऽव्ययमित्यादिना (२।१।६)।

## ६०। अन्तःपूर्वपदाट्ठञ्।

अन्तःशब्दो विभक्त्यर्थे समस्यत इति। अव्ययं विभक्तीत्यादिना (२।१।६)। विभक्त्यर्थस्त्वधिकरणम्। अन्तः शब्दस्याधिकरणप्रधानत्वात्। समानशब्दाट् ठञ् वक्तव्य इति। वक्तव्यशब्दो व्याख्येये। तत्रेदं व्याख्यानम्। इहान्तःपूर्वादित्येवं सिद्धे यदधिकं पदग्रहणं तदधिकमिह कार्य्यं भवतीत्येवमर्थं क्रियते। तेन समानशब्दादपि ठञ् भवतीति। एतेन शब्दान्तरादेव। अध्यात्मादिभ्य ऊर्द्ध्वन्दमादूर्द्ध्वदेहाल्लोकोत्तरपदाच्च ठञ् भवतीति वेदितव्यम्। आध्यात्मिकमिति। आत्मन्यधि अध्यात्मम्। विभक्त्यर्थेऽव्ययीभावः। अनुशतिकादीनाञ्चेत्युभयपदवृद्धिः (७।३।२०)। अध्यात्मादिराकृतिगणश्चायमिति। यद्येवं समानशब्दाट् ठञ् वक्तव्य इत्याद्यनर्थकम्। अध्यात्मादिभ्यश्चेत्यनेनैव सिद्धत्वात्। नानर्थकम्। अस्यैव प्रपञ्चार्थत्वात्। अध्यात्मादिरेव तत् प्रपञ्च्यते। ननु चाकारान्त ऊर्द्ध्वशब्दः। तत् कुत इह मकारान्तत्वमायातमित्याह ऊर्द्ध्वशब्देनेत्यादि। ऐहलौकिकः पारलौकिक इति। पूर्ववदुभयपदवृद्धिः। मुखतीयं पार्श्वतीयमिति। अपादाने चाहीयरुहोरिति (५।४।४५) तसिः। आद्यादिभ्य उपसंख्यानमित्यौपसंख्यानिको (५।४।४४, वा) वा। अव्ययानां भमात्रे

टिलोप इत्यनेन (६।४।१।४) टिलोपः । मण्मीयौ च प्रत्ययौ वक्तव्याविति । मध्यशब्दादित्यपेक्ष्यते । मध्योमध्यंदिनण् चास्मादिति । मध्यशब्दो मध्यम्भावमापद्यते । दिनण् चास्मात् प्रत्ययो भवति । स्थाम्न इति । स्थामशब्दान्तात् प्रातिपदिकात् । अश्वस्येव स्थाम बलमस्येति बहुव्रीहिः । पृषोदरादित्वात् सकारस्य तकारः । अश्वत्थाम्नि भव इत्यण् । तस्य लुक् । अजिनान्ताच्चेति । लुगिति सम्बध्यते । वृकाजिन इति । अणो लुक् । समानस्येति । आनन्तर्य्यलक्षणा षष्ठी । समानशब्दादनन्तरष्ठञिष्यत इत्यर्थः । अध्यात्मादिष्विति । वैषयिकेऽधिकरणे सप्तमी । अध्यात्मादिविषये ठञिष्यत इत्यर्थः । कुग्जनस्य परस्य चेति । चकारादीयश्च प्रत्ययः । ऊर्द्धं दमाच्च देहाच्चेति । ऊर्द्धशब्दात् परस्मात् दमशब्दादूर्द्धशब्दाद्देहशब्दाच्च ठगिष्यत इत्यर्थः । ईयःकार्य्योऽथ मध्यशब्दस्येति । अथशब्दः समुच्चये । मध्यशब्दस्यानन्तर ईयः कार्य्य इत्यर्थः । मण्मीयौ प्रत्ययौ तथेति । मध्यशब्दादित्यपेक्ष्यते । मण्मीयौ मध्यशब्दस्यानन्तरौ कर्त्तव्यौ । अजिनात् तथेति । अजिनान्तात् लुग् वक्तव्य इत्यर्थः ।

## ६१ । ग्रामात् पर्य्यनुपूर्वात् ।

पारिग्रामिकमिति । ग्रामात् परीति । अपपरिवहिरञ्चवः (२।१।१२) । पञ्चम्येत्यव्ययीभावः । आनुग्रामिकमिति । अत्राप्यनुर्य्यत्समयेति (२।१।१५) ।

## ६२ । जिह्वामूलाङ्गुलेश्छः ।

यतोऽपवाद इति । शरीरावयवाच्चेति (४।३।५५) प्राप्तस्य ।

## ६३ । वर्गान्ताच्च ।

## ६४ । अशब्दे यत्खावन्यतरस्याम् ।

छे प्राप्त इति । पूर्वसूत्रेण ।

## ६५ । कर्णललाटात् कनलङ्कारे ।

कर्णिकाशब्दश्चाभरणविशेषे रूढः । रूढिशब्देषु च नावश्यमपि कर्णसम्बन्धेन भवितव्यम् ।

## ६६ । तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।

तस्य व्याख्यानमिति । व्याख्यायतेऽनेनेति व्याख्यानं करणे ल्युट् । चकारात् । तत्र भवे चेति । ननु च व्याख्यानं प्रत्ययार्थः । तस्य समीपे चकारः श्रूयत इति प्रत्ययार्थमात्रस्यैव समानजातीयस्य तेनानुकर्षणं न्याय्यम् । ननु समर्थविभक्तेरपि । समानजातीयस्य तु चकारः समुच्चयं करोति यथा केदाराद् यञ्चेति (४।२।४०) प्रत्ययसमीपवर्त्तिना चकारेण प्रत्यय एव समुच्चीयते यथा ठञ् कवचिनश्चेति (४।२।४१) प्रातिपदिकसमीपस्थेन चकारेण प्रातिपदिकमेव । तत्र प्रत्ययार्थमात्रस्यैवानुकर्षणे सति समर्थविभक्त्यन्तरोपादानात् पूर्वस्याः समर्थविभक्तेर्निवृत्तौ सत्यां भवार्थेऽपि षष्ठीसमर्थादेव प्रत्ययो युक्तः । तदयुक्तमुक्तं तत्र भवे चेति । तस्य भवे चेति वक्तुं युक्तमित्यत आह वाक्यार्थसमीप इत्यादि । इहेतिकरणेन तस्य व्याख्यान इत्येषोऽर्थः प्रत्यवमृश्यते । ननु व्याख्यानप्रत्ययार्थः । तस्मादितिकरणानन्तरमुच्चारितश्चकार स्तत्प्रत्यवमृष्टस्य वाक्यार्थस्यैव समीपे श्रूयमाणस्तुल्यजातीयमेव वाक्यार्थं समुच्चिनोति । तेन भवार्थे सप्तमीसमर्थादेव प्रत्ययो भवति । नह्यन्यथा पूर्वो व्याख्यार्थ उपपद्यते । इतिकरणश्च वाक्यार्थसमुच्चयो यथा स्यादित्येवमर्थ एव कृतः । अन्यथा हि तस्य व्याख्याने चेत्येवं ब्रूयात् । कः पुनरसौ वाक्यार्थ इत्याह । तत्र भव इति । ननु पाटलिपुत्त्रशब्दो व्याख्यातव्यनामेति । ननु च पाटलिपुत्त्रः कौशलया व्याख्यायते । नियतं तेन व्याख्यातव्येन भवितव्यम् । अन्यथा तस्य व्याख्यानी सुकौशला न स्यात् । तस्य व्याख्यानस्य पाटलिपुत्त्रशब्दो व्याख्यातव्यनाम भवतीति तत् कथमुच्यते न तु पाटलिपुत्त्रशब्दो व्याख्यातव्यनाम भवतीति ? नैतदस्ति । यदीह व्याख्यातव्यमभिप्रेतं न तस्यैतन्नाम भवतीति भावः । किञ्चेह व्याख्यातव्यमभिप्रेतम् ? यद्व्याख्यातव्यतया लोके प्रसिद्धतरम् । कुत एतत् ? व्याख्यातव्यनामग्रहणात् । इह हि व्याख्यातव्यनामग्रहणं व्याख्यातव्यार्थं तु न कर्त्तव्यमेव । विनापि हि तेन व्याख्यातव्यनाम्न एव प्रत्ययसिद्धेः । तथाहि तस्येति । तस्य प्रतियोगि व्याख्यानमुपात्तम् । तच्च व्याख्यातव्यस्यैव सम्भवति ।

नान्यस्य। तस्माद् यत् तस्य व्याख्यातव्यं सामर्थ्यात् तदेव तस्येत्यनेन षष्ठ्यन्तेनोपादीयत इति विज्ञायते। ततश्चान्तरेणापि व्याख्यातव्यनामग्रहणं व्याख्यातव्यनामाभिधायिन एव प्रत्ययो भविष्यतीति किं व्याख्यातव्यनामग्रहणेन? तत् क्रियते व्याख्यातव्यतया लोके यः प्रसिद्धस्तदभिधायिन एव प्रत्ययो यथा स्यादित्येवमर्थम्। व्याकरणादयो ग्रन्थविशेषा लोके प्रसिद्धाः। न ते पाटलिपुत्रादयः। एवमपि नामग्रहणं न कर्त्तव्यम्। व्याख्यातव्यग्रहणसामर्थ्यादेव हि व्याख्यातव्यतया प्रसिद्धतरेभ्यः प्रत्ययो लभ्यत एव। नैतदस्ति। व्याख्याने हि प्रत्ययार्थे व्याख्यानादेव व्याख्यातव्यवाचिनः प्रत्यये सिद्धे पुनर्व्याख्यातव्यग्रहणसामर्थ्याद् व्याख्यातव्यतया ये प्रसिद्धास्तेभ्यः प्रत्ययो लभ्यते। ननु तत्र भवे। तत्र सामर्थ्याभावात्। भवेऽपि चार्थे तत्र व्याख्यातव्यतया प्रसिद्धतराः। तदभिधायिभ्य एव प्रत्यय इष्यत इति। ननु यतः कुतश्चित्। तस्माद् भवाधिकारे रूढ्युपसंग्रहार्थं नामग्रहणं कर्त्तव्यम्। अथ किमर्थं भवव्याख्यानयोर्युगपदधिकारः क्रियत इत्याह भवव्याख्यानयोरित्यादि। ठञादीनपवादानत्राभिधास्यामीत्येवमर्थो युगपदनयोरधिकारः। ननु किमुच्यतेऽपवादविधानार्थ इति? न पुनः प्रकृतानामणादीनां प्रत्ययानामर्थनिर्देशो यथा स्यादित्यत आह कृतनिर्देशौ हि ताविति। कृतनिर्देशौ हि तावर्थौ। एकस्तत्र भव इति। अपरस्तस्येदमिति। तस्येदंविशेषत्वाद् व्याख्यानस्य।

## ६७। बह्वचोऽन्तोदात्ताट् ठञ्।

षात्वणत्विकमिति। नातानतिकमिति (C)। उभयत्र द्वन्द्वात् प्रत्ययः। समासस्वरेणान्तोदात्ताः प्रकृतय इति। समासस्येत्यनेन (६।१।२२३)। बहुवचननिर्देशश्चैवंजातीयापरप्रकृत्यपेक्षया। द्व्यचष्ठकं वक्ष्यति द्व्यजृद्ब्राह्मणेत्यादिना (४।३।७२)। सौपमिति। तैङमिति। सुप्तिङ्शब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ। गतिस्वरेणाद्युदात्त इति। गतिरनन्तर (६।२।४९) इत्यनेन।

---

(C) नतोऽनुदात्तः। अनत उदात्तः। तयोर्व्याख्यानं सौवरग्रन्थरूपमित्यर्थः।

अन्तग्रहणं विस्पष्टार्थम्। सर्वोदात्तस्य प्रातिपदिकस्यासम्भवात्। सामर्थ्यादेव तदन्तविधिर्भविष्यतीति यथा वर्णादनुदात्तात्तोपधात् तो न इति (४।१।३९)। अपि चोदात्त इति वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति युक्त एव तदन्तविधिः।

६८। क्रतुयज्ञेभ्यश्च।

अनन्तोदात्तार्थ आरम्भ इति। यद्येवं राजसूयिकं वाजपेयिकमित्येतदेवोदाहरणद्वयं युक्तम्। राजसूयवाजपेयशब्दयोः कृदन्तोत्तरपदयोः प्रकृतिस्वरेण मध्योदात्तत्वादुत्तरपदस्याद्युदात्तमत्र। एकं क्यबन्तत्वात् कृत्स्वरेण। अपरं यतो नाव इति (६।१।२१७)। समासे च कृते गतिकारकोपपदात् कृदिति ( ६।२।१३९ ) प्रकृतिभावेनाद्युदात्तमेवावतिष्ठते। आग्निष्टोमिकं नावयज्ञिकमिति। एतदुदाहरणद्वयमयुक्तम्। अग्निष्टोमनवयज्ञशब्दाभ्यां प्रत्ययस्वरेणान्तोदात्ताभ्यामनेनाप्राप्तेः। नहि पूर्वेणानेन वा ठञि विशेषः। क्रतुसाहचर्य्यादत्रोदाहृतम्। शब्दः साहचर्य्याद् वर्त्तेत इति विज्ञायते।

६९। अध्यायेष्वेवर्षेः।

७०। पौरोडाशपुरोडाशात् ष्ठन्।

पुरोडाशस्येदमित्यन्तोदात्तः। तस्माद् बह्वचोऽन्तोदात्ताट् ठञि (४।३।६७) प्राप्ते। पुरोडाशस्तु लघावन्ते द्वयोश्च बह्वषो गुरुरिति ( फिट्, २।४२ ) मध्योदात्तः। अस्मादणि प्राप्ते ष्ठन् विधीयते। षकारो ङीषर्थः। नकार आद्युदात्तार्थः। तेषां संस्कारो मन्त्रः पौराडाश इति। पुरोडाशसहचरित इति। तादर्थ्यात् साहचर्य्याद्वा पुरोडाशा येन मन्त्रेण संस्क्रियन्ते तत्र पुरोडाशशब्दो वर्त्तते। न पुरोडाशेषु। कुत एतत्? व्याख्यातव्यनामग्रहणानुवृत्तेः। नहि पुरोडाशा व्याख्यातव्यतया प्रसिद्धतराः।

७१। छन्दसो यदणौ।

७२। द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्।

अणादेरपवाद इति। आदिशब्देन ठञः। तत्र य ऋकारान्ता उद्-

गाह्रप्रभृतयो बह्वचोऽन्तोदात्तास्तेभ्यष्ठञोऽपवादः । ब्राह्मणप्रथमाध्वरेभ्योऽपि ठञ एव । तेऽपि बह्वचः प्रातिपदिकस्वरेणान्तोदात्ताः । नामाख्यातशब्दादपि समस्तात् तस्यैव । सोऽपि बह्वच् समासस्वरेणान्तोदात्तश्च । परिशिष्टेभ्योऽणः । पांशुकम् । पाञ्चहोत्रकमिति । इसुसुक् तान्तात् कः (७।३।५१) । पञ्चहोतृ-चतुर्होतृशब्दाविगन्ते द्विगाविति ( ६।२।२९ ) पूर्वपदप्रकृतिस्वरेणाद्युदात्तौ । पूर्वपदं हि नः संख्याया ( फिट्, २।२८) इत्युदात्तम् । पुरश्चरणशब्दो ल्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण ( ३।२।१३९ ) मध्योदात्तः । आख्यातशब्दो गतिरनन्तर (६।२।४९) इत्याद्युदात्तः । सङ्घातविगृहीतार्थमिति । तत्रैक-शेषसमाश्रयणाल्लभ्यत इति वेदितव्यम् ।

## ७३ । अणृगयनादिभ्यः ।

ठञादेरपवाद इति । आदिशब्देन ठकश्छस्य च । तत्र ये बह्वचोऽन्तो-दात्तास्तेभ्यष्ठञः । विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षणस्य ठकः । व्याकरण-शब्दाद्वृद्धाच्छस्य । अण्ग्रहणं किमर्थम् ? न ऋगयनादिभ्यो यथाविहित मेवोच्येत । नचैवं सत्यपवादाष्ठनादयः स्युरिति संभाव्यते । अपवाद-विधानस्य हि वैयर्थ्यं स्यात् । तस्माद् वचनप्रमाण्याद् यो विहितो न च प्राप्नोतन्येन बाधितत्वात् स एव भविष्यति । स चाणेवेत्यत आह अण्ग्रहण-मित्यादि । तत्र यद्यण्ग्रहणं न क्रियेत तदा यदत्र वृद्धमन्तोदात्तं तस्माच्छे ठञा बाधिते पुनर्वचनाच्छ एव भविष्यति । तस्माच्छस्य बाधकस्य बाधनार्थ-मण्ग्रहणम् । तेन वास्तुविद्य इति सिद्धं भवति । वास्तुविद्याशब्दो ह्ययं समासस्वरेणान्तोदात्तश्च । ऋगयनेत्यादि । ऋगयनमिति । ऋगयनशब्दो भावसाधन ऋचामयनम् । यद्यपि भावे ल्युट् तथाप्यभेदोपचारात् तद्वति ग्रन्थे व्याख्यातव्ये वर्त्तते । स चानो भावकर्मवचन (६।२।१५०) इत्यन्तोदात्तः । येस्तु करणे ल्युटं कृत्वा ऋगयनशब्दो व्युत्पाद्यते तेषां स कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तो न गणे पाठं प्रयोजयति । ततः प्राग्दीव्यतोऽणित्येव (४।१।८३) सिद्धः । पदव्याख्यानशब्दः मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीता (३।२।१५१) इत्यन्तोदात्तः । मानेति । मनेर्धातोर्यदा घञ् तदा थाथघञ्-

क्ताजवित्रकाणामित्यन्तोदात्तः ( ६।२।१४४ )। अथ मिनातेर्लुरट् तदान्तो भावकर्मवचन (६।२।१५०) इत्यन्तोदात्तः। छन्दोभाषेति। गतिकारकोपपदात् कृदिति (६।२।१३९) कृत्स्वरेणान्तोदात्तः। भाषाशब्दो गुरोश्च हल (३।३।१०३) इत्यकारप्रत्ययान्तो व्युत्पादितः। छन्दोविचितीति। मन् क्तिन्नित्यादिनान्तोदात्तः ( ६।२।१५० )। पुनरुक्तशब्दस्याथघञ्क्ताजबित्रकाणामित्यन्तोदात्तः (६।२।१४४)। निरुक्तः संज्ञायामनाचितादीनामितग्न्तोदात्तः (६।२।१४४)। व्याकरणशब्दो लुग्डन्तो मध्योदात्तः। निगमशब्दो गोचरसञ्चरेत्यादिसूत्रे (३।३।१०९) घप्रत्ययान्तो निपातितः प्रत्ययस्वरेणान्तोदात्तः। वास्तुविद्याशब्दोऽङ्गविद्याचत्रियविद्येतिग्ते च समासस्वरेणान्तोदात्ताः। उत्पात उदपाद इत्येतौ थाथादि (६।२।१४४) सूत्रेणान्तोदात्तौ। संवत्सर इति। अशेः सर इतग्नुवृत्तौ ( उण्, ३।३५०) वसेः संपूर्वाच्चिदित्येवं ( उण्, ३।३५२ ) वृग्त्पादितत्वात् संवत्सरशब्दोऽन्तोदात्तः। मुह्यतेर्धातोः क्तः। क्ते जरागमः। तेन मुहूर्त्त इतग्न्तोदात्तः। निमित्तशब्दोऽपि प्रातिपदिकस्वरेण। उपनिषदिति। उपनिपूर्वात् सदेः क्विप्। कृत्स्वरेणान्तोदात्तः।

### ७४। तत आगतः।

अथ स्रुघ्नादागच्छन् वृत्तमूलादागत इति। अत्र वृत्तमूलशब्दात् प्रतग्यः कस्मान्न भवतीतग्राह मुख्यमितग्रादि। मुख्यं प्रधानं विवक्षितम्। तदिह परिगृह्यते। नतु नान्तरीयकमप्रधानम्। नहि मुख्ये सतीतरस्याप्रधानस्य ग्रहणं युक्तम्। मुख्ये कार्य्यसम्प्रतग्यात्।

### ७५। ठगायस्थानेभ्यः।

### ७६। शुण्डिकादिभ्योऽण्।

आयस्थानठकोऽपवाद इति। बाहुल्यादेवमुक्तम्। यस्मात् कृकणशब्दोऽत्र पठ्यते। तत्र हि कृकणपर्णाद् भारद्वाज इति (४।२।१४५) प्राप्तस्य च्छस्यापवादः। तीर्थशब्दश्चेह धूमादिषु पठ्यते। ततो धूमादिभ्यश्चेति प्राप्तस्य (४।२।१२७) वुञोऽपवादः। अथाण्ग्रहणं किमर्थम्? न शुण्डिकादिभ्यो यथाविहितमित्युच्येत। नचैवं पठ्यमाने ऽपवाद एव स्यादितग्राशङ्कनीयम्।

अपवादविधाने हि वचनवैयर्थ्यं स्यात् । तस्मादन्तरेणाप्यण्ग्रहणमणेव भविष्यतीत्यत आह अण्ग्रहणमित्यादि । उदपानशब्दोऽत्र पठ्यत आयस्थानवचनम् । उत्सादिष्वसौ पठ्यते । तत्रासत्यण्ग्रहण आयस्थानठकं बाधित्वोत्सादिभ्योऽञित्यञेव (४।१।८६) स्यात् । तस्मात् तस्य बाधकस्य बाधनार्थमणग्रहणम् । तेनोदपान इतयत्राण् सिद्धो भवति ।

## ७७ । विद्यायोनिसम्बन्धेभ्यो वुञ् ।

## ७८ । ऋतष्ठञ् ।

तपरकरणं मुखसुखार्थमिति । अथ दीर्घनिवृत्त्यर्थं कस्मान्न भवति ? असम्भवात् । नहि विद्यायोनिसम्बन्धिषु किञ्चिदॄकारान्तं प्रातिपदिकमस्ति यन्निवृत्त्यर्थस्तकारः स्यात् ।

## ७९ । पितुर्यच्च ।

पित्र्यमिति । रीङ् ऋत इति रीङ् ( ७।४।२७ ) । यस्येति लोपः (६।४।४८) ।

## ८० । गोत्रादङ्कवत् ।

यदि गोत्रादङ्कवत्प्रत्ययविधिर्भवतीत्युच्यतेऽण एवातिदेशः प्राप्नोति । न वुञः । यस्मादण्विधावेवाङ्कग्रहणमस्ति । सङ्घाङ्कलक्षणेत्यादौ (४।३।१२७) सूत्रेण वुञ्विधौ गोत्रचरणाद्वुञित्यत्रे(४।३।१२६)त्याह अङ्कग्रहणेनेत्यादि । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकग्रहणमुपघातसामान्यस्योपलक्षणमेवमिहाप्यङ्कग्रहणं तस्येदमित्यस्य (४।३।१२०) । तेनायं सूत्रार्थो भवति । यथा तस्येदमित्यत्र (४।३।१२०) गोत्राद् प्रत्ययो भवति तथा तत आगत (४।३।७४) इत्यत्रापि । तेन वुञोऽप्यतिदेश उपपद्यते । नन्वेवमप्यणोऽतिदेशो न प्राप्नोति । नहि तद्विधौ गोत्रग्रहणमस्ति । पूर्वसूत्राद् गोत्रग्रहणमनुवर्त्तत इत्यदोषः । सङ्घाङ्कलक्षणेत्यादिना (४।३।१२७) येन सूत्रेणाण् विहितस्तद् दर्शयति ।

## ८१ । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ।

समादागतमिति । समाद्धेतोरागतमस्यार्थः । केन पुनरिह पञ्चमी ।

अस्मादेव ज्ञापकात् । यदयं पञ्चम्यन्तात् प्रत्ययमाह ततो ज्ञायते हेतौ पञ्चमी भवति ।

## ८२ । मयट् च ।

योगविभागो यथासंख्यनिरासार्थ इति । ननु चान्यतरस्यांग्रहणेनौत्सर्गिकेऽभ्यनुज्ञायमाने वैषम्याद् यथासंख्यस्य प्राप्तिरेव नास्ति । सत्यमेतत् । यस्तु रूप्यमयटोरपूर्वत्वाद् विधीयमानापेक्षया यथासंख्यत्वं मन्येत तं प्रति योगविभागः क्रियते ।

## ८३ । प्रभवति ।

प्रथम उपलभ्यत इत्यर्थ इति । प्रथम इत्यनेन प्रशब्दस्यार्थमाचष्टे । उपलभ्यत इत्यनेनापि भवतेः । अनेकार्थत्वाद्धातूनां भवतिरिहोपलब्धौ वर्त्तते । हिमवतः प्रभवतीति । भुवः प्रभव इति (१।४।३१) हिमवतोऽपादानसंज्ञा ।

## ८४ । विदूराञ् ञ्यः ।

तत्र तु संस्क्रियत इति । तुशब्दोऽवधारणे । संस्क्रियते एव च तत्र विदूरे नगरे । न ततः प्रभवति । वालवायो विदूरश्चेति । वालवायशब्द एव प्रत्ययमुत्पादयति । न विदूरशब्दः । प्रभवतिशब्दस्य प्रथमत उपलभ्यत इत्यर्थः । प्रभवति च वालवाये पर्वते । तस्माद् यतः प्रभवति तद्वाची वालवायशब्दः प्रकृतित्वेनाक्षिप्यते । यथा विश्रवणरवणा इत्यादेशावेव शिवादिषु पठ्यते । अपत्याधिकारात् तु येन तयोरपत्यापत्यवत्सम्बन्धः स एव प्रकृतित्वेनाक्षिप्यते विश्रवस्शब्दः । विश्रवसोऽपत्यं वैश्रवणः । रावणः । अथवा प्रकृत्यन्तरमेव विदूरशब्दो वालवाये वर्त्तते । विदूरात् प्रभवति वालवायात् पर्वतात् प्रभवतीत्यर्थः । एवं स्थिते यो ब्रूयान् नैव तत्र वालवाये प्रसिद्धो विदूरशब्द इति तं प्रत्याह जित्वरीवदुपाचरेदिति । यथा वणिज एव वाराणसीं नगरीं जित्वरीत्युच्चारयन्ति मङ्गलार्थं न लोका एवं वैयाकरणा एव वालवायं विदूरमित्युच्चारयन्ति । नियतदेशपुरुषविषया अपि रूढयो भवन्तीत्येतज्जित्वरीवदित्यनेन कथयति ।

## ८५ । तद्गच्छति पथिदूतयोः ।

पथो निष्क्रियत्वाद् गमेः कर्त्तृत्वं नोपपद्यत इत्याह तत्स्थेष्वित्यादि । पुरुषप्रवृत्तिर्गमनं पथ्युपचर्य्यत इति दर्शयति । अथ वेत्यादि । प्राप्तावत्र गमिर्वर्त्तते । अस्ति च प्रत्यक्षगम्यैव स्रुघ्नादीनां पथोऽस्यैवानन्तर्य्यलक्षणा प्राप्तिः ।

## ८६ । अभिनिष्क्रामति द्वारम् ।

कथं पुनः करणत्वेन प्रसिद्धं द्वारं स्वातन्त्र्येणैव विवक्ष्यत इत्याह यथेत्यादि । यथा च्छेदनक्रियायामसिः करणत्वेन प्रसिद्धोऽपि स्वातन्त्र्येण विवक्ष्यते । ननु चेतनावतोऽभिनिष्क्रमणं भवति । चेतनावता प्रयुक्तस्य वा । देवदत्तोऽभिनिष्क्रामति शकटमभिनिष्क्रामतीति । न च द्वारं चेतनावता प्रयुक्तम् । तस्मान्नोपपद्यते तस्याभिनिष्क्रमणम् । नैष दोषः । अचेतनेष्वप्यभिनिष्क्रामतीति व्यवहारो दृश्यते तद्यथा ऽनेन गुहामुखेन वायुरभिनिष्क्रामतीति । निष्क्रियत्वात् तर्हि नोपपद्यते। तत्स्थेषु निष्क्रामत्सु द्वारमभिनिष्क्रामतीत्युपचर्य्यत इत्यदोषः ।

## ८७ । अधिकृत्य कृते ग्रन्थे ।

ननु कृत इति कर्मणि निष्ठा । ततश्च तयाभिहितत्वात् कर्मणो द्वितीया न प्राप्नोतीत्याह अधिकृत्येत्येतदपेक्षया द्वितीयेति । ल्यबन्तेन या क्रियाभिधीयते तदपेक्षया द्वितीया । नच तस्या यत् कर्म तत् केनचिदभिहितम् । निष्ठया हि ग्रन्थात्मकमेव कर्माभिहितम् । न तु ल्यबन्तक्रियाया यत् कर्म सुभद्रादिकं तदपि । गिरिभिक्षमधिकृत्य कृतो गैरिभिक्षः । ययातिमधिकृत्य यायातः । लुबित्यादि । आख्यायिकायायिति तादर्थ्ये चतुर्थी । आख्यायिकार्थमाख्यायिकामभिधातुं प्रत्ययस्य लुग् भवतीत्यर्थः ।

## ८८ । शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।

यमसभमिति । सभाराजेत्यादिना (२।४।२७) नपुंसकलिङ्गता । यदीन्द्रजननादावेव शिशुक्रन्दादयो द्रष्टव्यास्तत् किमर्थं पृथग्ग्रहणमित्यत आह प्रपञ्चार्थमित्यादि । एवञ्च सतीत्यादि । चशब्दो हेतौ । यस्मादिन्द्रजनना-

देराकृतिगणस्य तदन्तर्भूतानामेव शिशुक्रन्दादीनां प्रपञ्चार्थं ग्रहणं तस्मादेव-मर्थेऽस्मिन् स्थिते देवासुरादीनां प्रतिषेधो न वक्तव्यः । प्राप्त्यभावात् । येभ्य एव छप्रत्ययोऽयं दृश्यते तएवेन्द्रजननादयः । न च देवासुरादिभ्यो दृश्यते ।

८९ । सोऽस्य निवासः ।

९० । अभिजनश्च ।

तत्सम्बन्धाद् देशोऽप्यभिजन उच्यत इति । यथा यष्टीः प्रवेशयेति यष्टिसम्बन्धाद् यष्टिशब्दः पुरुषे वर्त्तते तथाभिजनशब्दो देशे वर्त्तते । कः पुन-रसौ योऽभिजनसम्बन्धादभिजन उच्यत इत्यत आह यस्मिन्नित्यादि । इह देशवाचिन इत्यादि । कथं पुनर्मुख्येऽभिजने गौणात् प्रत्ययो भवतीत्यत आह निवासप्रत्ययासक्तेरिति । निवासोऽनुवर्त्तिष्यते । तेनाभिजनो विशेष्यते । निवा-सो योऽभिजन इति । तस्माद् देशवाचिन एव प्रत्ययो भवति । न बन्धुभ्यः । तेषामनिवासत्वात् । निवासाभिजनयोः को विशेषः ? नास्त्येव कश्चिद् विशेषः । अभिजनस्य निवासभूतत्वादिति मन्यते । यत्रेत्यादिना विशेषं दर्शयति । योगविभाग उत्तरार्थ इति । उत्तरेषु योगेष्वभिजनप्रत्यया यथा-स्युर्निवासे मा भूवन्निति ।

९१ । आयुधजीविभ्यश्छः पर्वते ।

आयुधजीविभ्य इति तादर्थ्ये चतुर्थीति पञ्चमीं निराकरोति । यदि ह्येषा पञ्चमी स्यादायुधजीविभ्य एव पर्वतेऽभिधेये छो भवतीत्येष सूत्रार्थः स्यात् । न चेष्यते । तस्मात् तादर्थ्य एवैषा चतुर्थी । न पञ्चमीति । साङ्काश्यका इति । धन्वयोपधाद्वुञ् (४।२।१२१) ।

९२ । शण्डिकादिभ्यो ञ्यः ।

अणादेरपवाद इति । आदिशब्देन छादेः । अत्र ये शण्डिकादीन् पर्वतानाचक्षते तेषां मतेन पूर्वसूत्रेण प्राप्तस्य छस्यापवादः । ये तु जनपद-शब्दास्तेषामवृद्धादपि बहुवचनविषयादिति ( ४।२।१२५ ) प्राप्तस्य वुञः । शण्डिकशब्दात् कोपधादणिति (४।२।१३२) प्राप्तस्याणः ।

९३ । सिन्धुतक्षशिलादिभ्योऽणञौ ।

प्रभृतय इति । प्रभृतिशब्देन मधुवसन्तकम्बोजसाल्वकश्मीर इत्येते गृह्यन्ते । गान्धारि किष्किन्धा सारदि उरस् दरत् इत्येतेषामवृद्धादपौत्यादिना वुञि ( ४।२।१२५ ) प्राप्ते वचनम् । तक्षशिलादिष्वपि कौमेदुरकाण्डवारण ग्रामणी इत्येतेषां वृद्धाच्छ इति (४।२।११४) च्छे प्राप्ते । शेषाणां प्राग्दीव्यतोऽणित्यणि (४।१।८३) ।

९४ । तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ।

९५ । भक्तिः ।

भज्यते सेव्यत इति भक्तिरिति । भज सेवायामित्येतस्मात् कर्मसाधनः क्तिन् ।

९६ । अचित्ताददेशकालाट् ठक् ।

ननु च देशकालयोरचित्तयोः प्रतिषेधान्नञिवयुक्तन्यायेन प्रकृतिरचेतनैव विज्ञास्यते । तत् किमचित्तग्रहणेन ? नैतदस्ति । विना हि तेनादेशकालादिति न ज्ञायते किमयं प्रकृतिनिर्देश उत देशकालयोः प्रतिषेध इति । तत्रानिष्टमपि विज्ञायते । अदेशशब्दात् कालशब्दाच्चेति । अचित्तग्रहणे तु सति तेनातिप्रसङ्गे सत्यदेशकालादिति प्रतिषेधो विज्ञायते । अस्मादेव च प्रतिषेधादचित्तादिति स्वरूपग्रहणं न भवति । स्वरूपग्रहणे हि देशकालाभ्यां प्रसङ्गो नास्तीति प्रतिषेधं न कुर्य्यात् ।

९७ । महाराजाट् ठञ् ।

ननु च पूर्वसूत्रादेव ठगनुवर्त्तिष्यते । तेनापि हि माहाराजिक इति सिध्यत्येव । तत् कथं ठञ् प्रत्ययान्तरं क्रियत इत्याह प्रत्ययान्तरकरणमित्यादि । ञित्स्वरेणाद्युदात्तत्वं यथा स्यादिति प्रत्ययान्तरकरणम् । ठकि हि सति तद्धितस्य कित इत्यन्तोदात्तत्वं (६।१।१६५) स्यात् ।

९८ । वासुदेवार्जुनाभ्यां वुन् ।

वासुदेवशब्दाद्वृद्धाच्छस्यापवादः । अर्जुनशब्दादौत्सर्गिकस्याणः । ननु चार्जुनशब्दः क्षत्रियाख्यः । तस्मादुत्तरसूत्रेण प्राप्तस्य वुञोऽपवादो युक्तः ।

एवं मन्यते। बहुलग्रहणं तत्र क्रियते। तेनार्जुनशब्दाद् वुञ्प्रत्ययस्य प्राप्तिरेव नास्ति। तस्मादस्मादणेव स्यात्। अतस्तदपवादो न्याय्यः। ननु चेतशादि चोद्यम्। स्यादेतत्। वुञ्वुनोर्विशेषोऽस्ति। अतो वासुदेवशब्दाद्वुन् विधीयत इतशाह नचात्रेतशादि। वासुदेवशब्दस्य च वुञि वुनि वा सति नास्ति कश्चिद् विशेष इति। तथा ह्युभयत्र तदेव रूपं सएव स्वरः। योऽपि वुञि सति पुंवद्भावप्रतिषेधो वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इति (६।३।३९) स वुन्यपि लभ्यत एव न कोपधाया इति (६।३।३७)। संज्ञेषात्यादिना यदुक्तं ननु च वासुदेवशब्दाद् गोत्रक्षत्रियाख्येभ्य इति (४।३।९९) वुञस्येवेति तन्निराकरोति। गोत्रक्षत्रियाख्येभ्यो वुञ् विधीयते। नच वासुदेवशब्दो गोत्राख्यं प्रातिपदिकम्। नापि क्षत्रियाख्यम्। तत् कुतो वुञः सम्भवः। अजाद्यदन्तमित्यादि। इतिकरणः प्रत्येकमभिसम्बध्यते। अजाद्यदन्त (२।२।३३) मित्यनेनाल्पाच्तरमित्यनेन (२।२।३४) वार्जुनशब्दस्य पूर्वनिपातमकुर्वतैतद् विज्ञापित मभ्यर्हितं पूर्वं निपतति। तेन मातापितरौ श्रद्धामेधे दीक्षातपसी इतरत्र शास्त्रादेवाभ्यर्हितस्य पूर्वनिपातः सिद्धो भवति। अभ्यर्हितत्वं तु वासुदेवशब्दस्य देवताविशेषत्वात्।

## ९९। गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्।

ग्लौचुकायनकः। स्लौचुकायनक इति। ग्लुचुकम्लुचुकशब्दाभ्यां प्राचामवृद्धात् फिन् (४।१।१६१)। तदन्ताद्वुञ्। आख्याग्रहणं किमर्थम्? न गोत्रक्षत्रियेभ्य इत्येवोच्येतेत्यत आह आख्याग्रहणमित्यादि। यद्याख्याग्रहणं न क्रियेत ततो येऽपि यथाकथञ्चित् क्षत्रिये वर्त्तन्ते तेभ्योऽपि स्यात्। नेष्यते। तस्मात् प्रसिद्धक्षत्रियपरिग्रहार्थमाख्याग्रहणं क्रियते। तेनेह न भवति विद्वान् क्षत्रियो भक्तिरस्येति। न विद्वच्छब्दः क्षत्रियशब्द इति प्रसिद्धः। क्षत्रियशब्दस्य तु सामानाधिकरण्यात् क्षत्रिये वृत्तिर्गम्यते। पाणिनीय इति पाणिनोऽपत्यमित्यण्। गाथिविदथीत्यादिना (६।४।१६५) प्रकृतिभावः। पाणिनो भक्तिरस्येति वृद्धाच्छः (४।२।११४) पाणिनीयः। पौरवो भक्तिरस्येति पौरवीयः।

१०० । जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने ।

एकशब्दा इति । एतेन समानशब्दोऽयमेकवाचीति दर्शयति । प्रत्ययः प्रकृतिश्चेति सर्वशब्देन योऽर्थ उपात्तस्तमाचष्टे । तद्वदङ्गाः क्षत्रिया भक्तिरस्येति । अङ्गादिभ्यः क्षत्रियेभ्यो बहुष्वपत्येषु द्व्यञ्मगधेत्यादिना (४।१।१७०) विहितस्याण स्तद्राजस्येत्यादिना (२।४।६२) लुक् क्रियते । बहुवचने ऽङ्गादयो जनपदिनो जनपदेन समानशब्दा भवन्ति । अत्र जनपदवृत्तिभ्योऽङ्गादिभ्यो यथा सोऽस्य भक्तिरित्येतस्मिन् (४।३।८५) विषये जनपदतदवध्योश्चेति (४।२।१२४) वुञ् भवति तथा जनपदिवृत्तिभ्योऽपि पञ्चाला ब्राह्मणा इति । यदा पञ्चालनिवासिषु साहचर्य्यात् पञ्चालादिशब्दो वर्त्तते तदा भवन्ति ब्राह्मणा जनपदेन बहुवचने समानशब्दाः । न तु ते जनपदिनः । तेनातिदेशाभावादणेव भवति । पाञ्चालः । सर्वग्रहणमित्यादि । यदि सर्वग्रहणं न क्रियते तदा प्रत्ययस्य विधीयमानतया प्राधान्यात् प्रधाने कार्य्यसम्प्रत्ययात् तस्यैवातिदेशः स्यात् । न प्रकृतेः । तस्माद् यथा प्रकृतेरप्यतिदेशो भवति तदर्थं सर्वग्रहणं क्रियते । स चेत्यादि । स च प्रकृत्यतिदेशः सर्वग्रहणं द्व्येकयोरेव प्रयोजयति । न बहुषु । जनपदशब्दो नात्र वृद्धः । तस्मादवृद्धो जनपदशब्दो दृश्यते । बहुवचने तु तद्राजस्य बहुषु तेनैवास्त्रियामिति (२।४।६२) लुकि कृते विनाप्यतिदेशेनावृद्धोऽतएव भवतीति तत्र प्रकृत्यतिदेशोऽनर्थकः । ततो नैतदर्थं सर्वग्रहणं कर्त्तव्यम् । वृद्धिनिमित्तेष्वित्यादि । वृद्धिनिमित्तेषु वुञादिष्वादिच्छायामवृद्धायां प्रकृतौ पुनर्वृद्धिभावात् प्रकृतिनिर्ह्रासे कृत इति सर्वग्रहणात् प्रकृत्यतिदेशेन निर्ह्रासः । निर्ह्रासो ऽल्पता ऽपचय इत्यर्थः । माद्र इति । एताञ्च प्रकृतिमपेक्ष्य मद्र इत्येषा प्रकृतिरल्पा भवति । वार्ज्य इत्येताञ्च वृजिरिति । ननु वतेः सर्वसादृश्यार्थत्वाद् वतिनिर्देशेनैव प्रकृतेरतिदेशो भविष्यतीति तत् किं सर्वग्रहणेन ? नैतदस्ति । यथैव तत्र सर्वसादृश्यार्थे वतौ न प्रत्ययार्थौ देवतार्थेऽतिदिश्यते तथेहापि जनपदरूपं जनपदिनि नातिदिश्यते । कस्मात् पुनस्तत्र प्रत्ययार्थौ नातिदिश्यते ? वतिना तयोर्भेदस्य

प्रतिपादितत्वात् । वतिर्हि साहश्ये विधीयते । साहश्यञ्च भेदाश्रयम् । यदि भवार्थस्यापि दैवतार्थतया विपरिणामः स्यात् तदा वतिरेव न स्यात् । तस्मादन्यस्य कार्य्यस्य साहश्यं वतिराचष्टे । प्रत्ययार्थयोस्तु भेदमिच्छापि च जनपदजनपदिनोर्भेदमाचष्ट इति । असति सर्वग्रहणे जनपदरूपं जनपदिनि न लभ्यते । तस्मात् सर्वग्रहणं क्रियते । बहुवचनग्रहणमित्यादि । समानशब्द-ताया विषयप्रदर्शनं लक्षणम् । तदर्थं बहुवचनग्रहणम् । अन्यथा हीत्यादि । यदि बहुवचनग्रहणं न क्रियेतेत्यर्थः । तत्रैवेति । बहुवचने । बहुवचन एव मद्राजप्रत्ययस्य लुकि कृते समानशब्दता भवति । ततश्च तत्रैवातिदेशः स्यात् । एकवचनद्विवचनयोर्न स्यादिति । तत्र समानशब्दताया अभावात् । बहुवचने त्वित्यादि । बहुवचनग्रहणे तु सति बहुवचने ये जनपदेन समानशब्दास्तेषां यत्र वा तत्र वातिदेशे विज्ञायमाने द्वेकयोरप्यसौ सिद्धो भवति ।

## १०१ । तेन प्रोक्तम् ।

प्रकर्षेणोक्तमिति । प्रकर्षोऽतिशयः । तेन व्याख्यातं तदध्यापितं वा प्रोक्त-मित्युच्यते । नतु कृतमिति । नतु कृतमुत्पादितं प्रोक्तमित्युच्यते । कस्मादि-त्याह कृते ग्रन्थ इति ( ४।३।११६ ) गतार्थत्वात् । कथं माथुरीत्यण् ? यावता वृद्धाच्छेनैव भवितव्यम् । नैष दोषः । कलापिनो (४।३।१०८) ऽणित्यत्राण्-ग्रहणस्यान्येभ्यो भवतीत्येतत् प्रयोजनं वक्ष्यति । तेन माथुरशब्दादप्यण् भवति । पाणिनीयमिति । पाणिनशब्दाद्वृद्धाच्छ इति (४।२।११४) छः । आपिशलम् । काशकृत्स्नमिति । आपिशलिकाशकृत्स्निशब्दाभ्यामिञश्चेत्यण् (४।२।११२) ।

## १०२ । तित्तिरिवरतन्तुखण्डिकोखाच्छण् ।

तैत्तिरीया इति । छण् प्रत्ययास्तेभ्यस्तदधीत इत्यण् (४।२।५९) । तस्य प्रोक्ताल्लुगिति (४।२।६४) लुक् । छन्दोब्राह्मणानि च तद्विषयाणीति (४।२।६६) तद्विषयता । छन्दसीत्यादि । कथं पुनश्छन्दसि लभ्यते ? नहि च्छन्दो-ग्रहणमस्तीत्याह शौनकादिभ्य इत्यादि ।

## १०३ । काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ।

णकार उत्तरत्र वृद्ध्यर्थ इति । उत्तरेषु योगेषु वृद्धिर्यथा स्यात् । इह

हि णकारस्य प्रयोजनं नास्ति। तस्य हि वृद्धिरेव प्रयोजनम्। काश्यप-कौशिकशब्दौ वृद्धिमन्तौ। तस्यापि चेत्यादि। ननु च च्छन्दोब्राह्मणादीनां तद्विषयता युक्ता। तत् कथं कल्पस्यापि सा भवतीत्याह शौनकादिभ्य इत्यादि। स्यादेतत्। यद्यपीदं शौनकादिभ्यश्छन्दसीत्यत्रानुवर्त्तते (४।३।१०३) तथापि च्छन्दोब्राह्मणादीनां तद्विषयतोच्यमाना कल्पस्य न सिध्यत्येव। नहि शौनकादिसूत्रानुवृत्तौ (४।३।१०६) सत्यामस्य योगस्य कल्पश्छन्दोभावं ब्राह्मण-भावमापद्यत इत्याह च्छन्दोऽधिकारविहितानाञ्चेत्यादि। कथं पुनरिष्यमाणो-ऽपि च्छन्दोधिकारविहितानां तद्विषयता लभ्यते? एवमर्थं छन्दोब्राह्मणानि च तद्विषयाणीत्यत्र च्छन्दोग्रहणं (४।२।६६) स्वर्य्यते। तेन शौनकादिभ्यश्छन्दसीतीदं (४।३।१०६) प्रकृतयो विहिताः प्रोक्तप्रत्ययाः। तेषां सर्वेषामेव कल्पादावपि तद्विषयता भवति। अथ गुणकल्पनया कल्पादीनामपि च्छन्दस्त्वं विवक्ष्यते। ननु च च्छन्दोब्राह्मणानि चेत्यत्र (४।२।६६) चकारस्यानुक्तसमुच्चयार्थत्वात् तेनैव प्रागेव कल्पादेस्तद्विषयता प्रतिपादिता। तत् किमर्थं पुनरनेन प्रकारेण प्रतिपाद्यते। तत्र वा कल्पादेस्तद्विषयता प्रतिपादनार्थश्चकारः कर्त्तव्योऽयं वा प्रकार आश्रयितव्य इति विकल्पप्रदर्शनार्थम्। इदानीन्तनेनेत्यादि। इदानीन्तनो यः काश्यपः स काश्यपगोत्रप्रभवत्वात् काश्यप इत्युच्यते। तथे-दानीन्तनो यः कौशिकः स कौशिकगोत्रप्रभवत्वात् कौशिक इत्युच्यते। तत्र यदि ऋषिग्रहणं न क्रियेत ततो णिनिः स्यात्। ऋषिग्रहणे तु सति न भवति। कथं न भवतीति? यावता काश्यपकौशिकशब्दावपि ऋषिशब्दावेव। तथाहि प्रवराध्याये ये पठ्यन्ते त ऋषय इति। इमावपि तत्र पठ्येते एव। नैष दोषः। विशेषणोपादानसामर्थ्यादयमृषिशब्दः क्रियाशब्दो विज्ञायत ऋषि-दर्शनादिति। तेन यावनन्यपुरुषसाधारणेनौपदेशिकेन दर्शनेन तद्वन्तौ काश्यप-कौशिकशब्दौ तत इदं प्रत्ययविधानम्। नचेदानीन्तनौ काश्यपकौशिक-शब्दावेवंविधौ। ताभ्यां छएव भवति।

## १०४। कलापिवैशम्पायनान्तेवासिभ्यश्च।

अभिधानेऽभिधेयोपचारात् कलापिवैशम्पायनान्तेवास्यभिधायिनः शब्दा

इह कलापिवैशम्पायनान्तेवासिग्रहणेन निर्दिष्टाः। अतएवाह कलाप्यन्तेवासिनामिति। ननु च ये व्यवहिताः शिष्यशिष्या स्ते कलापिवैशम्पायनान्तेवासिन एव भवन्ति। तदयुक्तमुक्तं कलाप्यन्तेवासिनश्चत्वारः। वैशम्पायनान्तेवासिनो नवेत्याह प्रत्यक्षकारिण इत्यादि। करोतिरत्राध्ययने वर्त्तते। यैः साक्षादधीतं ते प्रत्यक्षकारिणः। इहान्तेवासिनो गृह्यन्ते चैतावन्त एवेति। किमत्रायुक्तम्? कुत इह साक्षात्कारिणो गृह्यन्ते। नहि व्यवहिता इत्यत्र हेतुं पृच्छति। कलापिखाण्डायनग्रहणादिति हेतुनिर्देशः। तथाचेत्यादि। अस्यैव विवरणम्। वैशम्पायनस्य कलाप्यन्तेवासी। तस्य येऽन्तेवासिन स्ते वैशम्पायनान्तेवासिनो भवन्त्येव। यदि तत्र ये व्यवहितास्तेऽप्यन्तेवासिनो गृह्येरन् कलापिग्रहणमनर्थकं स्यात्। वैशम्पायनान्तेवासिभ्य इत्येवं ब्रूयात्। तथा वैशम्पायनान्तेवासी कठः। कठान्तेवासी खाण्डायनः। तत्र यदि व्यवहिता अपि गृह्येरंस्ततो वैशम्पायनान्तेवासित्वादनेनैव सूत्रेण सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फल एव स्यात्। तस्मादिहापि कलापिग्रहणं शौनकादिषु खाण्डायनशब्दस्य पाठ एतदुभयमपि साक्षात्कारिग्रहणस्य लिङ्गं ज्ञापकम्। हारिद्रविण इत्यादि। हरिद्रुप्रभृतिभ्यः प्रोक्तार्थे णिनिः। तदन्तात् तदधीते तद्वेदेत्यण् (४।२।५९)। तस्य प्रोक्ताल्लुक् (४।२।६४)। अयञ्च योगश्छन्दोऽधिकारमनुवर्त्तते। तेन तद्विषयता भवति। उलपेन चतुर्थेनेति। सहार्थे तृतीया। कालापकमिति। कलापिन इदं कालापकम्। गोत्रचरणाद्वुञ् (४।३।१२६)। ननु च धर्माम्नाययोर्वुञ्। नचेमे शिष्या धर्माम्नायाः? तत् कथं वुञ्? एवं तर्ह्युपमानाद्भविष्यतीति। कालापकमिव धर्म्मवच्छिष्या उच्यन्ते। यथा धर्मः कलापिसम्बन्धी तथा शिष्या इत्युच्यत उपमानार्थः। आलम्बिर्नाम प्राचां देशः। तत्रोत्पन्नश्चरकः। एवं पलङ्गकमलावुभौ। प्राचामेव त्रयः। एते प्राच्याः। वैशम्पायनशिष्या ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे चरकाः। मध्यदेशे भवा मध्यमीयाः। गहादिषु (४।२।१३८) मध्यमध्यमञ्चाण् चरण इति पठ्यते। तस्यायमर्थः। मध्यशब्दो मध्यमभावमापद्यते। छप्रत्ययश्च ततो भवति। चरणे तु प्रत्ययार्थेऽण् च भवतीति। तत्र यदा ऋचाभा-

दीनां चरणत्वं न विवक्ष्यते तदा च्छे कृते मध्यमीया इति भवति। चरणविवक्षायां त्वणि कृते माध्यमा इति भवति। उदक्तु भवा उदीच्याः। द्युप्रागपागित्यादिना (४।२।१०१) यत्। उदीच्येषु मध्ये श्यामायनिश्चरकः। कठकलापिनावप्युदीच्येषु चरकौ। तयोरुक्तं कठकलापिनोः। किमुक्तम्? एकस्य तावदुक्तं कठचरकाल्लुगिति (४।३।१०७)। अपरस्याप्युक्तं कलापिनोऽणिति (४।३।१०८)। ननु च वैशम्पायनान्तेवासिनां कठेनैव चरक इत्येषाख्या। तत् कथं चरक इत्युच्यतेत्याह चरकवैशम्पायनस्येत्यादि। यद्यपि तेषां चरक इत्याख्यानं न भवति तद्गुरोस्तु वैशम्पायनस्य भवति। तत्सम्बन्धेन तच्छिष्या अपि तथोच्यन्ते।

## १०५। पुराणप्रोक्तेषु ब्राह्मणकल्पेषु।

भाल्लविन इति। भाल्लव शाट्यायन ऐतरेय इत्येतेभ्यः प्रोक्तार्थे णिनिः। तदन्तात् तदधीत (४।२।५९) इत्युत्पन्नस्य प्रोक्ताल्लुक् (४।२।६४)। छन्दोब्राह्मणा- (४।२।६६) नीत्यादिना तद्विषयता। पैङ्गीति। आरुणपराजीति। पिङ्गारुणपराजशब्दाभ्यां णिनिः। याज्ञवल्क्याणीति। आश्मरथ इति। याज्ञवल्क्याश्मरथ्यशब्दाभ्यां गर्गादियञन्ताभ्यां कण्वादिभ्यो गोत्र (४।२।१११) इत्यण्। आपत्यस्येत्यादिना (६।४।१५१) यलोपः। ननु याज्ञवल्क्यादीन्यपि पुराणप्रोक्तान्येव ब्राह्मणानि। ब्राह्मणान्तरैः पुराणप्रोक्तैस्तुल्यत्वादित्याह याज्ञवल्क्य इत्यादि। आख्यानेषु ह्येषा वार्त्ता। याज्ञवल्क्यादयोऽपरकालाः प्रवक्तारो ऽन्येभ्यः प्रवक्तृभ्यः। तथाच वस्तुत्वमनपेक्ष्य व्यवहरति सूत्रकार इत्यदोषः। तद्विषयता कस्मान्न भवति? छन्दोब्राह्मणानीत्यादिनेति (४।२।६६) भावः। प्रतिपदमित्यादि। लक्षणप्रतिपदोक्तपरिभाषया हि प्रतिपदं विशेषणम्। ब्राह्मणमुच्चार्य्य ब्राह्मणेषु यः प्रत्ययो विहितस्तस्य तद्विषयता विधीयते। तस्मात् तद्विषयतास्य न भवति। कल्पेषु तर्हि कस्मान्न भवति? यथा काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिन इत्यत्रेत्याह न चायमित्यादि। छन्दोऽधिकारे ये योगास्तद्विहितस्य प्रत्ययस्य तद्विषयता भवति। न चायं योगश्छन्दोऽधिकारमनुवर्त्तते। तेनैतद्विहितस्य प्रत्ययस्याध्येतृवेदि-

द्विषयता कल्पेषु न भवति । पैङ्गी कल्पः । आरुणपराजी कल्प इति । पुराण इति कोऽयं शब्दः ? यावता सायंचिरमित्यादिना (४।३।२३) ट्युट्युलोः सन्नियोगेन तुटि कृते पुरातनमिति भवितव्यमितयत आह पुराण इति निपातनात् तुड्भावः । यद्येवं न भवति पुरातनमितयाह न चेतयादि । ननु बाधकान्यपि निपातनानीतयतो भवितव्यमेव बाधकेनेति । अबाधकान्यपि । अबाधकान्यपि भवन्ति । एतच्च शदेरगतौ त इतयत्र (७।३।४२) प्रतिपादितम् ।

## १०६ । शौनकादिभ्यश्छन्दसि ।

छाणोरपवाद इति । ये वृद्धास्तेभ्यश्छस्यापवादः । शेषेभ्यस्त्वणः । शौनकिनः । वाजसनेयिन इति । शौनकेन प्रोक्तं वाजसनेयेन प्रोक्तमिति-णिनिः । तदन्तात् तदधीत (४।२।५९) इतयण् । तस्य प्रोक्ताल्लुक् (४।२।६४) । पूर्ववत् तद्विषयता । केवलादित्यादि । तत् संज्ञार्थमित्यत्रायं हेतुः । यस्मात् केवलात् कठाल्लुकं वक्ष्यति तस्मात् कठशाठ इति यदत्र पठ्यते तत् संज्ञार्थम् ।

## १०७ । कठचरकाल्लुक् ।

कठाश्चरका इति । प्रोक्तप्रत्ययस्य लुकि कृते यो ह्यध्येतर्य्यण् भवति तस्यापि प्रोक्ताल्लुक् । पूर्ववत् तद्विषयता ।

## १०८ । कलापिनोऽण् ।

कालापा इति । पूर्ववत् प्रोक्तप्रत्ययान्तादध्येतर्य्युत्पन्नस्याणो लुक् । तद्-विषयता च । अथेतयादि । ननु चासतयण्ग्रहणे यथा प्राप्ते विधीयमाने णिनेरेवापवादः स्यात् । नैतदस्ति । एवं हि वचनमनर्थकं स्यात् । तस्माद् यो विहितो न च प्राप्नोत्यनेन बाधितत्वात् स एव भविष्यति । स चाणेव । एवमादीतयादिशब्देन मौदाः पैप्पलादाः शाकला जाजला इतेयतेषां ग्रहणम् । असति त्वण्ग्रहणे सर्वमेव न सिध्येत् । वृद्धाच्छ इति (४।२।११४) छेनाण औत्सर्गिकस्य बाधितत्वात् ।

## १०९ । छगलिनो ढिनुक् ।

छागलेयिन इति । इहापि पूर्ववदेवाध्येतर्य्युत्पन्नस्याणो लुक् च तद्-विषयता च । एवमुत्तरयोर्योगयोर्वेदितव्यः ।

## ११० । पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।

यथासंख्यमित्यादि । पाराशर्य्याद् भिक्षुसूत्रे प्रत्ययः । शिलालिनो नटसूत्रे । तद्विषयता चात्रेष्यत इति । कथं पुनरिष्यमाणापि सा लभ्यत इत्याह तदर्थमित्यादि । ननु चानुवर्त्तमानच्छन्दोग्रहणेनैव तद्विषयता प्राप्नोति । न । भिक्षुनटसूत्रयोरच्छन्दस्त्वादित्याह गुणकल्पनया चेत्यादि । छन्दसस्सूपचार-निमित्तं यो धर्म्मः स इह गुणोऽभिप्रेतः । तद्धेतुका कल्पना । यथा छन्दो यदर्थमधीयते तथा सूत्रमपि तद्धेतु' सम्पादयति । भिक्षुनटयोरित्येवमादिकया गुणकल्पनया भिक्षुनटसूत्रयोश्छन्दस्त्वमौपचारिकम् । पाराशरिण इति । पाराशर्य्यशब्दो गर्गादिषु यञन्तः । आपत्यस्य च तद्धितेऽनातीति (६।४।१५१) यलोपः । शैलालिन इति । न स्तद्धित इति (६।४ १४४) टिलोपः । पाराशरमिति । कण्वादिभ्यो गोत्र (४।२।१११) इत्यण् । शैलालमित्यौ-त्सर्गिकोऽण् । नान्तस्य टिलोपे सब्रह्मचारिपीठेत्यादिना (६।४।१४४, वा) टिलोपः ।

## १११ । कर्मन्दकृशाश्वादिनिः ।

## ११२ । तेनैकदिक् ।

तेनेति । तुल्यार्थैरतुलोपमाभ्यामिति (२।३।७२) तृतीया । सौदामनीति । अन्निति (६।४।१६७) प्रकृतिभावाट् टिलोपाद्यभावः । ननु च तेनेति प्रकृतमेव । तत् किमर्थं पुनरिह तृतीया समर्थविभक्तिरुपादीयत इत्याह तेनेति प्रकृत इत्यादि । पूर्वत्र हि तेनेति च्छन्दोऽधिकारसम्बद्धम् । अतस्तदनुवृत्तौ तस्याप्यनु-वृत्तिः स्यात् । तस्माच्छन्दोऽधिकारनिवृत्तये पुनरिह तृतीया समर्थविभक्ति रुपादीयते । किमर्थः पुनश्छन्दोऽधिकारः पूर्वत्र क्रियत इत्याह पूर्वसूत्र इत्यादि । पूर्वेषु योगेषु च्छन्दोऽधिकारात् तद्विषयता साध्यते । तस्मात् तत्र

च्छन्दोऽधिकार: कर्त्तव्य:।  तस्मिंस्तु क्रियमाणे तन्निवृत्त्यर्थं इह च यत्न आस्थेय:। अन्यथेह च्छन्दस्येव प्रत्यय: स्यात्।

११३। तसिश्च।

११४। उरसो यच्च।

११५। उपज्ञाते।

अकालकमिति। कालपरिभाषारहितमित्यर्थ:।

११६। कृते ग्रन्थे।

क: पुन: कृतोपज्ञातयोर्विशेष:? येनोपज्ञायत इति प्रकृते सति कृत-ग्रहणं क्रियत इत्याह उत्पादितमित्यादि।

११७। संज्ञायाम्।

११८। कुलालादिभ्यो वुञ्।

११९। क्षुद्राभ्रमरवटरपादपादञ्।

स्वरे विशेष इति। अणि हि प्रत्ययस्वरेणान्तोदात्तत्वं स्यात्। अञि तु सति ञित्स्वरेणाद्युदात्तत्वं भवति।

१२०। तस्येदम्।

तस्येति। यदि पुंलिङ्गेनायं निर्देश: पुंस्येव स्यात्। न द्विवचनबहु-वचनान्तात्। प्रत्यक्षवाचिनश्च न स्यात्। नापि विशेषवाचिन:। तच्छब्दस्य परोक्षवस्तुमात्रवाचित्वात्। प्रत्ययार्थोऽपीदमित्येकवचनेन नपुंसकलिङ्गेन निर्दिष्ट इत्येकस्मिन्नर्थे स्यात्। नपुंसक एव। नान्यत्र। परोक्षे न स्यात्। इदम: प्रत्यक्षवाचित्वादित्येतत् सर्वमाशङ्क्याह प्रकृतिप्रत्ययार्थयोरित्यादि। प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितम्। प्रत्ययार्थेऽपि षष्ठ्यर्थसम्बन्धिमात्रं येन विना षष्ठ्यर्थो न सम्पद्यते। यदपरमित्यादिना मात्रशब्देन यद् व्यवच्छिन्नं तद्दर्शयति। आदिशब्देन सामान्याभिधायित्वं गृह्यते। अस्य तु सर्वत्र विवक्षाकारणं तस्यापत्यमित्य (४।१।९२) त्रैवोक्तम्। अथेह कस्मान्न भवति?

देवदत्तस्यानन्तरम् । देवदत्तस्य समीपमित्यादि । अनन्तरादिष्वित्यादि । अनभिधानादिति । प्रत्ययान्तेनानन्तरादीनामप्रत्यायनमितरर्थः । संवहेस्तुरिति । वहेस्तन्तादितरर्थः । सांवहित्रमिति । संपूर्वाद्वहेस्तुरिट् च । यणादेशः । सिद्ध एवाणिति । प्रागदीव्यतोऽणित्यनेन (४।१।८३) । यद्येवं किमर्थमुपसंख्यानमित्याह इडर्थमित्यादि । उपसंख्याने ह्यसतीडागमो न स्यात् । एकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधात् (७।२।१०) । अग्नीध इत्यादि । अग्नीध इत्येतस्माच् शरणे गृहे वाच्ये रञ् वक्तव्यः । भसंज्ञा च वक्तव्या । भसंज्ञायाञ्च सत्यां पदसंज्ञाभावाज्जश्त्वं न भवति । समिधामित्यादि । आधीयन्ते येन मन्त्रविशेषेण समिध स्तस्मिन् समिधामाधानविशेषे समिच्छब्दात् षेण्यण् प्रतरयो वक्तव्यो व्याख्येयः । व्याख्यानन्तु हविर्निवाससामिधेनीष्वित्येतन्निर्देशमाश्रितर वक्तव्यम् । सामिधेनीति । षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष् । हलस्तद्धितस्येति (६।४।१५०) यलोपः ।

१२१ । रथाद् यत् ।

नान्यत्रेति । सन्नाहादौ ।

१२२ । पत्रपूर्वादञ् ।

१२३ । पत्राध्वर्युपरिषदश्च ।

पत्राद्वाह्य इतरवधारणमत्र द्रष्टव्यम् । पत्राद् वाह्य एवेति । अन्यत्र कस्मान्न भवति ? अनभिधानात् । अथ किमर्थं न पूर्वेण सहैकयोग एव क्रियते ? पत्रपूर्वपत्राध्वर्युपरिषदोऽञिति ? नैवं शक्यम् । एवं हि पूर्वेपत्रपूर्वात् प्रातिपदिकादन्यतोऽपि प्रसज्येत । योगविभागे पूर्वस्मिन् योगे रथादितरनुवृत्ते रथ एव पत्रपूर्वग्रहणेन विशेष्यत इति न भवतरतिप्रसङ्गः । एकयोगे तु रथाद्यनुवृत्तौ सतरां यथा पत्रपूर्वतया रथो विशेष्यते तथा पत्रादिभिरपि रथ एव विशेष्यते इतरनिष्टं स्यात् । तस्माद् योगविभाग एव न्याय्यः ।

१२४ । हलसीराट् ठक् ।

## १२५। द्वन्द्वाद् वुन् वैरमैथुनिकयोः। (D)

वाभ्रवशालङ्कायनिकेति। वुन्नन्तः स्वभावादेव स्त्रियां वर्त्तत इति टाप्। प्रत्ययस्थादित्यादिनेत्त्वम् (७।३।४४)।

## १२६। गोत्रचरणाद् वुञ्।

वुनि प्रकृते वुञ्विधानं वृद्ध्यर्थम्। तस्मादृद्धा एव गोत्रचरणशब्दाः प्रयोजयन्ति। न वृद्धाः। तेषु हि वुञि वुनि वा सति न कश्चिद् विशेषः। ग्लौचुकायनक इति। प्राचामवृद्धात् फिन् बहुलमिति (४।१।१६०) फिन्। तदन्ताद्वुञ्। चरणादित्यादि। चरणाद्धर्माम्नाययोरेवेष्यते। नान्यत्र। अनभिधानादिति।

## १२७। सङ्घाङ्कलक्षणेष्वञ्यञिञामण्।

तेन वैषम्याद् यथासंख्यं न भवति। असति तु घोषग्रहणेऽञादय स्त्रयः सङ्घादयोऽपि त्रय इति समानाद् यथासंख्यं स्यात्। घोषे च प्रत्ययो न स्यात्। वैद इति। अनृष्यादिनाञ् (४।१।१०४)। तदन्तादण्। अङ्कलक्षणयोः को विशेष इति? नास्त्येव कश्चिद् विशेषः। पर्य्यायत्वादङ्कलक्षणयोरिति मन्यते। लक्षणमित्यादिना विशेषं दर्शयति। लक्षणं चिह्नं लक्ष्यस्यैव स्वम्। नान्यस्य। यथा विद्या विदानाम्। विदानामेव हि लक्षणानां सम्बन्धिनाम्। नान्यस्य कस्यचित्। अङ्कस्तु गवादिस्थो न गवादीनां स्वम्भवति। किं तर्हि? ततोऽन्येषाम्। गवादिस्वामिनाम्। अथ किमर्थं णित्करणं प्रत्ययस्य? यावताञन्ताद्यञन्ताः प्रकृतयो वृद्धा एवात आह णित्करणमित्यादि। वैदी विद्येत्यत्र ङीब् यथा स्यात्। इह च वैदीविद्य इत्यत्र वृद्धिनिमित्तस्य च तद्धितस्यारक्त विकार इति (६।३।३९) पुंवद्भावप्रतिषेधो यथा स्यात्। एवमर्थं णित्करणम्। न वृद्ध्यर्थम्।

## १२८। शाकलाद् वा।

वुञोऽपवाद इति। चरणलक्षणस्य शाकलशब्दस्य चरणलक्षणत्वात्। शाकला इति। शाकल्यशब्दाद् गर्गादियञन्तात् कण्वादिभ्यो गोत्र (४।२।१११)

---

(D) मैथुनिका विवाह इत्यर्थः।

इति प्रोक्तार्थेऽण्। आपत्यस्य च तद्धितेनातीति (६।४।१५१) यलोपः। शाकल इति स्थिते तदधीते तद्वेदेत्यण् (४।२।५८)। तस्य प्रोक्ताल्लुक् (४।२।६४) शाकलाः। तेषां सङ्घः शाकलः शाकलक इति वा।

## १२९। छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः।

वुञणोरपवाद इति। छन्दोगादिभ्यश्चरणलक्षणस्य वुञोऽपवादः। नटादौत्सर्गिकस्याणः।

## १३०। न दण्डमाणवान्तेवासिषु।

दण्डप्रधाना माणवा दण्डमाणवा इति। मध्यपदलोपिसमासं दर्शयति। स पुनर्मयूरव्यंसकादित्वाद् वेदितव्यः। मयूरव्यंसकादेराकृतिगणत्वात्। वुञ्प्रत्ययो न भवतीति। एतेन वुञोऽयं प्रतिषेध इति दर्शयति। कथं पुनर्ज्ञायते वुञोऽयं प्रतिषेध इत्याह गोत्रग्रहणमित्यादि। इह हि गोत्रग्रहणमनुवर्त्तते। गोत्रचरणाद् वुञित्यतः (४।३।१२६)। तेनायमर्थो भवति। तस्येदमित्येतस्मिन्नर्थे (४।३।१२०) यः प्रत्ययो गोत्रात् प्राप्नोति स दण्डमाणवान्तेवासिषु न भवतीति गोत्रे वुञेव प्राप्नोतीति। अतस्तस्यैवायं प्रतिषेधो विधीयते। गौकक्ष्यशब्दाद् गर्गादियञन्तात् कण्वादिभ्यो गोत्र (४.२।१११) इत्यण्। पूर्ववद् यलोपः। दाक्षा इति। दाक्षिप्लाक्षिमाहकिभ्य इञश्चेत्यण् (४।२।११२)।

## १३१। रैवतिकादिभ्यश्छः।

पूर्वेणेति। गोत्रचरणाद् वुञित्यनेन (४।३।१२६)। रैवतिकीयमिति। रैवतस्य अपत्यमिति रैवतिकः। ततश्छः। स्वापिशीयमिति। स्वापिशिशब्दादिञन्ताच्छः। अथच्छग्रहणं किमर्थम्? नानन्तरसूत्राद् विप्रतिषेधोऽनुवर्त्तिष्यते। तत्र रैवतिकादिभ्यो वुञि प्रतिषिद्धे वृद्धत्वादेषाञ्छ एव भविष्यति। भवेत् सिद्धं यत्र च्छस्यापवादो नास्ति रैवतिकीय इति। ये त्वत्रेञन्ताः पठ्यन्ते स्वापिशि औदमेघि औदवापि इत्येवमादयस्तेभ्य इञश्चेत्यण् (४।२।११२) प्रसज्येत। तस्माच्छग्रहणं कर्त्तव्यम्। अथ चेमत्रञिशब्दोऽत्र कस्मात् पठ्यते?

यावता गर्गादिरसौ । गर्गादित्वाच्छ एव भविष्यति । न सिध्यति । गर्गादिपाठस्यान्यस्तद्धितार्थोऽवकाशः । इदमर्थे तु परत्वाद् वुञेव स्यात् । तस्मादिदमर्थे तु स्यादिति युक्तस्तस्येह पाठः ।

## १३२ । कौपिञ्जलहास्तिपदादण् ।

गोत्राधिकारादिति । गोत्रवुञोऽपवाद इत्यत्रायं हेतुः । यत्र हि गोत्रग्रहणेऽधिक्रियमाणे कौपिञ्जलहास्तिपदशब्दाभ्यां गोत्रवाचकाभ्यामण् विधीयते । स च नाप्राप्ते गोत्रवुञीति तेन तस्यैवापवादो विज्ञायते । कौपिञ्जल इति । कुपिञ्जलस्यापत्यमित्येतस्मादेव निपातनादण् । तदस्मात् कौपिञ्जलस्येदमिति पुनरण् । हास्तिपद इति । हस्तिन इव पादावस्येति हस्तिपादस्यापत्यमित्यस्मादेव निपातनादण् । पादस्य पद्भावः । हास्तिपदस्येदमिति पुनरनेनाण् । अथाण्ग्रहणं किमर्थम् । न यथाविहितमेवोच्येत । ननु चैवमुच्यमाने वृद्धाच्छः ( ४।२।११४) स्यात् । नैतदस्ति । यद्येताभ्याञ्छोऽभीष्टः स्याद् रैवतिकादिष्वेतौ पठेयाताम् । रैवतिकादिभ्यस्तु पृथगुपादानाद् विज्ञायते नैताभ्यां छो भवतीति । वुञ् तर्हि स्यात् । नैतदस्ति । आरम्भो ह्येवमनर्थकः स्यात् । गोत्रादित्येवं वुञः सिद्धत्वात् । नानर्थकः । यत्रासौ प्रतिषिध्यते तत्रारम्भस्य सार्थकत्वात् । क्व चासौ प्रतिषिध्यते ? न दण्डमाणवान्तेवासिषु (४।३।१३०) । तस्मादण्ग्रहणं कर्त्तव्यम् । णित्करणं कौपिञ्जली क्रियेति ङीब् यथा स्यात् । इह च कौपिञ्जली क्रियास्य कौपिञ्जलीक्रिय इति वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इति (६।३।३८) पुंवद्भावप्रतिषेधो यथा स्यात् ।

## १३३ । आथर्वणिकस्येकलोपश्च ।

चरणवुञोऽपवाद इति । आथर्वणिकस्य चरणवाचित्वात् । आथर्वण इति । अथर्वणा प्रोक्तमित्यण् । अन्निति (६।४।१६७) प्रकृतिभावः । आथर्वण इति स्थिते ऽध्येतरि तदधीते तद्वेदेत्यनुवर्त्तमाने ( ४।२।५९ ) वसन्तादिभ्यष्ठक् (४।२।६३) । आथर्वणिकः । अतएव निपातनात् प्रोक्ताल्लुगिति (४।२।६४) लुग् न भवति । चरणाद्धर्माम्नाययोरिति । पूर्वोक्तमिष्टं स्मारयति ।

## १३४ । तस्य विकारः ।

प्रकृतेरवस्थान्तरमिति । प्रकृतेः कारणस्यावस्थान्तरमन्यथात्वम् । अप्राणीति । प्राणिनः प्राणिरजतादिभ्योऽञ् (४।३।१५४) वक्ष्यति । आद्युदात्तमिति । अनुदात्तादेश्चेत्यञ् (४।३।१३८) वक्ष्यति । अवृद्धमिति । वृद्धान्मयटं वक्ष्यति नित्यं वृद्धशरादिभ्य इति (४।३।१४४) । यस्य च नान्यत् प्रतिपदं विधानमिति । गोपयसो र्यदित्येवमादि (४।३।१६०) । ननु चान्निति (६।४।१६७) प्रकृतिभावेन भवितव्यम् । तत् कथमाश्म इति भवतीत्याह अश्मनो विकार इति टिलोप इति । टिलोपार्थमश्मनो विकार इत्येतदुपसंख्यानं कृतम् । नित्स्वरेणाद्युदात्ता एत इति । अश्मादयः शब्दाः । तत्राश्मभस्मशब्दौ मनिन्प्रत्ययान्तत्वाद् नित्स्वरेणाद्युदात्तौ । मृत्तिकाशब्दोऽपि तिकन्प्रत्ययान्तत्वात् । मृदस्तिकन्निति (५।४।३९) । अथ तस्येति वचनं किमर्थम् ? यावता तस्यग्रहणं प्रकृतमेवेत्याह तस्य प्रकरणमित्यादि । तद्धि प्रकृतं तस्येति वचनं शैषिकैर्घादिभिः सम्बद्धम् । अतस्तदनुवृत्तौ तेऽप्यनुवर्त्तेरन् । अस्मिंस्तु तस्य ग्रहणे क्रियमाणे पूर्वकं तस्येति वचनं निवर्त्तते । तस्मात् प्रकृतेऽपि तस्येति वचने शैषिकनिवृत्त्यर्थं पुनस्तस्येत्युच्यत इति । ननु च प्रधानं घादयः । विधीयमानत्वात् । तस्येति तु वचनमप्रधानम् । तदर्थत्वात् । तत्रायुक्ता गुणे निवर्त्तमाने प्रधानस्य निवृत्तिः । प्रधानवृत्तिर्हि गुणो भवति । न गुणार्थवृत्तिःप्रधानम् । नैष दोषः । तस्येति वचनसामर्थ्यात् प्रधानस्यापि गुणनिवृत्तौ निवृत्तिर्भवतीति । अन्यथा हि तस्येति वचनमनर्थकं स्यात् । अणादीनामपि तर्हि निवृत्तिः प्रसज्येत । यथैव हि प्रकृतं तस्येतिवचनं घादिभिः सम्बद्धं तथा ऽणादिभिरपि । नैष दोषः । उभयेषां हि निवृत्तौ हि निष्फलः सूत्रस्यारम्भः स्यात् । विधेयस्य कस्यचिदभावात् । तस्मान्न भवत्युभयेषां निवृत्तिः । ननु चारम्भसामर्थ्यादुभयेषामन्यतरेषां निवृत्तिरित्येतावद् विज्ञायते । तत् किं घादयो निवर्त्तन्ते ? उताणादयः ? सन्देह एव । सन्देहमात्रमेतत् । सर्वसन्देहेष्विदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति (प,१) । घादयो निवर्त्तन्त इत्येवं व्याख्यास्यामः । स्वरितत्वादणादीनामनुवृत्ति-

भविष्यति। ननु चास्वरितत्वाद् घादीनामननुवृत्तिः। सैव तु तस्येति वचनेनाख्यायते। शैषिकनिवृत्त्यर्थम्। विकारावयवयोरित्यादिना विशेषं दर्शयति। केन पुनर्विकारावयवयोर्घादयः प्राप्नुवन्ति। तस्येदमित्यनेन। तस्येदंविशेषत्वात् तयोः। हालः सैर इति। यदि शैषिका अनुवर्त्तेरंस्ततो हलसीरशब्दाभ्यां हलसीराट् (४।३।१५४) ठगिति ठक् स्यात्। तन्निवृत्तौ त्वणेव भवति।

## १३५। अवयवे च प्राण्योषधिवृक्षेभ्यः।

मौर्वं काण्डमिति। मूर्वाशब्दादवयवे प्रत्ययः। मौर्वं भस्मेति। विकारे। इतउत्तरमित्यादिना वक्ष्यमाणानां प्रत्ययानां विषयविभागं दर्शयति। कथमिति? केन प्रकारेणायं विभागो लभ्यते। प्रत्यक्षमर्थं पृच्छति। इयमपीत्यादि। यतो हेतोरेष विषयविभागो लभ्यते तद्दर्शयति। तत्र फलपाकान्ता ओषधयः। पुष्पवन्तः फलवन्तश्च वृक्षाः। तद्विशेषा वनस्पतयः फलवन्त एव। तत्र वनस्पतिग्रहणेन वृक्षविशेषा स्ततोऽन्येन गृह्यन्ते। वृक्षग्रहणे तु वनस्पतेरपि ग्रहणं विज्ञेयम्। विकारावयवयोरित्यादि। युगपदधिकारे घ्नणादीन् वक्ष्यामीत्येवमर्थौ युगपदधिकारः। अणादीनामर्थनिर्देशार्थोऽपि कस्मान्न भवतीत्याह कृतनिर्देशौ हि ताविति। कृतनिर्देशौ हि तावर्थौ तस्येदमित्यनेनैव (४।३।१२०)। तस्येदंविशेषत्वात् तयोः।

## १३६। बिल्वादिभ्योऽण्।

अञ्मयटोरपवाद इति। यदत्रानुदात्तादि तस्मादनुदात्तादेश्चेति (४।३।१४०) प्राप्तस्याञोऽपवादः। यदृद्धं ततो नित्यं वृद्धशरादिभ्य (४।२।१४४) इति मयटः। तत्र बिल्वशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते बिल्वतिष्ययोर्वान्तस्वरितत्वमिति ( फिट् १।२, ) स्वरितत्वं भवति। उदात्तो वा। व्रीहिमुद्गशब्दौ घृतादित्वादन्तोदात्तौ। मसूरगोधूमशब्दौ लघावन्ते द्वयोश्च बह्वषो गुरुरिति ( फिट्, २।४२) मध्योदात्तौ। एवं गवेधुकाशब्दोऽपि। इषेः क्सुरिक्षुः। प्रत्ययस्वरेणान्तोदात्तः। वेणुशब्दोऽपि विभाषा वेण्विन्धानयो-( ६।१।२१५ ) रिति पक्षे ऽन्तोदात्त एव। कर्पासीपाटलीशब्दौ जातेरस्त्रीविषयादयोपधादिति

४।१।६३) ङीषन्तौ । ङीष्प्रत्ययान्तत्वात् ङीष्प्रत्ययस्वरेणान्तोदात्तौ । कर्कन्धूशब्दो ऽन्दूदृन्भूजम्बूकफेलूकर्कन्धूर्दिधिषूरिति ( उण्, १।९३ ) निपातनादन्तोदात्तः । कुटीरशब्दो लघावन्त ( फिट्, २।४२) इत्यादिना मध्योदात्तः । सर्वं एते ऽनुदात्तं पदमेकवर्जमित्यनुदात्तादयः (६।१।१५८) । तेनाञ्बाधनार्थं ग्रहणमिति । अथाण्ग्रहणं किमर्थम् ? न विल्वादिभ्यो यथाविहितमेवोच्येत । नैवं शक्यम् । पाटलीशब्दो ह्यत्र वृक्षः पठ्यते । तस्मादञो बाधके मयटि प्राप्ते पुनर्वचनादञेव स्यात् । अण्ग्रहणात् त्वणेव भवति । तस्मादण्ग्रहणं क्रियते ।

## १३७ । कोपधाच्च ।

यथायोगमिति । प्राण्योषधिवृक्षेभ्यो विकारावयवयोः । अन्येभ्यस्तु विकारमात्र इत्येषो यथायोगार्थः । अञोऽपवाद इति । ओरञ् ( ४।३।१३९ ) अनुदात्तादेरित्येताभ्यां (४।३।१४०) प्राप्तस्य । तित्तिडीकमाण्डूकदर्दुरूकमधूकशब्दा लघावन्त इत्यादिना ( फिट्, २।४२) मध्योदात्ताः । तेनानुदात्तादयो भवन्ति ।

## १३८ । त्रपुजतुनोः षुक् ।

ओरञोऽपवाद इति । अनुदात्तत्वात् । अप्राण्यादीति । आदिशब्देनौषधित्वमवृक्षत्वं च गृह्यते ।

## १३९ । ओरञ् ।

अनुदात्तादेरन्यदिहोदाहरणमिति । अनुदात्तादेरुत्तरसूत्रेणैव सिद्धत्वात् । दैवदारवम् । भाद्रदारवमिति । देवदारुभद्रदारुशब्दौ पीतद्र्वर्थानामित्याद्युदात्तौ (फिट्, २।२७) । तस्यायमर्थः । पीतद्रुरर्थो (E) येषां ते पीतद्र्वर्थाः । तेषां पीतद्र्वर्थवचनानामादिरुदात्तो भवति ।

## १४० । अनुदात्तादेश्च ।

दाधित्थमित्यादि । दध्नि तिष्ठतीति । कपौ तिष्ठतीति । सुपि स्थ (३।२।४) इति कः । अतो लोप (६।४।४८) इत्यकारलोपः । पृषोदरादित्वात्

---

(E) पीतद्रुः सरली देवदारुविशेष इति यावत् ।

सकारस्य तकारः। (६।४।४८) उपपदसमासः। समासस्वरेणान्तोदात्तौ। तेन दधित्थकपित्थशब्दावनुदात्तादी भवतः।

## १४१। पलाशादिभ्यो वा।

उभयत्र विभाषेयमिति। प्राप्ते चाप्राप्ते च। तामेवोभयत्र विभाषां स्पष्टीकर्त्तुमाह पलाशखदिरेत्यादि। पलाशशब्दो घृतादित्वादन्तोदात्तः। खदिरशब्दोऽपि चित्स्वरेण। इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरजित्यनुवर्त्तमाने (उण्, १।५१) ऽजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा इति (उण्, १।५३) किरच् प्रत्ययान्तो निपातितः। शिंशपाशब्दः पान्तानां गुर्वादीनामिति (फिट्,३।५५) मध्योदात्तः। तस्यायमर्थः पाशब्दान्तानां गुर्वादीनां द्वितीयमुदात्तं भवतीति। अथ द्वितीयं ( फिट्, ३।५० ) प्रागीषादित्यत्रानुवर्त्तते। स्पदि किञ्चिच्चलने। अस्मादनुदात्तादेश्च हलादे ( ३।२।१४९ ) रिति युच् स्पन्दनः। चित्स्वरेणान्तोदात्तः। कॄशॄगॄकटिपटिशटिभ्य ( उण्, ४।४७० ) ईरन्। करीरशब्दो नित्स्वरेणाद्युदात्तः। कॄतॄभ्यामीषन् (उण्, ४।४६६)। शॄपॄभ्यां किच्चेति (उण्, ४।४७६) शिरीषशब्दोऽपि नित्स्वरेणाद्युदात्तः। विकङ्कतपूलासयवासाश्च ग्रामादीनाञ्चेत्याद्युदात्ताः ( फिट्, २।३८)।

## १४२। शम्याष्ट्लञ्।

अञोऽपवाद इति। शमीशब्दस्य गौरादित्वान् ङीषन्तस्य प्रत्ययस्वरेणान्तोदात्तस्यानुदात्तादित्वात्। टकारो ङीबर्थः।

## १४३। मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः।

एतयोरिति। किमनेनेत्यादि चोद्यम्। ये विशेषप्रत्यया इत्यादि परिहारः। आदिशब्देनोष्ट्राद्वुञित्येवमादयो (४।३।१५७) गृह्यन्ते। यदि ह्येतयोरिति नोच्येत ततो य इत उत्तरे विशेषाः प्रत्यया अञादयस्तैः सह संप्रधारणायां परत्वात् त एव स्युः। एतयोरित्युच्यमाने तु विशेषप्रत्ययेष्वपि पक्षे भवन्ति। तेन कपोतमयमित्यादि सिद्धं भवति। अथ क्रियमाणेऽप्येतयोरित्येतस्मिन् कथमपवादविषये मयड् भवति ? एतयोरित्यस्य द्वितीयविधानार्थत्वान्

मयट् प्रत्ययो विकारावयवयोर्भवति । एकं विधानमेतयोरिति । मयड् भवतीति द्वितीयम् । तत्र यद्येतद् द्वितीयं विधानं तदा प्रापणार्थम् । तेन यत्रापि विशेषप्रत्ययैर्बाधितो मयड् न प्राप्नोति तत्रापि भवति । अथवाग्रहणं किमर्थम् ? यावतोत्तरसूत्रे नित्यग्रहणादेवेह विभाषा विज्ञायते । नैतदस्ति । नित्यशब्दो ह्याभीक्ष्ण्येऽप्यस्ति नित्यप्रहसितो नित्यजल्पितमिति । प्रायेण च भवनमाभीक्ष्ण्यं भवतीति वृद्धशरादिलक्षण एव मयड् नित्यः स्यात् । अयं त्वनित्यः । इह तु वाग्रहणे सति नित्यग्रहणं तत्र नियमेनाव्यभिचारेण भवतीत्येषोऽर्थो विज्ञायते । तस्माद्वाग्रहणं कर्त्तव्यम् ।

## १४४ । नित्यं वृद्धशरादिभ्यः ।

प्राग्दीव्यतीयाणो ह्यपवादो मयडारभ्यते । अणं तु कोपधलक्षणम् अञमुवर्णान्तलक्षणमनुदात्तादिलक्षणञ्च परत्वाद् बाधते । आरम्भसामर्थ्यादेव नित्यं भविष्यतीति । यदि ह्यनित्यः स्यादस्य सूत्रस्यारम्भोऽनर्थकः स्यात् । पाक्षिकस्य मयटः पूर्वेणैव सिद्धत्वात् । तदनेन क्रियत इति यत् तदेकेषा-माचार्य्याणामिष्टम् । तदनेन नित्यग्रहणेन सफलं क्रियत इत्यर्थः । कथं योगविभागः क्रियते ? तद् यथा द्वारं द्वारमिति शब्दाधिक्यादर्थाधिक्यं भवतीति नित्यग्रहणेनायमर्थः सूच्यते । यद्येवं नित्यग्रहणादेव मृच्छब्दा-दपि नित्योऽयं मयट् सिद्ध स्तदपार्थकोऽस्य शरादिषु पाठः । नानर्थकः । नित्यग्रहणस्यैवोदाहरणप्रदर्शनार्थत्वात् ।

## १४५ । गोश्च पुरीषे ।

गव्यमिति । गोरिदमित्यर्थविवक्षायां सर्वत्र गोरजादिप्रसङ्गे यदिति यत् (४।१।८५,वा) । वान्तो यि प्रत्यय इत्यवादेशः (६।१।७९) । पुरीषं न विकारो नाप्यवयव इति । प्रकृतत्वाद् गोरिति गम्यते । तत्र विकारस्तावन्न भवति । प्रकृतेरवस्थान्तरं विकारः । न च गोरवस्थान्तरं पुरीषम् । गोधर्मान्वयादो-ऽनवस्तूपकारस्य समुदायस्यैकदेशो ह्यारम्भको ऽवयवो भवति यथा हस्तादि शरीरस्य । न चैवं गोः पुरीषम् । क तर्हीदं विधानमित्याह तस्येदं विषय इति । गवा भावितत्वात् पुरीषस्य तत् तस्याः कार्य्यमिति तस्येदमर्थो भवति ।

तस्मात् तत्रैवेदं मयटो विधानम्। विकारावयवयोस्तर्हि केन भवितव्यमित्याह विकारावयवयोस्त्वित्यादि।

१४६। पिष्टाच्च।

अणोऽपवाद इति। पिष्टशब्दोऽयं निष्ठा च द्व्यजनादित्याद्युदात्तः (६।१।२०५)। तेन तस्मादौत्सर्गिकः प्राप्नोति। ततस्तस्यायमपवादः।

१४७। संज्ञायां कन्।

मयटोऽपवाद इति। पूर्वसूत्रेण प्राप्तस्य। ननु च संज्ञायां कनं वक्ष्यत्येव। तदपार्थकं तद्विधानम्। नैतदस्ति। स ह्युत्यादिष्वर्थेषु। अयन्तु विकारे। तदिदं सार्थकमर्थभेदात्।

१४८। व्रीहेः पुरोडाशे।

१४९। असंज्ञायां तिलयवाभ्याम्।

तिलयवशब्दावाद्युदात्ताविति। तस्मादण् प्राप्नोति। अतस्तस्यायमपवादः। आद्युदात्तत्वं तु तयोस्तृणधान्यानां द्व्यषामित्यनेनैव ( फिट् २।२७) भवितव्यम्। अस्यायमर्थः। तृणधान्यानां द्व्यचामादिरुदात्तो भवतीति। यावक इति। विकारेऽण्। तदन्तात् तु यावादिभ्यः कन्निति कन् (५।४।२९)।

१५०। द्व्यचश्छन्दसि।

१५१। नोत्त्वद्वर्ध्रविल्वात्।

मौञ्जमिति। मुञ्जशब्दस्य पूर्वपदाद्युदात्तत्वेन तस्मादौत्सर्गिक एवाण्। गार्मुतमिति। मृग्रोरुतिर्ग्रोर्मुट्चेति (उण्, १।९४-९५) प्रत्ययस्वरेण गर्मुच्छब्दोऽन्तोदात्तः। तस्मादनुदात्तादेश्चेत्यञ् (४।३।१४०)। वार्ध्रीति वृधिवपिभ्यां रन् (उण्,२।१८५)। वर्ध्रशब्दो नित्स्वरेणाद्युदात्तः। तस्मात् प्राग्दीव्यतोऽण् (४।१।८३)। टिड्ढाणञिति (४।१।१५) ङीप्। वैल्वमिति। विल्वादिभ्योऽण् (४।३।१३६)। अथ मतुपा निर्देशः किमर्थः? न नोद्वर्ध्रविल्वादित्येवोच्येतेत्यत आह मतुम् निर्देश इति। नोद्वर्ध्रविल्वादित्युच्यमान उदिति वर्ण-

ग्रहणं स्यात् । अत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयतीति तस्मात् तन्निषेधाय मतुम् निर्देशः । कः पुनस्तदन्तविधौ सति दोषः स्यादित्यत आह इहैवेत्यादि । एवकारेण मुञ्जादिभ्यो न स्यादिति दर्शयति । वैणवीति । बिल्वादित्वादण् ।

## १५२ । तालादिभ्योऽण् ।

मयडादीनामपवाद इति । आदिशब्देनाञः । प्रकृतिभेदात् तयोर्बहुत्वस्य विवक्षितत्वाद् द्वयोरपि बहुवचनम् । तत्र तालश्यामाकशब्दाभ्यां द्व्यच्लक्षणस्य मयटोऽपवादः । बर्हिणो विकारो ऽवयवो वेति प्राणिरजतादिभ्योऽञित्यनेन ( ४।३।१५४ ) वार्हिणशब्दोऽपि विकारावयवप्रत्ययान्तः । तेन तस्मादञ् ञितश्च तत्प्रत्ययादिति (४।३।१५५) प्राप्तस्याञोऽपवादः । शेषेभ्यस्त्विन्द्रालिशादिभ्यो ऽनुदात्तादिलक्षणस्याञः । लिशिद्दशिभ्यामिन्द्र उपपदे कप्रकरणे मूलविभुजादिभ्य उपसंख्यानमिति (३।२।५, वा) कप्रत्ययः । अन्येषामपि दृश्यत इति दीर्घत्वम् (६।३।१३७) । गतिकारकोपपदात् कृदिति ( ६।२।१३९ ) कृत्स्वरेणान्तोदात्ताविन्द्रालिशेन्द्राद्दशशब्दौ । इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः । चप सान्त्वने । पचाद्यच् । चपशब्दोऽन्तोदात्तः । पीयूक्षाशब्दो लघावन्त इत्यादिना ( फिट्, २।४२ ) मध्योदात्तः । यद्यप्यस्य टापि कृते लघावन्त इति नास्ति प्राक् तु टापो विद्यत एव । तस्यामेवावस्थायां मध्योदात्तत्वं भवति । तालाद् धनुषीति पठ्यते । तालशब्दादण् प्रत्ययो भवति धनुष्यभिधेय इति । तालं धनुः । तालमयमन्यत् । अथाण्ग्रहणं किमर्थम् ? न यथाविहितमेवोच्येत । नैवं शक्यम् । बार्हिणशब्दाद्वृद्धिलक्षणो मयण् ञितश्च तत्प्रत्ययादित्यणा (४।३।१५५) बाधितः । तत्रारम्भसामर्थ्यान् मयड़ेव स्यात् । श्यामाकशब्दो लघावन्त इत्यादिना (फिट्, २।४२ ) मध्योदात्तः । तस्मादनुदात्तादेरञ् (४।२।४४) । परत्वाद्द्व्यच्लक्षणेन मयटा बाधित इति पुनरारम्भसामर्थ्यादञेव स्यात् । अण्ग्रहणादणेव भवति ।

## १५३ । जातरूपेभ्यः परिमाणे ।

बहुवचननिर्देशादित्यादि । यदि स्वरूपग्रहणमभीष्टं स्यात् तस्यैकत्वा-

देकवचनेनैव निर्देशं कुर्य्यादिति भावः। मयडादीनामिति। आदिशब्दे-नाञो ग्रहणम्। बहुवचनं तु पूर्ववत्। तत्र ये वृक्षा हाटकजातरूपप्रभृतय स्तेभ्यो मयटोऽपवादः। ये तु तपनीयप्रभृतयोऽनुदात्तादयस्तेभ्योऽञः। ताप-नीयमिति। तपनीयशब्दो लघावन्त (फिट्, २।४२) इत्यादिना मध्योदात्तः।

## १५४। प्राणिरजतादिभ्योऽञ्।

अणादीनामपवाद इति। आदिशब्देन मयट् परिगृह्यते। बहुवचनं तु पूर्ववत्। तत्र ये प्राणिशब्दा आद्युदात्तास्तेभ्योऽणपवाद इति। ये तु वृक्षास्तेभ्यो मयट् परिगृह्यते। रजतादिष्वपि यदाद्युदात्तं तस्मादणोऽपवादः। यत् पुनरनुदात्तादि तस्मान् मयटः। ततो ह्यनुदात्तादेश्चेत्यनेनैवाञि (४।३।१४) सिद्धे पुनर्वचनमञेव यथा स्यात्। मयड्वैतयोरित्यादिना (४।३।१४०) मयड् मा भूदित्येवमर्थम्। तत्र रजतं घृतादिपाठादन्तोदात्तम्। सीस लोहेति नब्विषयस्यानिसन्तस्येत्याद्युदात्तम् (फिट्, २।३६)। अस्यायमर्थः। नपुंसकविषयस्य शब्दस्यानिसन्तस्यादिरुदात्तो भवतीति। नबिति नपुंसकस्य संज्ञा। अन्त्यात् पूर्वमित्यनुवर्त्तमाने शिशुमारोदुम्बरबलीवर्द्दोष्ट्रारपुरूरवसाञ्चे-त्युदुम्बरेऽन्त्यात् (फिट्, ३।६४) पूर्वमक्षरमुदात्तम्। नीलदारुरोहितकवि-भीतक इत्येतेषां लघावन्त इत्यादिना (फिट्, २।४२) मध्योदात्तत्वम्। पीतदारुशब्दमपि केचित् पठन्ति। स नब्विषयस्यानिसन्तस्येत्याद्युदात्तः (फिट्, २।३६)। तरते र्ड्रिरिति (उण्, ५।७४४) ड्रिप्रत्ययान्तत्वात् त्रिशब्दस्य प्रत्ययस्वरेणाद्युदात्तत्वम्। त्रयः कण्टका अस्येति बहुव्रीहिः। बहुव्रीहौ प्रकृत्या पूर्वपदमिति (६।२।१) त्रिकण्टकशब्द आद्युदात्तः। कण्वं करोतीति कर्मण्यण्। कण्वकारशब्दः कृत्स्वरेणान्तोदात्तः।

## १५५। ञितश्च तत्प्रत्ययात्।

मयटोऽपवाद इति। वृद्धलक्षणस्य सर्वस्य ञित्प्रत्ययान्तस्य वृद्धत्वात्। एते प्रत्यया गृह्यन्त इति। ननु चैकानुबन्धपरिभाषया षट्लञो ग्रहणं न प्राप्नोति। नैष दोषः। ञितश्चेति हि चकारस्तत्समुच्चयार्थः। तेन तस्यापि ग्रहणं भविष्यति। ओरञो (४।३।१३९) ग्रहणेनानुदात्तादेश्च (४।३।१४०) पलाशादिभ्यो

(४।३।१४१) वेतेऽत्रतत्सूत्रविहितस्याञो ग्रहणं वेदितव्यम्। अभिन्नत्वात्। य एवमोरञित्यनेनाञ् विहितः (४।३।१३९) स एवास्मिन् सूत्रद्वयेऽनुवर्त्तते। दैवदारवस्य विकारो ऽवयवो वेत्यादिना यथायोगमेषां प्रत्ययानामुदाहरणादीनि दर्शयति। कांस्यम्। पारशवमिति। कंसाय हितमिति प्राक् क्रीताच्छः (५।१।१) कंसीयः। परशवे हितमित्युगवादित्वाद् (५।१।२) यत्। परशव्यस्य विकारो ऽवयवो वेति कंसीयपरशव्ययोर्यञञौ लुक् चेति (४।३।१६८) यथासंख्यं यञञौ भवतः। कयतोश्च लुक्। कांस्यम्। पारशवः। तयोर्विकारोऽवयवो वेत्यनेनाञ्। वैल्वमयमिति। विल्वशब्दो विल्वादिभ्यो (४।३।१३६) ऽणित्यत्रस्यन्तः। ततो वृद्धलक्षणो मयडेव भवति। वैदमयमिति। अनृष्यादिनाञ् (४।१।१०४)। वैदः। भवत्ययमञ्प्रत्ययो ञित्। न तु विकारावयवलक्षणः। तेन मयडेव भवति।

## १५६। क्रीतवत् परिमाणात्।

अणादीनामपवाद इति। आदिशब्देनाञादीनां ग्रहणम्। संख्यापि परिमाणग्रहणेन गृह्यत इति। कथं पुनरेतल्लभ्यते? यावता परिमाणशब्दः प्रस्थादिषु रूढः। न संख्यायाम्। नैष दोषः। यथैव हि प्रस्थादि परिच्छेदहेतुस्तथा संख्यापि। अत उपमानात् संख्यायामपि परिमाणशब्दो वर्त्तिष्यते परिमाणमिव परिमाणमिति। नन्वेवं मुख्ये सति गौणग्रहणमयुक्तम्। अयमत्र दोषः। इह हि तन्त्रेण द्वौ परिमाणशब्दावुच्चारितौ। तत्र द्वितीयं पदमुपात्तम्। तेन संख्यापि गृह्यते। नैष्किकमिति। प्राग्वतेष्ठञ् (५।१।१८)। शत्यः शतिक इति। शताच्च ठन्यतावशते (५।१।२१)। साहस्रमिति। शतमानविंशतिकसहस्रवसनादण् (५।१।२७)। अध्यर्धपूर्वेत्यादिना (५।१।२८) साहस्यार्थे वतौ सति यदिष्टं सम्पद्यते तद्दर्शयति। आदिशब्देन प्रकृत्यादिपरिग्रहः। द्विसहस्रमिति। द्वयोः सहस्रयोर्विकार इति तद्धितार्थे द्विगुः। प्राग्वतेः संख्यापूर्वपदात् तदन्तविधिरलुकीति (५।१।२०, वा) तदन्तविधेरभ्यनुज्ञानाद् यथा क्रीतार्थे शतमानविंशतिकसहस्रवसनादिति (५।१।२७) द्विसहस्रादण् भवति तथा विकारेऽपि। तस्य च क्रीतार्थे विभाषा कार्षापणसहस्राभ्यामिति (५।१।२९) पक्षे लुग् भवति।

तथेहापि। द्विसाहस्रमिति। संख्यायाः संवत्सरपूर्वस्येत्युत्तरपदवृद्धिः (७।३।१५)। द्विनिष्क इति। यथा क्रीतार्थे निष्कशब्दात् प्राग्वतेष्ठञ् (५।१।१८) भवति तस्य द्वित्रिपूर्वान्निष्कादिति (५।१।३०) पक्षे लुक् तथेहापि द्विनैष्किकमिति। परिमाणान्तस्या-(७।३।१७) संज्ञाशाणयोरित्युत्तरपदवृद्धिर्भवति।

१५७। उष्ट्राद् वुञ्।

१५८। उमोर्णयोर्वा।

उमाशब्दस्तृणधान्यमित्यादिनाद्युदात्तः ( फिट्, २।२७)। ऊर्णाशब्दोऽपि प्रातिपदिकस्वरेणान्तोदात्तः। ताभ्यां यथासंख्यमणञोः प्राप्तयोर्विभाषा वुञारभ्यते।

१५९। एण्या ढञ्।

पुंसस्त्वञेव भवतीति। यदिह पुंसो ढञ् स्यात् पुंलिङ्गेनैव निर्देशं कुर्यादिति। पुंलिङ्गेन हि निर्देशे प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येणीशब्दादपि प्रत्ययो लभ्यत एव। तस्मात् स्त्रीलिङ्गनिर्देशादेव पुंसोऽञ् भवति। न ढञ्।

१६०। गोपयसो र्यत्।

मयड्विषये तु विधीयत इति। अजादिप्रसङ्ग इति (४।१।८५, वा) वचनात्। मयटोऽनजादित्वात् तद्विषये न प्राप्नोतीत्यत स्तत्र गोशब्दाद् विधीयते। पयःशब्दस्तु पिबतेरित्यसुन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। तस्मात् प्राग्दीव्यतोऽणित्यण् (४।१।८३) प्राप्नोति। अतस्तदपवादोऽयं यद्विधीयते।

१६१। द्रोश्च।

१६२। माने वयः।

१६३। फले लुक्।

तद्विषय इति। विकारावयवविषये। आमलकमिति। नित्यं वृद्धशरादिभ्य इति (४।३।१४४) मयट्। तस्य लुक्। स्त्रीप्रत्ययस्य लुक् पूर्ववत्। ननु

च फलं वृक्षस्य न विकारो नाप्यवयवः। विकारो द्विधा भवति। यो वा प्रकृतिं निगृह्णाति खादिरं भस्मेति। यो वा प्रकृतिव्यपदेशं करोति खादिरो यूप इति। नच फलं वृक्षमपगृह्णाति। नापि फलेन युक्तस्य व्यपदेशान्तरं भवतीत्यत आह फलितस्येत्यादि। यथा पल्लवो न वृक्षमपगृह्णाति नापि तस्य व्यपदेशान्तरं जनयत्यथच तस्य विकारस्तथा फलमपि। स्यादेतत्। पल्लवितावस्थां वृक्षस्यापगृह्णन् पल्लव उपजायते। अतो युक्ता तस्य तद्विकारावयवतेति। फलमपि तस्य फलितावस्थां वृक्षस्यापगृह्णन् फलमुपजायते। तस्यापि युक्त एव तद्विकारभावः। यदप्युक्तं नावयवोऽनारम्भकत्वादिति तदप्ययुक्तम्। फलं ह्युपजायमानं शाखाद्यवयवसहायमन्यमेव विशिष्टं वृक्षावयवमारभते। तद् यथा पल्लवो विशिष्टं समुदायान्तरमारभमाणोऽवयवो भवति तथा फलमपीति वेदितव्यम्।

### १६४। प्लक्षादिभ्योऽण्।

अञोऽपवाद इति। तत्रेक्षुकर्कन्धूशब्दाभ्यामुवर्णान्तलक्षणस्याञोऽपवादः। शेषेभ्यस्त्वनुदात्तादिलक्षणस्य। सर्वे हि तेऽन्तोदात्तत्वादनुदात्तादयः। तत्र प्लक्षन्यग्रोधाश्वत्थशब्दाः प्रातिपदिकस्वरेणान्तोदात्ताः। इङ्गुदीबृहतीशब्दौ तु गौरादिङीषन्तत्वात् प्रत्ययस्वरेणान्तोदात्तौ। विधानसामर्थ्यादित्यादि। यद्यणो लुक् स्याद् वचनमनर्थकं स्यात्। नह्यणो वाञो वा लुकि कृते कश्चिद् विशेषोऽस्ति। नैयग्रोधमिति। न्यग्रोधस्य च केवलस्येत्यैजागमः (७।३।५)।

### १६५। जम्ब्वा वा।

अञस्तु भवत्येवेति। तस्य हि लुकि सति विधानमनर्थकं भवति। अश्रूयमाणत्वात्। जम्बूनीति। लुकि कृतेऽभिधेयलिङ्गं नपुंसकं भवति। ह्रस्वो नपुंसके प्रातिपदिकस्येति (१।२।४७) जश्शसोः शि (७।१।२०)। नुम्। नोपधाया इति (६।४।७) दीर्घः।

### १६६। लुप् च।

कः पुनर्लुपि सति विशेषो यतो लुकि प्रकृते स विधीयत इत्याह युक्तवद्भावो विशेष इति। लुपि सति युक्तवद्भावो भवति लुपि युक्तवद्व्यक्तिवचने

(१।२।५१) इति। लुपि सत्येष विशेष इति। जम्बूः फलमिति। अत्र युक्तवद्भावेन प्रकृतिगतमेव लिङ्गं भवति। तेन नपुंसकलिङ्गं न प्रवर्त्तते। लुप्प्रकरण इत्यादि। फलपाकेन शुष्यन्तीति फलपाकशुषः। अन्येभ्योऽपि दृश्यत (३।२।३२०) इति क्विप्। व्रीहयो मुद्गा इति। विल्वादिभ्योऽ णो (४।३।१३६) लुप्। यवा माषा इति। अत औत्सर्गिकस्याण:। एते तृणधान्यानामित्यादिनाद्युदात्ताः (फिट्, २।२७)। पुष्पमूलेषु बहुलमिति। पुष्पमूलेषु चाभिधेयेषु बहुलं लुब् भवति। मल्लिका। नवमल्लिका। जातिः। विदारी। अंशुमती। बृहती। अत्रानुदात्तादिलक्षणस्याञो लुप्। मल्लिकानवमल्लिकाशब्दौ लघावन्ते द्वयोश्च बह्वषो गुरुरिति (फिट्, २।४२) मध्योदात्तौ। जातिशब्दश्च क्तिच्क्तौ च संज्ञायामिति (३।३।१७४) क्तिच्प्रत्ययान्तत्वादन्तोदात्तः। बदरीबृहती-शब्दावपि गौरादिङीषन्तत्वादन्तोदात्तावेव। अंशुमतीशब्द उगितश्चेति-(४।१।६) ङीबन्तः। अंशुशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वान् मध्योदात्तः। पाटलानीति। विल्वादित्वादण्। शाल्वानि मूलानीति। शाल्वानीत्यनु-दात्तादिलक्षणोऽञ्। शाल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। शाल्व इति शाक इति यस्य प्रसिद्धिः। क्वचिदन्यदपीति। लुपोऽन्यत्रापि क्वचित् कार्य्यं भवति। तत् पुनर्लुक्। लुक्लुपोरभावश्च। कदम्बमित्यादावनुदात्तलक्षणस्याञो लुक्। कदम्बादयः शब्दा लघावन्त इत्यादिना (फिट्,२।४२) मध्योदात्ताः। वैल्वानीति। अत्रोभयाभावः। विल्वादिभ्योऽण् (४।३।१३६)। एतत् तु सर्वं हरीतक्यादिपाठादेव सिद्धमिति नापूर्वं वक्तव्यम्। यतो हरीतक्यादिषु येषाञ्च फलपाकनिमित्तः शोषः पुष्पमूलेषु बहुलमिति पठ्यन्ते।

## १६७। हरीतक्यादिभ्यश्च।

हरीतक्यादिषु कण्टकारिका गर्गारिका शेफालिका इत्येते संज्ञायां कनिति (५।३।७५) कन्नन्तत्वान् नित्स्वरेणाद्युदात्ताः। तेनैव तेभ्य औत्सर्गिक-स्याणो लुप्। शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः। सर्वे हि तेऽन्तोदात्तत्वादनु-दात्तादयः। तत्र काला द्राक्षा ध्राक्षा इतेतरेभ्यः प्राक् ये पठ्यन्ते ते ङीषन्त-त्वादन्तोदात्ताः। तत्र श्वेतपाकी अर्जुनपाकी इतीतरौ पाककर्णपर्णेत्यादिना

( ४।१।६४ ) ङीषन्तौ । शेषेभ्यस्तु गौरादित्वाद् गौरादिभ्यश्चेति (४।१।४१) । कालद्राचप्राचशब्देभ्यः प्रातिपदिकस्वरेणान्तोदात्तेभ्यष्टाप् । सवर्णदीर्घत्वम् । एकादेश उदात्तेनोदात्त (८।२।५) इत्युदात्तत्वम् । अतः कालादयोऽप्यन्तोदात्ताः ।

## १६८ । कंसीयपरशव्ययोर्यञञौ लुक् च ।

कंसीय इति । उणादौ कंसशब्दः सप्रत्ययान्तो व्युत्पादितः । परशुशब्दोऽपि पॄभिदिव्यधिगृधिधृषिभ्यः कुरित्यनुवर्त्तमान (उण्,१।२३) आङ्परयोः खनिशॄभ्यां डिच्चेति (उण्,१।३३) कुप्रत्ययान्तः । तदनयोरपि धातुप्रत्यययोर्लुक् कस्मान्न भवतीत्याह प्रातिपदिकाधिकारादित्यादि । प्रातिपदिकादिति वर्त्तते । तेन प्रातिपदिकेभ्यो यो विहितस्तस्य लुग् भवति । न चेमौ प्रातिपदिकाद् विहितौ । किं तर्हि ? धातोः । अतो ऽनयो र्लुग् न प्रवर्त्तते । अनुदात्तत्वादेवेति । परशव्यशब्दो हि तित्स्वरितमित्यन्तस्वरितः (६।१।१८५) । तेनानुदात्तादिरिति । ईतीति तत्र वर्त्तत इति । यस्येति चेत्यतः (६।४।१४८) ।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य
तृतीयः पादः समाप्तः ॥ ४।३ ॥

---

अथ

# काशिकाविवरणपञ्जिका।

## चतुर्थोऽध्यायः।

## चतुर्थः पादः।

---

१। प्राग्वहतेष्ठक्।

अथ प्राग्ग्रहणं किमर्थम्? अर्थविशेषे प्रत्ययान्तरेणापवादेन निवर्त्तितस्य ठक उत्तरस्मिन् ग्रन्थान्तरे पुनरुपस्थानं यथा स्यादित्येवमर्थम्। तद्यथा संस्कृतमित्येतस्मिन्नर्थविशेषे (४।४।३) कुलत्थकोपधादित्यणा (४।४।४) निवर्त्तितस्योत्तरत्रार्थान्तरे तरतीत्येतस्मिन्नर्थे (४।४।५) पुनरुपस्थानं यथा स्यादिति। ठक्प्रकरण इत्यादि। तदिति कर्माभिधायिभ्य आहेत्येतस्मिन्नर्थे माशब्दादिभ्यष्ठक उपसंख्यानम्। वाक्यादेतत् प्रत्ययविधानमिति। स एव हि वाक्यार्थ इति नावसृष्टः कर्मभावमुपगतः। तदाहेति निर्दिश्यते। तदभिधायिन एव वाक्यात् प्रत्यय इति। पदसमुदायो हि वाक्यमिति। मेत्येतस्य च शब्द इत्येतस्य च पदस्य यः समुदायस्तद् वाक्यम्। एवमन्यत्रापि वेदितव्यम्। कथं पुनः प्रातिपदिकाधिकारे वाक्यात् प्रत्ययविधिरित्यत आह प्रभूतादिभ्य इति। पुनर्वचनात्। यदि ह्यनेनापि प्रातिपदिकादेव प्रत्ययविधिः स्यादेवं सत्याहेति प्रभूतादिभ्य इति पुनरुपसंख्यानमनर्थकं स्यात्। अनेनैव सिद्धत्वात्। प्रभूतादयोऽपि हि माशब्दादयो भविष्यन्ति। ते च कर्माभिधायिन एव प्रत्ययमुत्पादयन्ति। क्रियाविशेषणाभिधायित्वात्। क्रियाविशेषणानां हि कर्मत्वं तत्प्रत्यनुपूर्वमीपलोमकूल (४।४।२८) मित्यत्र प्रतिपादयिष्यते। प्रत्ययार्थोऽप्याहेति। स एव तस्मादाहेति प्रभूतादिभ्य इति पुनर्वचनाद् वाक्या-

देव प्रत्ययविधानं विज्ञायते । क्रियाविशेषणादिति । प्रभूतादिशब्दः क्रियाविशेषणाभिधायित्वादभिधानेऽभिधेयोपचारं कृत्वा क्रियाविशेषणशब्देनोक्तः ।

## २ । तेन दीव्यति खनति जयति जितम् ।

तेनेति प्रत्येकमभिसम्बध्यते । सर्वत्र करणे तृतीयेति । दीव्यतीत्यादौ कर्त्तरि लकार इति । तेनैव कर्त्तुरभिहितत्वात् कर्त्तरि तृतीया नोपपद्यते । तस्मात् करण एव तृतीया । अथ हेतौ तृतीया कस्मान्न भवति ? अनभिधानात् । जितमित्यत्र कर्मणि निष्ठाविधानाद् यद्यपि कर्त्तर्य्यपि तृतीया सम्भवति तथापि दीव्यतीत्यादिभिः साहचर्य्यात् करण एव तृतीया विज्ञायते । देवदत्तेन जितमित्यत्र कर्त्तरि तृतीया । तेन वाक्यमेव भवति । न प्रत्ययः । इह सूत्रे दीव्यतीत्यादिनैकवचनान्तेनैकसंख्यस्य प्रत्ययार्थस्य वर्त्तमानेन च कालेन निर्द्देशः । ततश्चैकस्मिन्नेव प्रत्ययार्थे प्रत्ययः स्यात् । न द्विबह्वोः । तथा वर्त्तमान एव काले । न भूतभविष्यतोरिति यश्चोदयेत् तं प्रत्याह प्रत्ययार्थे संख्याकालयोरविवक्षेति । अविवक्षा तु तयोर्नान्तरीयकत्वात् । अवश्यं हि यया कयाचित् संख्यया येन केनचित् कालेन निर्देशः कर्त्तव्य इति । न तौ प्रधानम् । न च तयोर्विवक्षेति । यदि तर्हि संख्याकालयोरविवक्षेति साधनस्याप्यविवक्षा प्राप्नोति । एकप्रकरणत्वात् । नैष दोषः । यस्य हि विवक्षामन्तरेण द्वितीयस्य पदस्योच्चारणमनर्थकं भवति तन्नियोगतो विवक्षितव्यम् । दीव्यतीत्यादिष्वन्वर्थमात्रे विवक्ष्यमाणे द्वितीयस्य पदस्योच्चारणमनर्थकमापद्येतेति न युक्ता साधनस्याप्यविवक्षा । इह दिव्यतीत्येवमादौ क्रियाप्रधानमाख्यातमिति क्रियैव पदेन प्राधान्येनाख्यायते । कर्त्ता तु गुणीभूतः । तद्धितस्त्वाक्षिक इति प्राधान्येन कर्त्तारमेवाच वक्ति । क्रियां तु गुणभावेन । एतच्चायुक्तम् । आख्यातेषूत्पन्नैः प्रत्ययैर्यथासौ तिङन्तेनाभिधीयते तथैव प्रत्ययान्तेनापि युक्तोऽभिधातुमिति यश्चोदयेत् तं प्रत्याह क्रियाप्रधानत्वेऽपि चेत्यादि । अभिधानस्वभावश्चायं येन क्रियाप्राधान्यस्याप्यनुविधीयमानस्तद्धितः कर्त्तृप्रधानो भवति । तस्मात् कर्त्तृस्वभावोऽत्रापेक्षितव्यः । नहि स्वभावोऽपि पर्य्यनुयोगमर्हतीति ।

३। संस्कृतम्।

योगविभाग उत्तरार्थः। कुलत्थकोपधादणित्ययमपवादः (४।४।४) संस्कृत एव यथा स्याद् दीव्यतीत्यादौ (४।४।२) मा भूदित्येवमर्थो योगविभागः।

४। कुलत्थकोपधादण्।

५। तरति।

६। गोपुच्छाट् ठञ्।

स्वरे विशेष इति। ठकि हि सति तद्धितस्य कित (६।१।१६५) इत्यन्तोदात्तत्वं स्यात्। ठञि सति ञित्स्वरेणाद्युदात्तत्वं भवति।

७। नौद्व्यचष्ठन्।

इह प्रकरणे केषुचित् सांहितिकः षकारो दृष्टः। केषुचित् प्रत्ययस्यैवानुबन्धः। तदिह ठगधिकारे न ज्ञायते कः सांहितिकः कः प्रत्ययानुबन्ध इति। अतोऽसन्देहार्थं परिगणनं कृतम्। तत्राकर्षात् पर्पादिभ्य इत्यादिना श्लोकेन करोति। आकर्षात् ष्ठल् (४।४।९)। पर्पादिभ्यष्ठन् (४।४।१०)। भस्त्रादिभ्यष्ठन् (४।४।१६)। कुसीददशैकादशात् ष्ठन्ष्ठचौ ( ४।४।३१ )। आवसथात् ष्ठल् (४।४।७४)। किशरादिभ्यः ष्ठन्निति (४।४।५०) षितः षड़ेते। ननु चान्यतो (४।१।४०) ङीषित्यादयोऽन्येभ्योऽपि षितः सन्त्येव। तत् किमुच्यते षड़ेत इत्यत आह ठगधिकार इत्यादि। ठकः प्रकृतत्वात् तदधिकारे यो षितः तएव परिगृह्यन्त इति दर्शयति। नन्वेवमपि सति सप्त भवन्ति। कुसीदादिसूत्रे (४।४।३१) षित्प्रत्ययद्वयविधानादित्यत्राह विधिवाक्यापेक्षं तु षट्त्वमिति। षितः (४।४।३१) प्रत्ययानां सप्तत्वात्। एतेनैव योगाः षितः प्रत्युक्ताः। षित्प्रत्ययार्थाः षड़ेते योगा इत्यर्थः।

८। चरति।

९। आकर्षात् ष्ठल्।

लकारः स्वरार्थ इति। लिति प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्।

षकारो ङीषर्थ इति । षिद्गौरादिभ्य (४।१।४१) इति ङीष् यथा स्यात् । आकर्षिकीति । स्वर्णपरीक्षार्थो निकषोपल उच्यत इति । आकृष्यते स्वर्णमिति कृत्वा ।

## १० । पर्पादिभ्यः ष्ठन् ।

पर्पादिषु पादः पच्चेति पठ्यते । तस्यायमर्थः— पादशब्दात् ष्ठन् प्रत्ययो भवति तत्सन्नियोगेन च पदित्ययमादेशः । पदिकः । पदिकी । यद्येवं पद्यत्यतदर्थ इति (६।३।५३) पद्भाव इके चरतावुपसंख्यानमिति (६।३।५३, वा) कस्मादुपसंख्यायते ? नैष दोषः । पादः (६।४।१३०) पदित्यस्यापौराणिकत्वात् ।

## ११ । श्वगणाट् ठञ्च ।

श्वागणिक इति । शुनां गणः श्वगणः । ननु च श्वन्शब्दो द्वारादिषु पठ्यत इति द्वारादीनाञ्चेति (७।३।४) वृद्धिप्रतिषेधेनैजागमेन भवितव्यम् । तत्र तदादिविधेरिष्टत्वात् । तत् कथं श्वागणिक इति भवतीत्याह श्वादेरिञीत्यादि । द्वारादिकार्य्ये च प्रतिषिद्धे सत्यादिवृद्धिरेव भवति ।

## १२ । वेतनादिभ्यो जीवति ।

## १३ । वस्नक्रयविक्रयाट् ठन् ।

क्रयविक्रयग्रहणं संघातविगृहीतार्थमिति । इह तन्त्रेण क्रयविक्रयशब्दावुच्चारितौ । तत्रैकस्य संघातार्थं ग्रहणम् । अपरस्य तु विगृहीतार्थं वेदितव्यम् ।

## १४ । आयुधाच्छ च ।

## १५ । हरत्युत्सङ्गादिभ्यः ।

## १६ । भस्त्रादिभ्यः ष्ठन् ।

भस्त्रादिषु शीर्षंभार इति पठ्यते । तत्रास्मादेव निपातनाच्छिरसः शीर्षभावः । सप्तमीति (२।१।४०) योगविभागात् समासः । तत्पुरुषे कृति बहुलमिति (६।३।१४) पक्षे सप्तम्या अलुक् ।

## १७। विभाषा विवधवीवधात्।

पर्य्याहार इति। परितः स ह्रियत इति पर्य्याहारः। मण्डलादिक-मुच्यते।

## १८। अण् कुटिलिकायाः।

## १९। निर्वृत्तेऽक्षद्यूतादिभ्यः।

## २०। त्रेर्मम् नित्यम्।

ड्वितः क्त्रिरित्ययं (३।३।८८) त्रिशब्दो गृह्यत इति। संख्याशब्दः कस्मान्न गृह्यते? अनभिधानात्। नहि त्रिरित्युक्ते विवक्षितार्थस्य प्रतीतिर्भवति। उप्त्रिममिति। वचिस्वपियजादीनां किततीति (६।१।१५) संप्रसारणम्। नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थमिति। केवलस्य त्रिप्रत्ययान्तस्य मप्प्रत्ययरहितस्य प्रयोगः स्वातन्त्र्यम्। तन्निवृत्त्यर्थं नित्यग्रहणम्। स्वातन्त्र्यनिवृत्त्यर्थे नित्यग्रहणे सति योऽर्थः सम्पद्यते तं त्वन्त इत्यादिना दर्शयति। विषयान्तर इत्यादिना यदेवकारस्य व्यवच्छेद्यं तदाचष्टे। मप्प्रत्ययविषयार्थादन्यविषये यत्र प्रत्ययो न भवति तद्विषयान्तरम्। नित्यग्रहणं तन्निवृत्तिर्यथा स्यादित्येवमर्थं वेदितव्यम्।

## २१। अपमित्ययाचिताभ्यां कक्कनौ।

अपमित्येति। उदीचां माङो व्यतीहारे (३।४।१९) इति क्त्वा। तस्य ल्यबादेशे कृते ऽपमितेरति भवति। तस्य च क्त्वातोसुन्कसुन (१।१।४०) इत्यव्ययसंज्ञा। तेन तृतीयासमर्थविभक्त्यधिकारेऽप्यविभक्तिकादेवास्मात् प्रत्यय-विधिः।

## २२। संसृष्टे।

ननु च संस्कृत (४।४।३) इत्येव संसृष्टे प्रत्ययो भविष्यति। यत् पुनर्येन संसृष्टं तत्तेन संस्कृतं भवति। नैतत्। सतो ह्युत्कर्षाधानं संस्कारः। एकीभावः संसर्गः। न च तत्रोत्कर्षेण भवितव्यम्। क्वचिद्द्रव्यसंसर्गे स्वप्रकर्ष एव भवति। नोत्कर्षः। संसर्गमात्रे प्रत्यय इष्यते। तस्मात् संसृष्ट

इति वक्तव्यमेतत् । एतदेव क्रियताम् । किं संस्कृतमित्यनेन (४।४।३) ? असत्यपि संसर्गे यत्र संस्कृतमस्ति तत्रापि प्रत्यय इष्यते । वैद्यिकः । न विद्यया संसर्ग उपपद्यते । संसर्गो द्रव्ययोरेव भवति यथा दण्डपुरुषयोः । मूर्त्तिमतस्तद्धर्म्मत्वात् । नतु विद्या मूर्त्तिमती । कुलत्थकोपधादण् (४।४।४) विधानार्थं संस्कृतग्रहणं कर्त्तव्यम् । नहि संसृष्टमात्रे प्रत्यय इष्यते । किन्तु तत्कृतगुणाधाने ।

## २३ । चूर्णादिनिः ।

ननु च चूर्णेन ये संसृष्टास्तेषां चूर्णमस्ति । तत्र मत्वर्थीयेनैवेनिना सिद्धमिति तदपार्थकमिदम् । नैतत् । अस्तिविवक्षायां मत्वर्थीयेन सिद्धं स्यात् । संसृष्टविवक्षायां पुनर्न सिध्यति । तत्र हि ठक् स्यात् । ठको बाधनार्थत्वे कुतोऽस्यानर्थक्यम् ?

## २४ । लवणाल्लुक् ।

द्रव्यवाचीत्यादि । लवणशब्दोऽयमस्त्येव गुणवचनो यो रसविशेषे वर्त्तते । रसस्य गुणत्वात् । अस्ति द्रव्यवचनो यथा पञ्च लवणानीति । तत्र यो गुणवचनः स लुकं न प्रयोजयति । गुणैर्हि यद्यपि द्रव्यं न संसृज्यते तथापि गुणशब्दाः सोऽयमित्यभेदेन सम्बन्धाद् द्रव्ये वर्त्तन्ते यथा शुक्लः पटः । मधुरं क्षारम् । अम्लं दधीति । तथा लवणशब्दोऽपि वर्त्तिष्यते । ततः किं लुका ? अवश्यं तदेवं विज्ञेयम् । अन्यथा हि मधुरादिभ्योऽपि लुग् वक्तव्यः स्यात् । द्रव्यशब्दास्त्वन्यत्र सोऽयमित्यभेदसमर्थनान्न वर्त्तन्ते । तस्माद् द्रव्यवाची लवणशब्दो लुकं प्रयोजयति ।

## २५ । मुद्गादण् ।

## २६ । व्यञ्जनैरुपसिक्ते ।

व्यञ्जनैरिति । बहुवचननिर्देशः स्वरूपविधिनिरासार्थः । तेनेत्यधिकारादेव (४।४।२) तृतीयायां समर्थविभक्तौ वर्त्तमानायां तृतीयानुवादः सुखप्रतिपत्तये । संसृष्ट इति (४।४।२२) वर्त्तमान उपसिक्तस्यैतत् प्रयोजनम् । ओदनादौ यथा

स्यात्। इह मा भूत् सूपेन संसृष्टा स्थालीति। उदकेनोपसिक्त ओदन इति। उदकं व्यञ्जनं न भवति। व्यञ्जनशब्दस्य सूपादावेव रूढ़त्वात्। ननु यद् व्यञ्जनैरुपसिक्तं तत्तैः संस्कृतं भवति। तत्र संस्कृतमेव सिद्धम्। न सिध्यति। सतो ह्युत्कर्षाधानं संस्कारः। न चासौ सर्व्वत्रोपसिक्तः सम्भवति। तथाहि व्यपगते स्वादुरसैः प्रतिभावापन्नैरुपसिक्तेष्वोदनादिष्वपकर्ष एव भवति। नोत्कर्षः। उपसिक्तमात्रेऽपि चेष्यते। तस्मात् प्राक् तस्य पृथगारम्भः।

## २७। ओजःसहोम्भसा वर्त्तते।

वर्त्तत इति। चेष्टत इत्यर्थः। तत्प्रक्रियाविशेषणमित्यादि। अनेन हि वृत्त्यर्थस्य कर्त्तव्यता माचष्टे। वर्त्तत इति वर्त्तमानं करोतीत्यर्थः। स हि वृत्त्यर्थः कर्त्तव्यतया सम्बध्यमानः कर्म सम्पद्यते। तत्सामानाधिकरण्याच्च तद्विशेषणमपि कर्त्तव्यतया युज्यते। तदपि कर्म च प्रसक्तम्। क्रियाविशेषणस्यैवाकर्म्मकेऽपि धातौ कर्मत्वमाख्यातम्। तदित्यनेन द्वितीयासमर्थविभक्तौ लब्धायामपि द्वितीयान्ता इह प्रकृतयो निर्दिष्टा विस्पष्टार्थम्। अन्यथा प्रत्ययविधौ पञ्चमी न्याय्येति तदन्ता एव निर्दिश्येरन्।

## २८। तत्प्रत्यनुपूर्वमीपलोमकूलम्।

प्रातीपिक इति। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। ऋक्पूरब्धूःपथामानक्षे (५।४।७४) इत्यकारः समासान्तः। एवञ्च द्व्यन्तरुपसर्गेभ्योऽप ईदितीत्त्वम् (६।३।९७)। अपरत्र तृदनोर्देश इति देशादन्यत्रोत्त्वमेव (६।३।९८)। ततष्ठक्। प्रातिलोमिकम्। आनुलोमिकमिति। प्रतिगतानि लोमान्यस्य। अनुगतानि लोमान्यस्येति बहुव्रीहिः। अच् प्रत्यन्वित्यादिना ऽच् समासान्तः (५।४।७५)।

## २९। परिमुखञ्च।

पञ्चम्यपाङ्परिभिरिति (२।३।१०) पञ्चमी। अपपरिवहिरञ्चवः पञ्चम्येत्यव्ययीभावः (२।१।१२)। ततष्ठक्। स्वामिमुखं वर्जयित्वा यः सेवको वर्त्तते स पारिमुखिकः। सर्वतोभावे वा परिः। तस्य कुगतिप्रादय इति (२।२।१८)

प्रादिसमासः । यतो यतः स्वामिनो मुखं वर्त्तते ततस्ततो यः सेवको वर्त्तते स पारिमुखिकः ।

## ३० । प्रयच्छति गर्ह्यम् ।

द्विगुणमिति । तादर्थ्यात् ताच्छब्द्यं दर्शयति । अद्विगुणार्थे वस्तुनि द्विगुणशब्दं वर्त्तयित्वा तत्र प्रत्ययं कुर्वतः कोऽभिप्रायः ? एवं मन्यते । द्वैगुणिक इति । उत्तमर्ण उच्यते । नचासौ द्विगुणं प्रयच्छति । किं तर्हि ? स्कन्दयित्वा द्विगुणं गृह्णाति । अन्यथा हि विपर्य्यये सति प्रशस्यमेव स्यात् । ननु गर्ह्यम् । यदेकस्मिन्नर्थे तादर्थ्याद् द्विगुणशब्दो वर्त्तते तदेकमेव द्विगुणार्थं प्रयच्छतो द्विगुणमेव भवतीति गर्ह्यमिति । गर्हा पुनरिह प्रतिषिद्धस्य शास्त्रेण दीयमानस्य प्रत्यवायहेतुत्वाद्वेदितव्या । प्रकृत्यन्तरमित्यादिनोपसंख्यानं प्रत्याचष्टे । तत्रापि तादर्थ्याद् वृद्ध्यर्थं यद्दीयते तद् वृधुषिशब्देनोच्यते । ननु च तत्प्रत्याख्याने वृद्धिशब्दात् प्रत्यये सति वार्धिक इत्यपि स्यात् । नैष दोषः । अव्यविकन्यायेन हि वृद्धिशब्देन वाक्यमेव भवति । वृधुषिशब्देन वाक्यं वृत्तिश्च ।

## ३१ । कुसीददशैकादशात् ष्ठन्ष्ठचौ ।

तत्रापि कुसीदार्थे वस्तुनि दशैकादशार्थेषु च दशसु दशैकादशशब्दं वर्त्तयित्वा ततः प्रत्ययः । सर्वतः पूर्ववदभिप्रायो वेदितव्यः । दश चैकादश चेति समानाधिकरणसमासः । ननु च भिन्नविषययोः सामानाधिकरण्यं नोपपद्यते । दशैकादशशब्दोऽप्येकादशार्थेषु दशस्वेवोपचाराद् वर्त्तत इत्यदोषः । यो दश प्रयच्छत्येकादशएव स्युरिति स दशैकादशिक इत्युच्यते । दशैकादशादिति निर्देशादकारान्तत्वं निपात्यते । किमर्थम् ? वाक्येऽप्यकारान्तत्वश्रवणार्थं दशैकादशान् प्रयच्छतीति ।

## ३२ । उञ्छति ।

उञ्छतीति । उद्धुनोतीत्यर्थः ।

## ३३ । रक्षति ।

## ३४। शब्ददर्दुरं करोति।

तदित्यनेनैव द्वितीयासमर्थविभक्तौ लब्धायां शब्ददर्दुरमिति (A) द्वितीयानिर्देशो लौकिकवाक्यप्रदर्शनार्थः। शब्ददर्दुरं करोतीत्येतद् व्यावहारिकं वाक्यम्। अस्य प्रतिग्रहो यत्र लोके व्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यर्थं सूचयति। तेन शब्दं करोति खर इत्यत्र न भवति। लोके स शाब्दिक इत्युच्यते यः शब्दं वेत्ति। वैयाकरण एव शब्दं वेत्ति। तेन तत्रैव प्रत्ययो भवति। न खरे। असौ वैयाकरणः प्रत्ययप्रकृत्यादिना सर्वं शब्दं जानाति।

## ३५। पक्षिमत्स्यमृगान् हन्ति।

स्वरूपस्य पर्य्यायाणाञ्च तद्विशेषणानाञ्च ग्रहणमिष्यत इति। कथं पुनरिष्यमाणमपि पर्य्यायादीनां ग्रहणं लभ्यते? अर्थप्रधानत्वान्निर्देशस्य। शब्दप्रधाने हि निर्देशे स्वरूपस्य ग्रहणं भवति। नार्थप्रधान इति प्रतिपादितमेतत् प्राक्। यदि तर्हि पर्य्यायाणामपिग्रहणमजिह्मान् हन्त्यनिमिषान् हन्तीत्यत्रापि प्राप्नोति। नैष दोषः। इह द्वितीयासमर्थविभक्तौ लब्धायां पुनर्द्वितीयासमर्थविभक्तिनिर्देशो लौकिकवाक्यप्रदर्शनार्थः। अस्य परिग्रहो यत्र लौकिकवाक्यव्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यस्यार्थस्य सूचनार्थम्। तेनाजिह्मान् हन्तीत्यादौ प्रत्ययो न भवति। अजिह्मान् हन्त्यनिमिषान् हन्तीत्यस्यार्थस्य विवक्षायामाजिह्मिक आनिमिषिक इति लोके न व्यवहारोऽस्ति। तत्र पक्षिषु पाक्षिक इति स्वरूपस्योदाहरणम्। शाकुनिक इति पर्य्यायस्य। मायूरिकः। तैत्तिरिक इति विशेषस्य। मत्स्येषु मात्स्यिक इति स्वरूपस्य। मैनिक इति पर्य्यायस्य। शाफरिकः शाकुलिक इति विशेषस्य। मृगेषु मार्गिक इति स्वरूपस्य। हारिणिक इति पर्य्यायस्य। सौकरिकः सारङ्गिक इति विशेषस्य।

---

(A) दर्दुरशब्दः पात्रविशेषवाची। तेन दार्दुरिकः कुलाल इति केचित्। अन्ये लिमनानुकरणशब्दमाहुः।

## ३६ । परिपन्थञ्च तिष्ठति ।

यथा परिमुखञ्चेति परिमुखशब्दस्याव्ययीभावत्वं तत्पुरुषत्वञ्च तथेहापि परिपन्थशब्दस्य तद्द्वयं वेदितव्यम् । तदिति द्वितीयासमर्थादिति । ननु च तिष्ठतिरयमकर्मकः । तत् कथं द्वितीयया सह सम्बन्धः ? नैष दोषः । अकर्मणामपि हि कालभावाध्वनः कर्मसंज्ञां प्रतिपद्यन्ते । तथाचोक्तम्—कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति (१।४।५१,वा)। पारिपन्थिकश्चौर इत्यव्ययीभावः । चौरो यः पन्थानं वर्जयित्वा तिष्ठति स पारिपन्थिकशब्देनोच्यते । तत्पुरुषपक्षे तु यश्चौरः सर्व्वान् पथो व्याप्य तिष्ठति स पारिपन्थिक उच्यते । चकार इत्यादि । तिष्ठति चेत्यत्र प्रत्ययार्थसमनन्तरमेव चकारो द्रष्टव्यः । तेन समानजातीयस्यैव प्रत्ययस्यार्थस्य समुच्चयं करोति । अथ प्रकृतेरेव समुच्चयः कस्मान्न विज्ञायते ? कर्मत्वानुपपत्तेः । तत्र हि द्वितीया समर्थविभक्तिरनुवर्त्तते । तिष्ठतेश्चाकर्मकत्वात् प्रकृताया मल्यादेः प्रकृतेः कर्मभावो नोपपद्यते । कालभावाध्वनामेव ह्यकर्मकाणां कर्मसंज्ञेष्यते । न मल्यादीनाम् । लौकिकवाक्यप्रदर्शनार्थं तदेतद् द्वितीयोच्चारणं करोतीत्याह परिपथपर्य्याय इति । किमेतस्य ज्ञापने प्रयोजनमित्याह स विषयान्तर इत्यादि । असति ह्यस्मिञ् ज्ञापने ठक्प्रत्ययसन्नियोगेन प्रकृतिर्निर्दिश्यमाना प्रत्ययाभावेन प्रसज्यते । ज्ञापने तु सति यत्रापि प्रत्ययो न भवति तत्रापि प्रयोग उपपद्यते ।

## ३७ । माथोत्तरपदपदव्यनुपदं धावति ।

दण्डभावो माथो दाण्डमाथः । ऋजुःपन्था उच्यते । तं धावति दाण्डमाथिकः । शुल्कस्य माथः शुल्कमाथः । शौल्कमाथिकः । पदस्य पश्चादनुपदम् । पश्चादर्थेऽव्ययीभावः । अनुपदं धावत्यानुपदिकः । प्रत्यासत्त्या धावतीत्यर्थः । द्वितीयायां समर्थविभक्तौ लब्धायां पुनर्द्वितीयानिर्देश इष्टाद् द्वितीयान्ताद् यथा स्याद् । अनिष्टाद् मा भूदित्येवमर्थम् । तेन योऽनुर्यत्समया (२।१।१५) यस्य चायामः (२।१।१६) कुगतिप्रेत्यादि (२।२।१८) भिर्योगैरनुशब्दस्य समास स्ततो न भवति ।

३८ । आक्रन्दाट् ठञ्च ।

आर्त्तायनमिति । परित्राणार्थमीयते गम्यत इत्ययनम् । आर्त्तानामयनमार्त्तायनम् । शरणमित्यर्थः ।

३९ । पदोत्तरपदं गृह्णाति ।

पदग्रहणेन स्वरूपमेव गृह्यते । न सुप्तिङन्तं पदम् । अतएवाह पदशब्द उत्तरपदं यस्येति । एतच्च द्वितीयायां प्रकृतायां लौकिकवाक्यप्रदर्शनार्थत्वाद् द्वितीयानिर्देशाल्लभ्यते । पदोत्तरपदं गृह्णातीत्येतल्लौकिकं वाक्यम् । अस्य प्रदर्शनेनेतत् सूचितं लौकिकस्य हि पदस्य ग्रहणं न पारिभाषिकस्येति । अथ पदान्तादित्येव कस्मान्नोक्तमित्याह पदान्तादिति नोक्तमित्यादि । गतार्थम् । पदमेवोत्तरपदं यस्य तस्माद् यथा स्यात् । इह तु श्लोकपादपदं गृह्णातीति वाक्यमेव भवतीति केचित् ।

४० । प्रतिकण्ठार्थललामञ्च ।

कण्ठं कण्ठं प्रति प्रतिकण्ठम् । यथार्थेऽव्ययीभावः । आभिमुख्ये वा । लक्षणेनाभिप्रती आभिमुख्य इति (२।१।१४) । कण्ठस्याभिमुख्य इति । कण्ठस्याभिमुख्यं प्रतिकण्ठम् । प्रातिकण्ठिकः स उच्यते सर्वं कण्ठं यो गृह्णाति यो वा कण्ठमाभिमुख्येन गृह्णाति । द्वितीयासमर्थप्रकरणे पुनर्द्वितीयान्तप्रकृतिनिर्देश इष्टाद् यथा स्यात् । अनिष्टान्मा भूत् । तेन प्रतिगतः कण्ठमिति कुगतिप्रादय इति (२।२।१८) तत्पुरुषो यः प्रतिकण्ठशब्द स्ततो न भवति ।

४१ । धर्मञ्चरति ।

चरतिरासेवायामिति । आसेवा पौनःपुन्यम् । अधर्माच्च वक्तव्यमिति । अधर्मशब्दाच्चरतीत्येतस्मिन्नर्थे ठग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । पूर्वसूत्रादिह चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थो वेदितव्यः । तेनाधर्मादपि भविष्यति ।

४२ । प्रतिपथमेति ठंश्च ।

प्रतिपथिकमिति । पूर्ववद् वीप्सायामाभिमुख्ये वाव्ययीभावः । पन्थानं

पन्थानं प्रति प्रतिपथम् । आभिमुख्ये पथ आभिमुख्यं प्रतिपथम् । यः सर्वान् पथएति । आभिमुख्येन वा पन्थानमेति स प्रातिपथिक इति चाभिधीयते ।

४३ । समवायान् समवैति ।

समवायः समूह उच्यते । न सम्प्रधारणेति । कुत एतत् ? तत्र समवैतीत्यस्य प्रत्ययार्थस्यायोगात् । आगत्य तदेकदेशीभवतीति समवैतिशब्दस्यार्थः । संप्रधारणा चामूर्त्तश्चैतसिको धर्म्मः । न च तदेकदेशीभवितुं शक्यते । तस्मात् समूह एव समवायशब्दस्यार्थः । नैतीत्यस्यार्थः । एतीति वर्त्तमाने समवैतीति वचनमर्थविशेषप्रतिपत्त्यर्थम् । एतीति प्राप्तिमात्रं कुर्वन्नुच्यते । समवैतीत्यागत्य तदेकदेशीभवतीति ।

४४ । परिषदो ण्यः ।

४५ । सेनाया वा ।

४६ । संज्ञायां ललाटकुक्कुट्यौ पश्यति ।

अभिधेयनियमार्थ इति । अभिधेये सेवकविशेषे भिक्षुविशेषे च प्रत्ययान्तस्य नियमः । तत्रैव हृत्तिर्यथा स्यादित्येवमर्थम् । नतु रूढार्थमिति । लालाटिककौक्कुटिकशब्दयो रूढशब्दत्वात् । तदनेनेत्यादि । यत एव सर्वावयवेभ्यो ललाटं दूरे दृश्यते तस्मादनेन ललाटदर्शनेन सेवकस्य स्वामिनं प्रत्यनुपश्लेषो लभ्यते । नत्वत्र ललाटार्थो दर्शनं चास्ति । यादृशश्चानुपश्लेषो विवक्षितस्तं कार्य्येष्वनुपस्थायित्वमित्यनेन दर्शयति । कुक्कुटीशब्देनापीत्यादि । कुक्कुट्या ह्यल्पदेशविषयः पातो भवति । तदनेन कुक्कुटीपातदेशस्याल्पता लक्ष्यते । नत्वत्र कुक्कुट्यर्थो देशश्च विद्यते ।

४७ । तस्य धर्म्यम् ।

४८ । अण् महिष्यादिभ्यः ।

४९ । ऋतोऽञ् ।

५० । अवक्रयः ।

## ५१ । तदस्य पण्यम् ।

अपूपाः पण्यमस्येति आपूपिकः । अथ यथा वाक्ये पण्यशब्दो युज्यते तथा वृत्तावपि कस्मान्न युज्यत इत्याह पण्यमिति । विशेषणमित्यादि । अथ य एवमवेक्ष्यमाणः पण्यार्थं वृत्तावन्तर्भावयति तेन गतार्थत्वात् पण्यशब्दो न प्रयुज्यते ।

## ५२ । लवणाट् ठञ् ।

## ५३ । किशरादिभ्यः ष्ठन् ।

## ५४ । शलालुनोऽन्यतरस्याम् ।

शलालुक इति । इसुसुक्तान्तात् कः (७।३।५१) ।

## ५५ । शिल्पम् ।

शिल्पं कौशलमिति । क्रियाभ्यासपूर्वको ज्ञानविशेषः । मृदङ्गवादनं शिल्पमस्येति । मृदङ्गो वाद्यते येन शिल्पेन तन्मृदङ्गवादनम् । ननु च मृदङ्गवादनं शिल्पं यस्येति विग्रहे प्रत्यय उत्पद्यमानो मृदङ्गवादनशब्दादेव प्राप्नोति । नतु मृदङ्गशब्दात् । ततो मार्दङ्गवादनिक इति भवितव्यम् । तत् कथं मार्दङ्गिक इति भवतीत्याह मृदङ्गवादनमित्यादि । मृदङ्गशब्द एव प्रत्ययमुत्पादयति । स तु मृदङ्गवादने वर्त्तमानः । न मृदङ्गे । अत्र शब्दशक्तिस्वाभाव्यं हेतुः । न चायं नियमो येन विग्रहः क्रियते तत एव प्रत्ययेन भवितव्यमिति । यथा छवेरिदं मांसमाविकम् मांसमित्यविशब्देन विग्रहः क्रियतेऽविकशब्दादेव प्रत्ययो भवति तथेहापि मृदङ्गवादनशब्देन विग्रहः क्रियते प्रत्ययस्तु मृदङ्गशब्दाद् भवति । तेन तत्र गतार्थत्वाच् शिल्पशब्दो न प्रयुज्यत इत्यभिप्रायः ।

## ५६ । मड्डुकझर्झरादणन्यतरस्याम् ।

## ५७ । प्रहरणम् ।

धानुष्क इति । कादेशः । इणः ष इति (८।३।३९) विसर्जनीयस्य षत्वम् ।

५८। परश्वधाट्ठञ्च।

५९। शक्तियष्ट्योरीकक्।

अथ दीर्घोच्चारणं किमर्थम् ? इकगेव नोच्येत। इकक्यपि सवर्णदीर्घत्वे कृते शाक्तीको याष्टीक इति सिध्यत्येव। न सिध्यति। इकारस्य यस्येति चेति (६।४।१४८)लोपेन भवितव्यम्। तत् कुतः सवर्णदीर्घत्वम् ? इकारोच्चारणसामर्थ्या-देव लोपो न भविष्यति। ननु चावग्रहनिवृत्तिरिकारस्य प्रयोजनं स्यात्। नैतत्। यदि ह्येतत् प्रयोजनं स्यात् सूत्रारम्भोऽनर्थकः स्यात्। ठकाप्यनवग्रहस्य सिद्धत्वात्। नानर्थकः। वाक्यनिवृत्त्यर्थत्वात्। एवमपि प्रत्ययग्रहणमनर्थकं स्यात्। ठक् प्रत्ययो हि प्रकृतः। तत्रैतावदेव वक्तव्यं शक्तियष्ट्योरिति। एवं पुनर्विधानं वाक्यनिवृत्त्यर्थं भविष्यति। किमीकग्विधानेन ? तस्मादिकग्-ग्रहणसामर्थ्याल्लोपो न भविष्यति। एवमपि ठकैव यस्येति चेति (६।४।१४८) लोपाभावेनानवग्रहे सिद्धे ह्रीकग्ग्रहणमधिकविधानार्थं प्रतीयते। तेन यस्येति चेति (६।४।१४८) लोपो न भवति। यथा तस्मादकः सवर्णे (६।१।१०१) दीर्घोपि न स्यादिति विगृहीतमेव श्रूयेत। तस्मादीकग् वक्तव्यः।

६०। अस्तिनास्तिदिष्टं मतिः।

किं तर्हि परलोकोऽस्तीति मतिर्यस्येति। कथं पुनरसति विशेषोपादान एतल्लभ्यत इत्याह तदेतदित्यादि। अभिधानशक्तिस्वाभाव्याल्लभ्यते। ननु चास्तीति तिङन्तम्। नास्तीति वाक्यम्। अत एताभ्यां न प्राप्नोति प्रत्ययः प्रातिपदिकाधिकारादित्यत (४।१।१) आह अस्तिनास्तिशब्दावित्यादि। अभ्युपगम्यापि तिङन्तत्वं वाक्यत्वञ्च परिहारान्तरमाह वचनादाख्याताद् वाक्याच्च प्रत्यय इति।

६१। शीलम्।

अपूपभक्षणं शीलमस्येति। शीलविषयत्वादुपचारात् तथा व्यपदेशः भक्षणक्रिया तद्विषयञ्च शीलं तद्धितवृत्तावन्तर्भवति। तेन तत्र प्रतीयमानत्वात् भक्षणशीलशब्दौ न प्रयुज्येते इति भावः।

६२ । छत्त्रादिभ्यो णः ।

छत्त्रशीलत्वं शिष्यस्य प्रतिपादयितुमाह छादनादपवारणाच्छत्त्रमित्यादि । अपवारणादित्यनेन छादनादित्यस्यार्थं व्यक्तीकरोति । आच्छादयति हि यत् तच् छत्त्रमित्युच्यते । तेन शिष्योऽपि गुरुकार्य्यतत्परो गुरोर्यानि छिद्राणि गोपयति तेषामावरणाय प्रवृत्त स्तत्र युक्तः सच्छत्त्रसहचरितां क्रियामाचरं श्छत्त्रशीलो भवति । स्थाशब्दोऽत्र पठ्यते । स चोपसर्गपूर्वो गृह्यत इति । ततश्च तस्मातश्चोपसर्ग इत्यङ् (३।३।१०६) प्रत्ययमुत्पाद्याप्युत्पादितत्वात् । केवलस्य तु पाठः सर्वोपसर्गसंग्रहार्थः । चुरेति पठ्यते । तत्र निपातनादकारप्रत्ययो गुणाभावश्च ।

६३ । कर्माध्ययने वृत्तम् ।

क्रियया यद् व्याप्यमानमीप्सिततममनीप्सिततमं वा तत् कर्म । इह त्वनीप्सिततमं गम्यते । अतएवाह यस्याध्ययनप्रयुक्तस्येत्यादि । नहि कस्य-चिदध्ययने युक्तस्य परीक्षाकाले पठतः स्खलितपाठरूपमीप्सितं भवति । अध्ययनशब्दो भावसाधनः कर्म्मसाधनो वा । अधीतमधीयते वा ऽध्ययनम् । वृत्तं भूतमुत्पन्नमित्यर्थः । एकमन्यदित्यादि । सम्यक् पाठापेक्षयान्योऽर्थो वेदितव्यः । द्वैयन्यिकः । त्रैयन्यिक इति । न य्वाभ्यां पदान्ताभ्यामैजि-त्यैजागमः (७।३।३) । अध्ययने कर्म वृत्तमित्येतत् सर्वं तद्धितवृत्तावन्तर्भवतीति तेन तत्राध्ययनवृत्तशब्दोऽवगतार्थत्वान्न प्रयुज्यत इति भावः ।

६४ । बह्वच्पूर्वपदाट् ठच् ।

द्वादशान्यिक इति । द्वादशशब्दो बह्वच्पूर्वपदम् । द्वौ च दश चेति द्वन्द्वः । द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योरित्यात्वम् (६।३।४७) । ततो द्वादशान्यानीति विगृह्य तद्धितार्थ इति (२।१।५१) समासः । ननु चैकादेशे कृते पूर्वोत्तरपदा-भावाद् बह्वच्पूर्वपदं न भवति । नचान्तादिवद्भावोऽस्ति । उभयत आश्रये नान्तादिवदिति । नैष दोषः । नेन्द्रस्य परस्येति (७।३।२२) ज्ञापकादेकादेशात् पूर्वं प्रत्ययः । त्रयोदशान्यिक इति । त्रयश्च दश चेति द्वन्द्वः । त्रेस्त्रय इति (६।३।४८) त्रय आदेशः । अन्यशब्दोऽत्र सम्यक् पाठापेक्षयापपाठे वर्त्तते

इत्यत आह चतुर्द्दशापपाठा इत्यादि । कथं पुनर्ज्ञायते ऽपपाठेऽन्यशब्दो वर्त्तत इत्याह उदात्त इत्यादि । उदात्ते कर्त्तव्येऽनुदात्तकरणमपपाठः । तत्र य उदात्ते कर्त्तव्येऽनुदात्तं करोति स यस्मादन्यं करोषीत्युच्यते ततो ज्ञायते-ऽन्यशब्दोऽपपाठे वर्त्तत इति ।

## ६५ । हितं भक्षाः ।

ननु हितशब्दयोगे चतुर्थ्या भवितव्यम् । हितयोगे चतुर्थी भवतीत्युपसंख्यानात् (२।३।१३,वा) । तस्मै हितमिति (५।१।५) निर्देशात् सामर्थ्याद् विभक्तिविपरिणामो भविष्यतीति । सामर्थ्यं पुनस्तदेवोपसंख्यानम् । लिङ्गञ्च । हितार्था क्रिया तद्धितवृत्तावन्तर्भवति । तेन न प्रयुज्यत इति ।

## ६६ । तदस्मै दीयते नियुक्तम् ।

ननु च तदस्य (४।४।५१) पण्यमित्यतस्तदिति प्रथमा समर्थविभक्तिरनुवर्त्तिष्यते । तदपार्थकं पुनः प्रथमासमर्थविभक्त्युपादानम् । अस्मायिति प्रत्ययार्थोऽप्यपार्थक एव । तथा ह्यस्येत्यनुवर्त्तते । तत्र दीयत इत्यभिसम्बन्धात् तु सम्प्रदानत्वेन भवितव्यम् । ततश्च शेषसम्बन्धे निवृत्ते चतुर्थ्येत्र विपरिणम्यते । तस्माद्दीयते नियुक्तमित्येतावदेव वक्तव्यम् । अत्रोच्यते । समर्थविभक्त्युपादानं तावत् पूर्वसूत्रे समर्थविभक्तिविशेषः प्रत्ययमुत्पादयतीत्यस्य सूचनार्थम् । तेनेह न भवति । दुःखमस्याध्ययने वृत्तम् । अजयोऽस्याध्ययने वृत्त इति । अपपाठ एव हि वृत्ते प्रत्यय इष्यते । दीयमाने न सर्व्वस्मात् चतुर्थी । अरेः पृष्ठं ददातीति । स च षष्ठ्या एव विषयोऽर्थः । षष्ठ्यर्थ एव प्रत्ययो विज्ञायते । चतुर्थ्यन्ताद् यथा स्यात् । एवमस्मायिति प्रत्ययार्थो निर्दिश्यते ।

## ६७ । श्राणामांसौदनाट्टिठन् ।

अथ ठञेव कस्मान्नोक्त इति । एवं हि लघु सूत्रं भवतीति भावः । स्यादेतत् । ठञ्टिठनो विशेषोऽस्ति । अतष्टिठनुक्तो न ठञित्यत आह न ह्यत्रेत्यादि । द्वयोरप्यनयोर्द्वित्वलान्नास्ति विशेषः । योऽपि वृद्धिनिमित्तस्येत्यादिना (६।३।३९) ठञि पुंवद्भावप्रतिषेध स्तस्य न कोपधाया इति (६।४।३७) टिठन्यप्यभावान् नात्र ठञ्टिठनोः कश्चिद्विशेषो ऽस्ति । मांसौदनेनेत्यादिना

विशेषं दर्शयति। केचिदिति वचनाद् विगृहीतग्रहणं केचिन्नेच्छन्तीत्येतदुक्तं भवति। तन्मते ठञेव वक्तव्यः। टिठन्वचनं वैचित्र्यार्थं वेदितव्यम्।

६८। भक्तादणन्यतरस्याम्।

६९। तत्र नियुक्तः।

अथ नियुक्त इति (४।४।६६) वर्त्तमाने पुनर्नियुक्तग्रहणं कस्मात् क्रियते? अर्थभेदात्। न तस्य ह्यव्यभिचारलक्षणो नित्यभावोऽर्थः। अस्य तु ततोऽन्य एवार्थो यदाह नियुक्तोऽधिकृत इत्यादि।

७०। अगारान्ताट्ठन्।

७१। अध्यायिन्यदेशकालात्।

अध्येतुं शीलमस्येत्यध्यायी। ताच्छीलिको णिनिः। अध्ययनस्य यो देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते इति। अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात् पर्युदासवृत्त्या ऽभक्षास्पर्शनीयवदध्ययनस्येति। अत आह तस्याध्यायिना प्रत्ययार्थेन सन्निधापितत्वात्। नहि विनाध्ययनेनाध्याय्युपपद्यते।

७२। कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति।

अल्पाच्तरस्य प्रस्तारशब्दस्य (B) च पूर्वनिपातमकुर्वन्नेतत् सूचयत्यन्यदपि कार्यं लक्षणप्राप्तं न भवति। तेन कठिनान्तशब्दस्य ग्रहणं न भवतीति कठिनशब्दान्तं प्रातिपदिकं गृह्यते। हरतिरयमस्ति पणिना समानार्थो यस्य व्यवहृपणोः समर्थयोरित्यत्र (२।३।५७) ग्रहणम्। अस्ति विवादे व्यवहारे परिहृतमिति। अस्ति च विक्षेपे शलाकां व्यवहरतीति। अस्ति च लौकिके क्रियातत्त्वे लौकिको व्यवहार इति। इह तु क्रियातत्त्वे वर्त्तमानस्य ग्रहणमित्येतद्दर्शयितुमाह व्यवहारः क्रियातत्त्वमिति। क्रियाया अविपरीतस्वभावत्वादि क्रियातत्त्वम्। (C) यथेत्यादि। लौकिको व्यवहार इत्यत्र यथा

---

(B) संस्थानप्रस्तारौ सन्निवेशाविति मिश्रः ( पदमञ्जर्याम् )।

(C) यत्र देशे या क्रिया यथानुश्रया तत्र तस्यास्तथानुष्ठानं क्रियातत्त्वम्।

व्यवहारः क्रियातत्त्वे वर्त्तते तथेहापि दर्शयति। क्रियातत्त्वे वर्त्तमानस्य ग्रहणम्। तत्रेति (४।४।६८) सप्तम्यधिकारे सप्तमीनिर्द्देशात् प्रसिद्ध्युपसंग्रहणं लभ्यते। वांशकठिनिकश्चक्रचर इति। (D) यश्चक्रचरः (E) सन्ननुष्ठेयां क्रियां शास्त्रोक्तामविगीतां वंशकठिनेऽनुतिष्ठति स एवमुच्यते।

## ७३। निकटे वसति।

निकटे समीप इत्यर्थः। यत्र शास्त्रतो निकटवासस्तत्रायं विधिः। एतच्च सप्तम्यां समर्थविभक्तौ लब्धायां पुनः सप्तमीनिर्द्देशात् प्रसिद्ध्युपसंग्रहणेन लभ्यते। स ह्येवमर्थः कृतः। इष्टे विषये सप्तम्यन्ते यथा स्यात्। अनिष्टान्मा भूत्। स पुनः शास्त्रतो निकटवास आरण्यकस्य भिक्षोरिति दर्शयत्यारण्यकेन भिक्षुणेत्यादि।

## ७४। आवसथात् ष्ठल्।

## ७५। प्राग्घिताद् यत्।

## ७६। तद्वहति रथयुगप्रासङ्गम्।

तदिति द्वितीयासमर्थविभक्तौ लब्धायां रथादीनां द्वितीयानिर्द्देश इष्टाद् यथा स्यात्। अनिष्टान्मा भूत्। तेनेहैव भवति गौर्युग्य इति। इह न भवति युगं वहति राजा कलिं द्वापरं वेति। तथा प्रासज्यत इति प्रासङ्गः। यत् काष्ठं वहनकाले वत्सानां कण्ठ आसज्यते तत्प्रासङ्गः। तं वहति प्रासङ्ग्यः। इह न भवति। प्रसङ्गादागतं प्रासङ्गम्। युग्यञ्च पत्र इति (३।१।१२१) निपातनाद् युग्यशब्दे सिद्धे युगग्रहणं स्वरार्थम्। न युग्यमयुग्यमित्यत्र नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिता (६।२।१५५) इत्यतो नञ इत्यनुवर्त्तमाने ययतोश्चातदर्थे इति (६।२।१५६) नञ उत्तरस्यान्तोदात्तत्वं यथा स्यात्। तेन न ह्येकस्वरो लभ्यते। तस्य व्यवस्तत्वात्।

---

(D) वंशा वेणवः कठिना यस्मिन् देशे स वंशकठिनः। तस्मिन् देशे या क्रियानुष्ठेया तां तथैवानुतिष्ठति यः स वांशकठिनिकः।

(E) चक्रयुक्तेन शकटेन चरतीति चक्रचर इति मिश्रः। चक्रचर इत्यत्र चक्रधर इत्यपि क्वचित् पाठः।

## ७७। धुरो यड्ढकौ।

अथ धुरो ढक् चेत्येवं कस्मान्नोक्तम्? चकारो समुच्चयार्थः। यथाभिहिते प्रत्यये विज्ञायमाने यदेव भविष्यति। नैतदेवम्। यो हि धुरं वहति धुरोऽसौ वोढ़ा भवति। तस्य यथाविहिते प्रत्यये विज्ञायमाने तस्येदमित्यणपि (४।३।१२०) स्यात्। यद्ग्रहणात् तस्येदंविवक्षायामपि यदेव भवति।

## ७८। खः सर्वधुरात्।

सर्वधुरमिति। सर्वा चासौ धूश्चेति पूर्वकालैकेत्यादिना (२।१।४९) समासः। ऋक्पूरित्यादिना (५।४।७४) समासान्तः। स्त्रीलिङ्गे न्याय्य इति। तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति (२।४।२६) धूःशब्दस्य यल्लिङ्गं तदेव न्याय्यमिति। तत्र सर्वधुराया इति सूत्रे कर्त्तव्ये यतः सर्वधुरादिति नपुंसकलिङ्गेन निर्देशः स शब्दरूपापेक्षः। अर्थापेक्षे हि निर्देशे परवल्लिङ्गता भवति। अयन्तु शब्दरूपापेक्षः। शब्दरूपञ्च नपुंसकमिति नपुंसकेनैव निर्देशो युक्तः। अर्थविवक्षायां तु स्त्रीलिङ्गमेव भवति सर्व्वधुरां वहतीति।

## ७९। एकधुराल्लुक् च।

एकधुरादित्ययमपि शब्दरूपापेक्षया निर्द्देशः। अर्थापेक्षया हि परवल्लिङ्गता भवति। अत्रापि पूर्ववत् समाससमासान्तौ वेदितव्यौ। वचनसामर्थ्यात् पक्षे लुग् विधीयते। यदि हि नित्यो लुक् स्यात् खस्य विधानमनर्थकं स्यात्। यत एव हि लुकं विदध्यात्। ननु चैकधुरशब्दात् केनचिद् विहितो न यत्। तस्य कथं लुक् शक्यते विज्ञातुम्? लुग्वचनादेव यतोऽपि विधिरनुगम्यते इत्यदोषः।

## ८०। शकटादण्।

रथशकटहलसीरेभ्यः प्रत्ययविधानमनर्थकम्। तस्येदमित्यनेनैव (४।३।१२०) सिद्धत्वात्। शब्दभेदाद्विधानमिति चेदन्यो हि शब्दो रथं वहतीत्यन्यो हि रथस्य वोढ़ेति। तदा ऽर्थाश्रयत्वात् प्रत्ययविधानस्यार्थसामान्यात् सिद्धम्।

नहि कश्चिद् रथ्यमित्युक्ते रथस्यायमित्येवावैति । वहत्यर्थः प्रतीयते । तस्मात् स्यादेव रथाद् यत् ।

## ८१ । हलसीराट् ठक् ।

शकटादरणेवोत्सर्गः कर्त्तव्यः । एवञ्च वाक्यं करिष्यामो यथा रथस्य वोढा रथ्य इति । न तत्र विधीयते । तत्र प्रत्ययविधाने द्विगोर्लुगनपत्य (४।१।८८) इत्यनेन लुक् प्राप्नोति । अनेन पुनर्न प्राप्नोति । कस्मात् ? प्राग्दीव्यतोऽ (४।१।८३) णित्यधिकारात् । ननुच क्रियमाणेऽपीह द्विगोरण् प्रत्ययो न प्राप्नोति ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति । न । एतदेव हि शकटादणित्येवमादिकं (४।४।८०) ज्ञापकं भवति तदन्तविधेरिति । तेन द्वैहलिकः । द्वैशकटः । द्वैसीरिकमित्येवमादिकं सिद्धं भवति ।

## ८२ । संज्ञायां जन्याः ।

अस्यत्र गर्भ इतीन् सर्वधातुभ्यः (उण्, ४।५५७) । जनयतीति वा । अत्र कृदिकारादक्तिनः सर्वतोऽक्तिन्नर्थादिति (४।१।३५,प) ङीप् । जनी । तां वहन्ति जन्याः । जामातुर्वयस्याः । विवाहमानिताभिधीयते । केचित् कर्त्तरि जायतेऽस्यां गर्भ इति कृत्यल्युटो बहुलमिति (३।३।११३) ल्युटि जननशब्दाच्च ङीपि नकाराकारयो र्लोपेन साधयन्ति । ननु च जनीशब्दादेव यद् विधेयः । सर्वकालार्थं निपातनमित्येके ।

## ८३ । विध्यत्यधनुषा ।

पद्या इति । पद्यत्यतदर्थे इति (६।३।५३) पादशब्दस्य पद्भावः । जरव्या इति । वान्तो यि प्रत्यय इत्यवादेशः (६।१।७९) । ननु चेत्यादि । धनुरत्र प्रकृत्यर्थः । प्रत्ययार्थेन वाह्यं करणमपेक्ष्यते । तेन सापेक्षमसमर्थं भवतीत्यसामर्थ्यम् । ननु च व्यधनमेवात्र सापेक्षम् । क्रियया करणं सम्बध्यत इति कृत्वा । तच्च व्यधनं क्रियाप्रधानत्वादाख्यातस्य प्रधानं भवति । प्रधानस्य सापेक्षस्य भवत्येव वृत्तिर्यथा राजपुरुषोऽयमभिरूप इति । नैतदस्ति । यद्यपि क्रियाप्रधानमाख्यातं तथापीह प्रत्ययार्थ एव प्रधानम् । प्रत्ययार्थस्य साधनं व्यधा । तथाच प्रागुक्तं क्रियाप्रधानत्वेऽपि चाख्यातस्य तद्धितः

स्वभावात् साधनप्रधान इति। अथ क्रियाद्वारेण व्यधेरपि करणं प्रत्यपेक्षा भवतीति कल्प्यते ? तथाच सति प्रकृत्यर्थस्यापि क्रियाद्वारेणैव करणं प्रत्यपेक्षा भवतीति केन वार्य्यते ? नहि पादौ विध्यति धनुषेति करणविवक्षायां व्यधनमात्रस्य पादौ कर्म्म धनुष्करणविशिष्टस्य। तस्माद् व्यधनस्यापि क्रियाकरणे प्रत्यपेक्षेत्यसामर्थ्यात् प्रत्ययो न भविष्यति। अनभिधानाच्चेति। अत्रैवोपपत्त्यन्तरम्। कथं पुनरुपपत्त्यन्तरमित्याह नहीत्यादि। धनुषा पद्य इत्युक्ते धनुषः पद्यं प्रत्युपलक्षणभावः सम्भाव्यते यथा शिखया परिव्राजक मद्राक्षीदित्यत्र शिखया परिव्राजकं प्रति। धनुषा सह दृष्टः पद्य इत्येषोऽप्यर्थश्चाशङ्क्यते। नतु पादौ विध्यति धनुषेत्ययमर्थो विवक्षितः प्रतीयते। एवं तर्हीत्यादिना क्रियाविशेषणपरो धनुषेति निर्देशः। न धनुषः करणत्वप्रतिषेधः। प्रतिषेधे प्रधानमिति दर्शयति तेनेत्यादिना। क्रियत एव धनुषः प्रतिषेधः। तेन क्रिया विशेष्यते। तेन चौरं विध्यतीत्यादौ न भविष्यति। सम्भाव्यते हि चौरादिव्यधनक्रियया धनुषः करणत्वम्।

८४। धनगणं लब्धा।

कथं पुनरत्र द्वितीया समर्थविभक्तिः ? यावता कर्त्तृकर्मणोः कृतीति (२।३।६५) षष्ठ्या भवितव्यमित्याह लब्धेति तृजन्तमित्यादि। तृजन्तस्य हि प्रयोगे न लोकाव्ययनिष्ठाखलर्थतृनामिति (२।३।६९) षष्ठीप्रतिषेधेन द्वितीया भवति।

८५। अन्नाणः।

८६। वशं गतः।

वशः काम इच्छा। वशेर्धातोरत एव निपातनादप्प्रत्ययः। द्वितीयासमर्थविभक्तौ प्रकृतायां वशमिति द्वितीयानिर्देश इष्टे विषये द्वितीयान्ताद् यथा स्यात्। अनिष्टान्मा भूत्। तेनेहैव भवति। वशं गत इच्छाप्राप्तः। विधेय इत्यत्रैव भवति।

८७। पदमस्मिन् दृश्यम्।

कर्मणः कृतैवाभिहितत्वाद् द्वितीया न भवति। न च द्वितीया-

प्रथमाभ्यामन्यत्न विभक्तौ पदमिति रूपमुपपद्यते। तस्मात् प्रथमान्तमेवैतदिति निश्चित्याह निर्देशादेवेत्यादि ।

८८। मूलमस्यावर्हि ।

आवर्हणमावर्हं उत्पाटनमित्यर्थः। वृहेराङ् पूर्वाद्भावे घञ्। आवर्होऽस्यास्तीत्यावर्हीति। द्वितीयाविभक्तिरिह नास्ति। नच प्रथमाद्वितीयाभ्यामन्यस्यां विभक्तौ मूलमित्येतद्रूपमुपपद्यते। तस्मात् प्रथमान्तमेवैतत्। निर्देशादेव प्रथमा समर्थविभक्तिरुपपद्यत इति मत्वाह मूलशब्दात् प्रथमासमर्थादिति ।

८९। संज्ञायां धेनुष्या ।

यश्च प्रत्यय इति। किमर्थं पुनर्यप्रत्ययो निपात्यत इत्याह अन्तोदात्तो ह्ययमपीष्यत इति। यति सति तित्स्वरेणान्तस्वरितत्वात्। अन्तोदात्तश्चेष्यते। तस्माद् यप्रत्ययएव न्याय्यः। न केवलं संज्ञाविषय एवेष्यतेऽपित्वन्तोदात्तोऽपीत्येषोऽपिशब्दस्यार्थः ।

९०। गृहपतिना संयुक्ते ञ्यः ।

संयुक्त इति सम्बद्ध इत्यर्थः। अन्यस्यापीत्यादि। यथैव हि गृहपति र्यजमानो गार्हपत्ये कार्य्यं करोति तथा दक्षिणाग्नावाहवनीये च। तस्मादन्यस्यापि दक्षिणादे र्गृहपतिना संयोगोऽस्ति। यद्येवमतिप्रसङ्गोऽन्यत्र प्राप्नोतीत्याह तत्र संज्ञाधिकारादित्यादि। अभिधेयनियमार्थं संज्ञाग्रहणमनुवर्त्तते। तेनेह न भवत्यतिप्रसङ्गः ।

९१। नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्य्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु ।

कथं पुनरिहापि समर्थविभक्तिर्लभ्यते? यावता नेहोपात्ता। नाप्यनुवर्त्तत इत्याह प्रत्ययार्थद्वारेणेत्यादि। द्वारमुपायः। कारकमित्यर्थः। इह तार्य्यादयः प्रत्ययार्थाः। तत्सम्बन्धे कर्त्तरि करणे हेतौ तुल्यार्थयोगे च यथासम्भवं तृतीयैव भवति। ततः समर्थविभक्तिर्लभ्यते। नाद्यमिति। वान्तो

यि प्रत्यय इत्यवादेश: (६।१।७८)। अत्र नावस्तरणक्रियायां कर्त्तृत्वं करणत्वञ्च विवक्षावशाद् भवतीति करणे कर्त्तरि वा तृतीया। एवमन्यत्रापि यथायोगं वेदितव्यम्। धर्मेण प्राप्यं धर्म्यमिति। तत् पुनर्धर्मस्य फलं स्वर्गाद्युच्यते। ननु चेत्यादि। ननु च धर्मेण यत्प्राप्यं तद्धर्मादनपेतं भवतीति भावः। विध्य इति। विषेण वधमर्हतीत्यर्थः। वध्यशब्दस्य दण्डादिभ्यो य (५।१।६६) इत्यर्हार्थे व्युत्पादितत्वात्। आनाम्यमभिभवनीयमिति। अनेकार्थत्वाद् धातूनामत्र नमिरभिभवे वर्त्तते। पटादीनामुत्पत्तिकारणं मूलमिति। द्रव्येन हिरण्येन पटादीनामुत्पत्तिर्भवति। तेनेति। मूलेन। तदिति। मूल्यम्। शेषीक्रियत इति। अनेनाभिभूयत इत्यस्यार्थमाचष्टे। शेषीक्रियते गुणभावमापाद्यतेऽप्रधानीक्रियत इत्यर्थः। अप्रधानीकरणमेवाभिभवः। कथं पुनस्तेन तच्छेषीक्रियत इत्याह मूल्यं हीत्यादि। हिशब्दो हेतौ। मूल्यमिह कर्त्तृ। मूलं कर्म। तत्प्रणयेन हिरण्येन पटादयो विक्रीयन्ते। तत्र यन्मूलातिरिक्तं हिरण्यं लाभस्तन्मूल्यं गुणो भागः। सह तेन वर्त्तत इति सगुणः। गुणः पुनरिह तदेव मूल्यं वेदितव्यम्। तदेतदुक्तं भवति यस्मान् मूल्यभागेनैव भागभूतेन सभागं मूलं करोति न न्यूनं तन्मूल्यमभिधीयत इति। मूल्ये सति तत् तत्र द्विगुणं करोतीत्युच्यते। का पुनरियं युक्तिः? यदि नाम सगुणं मूलं करोतीत्युच्यते तत् कथं मूलेन मूल्यमभिभूयते? यथेयं युक्तिस्तदाख्यायते। इह हि शास्त्रे यत् सिद्धमुपकारि तदङ्गमप्रधानम्। यच्चोपकारसाध्यमनुपकारकं तदङ्गि प्रधानमित्येषा व्यवस्था। तथाचोक्तं

शास्त्रे द्वयमेवेह स्यादङ्गमथवा भवेदङ्गि तत्र।
उपकारि सिद्धमङ्गं साध्यानुपकारकमङ्गीति ॥ १ ॥ इति।

एवञ्च मूल्येन मूलं सगुणं क्रियमाणमुपकार्यत्वात् प्रधानं सम्पद्यते। मूल्यं त्वनुपकार्यत्वादप्रधानं सम्पद्यते। तन्मूलेन मूल्यमभिभूयते। तदपेक्षया तस्याः प्रधानभावापत्तेः। तुलया सम्मितं तुल्यमिति। अत्र तुल्यार्थयोगे तृतीया। यद्यपि तुल्यार्थयोगे षष्ठ्यपि विधीयते तथापि नौप्रभृतिभ्यस्तृतीयासमर्थेभ्यः प्रत्ययविधानात् तुलाशब्दादपि तृतीयासमर्थादेव प्रत्ययो विज्ञायते। यथेत्यादिना तुलया सादृश्यं दर्शयति। ननु च तुल्यास्यप्रयत्नमिति

(१।१।९) निपातनादेव तुल्यशब्दस्य साधुत्वम् भविष्यति। स च सदृशे एव लोके प्रसिद्ध इति। नार्थस्तुलाशब्दात् सम्मिते प्रत्ययविधानेन। स्वरार्थं तु प्रत्ययविधानम्। यतो नाव (६।१।२१३) इत्याद्युदात्तत्वं यथा स्यात्। नहि निपातने सत्याद्युदात्तत्वं तुल्यशब्दस्य शक्यते विज्ञातुम्।

### ९२। धर्मपथ्यर्थन्यायादनपेते।

निर्देशादेव पञ्चमी समर्थविभक्तिरिति। यद्येव मतिप्रसङ्गः। धुरो (४।४।७७) यड्ढकावित्येवमादावपि निर्देशादेव समर्थविभक्तिर्विज्ञेया। नैष दोषः। तत्र हि द्वितीया समर्थविभक्तिः। एवं ज्ञानं स्याद् द्वितीयानुवृत्तिरपार्थिका स्यात्। इह तु न काचिद् विभक्तिरनुवर्त्तते। पञ्चमी च सूत्रे श्रूयते। तस्मात् सैव समर्थविभक्तिरनुकल्पयितुं युक्ता।

### ९३। छन्दसो निर्मिते।

प्रत्ययार्थसामर्थ्यलभ्येति। निर्मित इति प्रत्ययार्थः। तत्र च्छन्दसः करणत्वमिति सामर्थ्यात् तृतीया समर्थविभक्तिर्लभ्यते। छन्दःशब्दोऽयं वेदे त्रिष्टुबादाविच्छायाञ्च वर्त्तते। इह त्विच्छायां वर्त्तमानो गृह्यते। अतएवाह इच्छया कृत इति। इच्छावृत्तिस्तु संज्ञाग्रहणस्याभिधेयनियमार्थस्यानुवृत्तेर्लभ्यते।

### ९४। उरसोऽण् च।

संज्ञाधिकारादभिधेयनियम इति। तेनोरसा निर्मितं सुखमित्यादौ न भवतीति भावः।

### ९५। हृदयस्य प्रियः।

हृद्य इति। हृदयस्य हृल्लेखेत्यादिना (६।३।५०) हृद्भावः।

### ९६। बन्धने चर्षौ।

ऋषिशब्दोऽयमस्त्येव गुणवति पुरुषविशेषे। अस्ति च वेदे। इह संज्ञाधिकारादेव न मनुष्यग्रहणमिति दर्शयति। ऋषिर्वेदो गृह्यते।

### ९७। मतजनहलात् करणजल्पकर्षेषु।

प्रत्ययार्थसामर्थ्यलभ्येति। करणादयः प्रत्ययार्थाः। तत्र करणादयः

शब्दा भावे करणे च व्युत्पाद्यन्त इति सामर्थ्यादेवोपलभ्यमाना षष्ठीविभक्ति-र्विज्ञायते। यद्यपि कर्षशब्दः परिमाणवचनोऽप्यस्ति तथापि करणादीनां साहचर्य्यात् क्रियाशब्द एव गृह्यते। करणशब्दो भावसाधनः। यदा तु करणसाधन स्तदा क्रियतेऽनेनेति करणम्। रथसीताहलेभ्यो यद्विधाविति (१।१।७२,वा) तदन्तविधिरत्रेष्यते। तस्योदाहरणं विहल्य इति दर्शयति। भावसाधनश्चेति। अत्रापि पूर्ववद् विभागो वेदितव्यः।

९८। तत्र साधुः।

सामन्य इति। ये चाभावकर्मणोरिति (६।४।१६८) प्रकृतिभावः। साधुरिह निपुणो योग्य इति भावः।

९९। प्रतिजनादिभ्यः खञ्।

जनं जनं प्रति प्रतिजनम्। यथार्थेऽव्ययमित्यव्ययीभावः (२।१।६)। परस्य कुलममुष्यकुलमिति निपातनादलुक्। षष्ठ्या आक्रोश इति (६।३।२१) वा यदा परकुलत्वेनाक्रुश्यते। यत्रेत्यादि। प्रतिजन सर्व्वजन इत्येवमादिषु केषुचिद्वि-तार्थं एव प्रतीयते। नतु प्रवीणो योग्यशब्दस्यार्थः। तेन तत्र वचनसामर्थ्यात् परेऽपि प्राक्क्रीतीयाः प्रत्यया बाध्यन्ते। अन्यथा हि वचनमनर्थकं स्यात्।

१००। भक्ताणः।

१०१। परिषदो ण्यः।

१०२। कथादिभ्यष्ठक्।

१०३। गुडादिभ्यष्ठञ्।

१०४। पथ्यतिथिवसतिस्वपतेर्ढञ्।

१०५। सभाया यः।

स्वरे विशेष इति। यति सति यतोऽनाव (६।२।१३) इत्याद्युदात्तत्वं स्यात्। ये तु सति प्रत्ययस्वरेणान्तोदात्तत्वं स्यात्।

## १०६ । ढश्छन्दसि ।

## १०७ । समानतीर्थे वासी ।

वसतीति वासी । निपातनादेव णिनिः । ग्रहादिलक्षणो वा । अथवा वसनं वासः । सो ऽस्यास्तीति वासी । मत्वर्थीय इनिः । अथ तत्रेति (४।४।९८) वर्त्तमाने पुनः समानतीर्थ इति सप्तम्युपादानं किमर्थम् ? प्रकृतित्वेनेष्टात् सप्तम्यन्ताद् यथा स्यात् । अनिष्टान् मा भूत् । एतेन गुरुवचनो यस्तीर्थशब्दस्तदन्तात् सप्तमीसमर्थात् प्रत्ययो भवति । नतु यः प्रयागादिवचनस्तदन्तात् । अमुमेवार्थं चेतसि कृत्वाह तीर्थशब्देन गुरुरुच्यत इति ।

## १०८ । समानोदरे शयित ओ चोदात्तः ।

ओकारश्चोदात्त इति । यतः स्वरे प्राप्त ओकारस्योदात्तत्वं विधीयते । शयितः स्थित इत्यर्थः । अनेकार्थत्वात् तस्य स्थितावपि वृत्तेः । तथाहि आमाशयो जलाशय इति । समानोदर्य्य इति । समानञ्च तदुदरञ्चेति समानाधिकरणसमासं कृत्वा ततः प्रत्ययः ।

## १०९ । सोदराद् यः ।

एकदेशविकृतस्यानन्यत्वात् सोदर्य्यशब्दादपि पूर्वेण यत्येव प्राप्ते यो विधीयते । विभाषोदर (६।३।८८) इति विषयसप्तमीति मत्वाह यकारादौ प्रत्यय इत्यादि । ओ चोदात्त इति नानुवर्त्तत इति । प्रत्ययविधानसामर्थ्याद् यउदात्तः ।

## ११० । भवे छन्दसि ।

अणादीनां घादीनाञ्चापवाद इति । तत्र भव इति (४।३।५३) प्राप्तानाम् । यद्येवं यता बाधितत्वाच्छन्दसि तेषामभावः स्यात् । ततश्च मुञ्जावत्यं (F) मौञ्जावतं वेत्येवमादि न सिध्यतीतयाह सति दर्शन इत्यादि । कथं पुनरेवं लभ्यत इतयाह सर्वविधीनामितयादि । सर्वविधिव्यभिचारस्तु बहुलञ्छन्दसीति

(F) क्वचित् मुञ्जीरात्यं मौञ्जीराततमिति पाठः ।

(३।२।८८) बहुलग्रहणाल्लभ्यते । मुञ्जावान् नाम पर्वतः । तत्र भवोऽसौ मौञ्जावतः (G) ।

१११ । पाथोनदीभ्यां ड्यण् ।

११२ । वेशन्तहिमवद्भ्यामण् ।

११३ । स्रोतसो विभाषा ड्यड्ड्यौ ।

ड्यड्ड्ययोः स्वरे विशेषः । ड्यति हि सति तित् स्वरितमित्यन्तस्वरितः (६।१।१८५) स्यात् । ड्ये तु प्रत्ययस्वरेणान्तोदात्तत्वं भवति ।

११४ । सगर्भसयूथसनुताद् यन् ।

समानो गर्भः । समानो यूथ इति कर्मधारयः । णु स्तुतौ । भावे क्तः । समानं नुतमस्येति बहुव्रीहिः । समानश्च तन्नुतश्चेति कर्मधारयो वा । स्वरे विशेष इति । यति सति तित् स्वरितमित्यन्तस्वरितत्वं (६।१।१८५) स्यात् । यनि सति नित्स्वरेणाद्युदात्तत्वं स्यात् । सर्वत्र समानस्य च्छन्द-सीति । समानस्य (६।३।८४) च्छन्दस्यमूर्धप्रभृत्युदर्केष्वित्यस्योपलक्षणपर एकदेश उपात्तः ।

११५ । तुग्राद् घन् ।

११६ । अग्राद् यत् ।

सामान्येन यद्विहित इति । भवे च्छन्दसीत्यनेन (४।४।११०) । अथ यद्ग्रहणं किमर्थम् ? न यथाविहितमेवोच्येत ? नैवं शक्यम् । अग्रपश्चाड्डिम-जित्येवाग्रशब्दाड् ( ४।३।२३, वा ) डिमजप्युक्तः । तत्र यथाविहिते प्रत्यय उच्यमाने डिमजपि स्यात् । तस्माद् यद्ग्रहणं कर्त्तव्यम् ।

११७ । घच्छौ च ।

स्वरे विशेष इति । घे विहिते ऽन्तोदात्तत्वं स्यात् । घनि तु सत्याद्यु-दात्तत्वं भवति ।

---

(G) मुञ्जीराती नामेति······मौञ्जीरात इति पाठान्तरम् ।

११८ । समुद्राभ्राद् घः ।

ननु चाजाद्यदन्तमल्पाच्तरमितऽभ्रशब्दस्य (२।२।३३-३४) पूर्वनिपातेन भवितव्यम् । तत् कथमपूर्वनिपात इत्याह अभ्रशब्दस्येत्यादि ।

११९ । बर्हिषि दत्तम् ।

१२० । दूतस्य भागकर्मणी ।

भावे तस्येदमित्यणि ( ४।३।१२० ) प्राप्ते गुणवचनब्राह्मणादिभ्य इति (५।१।१२४) ष्यञि यतो विधानम् । येषां सख्यु यं इत्यत्र (५।१।१२६) दूत-वणिग्भ्यांश्चेत्युपसंख्यायते तेषां कर्मणि ये प्राप्ते ।

१२१ । रक्षोयातूनां हननी ।

निर्देशादेव समर्थविभक्तिः । सा पुनः षष्ठी कर्त्तृकर्मणोः कृतीति (२।३।६५) कर्मणि द्रष्टव्या । योग्यतामात्रे विवक्षिते हन्यतेऽनयेति हननी । करणे ल्युट् । टिड्ढाणञिति (४।१।१५) ङीप् । ननु च रक्षोयातुशब्दयोर्द्वित्वाद् द्विवचनेन भवितव्यम् । तत् कथमिदमुक्तम् । वचनसामर्थ्यात् सम्भावनमेव स्तुतिरिति दर्शयितुमाह बहुवचनमित्यादि । योगश्चायं तस्येदमित्यणि (४।३।१२०) प्राप्ते वेदितव्यः ।

१२२ । रेवतीजगतीहविष्याभ्यः प्रशस्ये ।

षष्ठीसमर्थेभ्य इति । सामर्थ्याद्धि षष्ठ्येव समर्थविभक्तिर्विज्ञायते । यथाहि शंस स्तुतावित्यतोऽस्मादेव निपातनाद् भावे क्यप्प्रत्ययः कृत्यल्युटो बहुलमिति (३।३।११३) बहुलवचनात् । तत्रावश्यं कृद्योगलक्षणया षष्ठ्या भवितव्यम् । अयमपि योगः पूर्ववदणि प्राप्ते वेदितव्यः ।

१२३ । असुरस्य स्वम् ।

षष्ठीसमर्थादिति । असुरस्येति निर्देशादेव षष्ठी समर्थविभक्तिर्लभ्यते । स्वमित्यात्मीयमित्यर्थः । अणोऽपवाद इति । तस्येदमिति (४।३।१२०) प्राप्तस्य ।

१२४ । मायायामण् ।

मायायां नेति वक्तव्ये ऽण्ग्रहणं विस्पष्टार्थम् ।

१२५। तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः।

स विवक्षितोऽवयवोऽस्मिन्निति तद्वान्। कः पुनरसौ समुदायः। अत एवाह तद्वानित्यवयवेन समुदायो निर्दिश्यत इति। एतेनैकदेशादिदं प्रत्ययविधानमित्युक्तं भवति। वर्चःशब्दोऽस्मिन् मन्त्रेऽस्तीत्यादिना तत्समुदायं प्रदर्शयति। चयनवचन इति। चिनोतेरेव करणे ल्युट्। तेजस्या इति। तेजःशब्दोऽस्य मन्त्रस्यास्ति तेजस्वानुपधानमन्त्रः। शेषं विग्रहवाक्यादि पूर्ववत्। मन्त्रादेव। समुदायान्मा भूत्। यद्यपि समुदायः प्रातिपदिकं न भवति तथापि वचनसामर्थ्यादपि स्यात्। किं हि वचनान्न लभ्यत इत्यभिप्रायः। इतिकरणो नियमार्थ इति। असतीहेतिकरणे मन्त्रे बहूनां पदानां सम्भवे सर्वेण पदेन तद्वान् मन्त्रो गृह्यते। अस्मिंस्तु सति तेन नियमार्थेन येनैव पदेन तद्वता मन्त्रेणेष्टकोपलक्ष्यते तेनैव सर्वो मन्त्रो गृह्यत इत्येतदुपपन्नं भवति। अथ मतुब्ग्रहणं किमर्थम्? यावता मतुबन्तादयं विधीयते। तत्र प्रत्ययस्य लुग् विज्ञायमानो विधानसामर्थ्याच्च मतुप एव भविष्यतीत्यनर्थकं मतुब्ग्रहणम्। नैवम्। उत्तरत्राश्विमानणित्यत्र (४।४।१२६) इत्युपधानमात्रावयवे द्वौ मत्वर्थीयाविनिमतुपौ। तत्रासति मतुब्ग्रहणे द्वयोरपि लुक् स्यात्। अस्मिन् सति मतुप एव भवति।

१२६। अश्विमानण्।

आश्विनीरिति। टिड्ढाणञिति (४।१।१५) ङीप्।

१२७। वयस्यासु मूर्ध्नो मतुप्।

मूर्धन्वतीरिति। उगितश्चेति (४।१।६) ङीप्। वयस्यास्ता मूर्धन्वतश्चेति। वयस्वानुपधानो मन्त्रः। तासामिति वयस्याः। मूर्धन्वानुपधानो मन्त्रः। तासामिति मूर्धन्वत्यः। यत्रेत्यादि। नह्येवंविधो यासामुपधानो मन्त्रस्ताः वयस्यास्विति वचनात्। अत्र मूर्धशब्द एवास्ति। न वयःशब्दः। ततो न भवति मूर्धन्वत्य इति। वक्तव्य इति। तद्वानित्यधिकारान् मतुबन्ताद्

मूर्धशब्दाद् प्रत्ययेन भवितव्यम् । अतो मूर्धन्वत इति युक्तं वक्तुम् । तन्मतुपो भाविनं लुकं चेतसि कृत्वा । एवं लघु सूत्रं भवति ।

## १२८ । मत्वर्थे मासतन्वोः ।

मत्वर्थे मासतन्वोरिति प्रत्ययार्थविशेषणम् । मत्वर्थग्रहणादेव प्रथमा समर्थविभक्तिरस्त्युपाधिका लभ्यत इत्याह प्रथमासमर्थादस्त्युपाधिकादिति । अनन्तरार्थे चेति । न केवलं मत्वर्थ एव प्रत्ययो वक्तव्यः । ननु च तपः-प्रभृतीनां प्रत्ययार्थमासादिवचनानामभिधेयलिङ्गवचनानि भवन्तीति पुंलिङ्गता प्राप्नोति । तस्याञ्च सत्यामत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घेण भवितव्यम् । तत् कथं तपश्च सहश्च नभश्चेति प्रयोग इत्यत आह नपुंसकलिङ्गं छान्दसत्वादिति । अयं हि च्छान्दसः प्रयोगः । तत्रेति । पुंलिङ्गे ऽभिधेये । नपुंसकलिङ्गमुपपद्यते । व्यत्ययो बहुलमिति (३।१।८५) लिङ्गव्यत्ययस्य च्छन्दसि विधानात् । इडस्मिन् मासेऽस्तीति इषः । ऊर्गस्मिन् मासे ऽस्तीति ऊर्जः । शुगस्मिन् मासेऽस्तीति शुचिः । शुग् वास्मिन् मासे ऽस्तीति शुक्रः । चोः कुरिति (८।२।३०) कुत्वम् । अर्थग्रहणं किमर्थम् ? यावता मतौ छः सूक्तसाम्नोरित्यत्र यथा (५।२।५९) मतावित्युच्यमाने मत्वर्थे प्रत्यय उच्यते तथेहापि लभ्यते । तस्मान्मतावित्येवं कस्मान्नोक्तम् ? सत्यमेतत् । विस्पष्टार्थमर्थग्रहणम् ।

## १२९ । मधोर्ञ च ।

## १३० । ओजसोऽहनि यत्खौ ।

असन्तत्वादस्मायामेधास्रजो विनिरिति ( ५।२।१२१ ) विनिप्रत्यये प्राप्ते मतुपोऽपवादैः सह समावेशान् मतुपि यत्खौ विधीयेते । अथ यद्ग्रहणं किमर्थम् ? नन्वोजसोऽहनि ख चेत्येवोच्येत । चकारेण यथाविहिते प्रत्यये विज्ञायमाने यदिति च भविष्यति । नैवं शक्यम् । चकारेण हि सन्देहः स्यात् किमनेनानन्तरसूत्रविहितो ञोऽनुकृष्यते ? अथ प्रकृतो यदिति ? तस्माद-सन्देहार्थं यद्ग्रहणं कर्तव्यम् ।

## १३१ । वेशो यशआदेर्भगाद् यल् ।

लित्करणं स्वरार्थम् ।

## १३२ । ख च ।

योगविभाग इत्यादि । यदि पूर्वसूत्रएव खग्रहणं क्रियते द्वे प्रकृती प्रत्ययावपि द्वावेवेति सामर्थ्याद् यथासंख्यं प्रसज्येत । तस्मात् तन्निरासार्थो योगविभागः । ननु यथासंख्यमनुदेशः समानामित्यत्र इह (१।३।१०) कस्मान्न भवति वेशोयशआदेर्भगाद् यल् ख चेति दर्शयित्वा स्वरितेन लिङ्गेन यथासंख्यमित्युक्तम् ? तदेकयोगतामभ्युपेत्य । भवतु नामैकयोगः । तथापि यथासंख्यं न भवतीति दर्शनार्थम् । तत् कुतो यथासंख्यनिरासार्थो योगविभाग इति ? अत आह उत्तरार्थश्चेति ।

## १३३ । पूर्वैः कृतमिनयौ च ।

पूर्वैः कृतमिनयौ चेति । खएव यथा स्यात् । यत्मा भूत् । पूर्वैरिति । बहुवचनान्तेनेत्यादि । पथिभिः पूर्वैरित्येवमादिभिर्वेदवाक्यैः पूर्वपुरुषकृतत्वेन यदा प्रशंसां प्रतिपादयितुं निष्ठा साध्येव शक्यते विज्ञातुं तदा पूर्वपुरुषाभिधायिनः पूर्वशब्दात् प्रत्यय उपपद्यते । तस्मात् पूर्वैरिति बहुवचनान्तेन ... अभिधीयन्ते । छन्दसामर्थपरत्वाद् बहुवचनस्य । ... आस्थित सम्बध्यत इति दर्शयितुमा... ...। ।

## १३... । ... संस्कृतम् ।

संस्कृतमिति प्राग्वहतीये (४।४।१) ठकि प्राप्ते यद्विधीयते । निर्देशादेव समर्थविभक्तिरिति । तृतीया । सा पुनःसंस्कारणक्रियायामपां करणत्वात् करणे वेदितव्या ।

## १३५ । सहस्रेण सम्मितौ घः ।

निर्देशादेव समर्थविभक्तिरिति । तृतीया । सा पुन तुल्यार्थयोगे वेदितव्या । तत्रापीति । सम्मितत्वा साहश्येन धर्मेण सम्मित एव धर्मो

...थयितव्यः । किं कारणमित्याह तत्र सम्मित एव वैदिकप्रयोगे दृश्यते । सम्मितिमात्रे ।

१३६ । मतौ च ।

शब्दे कार्य्यासम्भवान् मतुप्शब्देन मत्वर्थो लक्ष्यत इत्याह मत्वर्थ इत्यादि । मत्वर्थे च प्रत्ययविधानात् प्रथमासमर्थादस्त्युपाधिकात् प्रत्ययो विज्ञायत इत्याह सहस्रमस्य विद्यत इति ।

१३७ । सोममर्हति यः ।

तदर्हतीत्यर्थे (५।१।६३) ठकि प्राप्ते यो विधीयते । स्वरे विशेष इति । यत्याद्युदात्तत्वं स्यात् । यप्रत्यये तु सत्यन्तोदात्तत्वं भवति ।

१३८ । मये च ।

रूप्यमयटोरपवादो योग इति । मयट इति । मयडर्थो लक्ष्यत इति । शब्दे कार्य्यासम्भवादिति भावः । तत्र यथायोगं समर्थविभक्तिरिति । तत्रागतार्थे पञ्चमी । विकारावयवयोः षष्ठी । प्रकृतवचने प्रथमेति यथायोगार्थः ।

[illegible] । मधोः ।

मयड्... यथायोगं रूप्यमयटोः प्राप्तयोर्यद् विधीयते । प्रतिषेध (४।३।१५१) ... मस्य नोत्वद्धर्मबिल्वादिति

१४० । वसोः समूहे च ।

अत्रापि मयडर्थे यथायोगं रूप्यमयटोः समूहे त्वणि ठकि च यद्विधीयते । वसुशब्दोऽप्ययमस्ति देववचनो वसवो देवा इति । अस्ति च धनवचनो वसु धनमिति । तत्र देवतावचनात् समूहविवक्षायामौत्सर्गिकोऽण् प्राप्नोति । धनवचनत्वादचित्तलक्षणष्ठक् । यथायोगं समर्थविभक्तिरिति । समूहे मयडर्थे च षष्ठ्यादिका सामर्थ्यलब्धेति ।

## १४१ । नचलाद् (H) घः । (I)

---

(H) The following MSS. were at the disposal of the editor for the preparation of the press-copy of the fourth Adhyaya of the Nyasa :—

(ख),

(छ) and

(ड)

as stated respectively, in PP. 331, 484, and 791.

In the MS. (ख), we have, at the end of 4/4,

"युगप्रधानश्रीमज्जिनचन्द्रसूरिचरणसेवाऽविच्छाखिभिः
श्रीपुण्यप्रधानोपाध्यायै र्लिलिखे स्वशिष्यप्रशिष्यादिवाचनकृते ।
वाच्यमानं चिरंनन्दतात् । श्रीरस्तु । संवत् १६८४ वर्षे ।"

So the date of transcription of this portion of the MS. is 1627 A. D.

At the end of 4/1, as well as at the end of 1/4. it has

"श्रीकाश्रासरोयामे श्रीखरतरगच्छाधिपयुगप्रधानश्रीमज्जिनचन्द्रसूरिशिष्यश्रीपुण्यप्रधानोपाध्यायै रालेखि । शिष्यपण्डितसुमतिसागरगणिशिष्यपण्डितसाधुरङ्गपण्डितज्ञानचन्द्रमुन्योः सम्पठनाय । श्रीरस्तु लेखकपाठकयोः । संवत् १६८२ वर्षे । वैशाखशुक्लाष्टम्याम् ।"

This portion therefore was copied in 1625 A. D.

(I) It is gratifying to note that many of the very renowned Indian and European Savants have kindly welcomed the printing and publicatio[illegible] edition of the Nyasa. A few letters from some of th[illegible] below :—

From [illegible]

Dear Sir [illegible]

I got your kind letter and the copy of the Nyasa Part I, for which I render you my most cordial thanks. I had only a cursory look at the edition of the Nyasa by Jinendrabuddhi, but think it done in a scholarly manner. I should thank you for sending me the other parts of the work as they are issued. With kind regards

Yours sincerely

Sd. HERMANN JOCOBI.

59, Niebulvr strasse. Bonn (Germany)

29. 1. 1914.

From Professor S. KONOW, NORWAY.

Villa Baikuntha,
Bestum,—Kristiania.
26. 2. 1914.

Many thanks for your letter and for the copy of Jinendrabuddhi's Nyasa, Part I which you have been good enough to send me. The edition is very good and scholarlike and I congratulate you on the results of the work of your Society (Varendra Research Society). The only thing which I should have done differently is that I should have printed the text of the Kasika itself together with the commentary. As it now is, it is necessary to keep the text of the Kasika in your table when reading Jinendrabuddhi, and it is always a little more troublesome to have to consult two books. However this is quite a minor point, and on the whole the principles followed by the editor are excellent.

yours sincerely
Sd. STEN KONOW.

था...

—मत्वर्थं प्रत्यय उच्च।

From Pundit Gonapati Sas. अथ मथेप्रश्च ... ..., व्यक्तिविवेक and the recently discovered Dramas by the Poet भास । ...

"Office of the Curator for Publication of Sanskrit MSS.
Trivandrum, Government of Trivancore. 23. 12. 1913.

Dear Sir,

I have duly received your kind letter as also a copy of the Nyasa, Part I and I thank you very much for the same. You have edited the work beautifully and very accurately and it reflects credit on your iudustry. I think that if the text of the Kasika is also printed along with the Nyasa, it will add to the utility of the

## १४३। शिवशर्मरिष्टस्य कारे। (J)

work. Your doubt about the genuineness of the quotation from Amara (P. 2,) by Jinendra, is quite correct, as the copy of our Nyasa also does not contain the quotation. The Palm leaf MS. in our possession of the Nyasa is received, on loan, from a private individual. It is written in *Malayalam* character, but not in Canrese or Telugu.

Only Dhatu-Prodeepa of Maitreya Raksita is available here, but no other work of his, nor any copy of the Nyasoddyota or Anunyasa. But if I obtain y of them, I shall let you know about them.

I am, Dear Sir,

Yours faithfully

Sd. T. GONOPATI SASTRI.

## (J) शुद्धिपत्रम्।

The editor, with extreme regret, states that he had to stay at Rajshahi (Bengal) while the book was printed at Calcutta about 200 miles off from his station. Under the circumstances, misprints and errors of other kinds in such a big book containing 1060 Pages, could not but creep in. Some of them are noticed below. The readers are to kindly correct others where observed.

| Page | line | incorrect | correct |
|---|---|---|---|
| | | IN THE TEXT | |
| 49 | 21 | दुर्विन्यस्तकाकपदशनित | दुर्विन्यस्तकाकुपदशनित |
| 72 | 26 | कारमात्र | पकारमात्र |
| 138 | 26 | निवर्त्तितं | निवर्त्तितम् |
| 169 | 26 | ष: | षष: |
| 523 | 13 | शब्दान्तरादरिति | शब्दान्तरादिति। |
| 654 | 23,24 | शमितितरां | शमितितरा |
| | | शमितितमामिति | शमितितमेति |
| 809 | 22 | प्राप्ति | प्राप्ति:। |
| 810 | ४ | पश्वानामजां | पश्वानामजानां |
| 854 | 22 | कल्पितत्वात् | विकल्पितत्वात् |
| 881 | 16 | वेदितव्य: | वेदितव्यम्। |

१४४। भावे च।

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिका-
विवरणपञ्जिकायां चतुर्थाध्यायस्य चतुर्थ: पाद: ॥ ४।४ ॥
समाप्तोऽयं चतुर्थाध्याय: ॥ ४ ॥

---

"यत्पञ्चिकानावमिमामासाद्य सुधिय: सुखम् ।
तरन्ति काशिकाम्भोधिं स जिनेन्द्रो जयत्ययम्" ॥ १ ॥

---

THE END OF THE VOLUME I.

---

## ERRATA
### IN THE NOTES

| | | | |
|---|---|---|---|
| 226 | 23 | पाणिंनीय | पाणिनीय |
| 332 | 8 | चणी | चौणी |
| 653 | 26 | स एव च | स एव च पाठो |
| 719 | 25 | मूर्धन्यादिश | मूर्धन्यादिश्च |
| 849 | 21 | Spells | Spell |
| | 26 | वक्तव्यमित्येवं | वक्तव्यइत्येवं |
| | 29 | allows | allow |
| 894 | 25 | पर्य्यायो | पर्यायो |